**ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं बृहन्तमाशाथे ॥८॥**

ऋतेन मित्रावरुणौ । सत्येनैव[1] । मित्रावरुणौ ! । सत्यस्य वर्धयितारौ[2] । सत्यस्य स्प्रष्टारौ[3] ।[4] यज्ञम्[5] । महान्तम् । आनशाथे[6] ।

**कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसम् ॥९॥**

कवी नः । कान्तदर्शनौ[7] । मित्रावरुणौ । अस्मभ्यम्[8] । अहोरात्रयोः प्रादुर्भावादनेकजन्मानौ[9] । बहुनिवासावनेकयज्ञौ[10] । बलम्[11] । प्रयच्छतः[12] । वेगं[13] च[14] । प्रउगतृचानां मध्ये सूक्तच्छेदो[15]

---

१. ऋतेनेति हेतौ तृतीया, यज्ञेन हेतुना । यस्मान्मनुष्यैरिज्येथे तस्मात्....अथवा ऋतेनेत्ययमृतशब्द उदकनाम । करणे च तृतीया । उदकेन Skt. ऋतं यज्ञं यज्ञेन हेतुना....अथवा...यज्ञस्य... ...उदकस्य वा...सत्यस्य वा । Skr.

२. यज्ञेन वर्धितारौ । यज्ञे हि यद् हविस्तदुपभुञ्जानाः स्तूयमानाश्च देवता वीर्येण वर्धन्ते......अथवा वृधिरत्रान्तर्णीतण्यर्थः । ऋतशब्दोऽपि यज्ञनामैव, उदकनाम वा । यज्ञस्योदकस्य वा वर्धयितारावित्यर्थः । अथवा ऋतमिति सत्यनाम । सत्यस्य स्तोतुर्यजमानस्य वा वर्धयितारावित्यर्थः । Skt.

३. यज्ञस्योपभोगकाले स्प्रष्टारौ । यज्ञे हविषां प्रतिग्रहीतारावित्यर्थः । अथवा ऋतस्य सत्यस्य स्तोत्रस्य स्प्रष्टारौ श्रोतारावित्यर्थः । अथवा ऋतस्योदकस्य वृष्टिकाले स्प्रष्टारौ वर्षितारावित्यर्थः । Skt. ४. स्प्रारौ P.

५. क्रतुं कर्म यज्ञाख्यम् Skt. क्रतुं कर्म वृष्ट्यादि Skr.]

६. आशाथे S. आशाथे व्याप्नुथः कुरुथ इत्यर्थः......यत्र यज्ञस्तस्मिन् विषये वर्षथ इत्यर्थः । Skt.

७. क्रान्तदर्शिनौ S. कवी मेधाविनौ Skt.

८. तादर्थ्ये एषा चतुर्थी । अस्माकमर्थम्।.....अथवा.... सम्प्रदाने चतुर्थी.... अस्मभ्यम् Skt.

९. बहूनामर्थाय जातौ.... सर्वेषां प्राणिनामुपकर्तुमुत्पन्नावित्यर्थः । जननं जातं जन्मोच्यते । बहूनि जन्मानि ययोस्तौ तुविजातौ । यच्चानयोः कर्मात्मना पुनः पुनर्जन्म तदपेक्षया जन्मबहुत्वम् । Skt.

१०. बहुनिवासौ, विस्तीर्णनिवासौ वा । Skt. लोकोपकारार्थं तत्र तत्र जातौ च निवसन्तौ च । Skr.

११. S. adds वा before बलं । दक्षं बलं सेनालक्षणम् । Skt.

१२. दधाते धारयतः.... अस्मदर्थं स्वसेनां पुष्णीतः, तया च वृष्ट्यादिकर्म कुरुतः ......दधातिरपि दानार्थः । अस्मभ्यं ..... दत्त इत्यर्थः । Skt.

१३. वेशं S. अपसम् इति हि कर्मनाम .... यागादिकर्म Skt.

१४. Ms. D. puts the figure ॥२॥ here to indicate the end of the second hymn. No such number is given in P.

१५. सूक्तमक्षोदेवा P. सूक्तविच्छेदो S.

दक्षं[1] दधाते अपसमिति[2] अभिमताशासनादित्याहुः(?)। अर्थमिच्छन्तो हि सूक्तैः स्तुवन्ति देवता इति।

## I. 3.

**अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती। पुरुभुजा चनस्यतम् ॥१॥**

**अश्विनौ**[3]। यजमानस्य यष्टृणि[4]।[5] अन्नादीनि[6]। क्षिप्रहस्तौ[7]। उदकस्य[8]। ईश्वरौ[9]। बहुभोजनौ। चनस्यतं चनोऽन्नं तदिच्छतम्[10]। इह वृत्तस्थस्य[11] कर्मणः[12] पदान्तरेण पृथक् व्यक्तं[13] निर्देशः समानशब्दैरनेकत्र भवति। "गवां गोपतिः"[14] "सोमं सोमपातमा"[15] "द्रविणोदा द्रविणसः"[16] इति। इह तु समानार्थेनेषश्चनस्यतमिति[17]।

**अश्विना पुरुदंससा नरा शवीरया धिया। धिष्ण्या वनतं गिरः ॥२॥**

**अश्विना पुरुदंससा**[18]। अश्विनौ। आश्चर्यभूतविविधकर्माणौ[19]। नेतारौ[20]। क्षिप्रमुपद्रुतं प्रतिगमनं यस्यास्तया[21]।

---

१. मक्षन् P. २. अवसम् P.
३. अश्विना S. ४. यष्टर्यन्नादि S. अन्नादि P.
यज्वरीः—इज्यते याभिस्ता यज्वरीः। इषः हविर्लक्षणान्यन्नानि। Skt.
५. यागनिष्पादिकाः Sy.
६. हविर्लक्षणान्यन्नानि Sy.
७. हविर्ग्रहणाय द्रवद्भ्यां धावद्भ्यां पाणिभ्यामुपेतौ। द्रवन्तौ धावन्तौ पाणी ययोस्तयोः सम्बोधनं द्रवत्पाणी इति। Sy.
८. शोभनस्य कर्मणः पालकौ। Sy. शुभमित्युदकनाम। Skt. उदकाधिपती। Skr.
९. विस्तीर्णभुजौ . . . . . पुरू विस्तीर्णौ भुजौ ययोस्तौ। Sy. बहूनां हविषां भोक्तारौ। Sk.
१०. इच्छतं भुञ्जाथामित्यर्थः Sy.
११. प्रत्तस्थस्य S.
१२. कर्म S. १३. वक्तुं S.
१४. RV. I. 101. 4. १५. R. V. I. 21. 1. १६. द्रविणदसः D. RV. I. 15. 7. १७. इच्छया चात्र तत्पूर्वकं भक्षणं लक्ष्यते। अस्मदीयानि हवींषि भक्षयतमित्यर्थः। Sk.
१८. वुरु० P.
१९. विविध Omitted by P.
दंस इति कर्मनाम। बहुकर्माणावित्यर्थः। Skt.
२०. नरा मनुष्याकृती। Skt.
२१. गतियुक्तया। अप्रतिहतप्रसरयेत्यर्थः। Sy.
शवीरया। शु इति क्षिप्रनाम। ईर गतौ क्षिप्रमीरणं गमनं शवीरम्। अथवा शव इति बलनाम। परबलस्य प्रेरणमपनोदः शवीरः। तेन यौ यातः गच्छतः तौ। शीघ्रगामिनौ परबलापनोदगामिनौ. . . . अथवा अनवग्रहत्वात् पदस्य याशब्दो विभक्तेरादेशो न याते रूपम्। शवीरशब्दस्तु पूर्ववत् कर्तृसाधनः। शीघ्रगामिनौ परबलस्य प्रेरयितारावित्यर्थः। शवतेर्वा गत्यर्थस्य शवीरशब्दः। यज्ञान् शत्रून् वा प्रतिगन्तारावित्यर्थः। Skt.

[1] धिया कर्मणा। [2] धिष्ण्या विषणार्हौ—धिषणा [3] वाक्—स्तोतव्यौ। [4] भजेथाम्। [5] स्तुतीः।

दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः। आ यातं रुद्रवर्तनी ॥३॥

**दस्रा युवाकवः।** [6] दर्शनीयौ !। [7] युष्मत्पानकामाः। सोमाः। [8] "सत्यावेव नासत्यावित्यौर्ण[9]वाभः। सत्यस्य प्रणेतारावित्याग्रायणः" [10]। [11] वृक्तबर्हिषः सोमाः स्तरणार्थं छिन्नबर्हिषः। आगच्छतम्। [12] युद्धे [13] घोरगमनमार्गौ।

इन्द्रा याहि चित्रभानो सुता इमे त्वायवः। अण्वीभिस्तना पूतासः ॥४॥

**इन्द्रा याहि।** इन्द्र !। [14] आगच्छ। [15] चित्रदीप्ते !। सुताः। [16] इमे सोमाः। त्वत्कामा भवन्ति। [17] अङ्गुलीभिः। दशापवित्रेण। [18] पूताः।

---

१. आदरयुक्तया बुद्ध्या। Sy. धिया प्रज्ञया चित्तेन महतादरेणेत्यर्थः। Skt.

२. धाष्टर्ययुक्तौ बुद्धिमन्तौ वा। Sy. धिषणेति वाङ्नाम। तस्याः पुत्रौ धिष्ण्यौ। अपत्ये यत्प्रत्ययो द्रष्टव्यः। अथवा धीरिति प्रज्ञानाम। ष्णै वेष्टने। धीः वेष्टयित्री सर्वार्थग्रहणसमर्था ययोस्तौ धिष्णौ। धिष्णावेव धिष्ण्यौ, अत्यन्तप्रज्ञावित्यर्थः। Skt.

३. वार्क P.

४. स्वीकुरुतम्। Sy. वनतम्—वन षण सम्भक्तौ—सम्भजतम्। Skt.

५. स्तुतिः P.

६. शत्रूणां देववैद्यत्वेन रोगाणां वोपक्षयितारौ। Sy. दसि दर्शनदंशनयोरित्येतस्य वा दस्रौ। उपक्षपयितारौ शत्रूणां दर्शनीयौ वेत्यर्थः। Skt.

७. वसतीवरीभिरेकधनाभिश्चाद्भिर्मिश्रिता इत्यर्थः। Sy. दर्शनीयौ युष्मत्पानकामाः Omitted by P. युवां कामयन्त इति युवाकवः।...अथवा यु मिश्रणे इत्यस्य युवाकवः। मिश्रिताः.. ....... वसतीवर्येकधनादिभिरद्भिः श्रयणैर्वा। Skt. वसतीवर्येकधनाभिः अभिश्रयणैः वा Skr.

८. सोदवेव P.

९. ०वित्यौणपादः P.

१०. N. 6. 13

११. पृक्त० P. D. वृक्तानि—मूलैर्वर्जितानि, बर्हींषि—आस्तरणरूपाणि येषां सोमानां ते वृक्तबर्हिषः, ऋत्विग्भिरभिषुताः वा। Sy. भवदुपवेशनार्थं बर्हिर्वेद्यां स्तीर्णमित्यर्थः। Skt.

१२. युद्धे P.

१३. रुद्राणां-शत्रुरोदनकारिणां शूरभटानां, वर्तनिः—मार्गो घाटीरूपो ययोस्तौ रुद्रवर्तनी। यथा शूराः घाटीमुखेन शत्रून् रोदयन्ति तद्वदेतावित्यर्थः। Sy. रुदे रौतेर्वा रुद्रा शब्दयन्ती वर्तनी गमनमार्गो ययोस्तौ रुद्रवर्तनी। यतो यतः शत्रुशब्दस्ततस्ततो गन्तारौ। स्वयंपथि गच्छन्तौ शब्दस्य कर्तारावित्यर्थः। Skt. सशब्दगामिनौ वा। Skr.

१४. उपागच्छ S.

१५. ०दीप्त P. S. adds कर्मणा before चित्रदीप्ते। विचित्रदीप्ते ! पूजनीयदीप्ते ! Skt.

१६. P. reads मेस्मभ्यामहं देहि ओमासः with the result that the passage beginning with इमे सोमाः etc. and ending with सोमे (RV. 1. 3. 6.) is omitted.

१७. ऋत्विजाम्। Sy.

१८. S. adds च before पूताः।

इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ॥५॥

इन्द्रा याहि । इन्द्र ! । उपागच्छ[1] । कर्मणा[2] । प्रेषितः[3] । मेधाविभिराकृष्टः[4] । यजमानस्य । यो होता तस्य[5] । स्तोत्राणि[6,7] ।

इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥६॥

इन्द्रा याहि । इन्द्र ! । उपागच्छ । त्वरमाणः । स्तोत्राणि । गमनसाधनभूताश्ववन् ! । आगत्य । अस्मिन्[7] सुते[8] सोमे । अस्मभ्यम्[9] । अन्नम्[10] । देहि[11] ।

ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वांसो दाशुषः सुतम् ॥७॥

ओमासः[12] । अवितारः[13] । मनुष्यधृतः[14] । सर्वे[15] । देवाः । इहागच्छत । दानशीलाः[16] । दाशुषः । सुतम् ।

---

१. आगच्छ S. २. अस्मदीयया प्रज्ञया । Sy. and Skt.

३. प्रषितः D. प्राप्तः अस्मद्भक्त्या प्रेरित इत्यर्थः । Sy. अधीष्टः अभ्यर्थितः Skt. ४. यथा यजमानभक्त्या प्रेरितस्तथान्यैरपि विप्रैः मेधाविभिर्ऋत्विग्भिः प्रेरितः । Sy. अभिगतः.... अभिष्टुत इत्यर्थः । Skt. मेधाविभिः ऋत्विग्भिरभिगतः । मया ऋत्विग्भिश्च स्तुतः । Skr.

५. सुतावतः-अभिषुतसोमयुक्तस्य । वाघतः—ऋत्विजः । Sy. वाघतः—ऋत्विङ्नामैतत् । इह तु सुतावतो यजमानस्य विशेषणत्वादन्तर्णीतमत्वर्थः । ऋत्विग्वतो यजमानस्येति । अथवा वाघत इत्येतस्यैव सुतावत इत्येतद् विशेषणम् ।...ऋत्विजः । Skt. अथवा कृतसोमाभिषवस्य ऋत्विजः । Skr.

६. ब्रह्माणि—ब्रह्मेत्यन्ननाम । यजमानस्य स्वभूतानामन्नानां हविर्लक्षणानामन्नानां समीप इत्यर्थः ।. . .ब्रह्मशब्दश्च स्तुतिवचनः. . .याः स्तुतयस्तत्समीपे । Skt.

७. S. adds च before अस्मिन् ।

८. सोमाभिषवयुक्ते कर्मणि । Sy. द्वितीयार्थे सप्तम्येषा । सुतमभिषुतम् । । Skt.

९. अस्मदीयं (अस्माकं) Sy. नः, अस्माकम् Skt.

१०. चनः सोमलक्षणमन्नम् । Skt.

११. धारय स्वीकुर्वित्यर्थः । Sy. दधिष्व धारय स्वोदरे पिबेत्यर्थः । Skt.

१२. आमासः D. १३. अवितारो वा । अवनीया वा । मनुष्यधृतः सर्वे च देवा इहागच्छत । दत्तवन्तः दत्तवतः सुतमिति । N. 12. 40. अवतेरयं पालनार्थस्य तर्पणार्थस्य वा . . . . . . अवितारः, रक्षितारः, तर्पयितारो वा । Skt.

१४. चर्षणयो मनुष्याः, तेषां तैस्तैरुपकारैर्धारयितारः । Skt.

१५. विश्वे देवासः—एतन्नामका देवविशेषाः । Sy. १६. फलस्य दातारः । Sy.

**विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः । उस्रा इव स्वसराणि ॥८॥**

**विश्वे देवासः ।** विश्वे । देवाः । मेघस्थानामपामुद्गमयितारः[1] । सुतम्[2] । आगच्छत[3] । **सर्वं** ये तरन्ति[4] । रश्मय इव[4] । अहानि[5] । यद्वा गोष्ठानीव[6] । गावः[7] ।

**विश्वे देवासो अस्रिध एहिमायासो अद्रुहः । मेधं जुषन्त वह्नयः ॥९॥**

**विश्वे देवासः ।** विश्वे । देवासः[8] । क्षयरहिताः[9] । स्तोतारम् 'एहि मायासीः' इति वदन्तः[10][11] । द्रोहरहिताः[12] । यज्ञम्[13] । असेवन्त[14] । वोढारः[15] ।

**पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥१०॥**

**पावका नः ।** शोधयित्री[16] । अस्माकम् । सरस्वती[17] । अन्नैः[18] । अन्नवती[19] । यज्ञम् । वहतु

---

१. अप्तुरः—अप्शब्द उदकवचनः । अन्तर्णीतण्यर्थस्य तरतेरप्तुरः । अपां तारयितारः, आदित्यं प्रति गमयितारः । रश्मयो हि नैरुक्तानां विश्वे देवाः । ते च रसानामादातारः । अथवा आप्लृ व्याप्तावित्येतस्य तृजन्तस्य षष्ठ्येक-वचन एतद् रूपम्...आप्तुर्यजमानस्य.. ...अप्तुरः! यूयम् Skt. अप् उदक-मन्तरिक्षं वा । तॄ प्लवनतरणयोः । Skr.

२. S. adds क्षिप्राः before सुतम्

३. गच्छतं P. ४. चेतारन्ति P. तूर्णयः—त्वरायुक्ताः, यजमानमनुग्रहीतु-मालस्यरहिता इत्यर्थः । Sy. तूर्णयः ... क्षिप्राः । Skt.

५. स्वसराण्यहानि भवन्ति । स्वयं सारीण्यपिवा । स्वरादित्यो भवति । स एनानि सारयति । N. 5. 4.

६. गोष्ठानिव P. ७. गाः P.

८. देवाः S.

९. स्रिधः क्षयार्थः शोषणार्थो वा । अक्षया अशोषयितारो वा Skt.

१०. एहिमायासः—सर्वतो व्याप्तप्रज्ञाः । यद्वा सौचीकमग्निमप्सु प्रविष्टम्'एहि मा यासीः' इति यदवोचन्, तदनु-करणहेतुकोऽयं विश्वेषां देवानां व्यप-देश एहिमायास इति । Sy. अथवा अहीनमाया एहिमायासः । अन्यून-प्रतिज्ञाना इत्यर्थः । Skt.

११. वदतः P. D.

१२. द्रोहरहितं P. द्रोहरता D.

१३. हविर्यज्ञसंबद्धम् । Sy.

१४. सेवन्ताम् । Sy.

१५. धनानां दातार इत्यर्थः । Skt. वोढारः प्रापयितारः धनादातारः । Skr.

१६. अंहसां पापानामपनेत्री । अथवा पवतिः क्षारणार्थः । . . . . ण्यन्तश्चात्र द्रष्टव्यः । क्षारयित्र्युदकानाम् । Skt.

१७. सरस्वती मध्यमस्थाना वाक् । Skr. सरस्वती प्रथमस्थानवाक् । Skt.

१८. हविर्लक्षणैरन्नैर्निमित्तभूतैर्यजमानेभ्यो दा-तव्यैरन्नैर्निमित्तभूतैर्वा । Sy. हविर्लक्षणैरन्नैः । Skt.

१९. अन्नवत्क्रियावती । Sy. वाजो बलं वेगो वा तद्वती वाजिनीवती । . . . . . स्वभूता सेना तद्वती. . . . अथवा वाजो हविर्लक्षणमन्नं तद् यस्या अस्ति सा. . . . . यागसन्ततिः । Skt.

कामयतां[1] वा। प्रज्ञया[2] सर्वेषां वासयित्री[3]।

**चोदयित्री सूनृतानां चेतन्ती सुमतीनाम्। यज्ञं दधे सरस्वती ॥११॥**

चोदयित्री। चोदयित्री[4]। सत्यानाम्[5]। प्रज्ञापयन्ती। उदाराणां[6] सुमतीनाम्[7]। यज्ञम्[8]। धारयति[9]। सरस्वती[10] मन्त्रपूता[11]।

**महो अर्णः सरस्वती प्र चेतयति केतुना। धियो विश्वा वि राजति ॥१२॥**

महो अर्णः[12]। महत्। उदकम्[13]। सरस्वती मध्यमस्थाना[14]। प्रज्ञापयति। कर्मणा[15]। सर्वाणि च। कर्माणि[16]। राजयति[17][18]।

---

१. कामयां P. कामनेनात्रागमनं संभजनं च लक्ष्यते। यो हि यं कामयते स तमागच्छति सम्भजति च। आगच्छतु संभजतां चेत्यर्थः। Skt.

२. धियावसुः कर्मप्राप्यधननिमित्तभूता। Sy. प्रज्ञाधना। अथवा वसेराच्छादनार्थस्य वसुशब्दः। प्रज्ञया छादयित्री सर्वार्थानाम्। Skt.

३. पावका नः सरस्वती। अन्नैरन्नवती। यज्ञं वष्टु धियावसुः कर्मवसुः। N.11.26

४. मध्यमस्थाना हि सरस्वती। सा च गर्जितलक्षणां वाचं चोदयित्री। Skt. प्रेरयित्री। Skr.

५. सूनृतानाम्। अपठितमपि वाङ्नामैतत्। Skt. पथ्यसत्यवतीनां वाचाम्। Skr.

६. जानन्ती। Sk. ७. ० दराणां P.

८. सुमतिर्यज्ञं P. सुमतीं र्यज्ञम् D. द्वितीयार्थे षष्ठीयम्। सुमतीन् भक्तिपरान् यजमानान्। Skt.

९. धारयन्ती D. धारयित्री S. धारितवती. Sy। भूयिष्ठस्य यज्ञस्य मन्त्रलक्षणा वाक् सरस्वत्यायत्ता ततः। Skr. भूयिष्ठस्य यज्ञस्य मन्त्रलक्षणवागायत्तत्वात् तस्याश्च सरस्वत्यायत्तत्वात्। Skt.

१०. सरस्वति P. ११. भूता S.

१२. अणः D. महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वा। इमानि च सर्वाणि प्रज्ञानान्यभिविराजति। N. 11. 27.

१३. मेघस्थमुदकम्। Skt.

१४. नदीरूपा सरस्वती। Sy.

१५. कर्मणा गर्जनाख्येन। गम्भीरं हि गर्जितं श्रुत्वा महदत्र मेघ उदकमित्यवगम्यते। Skt.

१६. सर्वाण्यनुष्ठातृप्रज्ञानानि। Sy. कर्माणि प्रज्ञा वा। Skt.

१७. भाजयति D. विविधं दीपयति। वाग्घि सरस्वती। सा च यागकर्माणि प्रज्ञा वा दीपयति वृष्टिद्वारेण। अथवा..... कर्मणां प्रज्ञानां वा सर्वासां विविधमीष्ट इत्यर्थः। Skt.

१८. MS. D puts the figure ॥ ३ ॥ here to indicate the end of the third hymn. No such number is given in P.

I.4.

**सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि ॥१॥**

सुरूपकृत्नुम् । सुरूपाणां कर्मणां कर्तारम् । रक्षणाय[1] । सुदोहामिव[2] धेनुम् । तस्या एव दोहार्थम् । आह्वयामः । अन्वहम् ।

**उप नः सवना गहि सोमस्य सोमपाः पिब । गोदा इद्रेवतो मदः ॥२॥**

उप नः । उपागच्छ[3] । अस्माकम् । सवनानि[4] । सोमं[5] च । सोमपातः[6] ! । पिब । अथ परोक्षः[7]-गोदाः । एव[8] भवत्याश्रितस्य । आढ्यस्य[9] । मदः[10] । तृप्त आढ्यः प्रयच्छति पशूनिति ।

**अथा ते अन्तमानां विद्याम सुमतीनाम् । मा नो अति ख्य आ गहि ॥३॥**

अथा[11] ते[11] । संप्रति[12] । तव । सन्निकृष्टास्त्वयि[13] विद्यमानाः । सुमतीः[14] । वयं लभेमहि[15] । सर्वेणा-

---

१. ऊतये सोमेन तर्पणाय पालनाय वा Skt.

२. यथा कश्चित् सुदोहां गां तस्या एव गोर्दोहायाह्वयेत् तद्वत् । Skt.
यथा कश्चित् शोभनदोहनां गां गोदोहाय आह्वयति. . . . . .तद्वत् । Skr.

३. उपगच्छ D.

४. यज्ञनाम वा सवनशब्दः । यज्ञान् Skt.

५. सोमस्य द्वितीयार्थे षष्ठी । षष्ठीश्रुतेर्वैकदेशमिति शेषः । सोमं सोमस्य वैकदेशं स्वांशलक्षणं वा । Skt.

६. ०पातं D.

७. परोक्षौ D. परे तक्ष (?) S.

८. इच्छब्दः पदपूरणः । यस्मादर्थे वा । Skt.

९. ०आढ्यः S.

१०. मदः-हर्षः । Sy.
रेवतः—धनवतस्तव । Sy.
यस्माद् रेवतो धनवतस्तव मदः । यस्मात् त्वं सोमेन मत्तो गा ददासीत्यर्थः । Skt.

११. अथासौ P. अथेत्यानन्तर्ये । Skt. अथ सोमपानानन्तरम् । Sy. and Skt.

१२. प्रति P.
अन्तमानां द्वितीयार्थे षष्ठीयम् । अन्तमान् सन्निकृष्टान् । . . .अथवा अन्तमानां सुमतीनामिति निर्धारणे षष्ठी । तव सन्निकृष्टानां सुमतीनां मध्ये. . .अथवा . . . यानि सन्निकृष्टानि सुमतीनि मतिः स्तुतिर्मन्यतेरर्चतिकर्मत्वात्-सुस्तुतीनि सुपूजितानि अत्यन्तोत्कृष्टानि धनानि तानि तेषां वैकदेशम् । Skt.

१३. सन्निकृष्टं P.

१४. सुतामतीः P.
सुमतीनां शोभनमतियुक्तानां शोभनप्रज्ञानां पुरुषाणां मध्ये स्थित्वा विद्याम—वयं त्वां जानीयाम । यद्वा सुमतीनां शोभनबुद्धीनां कर्मानुष्ठानविषयाणां लाभार्थम् । . . . बुद्धिलाभाय त्वां स्मरेमेत्यर्थः । Sy.

१५. विद्याम । विद ज्ञाने जानीयाम . . . विद सत्तायाम् । वयमपि भवेम . . . अथवा विदिर्लाभे इत्येतस्यैतद् रूपम् . . . . लभेमहि । Skt.

भ्युदयेनायं युक्तोऽस्त्विति मतिः सुमतिः । मा । अस्मान् । अपहाय । अन्यान् द्राक्षीः । इहागच्छ ।

**परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् । यस्ते सखिभ्य आ वरम् ॥४॥**

परेहि । स्तोत : । इतस्त्वमुपगच्छ । गत्वा च मेधाविनम् । अस्तृतमहिंसितं शत्रुभिः । इन्द्रम् । पृच्छ कीदृशः क्व स वर्तत इति ? कञ्चन विपश्चितं पृच्छ । य इन्द्रः । तव । पुत्रादिभ्यः । वरणीयं धनम् । आप्रयच्छति ।

**उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत । दधाना इन्द्र इद्दुवः ॥५॥**

उत ब्रुवन्तु । अपिच काममग्रतः स्थित्वा । अस्मान् । निन्दितारः । ब्रुवन्तु । निर्गच्छन्तु

---

१. ०स्तीति P. २. For the passage beginning from मा अस्मान् and ending with द्राक्षीः P reads स्मानवहा नान्यान्द्राक्षीः

३. अस्मानतिक्रम्यान्येषां तत्स्वरूपं मा प्रकथय । किंत्वागह्यस्मानेवागच्छ । Sy.

४. अतिपूर्वोऽत्र ख्यातिः सामर्थ्यात् परित्यागेऽतिक्रमे वा. . .मास्मान् कदाचिदपि परित्याक्षीः, अतिक्रमीर्वा. . .अथवा ख्यातिः प्रथनार्थ एव . . . मास्मानतिख्यः, अन्येभ्यः प्रकाशीभूः । Skt. अतेर्योग्यक्रियाध्याहारश्च । मा अस्मान् अतिख्यः अन्यसकाशं मा गमः । अस्मत्समीपमेव आगच्छ । Skr.

५. ०गच्छतं P. ६. ०रितत्व० D. हे यजमान ! त्वम् इन्द्रं परेहि—इन्द्रस्य समीपे गच्छ । Sy. आत्मन एवान्तरात्मनः प्रैषः । हे अन्तरात्मन् । Skt.

७. मेधाविम् P. D.

८. अस्तृतं omitted by S. स्तृञ् छादने हिंसायां वा । अनाच्छादितं. . .अहिंसितं वा । Skt. ९. ०सित D. १०. इदं S.

११. इन्द्रसकाशं गच्छेत्यर्थः । गत्वा च पृच्छ कं विपश्चितं . . . . मेधाविनं स्तोतारम् । कतमोऽसौ पुमान् अत्यन्तमेधावी स्तोता यस्य त्वं सम्यक् स्तुतिं शृणोषि इत्येतद् गत्वा इन्द्रं पृच्छ । Skt. १२. वर्त्त P.

१३. विपश्चितं—मेधाविनं मां होतारं पृच्छ । असौ होता सम्यक् स्तुतवान्न वेत्येवं प्रश्नं कुरु । Sy. १४. सखिभ्यः—ऋत्विग्भ्यः । Sy. सखिस्थानीयेभ्यः पुत्रपौत्रादिभ्यो वा । Skt. सखायः ऋत्विजः पुत्रपौत्रादयो वा । चतुर्थी भ्यस् । Skr.

१५. आवरम्—आ इत्युपसर्गाद् वरं सखिभ्य इति च कर्मसम्प्रदानश्रुतेर्योग्यक्रियाध्याहारः । आदत्ते वरं ददाति । अभिलषितं ददातीत्यर्थः । Skt.

१६. उतशब्दः पदपूरणः । अप्यर्थे समुच्चये. . . अपि ब्रुवन्तु उच्चारयन्तु. .इन्द्रस्य स्तुतीः । इन्द्रं नित्यं स्तुवतामित्यर्थः । Skt.

१७. प्रत्यक्षमेव is added after कामं and before अग्रतः by S.

१८. स्थितत्वास्मान् P. स्थितास्मान् D.

१९. नः अस्माकं स्वभूता ऋत्विजः पुत्रपौत्रादयो वा । Skt.

२०. हे निदः—निन्दितारः Sy. २१. इन्द्रं स्तुवन्तु । Sy. २२. निर्गच्छतो P. D. इतो देशान्निर्गच्छत । Sy.

वा[1]। अन्यतः[1]। वयं त्विन्द्रे। परिचर्याम्। दधाना[2] न[3] बिभिम[3]:। इदिति[4] पूरणमिति। अस्योत्तरा भूयसे निर्वचनाय 'उत[5] नः[6]' इति।

**उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः। स्यामेदिन्द्रस्य शर्मणि ॥६॥**

अरिः कृष्टय इत्येकवचनबहुवचनयोर्भिन्नपादस्थयोर्भिन्नमन्त्रस्थयोरिव[7] विरम्याभिधानात् सामानाधिकरण्यं[8] सिध्यति। अपिच। अस्मान्। इन्द्रसमाश्रयणात् सुभगानहिंसितधनान्[9][10]। अरि:। विब्रवीतु। विब्रुवन्तु चारयो[11] मनुष्याः[12]। दर्शनीय[13]!। अथापि वयम्। इन्द्रस्य। स्वभूते[14] सुखे। स्याम। एव।

**एमाशुमाशवे भर यज्ञश्रियं नृमादनम्। पतयन्मन्दयत्सखम् ॥७॥**

एमाशुम्। आभर। एनम्। क्षिप्रव्यापिनं सोमम्[15]। क्षिप्रव्यापिन इन्द्राय[16]। यः सोमो यज्ञं[17]

---

१. वन्तरन्यतो P.
अन्यस्मादपि देशात्। Sy. निदः ये त्वस्माकं निन्दितारः...अन्येनैव पथा प्रयान्तु। मा इन्द्रं कदाचिदपि तत्त्वतो ज्ञासिषुः। मा च स्ताविषुरित्यर्थः। Skt.

२. दधानाः—कुर्वाणाः। Sy.
इन्द्रं परिचरितुमिच्छन्त इत्यर्थः। Skt.

३. वबिभेम P. न बिभेम D.
न बिभीमः S. सर्वदा परिचर्यां कुर्वन्त एव तिष्ठन्तु। Sy.

४. इच्छब्दोऽवधारणे। Sy.

५. "उत नः" is taken as the Pratīka of the next stanza and added in the beginning of 1. 4. 6. by S. But the word इति in both of our MSS. indicates that its right place is here.

६. उत S. ७. र् omitted by D.

८. समा० P. ९. ०हिंसितान् S.
त्वदनुग्रहात्... शत्रवोऽपि...अस्मान् सुभगान्—शोभनधनोपेतान्, वोचेयुः उच्यासुः, कृष्टयः—मनुष्या अस्मन्मित्रभूता वदन्तीति किमु वक्तव्यमिति शेषः। Sy.

१०. ०सनान् P. धन is omitted by S.

११. वा० S.

१२. तादृशं धनमस्मभ्यं देहि येन शत्रवोऽपि ईश्वरा अपिवा अस्मान् सुधनान् ब्रुवन्ति। Skt.
शत्रवः किमुत अन्ये मनुष्याः Skr.

१३. शत्रूणामुपक्षपयितरिन्द्र! Sy.
उपक्षयितश्शत्रूणां दर्शनीय वा Skt.
दसु उपक्षये दर्शने च। शत्रुहन् दृश्य वा। Skr.

१४. इन्द्रप्रसादाल्लब्धे सुखे स्यामेत्—भवेमैव। Sy. तवेन्द्रस्य सम्बन्धिनि शर्मणि सुखे त्वया दत्तेन धनेन सुखिनश्च भवेमेत्यर्थः। अथवा शर्मेति गृहनाम। मरणोत्तरकालं तवेन्द्रस्य गृहे भवेम इन्द्रलोकं गच्छेमेत्यर्थः। Skt.

१५. सामं D. क्षिप्रव्यापिनं सोमं omitted by P. सवनत्रयव्याप्तम् Sy.

१६. कृत्स्नसोमयागव्याप्ताय—इन्द्राय। Sy.

१७. यज्ञस्य संपद्रूपम्। Sy.

श्रयति। मदयति[1] च मनुष्यान्[2]। तम्। पतयन्तं[3] पातयति हि सोमः। पातारं[4] मदयति[5] च सखायं पातैव सखेति।

**अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः। प्रावो वाजेषु वाजिनम् ॥८॥**

**अस्य पीत्वा**। अमुं[6] सोमम्। पीत्वा। शतप्रज्ञ![7] । हन्ता। शत्रूणाम्[8]। अभवः[9]। प्रापयश्च[10]। युद्धेषु। युद्धवन्तं[11] स्तोतारम्।

**तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो। धनानामिन्द्र सातये ॥९॥**

**तं त्वा वाजेषु**। तम्[12]। त्वा[13]। युद्धेषु। बलिनम्। स्तुतिभिर्बलिनं कुर्मः[14]। शतप्रज्ञ![15] । धनानाम्[16]। इन्द्र! । लाभाय[17]।

१. नृमादनम्—नृणामृत्विग्यजमानानां हर्षहेतुम्। Sy.

२. मनुष्यन्तं D. नरो मनुष्या ऋत्विजस्तदाकारा वा देवास्तेषां मदकरम् Skt.

३. पतयत्—पतयन्तं—कर्माणि प्राप्नुवन्तम्। Sy.
पतयन्तं गच्छन्तमिन्द्रं प्रति गन्तारमित्यर्थः। Skt.

४. Omitted by P.

५. मन्दयति यजमानान् हर्षयति तस्मिन्निन्द्रे सखिभूतोऽयं सोमः। Sy.
मन्दयतिरर्चतिकर्मा। तानि तान्यभिप्रेतानि स्तोतुः सम्पादयन् य आत्मनः स्तुतिं कारयति, इन्द्रस्य सखीभूतः। Skt.

६. अमुं पीत्वा सोमं S.
अस्य सोमस्यैकदेशं स्वांशलक्षणं पीत्वा S.
अस्य सोमस्य सम्बन्धिनमंशं पीत्वा। Sy.

७. बहुकर्मयुक्तेन्द्र! Sy.
क्रतुः कर्म प्रज्ञा वा। बहुकर्मन् बहुप्रज्ञ वा। Skt.

८. वृत्रनामकासुरप्रमुखाणां शत्रूणाम्। Sy.
वृत्राणामसुराणामन्येषां वा। Skt.
वृत्राणां शत्रूणाम् असुराणाम् वा। Skr.

९. अथवा अभवः प्राव इति लोडर्थे लङ्। हन्तास्मदीयानां शत्रूणां भव। Skt.

१०. प्रावयश्च D. पालय च S.
प्रावः—प्रकर्षेण रक्षितवानसि। Sy.

११. वाजिनं संग्रामवन्तं हविर्लक्षणेनान्नेनान्नवन्तम्. . . . आत्मत्राणे संसर्गे वा ब्राह्मणवैश्ययोरपि शस्त्रादानस्मरणात् सम्भवत्यृषीणामपि संग्रामो विशेषेण तु मधुच्छन्दसः क्षत्रियप्रसूतत्वात्। तत्रेदं शत्रुहननमात्मरक्षा चाशास्यते। Skt.

१२. तं प्रकृतम्। Sk.

१३. त्वा—पूर्वमन्त्रोक्तगुणयुक्तं त्वाम्। Sy.

१४. अन्नवन्तं कुर्मः। Sy.
वाजयतिरर्चतिकर्मा, स्तुमः। Skt.

१५. बहुकर्मयुक्त यद्वा बहुप्रज्ञानयुक्त। Sy.
बहुकर्मन् बहुप्रज्ञ (बहुकर्म R.) वा। Skt.

१६. संग्रामे जिगीषितानां धनानाम्। Skt.

१७. संभजनार्थम्। Sy.
षणु दाने। दानाय। अथवा वन षण सम्भक्तौ संभजनाय लाभायेत्यर्थः। Skt.

**यो रायो३वनिर्महान्त्सुपारः सुन्वतः सखा । तस्मा इन्द्राय गायत ॥१०॥**

**यो रायः** । यः । स्तोतुर्धनस्य[1] । रक्षकः । महान् । शोभनपरणः[2] । सुन्वतः[3] । सखा[4] । तस्मै । इन्द्राय[5] गायतेति[6] ।

I.5.

**आ त्वेता नि षीदतेन्द्रमभि प्र गायत । सखायः स्तोमवाहसः ॥१॥**

**आ त्वेता**[7] । पूर्वेण सूक्तेनाहूतमिन्द्रं स्तोतुमुपक्रमते । आगच्छत । क्षिप्रमुद्गातारः[8] । उपसर्गाः प्रयुक्ता अपि प्रागाख्यातात् पुनः प्रयुज्यन्ते—वक्ष्यते तत्र कारणम् । आगत्य । च । निषीदत गानार्थम् । अथेन्द्रम् । अभिप्रगायत[9] । सखायः[10] । प्रस्तावात्[11] प्रतिहारादुपगानाच्च स्तोमस्य नेतारः[12] ।

**पुरूतमं पुरूणामीशानं वार्याणाम् । इन्द्रं सोमे सचा सुते ॥२॥**

**पुरूतमम्**[13] । बहूनाम् । उपक्षपयितारम्[14] । गवामसि गोपतिरित्यनेन समानो निर्देशः ।

---

१. अवनिः पृथिवीनामैतत् । आश्रयत्वसामान्यात्तु इन्द्रे प्रयुज्यते । यथा पृथिवी सर्वार्थानामाश्रयस्तद्वदाश्रय इत्यर्थः । अथवा अवतेः स्वाम्यर्थस्य वा अवाप्त्यर्थस्य वा. . . .धनस्येशिता अवाप्ता वेत्यर्थः । Skt.

२. ०वरणः P. ०पूरणः S. सुष्ठु कर्मणः पूरयिता । Sy. सुष्ठु च पालयिता । Skt.

३. सुन्वतोऽभिषवं कुर्वतः सोमयाजिनः । Skt.

४. सखा—सखिवत् प्रियः । Sy.

५. तस्येन्द्रस्यार्थाय । तमिन्द्रं स्तोतुमित्यर्थः । गायत सामगा ! उद्गातारः . . . . . . स्तुतिमुच्चारयत । यूयमृत्विजो मत्पुत्रपौत्रा वा । Skt.

६. MS. D. puts the figure ॥४॥ here to indicate the end of the fourth hymn. No such number is given in P.

७. अत्वेत । D.

८. क्षिप्रमवश्यम् । Skt.

९. सर्वतः प्रकर्षेण स्तुत । Sy. प्रकर्षेणाभिष्टुत । Skt. अभिप्रगायत च । Sk.

१०. सखाय ऋत्विजः । Sy. Skt.

११. प्रस्तावान् P. For the passage beginning with प्रस्तावात् and ending with स्तोमस्य S. reads प्रस्तावप्रतिहारोपगानोपनिधनस्तोमस्य. S.

१२. त्रिवृत्पञ्चदशादिस्तोमानस्मिन् कर्मणि वहन्ति प्रापयन्ति । Sy. स्तोमानामिन्द्रं प्रति प्रापयितारः स्तोतार इत्यर्थः । Skt.

१३. पुरु० D.

१४. ०क्षयितारं D. पुरुशब्दो बहुनाम । तमशब्दोऽपि नातिशयप्रत्ययः । अर्थासम्भवादुदात्तत्वाच्च । किंतर्हि ? तमु अभिकाङ्क्षायाम् इत्यस्य रूपम् । बहुभिर्योऽभिकाङ्क्ष्यते प्रार्थ्यते याच्यते स पुरूतमस्तं पुरूतमम् Skt.

धनानाम्[1]। ईश्वरम्। इन्द्रम्[2]। सहाभिप्रगायत[3]। अभिषुते[4]। सोमे।

**स घा नो योग आ भुवत्स राये स पुरंध्याम्। गमद्वाजेभिरा स नः॥३॥**

स घा नः। सः[5]। एव। अस्माकम्[5]। अप्राप्तप्राप्त्यर्थम्[6]। आवहतु[7]। सः। धनाय। पुरन्धि-र्बहुधीर्योषा[8] तस्यै[9] च। अन्नैश्च[10]। अस्मान्। आगच्छतु[11]। सः।

**यस्य संस्थे न वृण्वते हरी समत्सु शत्रवः। तस्मा इन्द्राय गायत॥४॥**

यस्य संस्थे। यस्मिन्। अवस्थिते[12]। न। वारयन्ति[13]। तस्य[14] स्वभूतावश्वौ। संग्रामेषु[15]। शत्रवः। तस्मै। इन्द्राय। गायत[16]।

---

१. उत्कृष्टानां धनानाम् Sk.

२. इदि परमैश्वर्ये अत्यन्तेश्वरम् Sk.

३. अभिप्रगायत सहाभिषुते S.
सर्वैर्ऋत्विग्भिः सह Skt.

४. कालोपलक्षणं चेदम्। अभिषवोत्तर-कालम् Sk.

५. सहवास्माकं P.

६. प्राप्त० P. S. adds योगं after ०प्राप्त्यर्थं and before आवहतु।
योग उद्योगः, उत्साहः, अलब्धलाभो वा Skt.
पूर्वमप्राप्तस्य पुरुषार्थस्य सम्बन्धे Sy.

७. आभवतु पुरुषार्थं साधयतु Sy.
आभिमुख्येन भवतु। योगमस्माकं करोत्वित्यर्थः Skt.

८. पुरन्धि बहुय्योषो P. पुरन्धि बहु-धिर्य्योषा D.
पुरंध्यां–योषिति आभुवत्, यद्वा बहु-विधायां बुद्धौ आभुवत् Sy.
बह्व्यां प्रज्ञायाम् Skr.

९. तरस्यै P.

१०. हविर्लक्षणैरन्नैर्हेतुभूतैः हविरुपभोगार्थ-मित्यर्थः Skt.
अस्मद्देयैः अन्नैः हविरुपभोगार्थं वा Skr.

११. ०गच्छता P.

१२. रथे Sy.
संग्रामे Sk.

१३. न संभजन्ते। रथमश्वौ च दृष्ट्वा पलायन्त इत्यर्थः Sy.
प्राप्नुवन्ति Sk.

१४. D. adds तेन before तस्य।

१५. क्रियाशब्दोऽयं न सङ्ग्रामनाम। अद भक्षणे। सम्भक्षयत्सु परस्परं योद्-धृषु महति युद्धे प्रवृत्त इत्यर्थः Skt.
समत्सु संभक्षयत्सु। महायुद्धे परस्परं अदन्ति योद्धारः Skr.
यः संग्रामे महति युद्धे प्रवृत्ते दूरस्थानेव रथप्राप्तान् शत्रून् निहन्ति Skt.
यस्मात् शत्रूणामप्राप्तिः। दूरस्थानपि सरथो गत्वा निहन्ति Skr.

१६. सामान्युच्चारयत वा स्तुतीः Skt.

**सुतपाव्ने सुता इमे शुचयो यन्ति वीतये। सोमासो दध्याशिरः ॥५॥**

सुतपाव्ने[1]। सुतं[2] यः पिबति तस्मै। सुताः। इमे। सोमाः[3]। पूताः[4]। पानाय[5]। गच्छन्ति[6]। दधिमिश्रयणाः[7]।

**त्वं सुतस्य पीतये सद्यो वृद्धो अजायथाः। इन्द्र ज्यैष्ठ्याय सुक्रतो ॥६॥**

त्वं सुतस्य[8]। त्वम्। सुतस्य। पानार्थम्[9]। सद्यः। वृद्धः[10]। भवसि प्रवृद्धशरीरः। इन्द्र!। श्रेष्ठं[11] कर्म कर्तुम्। शत्रुषु सुप्रज्ञ[12]।

**आ त्वा विशन्त्वाशवः सोमास इन्द्र गिर्वणः। शं ते सन्तु प्रचेतसे ॥७॥**

आ त्वा विशन्तु। आविशन्तु[13]। त्वाम्[13]। क्षिप्राः[14]। सोमाः। इन्द्र!। गीर्भिर्वननीय[15]!। शं[16] च। तुभ्यम्। भवन्तु[17]। सुमतये।

---

१. सुतपाव्ने सुतपाव्ने P.
सुतानां सोमानां पात्रे Skt.

२. S. adds सोमं after सुतं and before यः। ३. सोमान P.

४. पूः P. ५. भक्षणार्थम् Sy.

६. न चाप्रदीयमानानां गमनं सम्भवतीति प्रदानमनेन लक्ष्यते। सम्प्रदानचतुर्थीश्रुतेः दानार्थं एव वा एतिः। प्रदीयन्त इत्यर्थः Skt.

७. ०मिश्रयणाः is doubtful ०मिश्राः seems to be grammatically correct and proper reading.
अवनीयमानं दधि आशीर्दोषघातकं येषां सोमानां ते दध्याशिरः Sy.
दध्याशिरः दधिमिश्राः। सोममिश्रं हि दध्याशीरुच्यते Skt.

८. त्वं सुतस्य omitted by D. S.

९. अथवा पीतय इति तृतीयार्थे चतुर्थी। त्वं सुतस्य सोमस्य पानेन सद्य एव समान एवाहनि पानानन्तरमेव शरीरेण च वीर्येण च परिवृद्धो भवसि Skt.

१०. युद्धो P.
अभिवृद्धयोत्साहेन युक्तोऽभूः Sy.

११. देवेषु ज्येष्ठत्वार्थम् Sy.
वृत्रवधादिकाय Skt.
अतिशयेन प्रशस्यः प्रवृद्धो वा ज्येष्ठः। तत्कर्म ज्यैष्ठ्यम्। तस्मै च वृत्रवधादिकाय Skr.

१२. सुप्रज्ञ! S. Both the MSS. D. and P. add visarga after सुप्रज्ञ but it should be in the vocative as सुक्रतो in the Vedic stanza is in the vocative.
शोभनकर्मन् शोभनप्रज्ञ वा Sy.
हे सुकर्मन् सुप्रज्ञ वा Skr.

१३. आत्वाविशन्त्वां P.
त्वया पीयन्ताम् Sk.

१४. सवनत्रये प्रकृतिविकृत्योर्वा व्याप्तिमन्तः Sy.
स्वकार्यकरणे क्षिप्राः Skt.
मादने क्षिप्राः Skr.

१५. स्तुतिभिः सम्भजनीयः। स्तुतीनां वा सम्भक्तः Skt.

१६. शम्–सुखरूपाः सोमाः सन्तु Sy.

१७. भवतु S.

**त्वां स्तोमा अवीवृधन्त्वामुक्था शतक्रतो । त्वां वर्धन्तु नो गिरः ॥८॥**

त्वां स्तोमाः। त्वाम्। त्रिवृदादयः[1] स्तोमाः[2]। अवीवृधन्[3]। त्वाम्। शस्त्राणि[4] च। शतकर्मन्[5]!। त्वामेव। वर्धयन्तु। अस्माकमपि। गिरः[6]।

**अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्रिणम् । यस्मिन्विश्वानि पौंस्या ॥९॥**

अक्षितोतिः। अक्षीणरक्षणोऽपि[7]। भजेत[8]। अनेकपुरुषयुक्तम्[9]। इमम्। संग्रामम्। यस्मिन्। सर्वाणि। बलानि[10] शत्रूणाम्[11]। प्रादुर्भवन्ति[12]।

---

१. A Trivṛt hymn is composed of three stanzas and is of three kinds—(1) Udyatī, (2) Parivartinī, and (3) kulāyinī. Each of these is further subdivided into three kinds :—Tṛcabhāga, (2) Āvāpa, and (3) Paricarā तिसृभ्यो हिङ्करोति स प्रथमया, तिसृभ्यो हिङ्करोति स मध्यमया, तिसृभ्यो हिङ्करोति स उत्तमयोद्यतीत्रिवृतो विष्टुतिः Tāṇḍya 2.1.1. तिसृभ्यो हिङ्करोति स पराचीभिः, तिसृभ्यो हिङ्करोति स पराचीभिः तिसृभ्यो हिङ्करोति स पराचीभिः परिवर्तिनीत्रिवृतो विष्टुतिः Tāṇḍya 2. 2. 1. तिसृभ्यो हिङ्करोति स पराचीभिः, तिसृभ्यो हिङ्करोति या मध्यमा सा प्रथमा योत्तमा सा मध्यमा या प्रथमा सोत्तमा, तिसृभ्यो हिङ्करोति योत्तमा सा प्रथमा या प्रथमा सा मध्यमा या मध्यमा सोत्तमा, कुलायिनीत्रिवृतो विष्टुतिः Tāṇḍya 2. 3. 1.

२. सामगानां स्तोत्राणि Sy. अस्मदीयोद्गातृप्रयुक्तानि स्तोत्राणि Skr.

३. वर्धितवन्तः Skt. वर्धयन्ति Skr.

४. उक्थं तृतीयसवने होतुः शस्त्रविशेषवचनं शस्त्रमात्रवचनं वा। आज्यप्रउगे प्रातःसवने मरुत्वतीयनिष्केवल्ये माध्यंदिने वैश्वदेवाग्निमारुतोक्थषोळश्याश्विनानि परस्मिन् Skr.

५. हे बहुकर्मन् बहुप्रज्ञ वा Skr.

६. स्तुतयः Sk.

७. अक्षिता अन्येनाहिंसिता अक्षीणा वा ऊतिः पालनं यस्य सोऽक्षितोतिः Skt.

८. भजेतमनेक० P., सम्भजतु. . . . . सोमलक्षणमन्नं सम्भजेत् पिबेत् . . वाजः पीतः सर्वसामर्थ्यानि जनयतीत्यर्थः Skt. अस्मिन् संग्रामे अस्मद्रक्षार्थं सन्निहितोऽस्तु Skr.

९. प्रकृतौ विकृतिषु च प्रवर्तमानत्वेन सहस्रसंख्यायुक्तम् Sy. योद्धृसहस्रयुक्तं. . . . . . . स्तुतिसहस्रयुक्तम् Skt.

१०. पुंस्त्वानि बलानि वर्तन्ते Sy. पौंस्या बलनामैतत्। हस्त्यश्वरथपदातिलक्षणानि बलानि। . . . यस्मिन् बलानि सर्वाणि सामर्थ्यलक्षणानि . . . . अथवा यस्मिन् विश्वानि पौंस्येति इन्द्रविशेषणम्। यस्मिन्निन्द्रे सर्वाणि बलानि यः सर्वैर्बलैर्बलवान् यो महाबल इत्यर्थः Skt.

११. Omitted by S.

१२. Mādhava ignores the word इन्द्रः

मा नो मर्ता अभि द्रुहन्तनूनामिन्द्र गिर्वणः । ईशानो यवया वधम् ॥१०॥

मा नो मर्ताः । मा । अभिद्रुह्यन्तु[1] । इन्द्र[1] ! । अस्माकमङ्गेभ्यः[2] । शत्रवः[3] । गीर्भिर्वननीय[4] ! । ईश्वरस्त्वम्[4] । पृथक्[5] कुरु । शत्रूणामायुधम्[6] । इति[7] ।

## I.6.

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥१॥

युञ्जन्ति[8] ब्रध्नम्[9] । युञ्जन्ति[10] । महान्तम् । आरोचमानम्[11] । दिवि[12] । चरन्तम्[13] । परितस्थिवांसो[14] देवा[15] वा लोका वा । रोचन्ते च । रोचनानि नक्षात्राणीन्द्रतेजसा संधुक्षितानि ।

---

१. मभि० P.

२. अस्मदीयानां शरीराणाम् अभितो द्रोहं मा कुर्युः Sy.

३. अस्माकं मनुष्याः अभिद्रोहं मा कार्षुः Skr.

४. ०नीयैश्चरस्त्वं D.

५. प्रथक् D.

६. वधं वैरिभिः संपाद्यमानम् Sy. वधं हिंसां हन्तारं वा Skt.

७. MS. D. puts the figure ॥ ५ ॥ here to indicate the end of the fifth hymn. No such number is given in P.

८. यच्छन्ति P.

९. प्रध्नं P. आदित्यरूपेणावस्थितम् Sy.

१०. स्तुतिभिः हविर्भिर्वा । तत्कर्त्तारः संबन्धयन्ति Skr.

११. रुश दीप्तौ रुच च । आरुशम् आरोचनं वा । . . . . . . अरुषं दीप्तम् । गन्तारं वा । अरुष गतौ । अपि च । शत्रून् यज्ञान् वा प्रति गन्तारम् Skr.

१२. हिंसकरहिताग्निरूपेणावस्थितम् Sy.

१३. वायुरूपेण सर्वतः प्रसरन्तम् Sy.

१४. परितः तस्थि० S. परि सर्वतः यत्र यत्र इन्द्रो गच्छति तत्र तत्रैनं स्तोतारो यष्टारश्च स्तुवन्ति यजन्ति च । अथवा एते स्वार्थसिद्धये महान्तम् इन्द्रं दीप्तं सर्वतो गच्छन्तं नियुञ्जते इति वा । यत्र यत्र इन्द्रस्तत्र तत्र मनुष्या इदम् इदं च नः कुरु इति याचन्ते । अथवा मातल्यादय इन्द्ररथं युञ्जन्ति ब्रध्नादिगुणम् Skr.

१५. किंच तस्थुषः स्थितस्य व्याप्रियमाणस्य इन्द्रस्य प्रभावेन दीप्यन्ते नक्षत्राणि द्युलोके । . . . . . . . सूर्यप्रभवश्च सुषुम्णः । सुषुम्णः सूर्यरश्मिः । तत्सम्बन्धात् चन्द्रमा नक्षत्राणि च दीप्यन्ते । अथवा युजिः उत्पूर्वः अन्तर्णीतण्यर्थश्च । उद्योजयन्ति वृष्टिकर्माणि महान्तं दीप्तम् इन्द्रं परितस्थुषः परिभ्रमन्तम् । लक्षणार्थे परिः । सोमपानासुरवधश्रद्धया स्थावरजङ्गमात्मकं कृत्स्नं जगत् परिभ्रमन्तम् । के इन्द्रम् उद्योजयन्ति इति । सूर्यरश्मयः अष्टभिः मासैः आत्तं रसं प्रावृडारम्भे अर्पयन्तः उद्योजयन्ति इन्द्रं वृष्टौ Skr.

अभत्वेऽपि[1] प्रसारणमन्यत्रापि दृष्टम्[2]।

**युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे। शोणा धृष्णू नृवाहसा ॥२॥**

युञ्जन्त्यस्य। युञ्जन्ति। अस्य। रथे। कमनीयौ[3]। अश्वौ[4]। सव्यदक्षिणयोः पार्श्वयोर्युज्यमानौ। शोणवर्णौ। शत्रूणां धर्षकौ[5]। नेतुरस्य वोढारौ[6] देवाः।

**केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे। समुषद्भिरजायथाः ॥३॥**

केतुं कृण्वन्। रात्रौ[7] स्वपतो गतप्रज्ञस्य प्रज्ञोदित इन्द्रे[8] भवति[9]। तमसा[10] तिरोहितरूपाणां गवादीनां रूपं च ज्ञायते।

केतुम्[11]। कृण्वन्। प्रज्ञानरहिताय[12]। पेशश्च[13]। अपेशसे[13]। समजायथास्त्वम्[14]।

---

१. अविभुत्वेपि D. अहत्वेऽपि S.

२. तस्थुषः is acc. pl. But V. Mādhava construes it as nom. pl. He remarks that Samprasāraṇa has taken place although it is not *bha*. *Bha* is a technical term and is applied in declension to forms of acc. pl., inst. dat. and abl. sing., gen. all the numbers, and loc. sing. and dual. He also explains अविभ्युषः RV. I. 115 similarly. But V. Mādhava is evidently wrong. The forms in both the places are acc. pl. and not nom. pl.

३. कामयितव्यौ Sy.
कामयितव्यावुत्कृष्टौ कामसंवादिनौ वा Skt.

४. हरी-एतन्नामानौ द्वावश्वौ Sy.

५. प्रगल्भौ Sy.
प्रगल्भौ, अभिभवितारौ शत्रूणाम् Skt.

६. नृणामिन्द्रतत्सारथिप्रमुखाणां वोढारौ Sy.
मनुष्यान् प्रति मनुष्याकारस्य वेन्द्रस्य वोढारौ Skt.

७. रात्रौ निद्राभिभूतत्वेन प्रज्ञानरहिताय प्राणिने प्रातः प्रज्ञानं कुर्वन् Sy.

८. जन्द्रे P. D.

९. S. reads प्रज्ञोदयं कुर्वन् for प्रज्ञोदित इन्द्रे भवति।

१०. तमसो P.
रात्रौ अन्धकारावृतत्वेन अनभिव्यक्तत्वाद् रूपरहिताय पदार्थाय प्रातरन्धकारनिवारणेन पेशः—रूपमभिव्यज्यमानम् Sy.

११. प्रज्ञाम् Sk.

१२. षष्ठ्यर्थे चतुर्थी। प्रज्ञारहितस्य Sk.

१३. पेशस्वापेशसे P.
पेशः. . . . . . रूपं च Sk.
अपेशसे रूपवर्जितस्य। . . . . .यस्य यद्यदभिलषितं तस्य तत्तत् संपादयन् Skt.

१४. उदपद्यत Sy.
सह कान्तिभिस्त्वमजायथाः। जन्मन एव प्रभृति त्वं सर्वस्य सर्वाभिलषितसम्पादी कान्तश्चासीरित्यर्थः। अथवा माध्यमिकाः स्तनयित्नुलक्षणा वाच उषसस्ताभिः सह त्वमजायथाः जन्मनः प्रभृति गर्जितेत्यर्थः Skt.
सह कान्तिभिः। वश कान्तौ. . . . . . .
आजन्मनः कान्तः असि इष्टप्रदानेन च। माध्यमिकाभिः स्तनयित्नुलक्षणाभिः वाग्भिः उषआख्यैः सह अजायथाः। जन्वतः गर्जिता Skr.

उषोभिः[1] सह। तमिममाश्चर्यं[2] मनुष्याणां[3] निवेदयितुं[4] तान्[5] सम्बोधयन्ति मर्याः[6]। इति।

**आदह स्वधामनु पुनर्गर्भत्वमेरिरे। दधाना नाम यज्ञियम् ॥४॥**

आदह स्वधाम्। अनन्तरमेव वृष्टेर्मरुतः[6]। अन्नार्थम्[7][8]। पुनरपि[9]। गर्भत्वम्। प्राप्नुवन्ति[10]। अष्टौ मासान्[11] तिरोभूता[12] वर्तन्ते वर्षाभ्योऽनन्तरम्। आश्चर्येऽहशब्दः[13][14]। दधानाः[15]। नाम[16]। यज्ञार्हमीदृक्[17] चान्यादृक् चैतादृक्[18] चेत्यादिकम्[19]।

---

१. दाहकैः रश्मिभिः, प्रतिदिनमुषःकालैर्वा संभूय Sy.

२. आश्चर्याणां D.

३. Omitted by D.

४. ०दयतुं P.

५. त्वां S.

६. मर्त्याः S. मर्य्याः D.
अथवा सूर्यस्यैवास्तमये मरणमुपचर्य, व्यत्ययेन बहुवचनं कृत्वा सम्बोधनं क्रियते 'हे मर्य' इति Sy.
व्यत्ययेनात्रैकवचनस्य स्थाने बहुवचनम्। मर्य! मर्त्याकार! इन्द्र! Skt.

७. ०तो नार्त्थं P. तोन्नार्कं (?) D.
स्वधाम् उदकं..............
स्वधा अन्नं वा। सस्यलक्षणं चात्रान्नम् Skr.

८. इतः परं जनिष्यमाणमन्नमुदकं वा अनुलक्ष्य Sy.

९. प्रतिसंवत्सरमेवं कुर्वन्तीति दर्शयितुं पुनःशब्दः प्रयुक्तः।
पुनः अतीताब्दवृष्ट्यनन्तरम् Skr.

१०. एरिरे–अन्तर्भावितण्यर्थादीर गतावित्यस्मात् Sy.
देवा मेघमध्ये जलस्य गर्भाकारं प्रेरितवन्तः। जलस्य कर्तारं पर्जन्यं प्रेरितवन्तः Sy.
वृष्टेः पश्चात् एव उदकं पुनर्गर्भत्वम् आपादयन्ति मरुतः......वा....
सस्यान् निष्पाद्य अनन्तरम् एव पुनर्गर्भत्वं गमयन्ति मरुतः Skr.
एवं वा अन्यथा अस्या ऋचः अर्थयोजना। वृष्टेरनन्तरमेव सस्यलक्षणमन्नं पुनर्गर्भत्वम् ईरयन्ति। ईर गतौ। Skr.

११. मासाः S.

१२. ०भूमा P.

१३. अहेत्यवधारणार्थः Sy.
अहेति विनिग्रहार्थीय एवशब्दार्थे Skt.

१४. हशब्दो P. D.

१५. उदकम् आदित्यमण्डले अन्तरिक्षे वा दधानाः Skr.

१६. नामेति ह्युदकनामपठितम्....अथवा नामशब्दः संज्ञावचनः Skt.

१७. यज्ञानाम् S.

१८. चातादृक् S.
Cf. Sy. ईदृङ चान्यादृङ चेत्यादीनि। S reads ईदृ ( ङ?क् ) चाताद् (ङ?क्) (चा?चे) त्यादिकम्।

१९. वर्षास्वोषधीर्जनयित्वा न तावत्येव कृतार्थीभवन्ति मरुतः। किन्तर्हि? ता एव पुनर्गर्भयन्ति उदकदानेनेति Skt.
वर्षासु ओषधीर्जनयित्वा न तावतैव कृतार्थीभवन्ति ता एव पुनर्गर्भयन्ति उदकदानेन Skr.

**वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः। अविन्द उस्रिया अनु ॥५॥**

**वीळु चित्**। दृढम्। अपि। पर्वतसान्वाभिमुख्येन भञ्जद्भिः[1]। पर्वतस्य गुहायाम्[2]। अपि। इन्द्र!। त्वां[2] वोढृभिर्मरुद्भिः[3]। त्वं[4] [4]पणिभिरपहृता गाः[5]। अन्वविन्दः[6]।

**देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः। महामनूषत श्रुतम् ॥६॥**

**देवयन्तः**। देवानिच्छन्तः[7]। यथा। पूजनीयमिन्द्रम्[8]। अभिष्टुवन्ति[9] तथाऽभिष्टुवन्ति[10]। विदद्वसुं[11] वेदयद्वसुम्। उदारम्[12]। गिरः[13] स्तोतारः। महान्तं[14] मरुद्गणमिति[15]।

**इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा। मन्दू समानवर्चसा ॥७॥**

**इन्द्रेण**[16]। इन्द्रेण। हि[17]। सन्दृश्यसे[18]। सङ्गच्छमानः। अबिभ्युषा[19] मरुद्गण![20] तौ युवाम्[21]

---

१. भञ्जवभिः P. भञ्जवभिः D.
आरुजत्नुभिर्भञ्जद्भिः Sy.
दुर्गमस्थानं भञ्जद्भिः Sy.
आरुजत्नुभिः। रुजो भङ्गे। सहयोगलक्षणा चेयं तृतीया भञ्जद्भिर्मरुद्भिः सह Skt.

२. गुहा चा मक्षीन्द्रन्त्वां P.

३. मरुद्भि P.

४. त्वापणिभि॰ P. D.

५. गाः गुहायां निहिताः सरमाप्रत्यागमनकालोत्तरं मरुद्भिः सह त्वमलब्धाः Skr.

६. अन्विष्य लब्धवानसि Sy.
अविन्दः, लब्धवानसि Skt.

७. मरुत्संज्ञकान्देवान्।
देवशब्दोऽत्र प्रकृतान् मरुत एवाह Skt.

८. मन्यतिरर्चतिकर्मा। मन्यते स्तूयतेऽसाविति मतिरिन्द्रः। ज्ञाता वा मतिर्विद्वान् ब्राह्मणः Skt.
यथा मतिम्। स्तुतौ ज्ञाने वा। सर्वस्तुत्यम् इन्द्रं विद्वासं विप्रं वा तद्वत्। Skr.

९. कथा D.

१०. ॰षुवति P.
तथाऽभिष्टुवन्ति is omitted by S.

११. स्वमहिमप्रख्यापकैर्धनैर्युक्तम्।
अच्छ, निपातोऽयमाप्तुमित्यस्यार्थे। आप्तुम् . . . . . . विन्दतेर्लाभार्थस्य विदच्छब्दः कर्मसाधनश्च द्रष्टव्यः। गणाभिप्रायं चैतदेकवचनम्,। लब्धधनं मरुद्गणम् Skt.

१२. विख्यातम्।

१३. तृतीयार्थे प्रथमेयम्। गीर्भिः स्तुतिभिः . . . . . अनूषत—नु स्तवने। स्तुवन्ति स्तुवन्तु वा ऋत्विजो मत्पुत्रपौत्रादयो वा. . . . श्रुतं ख्यातम् Skt.

१४. महान्त P. प्रौढम् Sy.

१५. कर्मगणमिति P.

१६. S. adds सं हि after इन्द्रेण।

१७. हिशब्दः पदपूरणः Skt.

१८. ॰श्यते स S.
अवश्यमस्माभिर्द्रष्टव्यः Sy.

१९. बिभ्युषा P. D. भयवर्जितेन Sk.

२०. मरुद्गणः D. मरुद्गणं S.

२१. कौ युवां D. P. युद्धार्थं S.

इन्द्रमरुद्गणौ। मदिष्णू[1] भवथः[2] संयुक्तौ। समानवर्चसौ।[3] यद्वा मन्दुना[4] समानवर्चसेन्द्रेणेति[5][6]।

**अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ॥८॥**

अनवद्यैः। अवद्यरहितैः। अभिद्योतमानैः[7]। सह। स्तोता[8]। सहस्वन्तामिन्द्रम्[9]। अर्चति[10]।
गणैः[11]। इन्द्रस्य[12]। प्रियैः[13]। गणशब्द एकवचनबहुवचने पर्यायेण भवतः[14]।

**अतः परिज्मन्ना गहि दिवो वा रोचनादधि । समस्मिन्नृञ्जते गिरः ॥९॥**

अतः परिज्मन्। अतोऽन्तरिक्षात्। परितो[15] गन्तर्मरुद्गण !। आगच्छ। आदित्यस्य[16]।
वा[17]। रोचनाल्लोकात्[18]। अधिपरी[19] सप्तमीपञ्चम्योरर्थं[20] स्फुटीकुरुतः। अस्मिन् मरुद्गणे[21]।
सम्प्रसाधयति[22]। स्तुतीः मधुच्छन्दाः[23]।

---

१. मभिष्टु P. नित्यप्रमुदितौ Sy.

२. भवथ (:) S.

३. तुल्यदीप्ती च इन्द्रमरुद्गणौ Sk.

४. मदुन्दुना P. मन्दतेर्मोदनार्थस्यैतद् रूपम्। नित्यप्रमुदितौ Sk.

५. ०सेन्द्रे नेमि P.

६. Cf. Nirukta 4. 12. इन्द्रेण हि सन्दृश्यसे संगच्छमानोऽबिभ्युषा गणेन। मन्दू मदिष्णू। युवां स्थः। अपिवा मन्दुना तेनेति स्यात्। समानवर्चसेत्येतेन व्याख्यातम्।

७. अभिद्योतकमानैः D. द्युलोकमभिगतैः Sy. सर्वाश्चात्र द्वितीयार्थे तृतीयाः। अनवद्यान् अगर्ह्यान्। द्युशब्दो दीप्तिवचनः। अभिगतदीप्तीन् अत्यन्तदीप्तान् Skt.

८. यज्ञः Sy. मखो यज्ञः. . . . . .स्तौति। यद् यज्ञ ऋत्विजः स्तुवन्ति तदिदं यज्ञ एव स्तौतीत्युच्यते. . . . अथवा मखः यज्ञकारी संस्तौति Skt.

९. सहस्वद् बलवत् सुष्ठ्वित्यर्थः। Skt.

१०. मरुति D. ११. गणान् सप्तसप्तकान्। इन्द्रस्य काम्यैः काम्यान् प्रियान् Skt.

१२. इन्द्रस्य इन्द्रं बलोपेतं यथा भवति तथा पूजयति Sy.

१३. फलप्रदत्वेन कामयितव्यैर्गणैः सहितः Sy.

१४. The passage beginning with अवद्यरहितैः and ending with स्फुटीकुरुतः in 1. 6. 9. is omitted by P.

१५. परितो व्यापिन् मरुद्गण! Sy. हे परिज्मन्! अज गतिक्षेपणयोरित्यस्यैतद् रूपम्। सर्वतोगामिन् Skt.

१६. द्युलोकाद् Sy. दिवो वा द्युलोकाद् वा Sk.

१७. Omitted by S.

१८. दीप्यमानादादित्यमण्डलाद्वा समागच्छ Sy.

१९. ०परि D. अधिपरी अनर्थकाविति। अथवा अधिशब्दः सामर्थ्याद्वार्थे Skt.

२०. ०रर्थः D. २१. अस्मिन् कर्मणि Sy.

२२. सन्० P. सत्० D. ऋञ्जतिः प्रसाधनकर्मा Skt.

२३. ०छन्दः P.

**इतो वा सातिमीमहे दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः ॥१०॥**

**इतो वा।** अत उत्तरमिन्द्र एव[1] देवता। कुत[2] इन्द्र आगच्छतीति न वयं जानीमस्तमिन्द्रम्। अस्याः। भूमेरागच्छन्तम्[3]। देयं[4] धनम्। याचामहे। अपिवा। दीप्तात्[5]। पार्थिवाल्लोकात्[6] पृथिवीत्यन्तरिक्षनाम[7]। इन्द्रम्। महः। वा। रजसः स्वर्गादिति[8]।

I.7.

**इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥१॥**

**इन्द्रमित्।** इन्द्रम्। एव[9]। उद्गातारः[9]। बृहता[10] साम्ना स्तुवन्ति। इन्द्रम्। शस्त्रैः[11]। होतारः। इन्द्रमेव। सर्वा गिरः[12]। स्तुवन्ति।

**इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः ॥२॥**

**इन्द्र इत्।** एकाकी चरन्निन्द्रः। एव। स्वाश्वयोः[13]। सहायभूतः[14]। स एव च[15] संयोज-

---

१. अव P.

२. कुतः S.

३. ०रागच्छन् P. D.

४. दे यद् P.
सातिर्दानं लाभो वा Skt.

५. द्युलोकाद् वा Sy.
P. reads दीप्ता गच्छादित्यस्य वा रोचनाल्लोकादधिपदी सप्तमीपञ्चम्योमत्र्थं स्फुटी इन्द्र यत्। for the passage beginning with दीप्तात् etc. and ending with स्वर्गादिति। रजश्शब्दो लोकवचनः। महतो लोकाद्वा Skt.
द्युलोकाद् वा Sk.

६. ०वांल्लो० S.

७. इति is omitted by S.

८. पक्ष्यादीनां रञ्जकादन्तरिक्षलोकाद् वा Sy.

९. एवाद्गातारो D.
गीयन्ते इति गाथाः सामानि। तद्वन्तो, गाथिनः उद्गातारः Skt.

१०. तृतीयार्थे द्वितीयेयं बृहत्। . . . . महता साम्ना Skt.

११. ऋग्रूपैर्मन्त्रैः Sy.
मन्त्रैः ऋग्लक्षणैः Skt.

१२. Omitted by P.
ये त्ववशिष्टा अध्वर्यवस्ते वाग्भिर्यजूरूपाभिरिन्द्रमेवाऽनूषत Sy.
तृतीयार्थे चात्र द्वितीया। यजुर्लक्षणैः अध्वर्यवः Skt.

१३. स्वाश्चयो D. स्वाश्रयः S.
हर्योः—हरिनामकयोरश्वयोः Sy.

१४. असहायभूतः S.
सह, युगपत् Sy.

१५. Omitted by S.

यति। उक्तिमात्रेण युज्यमानौ[1]। इन्द्रः। वज्रवान्[2]। हिरण्मय[3]सर्वशरीरः[4]।

**इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि। वि गोभिरद्रिमैरयत् ॥३॥**

इन्द्रो दीर्घाय[5]। इन्द्रः। मनुष्याणां चिराय[6]। दर्शनाय। दिवि। सूर्यम्। आरो[7]-हयत्। तेजोभिश्च[8]। विविधं वर्षार्थम्। मेघम्। प्रेरयति।

**इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च। उग्र उग्राभिरूतिभिः ॥४॥**

इन्द्र वाजेषु। इन्द्र!। क्षुद्रेषु सङ्ग्रामेषु। अस्मान्। रक्ष[9]। महत्सु[10]। च। उद्गूर्णः[11]। उद्गूर्णैः[12]। पालनैः। अस्योत्तरा भूयसे निर्वचनाय। इन्द्रं वयमिति[13]।

---

१. यज्यन् P. P. adds पार्त्थिवलोकान् पृथिवीत्यन्तरिक्षनामेन्द्रं महो वा रजसः स्वर्गादिति।
इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः Sy.

२. वज्री S.

३. ०मयः D.
सर्वाभरणभूषितः Sy.

४. इन्द्रः। वज्रवान्। हिरण्मयसर्वशरीरः। is omitted by P.

५. दीघकायः D.

६. आप्रलयभाविने Skt.

७. ०अरो० P.
आरोपितवान्। Skt.

८. स च सूर्यो गोभिः स्वकीयरश्मिभिरद्रिं पर्वतप्रमुखं सर्वं जगद् व्यैरयत्। विशेषेण दर्शनार्थं प्रेरितवान्। प्रकाशितवानित्यर्थः। अथवा इन्द्र एव गोभिर्जलैर्निमित्तभूतैरद्रिं मेघं व्यैरयत्। विशेषेण प्रेरितवान् Sy.
गोशब्दोऽत्र वज्रवचनः. . . . . . वज्रैर्व्यैरयत् प्राणेभ्यो विगमितवान् हतवान् Skt.
गौः वज्रः. . . . . . . . . . . . वज्रैः मेघं प्राणेभ्यः अपगमितवान् हतवान् वा। . . . . . .ईर वधे। . . . . . .गौः उदकं वा। उदकहेतोः मेघं हन्ति हतवान् Skr.
. . . . .अथवा गोशब्द उदकवचनः। हेतौ च तृतीया. . . . . .उदकार्थं मेघं हतवान् Skt.

९. S. reads रक्ष च। महत्सु उग्र उद्गीर्ण उद्गुणैः।

१०. प्रधनशब्दोऽत्र न संग्रामनाम उत्कृष्टवचनः। प्रकृष्टानि धनानि प्रधनानि निमित्तभूतानि येषां ते सहस्रप्रधना बह्वत्यन्तधना वेत्यर्थः Skt.

११. शत्रुभिरप्रधृष्यः Sy.
उग्रः अन्येन वाऽप्रसह्यः। क्रूर इत्यर्थः। . . . . . उग्राभिः अन्येनाप्रसह्याभिः Skt.

१२. अप्रधृष्याभिः Sy.

१३. Cf. note no. 5 on p. 21. इति is given as a variant by S.

**इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे । युजं वृत्रेषु वज्रिणम् ॥५॥**

इन्द्रम्। वयम्। महति[1] संग्रामे। हवामहे। इन्द्रम्। अल्पे[2] च। सहायम्[3]। उपद्रवेषु[4]। आयुधवन्तम्।

**स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि । अस्मभ्यमप्रतिष्कुतः ॥६॥**

**स नः।** सः। नः[5]। वर्षितः[6]। अमुम्। मेघम्। महतो[7] दातः!। तेजोभिरपावृधि[8]। शत्रुभिरप्रतिशब्दितोऽप्रतिकृतो[9] वा। नोऽस्मभ्यमित्यनयोः पूरणमेकम्।

**तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः । न विन्धे अस्य सुष्टुतिम् ॥७॥**

**तुञ्जेतुञ्जे।** दाने[10] दाने[10]। उत्तरोत्तरम्[11]। ऋषय एनं[12] स्तुवन्ति। तेषु स्तोमेषु[13]। न। अस्याहम्[14]। दानानुगुणां[14] सुष्टुतिम्[15]। विन्दामि[16]।

---

१. प्रभूतधननिमित्तम् Sy.

२. अल्पे P.
स्वल्पेऽपि धने निमित्तभूते सति। Sy.

३. सहकारिणं समाहितं वा Sy.

४. शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय वज्रोपेतम् Sy.
संग्रामव्यतिरिक्तेष्वपि च शत्रुषु Skt.

५. न इति तादर्थ्ये चतुर्थीयं वृषन्नित्यनेन सम्बध्यते। अस्मदर्थं Skt.

६. वर्षितारम् S.

७. उहतो P. सत्रा इति सत्यनाम सततपर्यायो वा। सत्यसततयोर्दातः। Skt.

८. ०रपावृ. P.

९. शत्रुरप्र० P.
तथैवास्मभ्यं....प्रतिशब्दरहितः। यद्यत् अस्माभिर्याच्यते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयति Sy. स्कुञ् आप्रवणे। आप्रवणमागमनं प्रवतेर्गत्यर्थत्वादन्येनाप्रतिगतः अप्रतिष्कुतः। युद्धेऽभियुञ्जानः अन्येनाप्रत्यभियुक्तपूर्व इत्यर्थः Skt.
अप्रतिष्कुतः। अप्रतिस्कृतः। अप्रतिस्खलितो वा। N. 6. 16

१०. दाहे दाहे D.
तस्मिंस्तस्मिन् फलदातरि देवान्तरे Sy.
तुञ्ज इति न यज्ञनाम। किन्तर्हि? तुञ्जतेर्दानकर्मणस्तुञ्जो दानम्। .... वृष्टेर्धनानां वा Skt.

११. उत्कृष्टाः Sy.
पूर्वेभ्यः प्रकृष्टतमा मदीयाः स्तोमाः Skt.

१२. एवं S.

१३. तैः स्तोमैः सर्वैरपि Sy.

१४. ०हन्नानु० D.
तैरपि न विन्धे..... अहमस्येन्द्रस्य. .... स्तुतिम् अशेषगुणप्रकाशनरूपां तैरपि नाशेषानिन्द्रगुणान् प्रकाशयितुं शक्नोमीत्यर्थः। अथवा...... विन्ध इति स्पर्शनार्थो वा। न विन्धे न स्पृशामि Skt.

१५. तुञ्जस्तुञ्जतेर्दानकर्मणः। दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेः। N. 6. 17, 18.

१६. Mādhava does not paraphrase the clause इन्द्रस्य वज्रिणः।

वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कुतः ॥८॥

वृषा यूथेव । वर्षिता[1] । गोयूथानीव[2] । वननीयगमन[3] ऋषभ इन्द्रो[4] वीरः । युयुत्सून् मनुष्यान् । बलेन[5] । अभिगच्छति । सर्वस्येशानः । अप्रतिकृतः[6] ।

य एकश्चर्षणीनां वसूनामिरज्यति । इन्द्रः पञ्च क्षितीनाम् ॥९॥

य एकः । इन्द्रः[7] । मनुष्याणाम् । पञ्चानां क्षितीनां[8] निवसतां गन्धर्वाः पितरो देवा[9] असुरा रक्षांसीति पञ्चत्वम्[10] । तेषां प्रदेयानां धनानाम् । ईष्टे[11] । पूर्वस्यामृचि वाक्यपरिसमाप्तिः[12] ।

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥१०॥

इन्द्रं वः । व[13] इति पञ्चमी । वः । जनेभ्यः । सर्वेभ्य एव वयम् । इन्द्रम् । हवामहे । सोऽस्माकम्[14] । अस्तु । असाधारणः[15] ।

I.8.

एन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतये भर ॥१॥

एन्द्र सानसिं रयिम् । आहर[16] । इन्द्र ! । भजनीयम् । रयिम् । जयशीलपुरुषयुक्तम्[17] । सदा शत्रूणामभिभवितारम् । वृद्धतमम् । रक्षणायास्मभ्यम्[18] ।

---

१. कामानां वर्षिता Sy.
२. ०थानिव P.
३. ०गमनं P. D.
वननीयगतिर्वृषभो गोयूथानि यथा प्राप्नोति तद्वत् Sy. वंसगो वृषभ उच्यते। वननीयगमनत्वात्। स यथा गोयूथानि प्रति तद्वत् Skt.
४. इन्द्र P.
५. बलेभि० P.
६. प्रतिशब्दरहितः। याच्यमानं न परिहरतीत्यर्थः Sy.
अप्रत्यागतो युद्धे नियुञ्जानः। अन्येनाप्रत्यभियुक्तपूर्वं इत्यर्थः Skt.
७. S. adds यः before इन्द्रः
८. निषादपञ्चमानां क्षितीनां निवासार्हाणां वर्णानामनुग्रहीतेति शेषः Sy.
९. देवाः D.
१०. Cf. N. 3. 8. गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके। चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः।
११. स इन्द्र एषामीष्टे Skr.
१२. वाक्यस्य समाप्तिः S.
१३. युष्मदर्थं हवामहे Sy. व इति तादर्थ्ये चतुर्थी। यजमानप्रतिनिर्देशश्च। हे यजमानाः! इन्द्रं युष्मदर्थम् Skt.
१४. षष्ठ्यर्थे प्रथमैषा। अस्माकं केवलानामस्तु। अन्येषां मा भूत्। कः? सामर्थ्यात् स्तुत्यो यष्टव्यश्च Skt.
१५. Ms. D. puts the figure ॥७॥ here to indicate the end of the seventh hymn. No such number is given in P.
१६. आनय। देहीत्यर्थः Skt.
१७. सहभूतानामपि शत्रूणां जेतारम् Skt.
१८. तर्पणाय Skt.

**नि येन॑ मुष्टिह॒त्यया॒ नि वृ॒त्रा रु॒णधा॑महै । त्वोता॑सो॒ न्यर्व॑ता ॥२॥**

कीदृशमित्याह—**नि येनेति**। येन[1] धनेन। मुष्टिहननेन दारिद्र्याणि[2]। वयं निरुन्ध्मः[3]। पदान्तरे[4] पुनर्निः[4] प्रयुज्यते। त्वया रक्षिताः। शत्रूंश्च येन[5]। निरुणधामहै[6]। तमाहरेति। अस्योत्तरा भूयसे निर्वचनाय। इन्द्र त्वोतास इति।

**इन्द्र॒ त्वोता॑स॒ आ व॒यं वज्रं॑ घ॒ना द॑दीमहि । जये॑म॒ सं यु॒धि स्पृधः॑ ॥३॥**

इन्द्र! । त्वया रक्षिताः। वयम्। हन्तृ[7]। आयुधम्। आददीमहि[8]। संजयेम[9]। युद्धे। स्पर्द्धयितॄन्[10] शत्रूनिति।

---

१. हन्तिर्गत्यर्थः। मुष्टेः गमनेन उपांशुपरादानेनेत्यर्थः Skr.

२. दारिद्राणि D.

वृत्रा–शत्रून् Sy.

३. निरुध्मः P. D.

अपकर्तुं प्रवृत्तान् निवारयामः Skr.

Both Mss. read निरुध्मः but it is grammatically wrong. The correct form from the point of view of grammar is निरुन्ध्मः।

४. ०रेषु. . . . नर्निः P.

५. येनाश्ववता S.

अश्ववता read by S. is probably the paraphrase of अर्वता. If so, it is wrong. अर्वता is inst. sing. of अर्वन् and would mean अश्वेन. Evidently the commentator analyses अर्वता as अर्+वत् and construes the form as inst. sing. But अर् does not mean अश्व. My mss. do not read अश्ववता. But as wealth was counted in heads of cattle, cows and horses would be regarded as wealth. In my opinion, the commentator paraphrases अर्वता by धनेन। Skanda explains अर्वता in the following manner अश्वनामैतत्. . . . . . .अर्वता अश्वसंसक्तेन। अथवा अर्वतेर्गतिकर्मण एतद् रूपम्। आत्मनि गतेन स्वायत्तेनेत्यर्थः

६. नि इत्युपसर्गश्रुतेः योग्यक्रियापदाध्याहारः। नियतेन येन धनेन। अथवा न्युपसर्गाभ्यासात् तत्सम्बन्धिनो 'रुणधामहै' इत्याख्यातस्याभ्यासः। . . . . . . . . . . . . . . सुष्ठु निवारयाम इत्यर्थः Skr.

७. शत्रुप्रहरणायात्यन्तदृढम् Sy.

घनं सुवीरं हन्तारं वा शत्रूणाम् Skr.

८. आदधीमहि P.

९. संजेम P.

१०. अथवा स्पृध इति संग्रामनाम तं करोति स्पृधयति . . . . . स्पृधः संग्रामकारिण इत्यर्थः Skt.

**वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम् । सासह्याम पृतन्यतः ॥४॥**

वयं शूरेभिः । वयम्[१] । शूरैः । आयुधानां क्षेप्तृभिः[२] । त्वया च । सहायेन । अभि[३]-भवेम । सङ्ग्रामं कर्तुमिच्छतः । पुनर्वयमिति पूरणम् ।

**महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे । द्यौर्न प्रथिना शवः ॥५॥**

महाँ[४] इन्द्रः । महनीयः[५] । इन्द्रः । तारकश्च[६] शत्रूणाम् । तस्मै[७] । सदा[८] । महि-त्वम् । अस्त्विति[९] स्वयञ्चाशास्ते[१०] । द्यौः । इव । विस्तीर्णतया । बलमस्य[११] भवति[१२][१३] ।

**समोहे वा य आशत नरस्तोकस्य सनितौ । विप्रासो वा धियायवः ॥६॥**

समोहे वा । सङ्ग्रामजिगीषया[१४] य एनं युद्धे । आप्नुवन्ति[१५] । मनुष्याः । अपत्यस्य । वा । भजनार्थम्[१६] । ये वा प्राज्ञाः[१७] । कर्मकामाः[१८] । उत्तरत्र संबन्धः ।

---

१. वयं सहयोगलक्षणतृतीयार्थे व्यत्ययेन प्रथमैषा पृतन्यत इत्यनेन संबध्यते Skt.
२. अस्तृभिः—स्तृणातिः सामर्थ्याद् हिंसार्थः । अहिंसितैः Skt.
३. सासह्याम—अत्यर्थं पुनः पुनर्वाभिभवेम Skt.
४. महा P. महं D.
५. मंहनीयः P. महान् शरीरेण प्रौढः Sy. महान् शरीरेण Skt.
६. कारकश्च D.
परश्च गुणैरुत्कृष्टोऽपि Sy.
परश्च उत्कृष्टश्च सर्वतो गुणैः Skt.
७. There is no corresponding word for तस्मै in the Vedic stanza.
८. किंच Sy.
It appears to be the meaning of नु. Skanda interprets नु as an expletive.
९. अस्ति D.
१०. Skanda explains it as (वयं) इन्द्रायाशास्महे
११. बलं सेनालक्षणम् । यथा द्यौर्विस्तीर्णा तद्वद् विस्तीर्णमित्यर्थः Skt.
१२. म भवति । P.
१३. Mādhava ignores वज्रिणे ।
१४. ०गीषं० P.
१५. ये संग्रामेषु च · · · व्याप्नुवन्ति । कं प्रकरणादिन्द्रम् । केन सामर्थ्यात्स्तुतिभिः । इन्द्रं स्तुवन्तीत्यर्थः Skr.
१६. भाज० D.
Skanda explains it as सम्भक्तौ लाभे । सनितौ वा लाभे वा Sy.
१७. प्रज्ञां P.
१८. प्रज्ञाकामाः Sy.
कर्म रेभिर्वयं शूरैरायुधानां कामाः P.
Skanda explains it as प्रज्ञाकामाः । धीः is a synonym of action, see Ngh 2. 1.
वा धियायवः । वाशब्दः परस्ताद् द्रष्टव्यः । धियायवो वा प्रज्ञाकामाश्चेत्यर्थः । किं तेषामिति साकाङ्क्षत्वाद् वाक्यस्य निराकाङ्क्षीकरणार्थं ते यथास्वमभिलषितं लभन्त इति वाक्यशेषः । अथवा समोहे वा य इत्यत्रैव यच्छ्रुतेर्योग्यार्थक्रियाध्याहारस्तच्छब्दाध्याहारश्च । संग्रामे ये इन्द्रं स्तुवन्ति ते आशत व्याप्नुवन्ति मनुष्याः । किं सामर्थ्याद् ? यज्ञम् । कुत्र तोकस्य सनितौ विप्राः धियायवश्च प्रज्ञाकामाश्च Skr.

**यः कुक्षिः सोमपातमः समुद्रइव पिन्वते । उर्वीरापो न काकुदः ॥७॥**

**यः कुक्षिः।** तेभ्यः सर्वेभ्यस्तांस्तान् कामान्। यः। अस्य कुक्षिः। अतिशयेन सोमस्य[१] पाता[२]। समुद्र[३] इव सदाक्षीणः। उद्गमयति स कुक्षिः। बहूनि[४]। उदकानि पिबन्। तालु[५]। इव भवति तद्धि निष्ठीवनेऽपि न शुष्यतीति[६]।

**एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्वा शाखा न दाशुषे ॥८॥**

**एवा ह्यस्य।** एवम्। हि[७]। अस्य। वाक्[८]। विविधरवणा[९]। पशुमती[१०]। महती। पक्वफलशाखा[११]। इव। यजमानाय भवति।

---

१. The whole phrase seems to be quite irrelevant.

२. पातमः S. ३. समुद्रा D. समुद्र इव वर्धते Sy. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। स समुद्र इव पिन्वते। पिन्विरिह सेचने कर्मणि चायं व्यत्ययेन। यथा नदीभिः समुद्रस्तद्वत् पिन्वते सिच्यतेऽस्माभिः Skr.

४. बन्युद० P. तृतीयार्थे चात्र प्रथमा। बह्वीभिरद्भिरिव च। काकुदः काकुदं तालु इत्याचक्षते। व्यत्ययेन चात्र पुंल्लिङ्गता। यथा तृषितस्य कस्यचित् बह्वीभिरद्भिस्तालु सिच्यते तद्वत् चेत्यर्थः। केचित्तु वारुणं काकुदमत्र उपमानमित्याहुः। तद्धि अतिशयेन बह्वीभिरद्भिः सिच्यते। वरुणस्य अपामधिदैवतत्वात् Skr.

५. काकुदो मुखसम्बन्धिन्य उर्वीर्बह्व्य आपो न जलानीव। जिह्वासम्बद्धमास्योदकं यथा कदाचिदपि न शुष्यति तथेन्द्रस्य कुक्षिः सोमपूरितो न शुष्यतीत्यर्थः Sy. न in the sense of comparison is used immediately after that which it compares, see N. 1. 4. It cannot therefore be construed with काकुदः। It can be construed with आपः only and it can only mean 'like waters.' उर्वीः is an attribute of waters.

६. V.M. does not seem to understand the correct meaning of the third verse. The stanza is explained by skanda in the following manner:—य इन्द्रस्य . . . . कुक्षिः . . . . . . अतिशयेन सोमानां पाता . . . . स समुद्र इव पिन्वते. . . . यथा नदीभिः समुद्रस्तद्वत् पिन्वते सिच्यतेऽस्माभिः . . . . . बह्वीभिरद्भिरिव च काकुदः। . . . . यथा तृषितस्य कस्यचिद् बह्वीभिरद्भिस्तालु सिच्यते तद्वच्चेत्यर्थः।

७. हिशब्दस्तु पदपूरणः Skr.

८. धेनुः सूनृतात्रोच्यते Skt. अस्येन्द्रस्य सूनृता सर्वकामधुक्। इन्द्रस्य स्वभूता धेनुः सूनृता अत्रोच्यते . . . अथवा सूनृता गर्जितलक्षणा वाक्। गोमती माध्यमिका आपोऽत्र गाव उच्यन्ते। . . . . . . यथा तद्वती। सा च पक्वा इव शाखा क्षरति। किं सामर्थ्यात् पयो दधते Skr.

९. ०रपणा S.

१०. पयोऽत्र गोशब्देनोच्यते. . . . . . पयस्वती Skt.

११. पक्वः फल० P. यथा पक्वा शाखा रसबिन्दुं क्षरति। किम्? सामर्थ्यात् पयः सर्वकामान्। पयस्वती हि सा सर्वकामधुक्। कस्मै क्षरति? दाशुषे Skt.

**एवा हि ते विभूतय ऊतयं इन्द्र मावते । सद्यश्चित्सन्ति दाशुषे ॥९॥**

एवा हि ते। एवम्। हि[1]। ते। विभूतयः। रक्षणानि च। मत्सदृशाय[2]। यजमानाय। तदानीम्। एव। भवन्ति।[3]

**एवा ह्यस्य काम्या स्तोमं उक्थं च शंस्या । इन्द्राय सोमपीतये ॥१०॥**

एवा ह्यस्य। यथाहमस्याशंसिषमेवम्[4]। अस्य। कमनीये[5]। स्तोत्रशस्त्रे। शंसनीये। सोमपानार्थम्[6]। इन्द्राय। विरम्याभिधानात् षष्ठीचतुर्थ्यौ सङ्गच्छेते। अर्थभेदादित्यपरमिति[7][8]।

## I.9.

**इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ अभिष्टिरोजसा ॥१॥**

इन्द्रेहि। इन्द्र[9]!। आगच्छ[9]। माद्य[10] च। अन्नेन। विश्वैः। सोमलतापर्वभिरभिषुतेन[11]। महान्। बलेन। शत्रूणामभ्येषणशीलः[12]।

---

१. हि इति पदपूरणः Skr.

२. यदैव मत्सदृशो यजमानः स्वार्थायार्थयते तदैव तदर्था भवन्ति। माशब्दोऽत्र माछन्दः प्रमाछन्दः (तै. सं. ३ ४. ७. १.) इति छन्दःशब्दसामानाधिकरण्यात् छन्दोविशेषवचनः। तद्वान्। मत्सदृशो वा।. . .मावते दाशुषे इति च उभयत्र तादर्थ्ये चतुर्थी। . . . छन्दोविशेषवतो मत्सदृशस्य वा यजमानस्य अर्थाय Skr.

३. Mādhava ignores the word इन्द्र।

४. यथा महस्य शं० P. D. यथा मंह्यस्य शं० S. The Ms. क of S. reads यथाहमस्यामशंसिषम् but अस्यां is not quite proper. The correct reading is अस्य. I have adopted the amended reading of क.

५. कामयितव्ये Sy.

६. सोमाप्युत्तरकालं कथमयमिन्द्रः सोमं पिबेत् इत्येवमर्थमित्यर्थः Skr.

७. ०परिमति P. D.

८. Ms. D. puts the figure ॥८॥ here to indicate the end of the eighth hymn. No such number is given in P.

९. इन्द्रा य गच्छ P.

१०. मन्दस्व तृप्य Skt. तृप्यस्व Sk.

११. सोमरसरूपैरन्धसः—अन्धोभिः—अन्नैः। व्यत्ययेन ('अन्धस' इत्यत्र) तृतीयाबहुवचनं कर्तव्यम् Sy. Skanda gives an alternative meaning: अथवा सोममयानि पर्वाणि येषां ते सोमपर्वाणो देवाः. . . . . . . सोमाहाराश्च देवाः. . . . . . . . . तृप्य सोमलक्षणेनान्नेन सर्वैः सोमाहारैर्देवैः सहेत्यर्थः। Skt.

१२. ०शीलं P. D. ०मभिभवनशीलः S. Skanda explains अभिष्टिः also as अभियष्टव्यो वा।

**एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने। चक्रिं विश्वानि चक्रये ॥२॥**

एमेनम्। आसृजत[1]। एनं सोमम्। सुते। ईमिति पदपूरणम्[2]। तर्पयितारम्। इन्द्राय। तर्पयित्रे[3]। विश्वस्य कर्मणः कर्तारम्[4]। विश्वानि कर्माणि। चक्रये[5] "न लोकाव्यय"[6] इति प्रतिषिद्धा[7] षष्ठी[7]।

**मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे। सचैषु सवनेष्वा ॥३॥**

मत्स्वा[8] सुशिप्र[8]। मन्दस्व[9]। सुहनो[10]!। मादयितृभिः[11]। स्तोमैः। सर्वस्य द्रष्टः[12]!। सहास्माभिः[13]। एषु[14]। सवनेषु। आकारः[15] सप्तम्यर्थं स्फुटीकरोति।

**असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत। अजोषा वृषभं पतिम् ॥४॥**

असृग्रमिन्द्र। असृजम्[16]। इन्द्र!। ते। स्तुतीः[17]। सृष्टाश्च तास्त्वाम्। प्रत्युदगच्छन्[18]। त्वञ्च सेवितवानसि। स्तुतीनां वर्षितारं[19] माम्। स्तोमानामीश्वरम्[20]।

---

१. आसृजतैनं सुते। N. 1. 10.
२. पाद० P. पद is omitted by S.
३. हर्षयुक्ताय Sy. तर्पयितव्याय वा Skt.
४. कर्तारः S. साधुकरणशीलम् Sy. स्वकार्यकरणशीलम् Skt.
५. च ये D. सर्ववृष्ट्यादिकर्मकरणशीलाय Skt.
६. ०व्याय P. पा. 2. 3. 69.
७. षष्ठी प्रतिषिद्धा S.
८. मथ् स्वाशिप्ता D.
९. मोदस्व स्तूयस्व वेत्यर्थः Skt.
१०. सु (वा?ह) नो S. शोभनहनो! शोभननासिक! वा Sy. सुहनो सुनस वा Skt.
११. स्तावकैर्वा Sk.
१२. दृष्टः P. D. सर्वमनुष्ययुक्त! सर्वैर्यजमानैः पूज्य इत्यर्थः। Sy.
१३. देवैरन्यैः सह आगच्छेति शेषः Sy. मरुद्भिः Skt.
१४. सवनमिति यज्ञनाम। एतेषु यज्ञेषु प्रातःसवनमाध्यंदिनतृतीयसवनेषु वा Sk.
१५. आकारः पदपूरणः Sk.
१६. असृग्रम् P. १७. स्तुतिः P.
१८. प्रत्युद्गच्छ (तु?न्तु) S. Skanda's explanation of उदहासत is the following :— ओहाङ् गतौ। स्वर्व्यवस्थितं त्वां प्रतीतो लोकादूर्ध्वं गताः।
१९. कामानां वर्षितारं त्वाम् Sy.
२०. सोमस्य पातारं यजमानस्य पालयितारं वा Sy. Skanda construes वृषभं पतिम् as epithets of त्वाम् i. e., Indra: कीदृशं त्वामुदहासत, वृषभं वर्षितारं पतिं स्वामिनं सर्वस्य।

सं चोदय चित्रमर्वाग्राध इन्द्र वरेण्यम् । असदित्ते विभु प्रभु ॥५॥

सं चोदय।[1] सह। प्रेरय।[2] पूजनीयम्। धनम्। अस्मदभिमुखम्।[3] इन्द्र!। वरणीयम्।[4] अस्ति। हि।[5] ते। विभु च। प्रभु च धनम्।[6]

अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः । तुविद्युम्न यशस्वतः ॥६॥

अस्मान्त्सु।[7] अस्मान्। सुष्ठु। तत्र। चोदय यत्र धनं लभ्यते। इन्द्र!। धनार्थम्। वेगवतः[8] स्तुतिप्रवृत्तानपिवा[9] युद्धोद्युक्तान्। बह्वन्न![10]। हविष्मतः।[11]

सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत् । विश्वायुर्धेह्यक्षितम् ॥७॥

सं गोमत्। गोमत्।[12] बलवच्च।[13] अस्मासु।[14] विस्तीर्णम्। परिबृह्ळ[15] उच्छ्रितम्। अन्नम्।[16] धेहि।[17] सर्वान्निस्त्वम्।[18] अक्षीणम्।[19][20]

---

१. सम्यक् Sy.

२. चित्रं मणिमुक्तादिरूपेण बहुविधम् Sy.

३. अस्मभ्यमभिमुखम् P.

४. परोणियम् P. अत्यन्तोत्कृष्टम् Sk.

५. एव Sy. इच्छब्दोऽपि यस्मादर्थे Sk.

६. Skanda explains विभु प्रभु as विभूतं च प्रभूतं च धनम्। यावता कार्यं साध्यते तद्।

७. अस्मत्सु P. अस्मास्सु D. अस्मान् S.

८. उद्योगवतः Sy. रभस्वतः क्षिप्रमित्यर्थः Sk.

९. Omitted by S.

१०. प्रभूतधन! Sy. द्युम्नं धनं वा यशो वा अन्नं वा। बहुधन! बहुयशः! बह्वन्न! वा Sk.

११. कीर्तिमतः Sy. यश इत्यन्ननाम। हविर्लक्षणेनान्नेनान्नवतो यष्टृनित्यर्थः Sk.

१२. गावो यस्मिन् सन्ति तत् गोमत्। गोभिः सहितम् Sk.

१३. प्रभूतेनान्नेनोपेतम् Sy. वाजवद् अन्नेन च सहितम् Sk.

१४. अस्मभ्यं सम्यक् प्रयच्छ Sy.

१५. परिबृंह्लं P. D. परिबृह (न्तम्?द्) S. बृहत् महत् सारवत् Sk.

१६. धनम्। Sy. श्रवः—धननामैतत्—धनम् Skt.

१७. समित्युपसर्गो धेहीत्याख्यातेन सम्बन्धयितव्यः. . . . संधेहि सम्यग्देहि Sk.

१८. सर्वायुः S. कृत्स्नायुष्यकारणम् Sy. विश्वायुः—आयुर्जीवितम्, तेन च सर्वेण सहितम् Sk.

१९. अक्षिण च P. अक्षितम् अहिंसितं केनचिदपि हिंसितुमशक्यम् Skt.

२०. Mādhava does not paraphrase the words सम् and इन्द्र।

**अस्मे धेहि श्रवो बृहद्द्युम्नं सहस्रसातमम्। इन्द्र ता रथिनीरिषः ॥८॥**

अस्मे धेहि। अस्मासु[1]। धेहि[1]। बृहत्। अन्नम्[2]। द्योतमानम्[3]। अनेकपुरुषसंभक्तृ[4]। दत्तानि च[5] तानि। अन्नानि कुरु। रथयुक्तानि।

**वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त ऋग्मियम्। होम गन्तारमूतये ॥९॥**

वसोरिन्द्रम्। वसोः[6]। वसुपतिम्[7]। इन्द्रम्। स्तुतिभिः। स्तुवन्तः। ऋगर्हम्[8]। आह्वयामो वयम्। गन्तारम्। रक्षणाय[9]।

**सुतेसुते न्योकसे बृहद्बृहत एदरिः। इन्द्राय शूषमर्चति ॥१०॥**

सुतेसुते। सर्वेषु सुतेषु[10]। न्योकस आत्मीयगृहबुद्धि[11] कुर्वते[12]। महत्[13]। बलम्। महते[14]। इन्द्राय[15]। एव[16]। स्तोमानां प्रेरयिता[17] स्तोता। वदति[18][19]।

---

१. अस्मासु धेहि omitted by P. अस्मभ्यं प्रयच्छ Sy.

२. महतीं कीर्तिम् Sy. श्रवोऽत्र कीर्त्तिरुच्यते। कीर्तिं महतीम् Sk.

३. धनम् Sy. द्युम्नं धननामात्र। द्युम्नं धनं च Sk.

४. ०संभक्तृदत्तानि S. अतिशयेन सहस्रसंख्यादानोपेतम् Sy.

५. Omitted by S.

६. धनस्यार्थाय Skt.

७. अथवा वसोरिति वसुपतीत्येतदपेक्षयैव। वसुपतिशब्दस्तु यद्यपि वसूनां पतिः वसुपतिरित्येवं व्युत्पद्यते तथाप्यत्र स्वामिनमाह।. . . . . .वसोः वसुपतिं धनस्य स्वामिनमिन्द्रम् आह्वयाम। ऊतये पालनाय आत्मनः Sk.

८. ऋहम् P. ऋचां मातारम् Sy. स्तुतियोग्यमित्यर्थः Skt. ऋच स्तुतौ। अर्चना ऋक्. . . . . . . . .तद्वन्तम्। स्तुतियोग्यमित्यर्थः Sk.

९. ऊतये सोमेन तर्पणाय Skt.

१०. इन्द्रार्थमभिषुते तत्तत्सोमे Sy.

११. न्योकसे ओको नियतवासस्थानम्। एतन्नियतं यस्य सोम एव नान्यत् स न्योकः. . . . .षष्ठ्यर्थे चतुर्थी। न्योकसो नियतसोमाख्यस्थाननिवासस्य Skt.

१२. नियतस्थानाय Sy.

१३. प्रौढम् Sy. १४. प्रौढाय। Sy. महतः शरीरेण वीर्येण वा Sk.

१५. इन्द्रस्य Skr.

१६. आ इविति पदपूरणौ Skt.

१७. प्रेरिता P. यजमानः Sy. अरिः ईश्वरः। स्तुत्युच्चारणे समर्थ इत्यर्थः Skt.

१८. स्तौति Sy., Skt. स्तोता आत्मानमेव परोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्दिशति। अहं स्तौमीत्यर्थः। अथवा न्योकसे बृहते इन्द्राय इति स्वार्थे एव तादर्थ्ये चतुर्थी। सुतेसुते इत्यनेन च संबध्यते। इन्द्रार्थमभिषुते सोमे महत् बलं स्तौति। कस्य. . . .. . इन्द्रस्य Skr.

१९. Mādhava does not paraphrase the word आ Ms. D. puts the figure ॥९॥ here to indicate the end of the ninth hymn. No such number is given in P.

I. 10

**गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।**
**ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥१॥**

**गायन्ति त्वा।** गायन्ति[1]। त्वाम्। उद्गातारः। अर्चन्ति। अर्चनीयम्[2]। होतारः[3]। इत्थमुभये ब्राह्मणाः[4]। त्वाम्[5]। शतक्रतो[6] !। वंशमिव बहुभिः[7] स्तोत्रशस्त्रैः। उद्यच्छन्ति[8][9]।

**यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् ।**
**तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥२॥**

**यत्सानोः।** यदार्थलिप्सुः[10] स्तोता सन् मनुष्यः। गिरेः। गिरिम्। आरोहति। यदा[11] वा भूरि। कृष्यादिकं कर्म[12]। स्पृशति[13]। तदानीम्। तस्याभिलषितमर्थम्। इन्द्रः। जानाति। ज्ञात्वा च वसुसमूहेन मरुद्गणेन वा सह। वर्षशीलः[14]। तत्समीपमागच्छति[15]।

**युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।**
**अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥३॥**

**युक्ष्वा हि।** योजय। प्रशस्तकेशौ[16]। अश्वौ। तरुणौ[17]। मेदुरतया कक्ष्यायाः

---

१. गायतिरर्चतिकर्मा। स्तुवन्ति Skr.
२. देवं त्वाम् Skr.
३. मन्त्रोऽत्रार्कं उच्यते तद्वन्तो होतारोऽपि Skr.
४. ब्रह्मा एक ऋत्विक्। तत्पुरुषांस्तु ब्राह्मणाच्छंस्यादीन् अपेक्ष्येदं बहुवचनम् Skr.
५. त्वम् P.
६. शतक्रतो ! बहुकर्मन् ! बहुप्रज्ञ ! वा। Skt.
७. बाहुभिः P.
८. उन्नतिं प्रापयन्ति Sy. उद्यच्छन्ति उत्क्षिपन्ति उच्छ्रयन्तीत्यर्थः Skt. यथा कश्चिद् वंशमुद्यच्छेत् एवमुद्यच्छन्ति उत्क्षिपन्ति उच्छ्रयन्तीत्यर्थः। वीर्यवृद्धिश्च उच्छ्रयोऽभिप्रेतः। स्तूयमाना देवता वीर्येण वर्धन्ते। सर्वे ऋत्विजः स्वैः स्वैः स्तोत्रैस्त्वां स्तुवन्ति इति समस्तार्थः Skr.
९. Cf. N. 5. 5. गायन्ति त्वा गायत्रिणः। प्रार्चन्ति तेऽर्कमर्किणः। ब्रह्माणस्त्वा शतक्रत उद्येमिरे वंशमिव।
१०. यदभ्रम् Sk. ११. यादा P.
१२. कर्त्वं कर्म। वृष्टिर्हि अभ्रनिरुद्धा। तदायत्तानि सर्वकर्माणि Skr.
१३. स्पश बन्धने। शुद्धोऽपि च सोपसर्गार्थे द्रष्टव्यः। प्रतिबध्नाति Skt. तानि बहु प्रतिबध्नाति। तद्वधार्थमिन्द्रो ज्ञात्वा मरुद्भिः सह वर्षिता गच्छति Skr.
१४. ०शील P. कामानां वर्षिता सन् Sy.
१५. कम्पते, स्वस्थानाद् यज्ञभूमिमागन्तुमुद्युङ्क्ते इत्यर्थः Sy. एजतिर्गतिकर्मायम्। वधार्थं गच्छति। अथवा. . . . एजयति कम्पयति। उदकशोधनार्थं धूनयतीत्यर्थः Skt.
१६. प्रशस्त omitted by M. स्कन्धप्रदेशे लम्बमानकेशयुक्तौ Sy. प्रलम्बकेसरौ Skt.
१७. रेतस्सेचनसमर्थौ Skt.

पूरयितारौ[1]। अथ[2]। अस्माकम्। इन्द्र!। सोमस्य पातः!। स्तुतीनाम्। उपश्रवणम्[3]। चर[4]।

**एहि स्तोमाँ अभि स्वराभि गृणीह्या रुव ।**
**ब्रह्म च नो वसो सचेन्द्र यज्ञं च वर्धय ॥४॥**

**एहि स्तोमान्।** आगच्छ[5]। स्तोमानस्मदीयान्। सशब्देन मुखेन पुनः पुनः प्रोत्साह्य[6] "ओथामो[7] दैव" इत्यभिगृणीहि। आप[8]? (च रुव[9]) श्लोकम्[10] अस्माकम्। इन्द्र! स्तोत्रम्[11]। च। सह्। वर्धय[12]। वासयितः[13][14]।

**उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिष्षिधे ।**
**शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥५॥**

**उक्थमिन्द्राय।** उक्थम्। इन्द्राय। शंसनीयम्। बलस्य वर्धनम्। अनेकेषां

---

१. पुष्टाङ्गावित्यर्थः Sy. मांसपूर्णशरीरावित्यर्थः Skt. कक्ष्या रज्जुर्यया अश्वोरसि पर्याणं बध्यते। तत्पूरयितारौ Skr.

२. अध P. D.

३. ०वणः P. ०श्रुतिं S. यत्रास्मदीयाः स्तुतीः शृणोषि तत्रागच्छेत्यर्थः Skt.

४. Mādhava ignores हि।

५. आख्यातबहुत्वे पूर्वं पूर्वं क्त्वार्थे प्रायो बहुत्र Skr.

६. स्वृ गतावत्र, न शब्दोपतापयोः। आगत्य अस्मत्स्तुतीरभिगच्छ। अथवा अस्मत्स्तुतीरेत्य अस्मान् अभिशब्दय। आगच्छत स्तोतारः। आगतोऽहम्। स्तुत। किमतः परमाध्वे इति Skr.

७. ०देव० D. ओथमो देव० P. ओथामोर्दैव० M. ओथामो दैवेत्यभि० S. आश्वलायनश्रौतसूत्रे 5. 9. 4.

८. आप श्लोकम् आरवोस्माकम् P. अप श्लोकणूरवोस्माकम् D. आपः श्लोतं नु नोस्माकम् M. प्रतिगृणन्तमध्वर्युं शंसन्तं मां च नियुङ्क्ष्व। अस्माकम् S. The text of S. is almost identical with the commentary of Skanda.

९. अभिस्वृत्य च। अभिः प्रतौ। प्रतिगिरं कारय। अध्वर्यूणां शस्त्रं शब्दय Skr.

१०. अन्नम् Sy.

११. अनुष्ठीयमानं कर्म Sy.

१२. सह यज्ञं समापय। स्तुतियज्ञयोर्हि समाप्तिरेव वृद्धिः Skr.

१३. वासयिकः M. वसुशब्दः प्रशस्यनाम। प्रशस्य। अथवा वस्विति धननाम .. ..... धनवन् Skt. धनवन्...... अथवा वसो वसिष्ठ प्रशस्य Skr.

१४. Mādhava ignores यज्ञं and च।

शत्रूणां[1] निष्षिधे[1]। यथा। शक्रः शक्तः सः। अस्माकम्। यज्ञेषु[2]। सख्येषु[3]। च। अत्यन्तं रमेत[4]।

**तमित्सखित्व ईमहे तं राये तं सुवीर्ये।**
**स शक्र उत नः शकदिन्द्रो वसु दयमानः॥६॥**

**तमित्सखित्वे।** तम्। एव। सखित्वेऽपेक्षिते 'सखा भव' इति। याचामहे[5]। तमेव। धनार्थम्। तमेव। शोभनबलार्थम्। सः। शक्तः। इन्द्रः। धनम्। प्रयच्छन्[6]। अस्मान्[7]। शक्तान्[8] करोतु।

**सुविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः।**
**गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः॥७॥**

**सुविवृतम्।** सुष्ठ्वपावृतं[9] दिगन्तेषु महत्तया। सुष्ठु च निर्गच्छत्[10]। इन्द्र!। त्वया[11] दत्तम्। एव। अन्नम्[12]।। स त्वं दानाय गोव्रजद्वारम्[13]। अपावृधि। कुरु। धनमस्मभ्यम्। अद्रिवः[14]! अद्रिरादृणात्यमित्रानिति[15] वज्रः[16]।

१. शत्रुनिष्वधे P. शत्रूणां निषद्ध्रे S. पुरुनिष्षिधे-निरित्येष नीत्येतस्य स्थाने। बहूनां शत्रूणां निषिधे निवारकाय। निष्कृत्य वा साधयित्रे स्ववशीकर्त्रे Skt.
२. यषु P. पुत्रेषु Sy.
३. संख्येषु M.
४. अतिशयेन शब्दं कुर्यात्। अस्मदीयेन शस्त्रेण परितुष्ट इन्द्रोऽस्माकं पुत्रान् अस्मत्सख्यानि च बहुधा प्रशंसत्वित्यर्थः Sy. रारणत्—रमेरिदं छान्दसं णत्वम्। रणिर्वा रमेरर्थे। अत्यन्तं रमते Skt.
५. प्राप्नुमः Sy.
६. दयतिर्विभागकर्मा.... स्तोतृभ्यो धनं विभजन्। यदा स्तोतृभ्यो धनविभागस्तदा तस्मादस्मभ्यमेतद् ददातीत्यर्थः Skt.
७. अस्मभ्यं धनं प्रयच्छन् Sy.
८. अस्मदीयरक्षणे शक्तोऽभूत् Sy. शकत्—शिक्षति.... धनम्। शकिर्दानकर्मा पठितः। अयं तु शुद्धोऽपि सामर्थ्याद् दानकर्मा। ददात्वित्यर्थः। अथवा शकिः स्वार्थ एव।.... स शक्रो यस्मादस्मभ्यं शक्नोति दातुम् Skt.
९. सुष्ठु चावृतं D. सुष्ठु लोके प्रकाशम् Skt.
१०. सुखेन निःशेषं प्राप्तुं शक्यम् Sy. सुनिक्षेपम्। यत्र यत्र विनियोक्तुमिष्यते तत्र तत्र प्रभूतत्वात् सुविनियोजमित्यर्थः Skt.
११. त्वया शोधितञ्च सम्पन्नमिति शेषः Sy.
१२. इतः परं क्षीरादिरसलाभार्थम्। Sy.
१३. गोप्रजद्वारम् M. गवां निवासस्थानम्। Sy. आत्मीयाद् गोष्ठाद् गा आनीयास्मभ्यं देहीत्यर्थः। अथवा आपोऽत्र गाव उच्यन्ते। व्रजशब्दोऽपि मेघनाम। वृष्टिलक्षणानामपां सम्बन्धिनं मेघमुद्घाट्य वर्षयेत्यर्थः Skt.
१४. अदिव D. इदीव P.
१५. अदिरा० D. P. अद्रिरा० is missing in M.
१६. S. adds तद्वन्! after वज्रः।

**नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः ।**
**जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥८॥**

**नहि त्वा ।** नहि । त्वाम्[1] । द्यावापृथिव्यौ । उभे[2] अपि । घ्नन्तं[3] मेघं महत्तया[4] । व्याप्नुतः । तथा सति स त्वं जय । दिवि स्थिताः[5] । अपः । जित्वा चास्मभ्यम्[6] । । ता अपः । संधूनुहि[7] ।

**आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः ।**
**इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥९॥**

**आश्रुत्कर्ण[8] ।** आभिमुख्येन निवेदितस्य श्रवणपरकर्ण[9] ! । शृणु । ह्वानम् । क्षिप्रम् । एव[10] । च । हृदये धारय । मदीयाः । गिरः[11] । इन्द्र ! । स्तोमं[12] च । इमम् । मदीयम् । सहायात् । अपि । तव सन्निकृष्टं । कुरु ।

**विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् ।**
**वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥१०॥**

**विद्मा हि ।** जानीमहि । त्वाम् । अतिशयेन[13] वर्षितारम् । सङ्ग्रामेषु च । योद्धृणा[14]-माह्वानस्य श्रोतारम्[15] । अतः । तवातिशयेन सहस्रस्य[16] दात्रीम्[16] । ऊतिम्[17] । हवामहे 'अस्माकमियमस्तु' इति[18] ।

---

१. त्वा S. २. उभौ M.
३. अविघ्नं D. अविघ्न P. घ्नन्तं is omitted by M. Cf. ऋघायमाणं शत्रुवधं कुर्वाणम् Sy. ऋघायतिर्वधार्थः । घ्नन्तं शत्रून् Sk.
४. एनयोः सकाशात् तन्वा वीर्येण वा त्वं महत्तरोऽसि Skr.
५. अथवा स्वश्शब्दः सर्वपर्यायः । सर्वं साध्यं यासामस्ति ताः स्वर्वत्यः । ताः स्वर्वतीः आदित्यरश्म्याहृताः सर्वस्य वा साधिका इत्यर्थः Skt.
६. चास्मन्त अपः P. चास्मन्ता आपः M. वृष्टिलक्षणा अपः Skr.
७. सन्धुनुहि P. ०नुभिः M. सम्यक् पातय Sk.
८. अश्रूत्कर्णः M.
९. दिनिवे० P.
१०. चिच्छब्दः पदपूरणः Skt.
११. रः P. याज्यापुरोनुवाक्यादिगिरो वा Skr.
१२. शस्त्रलक्षणम् Sk.
१३. अतिरयन P. कामानामतिशयेन वर्षितारम् Sy.
१४. अस्मदीयाह्वानस्य श्रोतारम् Sy. आर्त्तानाम् Skt.
१५. स्तोतारम् P.
१६. ०स्यादातीम् D. ०स्य दातीम् P. M. ०स्य दातिम् S. Cf. Sāyaṇa सहस्रसातमामतिशयेन धनसहस्राणां दात्रीम् ।
१७. ऊतीम् D.
१८. Mādhava ignores वृषन्तमस्य ।

**आ तू नं इन्द्र कौशिक मन्दसानः सुतं पिब ।**
**नव्यमायुः प्र सू तिर कृधी सहस्रसामृषिम् ॥११॥**

आ तू[1] न इन्द्र। "पुत्रमिन्द्रसम[2]मिच्छन्[3] कुशिको ब्रह्मचर्यं चचार। तस्येन्द्रः स्वयमेव पुत्रो ऽभूत्। सास्य कौशिकता" "स सुवर्णरजताभ्यां कुशीभ्यां[4] परिगृहीत आसीत्। सास्य कौशिकता" इति वा[5] ब्राह्मणम्[6]।

आभिमुख्येन[7]। क्षिप्रम्[8]। पिब। इन्द्र!। कौशिक!। अस्माकम्[9]। प्रहृष्यन्[10]। सोमम्। नवतमम्[11]। आयुश्च[12]। सुष्ठु। प्रवर्धय। कुरु च। सहस्रधनस्य संभक्तारम्[13]। मधुच्छन्दसमृषिम्[14]।

**परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।**
**वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥१२॥**

परि त्वा गिर्वणः। सुरूपकृत्नुमूतय[15] इत्याद्या गिरः। त्वाम्। गीर्भिर्वननीय[16]! सर्वतः। परिभवन्तु परितो भवन्तु[17]। तथा वर्द्धितान्नं[18] त्वाम्। अन्व[19]स्माकम्। वृद्धयो[20]। भवन्तु[21]।

---

१. कू D. नू P. २. ०समिच्छ० D.
३. मिच्छन् is missing in P.
४. कुंशिभ्यां P. अथवा कुशिभिर्बद्धस्य द्रष्टा दोग्धा वा कौशिकः। तथाहि चरकाध्वर्यवः—
पृश्नेस्तदास्याश्चत्वारः
सा देवेभ्यो दुह त्रिभिः।
एकोऽनुबद्धः कुशिभि—
स्तं दृष्ट्वा दुग्धवान् हरिः ॥
इति वा कौशिकः Skr.
५. व P.D.M. ६. ब्राह्मण P.
७. वाभि० P. आ इत्युपसर्गः पिबेत्याख्यातेन सम्बन्धयितव्यः Skt.
८. तु इति पदपूरणः। क्षिप्रार्थो वा Skt.
९. अस्मान् प्रति आगच्छेति शेषः Sy.
१०. प्रहृव्यं P. मन्दतिः स्तुत्यर्थो वा मोदनार्थो वा। स्तूयमानो मोदमानो वा Skt.
११. नवतमुम् M. सर्वैर्देवैः स्तुत्यं कर्मानुष्ठानपरम् Sy. नव्यं स्तुत्यमत्रोत्कृष्टम् Skt. नव्यं स्तुत्यम् अन्नं देहि। अथवा नवं जीवितं सुष्ठु प्रवर्धय Skr.
१२. आयुरन्नम् Skt.
१३. सहस्रसंख्याकलाभोपेतम् Sy.
१४. ०न्दसामृ० P. अतीन्द्रियद्रष्टारम् Sy.
१५. RV. I. 4. I.
१६. अस्मदीयस्तुतिभाक् Sy. स्तुतिभिः सम्भजनीय Skt.
१७. सर्वतः प्राप्नुवन्तु Sy. परिपूर्वो भवतिः सर्वत्र परिग्रहे। परिगृह्णन्तु Skt.
१८. वर्धितम् त्वाम् S. वर्धितान्नं त्वाम् M. अनुप्रवृद्धेनायुष्येणोपेतम् Sy. वृद्धान् शत्रून् Skt.
१९. अनु omitted by M. and P. अनु इत्येष पदपूरणः। सुशब्दस्य वार्थे। सुष्ठु वृद्धाः Skt.
२०. Missing in M. वर्धमानाः Sy.
२१. भवन्न M.

पर्याप्ताश्च[1]। भवन्तु। अस्माकं[2] पर्याप्ताः[3] श्रियः।[4]

I. 11

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥१॥

इन्द्रं विश्वाः। जेता मधुच्छन्दसः। इन्द्रम्। विश्वाः। स्तोतॄणां गिरः[5]। अवर्धयन्[6]।
अन्तरिक्षस्येव[7] यस्य व्याप्तिः। अतिशयेन रथिनम्[8]। रथिनाम्[9]। अन्नानाम्। सतां[10] च। पतिम्।

सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते।
त्वामभि प्र णोनुमो जेतारमपराजितम् ॥२॥

सख्ये ते। त्वया। सख्ये[11] सति। बलिनो[12] वयम्। न कुतश्चित्[11]। बिभेम[13]।
बलस्य पते!। त्वाञ्च। प्रकर्षेण। अभिष्टुमः[14]। जेतारम्। अपराजितम्।

---

१. एता गिरस्त्वया सेविताः सत्यः Sy. जुष्टाः प्रिया भवन्तु Skt.

२. ०प्त M. प्ता P. D. Omitted by S.

३. अस्माकं प्रीतिहेतवः Sy. जुष्टयः प्रीणयित्र्यः Skt.

४. Ms. D. puts the figure ॥१०॥ here to indicate the end of the tenth hymn. No such number is given in P. and M.

५. The passage beginning with गिरः and ending with यस्य is missing in M. अस्मदीयाः स्तुतयः Sy.

६. वर्धितवत्यः। वर्धयन्तु वा Skt.

७. ०क्षेव P. समुद्रवद् व्याप्तवन्तम् Sy. समुद्रस्येव व्याप्तिर्यस्य स समुद्रव्यचाः, तं समुद्रव्यचसं सर्वव्यापिनमित्यर्थः Skt.

८. Omitted by S. रथं यो नयति तत्रस्थो वा युध्यते स रथी Skt.

९. Omitted by D. P. and M.

१०. सतां च पालयितारम् Skt.

११. The Passage beginning with सख्ये and ending with कुतश्चित् is missing in M.

१२. अन्नवन्तः Sy. वाजिनः–हविर्लक्षणेनान्नेन स्तुवन्तस्त्वा हविषा यजन्त इत्यर्थः Skt.

१३. Mss. and S. read बिभेम but the grammatically correct form is बिभिमः।

१४. पौनःपुन्ये चात्र यङो लुक्।.....पुनः पुनरभिष्टुमः Skt.

पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।
यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ॥३॥

पूर्वीरिन्द्रस्य[1]। बहूनि[2]। इन्द्रस्य[1]। दानानि। रक्षणानि च[3]। न। शुष्यन्त्युपर्युपरि वर्धन्ते। यद्ययम्। अन्नस्य। गोयुक्तस्य। स्तोतृभ्यः। मंहनीयं[4] सङ्घम्[5]। प्रयच्छति। तदानीं तेन दत्तानि धनानि तन्मुखानि रक्षणानि च[6] न[7] शुष्यन्ति बहुत्वादिति[8]।

पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥४॥

पुरां भिन्दुः[9]। पुराम्[10]। भेत्ता। युवा[11]। कान्तकर्मा[12]। अमितबलः। आसीत्[13]। इन्द्रः[14]। विश्वस्य। कर्मणः। धर्ता[15]। वज्री। बहुभिः स्तुतः[16]।

त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥५॥

त्वं वलस्य[17]। त्वम्। वलासुरस्य[18]। गृहीतपशोः। अपावृतवानसि। वज्रिन्!।

---

१. The passage beginning with पूर्वीः and ending with इन्द्रस्य is missing in M. which reads पू only.
२. अनादिकालसिद्धाः प्रभूता वा Sy. चिरन्तन्यः Skt.
३. omitted by D.
४. महनीयम् S. दक्षिणारूपेण ददातीत्यर्थः Sy.
५. मंहनीयम्। सङ्घम् are missing in M.
६. Omitted by D.
७. नोपक्षीयन्ते Sy.
८. यद्यप्यन्येभ्योऽपि स्तोतृभ्योऽन्नं गां धनं चेन्द्रो ददाति तथापि प्रभूतधनत्वान्नैवास्य पूर्वदानानि पालनानि च क्षीयन्ते Skt.
९. भिद्यः M. १०. असुरपुराणां Skt.
११. युव M.
१२. कान्त० S. M. मेधावी Sy. कविर्मेधावी Skt.
१३. अजायत जन्मन एव प्रभृतीदृश इत्यर्थः Skt.
१४. इन्द्रियदः परमैश्वर्यदा वा Skr.
१५. सर्वस्य कर्मणो धारयिता यावद्धि किञ्चित् कर्मास्य वृष्टयायत्तं वृष्टिश्चेन्द्रायत्ता। अतो वृष्टिद्वारेण सर्वस्य कर्मणो धारयितेन्द्रः Skt.
१६. स्ततः M. बहुविधे तत्तत्कर्मणि स्तुतः Sy.
१७. बलस्य M. S. १८. बला० M.S. वल इति मेघनाम। त्वं मेघस्य गोमतः, उदकवतः Skt.

बिलम्[1]। "इन्द्रो वलस्य बिलमपौर्णोत्[2] स य[3] उत्तमः पशुरासीत्" इति ब्राह्मणम्। त्वामग्रे गच्छन्तम्। देवाः। अबिभिवांसस्त्वत्सन्निधानात्[4]। पणिभिर्हिंस्यमानाः[5]। तव[6] जयार्थमागताः।

तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन्।
उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ॥६॥

**तवाहम्।** तवाहं शूर रातिभिः। त्वत्तः। अहम्। शूर!। धनानि[7] गृहीत्वा। प्रतिगतवानस्मि। कुतस्त्वयेमानि धनानि[8] लब्धानीति[9] गृह्यस्तव[10] धनानां स्यन्दनम्[11]। आभिमुख्येन वदन्निन्द्रादिमानि[12] लब्धानीति[13]। मामुपातिष्ठन्ताध्वगाः[14]। गीर्भिर्वननीय[15]!। तव[16]। तत्[17] कर्म। प्राज्ञाः[18]। जानन्ति[19]। तेषामस्माकं वर्धयान्नानीति[20]।

---

१. बलम् P. M.
बिलम्—उदकनिर्गमनच्छिद्रम् Skt.
बिलम् उदकविनिर्गमनद्वारम् Skr.

२. ०पोर्णोत् S.

३. Omitted by S. P., या M.

४. ०वासः M.
The grammatically correct form is अबिभीवांसः।
वृत्रश्वासादभीताः Skt.

५. ०भिरहिंस्य० P.
वलेन हिंस्यमानाः Sy. तुज्यमानासः—क्षिप्रनामैतत्। त्वरमाणाः Skt.
त्वरमाणाः। तुज त्वरणे Skr.

६. तजवार्त्थ (?) D. तजवार्थम् P.
इति is added after आगताः by S.
त्वां प्राप्तवन्तः Sy.
वृत्रं जिघांसन्तं त्वां मरुतोऽभीताः क्षिप्रमन्वगच्छन् Skr.

७. रातिभिः—हेतावियं तृतीया। स्तोतृभ्यो यानि महान्ति दानानि तैर्हेतुभूतैः। तैरुत्साहित इत्यर्थः। अथवा प्रयोजनस्यात्र हेतुत्वेन विवक्षा। तव सोमदानैर्हेतुभूतैस्तुभ्यं सोमं दातुमित्यर्थः Skt.

८. Omitted by P. and D.

९. निवब्धादीति M.

१०. प्रगृह्यः S. M.

११. स्यन्दितारम्। सोमयज्ञोत्तरसमाप्तौ यद् गमनं तदपेक्षोऽत्र प्रत्यागमनव्यपदेशः Skt.
स्यन्दितारं...स्यन्दू आस्रवणे। हे इन्द्र त्वं स्तोतृभ्यः प्रभूतं ददासि। तस्मादहं च स्तोमैं स्तुतीश्चावदन् त्वां प्रत्यागच्छामि स्म Skr.

१२. वदन्निमन्द्रादिमानि S. वदन्निमान्द्राभिमानि M.

१३. लब्धानीदिति S. लब्धाधीति M.

१४. ०ष्ठता० M. ऋत्विग्यजमानाः पुरा धनलाभार्थं त्वामुपस्थितवन्तः Sy.
नच केवलोऽहमन्ये ऋत्विज ऋषयो वा स्तुतिभिरुपातिष्ठन् Skr.

१५. स्तुतिसंभक्तः Skr.

१६. ते S.

१७. तस्य S. रतत् M.

१८. प्रज्ञाः D. कर्तार ऋत्विग्यजमानाः Sy.
कारवः स्तोतृनामैतत्। अन्येऽपि स्तोतारः Sk.

१९. किञ्च विदुः ते तस्य त्वां तम्। अभिङ्स्। अन्येऽपि स्तोतारस्तं त्वां विदुः। यस्त्वमेवमुक्तगुणः Skr.

२०. ०न्नानिति P.

मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः ।
विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ॥७॥

मायाभिरिन्द्र। मायाभिरेव।[1] इन्द्र![2] त्वम्। मायाविनम्।[3] शुष्णासुरम्।[4] व्यनाशयः।[5] तव। तत् कर्म। प्राज्ञाः।[6] जानन्ति। तेषामस्माकम्।[7] वर्धय।[8] अन्नानि।[9]

इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥८॥

इन्द्रमीशानम्। इन्द्रम्। ईश्वरम्।[10] बलेन सर्वस्य। अस्मदीयाः[11] स्तोमाः।[12] अभ्यस्तुवन्। सहस्रसंख्यायुक्तानि।[13] यस्य दानानि। अपि। वा।[14] विद्यन्ते। भूयांसीति।[15]

## I. 12.

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥१॥

अग्निं दूतम्। मेधातिथिः काण्वः।[16] अग्निम्। दूतम्।[17] वृणीमहे।[18] होतारम्।[19] सर्वधनिनम्।[20] अस्य। यज्ञस्य। सुप्रज्ञम्।[21]

---

१. ०भिरिव M. मायाभिस्तत्प्रतिकूलैः कपटविशेषैः। यद्वा तद्वधोपायगोचरप्रज्ञाभिः Sy. मायेति प्रज्ञानाम प्रज्ञाभिः Skt.
२. Omitted by P.
३. मायिनम् अतिसन्धानप्रज्ञायत्तम् Skt. अतिसन्धानप्रज्ञायुक्तम् Sk.
४. शुष्मासुरं M.
५. अवतिरतिर्वधकर्मा। हतवान् Skt. हतवान्। अवतिरतिर्वधे Skr.
६. मेधिरा यज्ञवन्तो यज्ञकारिणः. . .अस्मदीया ऋत्विजः पुत्रपौत्रादिका वा Skt. यज्ञवन्तः. . . . . . अस्मदीया ऋत्विजः पुत्रादयो वा Skr.
७. जानतामनुष्ठातॄणाम् Sy.
८. उत्तिर, तिरतिर्वृद्ध्यर्थः। ऊर्ध्वं वर्धय उत्तरोत्तरवृद्ध्या वर्धयेत्यर्थः Skt.
९. Cf. Ng. 2. 7.
१०. जगतो नियामकम् Sy. सर्वस्य प्रभवन्तम् Skr. ११. स्मदीया P.
१२. स्तोमाः स्तोतार ऋत्विजः Sy.
१३. सहस्रादपि बहुतरा वा। यः स्तोतृभ्योऽसंख्यदाः Skr.
१४. Omitted by S.
१५. Ms. D. puts the figure ॥११॥ here to indicate the end of the eleventh hymn. No such number is given in P. and M.
१६. कण्वः P.
१७. सन्देशेन यः प्रेष्यते स दूत उच्यते. . . . . देवान् प्रति सन्देशे अनुगन्तारम् Skt. सन्देशकारी दूतः। अग्निं देवान् प्रति सन्देशेन अनुगन्तारम् Skr.
१८. प्रणीमहे D. अभ्यर्थयामहे Skt. अर्थयामहे Skr.
१९. अग्निनाधिष्ठितो मर्त्यो होता हौत्रं कर्तुं शक्नोति। एतदर्थं च देवानामाह्वातारं वा Skr. २०. P. adds विश्ववेदसं before सर्वधनिनम्। वेद इति धननाम। सर्वधनं सर्वप्रज्ञं वा Skt. विश्ववेदसं सर्वधनं सर्वप्रज्ञं वा Skr.
२१. शोभनकर्माणं शोभनप्रज्ञं वा Sy. अस्य प्रकृतस्य यज्ञस्य सुकर्माणं सुप्रज्ञं वा Skr.

**अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥२॥**

**अग्निमग्निम् ।** अग्निमेव[१] । ह्वानैः[२] । सदा । आह्वयन्ति नराः[३] । विशां[४] पतिम् । हविषां
वोढारम् । बहूनां प्रियम् ।

**अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ॥३॥**

**अग्ने देवान्[५] ।** अग्ने ! । देवान् । इह[६] । आवह । जानन्[७] । यजमानाय[८] । असि[९] हि ।
अस्माकम्[१०] । होता । स्तोतव्यः[११] ।

**ताँ उशतो वि बोधय यदग्ने यासि दूत्यम् । देवैरा सत्सि बर्हिषि ॥४॥**

**ताँ उशतः[१२] ।** तान् देवान् । कामयमानान्[१३] । त्वं विबोधय[१४] । यदा[१५] । त्वमग्ने ! गच्छसि ।
दूत्यम् । त्वमपि तैः सह । आसीद । बर्हिषि[१६] ।

**घृताहवन दीदिवः प्रति ष्म रिषतो दह । अग्ने त्वं रक्षस्विनः ॥५॥**

**घृताहवन[१७] ।** घृतं यस्मिन्नाहूयते[१८] प्रियतमं स घृताहवनः[१९] । दीप्यमान[२०] ! प्रतिदह[२१] ।
हिंसकान्[२२] राक्षसान् । अग्ने । त्वम्[२३] । बलवतः[२४] ।

---

१. ०मेवा M. २. आह्वानकरणैर्मन्त्रैः Sy.
३. नरं D. यष्टारः Sk.
४. प्रजानां होत्रादीनां पालकम् Sy.
५. देवा S. ६. यज्ञे Sk.
७. अरण्योरुत्पन्नः Sy. जनेर्जानातेर्वा रूपमेतत् । जायमानः जन्मान्तर एवेत्यर्थः । जानानः सामर्थ्यादस्मद्भक्तताम् Skt. जायमानः अस्मद्भक्तिं जानन् वा Skr.
८. वृक्तमास्तीर्णं बर्हिर्येन यजमानेन तस्यार्थाय Skt. सद्य एव यजमानस्यार्थाय ।.....आस्तीर्णं बर्हिर्येन स वृक्तबर्हिः Skr. ९. सि D. १०. अस्मदर्थं देवानामाह्वाता Sy. ११. स्तोतव्यं D.
१२. ता P. तं D. तां M.
१३. कामयमानः P. यज्ञगमनम् Sk.
१४. अमुष्य यजमानस्य यज्ञे गन्तव्यमिति चेतय Skr.
१५. यथावत् M. यस्मात्कारणात् Sy. येषां दूतकर्म प्रतिपद्यसे तान् विबोधय । ङसः शसो वात्र यदिति लुकि यान् येषां यत् Skr. १६. अस्मिन् यज्ञे Skr.
१७. ०वनं D. ०वनः M.
१८. घृतेनाहूयमान ! Sy.
१९. वनं D. आहुतिलक्षणं घृतमाहूयते यस्मिन् स त्वं दीप्तिमन् Skr.
२०. ०मानः S. दिव्यमानः M.
२१. प्रतिद M. २२. रक्षोयुक्तान्हिंसकान् शत्रून् Sy. मां हिंसतः Skr.
२३. रक्षोयुक्तान् Sy. रक्षःशब्देनात्र रक्षःसम्बन्धि क्रौर्यं लक्ष्यते । तद्वतः, रक्षोभवान् अत्यन्तक्रूरानित्यर्थः Skt.
२४. Mādhava ignores स्म ।

**अ॒ग्निना॒ग्निः समि॑ध्यते क॒विर्गृ॒हप॑ति॒र्युवा॑ । ह॒व्य॒वाड् जु॒ह्वा॑स्यः ॥६॥**

**अग्निनाग्निः।** निर्मथ्येनाग्निना[1]। आहवनीयाग्निः[2]। समिध्यते। कविः[3]। गृहपतिः[4]। युवा[5]। हविषां वोढा। जुहूर्यस्यास्यस्थानीया[6][7]।

**क॒विम॒ग्निमुप॑ स्तुहि स॒त्यध॑र्माणमध्व॒रे । दे॒वम॑मीव॒चात॑नम् ॥७॥**

**कविमग्निम्[8]।** कविम्[9]। अग्निम्। उपस्तुहि। सत्यधर्माणम्[10]। यज्ञे[11]। द्युस्थानम्[11]। रक्षसां चातयितारम्[12]।

**यस्त्वाम॑ग्ने ह॒विष्प॑तिर्दू॒तं दे॑व सप॒र्यति॑ । तस्य॑ स्म प्रावि॒ता भ॑व ॥८॥**

**यस्त्वामग्ने[13]।** यः। त्वाम्। अग्ने!। यजमानः[14]। दूतम्। देव![15]। परिचरति। तस्य त्वम्। प्रकर्षेण रक्षकः। भव[16]। स्मेति पूरणम्[16]।

**यो अ॒ग्निं दे॒ववी॑तये ह॒विष्माँ॑ आ॒विवा॑सति । तस्मै॑ पावक मृळय ॥९॥**

**यो अग्निम्[17]।** यः। अग्निम्। यज्ञार्थम्[18]। हविष्मान्[19]। परिचरति। तस्मै। पावक![20]। सुखमुत्पादय[21]।

---

१. निर्मथ्याग्निना S. मन्थ्यनाग्निना P. निर्मथ्यानाग्निना M.
२. हवनीयाः M.  ३. मेधावी Sk.
४. यजमानस्य यज्ञगृहस्य वा स्वामी Skt.
५. युवा तरुणः। अग्निरुपशान्तोऽपीन्धनं प्राप्य पुनस्तरुणीभवति। तेनास्योपपन्नं सदा तरुणत्वम् Skt.
६. जहु० P जुहु० D. M.
७. ०नीयाः D. M. ०स्यन्यन्ननोया P. जुह्वास्यः...यथा हि मनुष्या आस्येनान्नमदन्ति तद्वद् जुह्वा अग्निः Skt. जुहूर्मुखं जुहूरास्यस्थानीया यस्य। यथा ना मुखेन अत्ति तद्वज्जुह्वा अग्निः Skr.  ८. कविमहि P.
९. हे अन्तरात्मन् मेधाविनं क्रान्तं वा Skr.
१०. सत्यकर्माणम् Skr.  ११. यज्ञेषु P. यज्ञे...स्थानं M. द्योतमानम् Sy. दातारं दीप्तं वा Skr.
१२. दारयितारं P. चान्तर्हितारं D. शत्रूणां रोगाणां वा घातकम् Sy. हिंसितॄणां नाशयितारमित्यर्थः Skt.
१३. यचामग्ने P.  १४. अस्मदादिः Sk.
१५. देवं D. दातः दीप्त वा Sk.
१६. भवान् न भियुरणं P.
१७. यो अग्निम् omitted by P. M.
१८. देववीतये वीतिर्गत्यर्थः अशनार्थो वा। देवान् प्रति गमनाय देवानां वो हविर्भक्षणाय Skt.  १९. भविष्मान् P. हविःसंयुक्तो यजमानः Skr.
२०. पावत P. शोधयितः Sk.  २१. Cf. N. 11. 23. विवासतिः परिचर्यायाम्। 'हविष्माँ आविवासति' इत्याशास्तेर्वा।

**स नः पावक दीदिवोऽग्ने देवाँ इहा वह। उप यज्ञं हविश्च नः ॥१०॥**

**स[1] नः पावक[1]।** सः। अस्माकम्[2]। पावक !। दीप्त !। अग्ने !। देवान्। इह। आवह[3]।
हविः[4]। च। अस्माकं[4] शृतम्[5]। यज्ञम्[6]। उपप्राप्तम्।

**स नः स्तवान आ भर गायत्रेण नवीयसा। रयिं वीरवतीमिषम् ॥११॥**

**स नः स्तवानः।** सः। अस्मभ्यम्[7]। स्तूयमानः[8]। गायत्रेण[9] साम्ना। नवतरेण।
रयिम्। वीरयुक्तम्[10]। अन्नं च। आहर।

**अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः। इमं स्तोमं जुषस्व नः ॥१२॥**

**अग्ने शुक्रेण।** अग्ने !। ज्वलता[11]। तेजसा। सर्वैश्च। देवाह्वानै[12]र्युक्तस्त्वम्[13]। इमम्[13]।
स्तोमम्। सेवस्व[14]। नः[15] ।[16]

I.13.

**सुसमिद्धो न आ वह देवाँ अग्ने हविष्मते। होतः पावक यक्षि च ॥१॥**

**सुसमिद्धो[17] नः।** आप्रीणामग्न्यादयो[18] देवताः[19]। समिदादीनां यज्ञाङ्गानामुक्तिमात्रमिति।
सुसमिद्धस्त्वम्[20]। अग्ने !। अस्माकम्। अस्मै[21] यजमानाय। देवान्। आवह। होतः[22] !। शोधयितः[23] !।
तान्[24] यज च।

---

१. सनकः M.
२. नोस्माकं D. अस्मदर्थाय Skr.
३. देवान् नो यज्ञहविषोः समीपे इहानय Skr.
४. विश्चास्माकं P. हविर्वास्माकं D.
५. शृकं (?) D. शृ (उर इ) तम्। P.
६. Omitted by P.
७. अस्माभिः Skr. ८. ०माना P. D.
९. स्तवनेन नवतरेण अन्यैरकृतपूर्वेण Skr.
१०. वीर्ययुक्तं D. पुत्रवन्तम् Skr.
११. त्वदीयश्वेतवर्णदीप्त्या Sy. आत्मना शुक्लवर्णेन ज्वलतात्मना Skr.
१२. त्वत्कृतसर्वदेवताह्वानसाधनस्तोत्रैः Sy.
१३. ०क्त स्तुतिमिति P.
१४. तं श्रुत्वा सर्वान् देवान् श्रावयित्वा आह्वय इत्यर्थः Skr. १५. न P. M.
१६. Ms. D. puts the figure ॥१२॥ here to indicate the end of twelfth hymn. No such number is given in P. and M.
१७. समिद्धो D. १८. आव्रणामन्यादसो P.
१९. Cf. Ng. 5. 2; N. 8. 4.
२०. इध्यतेऽसावितीध्मः समिन्धनसम्बद्धोऽग्निरुच्यते। सुसमिद्धः सुष्ठु दीप्तः Skt.
२१. Omitted by S.
२२. होता D. M. २३. शोतयितः M.
२४. हौत्रं कुर्वित्यर्थः Skr.

मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे । अद्या कृणुहि वीतये ॥२॥

मधुमन्तम्[1]। आज्यवन्तम्[2]। तनूनपात्[3] !। यज्ञं हविः। देवेषु[4]। अस्माकम्। कवे[5] !। अद्य। कृणु[6] अशनाय[7]।

नराशंसमिह प्रियमस्मिन्यज्ञ उप ह्वये । मधुजिह्वं हविष्कृतम् ॥३॥

नराशंसम्। नरैः शंसनीयमग्निम्[8]। प्रियम्[9]। इह[10]। उपह्वये। अस्मिन्[9]। यज्ञ इति। विशदवचनं मादयितृजिह्वम्[11]। हविषां कर्तारम्।

अग्ने सुखतमे रथे देवाँ ईळित आ वह । असि होता मनुर्हितः ॥४॥

अग्ने सुखतमे। अग्ने !। सुखतमे[12]। रथे स्थापयित्वा[13]। देवान्। स्तुतस्त्वम्। आवह। असि[14] त्वम्। होता। मनुष्यैः[15] पुरो[16] निहितः[16]।

---

१. मधुमन्तः D. २. आज्यवन्तः D. रसवन्तम् Sy.
मधुस्वादैर्मृष्टैर्हविर्भिस्तद्वन्तम् Skt.

३. आपोऽत्र तन्व उच्यन्ते अन्तरिक्षे ततत्वात्। तासां नपात् पौत्रः....... अग्निः। कथम्? अद्भ्य ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्य एष जायत इति Skt.

४. नो यज्ञं देवसमीपं नय Skr.

५. मेधाविन् Skr. ६. कुरु नय Skr.

७. कामाय भक्षणाय वा। यज्ञं देवाः कथं कामयेरन् हवींषि वा भक्षयेयुरित्यर्थः Skr.

८. एतन्नामकमग्निम् Sy.

९. प्रयमिहोपस्यनयमित् P.

१०. नृलोके Sk.

११. मदयि० P. मधुरभाषिजिह्वोपेतं माधुर्यरसास्वादकजिह्वोपेतं वा Sy.
मधुस्वादेषु हविष्षु जिह्वा यस्य स मधुजिह्वः। नित्यमृष्टानां हविषां भक्षयितेत्यर्थः। अथवा जिह्वेति वाङ्नाम। मध्वी जिह्वा यस्य स मधुजिह्वः। होतृत्वाद्.... देवतानां स्तावकत्वादस्ति मधुवाक्त्वम्। सुभगवचनमित्यर्थः Skt.

१२. तृतीयार्थे सप्तम्येषा...... सुखतमेन रथेन Skt.

१३. ०यित्या P. १४. सि P.

१५. मनुष्यो D. P. मनुना मन्त्रेण मनुष्येण वा यजमानादिरूपेण स्थापितः Sy.
मनुना प्रजापतिना निहितः स्थापितः। मनुष्यपर्यायो वा मनुश्शब्दः। मनुष्येषु निहितः उपकारक इत्यर्थः Skt.

१६. पुनरानिहिका P. पुनरानिहिता D.

**स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः । यत्रामृतस्य चक्षणम् ॥५॥**

स्तृणीत बर्हिः[1]। स्तृणीत[2]। बर्हिः[3]। अनुषक्तम्[4]। उपरिस्थितघृतम्[5]। प्राज्ञाः[6] ! । यत्र । अमृतं[7] हविः । दृश्यते बर्हिषि ।

**वि श्रयन्तामृतावृधो द्वारो देवीरसश्चतः । अद्या नूनं च यष्टवे ॥६॥**

वि श्रयन्ताम्[8]। यज्ञगृहद्वारः[9]। विवृता भवन्तु[10]। यज्ञस्य वर्धयित्र्यः[11]। असक्ताः[12]। अद्य[11] च[11]। श्वः । च । यागाय[13]। नूनमित्यनेकार्थम् ।

**नक्तोषासा सुपेशसास्मिन्यज्ञ उप ह्वये । इदं नो बर्हिरासदे ॥७॥**

नक्तोषासा[14]। अहोरात्रे[15]। सुरूपे । अस्मिन् । यज्ञे । उपह्वये । तयोरासनाय[16]। इदम् । अस्माकम्[17]। बर्हिः[18] स्तीर्णम् ।

---

१. स्त्रिणीत D.

२. भूते काले व्यत्ययेनायं लोट् । स्तृतवन्तः स्थ Skt. ३. बर्हीः D.

४. अनुक्तं M. आनुष P. आनुषगिति नामानुपूर्वस्य । आनुपूर्व्येण Skt.

५. घृतं P. उपरिस्थितं घृतं D. घृतं पृष्ठे यस्य स घृतपृष्ठः । बर्हिषो ह्युपरि हविर्लक्षणं घृतं साद्यते । अथवा घृतमित्युदकनाम । तेन स्पृष्टं घृतपृष्ठं प्रोक्षणीभिः प्रोक्षितमित्यर्थः Skt.

६. प्राज्ञ P. मेधाविनोऽध्वर्यवः Sk.

७. मृता P. अम्यतं M. अमृतसमानस्य घृतस्य दर्शनं भवति Sy. अमृतस्य अमृतसदृशस्यात्यन्तमृष्टस्य हविषश्च क्षणं दर्शनं ..... यत्र सादितं हविर्दृश्यत इत्यर्थः । अग्निर्वा अमरण-धर्मत्वादमृतस्तस्य यत्र दर्शनम् Skt.

८. विश्रयन्तात् D.

९. ०द्वारोपि D. ज्वाला वाग्नेः । ता हि तस्य द्वारभूताः Skt.

१०. विशेषेण सेवन्तां वा Sy.

११. ०यित्र्ये अन्यासक्ताः अद्य च M. ०यित्र्ये न्यासभाद्या P. ०यित्रेस्यास......च D. सत्यस्य यज्ञस्य वा वर्धयित्र्यः Sy. सश्चतिः सङ्गार्थः । असज्यमानाः Skt. नूनं चार्थे । समुच्चयद्वित्वाद् अद्य इत्यस्य सहचारित्वाच्च पुराशब्दः अध्याहार्यः । इदानीं च पूर्वस्मिंश्च काले यष्टुम् Skt.

१२. असश्चन्त्य उद्घाटनेन प्रवेष्टृपुरुषसङ्ग-रहिताः । यद्वा द्वाराभिमानिन्य एतत्सं-ज्ञिका अग्निविशेषमूर्तयः Sy.

१३. योगाय M. १४. नक्तो सा P. नक्ता इति रात्रिनाम । उषा अपररात्रिकं ज्योतिः । नक्ता चोषाश्च Skt.

१५. नक्तशब्द उषःशब्दश्च लोके कालविशेष-वाचिनौ । इह तु तत्कालाभिमानिवह्नि-मूर्तिद्वये प्रयुज्येते । नक्तोषोनामिके वह्निमूर्ती Sy.

१६. तयोरासनायेतयोरासनाय D. इदं दर्भमासत्तुं प्राप्तुमित्यर्थः Sy.

१७. अस्त्वस्माकम् P.

१८. षष्ठ्यर्थे द्वितीया...बर्हिषः... आसद-नाय । अत्र बर्हिष्युपवेष्टुमित्यर्थः Skt.

**ता सुजिह्वा उप ह्वये होतारा दैव्या कवी । यज्ञं नो यक्षतामिमम् ॥८॥**

**ता सुजिह्वौ**[1]। अयञ्चाग्निरसौ[2] च मध्यमस्तौ। शोभनवाचौ[3]। उपह्वये। दैव्यौ[4]। होतारौ। कवी। यज्ञम्। नः। यजताम्। इमम्।

**इला सरस्वती मही तिस्रो देवीर्मयोभुवः । बर्हिः सीदन्त्वस्रिधः ॥९॥**

इळा[5]। सरस्वती। महती च भारतीति[6]। तिस्रः। देव्यः। सुखस्य भावयित्र्यः। बर्हिः[7] सीदन्तु। अक्षयाः[8]।

**इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये । अस्माकमस्तु केवलः ॥१०॥**

**इह त्वष्टारम्**। इह। त्वष्टारम्[9]। मुख्यम्[10]। येन विश्वानि[11] रूपाणि क्रियन्ते[12] तम्। उपह्वये। सोऽस्माकम्। अस्तु। केवलः[13]। "यावच्छो वै[14] रेतसः[15] सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो[16] वै[17] तत्[17] प्रजायते" इति ब्राह्मणम्।

**अव सृजा वनस्पते देव देवेभ्यो हविः । प्र दातुरस्तु चेतनम् ॥११॥**

**अव सृज**[18]। अवसृज। वनस्पते[19]! प्रयच्छ[20]। देव!। देवेभ्यः। हविः। प्रकर्षेण। अस्तु। दातुर्यजमानस्य। प्रज्ञापनं[21] देवेषु त्वया निवेदितस्य[22]।

---

१. ०ह्वा S. M.
२. ०ञ्चङ्गिरसौ M.
तच्छब्दोऽत्र सर्वनामत्वात्प्रसिद्धार्थवाची। तौ याज्ञिकानां प्रसिद्धौ द्वावग्नी Sy.
३. शोभनजिह्वोपेतौ, प्रियवचनौ शोभनज्वालौ वेत्यर्थः Sy. यौ सर्वमनुष्यैर्नित्यमाहूयेते तौ सुजिह्वौ......सुवाचौ शोभनजिह्वाख्यावयवौ वा Skt.
४. देव्यौ M. D.
५. S. adds इळा सरस्वती before इळा. It should be there as a *pratīka*.
६. इति omitted by S.
७. बर्हिः M.
८. शोषेण क्षयेण वा रहिताः Sy.
९. त्वष्टार M. त्वष्टा नाम देवानां तक्षा। अग्निर्वा Skt.
१०. मुख्य M. प्रधानभूतम् Sk.
११. बहुविधरूपोपेतम् Sy.
१२. विक्रियन्ते S. बहुरूपम्। अतिशयमहाभाग्ययोगादस्ति देवानां बहुरूपत्वम्। Sk.
१३. केवलं D. स्तुत्यो यष्टव्यश्च Sk.
१४. यावच्छोचै S. M. D. यावच्छोचे P.
१५. रेतः D.
१६. तावच्छा D.
१७. चैतत् S. D. चैत P.
१८. ०सृजा P.
१९. वनान्युदकानि वृक्षा वा तेषां पाता वनस्पतिरग्निः Sk.
२०. यच्छ S. अवपूर्वः सृजतिर्दाने Sk.
२१. ०पन P.
परलोकविषयं विज्ञानं त्वत्प्रसादात् Sy.
२२. निवेदित्यस्व M.

**स्वाहा॑ य॒ज्ञं कृ॑णोत॒नेन्द्रा॑य॒ यज्व॑नो गृ॒हे । तत्र॑ दे॒वाँ उप॑ ह्वये ॥१२॥**

**स्वाहा यज्ञम्।** स्वाहा[1]। कृणुत। हविः[2]। इन्द्राय। यजमानस्य[3]। गृहे। तत्राहम्। देवान्। उपह्वये इन्द्रपुरोगमानिति[4]।

I.14.

**ऐभि॑रग्ने॒ दुवो॒ गिरो॒ विश्वे॑भिः॒ सोम॑पीतये । दे॒वेभि॑र्याहि॒ यक्षि॑ च ॥१॥**

**ऐभिरग्ने[5]।** आयाहि। एभिः। सर्वैः। देवैः। अस्माकं परिचर्याम्[6]। स्तुतीश्च। सोमपानाय[7]। यज। च तान् देवान्[8]।

**आ त्वा॒ कण्वा॑ अहूषत गृ॒णन्ति॑ विप्र ते॒ धियः॑ । दे॒वेभि॑रग्न॒ आ ग॑हि ॥२॥**

**आ त्वा कण्वाः।** आहूतवन्तः[9]। त्वाम्। कण्वाः[10]। उच्चारयन्ति च[11]। मेधाविन्[12]। तव। कर्माणि[13]। देवैः। अग्ने!। आगच्छ।

**इ॒न्द्र॒वा॒यू बृह॒स्पतिं॑ मि॒त्राग्निं पू॒षणं॒ भग॑म् । आ॒दि॒त्यान्मारु॑तं ग॒णम् ॥३॥**

**इन्द्रवायू[14]।** एतान्[15] देवान् अग्ने[16] आवह। अपिवा कण्वा एतानप्याहूषतेति[17]। मित्रेति मित्रावरुणयोर्ग्रहणम्। अपिवा मित्रस्यैवेति।

---

१. स्वाहाकारसम्बन्धादुत्तमप्रयाजदेवताः स्वाहाकृतय उच्यन्ते। याश्च यत्र यक्ष्यन्ते तास्तत्रोक्तप्रयाजस्य देवताः। स्वाहाशब्दो होमप्रदाने वर्तते। सुहुतशब्दपर्यायो वा Skt. २. स्वाहाशब्दो हविष्प्रदानवाची सन् एतन्नामकमग्निविशेषं लक्षयति। तदग्निसंपादितं यज्ञम् Sy. यज्ञमिति सप्तम्यर्थे द्वितीया। यक्ष्यमाणाभ्यो देवताभ्यो हविःप्रदानं सुहुतं वा हविरुत्तमप्रयाजाख्ये यज्ञे Skt.

३. यज्ञगृहे Skt.

४. Ms. D. puts the figure ॥१३॥ here to indicate the end of thirteenth hymn. No such number is given in P. and M.

५. एभि० M. ६. परिचास्मां P.

७. सोमपानोपेतयागार्थम् Sy.

८. Mādhava ignores अग्ने।

९. आह्वयन्ति Sk.

१०. कण्व इति मेधाविनाम। मेधाविन ऋत्विजः। अथवा कण्वा इति मेधातिथिरात्मानं प्रति सम्बन्धेनाह। एतस्मिन्नेव चात्मनीदं बहुवचनं पुत्रपौत्रापेक्षया वा मत्प्रभृतयः कण्वपुत्रा इत्यर्थः Skt.

११. Omitted by M.

१२. मेधाविनः M. १३. प्रज्ञा वा Skr.

१४. इन्द्रवायू। आचि रूपम्। मित्रा इति आचत्वात् वरुणश्च गृह्यते। मित्रावरुणौ इत्यर्थः। अनया ऋचा उक्तान् देवान् सोमपानार्थमाह्वयामि स्तौमि वा Skr.

१५. द्वितीयानिर्देशादत्र सोमपानार्थमाह्वयामि स्तौमि चेति वाक्यशेषः। इन्द्रवायू सोमपानार्थयाह्वयामि स्तौमि वा... अथवा तृतीयार्थेऽत्र द्वितीया...देवेभिरग्न आगहि इन्द्रवाय्वाद्यैरिति Skt.

१६. इन्द्र D. इन्द्रादिदेवान् वायूनां सम्बन्धिनं गणञ्च हे अग्ने यक्षि इति पदद्वयमनुवर्तते Sy.

१७. ०प्याभूषतेति P. हूषतेति is missing in M.

**प्र वो॑ भ्रियन्त॒ इन्द॑वो मत्स॒रा मा॑दयि॒ष्णवः॑ । द्र॒प्सा मध्व॑श्चमू॒षदः॑ ॥४॥**

**प्र** १ **वः** । हविर्धानाद् २ युष्मभ्यम् । प्रभ्रियन्ते ३ इन्द्रादिभ्यः । इन्दव इन्दुरिन्धतेर्दीप्तिकर्मण- ४ इत्युक्तम् ५ । मत्सराः ६ सोमा भवन्ति मन्दतेस्तृप्तिकर्मणस्तेषां विशेषणं मादयिष्णव इति । द्रप्साः ७ । मधुनः ८ । चमससादिन ९ इत्यौपमिकमिति ।

**ईळ॑ते॒ त्वाम॑व॒स्यवः॒ कण्वा॑सो वृ॒क्तब॑र्हिषः । ह॒विष्म॑न्तो अरं॒कृतः॑ ॥५॥**

**ईळते** । स्तुवन्ति । त्वामग्ने ! । पालनमिच्छन्तः १० । कण्वाः ११ । स्तीर्णबर्हिषः १२ । हविष्मन्तः । पर्याप्तकारिणः १३ ।

**घृ॒तपृ॑ष्ठा मनो॒युजो॒ ये त्वा॒ वह॑न्ति॒ वह्न॑यः । आ दे॒वान्त्सोम॑पीतये ॥६॥**

**घृतपृष्ठाः** १४ । अग्नेः पानायाश्वपृष्ठे १५ घृतमास्ते । मनसा १६ युज्यमानाः १७ । ये । त्वाम् । वहन्ति । अश्वास्तैः १८ । आवह । देवान् । सोमपानाय १९ ।

---

१. व M. २. हविर्धानाः S. हविर्धान M. हविद्धानाद् D.
३. युष्मभ्यं प्रभ्रियन्ते is missing in M. प्रेत्येष समित्येतस्य[1] स्थाने । संभ्रियन्ते उपकल्प्यन्त इत्यर्थः । अथवा प्रशब्दः स्वार्थ एव । भ्रियन्त इति हरतेर्भत्वं .... प्राप्यन्त इत्यर्थः । Skt.
४. Cf. N. 10. 41. इन्दुरिन्धेः । उनत्तेर्वा । सोमाः Sy.
५. उत्सारा: P. उथ्सारा: D.
६. Cf. सत्सरः सोमः । मन्दतेस्तृप्तिकर्मणः । N. 2. 5. तृप्तिकराः....... मदी[2] हर्षग्लेपनयोः । हर्षयितारः Skt.
७. रसोऽत्र[3] द्रप्सा उच्यते । रसरूपाः । .....रसवन्त इत्यर्थः । अथवा यन्नवं नातिकठिनं तद् द्रप्स उच्यते । नात्यच्छा बहला इत्यर्थः Skt.
८. मधुराः Sy. मधुस्वादा[4] मृष्टाः Skt.
९. चमसादिपात्रेष्ववस्थिताः Sy. चर्म चमूरुच्यते[5] तत्सादिनः Skt.
१०. अवन[6]मात्मनः, तर्पणं वा Sk.
११. मेधाविन ऋत्विजः कण्वपुत्रा वा Sk.
१२. तीर्ण० M. आस्तरणार्थं छिन्नदर्भाः Sy.
१३. अलंकर्तारः Sy.
१४. घृ क्षरणदीप्त्योः । घृतं दीप्तं पृष्ठं येषां ते घृतपृष्ठाः । बलवतो ह्यश्वस्य दीप्तिमत् पृष्ठं भवति Skt.
१५. ०याश्च० M. पुष्टाङ्गत्वेन दीप्तपृष्ठाः Sy. १६. नसा P. मनःसंकल्पमात्रेण रथे युज्यमानाः Sy. मनसा ध्यातमात्रा ये स्वयमेव युज्यन्ते ते मनोयुजः Skt. १७. यज्य० P. M. adds त्वां after युज्यमानाः ।
१८. आश्वा० P. वोढारः Sy. वह्निरित्यश्वनाम Skt.
१९. सोमपानहेतुयागार्थम् Sy.

---

1. प्रः समि । स्वार्थे चेत् प्रह्रियन्ते आहवनीयं प्रति प्राप्यन्ते Skr.
2. मदि तृप्तौ हर्षग्लपनयोश्च । तृप्तिकरा हर्षयितारः Skr.
3. द्रब्सा रसरूपा रसवन्तो वा । यद् द्रवं नातिकठिनं तादृशा वा Skr.
4. स्वादाः Skr.
5. अधिषवणचर्मणि सादिनः Skr.
6. सोमेनात्मपालनतर्पणकामाः । अग्नेर्वा Skr.

**तान्यजत्राँ ऋतावृधोऽग्ने पत्नीवतस्कृधि । मध्वः सुजिह्व पायय ॥७॥**

**तान्यजत्रान्**[१]। तान्। यष्टव्यान्। यज्ञस्य[२] वर्धयितॄन्[३]। अग्ने! पत्नीवतश्च[४]। कुरु कृत्वा च। सोमम्[५]। सुज्वाल![६] पायय।

**ये यजत्रा य ईड्यास्ते ते पिबन्तु जिह्वया । मधोरग्ने वषट्कृति ॥८॥**

**ये यजत्राः**। ये। यष्टव्याः। ये[७] च। ईड्याः[७]। "मनुष्या वा ईडेन्याः[८] पितरो[९] नमस्या देवा यज्ञियाः" इति ब्राह्मणम्। ते। तव। जिह्वया[१०]। सोमस्य[११]। वषट्कृतं[१२] हुतम्। पिबन्तु[१३][१४]।

**आकीं सूर्यस्य रोचनाद्विश्वान्देवाँ उषर्बुधः । विप्रो होतेह वक्षति ॥९॥**

**आकीं**[१५] **सूर्यस्य**[१६]। दिवः[१७]। आवहत्वग्निः[१८]। सर्वान्। देवान्। प्रातःप्रबुद्धान्[१९]। मेधावी[२०]। अत्र[२१]।

**विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना । पिबा मित्रस्य धामभिः ॥१०॥**

**विश्वेभिः**[२२] **सोम्यम्**। अग्ने!। विश्वैर्देवैः सह। सोममयम्[२३]। मधु[२४]। पिब। इन्द्रवायुभ्याम्। मित्रस्य[२५] च। सर्वैस्तेजोभिः[२६]। देवानां बहूनि नामानि[२७] भवन्ति यैस्तत्र सन्निधानं कुर्वन्तीति वक्ष्यामः।

---

१. यजत्राँ S.
२. सत्यस्य यज्ञस्य वा वर्धकान् Sy. यज्ञस्योदकस्य सत्यस्य वा Sk.
३. ०तॄरग्ने D. P.
४. पत्नी० P. एषां पत्नीरपि आवह Skr.
५. स्वादं सोमम् Sk.
६. शोभनजिह्वोपेत! Sy. सुजिह्व! सुवाक्! शोभनजिह्वाख्यावयवो वा Sk.
७. येतिचेड्याः M. येचेस्याः P.
८. डेन्याः S. Reading doubtful. ईड्याः suggested Ed.
९. पितर P.
१०. वाङ्नाम वा जिह्वाशब्दः। हेतौ च तृतीया। तव वाचा हेतुना त्वयोच्यमाना इत्यर्थः Sk.
११. सोमस्यैकदेशं स्वांशलक्षणं मधु वा सोमं वा Sk.
१२. वर्षकृतं P. वषट्कारकाले वषट्कारयुक्ते यागे वा Sy.
१३. अग्निमुखा हि देवाः। तेऽग्नेरेव जिह्वया पिबन्ति न स्वया Sk.
१४. Mādhava ignores अग्ने।
१५. आकी M. P. आकीमिति निपात आङर्थे वक्षतीत्येतेनाख्यातेन सम्बन्धयितव्यः Sk.
१६. सूर्या M. सूर्य D.
१७. आदित्यमण्डलाद् वा Sk.
१८. अव० M. आवहत्त्वग्निः P. आवह अग्निः D.
१९. उषःकाले यागगमनार्थं ये बुध्यन्ते त उषर्बुधस्तान् Sk.
२०. विप्रो मेधावी होता वा Sk.
२१. Mādhava ignores होता।
२२. विश्वेभि M. २३. सोमसम्बन्धि Sy.
२४. मधुरं भागम् Sy. रसोऽत्र द्रवत्वसामान्यान्मृष्टत्वसामान्याच्च मधूच्यते Sk.
२५. इन्द्रवायुमित्रैः Sk.
२६. धामशब्दस्तेजोवचनो वा। अथवा धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति Skt.
२७. धामानि S. M.

त्वं होता मनुर्हितोऽग्ने यज्ञेषु सीदसि । सेमं नो अध्वरं यज ॥११॥

**त्वं होता।** त्वम्। होता। मनुष्यैर्निहितः[1]। अग्ने!। यज्ञेषु[2]। सीदसि। स त्वम्। अस्माकम्। इमम्। यज्ञम्। यज।

युक्ष्वा ह्यरुषो रथे हरितो देव रोहितः । ताभिर्देवाँ इहा वह ॥१२॥

**युक्ष्वा हि।** योजय[3]। आरोचमानाः[4]। रोहितवर्णाः[5]। अश्वाः[6]। स्वरथे योजयित्वा च। ताभिः। इह। देवान्। आवह। आग्नेयं सूक्तमन्ये निपातभाज इतीति[7] वैश्वदेवं[8] भवति[9]।

I.15.

इन्द्र सोमं पिब ऋतुना त्वा विशन्त्विन्दवः । मत्सरासस्तदोकसः ॥१॥

**इन्द्र सोमम्।** ऋतव्यं सूक्तम्[10]। इन्द्र! त्वम्। ऋतुना[11] सह[12]। पिब। सोमम्। आख्यातानुदात्तत्वे कारणमुक्तम्[13]। आविशन्तु[14]। त्वाम्। दीप्ताः[15]। सोमाः[16]। तदेकनिलयास्त-स्मिन्नेवेन्द्रे[17][18] तिष्ठन्तः।

---

१. होत्रादिरूपेण मनुष्येण सम्पादितः Sy. मनुना प्रजापतिना निहितः। मनुष्येषु वा निहितः। मनुष्येभ्यो वा निहितः Skt.
२. येषु P. ३. योयज P.
४. रोचमानाः S. गतिमतीः Sy. अरुषीः। हरितः। रोहितः are in the acc., being an object of युक्ष्वा but V. M. paraphrases them by the Nom.
रुश दीप्तौ रुच च। तयोरेकतरस्य आङ्पूर्वस्य अरुषीः अग्नेर्वडवा रोहिन्नाम्न्यः। बलदीप्ता गन्त्रीर्वा। अरुषति रमयतीति। स्वरथे योजय हरितवर्णाः Skr.
५. रोहिच्छब्दाभिधेयास्त्वदीया वडवाः Sy.
६. Cf. Ng. 1. 15. हरित आदित्यस्य। हर्तुं रथारूढान् पुरुषान् नेतुं समर्थाः Sy.
७. इति S. ८. Cf. BD. 3. 33. आग्नेयं सूक्तमेभिर्यद् वैश्वदेवमिहोच्यते। तद्विश्वलिङ्गं गायत्रं वैश्वदेवेषु शस्यते॥
९. Ms. D. puts the figure ॥१४॥ here to indicate the end of the fourteenth hymn. No such number is given in P. and M.
१०. Cf. BD. 3. 34. इन्द्र सोमं पिबेतीदं यद् द्वादशकमार्तवम्। तस्मिन् सहर्तुना सप्त प्रत्यृचं स्तौति देवताः॥
ऋतुदेवता.... वक्ष्यमाणा ऋतुसहिता देवताः देवता न केवलाः। तत्राद्या तावदैन्द्री Skt.
११. यना M. १२. सहसे M.
१३. See P. 10. L. 3-6.
१४. अवि० P. त्वदुदरं प्रविशन्त्वित्यर्थः Skt.
१५. मत्सरासस्तृप्तिकराः Sy., Skt.
१६. माः P. १७. तदोकसस्तन्निवासाः सर्वदा त्वदुदरस्थायिन इत्यर्थः Sy., Skt.
१८. ०न्द्र! S.

**मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन । यूयं हि ष्ठा सुदानवः ॥२॥**

**मरुतः पिबत**[1]। मरुतः!। पिबत। ऋतुना सह। पोतुः[2] प्रदीयमानं सोमम्[3]। यज्ञञ्च। शोधयत[4]। यूयम्। हि। भवथ। सुदानाः[5]।

**अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना । त्वं हि रत्नधा असि ॥३॥**

**अभि**[6] **यज्ञम्**। कुर्वित्यनुज्ञाभिगरणम्[7] अनुमन्यस्व[8]। अस्माकम्। यज्ञम्[9]। देवपत्नीवन्[10]!। नेष्टः[11]!। पिब च सोमम्। ऋतुना। त्वम्। असि। रत्नानां दाता। त्वष्टा नेष्टोक्त[12] इति[13]।

**अग्ने देवाँ इहा वह सादया योनिषु त्रिषु । परि भूष पिब ऋतुना ॥४॥**

**अग्ने देवान्**[14]। अग्ने! देवान्[15]। इह। आवह। सादय च। सवनाख्येषु त्रिषु। स्थानेषु। अलङ्कुरु[16] च यज्ञम्। पिब च सोमम्। ऋतुना।

---

१. मरुतः पिबत omitted by P. and M.

२. चोतुः M. वोतुः P.
पोतृनामकस्य ऋत्विजः पात्रात् Sy.
स्वभूतात् पात्रात् Skt.

३. Omitted by S.

४. पुनीतन.....व्यपगतदोषं कुरुते-त्यर्थः Skt.

५. शोभनदातारो मरुतः Sy.
सुदानुशब्दो दानवचनो दातृवचनो वा।.....शोभनदानाः शोभना वा दातारः।. . . . सोमस्य पातारो यज्ञस्य पवितार इति वाक्यशेषः। यस्माद् यूयं सोमस्य पातारो यज्ञस्य पवितारः स्थ हे सुदानवः! तस्मात् पिबत सोमं यज्ञं च पुनीतनेति Skt.

६. तृतीया ऋक् त्वष्टृदेवता Skt.

७. ०भिगिरणम् S.

८. अभितो देवानां समीपे स्तुहि Sy.
अहो शोभन इत्येवमभिष्टुहि Sk.

९. अथवा ङाँ अम्। यज्ञे अस्माकं होतृ-कर्तृत्वेन अभिष्टुहि इति स्तुवतोऽस्मान् यज्ञे प्रयुङ्क्ष्व Skr.

१०. देव! पत्नीवन्! S.
ग्नाशब्दः स्त्रीवाची.....ग्ना अस्य सन्तीति ग्नावान्....पत्नीयुक्तः Sy.
ग्ना इति स्त्रीनाम। पत्नीभिः स्त्री-भिस्तद्वन् Sk.

११. नेष्टं D. १२. ष्टोत P.
नेष्टृशब्दोऽत्र त्वष्टारं देवमाह। कस्मिं-श्चिद् देवसत्रे नेष्टृत्वेन त्वष्टुर्वृत्त-त्वात् Sy.
देवसत्रे किल त्वष्टा नेष्टासीत् Sk.

१३. Mādhava ignores हि

१४. देवां S.

१५. दातॄन् दीप्तान् वा Skr.

१६. परिपूर्वो भवतिः परिग्रहे। यथा यागार्थं परिग्रहीतव्यं तथा परिगृहाण यजेत्यर्थः। अथवा.....परिभूष स्वमण्डलदेवान् Skt.

**ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु । तवेद्धि सख्यमस्तृतम् ॥५॥**

**ब्राह्मणादिन्द्र।** ब्राह्मणाच्छंसिनः[1]। सोमम्[2]। इन्द्र[3]!। पिब[4]। सह। ऋतुभिः[5]। तव। हि। सख्यम्। ऋतुभिर्न[6] विच्छिद्यते[7]।

**युवं दक्षं धृतव्रत मित्रावरुण दूळभम् । ऋतुना यज्ञमाशाथे ॥६॥**

**युवं दक्षम्।** युवाम्[8]। प्रवृद्धम्[9]। धृतकर्माणौ[10]। मित्रावरुणौ!। शत्रुभिर्हिंसितुमशक्यम्[11]। यज्ञम्। ऋतुना सह। आनशाथे[12]।

**द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते ॥७॥**

**द्रविणोदाः**[13]। द्रविणोदाः[14]। द्रविणसो[15] धनस्य दाता भवति तम्[16]। ग्रावहस्तासः[17]। यज्ञषु। देवम्। स्तुवन्ति। यज्ञेष्वध्वर[18] इति[19]अर्धर्चभेदात्[20] सङ्गतिः। यास्काचार्यस्त्वाह[21]—

---

१. ब्रह्मशब्देनात्र ब्रह्मवर्गे द्वितीयो ब्राह्मणाच्छंसी कथ्यते ..... ब्राह्मणाच्छंसिसंबद्धात् Sy. २. स्तो म् P.
३. इन्द M. ४. धनभूतात्पात्रात् Sy. राधसो धनात् पात्राख्यात् पिब Skt.
५. ऋतुदेवाननुसृत्य Sy. ऋतूनां पश्चाद् ऋतुभिः पीत इत्यर्थः Skt. ६. यस्मात् तव सख्यमस्तृतमहिंसितम् । न कश्चिद् हिंसितुं शक्नोति। स्थिरसख्योऽसि Sk.
७. Mādhava ignores राधसः and इत्।  ८. षष्ठ्यर्थे प्रथमा।युवयोः Sk.
९. दक्षं बलम् Sk. १०. स्वीकृतकर्माणौ Sy. व्रतमिति कर्मनाम। धृतानि सर्वकर्माणि स्वकर्माणि वा याभ्यां तौ धृतव्रतौ सर्वकर्मणां हेतुभूतौ स्वकर्मणां वा नित्यमनुप्रदातारौ Sk.
११. शशत्रुभिर्हिंसितु॰ P. शत्रुर्हिंसितम्यशक्यं M. दूळभं दुर्दहं शत्रुभिर्दग्धुं विनाशयितुमशक्यम् Sy. दूळभम्। दभ्नोतेर्वधकर्मण एतद्रूपम्। दुर्हणम्। युवयोर्बलं न कश्चिदपि जेतुं शक्नोति Sk. १२. आशाथे व्याप्नुथः. ....अशू व्याप्तौ Sy. व्याप्नुतः Sk.
१३. द्रविणोदाः कस्मात्। धनं द्रविणमुच्यते। यदेनमभिद्रवन्ति। बलं वा द्रविणम्। यदेनेनाभिद्रवन्ति। तस्य दाता द्रविणोदाः ... द्रविणोदा यस्त्वम्। द्रविणस इति द्रविणसादिन इति वा। द्रविणसानिन इति वा। द्रविणसस्तस्मात्पिबत्विति वा। यज्ञेषु देवमीळते। याचन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा। तत्को द्रविणोदाः? इन्द्र इति क्रौष्टुकिः। स बलधनयोर्दातृतमः। तस्य च सर्वा बलकृतिः। N.8.2.
१४. Omitted by D. M. धनप्रदं... ...यद्वा धनप्रदोऽग्निः सोमं पिबत्विति शेषः Sy. द्वितीयार्थे प्रथमा। द्रविणोदसम् Sk. १५. धनार्थिनः Sy.
१६. Omitted by P. D.
१७. अभिषवसाधनपाषाणधारिणः Sy. गृहीताभिषवग्रावाण ऋत्विजः Sk.
१८. अध्वरेऽग्निष्टोमे प्रकृतिरूपे यज्ञेषु विकृतिरूपेषूक्थ्यादिषु च Sy. अध्वरशब्दोऽत्र ध्वरतेर्हिंसाकर्मणः क्रियाशब्दो न यज्ञनाम। व्यत्ययेन चैकवचनम्। साद्गुण्याद् रक्षआदिभिरहिंसितेषु यज्ञेषु। अथवा अध्वरशब्दः समस्तज्योतिष्टोमादिवचनः। यज्ञशब्दस्तदवयवभूताभ्यासविशेषवचनः। ज्योतिष्टोमादावध्वरे येऽभ्यासविशेषाख्या यज्ञाः Sk.
१९. S. adds अनयोः between इति and अर्धर्च॰ २०. ॰भेदास्त P.
२१. यास्कस्त्वाह S. M.

"द्रविणोदा यस्त्वम्। द्रविणसादिन इति वा द्रविणसस्तस्मात् पिबत्विति वा। यज्ञेषु देवमीळते याचन्ति स्तुवन्ति वर्धयन्ति[1] पूजयन्ति वेति[2]।"

**द्रविणोदा ददातु नो वसूनि यानि शृण्विरे। देवेषु ता वनामहे ॥८॥**

**द्रविणोदाः।** द्रविणोदाः। ददातु। अस्मभ्यम्। वसूनि धनानि[3] गवादीनि। यानि। विश्रुतानि[4]। तानि[5] वयम्। देवेषु स्थितानि द्रविणोदसम्। याचामहे[6]। स तत आदाय नो ददातु।

**द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत। नेष्टादृतुभिरिष्यत ॥९॥**

**द्रविणोदाः[7]।** द्रविणोदाः[8]। सोमं पातुमिच्छति ततः। जुहोताध्वर्यवः[9]!। हविर्धानात् प्रतिष्ठत च[10]। नेष्टुः[10] स्वभूताच्चमसात्। ऋतुभिः सह। यष्टुमिच्छत[11]।

**यत्त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे। अध स्मा नो ददिर्भव ॥१०॥**

**यत्त्वा[12] तुरीयम्[12]।** यदा[13]। त्वाम्। चतुर्थम्[14]। अप्यृतुभिः[15] सह। द्रविणोदः[16]!। यजामहे। अथ[17] त्वम्[18]। अस्माकम्। भव। दाता। स्मेति[19] स्फुटीकरणार्थः[20]।

---

१. Omitted by P.

२. द्रविणस इति, द्रविणसानिन इति वा and इति of the Nirukta are missing in V. M.'s quotation. See note no. 13, on p. 63.

३. Omitted by M. and S.

४. हविरुपयुक्तत्वेन श्रूयन्ते Sy. लडर्थेऽयं लिट् कर्मणि च। श्रूयन्ते। उत्कृष्टत्वात् प्रभूतत्वाच्च सर्वलोकप्रकाशानि भवन्तीत्यर्थः Sk.

५. तानि हवीरूपाणि कृत्वा Sk.

६. तानि च सर्वाणि धनानि देवेषु निमित्तभूतेषु वनामहे संभजामः। धनैर्देवान्यष्टुं तानि स्वीकुर्म इत्यर्थः Sy. वनतिरत्र सामर्थ्याद् दानार्थः...दद्म इत्यर्थः। अथवा वनिर्हि संभक्त्यर्थ एव...देवार्थं संभजामहे देवान् यष्टुं परिगृह्णीम इत्यर्थः Sk.

७. Omitted by P. and D.

८. ०दा D. ९. ०र्यवो M.

१०. च नेष्टवः P. वचनेषु M. नेष्टृसंबन्धिपात्रात् Sy. नेष्टुः स्वभूतात् पात्रात् Sk.

११. ०तः S. होमस्थाने गच्छत। गत्वा च जुहोत होमं कुरुत। हुत्वा प्रतिष्ठत च। होमस्थानात्स्थानान्तरं प्रति प्रस्थानमपि कुरुत Sy. इष्यत। इषु गतौ। गच्छत मा विलम्बध्वमित्यर्थः Sk.

१२. यत्वा D. M. यन्त्वा P.

१३. यस्मात्कारणात् Sy. १४. क्रियाविशेषणं तुरीयमिति। पूर्वास्तिस्रोऽपि द्रविणोदसः। तुरीयया च द्रविणोदस्त्वां यजामहे Skr.

१५. ऋच्यृतुभिः P. अव्युभिः M.

१६. द्रविणोदोः M. १७. अध S. अध छान्दसो धकारः... अधेत्ययं निपातस्तच्छब्दार्थः Sy. तस्मादर्थे अध इति Skr.

१८. तु M. १९. स्म अवश्यम् Sy.

२०. ०करार्थः P. ०कारार्थः D.

**अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा ॥११॥**

अश्विना पिबतम् । अश्विनौ । पिबतम् । सोमम्[1] । अरण्योर्दीप्तस्याग्नेर्जनयितारौ[2] । शुचिकर्माणौ । ऋतुना सह । यज्ञस्य वोढारौ[3] ।

**गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि । देवान्देवयते यज ॥१२॥**

गार्हपत्येन[4] । कथमहं गृहपतिः स्यामिति[5] । सन्त्य[6] ! सनोतेर्दानकर्मणः, सतां वा हित[7] ! । ऋतुना सह । यज्ञस्य नेता[8] । असि । स देवान्[9] । यज[10] । यजमानाय[11] ।[12]

## I.16.

**आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसः ॥१॥**

आ त्वा वहन्तु । आवहन्तु[13] । त्वाम्[14] । अश्वाः ! । वर्षितारम्[15] । सोमपानाय । इन्द्र ! । त्वा[16] । सवीर्यदर्शना[17] दूरेऽपि[18] पश्यन्तः[19] । त्वाशब्दावृत्तिरर्धर्चभेदात् ।

---

१. मधु माधुर्योपेतं सोमम् Sy.
२. अरण्यो दिप्त० P. अर्यन्नो दीप्त० M. अरण्यो दीप्त० S. दीद्यग्नी द्योतमानाहवनीयाद्यग्नियुक्तौ Sy. अत्यर्थदीप्ताग्निसंबन्धिनौ.....दीप्तस्य अग्नेर्जनयितारौ Skr.
३. यज्ञस्य निर्वाहकौ Sy. प्रापयितारौ समर्पयितारावित्यर्थः Skt. हे यज्ञस्य अन्तं प्रापयितारौ Skr. ४. ०त्येनं S.
५. गार्हपत्येन गृहपतिसंबन्धिना रूपेण युक्तः सन् Sy. गृहपतित्वेन हेतुना Skr.
६. सन्त्यः P. D. M.
It is a vocative both in the Saṃhitā and also in the padapāṭha. हे सन्त्य फलप्रदाग्निदेव Sy.
७. हितः P. D. M.
८. यज्ञनेकासि P. यज्ञस्य देवान् प्रति प्रापयितासि Skr. ९. सदेवान् S.
१०. Omitted by P. D. M.
११. देवविषयकामनायुक्ताय यजमानाय Sy. देवयते देवान् कामयमानस्य ममार्थाय Sk.
१२. Ms. D. puts the figure ॥१५॥ here to indicate the end of the fifteenth hymn. No such number is given in P. and M.
१३. आ त्वा वहन्तु M.
१४. P. repeats आवहन्तु त्वामश्वा आवहन्तु त्वामश्वाः
१५. कामानां वर्षितारम् Sy.
१६. षष्ठ्यर्थे द्वितीया । तव Skt.
१७. सुवीर० S. सुवीर्यदर्शनाद् M. सूर्यसमानप्रकाशयुक्ता ऋत्विजस्त्वां मन्त्रैः प्रकाशयन्त्विति शेषः Sy. सूर आदित्यः । चक्षो दर्शनम् । सूरस्येव चक्षो येषां ते सूरचक्षसः । बलवत्त्वादादित्यवद् दीप्तिमन्त इत्यर्थः । सूर्यदर्शिनो वा Skt. १८. वि P.
१९. पश्यतः D. M. पश्यत P.

इमा धाना घृतस्नुवो हरी इहोपं वक्षतः । इन्द्रं सुखतमे रथे ॥२॥

इमा धानाः । इन्द्राश्वयोर्भागधेयभूता इमाः । धानाः[१] । उपस्तरणाभिघारणाभ्यां[२] घृतस्राविण्यः[३] । तदर्थमश्वौ[४] । इन्द्रम्[५] । इह[५] । सुखतमे[६] । रथे स्थापयित्वा । उपवक्षतः[७] ।

इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतये ॥३॥

इन्द्रं प्रातः । इन्द्रम् । प्रातः[८] । वर्तमाने[९] च[१०] । यज्ञे । सोमपानार्थम् । हवामहे[११] । पुनरिन्द्रमिति[१२] पूरणम् ।

उत्तरा निगदसिद्धा[१३] ।

उप नः सुतमा गहि हरिभिरिन्द्र केशिभिः । सुते हि त्वा हवामहे ॥४॥
सेमं नः स्तोममा गह्युपेदं सवनं सुतम् । गौरो न तृषितः पिब ॥५॥

सेमं नः । स त्वम् । इमम्[१४] । अस्माकम् । स्तोमम्[१५] । आगच्छागत्य च । इमम् । सुतम् । सोमम्[१६] । तृषितः । गौरमृगः[१७] । इवोदकम्[१८] । उपपिब[१९] ।

---

१. धनाः D. धीयन्त इति धानाः. . .भ्रष्ट-यवतण्डुलान् Sy. यज्ञे हि हर्योः ऋजीषं भागो धानाश्च Sk. २. ०घरणा० P.
३. घृतस्नुवोऽलङ्करणोपस्तरणाभिघारणेन घृतस्राविणीः........घृतं स्नुवन्तीति घृतस्नुवः Sy. ष्णु प्रस्रवणे Skt.
४. तदर्थमंश्चौ M.
५. इन्द्रम् इह omitted by P. and D.
६. सुखतमे रथे Sy. सप्तमीनिर्देशात् स्थितमिति वाक्यशेषः । तृतीयार्थे वा सप्तमी । सुखतमेन रथेन Skt.
७. वेदिसमीपे वहताम् Sy.
८. प्रात M. प्रातःकर्मारम्भे प्रातःसवने Sy.
९. प्रयति प्रगच्छति प्रारभ्य वर्तमाने सति माध्यन्दिने सवने Sy. प्रयति प्रवृत्ते Sk.
१०. Omitted by S. ११. भवामहे M.
१२. तथा यज्ञसमाप्त्यवसरे तृतीयसवने सोमस्य पीतये सोमपानार्थं हवामहे Sy. पुनरिन्द्रशब्दश्रुतिसामर्थ्यात् समाप्यमान इति वाक्यशेषः । इन्द्रमेव समाप्यमाने यज्ञे Skt. समाप्यमाने च इति इन्द्र-शब्दत्रित्वात् । यज्ञादिमध्यान्तेषु इन्द्रं हवामहे सोमपानार्थम् Skr.
१३. ०सिद्धाः M. P. हे इन्द्र ! केशिभिः केसरयुक्तैर्हरिभिरश्वैस्त्वं नोऽस्मदीयं सुत-मभिषुतं सोमं प्रत्युप समीप आ गहि आग-च्छ । सुतेऽभिषुते सोमे निमित्तभूते सति यस्मात्कारणात् त्वा हवामहे त्वामाह्व-यामः । तस्मादागच्छेति पूर्वत्रान्वयः Sy. नः अस्माकं स्वभूतं सुतं सोमम् उपागहि उपागच्छ हरिभिः । हे इन्द्र ! केशिभिः केशवद्भिः प्रलम्बकेसरैः । कस्मात् ? सुते हि यस्माद् अभिषुते सोमे त्वां वयं हवामहे यन्तारमाह्वयामः Skt. १४. इन्द्रम् M.
१५. P. reads काममापूरयत कर्मस्त-वामत्वा सुकर्मणः before स्तोमम् ।
१६. सुतमभिषुतसोमयुक्तमिदमिदानीमनुष्ठी-यमानं सवनं प्रातःसवनादिरूपं कर्म Sy. सवनमिति यज्ञनाम । इमं च यज्ञम् । अथवेदं सवनमिति सप्तम्यर्थे प्रथमा । अस्मिन् यज्ञे Skt.
१७. गौरमृग इव Sy. यथा गौरः खरः Skt.
१८. उदकं omitted by M.
१९. उप देवयजनसमीपे Sy.

**इमे सोमास इन्दवः सुतासो अधि बर्हिषि । ताँ इन्द्र सहसे पिब ॥६॥**

इमे सोमासः। इमे। सोमाः।[1] दीप्ताः।[2] सुताः।[3] बर्हिषि।[4] अध्यासते। तान्।[5] इन्द्र! बलाय। पिब।

**अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शंतमः। अथा सोमं सुतं पिब ॥७॥**

अयं ते। अयम्।[6] तव।[7] स्तोमः। मुख्यः।[8] हृदिस्पृक्।[9] अस्तु। सुखतमः। अथ। सोमम्। सुतम्।[10] पिब।

**विश्वमित्सवनं सुतमिन्द्रो मदाय गच्छति । वृत्रहा सोमपीतये ॥८॥**

विश्वमित्। विश्वम्।[11] एव।[12] सुतम्। सोमम्।[13] इन्द्रः। मदार्थम्।[14] गच्छति। शत्रुहा। सोमपानार्थम्—पानेन मदो भवति।

**सेमं नः काममा पृण गोभिरश्वैः शतक्रतो । स्तवाम त्वा स्वाध्यः ॥९॥**

सेमं नः। स त्वम्। गवादिभिः। इमम्। अस्माकम्। कामम्। आपूरय। शतकर्मन्![15]। स्तवाम। त्वा।[16] सुकर्माणः।[17]

---

१. सोम M.

२. इन्दुशब्द उन्दी क्लेदन इति धातोरुत्पन्नः। इन्दवः क्लेदनयुक्ताः Sy.

३. सह P.

४. बर्हीषि S. वेद्याम्...तत्तत्पात्रगता......बर्हिषि यज्ञे Sy.

५. त्वाम् M. ताम् P. D.

६. Omitted by M. अस्माभिः क्रियमाणः Sy.

७. वः M. ८. श्रेष्ठः सन्

९. ते तव हृदिस्पृग् मनस्यङ्गीकृतः।...हृदि स्पृशतीति हृदिस्पृक् Sy. त्वद्धृदयस्य स्प्रष्टा। लोके हि यद्रोचते तद्धृदयं स्पृशति इति न्यायः। तव रोचताम्। त्वच्चित्तेनावधार्यतामिति वा Skr.

१०. Omitted by P.

११. विश्वम्। अम् ङौ। सर्वस्मिन् यज्ञे Skr.

१२. अपि Sy.

१३. प्रातःसवनादिरूपं कर्म Sy. सुतं सोमं प्रतीन्द्रो गच्छति।

१४. तत्पानजन्यहर्षाय Sy. मदाय मदार्थमभिषुतं प्रति गच्छतीति वा Skr.

१५. शान्तकर्मन् M. शतकर्मा D. तकर्म P. बहुकर्मन्! बहुप्रज्ञ! Skt.

१६. सुखकर्माणः S. सुकर्मणः P. सुष्ठु सर्वतो ध्यानयुक्ताः सन्तः Sy. स्वाध्यः, आध्यानम् आधीः प्रार्थना, शोभनप्रार्थनाः Skt.

१७. Ms. D. puts the figure ॥१६॥ here to indicate the end of the sixteenth hymn. No such number is given in P. and M.

I.17.

**इन्द्रावरुणयोरहं सम्राजोरव आ वृणे । ता नो मृळात ईदृशे ॥१॥**

**इन्द्रावरुणयोः ।** इन्द्रावरुणयोः । अहम् । सर्वेषामीश्वरयोः[1] । पालनम् । आवृणे[2] । तौ । मृळयेताम् । अस्मान् । ईदृशे[3] स्तोत्र ईदृशेनावसेति[4] ।

**गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः । धर्तारा चर्षणीनाम् ॥२॥**

**गन्तारा हि ।** गन्तारौ । हि । भवथः[5] । रक्षणार्थम् । आह्वानम । मेधाविनः । मत्सदृशस्य । धारकौ[6] । मनुष्याणाम् । तौ मयि चागच्छतम्[7] ।

**अनुकामं तर्पयेथामिन्द्रावरुण राय आ । ता वां नेदिष्ठमीमहे ॥३॥**

**अनुकामम् ।** कामानन्तरमस्मान्[8] । धनेन । आतर्पयेथाम्[9] । इन्द्रावरुणौ ! । तौ[10] । वाम्[10] वयम् । युवयोरन्तिकतमं धनम्[11] । याचामहे ।

**युवाकु हि शचीनां युवाकु सुमतीनाम् । भूयाम वाजदाव्नाम् ॥४॥**

**युवाकु हि ।** युष्मत्कामः[12] । हि पुरुषः । प्रज्ञानां[13] भाजनं[14] भवति । युवाकुः ।

---

१. समीचीनराज्योपेतयोः सम्यग्दीप्यमानयोर्वा Sy. सम्यग्दीप्तयोः Sk.

२. प्रार्थये Sk. ३. ईदृशे प्रार्थनाविशेषाद् वर्तमानान् Skr. ४. S. adds यद्वा before ईदृशेन॰ एवंविधेऽस्मदीयवरणे निमित्तभूते सति Sy. ५. भवौ M.

६. धर्तारौ योगक्षेमसंपादनेन धारयितारौ Sy. धारयितारौ Sk. तैस्तैरुपकरणैः Skr. ७. वाग॰ M.

८. अस्मदीयाभिलाषमनु......वयं यदा यदा धनं कामयामहे तदा तदा प्रयच्छतमित्यर्थः।...कामस्य पश्चादनुकामम्। अथवा कामे कामेऽनुकामम् Sy. अन्विति पश्चादर्थे। सोमस्य च पश्चादनुकामं कामयित्वा तत्पानानन्तरमित्यर्थः। अथवानुशब्दो वीप्सायां कर्मप्रवचनीयः। कामं काममनु अनुकामं, यदा यदा वयं कामयामहे तदा तदेत्यर्थः Skt.

९. तर्पयेथाम् S. P. ॰येथा M. सर्वतोऽस्माँस्तृप्तान् कुरुतम् Sy.

१०. तौ वाम् missing in M.

११. धनेन तस्यैकदेशेन वा। ङस् टार्थः। युष्मद्धनतर्पणप्रार्थनावन्तो वयम् Skr.

१२. युवाकु वसतीवर्येकधनात्मकैरुदकैः पयःसक्त्वादिद्रव्यान्तरैश्च मिश्रितम्।....यु मिश्रणे Sy. युवां कामयत इति युवाकु, युष्मत्पानकाममित्यर्थः। अथवा 'यु मिश्रणे' मिश्रितं वसतीवर्येकधनाभिरद्भिः श्रयणैर्वा...सोमलक्षणं हविः... युवाकु युष्मत्कामं युष्मद्गुणमिश्रं वा युष्मत्सर्वगुणसङ्कीर्तनरूपमित्यर्थः।... स्तुतिलक्षणं वचनम्...अथवा द्वावपि युवाकुशब्दौ सोमविषयावेव। मिश्रणार्थ एकः, युष्मत्पानकाममित्येवमर्थोऽपरः। अथवा......युवाक्विति बहुवचनस्य स्थान एकवचनम्...युष्मत्कामाः Skt.

१३. प्रज्ञानं P. यज्ञानां S. लज्ञानां M. अस्मदीयकर्मणां संबन्धि सोमरूपं हविः ...कर्मनामसु शची शमीति पठितम् Sy. शचीति कर्मनाम....यागकर्मवतामस्माकम्।...तृतीयार्थे षष्ठी।...... कर्मभिः Sk. १४. भाजनं भाजन P.

सुमतीनां[1] च। वयं च युवाकवो[2] युवयोरन्नस्य दातॄणां[3] कर्मणां भाजनम्। भवाम भूयास्म वेति।

**इन्द्रः॑ सहस्र॒दाव्नां॒ वरु॑णः॒ शंस्या॑नाम्। क्रतु॑र्भवत्यु॒क्थ्यः॑ ॥५॥**

इन्द्रः सहस्रदाव्नाम्। इन्द्रः। सहस्रस्य दातॄणामपि[4] कर्मणाम्। कर्ता। भवति। वरुणश्च। प्रशंसनीयानाम्[5]। प्रशस्यः। अपि वा स्तोतॄन् सहस्रदाव्नः प्रशस्यांश्च[6] करोति।

**त॒योरिदव॑सा व॒यं स॒नेम॒ नि च॑ धीमहि। स्यादु॒त प्र॒रेच॑नम् ॥६॥**

तयोरित्। इन्द्रावरुणयोः। एव। रक्षणेन[7]। वयं धनम्। भजेमहि। निधीमहि[8]। च। उपयुक्तादतिरिक्तं निहितादतिरिक्तम्[9]। अपि[10]। अस्तु।

**इन्द्रा॑वरुण वाम॒हं हु॒वे चि॒त्राय॒ राध॑से। अ॒स्मान्त्सु जि॒ग्युष॑स्कृतम् ॥७॥**

इन्द्रावरुणा। इन्द्रावरुणौ !। वाम्[11]। अहम्। हुवे। चित्राय[12]। धनाय। तावस्मान्[13]। शत्रून्[14] जितवतः। सुष्ठु। कुरुतम्।

**इन्द्रा॑वरु॒ण नू नु वां॒ सिषा॑सन्तीषु धी॒ष्वा। अ॒स्मभ्यं॒ शर्म॑ यच्छतम् ॥८॥**

इन्द्रावरुण[15] नू। इन्द्रावरुणौ !। क्षिप्रम्। वाम्। सम्भक्तुमिच्छत्सु[16]। ध्यातृषु स्तोतृषु[17]। अस्मभ्यम्। सुखम्[18]। प्रयच्छतम्। एको[19] नुः पूरणः[20]।

---

१. शोभनबुद्धियुक्तानामृत्विजां स्तोत्ररूपं वचनमपि युवाकु नानाविधैः स्तुत्यगुणैर्मिश्रितम् Sy. मतिः स्तुतिः, मन्यतेरर्चतिकर्मत्वात्, सुस्तुतीनामस्माकं . . . . शोभनाभिश्च स्तुतिभिः Sk.
२. युवाकवयोः M. Omitted by S.
३. युवयोः प्रसादाद् वयं वाजदाव्नामन्नप्रदानां पुरुषाणां मध्ये मुख्या भवेम Sy.
४. सहस्रदातृणामपि D. सहस्रसंख्याकधनप्रदानां मध्ये ऋतुर्धनदानस्य कर्ता भवति प्रभूतं ददातीत्यर्थः Sy. सहस्रसंख्याकदानानाम् Sk.
५. स्तुत्यानां मध्ये उक्थ्यः स्तुत्यो भवति। अतिशयेन स्तुत्य इत्यर्थः Sy. स्तुत्यानामत्यन्तोत्कृष्टानाम् Sk.
६. ०स्याश्च P. स्तोतृभ्यः प्रभूतानि धनानि ददातीत्यर्थः Skt.
७. तर्पणेन पालनेन वा हेतुना ताभ्यां तर्प्यमाणाः पाल्यमाना वेत्यर्थः Skt.
८. प्राप्ते धने यावदपेक्षितं तावद् भुक्त्वा ततोऽवशिष्टं धनं क्वचिन्निधिरूपेण स्थापयामः Sy. उपभोगातिरिक्तं च निखाय स्थापयेमेत्यर्थः। . . . . . प्रकर्षेण यदतिरिच्यते तत् प्ररेचनम्। उपभोगान्निधानाच्चातिरिक्तमपि स्यादित्यर्थः Sk.
९. हिता० M. भुक्तान्निहिताच्च प्रकर्षेणाधिकं धनं स्यात् Sy.
१०. क्वचि P.
११. Omitted by D.
१२. मणिमुक्तादिरूपेण विविधाय राधसे धनाय Sy. पूजनीयस्य धनस्यार्थाय। पूजनीयं रायः मह्यं दत्तम् Skr.
१३. तवास्मान् P.
१४. अस्मच्छत्रूनपि अस्माभिर्ज्ञापयतम् Skr.
१५. इन्द्रावरुणा S. इन्द्रावरुणौ M.
१६. सनितुं संभक्तुं सम्यक् सेवितुमिच्छन्तीषु Sy.
१७. अस्मदीयबुद्धिषु Sy. कर्मसु Sk.
१८. गृहं सुखं वा Sk.
१९. नु M. P. क्षिप्रनामसु नु मक्षिवति पठितम् (Ngh. 2.15.)। तस्य द्विरावृत्तिबलादतिशयो लभ्यते Sy.
२०. Mādhava ignores आ। आ समन्तात् Sy.

प्र वा॑मश्नोतु सुष्टु॒तिरिन्द्रा॑वरुण॒ यां हु॒वे । याम्ऋ॒धाथे॒ स॒धस्तु॑तिम् ॥६॥

प्र वामश्नोतु। प्राश्नोतु[1]। वाम्[2]। सुष्टुतिः[3]। इन्द्रावरुणौ!। यां स्तुतिं प्रति[4] वामहम्। हुवे। यां च युवाम्। वर्धयथः[5]। सहहूताम्[6] ।[7]

I.18.

सो॒मानं॒ स्वर॑णं कृणु॒हि ब्र॑ह्मणस्पते । क॒क्षीव॑न्तं॒ य औ॑शि॒जः ॥१॥

सोमानं स्वरणम्। सोतारम्[8]। प्रकाशनवन्तम्[9]। कुरु माम्। ब्रह्मणस्पते!। कक्षीवन्तं[10]। यस्तथा कृतवानसि। यः कक्षीवानुशिक्प्रसूतः[11]। स्वरतिः शब्दकर्मेति[12]।

यो रे॒वान्यो अ॑मीव॒हा व॑सु॒वित्पु॑ष्टि॒वर्ध॑नः । स नः॑ सिषक्तु॒ यस्तु॒रः ॥२॥

यो रेवान्। यः। धनवान्। यश्च। रक्षसां[13] हन्ता। धनं लम्भयति[14]। पुष्टेर्वर्धयिता। सः। भजताम्[15]। अस्मान्[16]। यः। सर्वदा त्वरते[17] कर्मस्विति।

---

१. प्राप्नोतु S.

२. त्वाम् M.  ३. सुष्ठु M.

४. तृतीयार्थे वा द्वितीया। यां प्रति यया वा युवामाह्वयामि। यां च ऋधाथे वर्धयथः। यो हि निजस्तुतेः फलं साधयति स तां पुनः पुनः कारयति Skt.

५. ०यतः D. युवां वर्धाथे Sy.

६. सहभूताम् D. M. शोभनस्तुतिं...किं च सधस्तुतिं युवयोरुभयोः साहित्येन क्रियमाणायाः स्तवक्रियायाः Sy. सधस्तुतिं सहहूतयोर्युवयोः स्तुतिम्। अथवा सधस्तुतिमिति तृतीयार्थे द्वितीया। यया सहस्तुत्या वर्धेथे इत्यर्थः। स्तूयमाना हि देवता वीर्येण वर्धन्ते Skt.

७. Ms. D. puts the figure ॥१७॥ here to indicate the end of the seventeenth hymn. No such number is given in P. and M.

८. सोमानम् S. अभिषवस्य कर्तारं Sy. षुञ् अभिषवे। अभिषोतारम् Sk.

९. प्रकाशवन्तम् S. प्रकाशनवन्तम् Sy. स्वृ शब्दोपतापयोः। शब्दयितारम् अर्चयितारं च...यष्टारं स्तोतारं चेत्यर्थः।...अथवा सर्वत्र यः शब्द्यते स स्वरणः प्रकाश इत्यर्थः। अभिषोतारं मां स्वरणं देवमनुष्येषु प्रकाशं कुरु Skt.

१०. इवशब्दोऽत्राध्याहर्तव्यः Sy. लुप्तोपममेतद् द्रष्टव्यं, कक्षीवन्तमिव ऋषिम् Sk.  ११. ०प्रसूत M.

१२. Cf. सोमानां सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः।...औशिज उशिजः पुत्रः। N. 6. 10.

१३. रोगाणाम् Sy. हिंसितॄणाम् Sk.

१४. लभयति P. D. धनलब्धा Sy. अपूर्वाणामपि धनानां लब्धा। अथवा विन्दतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः। धनानां लम्भयिता स्तोतृभ्यो दातेत्यर्थः Sk.

१५. सेवतां परिगृह्यानुगृह्णात्वित्यर्थः Sy. सिषक्तु .....इति सेवमानस्य...स नः सेवतां यस्तुरः। N. 3. 21.

१६. अथवा यो रेवानित्यादिभिः पुत्रं प्रति निर्दिश्यते। ब्रह्मणस्पतिप्रसादाद् धनवत्त्वादिगुणः पुत्रोऽस्मान् सचताम् अस्माकं जायतामित्यर्थः Skt.

१७. तत्वरते M. शीघ्रफलदः Sy.

**मा नः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥३॥**

**मा नः शंसः ।** मा[1] । अस्मान् । अदातुः[2] । मर्त्यस्य कदर्यस्य[3] । शंसो न दातुं युष्मभ्यमिच्छामीति वादः[4] । हिंसकः[5] । प्राप्नोतु[6] धनाभावात् । तथाऽस्मान्[7] । त्वं रक्ष[8][9] ।

**स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः । सोमो हिनोति मर्त्यम् ॥४॥**

**स घा[10] वीरः** । यम्[11] । एते युद्धे[12] । प्रेरयन्ति । सः । खलु । न । विनश्यति[13] । वीरः[14] ।

**त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम् । दक्षिणा पात्वंहसः ॥५॥**

**त्वं तम्[15]** । त्वम्[16] । तम् । ब्रह्मणस्पते ! । सोमः । इन्द्रः । च । मर्त्यम्[17] । यज्ञस्य पत्नी दक्षिणा[18] च । रक्षतु । दारिद्र्यादाहन्तुर्वा रक्षसः[19] ।

**सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥६॥**

**सदसस्पतिम्[20]** । सदसस्पतिम्[21] । महान्तम्[22] । सखायम्[23] । इन्द्रस्य । कमनीयम्[24] । धनम् । प्रज्ञां च । अयाचिषम्[25] ।

---

१. माशब्दः प्रणगित्येतेन सम्बन्धयितव्यः Sk. २. आदातुं D. अदातु P.
३. मन्तस्य M. अररुषः—देवेभ्यो हविषामदातुरयष्टुः.....यो हि न यजते स यष्टॄन् विनश्यन्त्वित्येवमाशंसति । सोऽस्य शंसः Sk.
४. शंसः शंसनम् अधिक्षेप इत्यर्थः । तादृशो वाग्विशेषः...शत्रुणा प्रयुक्तोऽधिक्षेपः Sy.
५. धूर्तिर्हिंसकः.... धुर्वी हिंसार्थः Sy. धुर्वतेर्वधकर्मणः धूर्तिर्हिंसा हिंसिता वा Skt. ६. प्रणक्, पृची संपर्के ... मा संपृणक्तु ... प्राप्नोतु Sy. प्रणक्—प्रपूर्वस्य नशेर्व्याप्तिकर्मण एतद्रूपम् । मा प्रणशत्, मा प्रापदित्यर्थः । अथवा नवग्रहैकपदत्वात् पृचेः सम्पर्कार्थस्येदं रूपं न प्रपूर्वस्य नशेः Skt.
७. अस्मान् omitted by P. and D.
८. रक्षः M. ९. Mādhava ignores ब्रह्मणः and पते।
१०. सखा M. घ इति पदपूरणः । एवार्थे वा Sk.
११. इन्द्रो ब्रह्मणस्पतिः सोमश्च Ed.
१२. हि गतौ वृद्धौ च. . .प्राप्नोति वर्धयति वा Sy. हि गतौ वृद्धौ च । गच्छति वर्धयति वा मर्त्यं मनुष्यम् Skt.
१३. हिंस्यते Skr. १४. Mādhava ignores मर्त्यम् । १५. तं त्वम् M.
१६. तं त्वं M. यः स्तौति यजते च Skr.
१७. मन्त्यं P. १८. दक्षिणाख्या देवता च ... दक्ष वृद्धौ Sy. १९. अंहसः पापात्पाहीति शेषः Sy. अंहसः पापात् Sk.
२०. Omitted by M.
२१. सदः प्रसिद्धं यज्ञगृहं तस्याधिपतिः सदसस्पतिः । कोऽसौ ? अग्निः । कुत एतत् ? अग्नेः सर्वयज्ञाधिपतित्वात् Skt.
२२. आश्चर्यकरम् Sy. अद्भुतम्-महन्नामैतत् । महान्तम् Skt. २३. सहायम् M. सोमपानार्थिन इन्द्रस्य तत्सम्पादनात् प्रियम् Skt. २४. सोमपाने सहचारित्वात् काम्यं कमनीयम् Sy. प्रार्थयितव्यं च सर्वस्तोत्राणाम् Skr.
२५. अयाचिम्मं M. या प्रापणे... प्राप्तवानस्मि Sy. ईमहे यामीति याच्ञाकर्मसु पाठाद् यातिर्याच्ञाकर्मा—याचे Skt.

**यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन । स धीनां योगमिन्वति ॥७॥**

यस्मादृते । यम्[१] । विना । न । सिध्यति । यज्ञः । विदुषः[२] । अपि । सः । कर्मणाम्[३] । योगम् । व्याप्नोति[४] ।

**आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् । होत्रा देवेषु गच्छति ॥८॥**

आदृध्नोति[५] । गमनानन्तरमेव[६] । समर्धयति[७] । हविष्करणम्[८] । प्राञ्चम्[९] । कृणोति । यज्ञम्[१०] । वाचा च[११] । देवेषु । गच्छति[१२] ।

**नराशंसं सुधृष्टममपश्यं सप्रथस्तमम् । दिवो न सद्ममखसम् ॥९॥**

नराशंसम्[१३] । नरैः शंसनीयम् । अतिशयेन धृष्टम् । पश्यामि । सर्वतः पृथुतमम्[१४] । द्युलोकस्य[१४] सम्बन्धिनम्[१५] । इव सूर्यम् । महनीयसदन[१६]मिति[१७] ।

---

१. यस्मात् सदसस्पतिना अग्निना विना Skr.

२. मेधाविनोऽपि यजमानस्य Skr.

३. मनोऽनुष्ठानविषयाणामस्मद्बुद्धीनामनुष्ठेयकर्मणां वा Sy.

४. प्राप्नोति P. D.
यजमानमनुगृह्य तदीयं यज्ञं निष्पादयतीत्यर्थः Sy.
इन्वति व्याप्तिकर्मायं प्राप्नोति..... करोतीत्यर्थः Skt.
व्याप्नोति । इ व्याप्तौ । सर्वयागकर्माणि करोतीत्यर्थः Skr.

५. आदिति निपातोऽथशब्दपर्याय आनन्तर्ये । कर्मभिः संयुज्यानन्तरम् Skt.

६. हविर्दानानन्तरमेव फलं प्रयच्छतीत्यर्थः Sy.

७. हवींषि सारतो वृद्धानि करोति Skt.

८. हविःसंपादनयुक्तं यजमानम् Sy.

९. प्राञ्जं D. प्राञ्चं प्रकर्षेण गच्छन्तमविघ्नेन परिसमाप्तियुक्तम् Sy.
प्रकर्षगामिनं देवान् प्रति Sk.

१०. यज्ञां M.

११. होत्रा हूयमाना देवता तुष्टा सती यजमानं प्रख्यापयितुं देवेषु गच्छति । यद्वा होत्रा अस्मदीयस्तुतिरूपा वाक् देवान् परितोषयितुं देवेषु गच्छति । .....वाङ्नामसु होत्रा गीरिति पठितम् Sy. होत्रेति वाङ्नाम । तृतीयार्थे चात्र प्रथमा । होत्रया च स्तुतिलक्षणया च वाचा Skt.

१२. देवांश्च स्तौतीत्यर्थः Skt.

१३. नारा० D. एतन्नामकं देवविशेषं, यद् वा अवयवार्थव्युत्पत्त्या सदसस्पतिदेवतापरोऽयं शब्दः Sy.

१४. पृथुमतन्यु० M. पृथुतमन्युञ्चाकस्य P. पृथुमन्यु० D. अतिशयेन प्रख्यातं.... प्रथ प्रख्याने Sy.

१५. संबन्धिनिव M.

१६. सद्ममखसं प्राप्ततेजस्कम्...सीदतीति सद्म...सद्म महो यस्येति बहुव्रीहौ हकारस्य व्यत्ययेन खकारः Sy.
सद्म सदनमादित्यमण्डलं, तन्मखो महद् यस्य स सद्ममखाः आदित्यः । मखशब्दो हि....अपठितमपि महन्नाम । सकारस्तु तस्यैव छान्दस उपजनः । पर्यायान्तरं वा सकारान्तम् । तं सद्ममखसमादित्यमिवेत्यर्थः Skt.

१७. Ms. D. puts the figure ॥१८॥ here to indicate the end of the eighteenth hymn. No such number is given in P. and M.

## I.19.

**प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे । मरुद्भिरग्न आ गहि ॥१॥**

**प्रति त्यम्**[1] । प्रति । चारुम्[2] । अध्वरम् । सोमपानाय[3] । आहूयसे[4] । सोऽग्ने ! । मरुद्भिः सह । आगच्छ[5] ।[6]

**नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आ गहि ॥२॥**

**नहि देवः** । नहि । देवः । मर्त्यो[7] वा । महतः[8] । तव । कर्म[9] । तरति ।[10]

**ये महो रजसो विदुर्विश्वे देवासो अद्रुहः । मरुद्भिरग्न आ गहि ॥३॥**

**ये महः**[11] । ये मरुतः । महान्तम्[12] । लोकमन्तरिक्षम्[13] । जानन्ति[14] । व्याप्ताः[15] । देवाः[16] । द्रोहरहिताः[17] ।[18]

**य उग्रा अर्कमानृचुरनाधृष्टास ओजसा । मरुद्भिरग्न आ गहि ॥४॥**

**य उग्राः** । ये । उद्गूर्णाः[19] । अर्चनीयमिन्द्रम्[20] । अस्तुवन्[21] । बलेन । अन्यैरनभिभूताः[22] ।[23]

---

१. प्रतीत्यं D. त्यच्छब्दस्तच्छब्दपर्यायः Skt. त्यत् तदर्थे । योऽयमस्माभिः प्रकल्पितस्तं यज्ञं प्रति Skr.

२. अङ्गवैकल्यरहितस्त्यम् Sy.

३. सोमोऽत्र गौरुच्यते । सोमपानाय Sk.

४. व्यासे P. प्रहूयसे प्रकर्षेणाहूयसे Sk.

५. गच्छ P.

६. Mādhava ignores त्यम् । त्यच्छब्दः सर्वनाम तच्छब्दपर्यायः Sy. Cf. तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे । सोऽग्नेः मरुद्भिः सहागच्छेति N. 10. 36.

७. न मर्त्यो यस्तव P.

८. महो महत् तव सकाशात् । टार्थेऽम् । कर्मणा प्रज्ञया वोत्कृष्टः । त्वत्तः श्रेष्ठो देवमनुष्येष्वपि न कश्चित् Sk.

९. कर्मविशेषमुल्लङ्घ्य परो नह्युत्कृष्टो . . . न भवति . . . ये मनुष्यास्त्वदीयं क्रतुमनुतिष्ठन्ति ये च देवास्त्वदीये क्रताविज्यन्ते त एवोत्कृष्टा इत्यर्थः Sy.

१०. Mādhava ignores मरुद्भिः । अग्ने । आ । गहि ।

११. यमहः D. १२. महास्तं P.

१३. महो रजसो महत उदकस्य वर्षणप्रकारम् Sy. रजःशब्दो लोकवचनः, उदकवचनो वा । महो रजस इति चोभयत्र द्वितीयार्थे षष्ठी । ये महद् रजसो लोकमन्तरिक्षाख्यम्, उदकं वा मेघं विदुर्जानन्ति Skt. १४. S. adds च before जानन्ति । जाति M.

१५. सर्वे सप्तविधगणोपेताः Sy.

१६. द्योतमानाः Sy. दीप्ता दातारो वा Sk.

१७. द्रोहरहिता वर्षणेन सर्वभूतोपकारित्वात् । Sy. अद्रोग्धव्या अद्रोग्धारो वा स्तोतॄणां यष्टॄणां च Sk.

१८. Mādhava ignores मरुद्भिः । अग्ने । आ । गहि ।

१९. उग्रोद्गूर्णाः D. तीव्राः Sy. अन्येनाप्रसह्याः क्रूराः Sk.

२०. ०मिन्द्र P. अर्कमुदकम् Sy.

२१. स्तुवन् P. अर्चितवन्तो वर्षणेन संपादितवन्तः Sy. अर्चतेः स्तुतिकर्मण एतद्रूपम् Skt.

२२. अतिरस्कृताः सर्वेभ्योऽपि प्रबलाः Sy.

२३. Mādhava ignores मरुद्भिः । अग्ने । आ । गहि ।

ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः । मरुद्भिरग्न आ गहि ॥५॥

ये शुभ्राः । येऽलङ्करणैः शोभमानाः । घोररूपाः[1] । सुबलाः[2] । रिशातामसितारः[3] ।[4]

ये नाकस्याधि रोचने दिवि देवास आसते । मरुद्भिरग्न आ गहि ॥६॥

ये नाकस्य[5] । ये[6] । आदित्यस्य । रोचने । दिवि[7] । देवाः[8] । वसन्ति[9] ।

य ईङ्खयन्ति पर्वतान् तिरः समुद्रमर्णवम् । मरुद्भिरग्न आ गहि ॥७॥

य ईङ्खयन्ति[10] । ये[11] । चालयन्ति । पर्वतान्[12] । तिरस्कुर्वन्ति च[13] । उदकवन्तम्[14] । समुद्रम्[15] ।[16]

आ ये तन्वन्ति रश्मिभिस्तिरः समुद्रमोजसा । मरुद्भिरग्न आ गहि ॥८॥

आ ये । ये । रश्मिसदृशैः[17] प्रत्यक्षमारुतैरुदकम् । बलेन । समुद्रम्[18] । तिरः[19] । आतन्वन्ति[20] ।[21]

---

१. उग्ररूपधराः Sy. वर्प इति रूपनाम। ....शोभनाः क्रीडाकाले। घोररूपाः सङ्ग्रामकाले Sk.

२. सुक्षत्रासः शोभनधनोपेताः..... धननामसु क्षत्रं भग इति पठितम् (Ngh. 2. 10.) Sy. सुक्षत्रासः सुधन्वानः सुबला वा Sk.

३. हिंसकानां भक्षकाः Sy. रिशादसः क्षेप्तारो हिंसितॄणां प्रतिहिंसितार इत्यर्थः Skt.

४. Mādhava ignores मरुद्भिः। अग्ने। आ। गहि।

५. दुःखरहितस्य सूर्यस्योपरि दिवि.....कं सुखं तद् यस्मिन्नास्त्यसौ अक इति बहुव्रीहिं कृत्वा पश्चान्नञ्। न अको नाक इति नञ्तत्पुरुषः Sy.
नाक इत्यादित्यनाम Skt. ये आदित्यस्योपरि Skr.

६. Omitted by M.

७. दिव एकदेशे स्थाने सप्तमे वायुस्कन्धे Skr.

८. स्वयमपि दीप्यमानाः Sy.

९. Mādhava ignores अधि। मरुद्भिः। अग्ने। आ। गहि। १०. ये S.

११. ईखयन्ति P. D. ईङ्खतिर्गतिकर्मा गमयन्ति क्षिपन्तीत्यर्थः Skt.

१२. मेघान् Sy. अथवा पर्वतशब्दो मेघनाम।.....गमयन्ति मेघान् वर्षाय पृथिवीं वर्षयन्तीत्यर्थः Skt.

१३. तिरः सत इति प्राप्तस्य नामनी। प्राप्ताः सन्तः Skt. तिरः सत इति प्राप्तनामनी। ये महाबलत्वात् समुद्रे पर्वतक्षेपणसमर्थाः Skr.

१४. उदकन्तं P. D. उदकं तं M.

१५. पार्थिवं समुद्रं प्रति....पार्थिवेन च समुद्रेण पृथिव्येव लक्ष्यते Sk.

१६. Mādhava ignores मरुद्भिः। अग्ने। आ। गहि।

१७. रश्मिभिस्सदृशैः P. सूर्यकिरणैः Sy. स्वतेजोभिः Sk.

१८. समुद्रशब्दो ह्यन्तरिक्षनामापि Skt. अन्तरिक्षं पार्थिवं वा Skr.

१९. तिरस्कुर्वन्ति....निश्चलस्य जलस्य तरङ्गाद्युत्पत्तये चालनं तिरस्कारः। Sy.

२०. आप्नुवन्ति Sy. आतन्वन्ति व्याप्नुवन्ति Sk.

२१. Mādhava ignores मरुद्भिः। अग्ने। आ। गहि।

अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ॥६॥

अभि त्वा[1]। अभिसृजामि[2]। त्वा[3]। पूर्वपानाय[4]। सोममयम्। मधु[5]। सोऽग्ने। मरुद्भिः सह[6]। आगच्छेति[7]।[8]

ऋक्संहितायाः[9] प्रथममध्यायं व्याकरोदिति[10]।
कुशिकानां कुले जातो माधवः सुन्दरीसुतः॥

I.20.

"अयं देवाय जन्मने"[11] माधवो व्याचिकीर्षति[12]।
तत्रामन्त्रितशब्दानामादौ वृत्तिः प्रदर्श्यते[13] ॥१॥

आमन्त्रिताद्युदात्तत्वमुच्चैरामन्त्रणे[14] भवेत् ।
नीचैरामन्त्रणे कार्ये पदं सर्वं निहन्यते ॥२॥

अर्थस्वभावाद् वाक्यस्य मध्यस्थं तन्निहन्यते[15]।
"ऋतेन[16] मित्रावरुणौ"[17] "कवी नो[18] मित्रावरुणा"[19] ॥३॥

---

१. अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय। सोम्यं मधु सोममयम्। सोऽग्ने मरुद्भिः सहागच्छेति। N. 10. 37.

२. सर्वतः सम्पादयामि Sy. शुद्धोऽप्यत्र सृजतिः सोपसर्गार्थे द्रष्टव्यः। उत्सृजामि। अनादिकालप्रवृत्तं यत्पानं तदर्थं तुभ्यं ददामीत्यर्थः Skt. त्वां प्रति पूर्वकालप्रवृत्ताय सोमपानाय उत्सृजामि ददामि। अनादिकालप्रवृत्तं यत्पानं तदर्थम् Skr.

३. त्वां D.

४. पूर्वकाले प्रवृत्ताय पानाय Sy.

५. सोमसम्बन्धिनं मधुररसम् Sy. द्रवत्वसामान्यान्मृष्टत्वसामान्याच्च सोमरसोऽत्र मधूच्यते Skt.

६. सहाग्ने M.

७. आगच्छति D. गच्छेति M.

८. Ms. D. puts the figure ॥१६॥ here to indicate the end of the nineteenth hymn. No such number is given in P. and M.

६. तायां D.

१०. ०रोति यः M.

११. RV. I. 20. 1.[a]

१२. व्याचिख्यासति माधवः R.

१३. प्रदृश्यते P. D. M.

१४. ०ताप्युदा० P.

१५. तत् omitted by P.

१६. न P. १७. RV. I. 2. 8.[a]

१८. ना M. Omitted by P.

१६. RV. I. 2. 9.[a]

अर्थस्वभावादुच्चैस्त्वं क्वचिन्मध्येऽपि दृश्यते ।
तथैव नीचैस्त्वमपि तत्रोदाहरणे[1] शृणु ॥४॥

"अह्वयच्छुनमन्धाय[2][3] सा वृकीः[4]" इति वक्ष्यति ।
"नरेति[5]" तत्राद्युदात्तमेवं[6] हि परिदेवनम् ॥५॥

"इन्द्राग्नी द्यावापृथिवी[7]" यजुष्यस्मिन्निहन्यते ।
बहुष्वामन्त्रितेष्वन्तरोषधीरिति[8] यत् पदम् ॥६॥

"अग्ने पावक[9] रोचिषा[10]" "घृताहवन[11] दीदिवः[12][13]" ।
"ग्नावो[14] नेष्टः पिब ऋतुना[15]" "सखायः[16] स्तोमवाहसः[17]" ॥७॥

"विश्वे देवासो मनुषो[18]" "विश्वे यजत्राः[19]" "त आदित्याः[20]" ।
सर्वत्रार्थस्वभावोऽयमूह्यः प्राज्ञैरिति स्थितिः ॥८॥

---

१. ०हरणं R. २. आह्वयत् D. M.
३. ०मन्धारय M.
४. चुकी० P. RV. I. 117. 18.[a-b] V. M. has changed the order of words of the Vedic quotation and has omitted the word भरम् without giving any indication of the omission. The Vedic passage is the following.
शुनमन्धाय भरमह्वयत्सा वृकीः etc.
५. Fragment of RV. I. 117. 18.[b] "अश्विना वृषणा नरेति" परिदेवनासूक्तम् । आमन्त्रितमुच्चैर्लौकिका वदन्ति तत्कृतो निपात इत्युक्तम् ॥ V. M. on RV. I. 117. 18.
हे अश्विनौ....हे वृषणौ....इत्येवं सम्बोध्य नरा नेतारावश्विना अह्वयत्Sy.
६. तत्रानुदात्तम् M. तत्राद्युत्तम् P.
७. TS. I. 2. 1. 2.
८. ०ष्वन्तः ओ० D. ०ष्वन्त ओ० P. M.
९. पावरो० P. १०. R.V. V 26. 1[a]
११. घृता० M. १२. दिदिवः P. दीदिव M.
१३. RV. I. 12. 5[a] १४. नावो D. श्वानो M. १५. पिबर्तुना R.
I have given the quotation ast it is in the RV. As the rules of euphonic combination are not applied, the third pāda comes to acquire an extra syllable, according to the reading, adopted by me.
१६. RV. I. 15. 3[b]
१७. ०वाहसं P. RV. I. 5. 1[c]
१८. देवा सोममरुतो P. मरुतो D. M. RV. X. 63. 6[b]
१९. यजत्रः P. RV. X. 63. 11[a]
२०. RV. X. 63. 7[c]
There is one extra syllable in b.

नामन्त्रितं कारकवद्[1] वाक्यार्थेनान्वितं[2] भवेत्[3] ।
"युवं वरो सुषाम्णो"[4] "पेशो[5] मर्या अपेशसे"[6][7] ॥९॥
ये इमे तत्रोदाहरणे स्पष्टे सर्वं च तादृशम् ।
अविद्यमानवत्त्वे च एष[8] हेतुरिति स्थितिः ॥१०॥ ॥ इति[9] ॥

**अयं देवाय जन्मने स्तोमो विप्रेभिरासया । अकारि रत्नधातमः ॥१॥**

अयं देवाय । मेधातिथिः[10] । अयम् । स्तोमः । मनुष्यत्वमपहाय देवभूताय ऋभूणां गणाय[11] । मेधाविभिरस्माभिः[12] । आस्येन[13] । अतिशयेन रत्नप्रदाता[14] । क्रियते[15] ।

---

१. कारणकवद् P.
२. वाक्येर्थे नाबिकं M.
३. Cf. Pa. 2. 1. 2. VPr. 2. 18.
४. युवं वरो सुषाम्ने M. RV. VIII. 26. 2[a]. Rāja reads "युवं नरा स्तुवते"। RV. I. 116. 7; 117. 7[a]. The third pāda is short by one syllable.
५. वेशो P. ६. अवेशसे P.
७. RV. I. 6. 3[b].
८. एतु M.
९. इति is omitted by R. Accent is not marked in all the Vedic quotations in these verses by R. and S.
१०. मेथातिथिः D.
११. ऋभवो हि मनुष्याः सन्तस्तपसा देवत्वं प्राप्ताः।. . . . . तत्संघो जायमानवाचिना जन्मशब्देनैकवचनान्तेनात्र निर्दिश्यते। जन्मने जायमानाय ऋभुसंघरूपाय देवाय Sy.
आर्भवं प्रथमं सूक्तम्। ऋभुर्विभ्वा च वाजश्च त्रयः पुत्राः सुधन्वनः। ते रथकारा बभूवुः। अतिशयवद्भिः कर्मभिर्देवत्वमीयुः। देवेभ्यो जातेभ्यो ये ऋभवो मनुष्याः सन्तः कर्मकौशलाद् देवा जातास्तेभ्यः Skr.
Cf. BD.
सुधन्व आङ्गिरसस्यासन्
पुत्रास्त्रयः पुरा ।
ऋभुर्विभ्वा च वाजश्च
शिष्यास्त्वष्टुश्च तेऽभवन् ॥ 3. 83.
तेषां स्तुतिरिदं सूक्तं
त्वयमित्यष्टकं परम् । 3. 90.
Cf. KSA. अयमष्टावार्भवम् II.
१२. ऋत्विग्भिः Sy.
१३. आस्यैन P. ऋग्लक्षणया वाचा. . . . . आसा उपासना वा Skr.
१४. रक्तप्रदा P.
रत्नानि दधातीति रत्नधाः. . . . . . . . . अतिशयेन रमणीयमणिमुक्तादिधनप्रदः। स्तोत्रेण तुष्टा ऋभवो धनं प्रयच्छन्तीत्यर्थः Sy.
ये नो धनानि दास्यन्ति आसातुष्टाः Skr.
१५. ति यते P. निष्पादितः Sy.
स्तुतिपरिचर्ययोर्हेत्वोरकारि Skr.

य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी । शमीभिर्यज्ञमाशत ॥२॥

य इन्द्राय । ये[1] । इन्द्रार्थम्[2] । वचनमात्रेण रथे युज्यमानौ[3] । कृतवन्तौ । बुद्धिमहत्तया[4] अश्वौ ।
ते[5] शिल्पकर्मभिर्देवप्रीणनैः[6] । यज्ञियं[7] भागम् । प्राप्तवन्तः[8] ।[9]

तक्षन्नासत्याभ्यां परिज्मानं सुखं रथम् । तक्षन्धेनुं सबर्दुघाम् ॥३॥

तक्षन्नासत्याभ्याम्[10] । अकुर्वन् । अश्विभ्याम्[11] । परितो गन्तारम्[12] । शोभनाक्षद्वारम्[13] । रथम्[14] ।
तक्षन्[15] । धेनुं च । बृहस्पतयेऽमृतस्य[16] दोग्ध्रीम्[17] ।

युवाना पितरा पुनः सत्यमन्त्रा ऋजूयवः । ऋभवो विष्ट्यक्रत ॥४॥

युवाना[18] पितरा । वृद्धावात्मीयौ पितरौ[19] । पुनः । तरुणौ । अकुर्वन्[20] । मन्त्रैरुच्यमानं सर्वमेव
सत्यं येषां न भाक्तम्[21] । ऋभवः[22] । ऋजुकामाः[23] । विष्टयस्तक्षणकर्मा विष्टिः[24] ।

---

१. Omitted by D. २. इन्द्रायार्थं P.
३. ताडनादिकं विना वाङ्मात्रेण रथे युज्यमानौ सुशिक्षितौ Sy.
४. बुद्धिमत्तया M. मनसा.... ऋभूणां सत्यसंकल्पत्वात्तत्संकल्पमात्रेणेन्द्रस्याश्वौ संपन्नावित्यर्थः Sy. ५. के D.
६. शिल्पि० D. शमीभिः—शमयन्ति पापानीति शम्यः कर्माणि. . . . ग्रहचमसादिनिष्पादनरूपैः कर्मभिः . . . अपोऽप्न (Ngh. 2. 1.) इत्यादिषु षड्विंशतिसंख्याकेषु कर्मनामसु शमी शिमीति पठितम् Sy.
७. ०प्राणनै P.
८. प्रातवन्तं P. प्राप्तवन्तं D. व्याप्तवन्तः Sy. एकचमसेन चतुरश्चमसान् कृत्वा शमिनस्तैर्यज्ञमाप्नुवन् । यज्ञियत्वं प्राप्ता इत्यर्थः Skr.
९. Cf. BD. इन्द्राय च हरी देवप्रहितेनाग्निनाऽपि यत् 3. 86.
१०. तक्षना० D. ११. इश्विभ्याम् P. M. अश्विदेवप्रीत्यर्थं रथं तक्षन् ।...... तक्षतिरत्र संपादनवाची Sy.
१२. परिज्मानम्—अजेः परिपूर्वस्य...परितो गन्तारम् Sy. १३. शोभनार्त्यद्वारं P. उपर्युपवेशने सुखकरम् Sy. सुखम् Sk.
१४. Omitted by P. १५. तक्षं D.
१६. म्यतस्य M. Cf. BD. 3. 85 अमृतं सबरुच्यते। १७. दो P. सबरिति रेफान्तं प्रातिपदिकं क्षीरवाचीति संप्रदायविदः।.... सबर्दुघां सबः पयो दोग्धीति सबर्दुघा . . . क्षीरस्य दोग्ध्रीम् Sy. धेनुं सबर्दुघां चक्रुः . . . BD. 3. 85. बृहस्पतेरथाश्विभ्यां रथं दिव्यं त्रिबन्धुरम् BD. 3. 86.
१८. युवानाः D. १९. पितरा P.
२०. अकुर्व P. २१. भाक्त M. भक्ताम् P. I propose to read असत्यं for भाक्तम्
अवितथमन्त्रसामर्थ्योपेताः। पुरश्चरणाद्यनुष्ठानेन सिद्धमन्त्रत्वाद् यद्यत्फलमुद्दिश्य मन्त्राः प्रयुज्यन्ते तत्तत्फलं तथैव संपद्यते। तस्माज्जीर्णयोः पित्रोर्युवत्वं संपादयितुं समर्था इत्यर्थः।....अत एवैतेषामनुष्ठिता मन्त्राः सिध्यन्ति Sy.
२२. म्यभवः M. ऋभयः P.
२३. ऋजकामकामाः P. छलरहिता इत्यर्थः Sy. २४. विष P. विषः D. विष्टी विष्टयो व्याप्तियुक्ताः। सर्वेषु कार्येष्वेतदीयस्य मन्त्रसामर्थ्यस्याप्रतिघातोऽत्र व्याप्तिरुच्यते Sy. कर्म विष्ट्वी इति वकारलोपः छान्दसः। टार्थे सुः Skr.

**सं वो॒ मदा॑सो अग्म॒तेन्द्रे॑ण च म॒रुत्व॑ता । आ॒दि॒त्येभि॑श्च॒ राज॑भिः ॥५॥**

**सं वो मदासः** । संगताः । युष्माकम् । सोमास्[१]तृतीये[२] सवने । मरुत्वता[३] । इन्द्रेण[४] । आदित्यैः । राजभिः[५] ।[६]

**उ॒त त्यं च॑म॒सं नवं॒ त्वष्टु॑र्दे॒वस्य॒ निष्कृ॑तम् । अक॑र्त च॒तुरः॒ पुनः॑ ॥६॥**

**उत त्यम्** । अपि च । तम् । नवम्[७] । चमसम्[८] । त्वष्ट्रा[९] । देवेन । संस्कृतमेकं[१०] सन्तम् । पुनः । चतुरश्चमसान्[११] । कृतवन्तः[१२] ।[१३]

**ते नो॒ रत्ना॑नि धत्तन॒ त्रिरा साप्ता॑नि सुन्व॒ते । एक॑मेकं सुश॒स्तिभिः॑ ॥७॥**

**ते**[१४] **नो रत्नानि** । ते । अस्माकम् । रत्नानि । आधत्तन । त्रिः[१५] । आवृत्तानि ।

---

१. माद्यन्त्येभिरिति मदाः सोमाः . . . मदासो मदहेतवः सोमाः . . . ऋभूणामिन्द्रादित्यैः सह सोमपानं तृतीयसवनेऽस्ति Sy.
सोममत्ता यूयं संगच्छध्वमित्यर्थः Skr.

२. ०तृतीयं P.

३. रुत्वते M. मरुतोऽस्य सन्तीति मरुत्वान् . . . मरुद्भिर्युक्तेन Sy.
मरुत्सहितेन Skr.

४. अन्यैश्च M.

५. दीप्यमानैः Sy.

६. Mādhava ignores both चs. Cf. BD. तृतीयसवने तेषां तैस्तु भागः प्रकल्पितः 3. 89. अपिबत् सोममिन्द्रश्च तैस्तत्र सवने सह 3. 90.

७. अजीर्णम् Skr.

८. D. adds च after चमसम् । सोमधारणक्षमं काष्ठपात्रविशेषम् Sy.

९. त्वष्टा P. D.
तक्षणव्यापारकुशलस्य त्वष्टुः शिष्या ऋभवस्तेन निर्मितं . . . . . . . निःशेषेण संपादितम् Sy. एतन्नामकस्य देवस्य सम्बन्धी तक्षणव्यापारः Sy. त्वष्टुर्देवस्य Skr.

१०. निः समि । परिनिष्ठितं सन्तमित्यर्थः Skr.

११. चकृतः P. "एकं चमसं चतुरः कृणोतन ऋ० वे० १.१०१.२." इति देवसन्देशेन अग्नेर्वाचा कृतवन्तः स्थ । चतुरश्चमसान् पुनः Skr.

१२. कृतवन्ततः P. D. adds स्थः after कृतवन्तः । The passage beginning with तम् । नवम् । and ending with कृतवन्तः is omitted by M.

१३. Cf. BD. एकं चमसमित्युक्ते ज्येष्ठ आहेत्यथो दिवि । उक्त्वा ततक्षुश्चमसान् यथोक्तं तेन हर्षिताः ॥ 3. 87.

१४. The passage beginning with ते नो etc. and ending with ०विंशतिम् सुन्व is omitted by M.

१५. नतिः P. D.
Cf. उत्तमानि मध्यमान्यधमानि चेत्येवं रत्नानां त्रिरावृत्तिः Sy.

सप्तसंख्यान्येकविंशतिम्[1]। सुन्वते[2] यजमानाय[3]। एकमेकम्[4]। स्तुतिभिः[5]। "चतुर्दशौषधयः सप्त ग्राम्यास्तान्येकविंशतिः" इत्याहुः[4]।

**अधारयन्त वह्नयोऽभजन्त सुकृत्यया। भागं देवेषु यज्ञियम् ॥८॥**

अधारयन्त वह्नयो[6]। अधारयन्त[7]। मनुष्यत्वेन[8] वोढारः[9]। तथैकचमसचतुष्टयकरणादिकया[10] शोभनया क्रियया। देवेषु[11]। यज्ञियम्[12]। भागम्। अभजन्त[13]।

I.21.

**इहेन्द्राग्नी उप ह्वये तयोरित्स्तोममुश्मसि। ता सोमं सोमपातमा ॥१॥**

इहेन्द्राग्नी[14]। इह[15]। इन्द्राग्नी। उपह्वये। तयोः। एव[16]। स्तोमं च। कामयामहे। तौ हि[17]। सोमम्। अतिशयेन पातारौ[18]। विरम्याभिधानादेकवचनबहुवचनयोः[19] सङ्गतिः।

---

१. किंच साप्तानि सप्तसंख्यानिष्पन्नवर्गरूपाणि कर्माणि च धत्तन...अग्न्याधेयदर्शपूर्णमासादीनां सप्तानां हविर्यज्ञानामेको वर्गः। औपासनहोमो वैश्वदेवमित्यादीनां सप्तानां पाकयज्ञानां वर्गो द्वितीयः। अग्निष्टोमोऽत्यग्निष्टोम इत्यादीनां सप्तानां सोमसंस्थानां वर्गस्तृतीयः Sy. साप्तानि रत्नानि दत्त। मा सकृदेव।....
"छत्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा।
एतानि सप्तरत्नानि पूर्वेषां चक्रवर्तिनाम् ॥"
अथवा रत्नं धनम्। सुवर्णरजतमाणिक्यमौक्तिकादीनि त्रिरावृत्तानि। एकविंशतिसुवर्णादिधनप्रकारं दत्त इत्यर्थः Skr.

२. ०शति P. ३. ते M.

४. The passage beginning with यजमानाय etc. and ending with आहुः is omitted by P. and D.

५. येषामेकमेकं प्रशंसादिभिर्युक्तम्। निर्धारणषष्ठीमानयति एकमेकमिति। अत्यन्तोत्कृष्टमित्यर्थः Skr.

६. M. reads अधारयन्त मनुष्यत्वेपि न माता वोढारः P. and D. begin from यज्ञियं etc.

७. कालान्तरेऽप्यात्मनः स्थिरीकुर्वन्तः Skr.

८. चमसादिसाधननिष्पादनेन यज्ञस्य वोढारः...पूर्वं मनुष्यत्वेन मरणयोग्या अप्यमृतत्वलाभेन प्राणान् धारितवन्तः Sy.

९. सर्वकर्मणाम् Skr.

१०. ०काया M. यज्ञसाधनद्रव्यसम्पादनरूपेण शोभनव्यापारेण देवेषु मध्ये स्थिताः Sy. इदानीं लब्धवन्तः कालान्तरे च स्थिरीकृतवन्त एकचमसचतुष्करणादिकया क्रियया शोभनया Skr.

११. हविर्लक्षणम् Sy.

१२. देवानां मध्ये हविर्भागम्। वह्नयो हविर्वोढार ऋत्विजो वा। आ प्रदानाद् आधारयन्त। शोभनं संस्कृतं हविर्भागम् ऋभूणां देवानां यज्ञार्हम्। आमि सुप् Skr.

१३. Ms. D. puts the figure ॥२०॥ here to indicate the end of the twentieth hymn. No such number is given in P. and M.
Cf. BD. त्वष्टा च सविता चैव देवदेवः प्रजापतिः।
सर्वान् देवान् समामन्त्र्य अमृतत्वं ददुश्च ते॥ 3. 88.

१४. Omitted by M. १५. यज्ञे Sk.

१६. इत् यस्मात् Skr. १७. पि P.

१८. अतिशयेन सोमं पातुं क्षमौ तौ द्वौ देवौ सोमं पिबतामिति शेषः Sy.

१९. विरम्या प्रधानादेक० D.

**ता य॒ज्ञेषु॒ प्र शं॑सतेन्द्रा॒ग्नी शु॑म्भता नरः । ता गा॑य॒त्रेषु॑ गायत ॥२॥**

ता यज्ञेषु । तौ[1] । यज्ञेषु । प्रशंसत[2] । इन्द्राग्नी[3] । अलङ्कुरुत[4] च स्तोत्रैः । तावेव । गायत्रसामसु[5] च । गायत[6] । नरा[7]: !

**ता मि॒त्रस्य॒ प्रश॑स्तय इन्द्रा॒ग्नी ता ह॑वामहे । सो॒म॒पा सोम॑पीतये ॥३॥**

ता मित्रस्य । तौ[8] । मित्रस्य[9] । प्रशस्तये[10] तयोरितरेतरविषयां मैत्रीं स्तोतुम् । इन्द्राग्नी । तेन्द्र[11] ? हवामहे । सोमपानशीलः[12] । सोमपानाय च[13] ।

**उ॒ग्रा सन्ता॑ हवामह॒ उपे॒दं सव॑नं सु॒तम् । इ॒न्द्रा॒ग्नी एह ग॑च्छताम् ॥४॥**

उग्रा सन्ता । उग्रौ[14] । भवन्तौ[15] । हवामहे । इमम्[16] । सुतम् । सोमम् । उप[17] प्रति समीपे । ताविन्द्राग्नी । इह । आगच्छताम् ।

---

१. ता P. D.
२. प्रकर्षेण ऋग्लक्षणाभिः शस्त्रस्तुतिभिः स्तुतौ Skr.
३. इन्द्रग्नी P.
४. शोभध्वम् । . . . . . शोभन्ते न तूष्णीमासीनाः । "दाता राधांसि शुंभसि । ऋ० वे० १.१२.८" इत्यत्र दानार्थत्वाद् अत्राप्येवं वा । दत्त च ताभ्यां सोमम् Skr.
५. ०गामसु M. गायत्रीच्छन्दस्केषु मन्त्रेषु Sy. तावेव गायत्रेषु गीयन्ते । शसि वा सुप् । गायत्राणि सामानि गायत । भिसि वा सुप् । सामभिः स्तोत्रलक्षणैः स्तुत Skr.
६. गायतु M. गायता P.
७. नरः M. P.
८. ता P. D.
९. मित्रस्य स्नेहविषयस्य ममानुष्ठातुः प्रशस्तये ता पूर्वोक्तौ देवौ संपद्येतामिति शेषः । यद्वा मित्रस्य मम संबन्धिनौ ताविन्द्राग्नी प्रशस्तये प्रशंसितुमिच्छाम इति शेषः Sy.
१०. मित्रो देवतामात्रोपलक्षणार्थः । तौ देवानां प्रशस्तये । होतृत्वादग्निराहूतो देवान् स्तोष्यतीत्येवमर्थम् Skr.
११. Reading doubtful. तावेव suggested Ed.
१२. ०शीलौ Ed. सोमपानक्षमौ Sy.
१३. Omitted by P.
१४. उग्रा M. वैरिवधादिषु क्रूरौ Sy. शत्रूणामुपरि सन्तौ Sk.
१५. सदिति प्रशंसायाम् । प्रशस्तौ Skr.
१६. इमौ D. सुतमभिषवोपेतमिदमनुष्ठीयमानं सवनं प्रातःसवनादिरूपं कर्म Sy.
१७. उपः कर्मप्रवचनीयः प्रतौ । इमं यज्ञम् अभिषुतं सोमं प्रति च । सूयते तदिति सोमलक्षणं हविः । तत्प्रतीति वा । कस्मात् । अतीतपदचतुष्टयं पुनरपि पठ्यते । अर्थभेदात् । स्वार्थ एवोपस्तत्र । अत्र पुनः प्रत्यर्थे । इदं सवनमिति च सप्तम्यर्थे तत्र । द्वितीयार्थे अत्र । इह पुनः इन्द्राग्नी एह गच्छतामिति क्रियापदस्य व्यवहितत्वाच्च । पदकाराभिप्रायः पर्येष्यः Skr.

ता महान्ता सदस्पती इन्द्राग्नी रक्षं उब्जतम् । अप्रंजाः सन्त्वत्रिणः ॥५॥

ता महान्ता[1]। तौ महान्तावित्येतावान्[2] परोक्षम्। सदसस्पती[3]। इन्द्राग्नी। रक्षः[4]। हतम्[5]। अप्रादुर्भूताः[6]। भवन्तु। अदनशीला[7] राक्षसाः। अप्रजाता[8] वा[9]।

तेन सत्येन जागृतमधि प्रचेतुने पदे । इन्द्राग्नी शर्म यच्छतम् ॥६॥

तेन सत्येन। यत् पदम्। ज्योतिषा मनुष्यान् प्रज्ञापयति[10] तस्मिन् त्वदीये। आधिपत्ये[11] यथापूर्वम्। तेन। सत्येन। जागरणं कुरुतम्[12]। इन्द्राग्नी!। सुखं[13] च यच्छतम्[14]।[15]

I.22.

प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये ॥१॥

प्रातर्युजा[16]। प्रातर्गमनायोद्युक्तौ[17]। अश्विनौ स्तोतः!। विबोधय तौ। इह। आगच्छताम्। अमुम्[18]। सोमम्[19]। पातुम्।

---

१. ता महान्ता omitted by M.
२. ०त्येवां P. गुणैरधिकौ Sy.
३. सदसती M. सभापालकौ Sy.
४. रक्षो राक्षसजातिमुब्जतम् ऋजु कुरुतम् क्रौर्यं परित्याजयतमित्यर्थः Sy.
५. अस्मन्न्यग्भूतानि कुरुतमिति वा। उब्ज न्यग्भावे हनने च Skr.
६. अप्रदाभूताः M.
७. अदशीलाः P. D. भक्षकाः Sy.
८. अप्रजा अनुत्पन्नाः. . . . प्रजायन्त इति प्रजाः।. . . . . न प्रजा अप्रजाः Sy. प्रजावर्जिताः । . . . . . . अस्मद्धिंसितारः सन्ततिविच्छिन्नाः सन्तु Skr.
९. वाम P. D. M.
१०. M. adds प्रजा before प्रज्ञापयति। प्रचेतुने प्रकर्षेण फलभोगज्ञापके पदे स्वर्गलोकादिस्थाने Sy.
११. सर्वस्य अधि उपरि। प्रकर्षज्ञापनत्वादादित्यमण्डलाख्ये स्वर्गाख्ये वा स्थाने Skr.
१२. कुतम् P. अधिजागृतम् आधिक्येन सावधानौ भवतम् Sy. येनान्येषामपि स्तोतॄणां यष्टॄणां जागृथस्तेनाविसंवादिना स्तोत्रेण स्वसामर्थ्येन वा ममापि जागृतम्। सर्वार्थेष्वप्रमत्तौ भवतम् Skr.
१३. शर्म. . . . सुखं गृहं वा. . . . गयः कृदर (Ngh. 3.4) इत्यादिषु द्वाविंशतिसंख्याकेषु गृहनामसु शर्म वर्मेत्युक्तम्। . . . शृणाति हिनस्ति दुःखमिति शर्म। शॄ हिंसायाम् Sy. स्थानं गृहं वा Skr.
१४. दत्तम्। मम प्रज्ञापनपदप्रापणायाप्रमत्तौ भवतमिति वा Skr.
१५. Ms. D. puts the figure ॥२१॥ here to indicate the end of the twenty-first hymn. No such number is given in P. and D.
१६. प्रातर्योगिनौ विबोधयाश्विनाविहागच्छतामस्य सोमस्य पानाय। N. 12.4.
१७. प्रातःसवनग्रहेण संयुक्तौ Sy. प्रातः यावश्विनौ गृहयागेन युज्येते तौ विबोधयेत्यन्तरात्मानं प्रेष्यति। अग्निं वा होतृत्वात्। अस्य यजमानस्य यज्ञे गन्तव्यमिति ज्ञापय Skr.
१८. Omitted by P. अस्याभिषवसंस्कारयुक्तस्य सोमस्य Sy.
१९. अस्याश्विनग्रहाख्यस्य सोमस्य पानाय Skr.

**या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे ॥२॥**

**या सुरथा ।** यौ[1] । सुरथौ[2] । अतिशयेन रथस्य नेतारौ[3] भवतः । उभौ । द्युस्थानौ[4] । अश्विनौ । तौ । हवामहे ।[5]

**या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ॥३॥**

**या वां कशा ।** या । युवयोः[6] । अश्वाजनिः[7] । मधु क्षरन्ती[8] । शब्दवती[9] । तयाऽस्माकम् । यज्ञम्[10] । सिञ्चतम्[11] ।

**नहि वामस्ति दूरके यत्रा रथेन गच्छथः । अश्विना सोमिनो गृहम् ॥४॥**

**नहि वामस्ति ।** नहि । युवयोः । अस्ति । दूरे किञ्चिद्[12] गृहम् । यत्र युवाम्[13] । रथेन । गच्छथः[14] । अश्विनौ ! । यजमानस्य[15] । गृहं रथेन शीघ्रं गच्छतोर्न[16] दूरे[17] भवतीति ।

---

१. या M.
२. शोभनरथयुक्तौ Sy.
३. रथिनां मध्येऽतिशयेन रथिनौ Sy.
अतिशयेन सारथी Skr.
४. स्थानौ P.
द्युलोकनिवासिनौ Sy.
दिवि गन्तारौ Skr.
५. V. M. ignores देवा
६. सुवायोः M.
७. ०जनि P. ०जनिः र् D.
कशाऽश्वताडनी .... यद्वा .....
वाङ्नामसु कशा धिषणेति पठितम्।
अश्विनोर्या वाक् मधुमती माधुर्योपेता पारुष्यरहिता सूनृता ... कश गति-शातनयोः Sy. अश्वाजनी कशा चोद इति तोत्रनाम. ... कशा वाग्वा. ...
वाग् गर्जितलक्षणा जलवती अन्नवती च। सूनृता अन्नमस्मिन् पक्षे न वाक्। सस्यानां जनयित्री। सूनृतं प्रियं वा। श्रवणसुखा Skr.
. क्षन्ती M. उदकनामसु मधु पुरीषमिति पठितम्। तस्मादुदकवतीत्युक्तं भवति। अश्वस्य शीघ्रगत्या यत्स्वेदोदकं स्रवति तेनेयं कशा क्लिन्नेत्यर्थः Sy.
उदकवती शब्दकारिणी च गर्जित्री च Skr.
९. सूनृतावती–प्रियसत्यवाग्युक्ता। तीव्रेण कशाताडनेन यो ध्वनिर्निष्पद्यते ताडन-वेलायामश्वारूढेन च य आक्रोशः क्रियते तदुभयं शीघ्रगमनहेतुत्वेन यजमानस्य प्रियम्। . . .सूनृतावती प्रियत्वसत्यत्वो-पेता। फलप्रदानविषयेत्यर्थः .....
सूनृतावती। ऊन परिहाणे .....
तथाविधमृतं सत्यं यस्यां वाचि सा सूनृता. .... सा यस्या अस्ति सा कशा सूनृतावतीति कशायाः संज्ञा Sy.
१०. संचितं M. यज्ञम्। सिञ्चतम् is omitted by P.
सोमरसेन सेक्तुमिच्छतम्। कशयाश्वान्दृढं ताडयित्वा सहसा समागत्य भवद्विषयां सोमरसाहुतिं निष्पादयितुमुद्युक्तौ भवत-मित्यर्थः Sy.
गच्छतम्। म्यक्ष गतौ। .... यज्ञं सिञ्चतम्। मिह सेचने। वर्षतम् Skr.
११. V. M. ignores अश्विना
१२. स मार्गो वां युवयोर्दूरके दूरदेशे नह्यस्ति न वर्तते खलु। यद्वा यत्र गृहे गच्छथस्तच्च गृहं दूरे न भवति Sy.
१३. युवा P. १४. गच्छभो M.
१५. सोमवतो यष्टुः Skr.
१६. गच्छतो न P.
१७. दूतो D.

**हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् ॥५॥**

**हिरण्यपाणिम्**।[1] प्राशित्रं सवितुः[2] पाणी[3] प्रचिच्छेद[4] तस्मै देवा हिरण्मयौ[5] पाणी प्रत्यदधुरिति शाङ्खायनब्राह्मणम्।[6] सवितारम्। ऊतये।[7] उपह्वये। सः।[8] देवता प्रकाशं कुर्वन्। पदं[9] प्रातरेव। चेतयति[10] पदनिधान[11]योग्यदेशं प्रकाशयति।

**अपां नपातमवसे सवितारमुप स्तुहि । तस्य व्रतान्युश्मसि ॥६॥**

**अपां नपातम्**।[12][13] योऽद्भ्यः[14] प्रातरेवो[15]देति तम्। सवितारम्। उपस्तुहि।[16] तस्य। कर्माणि।[17] श्रोतुम्।[18] कामयामहे।

**विभक्तारं हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसम् ॥७॥**

**विभक्तारम्**। वासयितुः।[19] पूज्यस्य।[20] धनस्य। दातारम्।[21] हवामहे। सवितारम्। मनुष्याणां[22] द्रष्टारम्।

---

१. ०पाणी M. पाणिः D.
२. सवित्य D. ३. पाणि P.
४. प्राचिच्छेदे M.
५. हिरण्यपाणिं यजमानाय दातुं हस्ते सुवर्णधारिणम् Sy.
६. शाखा० P. Cf. Kan. Br. quoted by Sy.
७. तर्पणाय पालनाय वा Skr.
८. सन् P.
९. पदं यजमानेन प्राप्यं स्थानम् Sy.
१०. चेत्ता ज्ञापयिता भवति. . . . . चिती संज्ञाने Sy. तस्मात् स चेत्ता। चिती संज्ञाने। देवतानां स्थानम्। आमिसुः। अथवा स एव चेत्ता च देवता च स्थानं चाश्रयो यष्टॄणाम् Skr.
११. पदं नि० P. १२. आपां M.
१३. जलस्य न पालकम्। संतापेन. शोषकमित्यर्थः. . . . . पा रक्षणे. . . . . तस्य नञा समासे. . . . . . नलोपप्रतिषेध इति वृत्तिकारः। अग्निर्ह्यपो न पाति तच्छोषकत्वात्।. . . . अथवा न पातयतीति नपात्। पत्लृ गताविति धातोर्ण्यन्तात्क्विप्। अग्न्यादित्यौ ह्यपां न प्रापकौ प्रत्युत तच्छोषकौ Sy. पुत्रम्। सवितुरुदयो हि जन्म। तच्च साक्षादद्भ्यः। . . . . . . . . . अथवा अद्भ्यो वैद्युतोऽग्निः। अग्नेर्वा आदित्यो जायते इति पौत्रम्। अथवा आपो वा इदमग्र आसन्। अद्भ्यः प्रजापतिरजायत प्रजापतेः सविता। तेन वा अपां पौत्रम् Skr.
१४. भ्यः P. अद्भ्यः omitted by D.
१५. एव omitted by M. P.
१६. इत्यात्मा अन्तरात्मानं प्रेष्यति Skr.
१७. कर्षाणि M. सोमयागादिरूपाणि Sy. यागाख्यानि कर्माणि Skr.
१८. कर्तुम् Skr.
१९. वासयित्य P. D. वसोर्निवासहेतोः. . . वस निवासे Sy. धनस्य भजनीयस्य सिद्धिकरस्य Skr.
२०. सुवर्णरजतादिरूपेण बहुविधस्य Sy.
२१. अस्य यजमानस्यैतावद्धनदानमुचितमिति विभागकारिणम् Sy. विभक्तारं यस्य यावद्योग्यं तावत्तस्य प्रदातारम् Skr.
२२. मनुष्याणां प्रकाशकारिणं. . . . नृचक्षसं नॄश्चष्ट इति नृचक्षाः। तं नृचक्षसम् Sy. शुभाशुभानां कर्मणां प्रत्यवेक्षितारम् Skr.

**सखाय आ नि षीदत सविता स्तोम्यो नु नः । दाता राधांसि शुम्भति ॥८॥**

सखायः[1]। प्रस्तोतृप्रभृतयः[2]। आगत्य[3]। उपविशत। सविता। अस्माकम्। स्तोतव्यः[4]। क्षिप्रम्। अन्नानाम्। दाता[5]। यजमान एनं स्तुतिभिरलङ्करोति हविर्भिर्वेति।

**अग्ने पत्नीरिहा वह देवानामुशतीरुप । त्वष्टारं सोमपीतये ॥९॥**

अग्ने पत्नीः। अग्ने![6]। देवपत्नीः। इह[7]। उपावह[8]। कामयमानाः[9]। त्वष्टारं च[10]। सोमपानार्थम्[11]।

**आ ग्ना अग्न इहावसे होत्रां यविष्ठ भारतीम् । वरूत्रीं धिषणां वह ॥१०॥**

आ[12] ग्नाः[13]। अग्ने!। आवह। इहाग्ने![14]। देवपत्नीः[13]। रक्षणाय[15]। होत्राम्[16]। युवतम![17]। आदित्यस्य पत्नीम्[18]। वरणीयाम्। सरस्वतीं च[19]।

**अभि नो देवीरवसा महः शर्मणा नृपत्नीः । अच्छिन्नपत्राः सचन्ताम् ॥११॥**

अभि नः। अभिसचन्ताम्[20]। अस्मान्[21]। देव्यः। रक्षणेन[22]। महता च। सुखेन[23] सह। देवानां[24]

---

१. सखिभूता हे ऋत्विजः .... समानाः सन्तः ख्यान्ति प्रकाशन्त इति सखायः। ख्या प्रकथने Sy.

२. अध्वर्यवः Skr. ३. सर्वत्र Sy. आ अर्वागर्थे। मत्समीपे दानार्थं निषीदत Skr. ४. स्तोतव्य P.

५. दाता प्रदातुमुद्युक्तः। एष सविता शुम्भति शोभते Sy.
यस्माद् दाता सविता धनानि ददाति। अथवा दाता यजमानः सोमलक्षणानि धनानि संस्कारैः शोभितवान्। अभिषवणादिभिः संस्कृतवान्। अन्तर्णीतण्यर्थश्च भूते लट् Skr. ६. आग्ने M.

७. कर्मण्युपावह। देवान् यज्ञागमनं वा Skr.

८. ०पाव P. ९. ०मानः P.

१०. वोढुरग्नेरेवात्र प्राधान्यं न देवपत्नीनां त्वष्टुश्च। तस्मादाग्नेयत्वमृच Skr.

११. V. M. ignores देवानाम्।

१२. अग्ना P. D. M.

१३. स्त्रियः Sk. १४. इह कर्मणि Sk.

१५. तर्पणपालनार्थम् Skr.

१६. होमनिष्पादकाग्निपत्नीम् Sy. हूयतेऽसाविति होत्रा अग्नेर्दीप्तिः पत्नी वा। तां च Skr. १७. यवतम M.

१८. पत्नी P. भरतनामकस्यादित्यस्य पत्नीं ...भरत आदित्यः (N. 8. 13.) Sy. तस्य भाः पत्नी वा भारती Skr.

१९. धिषणां वाग्देवीं . . . वाग्वै धिषणेति वाजसनेयकम् Sy. वाचम् Skr.

२०. ०न्ता० M. आभिमुख्येन सेवन्ताम् Sy.

२१. तस्माद् M.

२२. तर्पणपालनाभ्याम् Skr.

२३. गृहेण सुखेन वा। टार्थे ङस् Skr.

२४. नरो देवास्तदाकारत्वात् Skr.

पत्न्यः[1]। अच्छिन्नपतनाः[2]।
उत्तरा निगदसिद्धेति।

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये। अग्नायीं सोमपीतये ॥१२॥

(इहेन्द्राणीमुप)[3]

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिः ॥१३॥

मही द्यौः[4]। महत्यौ। द्यावापृथिव्यौ। अस्माकम्। इमम्। यज्ञम्। आगच्छेताम्[5]। पारयेतां[6]। च। अस्मान्[7]। भरणैः[8]।

तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः। गन्धर्वस्य ध्रुवे पदे ॥१४॥

तयोरित्। तयोः[9]। एव। क्षरणवत्[10]। पयस्सारम्[11]। मेधाविनः[12]। विहन्ति[13]। कर्मभिः[14]।

---

१. नृपत्नीर्मनुष्याणां पालयित्र्यः Sy.
अग्न्यादित्ययज्ञानां पत्नीः होत्राभारतीवाचः Skr.

२. अच्छिन्नपक्षाः। नहि पक्षिरूपाणां देवपत्नीनां पक्षाः केनचिच्छिद्यन्ते..... न छिन्नान्यच्छिन्नानि......अच्छिन्नानि पत्राणि यासां ताः Sy.
छिन्नं श्रान्तम्। पतत्यनेनेति पत्रं वाहनम्। अश्रान्तवाहना अभिसेवन्ताम्। अवश्च महच्छर्म चास्माकं कुर्वन्तु। षच सेवायां गतौ च। अवसा च महता शर्मणा चाभिगच्छन्त्वस्मान् Skr.

३. इहास्मिन्कर्मणि स्वस्तयेऽस्माकमविनाशाय सोमपीतये सोमपानाय चेन्द्रवरुणाग्नीनां पत्नीराह्वयामि। इन्द्राणीम्। वरुणानीम्।. . . . . अग्नायीम् Sy.
इह कर्मणेन्द्रवरुणाग्नीनां पत्नीरुपह्वये, अविनाशाय आत्मनः सोमपानाय च। आगता अस्मान् रक्षिष्यन्ति सोमञ्च पास्यन्तीत्येवमर्थम् Sk.
अग्नाय्यग्नेः पत्नी। तस्या एषा भवति .......इति सा निगदव्याख्याता। N. 9. 34.

४. द्यां D. द्योः P. द्यौ M.

५. आगच्छताम् P. गच्छेताम् Skr.

६. पिपृतां. . . . पूरयताम् Sy.
पूरयतां तर्पयताम् Skr.

७. अस्मा M.
स्वकीयसारभूतेन रसेन...... सेक्तुमिच्छताम्। .... मिह सेचने Sy.

८. भरणेः D.
भरणसमर्थैरन्नै रसैश्च Skr.

९. द्यावापृथिव्योः Sy.

१०. घृतवद् घृतसदृशं......यद्वा घृतवद् घृतं सारं तेनोपेतम् Sy.

११. पयस्सरं M. जलम् Sy.
उदकम् Sk.

१२. सर्वत्र विविधं प्राप्ता मेधाविनो वा आदित्यरश्मयो वा Skr.

१३. लिहन्ति Ed.
स्वादयन्ति....रिह आस्वादने Skr.

१४. गमनाख्यैः Skr.

आदित्यस्य[1]। ध्रुवे। स्थानेऽवस्थितम्।

**स्योना पृथिवि भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथः ॥१५॥**

स्योना[2] पृथिवि। सुखा[3]। पृथिवि[4]! । भव। कण्टकवर्जिता[5]। निवेशनी[6]। "ऋक्षरः कण्टक ऋच्छतेः"[7]। यच्छ[8] च। अस्मभ्यम्। सर्वतः पृथु[9]। गृहम्[10]।

**अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे। पृथिव्याः सप्त धामभिः ॥१६॥**

अतो देवाः। अस्मात्[11] स्थानात्। अस्मान्। देवाः। रक्षन्तु ततो यो[12]ऽनर्थ उत्पद्यते तस्यावनम्। यतः[13]। विष्णुः। विचक्रमे[14]। यत्र विक्रमकृतपृथिव्याः[15]। सप्तभिः। छन्दोभिः[16] पृथिवीमुपक्रम्य त्रीन् लोकान् विचक्रमे त्रिभ्योऽपि लोकेभ्यो नास्मान् भयमुपगच्छत्विति।

---

१. गन्धर्वस्य ध्रुवं पदमन्तरिक्षम्....यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षम् (नृसिंहताप० I.2.)। तेनान्तरिक्षेणोपलक्षित आकाशे वर्तमानयोः Sy. गत्वा चन्द्रमसो नित्ये स्थाने। सुषुम्णा सूर्यरश्मिः। सात्र गौः। तां धारयतीति गन्धर्वश्चन्द्रमाः।.... चन्द्रमण्डलाख्ये गत्वा समादयन्ति। या ह्येताः पूर्वपक्षे कलाख्याश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति। सोमोत्पत्त्याम्।...अन्यथा वा योजना। तयोरुपस्तरणाभिघरणघृतेन। तद्धविर्लक्षणं पयः। त एव मेधाविन ऋत्विजः स्तुवन्ति स्तुतिकर्मभिः। इह स्तुतौ। सुपि वा भिस्। यागकर्मसु यज्ञस्य वेद्याम्। यज्ञो गन्धर्वः। गौर्वाक्। तस्या धारयिता। तस्य ध्रुवं पदं वेदिः। तत्र Skr.

२. पृथिवी P. D. M. सुखा नः पृथिवि भव। अनृक्षरा निवेशनी। ऋक्षरः कण्टक ऋच्छतेः। कण्टकः कन्तपो वा। कृन्ततेर्वा। कण्टतेर्वा स्याद् गतिकर्मणः। उद्गततमो भवति। यच्छ नः शर्म। [यच्छन्तु] शरणं सर्वतः पृथु। N. 9.32.

३. स्योनशब्दो विस्तीर्णवाची......यद्वा स्योनशब्दः सुखवाची.......षिवु तन्तुसन्ताने Sy.

४. पृथिवी P. M. ५. कर्णकवर्जिता P.

६. ०शन्यनृक्षरः M. निवेशनयोग्या च Skr.

७. N. 9. 32. ८. यज M.

९. सप्रथः प्रथ प्रख्याने... प्रथसा सह वर्तत इति Sy. १०. भृगं M. शरणम् Sy. सुखं गृहं वा Skr. ११. अस्मान् P. अतोऽस्मात्पृथिवीप्रदेशात् Sy.

१२. यः omitted by P.

१३. यस्माद् भूप्रदेशात् Sy.

१४. विविधं पादक्रमणं कृतवान् Sy.

१५. भूम्या अवयवभूतेभ्यः सप्तभ्यः स्थानेभ्यो द्वीपाख्येभ्यः। पञ्चम्यां जस्भिसौ। धाम स्थानम्। सर्वत उपजायमाना अस्मदापदोऽपनयन्तु इत्यर्थः। केचित्तु ङसौ पृथिव्या इति व्याचक्षते। भिसि जस् इति च। यस्याः पृथिव्या विचक्रमे सप्तभिः छन्दोभिर्वायुस्कन्धैर्वा, अतोऽवन्तु। पञ्चम्यास्तसिल्। धाम छन्दः Skr. १६. Cf. Ts. 5. 2. 1. 1. 'विष्णुमुखा वै देवाश्छन्दोभिरिमांल्लोकाननपजय्यमभ्यजयन्'

**इदं विष्णुर्वि च॑क्रमे त्रे॒धा नि द॑धे प॒दम् । समू॑ळ्हमस्य पांसु॒रे ॥१७॥**

इदं विष्णुः[1] । इदं त्रैलोक्यम्[2] । विष्णुः[3] । विचक्रमे विक्रममाणश्च । त्रेधा[4] । निहितवान्[5] । पदम्[6] । तत्र यास्क :—"पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः[7]" । इति । सङ्गतम्[8] । अस्य[9] । पांसुले पदे त्रैलोक्यम्[9] ।

**त्रीणि॑ प॒दा वि च॑क्रमे॒ विष्णु॑र्गो॒पा अदा॑भ्यः । अतो॒ धर्मा॑णि धा॒रय॑न् ॥१८॥**

त्रीणि पदा । त्रीणि । पदानि । विचक्रमे । विष्णुः । गोपायिता[10] । अहिंस्यः[11] । पृथिवीमारभ्य मनुष्याणां । कर्माणि[12] । धारयन् ।

---

१. विष्णुम् M.
अथ यद्विषितो भवति तद्विष्णुर्भवति । विष्णुर्विशतेर्वा । व्यश्नोतेर्वा. . . .यदिदं किं च तद्विक्रमते विष्णुः । त्रिधा निधत्ते पदम् । [त्रेधाभावाय ।] पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः । समूळ्हमस्य [पांसुरे] प्यायनेऽन्तरिक्षे पदं न दृश्यते । अपिवोपमार्थे स्यात् । समूळ्हमस्य पाँसुल इव पदं न दृश्यत इति । पाँसवः पादैः सूयन्ते इति वा । पन्नाः शेरत इति वा । पंसनीया भवन्तीति वा । N. 12. 19.

२. त्र्यै० P.

३. विष्णुस्तु भगवानस्मद्भर्ता वासुदेवः । स वामनः छद्मना महाबलिं बबन्ध Skr.

४. त्रेधा त्रिभिः प्रकारैः Sy.

५. तत्काले प्रपञ्चं विक्रान्तस्त्रिस्थानभेदेन निहितवान् पदमात्मीयं पदं त्रिषु स्थानेषु कृतवान् । भुवि खे दिवि चेत्येके । समारोहणे विष्णुपदे गयशिरसीत्यन्ये । निर्गुणस्य परब्रह्मणो गुणवर्णने विभ्रमन्ति लोकाः । न तच्चित्रम् । तच्च त्रिविधम् । Skr.

६. ०पूर्रिणिः P.

७. N. 12.19.

८. सम्यगन्तर्भूतम् Sy.

९. सम्यग् गूढं सम्यक् प्रतिष्ठापितमस्य विष्णोः पदं पांसुमतीव । पाँसवो यस्मिन् सन्तीति मतुपि रप्रत्ययः । लुप्तोपमं च । यथा पांसुमति देशे सुप्रतिष्ठापितं तद्वत् । अस्य स्वीयं वा पांसुः । पृथिवी वा समारोहणं वा । तत्र यत्पदं विष्णोरस्मद्भर्तुस्तत्समूढम् । विष्णुरादित्यो वा । इदं सर्वं महरर्हविचक्रमे । त्रेधा उदयगिरौ नभोमध्ये चास्तगिरौ च त्रिविधं सम्यक् प्रतिष्ठापितमस्य पदं पांसुरूपदेशे । इति । केचित्तु सम्पूर्वस्य मुहे रूपमिति । समूढं छन्नम् । न दृश्यते । विष्णुरेवादित्यरूपेण लोकान् प्रकाशयति । तस्य त्रैविध्यमन्यथा वा । अग्निवैद्युतादित्यात्मना भुवि खे दिवि । एकमेवेदं ज्योतिस्त्रेधा विभक्तमिति मूर्धन्वान् वक्ष्यति तत् । . . . . . . तत्र यत् खे वैद्युतस्य पदं तच्छन्नं नित्यं न दृश्यते Skr.

१०. सर्वस्य जगतो रक्षकः Sy.
गोपयिता कृत्स्नस्य जगतः Skr.

११. केनापि हिंसितुमशक्यः Sy.

१२. अग्निहोत्रादीनि धारयन् पोषयन् Sy.
अतः पार्थिवाल्लोकात् कर्माणि । सर्वाणि धारयितव्यानीति वा । आत्मनि धारयन् । धर्मकर्मणी धारयितव्ये च । सर्वाश्रयो हि भगवानस्मद्भर्ता श्रीविष्णुः Skr.

**विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा ॥१९॥**

विष्णोः कर्माणि[1]। विष्णोः। कर्माणि। पश्यत[3]। यैर्मनुष्याणाम्[4]। कर्माणि। बध्नाति[5]। इन्द्रस्य। नियोज्यः[6]। सखा।

**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् ॥२०॥**

तद्विष्णोः[7]। तत्। विष्णोः। उत्तमम्। स्थानम्[8]। सदा। पश्यन्ति[9]। प्राज्ञाः[10]। अन्तरिक्षे[11]। विततमिव। तेजः। यद्वाऽन्तरिक्षे विततं यथा चक्षुः पश्यन्ति[12] तद्वत्[13]।

**तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम् ॥२१॥**

तद्विप्रासः। तत्। उत्तमम्। पदम्। मेधाविनः। विविधं[14] स्तुवन्तः। स्वप्नवर्जिताः[15] कर्मभिः। सन्दीपयन्ति[16] यज्ञाख्यम्[17][18]।

---

१. विष्णोः कर्माणि omitted by D. and M.
२. Omitted by P.
३. यूयमृत्विज ऋषयो वा Skr.
४. यैः कर्मभिर्व्रतान्यग्निहोत्रादीनि पस्पशे सर्वो यजमानः Sy. यत इति आद्यादित्वात् तस् भिसि। यैर्व्रतानि प्रवर्त्यन्ते तानीति हविर्लक्षणान्यन्नानि। कर्माणि वा यागाख्यानि। तानि चात्मनि प्रतिबद्धवान्। आत्मदेवत्यानि कृतवान्। अथवा बलिप्रभृतीनां दानवानां व्रतानि प्रतिबद्धवानित्यर्थः Skr.
५. बन्धाति P. स्पृष्टवान् विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः। . . . . स्पश बाधनस्पर्शनयोः Sy.
६. अनुकूलः Sy. योग्यः Skr.
७. तद् विष्णोः omitted by M.
८. तच्छास्त्रप्रसिद्धं . . . . स्वर्गस्थानम् Sy.
९. शास्त्रदृष्ट्या सर्वदा पश्यन्ति Sy. ध्यायन्ति Skr.
१०. ऋत्विगादयः Sy. विद्वांसः स्तोतारो वा Sk.
११. आकाशे यथाऽऽततं सर्वतः प्रसृतं चक्षुर्निरोधाभावेन विशदं पश्यति तद्वत् Sy. आदित्यमण्डलं यथाऽऽततं तद्वत्। विष्णुरेव वाऽऽदित्यः। विस्तृते दिवि यथादित्यमण्डलाख्यं विष्णोः परमं पदं पश्यन्तीत्यर्थः। अथवा चक्षुष इन्द्रियत्वाद् एवं योज्यम्। विष्णोरुत्कृष्टं पदं सदा पश्यन्ति सूरयः। यथा च दिव्येवं विष्णावपि सर्वमनुष्याणां चक्षुराततम्। दिविष्ठः सूर्य एको जलेऽनन्तस्तद्वदेकः सन्नपि प्रपञ्चेणानेक इव Skr.
१२. चश्यन्ति D.
१३. Omitted by P. and M.
१४. विशेषेण स्तोतारः . . . . . . स्तुत्यर्थस्य पनेः . . . . . Sy. विविधस्तुतिकामाः। . . . . .विस्तुतिमन्त इति वा Skr.
१५. प्रमादराहित्येन जागरूकाः . . . . . . . जागृ निद्राक्षये Sy. अप्रमाद्यन्तः स्तुतिभिः Skr.
१६. सम्यक् दीपयन्ति Sy.
१७. The passage beginning with विविधं etc. and ending with यज्ञाख्यं is omitted by P.
१८. Ms. D. puts the figure ॥२२॥ here to indicate the end of the twenty-second hymn. No such number is given in P. and M.
V. M. ignores विष्णोः and यत्

I.23.

**तीव्राः सोमा॑स॒ आ ग॑ह्या॒शीर्व॑न्तः सु॒ता इ॒मे । वायो॑ ता॒न्प्रस्थि॑ता॒न्पिब ॥१॥**

**तीव्राः सोमासः ।** मदोत्पादनसमर्थाः[1] । सोमाः । आगच्छ[2] । आशिरेण युक्ताः[3] । इमे । सुताः[4]
सोमाः । वायो ! । तान् प्रस्थितान्[5] । पिब[6] ।

**उ॒भा दे॒वा दि॑वि॒स्पृशे॑न्द्रवा॒यू ह॑वामहे । अ॒स्य सोम॑स्य पी॒तये॑ ॥२॥**

**उभा देवा ।** उभौ[7] । देवौ[8] । द्युस्थौ[9] । इमौ । हवामहे । सोमपानायेति[10][11] ।

**इ॒न्द्र॒वा॒यू म॑नो॒जुवा॒ विप्रा॑ हवन्त ऊ॒तये॑ । स॒ह॒स्रा॒क्षा धि॒यस्पती॑ ॥३॥**

**इन्द्रवायू ।** इन्द्रवायू[12] । मनोवेगौ[13] । मेधाविनः[14] । हवन्ते । रक्षणाय[15] । अनेकदर्शनौ[16] ।
कर्मपती[17] ।

**मि॒त्रं व॒यं ह॑वामहे॒ वरु॑णं॒ सोम॑पीतये । ज॒ज्ञा॒ना पू॒तद॑क्षसा ॥४॥**

**मित्रम् ।** वयम् । मित्रावरुणौ । प्राज्ञौ[18] । शुद्धबलौ । सोमपानाय । हवामह इति ।

---

१. तीव्रास्सोमः तीव्रास्सोमासः D.
२. तदोत्पा० M.
प्रभूतत्वात् तर्पयितुं समर्थाः Sy.
तीव्रं तिक्तरसं कटुरसं वा । ...... कटुरसाः तिक्तरसा वा सोमाः । सोममिश्रणं दध्याशीस्तद्वन्तः Skr.
३. आगच्छत S.
४. आशीरेण M. आशीर्युक्ताः Sy.
५. उत्तरवेदिं प्रत्यानीतान् Sy.
प्रस्थितसंज्ञकान् Skr.
६. The passage beginning with आशिरेण and ending with पिब is omitted by P.
७. देवाः M. ८. दीप्तौ दातारौ वा Skr.
९. द्युलोकं गन्तारौ Skr.
१०. Omitted by P.
११. V. M. ignores अस्य ।
१२. Omitted by M.
१३. मग्नो० M. मन इव वेगवत्तरौ Sy.
मनोवच्छीघ्रगामिनौ Skr.
१४. मेधाविनौ D. The passage beginning with इन्द्रवायू and ending with मेधाविनः is omitted by P. ऋत्विग्यजमानाः Sy.
यष्टारः स्तोतारश्च Skr.
१५. सोमेन तर्पणाय पालनाय वा Skr.
१६. सहस्रनयनयुक्तौ Sy. इन्द्र एव सहस्राक्षः नासत्यदस्राविव साहचर्यात् तौ सहस्राक्षौ Skr.
१७. कर्मणो बुद्धेर्वा पालकौ Sy.
कर्मणः प्रज्ञाया वा पालयितारौ स्वामिनौ वा Skr.
१८. प्राज्ञा M. कर्मप्रदेशे प्रादुर्भवन्तौ Sy.
जायमानावेव Skr.

**ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । ता मित्रावरुणा हुवे ॥५॥**

**ऋतेन।** सत्येन[1]। यौ। सत्यस्य वर्धयितारौ[2]। सत्यस्य[3]। ज्योतिषः[4]। पती[4]। तौ। मित्रावरुणौ। हुवे।

**वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः । करतां नः सुराधसः ॥६॥**

**वरुणः प्राविता।** वरुणः। प्रकर्षेण रक्षकः[5]। भवतु। मित्रश्च। विश्वैः[6]। पावनैस्तौ[7]। अस्मान्। कुरुतां च। स्वन्नौ[8]।

**मरुत्वन्तं हवामह इन्द्रमा सोमपीतये । सजूर्गणेन तृम्पतु ॥७॥**

**मरुत्वन्तम्।** मरुद्भिः सहितम्। इन्द्रम्। आहवामहे[9]। सोमपानाय सः[10]। मरुद्गणेन। सहितः[11]। सोमेन तृप्यतु।

**इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवम् ॥८॥**

**इन्द्रज्येष्ठाः।** इन्द्रनेतृकाः[12]। पूषज्ञातिकाः[13]। मरुतः। देवाः[14] ते। सर्वे। मम। शृणुत। ह्वानम्।

---

१. सत्यवचनेन यजमानानुग्रहकारिणा Sy. ऋतेनोदकेन यज्ञेन वा Skr.

२. वद्धपि० D. ऋतमवश्यंभावितया सत्यं कर्मफलं तस्य वर्धकौ Sy. उदकस्य यज्ञस्य वा वर्धयितारौ Skr.

३. ऋ गतौ। सर्वत्र गतस्य रश्म्याख्यस्य Skr.

४. ज्योतिष्पती M. प्रशस्तस्य...... प्रकाशस्य...... पालकौ। श्रुत्यन्तरे मित्रावरुणयोरदिति-पुत्रत्वेन श्रुतत्वाद् द्वादशादित्येष्वन्त-र्भूतत्वेन ज्योतिष्पालकत्वं युक्तम् Sy.

५. रक्षकौ D.

६. सर्वाभिः रक्षाभिः Sy.

७. पालनैः Sk.

८. स्वन्नान् S. प्रभूतधनयुक्तान्। 'राध साध संसिद्धौ।' राध्नोत्यनेनेति राधो धनम्। शोभनं राधो येषां ते सुराधसः Sy. सुधनान् Skr.

९. आ अर्वाचि वा। अर्वाक्. . . . Sk.

१०. Omitted by M.

११. सह Sy.

१२. ०तृका M. इन्द्रो ज्येष्ठो मुख्यो येषु ते तथाविधाः Sy. इन्द्रप्रधानाः Sk.

१३. पूषञ्जातिकाः D. पूषाख्यो देवो रातिर्दाता येषामिन्द्रमरुतां ते पूषरातयः Sy. I propose to read पूषरातिकाः Ed.

१४. सप्तसप्तका देवाः Sk.

**हत वृत्रं सुदानव इन्द्रेण सहसा युजा । मा नो दुःशंस ईशत ॥९॥**

**हत वृत्रम्** । हत । वृत्रासुरम्[1] । सुदानाः[2] । इन्द्रेण । सहायेन[3] । बलवता सह[4] । मा । अस्माकम्[5] । दुर्वचनो[6] वृत्रः । ईशिष्ट[7] ।

**विश्वान्देवान्हवामहे मरुतः सोमपीतये । उग्रा हि पृश्निमातरः ॥१०॥**

**विश्वान् देवान्** । वैश्वदेवस्तृच उक्तो[8] मरुत्सु च विश्वशब्दो दृश्यते[9] । विश्वान्[10] । देवान्[10] । मरुतश्च[10] । सोमपानाय । हवामहे[11] । उद्गूर्णाः । हि[12] । पृश्निमातरः[13] "पृश्नियै[14] वै पयसो मरुतो जाता" इति ब्राह्मणम् ।

**जयतामिव तन्यतुर्मरुतामेति धृष्णुया । यच्छुभं याथना नरः ॥११॥**

**जयतामिव** । सैनिकानामिव[15] । शब्दः[16] । मरुतां शब्दः[17] । गच्छति । धृष्णुः[18] । यथा[19] यूयम् । कल्याणम्[20] । गच्छथ[21] । नेतारः[22] ।

---

१. असुरं मेघमस्मच्छत्रुं वा Sk.
२. शोभनदाना मरुतः Sk.
३. योग्येन Sy.
४. वह P. D. M.
५. अस्मान् प्रति Sy.
६. दुर्वचने P. दुष्टेन शंसनेन कीर्तनेन युक्तो वृत्रः Sy. युष्मत्प्रसादेन क्रूराभिप्रायः . . . सहोऽन्तर्णीतमतुप् । युक् सहायः । दुराशंसस्तद्वान् पुरुषो मास्मदीशो भवेत् Sk.
७. ईशिष्टः M. समर्थो मा भूत् Sy.
८. उक्तो M. अत्र चाद्यः पादो विश्वलिङ्गः । शिष्टं मारुतम् Sk.
९. दृश्ये M.
१०. मरुत्संज्ञकान् सर्वान् देवान् Sy. विश्वान् देवान् हवामहे । एतावदेकवाक्यम् । परन्तु वाक्यान्तरम् । मरुतां विश्वेषां च विशेषणविशेष्यत्वं न विद्यते । न समुच्चयं च । तस्मात् साकाङ्क्षत्वात् पूर्वस्माद् वाक्यादध्याहार्यं मरुतो हवामहे इति वक्तव्यम् Sk.
११. शत्रुभिरसह्यबलाः Sy. यस्माच्छत्रूणामप्रसह्याः Sk. १२. हिशब्दः प्रसिद्धचर्थः Sy.
१३. पृश्नेः—नानावर्णयुक्ताया भूमेः पुत्राः । पृश्निर्माता येषां ते Sy. दिवः पुत्रा मरुतः । पृश्निर्द्यौः । सा माता येषां ते पृश्निमातरो मरुतः Sk.
१४. पृश्निर्वै पयः । पयसो S.
१५. विजययुक्तानां शूराणां भटानामिव Sy. संग्रामं जयतां राज्ञाम् Sk.
१६. गर्जितशब्द इव Sk. १७. गर्जितशब्दः Sk.
१८. धृष्णुयुः M. धार्ष्टचयुक्तः Sy. अभिभविता महान् गम्भीरश्च Sk.
१९. यया P.D. यदा S. यदा Sy. यदा मेघस्थमुदकं प्रतिगच्छथ Sk.
२०. तदा तन्यतुः शुभं शोभनं वा । यदा शोभनं गच्छथ Sk. २१. प्राप्नुथ Sy.
२२. हे मनुष्याकाराः Sk.

**हस्काराद्विद्युतस्पर्यतो जाता अवन्तु नः । मरुतो मृळयन्तु नः ॥१२॥**

हस्कारात्[1]। अस्मादन्तरिक्षात्। जाताः। मरुतः। विद्योतनानन्तरं[2] वृष्ट्यभावजनिताद्धस्कारात्[3]। अस्मान्। रक्षन्तु[4] मरुतः। सुखयन्तु। अस्मानिति।

**आ पूषञ्चित्रबर्हिषमाघृणे धरुणं दिवः । आजा नष्टं यथा पशुम् ॥१३॥**

आ पूषन्। आनय[5]। पूषन्! सोमं पणिभिरपहृतम्[6]। आगतदीप्ते[7]! धारकम्[8]। द्युलोकस्य[9]। यथा[10]। नष्टम्। पशुम्[11]। त्वमानयसि[12][13]।

**पूषा राजानमाघृणिरपगूळ्हं गुहा हितम् । अविन्दच्चित्रबर्हिषम् ॥१४॥**

पूषा[14] राजानम्। पूषा। सोमम्[15]। आघृणिः[16]। असुरैरपगूळ्हम्[17]। गुहायाम्[18]। निहितम्। अविन्दत्[19]। यस्मै[19] चिरं[20] बर्हिः[21] स्तीर्यते।

---

१. हस्तारात् P. दीप्तिकरात्। 'हसे हसने'। अत्र तु प्रकाशमात्रे वर्तते Sy. यदा दुर्भिक्षार्तस्य पुंस आर्तिप्रतिपत्त्यर्थं हश्शब्दोच्चारणम्। स हस्कारः Sk.

२. ०नन्तर P. D. विद्युतः—विशेषेण दीप्यमानादतोऽन्तरिक्षात् परिजाताः सर्वत उत्पन्ना मरुतः Sy. तदा विद्युतः परि विद्युतो जाताः। जन्मात्र व्यवस्थाने। विद्युतमधिष्ठाय वृष्टिप्रदानेन दुर्भिक्षान् दूरीकृत्यास्मानवन्तु। यथा च वयं हस्कारं त्यक्त्वा प्रमोदलक्षणहन्तशब्दमुच्चारयामस्तथा कुर्वन्तु Sk.

३. ०द्धस्तारात् P. ४. नक्षन्तु M.

५. आज आज। आङो द्वित्वात्तत्सम्बद्धक्रियाया अपि द्वित्वम्।....अजिरत्रान्तर्णीतण्यर्थः Sk. ६. ०रूप० M.

७. आहृतदीप्ते M. ०दीप्तेः D. ...क्षरिता घृणिः। दध्ना पूर्णो दृतिः। सा कक्षे रथे वा यस्य स आघृणिः।... तस्य सम्बोधनम्। दीप्तिर्वा घृणिः, साऽऽगता यस्य स वा उपजातदीप्तिः Sk.

८. यागस्य धारकम् Sy.

९. द्युलोकाद् आहर इति शेषः Sy. दिवः। मञ्चाः क्रोशन्तीव तत्स्थान् एवाह। द्युनिवासिनां देवानां धारयितारम्।.....धरुणमुदकं वा। चित्रबर्हिषं च सोममुदकञ्च द्युलोकात् पुनः पुनः अस्मदर्थमागमय Sk.

१०. Omitted by M.

११. अजं गां वा त्वमेवागमयसि पशूनां रक्षितृत्वात्। लौकिकः पशुपालो वा तद्वत् Sk.

१२. यथा लोके नष्टं पशुं महारण्यादावन्वीक्ष्य कश्चिदाहरति तद्वत् Sy.

१३. V. M. ignores चित्रबर्हिषम् and अज।

१४. अत्रेतिहासः—असुराः सोमं राजानं दीयमानमग्नेर्हस्तादपहृत्य गुहायां न्यदधुः। तं पर्येषमाणा अन्ये देवा नाविन्दन्। पूषा त्वविन्दत्। स तं गृहीत्वा दिवमानयत्। इत्यस्यामुच्यते Sk.

१५. सो M. १६. णिः M.

१७. अत्यन्तगूढम् Sy. आच्छादितं गुहायां निहितमसुरैः Sk.

१८. गुहासदृशे दुर्गमे द्युलोके स्थितम् Sy.

१९. अविन्दत्यस्मै M. २०. रमित्रं M. चित्रब० S. २१. बहि M.

**उतो स मह्यमिन्दुभिः षड्युक्ताँ अनुसेषिधत् । गोभिर्यवं न चर्कृषत् ॥१५॥**

**उतो**[1] **स मह्यम्**[2]। अपि च। स पूषा। मह्यम्। पणिभ्य आहृतैरिन्दुभिः[3]। षड् ऋतून् यथापूर्वम्। युक्तान्[4]। अनुक्रमेण[5] रुन्धन्। यथा[6]। यवान्[7] भूम्यामुप्तान्[8] प्ररोहार्थम्। षड्गवादिना[9] हलेन। कृषन्ति तद्वदनुक्रमेण पुनः पुनर्ऋतून् प्रवर्तयत्यमरणायेति।

**अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् । पृञ्चतीर्मधुना पयः ॥१६॥**

**अम्बयो यन्ति**। अत्र शाटचायनकम्। तस्यैष श्लोक :—

"न ता अन्यः प्रतरति नैना विष्णातुमर्हति।

वहन्ति अस्मै सर्वतो मधु क्षीरं घृतं दधि" ॥[10]

षट्सहस्राण्यम्बय[11] इति। इमा ह वै ता अम्बयो नामेत्यादि। ता अम्बयः[12]। मार्गैः[13] गच्छन्ति। यज्ञमिच्छताम्[14]। जामिस्थानीयाः[15]। मधुरेण रसेन[16]। प्रत्यक्षमुदकम्। सम्पृञ्चन्त्यः[17]।

---

१. उतशब्दस्योञा सहैकादेशः। उत उ। उ इति उञाद्वयम्। नानावत् सह कृतैकादेशः।.......सर्वः पादपूरणः। अपृथगर्थत्वाच्च कृतैकादेशः। उञा् पदकारेणैकीकृत्यैव पठित इति करणोपादानात्तु प्रगृह्यतां दर्शयता दर्शितो बोद्धव्यः Sk.

२. उतोऽसह्यम् M.

३. आहूतै० M.
याग हेतुभिः सोमैर्युक्तान् Sy.

४. युक्तम् M.
सोमान् षड्तून् युक्तान् संवत्सरगमने नियुक्तान्। तस्य गमयितॄन्। अथवा युक्तान् यान् यान् यो यादृशः साधयितव्यस्तं तादृशमेवानुपूर्व्येण साधयत् Sk.

५. ननुक्रमेण M. अनुक्रमेण पुनः पुनर्नयन् वर्तत इति शेषः Sy.

६. नशब्द उपमार्थः। यथा यवमुद्दिश्य (कश्चित्) भूमिं प्रतिसंवत्सरं पुनः पुनः कृषति तद्वत् Sy.

७. यावान् D. युवान् P.

८. भूम्यावुप्तान् P.

९. षद ग० M.

१०. Sāṭ. 1. 23. 13.

११. ०सहस्रा P. D. for ०सहस्राणि

१२. मातृस्थानीया आपः Sy. अम्बिरम्बा मातृभूता आपः Sk.

१३. देवयजनमार्गैः Sy.
नियतैर्मार्गैः Sk.

१४. छामि० P.

१५. ०स्थानीयानां D. हितकारिण्यो बन्धवः Sy.
भगिनीस्थानीयाश्च Sk.

१६. वसतीवर्येकधनाख्येन मधुनोदकेन सोमलक्षणमुदकम् Sk.

१७. संवृञ्चन्त्यः P.
संप्रमुञ्चन्त्यः D.
माधुर्यरसेन युक्तं पयः पृञ्चन्तीः गवादिषु योजयन्त्यः Sy.
पर्चयन्त्यः Sk.

**अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ॥१७॥**

अमूर्याः[१] । अमूः । याः । उप[२] भवन्ति । सूर्ये[३] । याभिः । वा । सूर्यः । सह भवति[४] । ताः[५] अस्माकम् । यज्ञम् । गच्छन्तु[६] ।

**अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः । सिन्धुभ्यः कर्त्वं हविः ॥१८॥**

अपो देवीः । अपः । देवीः । उपह्वये । यासु । गावः[७] । पिबन्ति । अस्माकम् । ताभ्यो[८] हि[९] । कर्तव्यमस्माभिः । हविः[१०] ।

**अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तये । देवा भवत वाजिनः ॥१९॥**

अप्स्वन्तः[११] । अपाम्[१२] । अन्तः । अमृतम् । "अमृतं[१३] वा आपस्तस्मादद्भिरवतान्तमभिषिञ्चति"[१४] इति ब्राह्मणम्" । अप्स्वेव । भेषजं[१५] विविधौषधिषु[१६] प्रादुर्भूतम् । अपाम् । स्तोत्राय[१७] । इन्द्रियाणि[१८] । बल-युक्तानि[१९] । भवन्ति[२०] ।

---

१. Omitted by P. and D.

२. उद् M. सूर्ये उप समीपेनावस्थिताः । 'आपः सूर्ये समाहिताः' (तैः० आ०) इति Sy.

३. Omitted by P. and D.

४. भवन्ति P.

५. सूर्येणैकस्थाना आदित्यमण्डलस्थास्ताः Sk.

६. गच्छत D. प्रीणयन्तु Sy. वर्धयन्तु वा Sk.

७. याः गावः पिबन्ति नः । या आपः । शसि त्रल् Sk.

८. स्यन्दन्तीभ्योद्भ्यः . . . . . . . . तासामर्थाय । कृत्यार्थे । पञ्चमीभ्यस् वा । स्यन्दन्तीभ्यः Sk.

९. ह P.

१०. वसतीवर्येकधनाभ्य एकदेशमादाय कर्तव्यं सोमलक्षणं हविः Sk.

११. स्पा अन्तः P.

१२. जलेषु मध्ये पीयूषं वर्तते Sy.

१३. अन्तः । अमृतम् । अमृतम् is missing in M.

१४. अस्माद् D.

१५. क्षुद्रोगनिवर्तकस्यान्नस्याप्कार्यत्वात् । Sy. अप्स्वेव भेषजं व्याध्यपनायकं सुखम् Sk.

१६. ०षधीषु D. M.

१७. प्रशंसार्थम् Sy. तज्ज्ञात्वा तासामपामेव प्रशंसनाय Sk.

१८. इन्द्राणि M. ऐन्द्राणि P. ऋत्विजादयो ब्राह्मणाः Sy. हे देवा यूयं हविर्लक्षणान्नेन तद्वन्तो भवत । अपः स्तोतुं हविरुपकल्पयत Sk.

१९. वेगवन्तो भवत शीघ्रं स्तुतिं कुरुतेत्यर्थः Sy.

२०. भवतः P. D. M.

**अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।**
**अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ॥२०॥**

**अप्सु[1] मे।** ओषधीशः सोमः[2]। अपाम्। अन्तः। विश्वानि। भेषजानि सन्तीति। मम। अब्रवीत्। अग्निम्[3]। च। सर्वस्य सुखस्य[4] भावयितारमप्सु स्थितम्। स्वरूपेण[5] चोदकानि। विश्वभेषजान्युवाच[6]।

**आपः पृणीत भेषजं वरूथं तन्वे मम । ज्योक् च सूर्यं दृशे ॥२१॥**

**आपः पृणीत[7]।** आपः! । प्रयच्छत[8]। भेषजम्[9]। उपद्रवाणां वा रक्षाभूतम्[10]। मम। शरीरस्य[11]। चिरम्। च। सूर्यं[12] माम्[13]। द्रष्टुम्। कुरुत[14]।

**इदमापः प्र वहत यत्किं च दुरितं मयि ।**
**यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥२२॥**

**इदमापः।** इदम्। पापम्[15]। आपः! अपनयत[16]। यत्[17]। किम्। च। मय्यस्ति।

---

१. Omitted by P. अप्स D.
२. सोमोवाम् M.
३. वैद्युताख्यमग्निम् Sk.
४. सर्वस्य जगतः सुखकरमेतन्नामकञ्चाग्निम्। तथाच तैत्तिरीयाः–'अग्नेस्त्रयो ज्यायांसः' इत्यनुवाके 'सोऽपः प्राविशत्' इत्यग्नेरप्सु प्रवेशमामनन्ति Sy.
५. लतागुल्मवृक्षमूलादीनामौषधानां वृष्टिजन्यत्वेन जलवर्तित्वं प्रसिद्धम् Sy. स्वयमप्यापः सर्वस्य भेषजभूताः Sk.
६. ०जास्युवाच P.
७. वृणीत P.
८. पूरयत। 'पॄ पालनपूरणयोः' Sy. पालयत। . . . . . पॄ पालनपूरणयोः। पृण दाने। हे आपः! मम तन्वे वरणीयं भेषजं दत्तेति वा Sk.
९. आत्मान्तर्गतं भेषजम् Sk.
१०. रक्ष० P. M. रोगनिवारकम् Sy.
११. शरीरार्थम् Sy. वरणीयं शरीरार्थाय मच्छरीरं भेषजयितुम् Sk.
१२. सूर्य D. सूर्यं द्रष्टुं नीरोगा वयं शक्नुवाम Sy. सूर्यं . . . द्रष्टुं चक्षुर्दत्त। तुमर्थे. . . . . चक्षुर्लाभात्सूर्यश्चिरं दृश्यते। चिरं द्रष्टुं सूर्यं पृणीत इति वा। चक्षुःकारणं सूर्यः। तल्लाभाच्चक्षुषोऽपि लाभः। एतदुक्तं भवति। शरीरभेषजं च मे दत्त। अविकलेन्द्रियतां चिरं सूर्यस्य संदर्शनायेति Sk.
१३. मा P. तां D.
१४. कुरुतः M. कुत P.
१५. दुरितम् M. दुरितमज्ञानान्निष्पन्नम् Sy.
१६. अपहयत D. मत्तोऽपनीय प्रवाहेणान्यतो नयत Sy.
१७. यत् किञ्च कायिकं दुरितम् Sk.

यत्[1]। वा[1]। अहमद्रोग्धव्येभ्यः[1] पित्रादिभ्यः। अभिदुद्रोह[2]। यत्। वा। शप्तवानस्मि। अनृतमानृतेऽर्थे[3] शपथं कृतवानित्यर्थः[4]।

**आपो अद्यान्वचारिषं रसेन समगस्महि।**
**पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥२३॥**

आपो अद्य[5]। उदकानि[6]। अद्य। अन्वचारिषम्[7]। अपां रसेन च[8]। सङ्गता उक्तैकवचनबहुवचनयोः सङ्गतिः[9]। रसवान्[10]। अग्ने! मत्समीपम्[11]। आगच्छ। तम्[12]। मां त्वम्[13]। वर्चसा। संसृजाप्सु[14] स्थितेति।

**सं माग्ने वर्चसा सृज सं प्रजया समायुषा।**
**विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः ॥२४॥**

सं माग्ने। संसृज। माम्। अग्ने[15]!। वर्चःप्रभृतिभिः[16]। तम्। माम्[17]। देवादयश्च[18]। जानीयुः[19][20]।

---

१. याद्याहमन्द्रोन्धव्येभ्यः M. अहं यजमानः . . . सर्वतो बुद्धिपूर्वकं द्रोहं कृतवानस्मि Sy. यच्चाहमद्रोग्धव्यं मनसा द्रुग्धवान् तन्मानसं पापं च Sk.
२. हृभिदु॰ P.
३. अन्नृतमन्नृते॰ M. अनृतमनृते॰ S. अपि चानृतमुक्तवान् इति Sy. यच्चाक्रुष्टवान् वाचिकमप्यनृतमपनयत। आपो मदीयमनृतवचनजनितं च Sk.
४. V. M. ignores उत
५. द्य M.
६. अपोऽद्याहमागतवान्। यदपां माहात्म्यं तत्प्रकाशितम् Sk.
७. जलान्यनुप्रविष्टोऽस्मि Sy.
८. Omitted by P. and D. अतो 'यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति' (N. 13. 13.) इति स्मरणात्। ताद्भाव्यप्रतिपत्तेरपां रसेन सङ्गता वयम् Sk.
९. Omitted by P.
१०. अवसान् P. जले वर्तमानत्वेन पयोयुक्तः Sy. पयस्वान् हविष्मान्। मया उपकल्पितहविष्कः सन् इति वा। मह्यं दातुमिति वा Sk.
११. अस्मिन्कर्मण्यागच्छ Sy.
१२. योऽहं हविर्दाता स्तोता वा तं मां दीप्त्याऽन्नेन वा सम्बन्धय। वर्चो मह्यं देहीत्यर्थः Sk.
१३. P. reads म्मात्वं for तम्। मां त्वम्।
१४. ॰जताप्सु P. मां तेजसा संयोजय Sy.
१५. P. reads मग्ने for माम्। अग्ने।
१६. वर्चसः प्र॰ M. समो बहुत्वात् सृजेरपि। दीप्त्याऽन्नेन वा संबन्धय। पुत्रेण च संबन्धय जीवितेन च सम्बन्धय। त्वत्प्रसादाज्जीवाम च Sk.
१७. M. reads संमा for तम् माम्। अस्य मे यजमानस्य . . . अनुष्ठानं जानीयुः Sy. १८. सोमपातारः Sy.
१९. जानीयः P. एतं कामम्। . . . ज्ञानेन चात्र करणं लक्ष्यते। कुर्यान्मम वर्चः प्रजायुष इत्यर्थः। लोके हि यः प्रार्थनया कारयितुमिष्यते स उच्यत इदं जानीहीति Sk.
२०. Ms. D. puts the figure ॥२३॥ here to indicate the end of the twenty-third hymn. No such number is given in P. and M.

## I.24.

**कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।**
**को नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥१॥**

**कस्य[१] नूनम्** । अथ शौनःशेपम्[२] । कः[३] कतम इति प्रजापतिं[४] पृच्छति[५] । इदानीं[६] देवानां मध्ये । कस्य[७] । शोभनम् । नाम । वयमुच्चारयामः[८] । स[९] प्रजापतिः । मुमूर्षूनस्मान्[१०] । पुनरपि । महत्यै । पृथिव्यै[११] । ददातु ततोऽहम्[१२] । मातापितरौ[१३] पश्येयम् ।

अनया[१४] गतोत्तरेति ।

**अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम ।**
**स नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥२॥**

**अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन्भागमीमहे ॥३॥**

**अभि त्वा देव[१५]** । अभियाचामहे । देव ! सवितः ! त्वाम् । धनानाम्[१६] । ईश्वरम् । नरपशोरात्मीयं[१७] भागम्[१८] । सदा । रक्षितः[१९] ।

---

१. तस्य D.
२. शुनःशेपं M.
३. Omitted by P.
४. प्र प्रजा० P.
५. पृच्छन्ति D.
६. तदानीं P.
७. तस्य M.
कः प्रजापतिः . . . कस्य प्रजापतेः सर्वप्राणिनां सुखतमस्य Sk.
८. उच्चार च म. P. स्तुमः Sk.
९. स्व P.
१०. को देवो मां मुमूर्षुमपि महत्यै पृथिव्यै . . . दद्यात् Sy.
११. स्तुतः सः अस्मभ्यं महतेऽदीनत्वाय पुनरायुर्ददातु। महददीनत्वमिति। अमि वा ङे। येनाहमेषां वशवर्तितामतीतः सन् पुनरपि महददीनत्वं गच्छामीति वा। अदितिर्वाग्वा। महतीं वाचं पुनर्ददातु यथाऽन्या देवता अपि स्तुमः Sk.
१२. कुतो D. इतो P.
१३. ०पिततोरा D.
तेन दानेनाहममृतः सन् पितरं मातरञ्च पश्येयम् Sy.
१४. अनया यमनया P.
१५. देवं D.
१६. वरणीयानां धनानाम् Sy.
वरणीयानामीश्वरमायुरादीनाम् Sk.
१७. ०रात्मीयं P.
१८. भजनीयं धनम् Sy. आयुषो भागम्। तद्धि सर्वप्राणिनो भजन्त इति। आयुर्वा तदंशं वा ईमहे। योऽन्यतमो भाग उच्यते Sk.
१९. क्षित P. क्षिता (?) D.
मरणादिभ्यः सर्वदा प्राणिनां रक्षितः Sk.

यश्चिद्धि तं इत्था भगः शशमानः पुरा निदः । अद्वेषो हस्तयोर्दधे ॥४॥

यश्चिद्धि[1] । य[2] एवंविधः । भगः[3] । सर्वैरेव[4] स्तूयमानः । द्वेष्टृवर्जितः[5] । निन्दितुर्मनुष्यात्[6] । पूर्वमेव । स्तोतुर्हस्तयोः[7] । इत्थम्[8] । निदधे[9] । उत्तरत्र सम्बन्धः[10] ।

भगभक्तस्य ते वयमुदशेम तवावसा । मूर्धानं राय आरभे ॥५॥

भगभक्तस्य । तेन भाग्येन संभक्तस्य[11] । तव[12] । वयम्[13] । रक्षणेन । उद्वचाप्नुमः[14] । धनस्य । परमं[15] पदम् । आरब्धुम्[16][17] ।

---

१. यच्चिद्धि P. D.
२. यं D.
३. भागः D.
भजनीयः Sk.
४. ०रपि D.
५. द्वेव० P.
निन्दायाः पूर्वं स्वकीयत्वेन व्यवस्थिते सति तदानीं द्वेषरहितः Sy.
नहि कस्यचित्प्राणिन आयुस्तदंशं वा द्वेष्टि । कदा पुनरायुर्भागमायुरेव वाभियाचध्वे Sk.
६. निन्दितुं M.
अत्यन्तनिन्दितात् तिर्यक्पशुसदृशान्मरणात् पुरा । यावत् तिर्यक्पशुवदत्यन्तकुत्सितं विशस्यमाना म्रियामहे । निन्दतिर्विशसनार्थ एव वा । पुरा विशसनात् । विशसितुर्वा । यावन्न विशस्यामह इत्यर्थः Sk.
७. तोतुर्ह० P.
तव हस्तयोः Sy.
हे सवितः यस्तव हस्तयोर्निहितः Sk.
८. P. reads हस्तयोतित and D. reads हस्तयोरितं for हस्तयोः । इत्थम् ।
स इत्थंभूतः । इत्था सत्ये । अविसंवादः । . . . एवमन्यथा वास्या अर्थयोजना पूर्वानपेक्षया । इत्थाऽमुत्रार्थे । भगो धनम् । यत्तवामुत्र स्वर्गे धनं तत् स्तुवन्नहं मन्निन्दितुः पूर्वं द्वेषवर्जित आत्मनो हस्तयोः धारयेयम् । मह्यं तद् दद्याः । यद्वृत्तेनासम्बन्धात् छान्दसत्वान्निघाताभाव इति व्याख्येयम् Sk.
९. निदधातु P.
१०. V. M. ignores चित् । हि । ते ।
११. धनेन संयुक्तस्य Sy.
भगो देवस्तेनापि सेवितस्य । भजनीयेन हविषा स्तुत्या वा नृभिश्च सेवितस्येति वा Sk.
१२. कव D.
१३. चयं P. D. M.
१४. उद्याप्तुमः M.
उध्याप्तुं . . . मः D.
त्वदीया वयमतोऽप्यूर्ध्वमायुः प्राप्नुयाम । तव पालनहेतुना । त्वयाऽतो मरणाद्रक्षिताः सन्त इत्यर्थः Sk.
१५. उत्कर्षम् Sy. मूर्धानं च प्राप्नुयाम । उत्कृष्टं च धनमुपभोगान् यागान् वा आरब्धुमुपभोक्तुं यष्टुं वा Sk.
१६. आरब्धाः P.
आरब्धाम् M. D.
१७. V. M. ignores ते ।

नहि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः ।
नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वम् ॥६॥

नहि ते। नहि। तव वरुण[1]! बलम्[2] अभिभवसामर्थ्यम्[2]। शत्रूणामभिमननं[3] च। महता वेगेन पतयन्तः[4]। श्येनादयः। अपि। आपुः[5]। न च। इमाः। आपः। सततम्। चरन्त्यः। न च। ये[6] पर्वतादयः[7]। वातस्यापि[8]। महत्ताम्[9]। प्रहिंसन्ति[10]।

अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः ।
नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥७॥

अबुध्ने राजा। अमूलेऽनालम्बने[11]ऽन्तरिक्षे[11]। वरुणः। राजा[12]। तेजस उदकस्य[13] वा। सङ्घातम्[14]। ऊर्ध्वम्[15]। धारयति[16]। शुद्धबलः[17]। ते च रश्मयो[18] नीचीनाग्राः[19]। तिष्ठन्ति। तेषामेषाम्[20]। मूलम्। उपरि

१. वरुणश्चात्रोक्तस्थान आदित्यः Sk.
२. बलमिवभवसामर्थ्यं P. त्वदीयं शरीरबलम्। त्वदीयं पराक्रमं तव सामर्थ्यम् Sy.
धनबलं वा सेनालक्षणम्। सेनापतिः ...सहः शारीरं बलमपि Sk.
३. त्वदीयं कोपमपि। त्वयि क्रुद्धे सति सोढुमशक्ता इत्यर्थः Sy. नापि क्रोधम् Sk.
४. वतयन्तः P. पक्षिणोऽप्यमी गच्छन्तो न प्राप्नुवन्ति ... अतिमहत्त्वात्तवैतानि न प्राप्युः Sk.
५. P. and D. read व्यापुः for अपि । आपुः।
६. वायोर्गतिविशेषाः Sy.
७. पर्वत पर्वानिव भावयो P.
८. ये वायोर्हिंसन्ति गतेर्महत्त्वात्तेऽपि न। मरुतो मनआदयो वा। वयांस्यापोऽतिवेगवन्तोऽन्येऽपि त्वत्क्षत्रसहो मन्यूनामन्तं न प्रापुः। Sk.
९. वेगम् Sy.
१०. ०सति P. अतिक्रमं कर्तुं न शक्ता इत्यर्थः Sy.
११. नबलेनान्त० P.
बुध्नमधोभागः। स इतरयोर्भागयोराश्रयः। बुध्नत्वाश्रयत्वयोः संबन्धाद् बुध्नशब्देनाश्रयो लक्ष्यते। अबुध्नेऽनालम्बनेऽन्तरिक्षे Sk.
१२. ईश्वरो दीप्तो वा Sk.
१३. आमि ङस्। रश्मीनाम् Sk.
१४. संयातम् P. D. M.
१५. ऊर्धम् D. ऊर्द्धम् P.
१६. धारगति D.
१७. शुद्धञ्चलः P.
१८. रमयो P.
१९. नीवीनाग्राः। M.
अधोमुखाः Sk.
२०. P. reads तिष्ठन्तेषामेषा for तिष्ठन्ति। तेषामेषाम्। D. reads तेषामेषा for तेषामेषाम्।
एषां वनानां स्तूपमबुध्ने ख आदित्यमण्डलस्योर्ध्वं नीचीनांश्च भुवि रश्मीन् धारयति। परः पादोऽन्यार्थः। तत्सम्बन्धार्थं यत्तदौ स्तः Sk.

भवति ।[1] अस्माकम्[2] । अन्तरमृतानाम्[1] । निहितानि[1][3] । भवन्तु । प्रज्ञानानि[1] ।

**उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उं ।**
**अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥८॥**

उरुं हि । विस्तीर्णम् । हि । राजा । वरुणः । चकार । सूर्यस्य । गमनार्थम्[4] । पन्थानं[5] ततोऽयम् । अनालम्बने[6]ऽन्तरिक्षे[6] । कृतवान् । सूर्यस्य । पदानि[7] । प्रतिधातुं[7][8] पन्थानं[9] सोऽयम्[10] । हृदयाविधः[11] । शत्रोरपवक्ता[12]ऽस्तु पराभवत्वयमिति[13] वदतु[14][15] ।

---

१. तथा सति ... प्रज्ञापकाः प्राणा ... अस्मासु ... स्थापिताः स्युः, मरणं न भविष्यतीत्यर्थः Sy.

२. M. reads भवतास्माकं for भवति । अस्माकम् ।

३. P. reads अदृतानान्निनितानि. M. reads अम्याकानाभिहितानि for अमृतानाम् । निहितानि ।
य इदं करोति तस्य प्रसादेनास्माकं मनसि निहिताः प्रज्ञाः स्युः । अमि शे । जीवनाशेयम् । जीवत एवान्तःप्रज्ञाः स्युर्न मृतस्य । अथवा 'पिशश्चक्षश्च केतवः ।' इति रश्मौ । ते प्रज्ञानात्मकाः । ते चक्षुर्द्वारेणान्तर्मनसि भवेयुः । चक्षुषा रश्मीन् पश्येमेति प्रार्थ्यते । मुमूर्षूणां हि चन्द्रमा इव आदित्यो दृश्यते । न रश्मिप्रादुर्भावः । आदित्यरश्मिदर्शनद्वारेण चिरजीवित्वमाशास्यते Sk.

४. तस्यानुपूर्वेण गन्तुम् । ... सूर्योऽन्वेतीत्येवमर्थं खे उरुं पन्थानं कृतवानित्यर्थः Sk.

५. वार्त्थानम् P.

६. अनालबलन्त० P.
पादरहिते Sy. यत्र पदं निधातुं न शक्यतेऽप्रतिष्ठितत्वात् तदपदमन्तरिक्षम् । तत्रात्मीयौ पादौ निधातुं करोति । ... अप्रतिष्ठितेऽप्यन्तरिक्षे पादौ निधत्ते Sk.

७. पादौ प्रक्षेप्तुम् Sy. ८. प्रतिधात्वं D.

९. पन्धा P. पूर्वत्र रथस्य मार्गः, अत्र पादयोरिति शेषः Sy. यद्वा—अपदे यूपे बद्धेन मया गन्तुमशक्ये भूप्रदेशे पादौ प्रक्षेप्तुमुपायं बन्धविमोचनरूपं करोत्वित्यर्थः Sy.

१०. धोयं P.

११. 'दुर्धियो हृदयाविधः ।' इति शत्रौ । परुषवचनायोग्यव्यवहारसमाचरणादिभिर्यो हृदयं विध्यति तस्य । अपेत्य वक्ता वा अपवक्ता । वक्तुं समर्थेभ्यः पृथग्भूय एक एव वक्ता यावत् किञ्चिद् दुर्वचस्तस्य सर्वस्य । हृदयाविधः । चिदपौ ङसो निर्देशात् सकाशादिति च । यो हृदयं विध्यति । विध सम्यग् ज्ञाने । हृदयेन वा । तस्यापि सकाशात् । हृदयज्ञस्यापि सकाशादपेत्य दुर्वचनीयस्य वक्तेति वा Sk.

१२. ०वत्तास्तं D. ०वक्तास्त्व P. शत्रोरप्यपवक्ता, अपवदिता, निराकर्ता भवतु Sy. १३. पर भावत्वयमिति P. परादवत्वयमिति M.

१४. वदत्य P.

१५. V. M. ignores उ । उत । चित् ।

शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।
बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥९॥

**शतं ते**[1]। शतम्[2]। ते। राजन्! भैषज्यानि[3]। सहस्रं[3] च। विस्तीर्णा। गम्भीरा[4] मद्विषया[5]। सुमतिः[4]। तव[4]। अस्तु। स त्वम्। अस्मत्तः। कृच्छ्रम्[6]। दूरे[7]। पराङ्मुखम्[7]। बाधस्व[8]। कृतम्। च पापम्। प्रमोचयेति[9]।

अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥१०॥

**अमी य ऋक्षाः**[10]। नक्षत्राणि[11]। रात्रौ। दृश्यन्ते। क्व[12] तानि। दिवा। गच्छन्ति[12] तथा। दीप्यमानः। चन्द्रः। रात्रौ। गच्छति। भवति च दिवा[13] तिरोहितस्तानीमानि। शत्रुभिरहिंसितानि। वरुणस्य। व्रतानीति[14][15]।

---

१. शतं ते omitted by M.
२. सहस्रमपि Sk.
३. भेषज्यानि M. P. adds भैषज्यानि सहस्रं च before भैषज्यानि। बन्धनिवारकाणि शतसंख्याकान्यौषधानि वैद्या वा सन्ति Sy. अस्मदादीनामार्तानां जीवनोपाया एतद्वन्तो वैद्या वा Sk.
४. तवास्मदनुग्रहबुद्धिर्गाम्भीर्योपेता स्थिरास्तु Sy. अन्यैर्दुरवगाहा च शोभनानुग्रहात्मिका बुद्धिस्तवास्मास्वस्तु। अस्मदनुग्राहको भव Sk.
५. गम्भीरा मद् is missing in M.
६. अस्मदनिष्टकारिणीं पापदेवताम् Sy. मृत्युदेवतां निर्ऋतिम् Sk.
७. दूरमपराङ्मुखं P. and D. अस्मत्तो व्यवहिते देशे स्थापयित्वा Sy.
८. दूरं गमय Sk.
९. प्रकर्षेण मुक्तं नष्टं कुरु Sy. अपनय Sk.
१०. ऋक्षाः स्तृभिरिति नक्षत्राणाम्। नक्षत्राणि नक्षतेर्गतिकर्मणः। . . . ऋक्षा उदीर्णानीव ख्यायन्ते। N.3.20.
११. सप्त ऋषयः। यद्वा ऋक्षाः सर्वेऽपि नक्षत्रविशेषाः Sy.
१२. क्वापि गच्छेयुः, न दृश्यन्त इत्यर्थः Sy. दिवा नैतानि दृश्यन्ते। अतो न जानीमः क्वापि गच्छन्तीति।. . .चिदपौ। कुहचिद् दिवा इति समानाधिकरणे वा। आङमध्याहरतोयुश्च। क्वचिदहन्यागच्छन्ति। क्वचिदेवाहनि दृश्यन्ते। न सर्वेष्वहस्सु। यदा सूर्यस्य समस्तग्रहणं भवति तदैव नक्षत्राणि दृश्यन्तेऽहनि Sk.
१३. M. reads यदि वा for च दिवा।
१४. इति omitted by P. कर्माणि। वरुणः . . . तान्येतानि नक्षत्ररूपाणि करोति। कथम्। वरुणो हि दिवा स्वभासा नक्षत्राणां भासः छादयति। न रात्रौ। ततो रात्रौ दर्शनमहन्यदर्शनं तेषाम्। नैषामेव। चन्द्रमसोऽपि दीप्तिर्वरुणकर्मणा। काशृ दीप्तौ। शतृ च। विविधं दीप्यमानश्चन्द्रमा रात्रावागच्छति। एषोऽपि वरुणकर्मणा। कथम्। तदीयो ह्येको रश्मिः सुषुम्णाख्यः। स चन्द्रमसं दीप्यते। तेन। अथवा य इति व्यत्ययेन बहुवचनं पुँल्लिङ्गता च। ददृश्रे, ईयुः, एति, इति क्रियाभिरेव सम्बध्यते। न ऋक्षैर्यदिमानि नक्तं दृश्यन्ते यच्च दिवा क्वापि गच्छन्ति यच्च चन्द्र एति दीप्त एतानि त्रीण्यपि वरुणस्याहिंसितानि कर्माणि Sk.
१५. V. M. ignores अमी। ये। निहितासः। उच्चाः। चित्।

**तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः।**
**अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥११॥**

तत्त्वा[1] यामि। तत्। त्वाम्[2]। अहम्। याचामि। स्तोत्रेण। वन्दमानः[3]। तदेव[3] च। आशास्ते[4]-ऽयं च हरिश्चन्द्रः। यजमानः। हविर्भिस्तत् त्वम्[5]। अक्रुध्यन्[4]। वरुण! इह[6]। बुध्यस्व तदाह। बहुस्तोत्र[7]!। मा। अस्माकम्[8]। आयुः। प्रमोषीरिति।

**तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे।**
**शुनःशेपो यमह्वद्गृभीतः सो अस्मान्राजा वरुणो मुमोक्तु ॥१२॥**

तदिन्नक्तम्[9]। तद्। एव। नक्तं। तद्। दिवा। मह्यं[10]। सर्वे[11] कथयन्ति—वरुणस्त्वां मोक्तुमीष्ट इति। तद्। एव। हृदयस्य। च। प्रज्ञा। मह्यं विचष्टे[12]—ममापि तथा बुद्धिर्भवति। यूपे बद्धः[13] शुनःशेपः। यं[14] देवम्। आहूतवान्। सः। राजा। वरुणः। अस्मान्[15]। मुमोक्तु[16]।

**शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः।**
**अवैनं राजा वरुणः ससृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥१३॥**

शुनःशेपः[17]। शुनःशेपः[18]। ह्ययम्[19]। आहूतवान्। गृहीतः[20]। त्रिषु[21]। यूपस्य स्थानेषु[22]। बद्धः[23]।

---

१. P. and D. read तत्वा for तत् त्वा
२. P. and D. read तत्वाम् for तत्। त्वाम्।　३. वन्दमानास्तु देव P. D. M.　तदायुरेव Sk.
४. अनादरमकुर्वन्। 'हेडृ अनादरे' Sy. प्रार्थयते Sk.　५. P. D. and M. read तत्वम् for तत् त्वम्। स त्वम् S.
६. इह कर्मण्यवस्थायां वा वर्तमानयोरावयोः Sk.
७. बहुभिः स्तुत्य! Sy.
८. P. reads बहुस्तोत्रास्माकं and M. बहुस्तोत्रमस्माकं for बहुस्तोत्र! मा। अस्माकम्।
९. तदित्तदेव वरुणविषयं स्तोत्रम् Sy.
१०. मह्यं शुनःशेपाय Sy.　११. सर्वं M. कर्तव्यत्वेनाभिज्ञाः Sy. मह्यमाहुरॠषयो ब्राह्मणा वा त्वद्विदः प्राणाधिदेवता वा Sk.
१२. तदेव कर्तव्यत्वेनाविचष्टे। सर्वतो विशेषेण प्रकाशयति Sy. आभिमुख्येन कथयति। हृदयेनाप्यहं तदेव जानामीत्यर्थः। किं पुनस्तद् वरुण आर्तानामार्तिहर इत्येतल्लोकतः स्वतश्च जाने Sk.
१३. बन्धः M.　१४. अयं M.
१५. अस्मान् शुनःशेपान् Sy.
१६. बन्धान्मुक्तं करोतु Sy.
१७. ०शेफं D. ०शेप M.　१८. ०शेफः D. शेपे M.　१९. ह्यसम् P.　२०. बन्धनाय गृहीतः Sy.　२१. पशोस्त्रिषु बन्धनं न युज्यते। तत् पुरुषपशुत्वात्। न चेद् विशसने निश्चलो न स्यादिति पादयोः कट्यां च बध्यते Sk.　२२. द्रोः काष्ठस्य यूपस्य पदेषु प्रदेशविशेषेषु Sy.　२३. वधः P.

अदितेः[1] पुत्रम्। तम्। वरुणः[2]। अवसृजतु। विद्वान्[3]। अहिंसितः[4]। पाशान्[5]। विमुमोक्तु[6] पाशविमोचनं[7] फलमवसर्गस्य[8]।

अव॑ ते॒ हेळो॑ वरुण॒ नमो॑भि॒रव॑ य॒ज्ञेभि॑रीमहे ह॒विर्भिः॑।
क्षय॑न्न॒स्मभ्य॑मसुर प्रचेता॒ राज॒न्नेनां॑सि शिश्रथः कृ॒तानि॑ ॥१४॥

अव ते हेळः[9]। अवगच्छत्विति[10]। याचामहे। विनाशयामः[11][12]। तव। वरुण! नमस्कारैः। क्रोधम्[11]। अव। यज्ञैः। हविर्भिश्च। निवसन्[13]। अस्मदर्थम्[14]। बलवन्[15]! प्राज्ञ[16]! राजन्[17]! कृतानि। पापानि[18]। विनाशय[19]।

उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्मदवा॑ध॒मं वि म॑ध्य॒मं श्र॑थाय।
अथा॑ व॒यमा॑दित्य व्र॒ते तवाना॑गसो॒ अदि॑तये स्याम ॥१५॥

उदुत्तमम्। उत्तमम्[20]। वरुण! पाशम्। उच्छ्लथय[21]। अस्मत्तः। मध्यमम्[22]। विश्लथय[23]।

---

१. भीतो D.　अदितो P.

२. वरुण D.
हीति यच्छब्दात् तच्छब्दश्च। तस्मादार्तानुकम्पत्वादेनं शुनःशेपं राजा वरुणोवसृज्यात्। अवसर्गोऽभ्यनुज्ञा। जीवत्वयं मैनं मारयतेत्येवमनुजानीयादित्यर्थः Sk.

३. अनुज्ञायास्मदार्ततां वा जानन् Sk.

४. ०सिता P.

५. पाशात् P. D.

६. विमोक्तु D.

७. ०विमुमोघनं P.

८. V. M. ignores राजा

९. हेला D.

१०. ०तीति P.

११. वरुणं परितोष्य क्रोधमपनयामः Sy.
अपनयामः Sk.

१२. ०शयामासः M.

१३. अस्मिन् कर्मणि निवसन् Sy.
नमस्कारस्तुतिसोमयागपुरोडाशादिभिरपनीतहेळस्त्वम्। क्षि निवासगत्योः। निवसन् इहागच्छन् वा Sk.

१४. अस्मद्दक्षं M.

१५. बलवत् P. D. M.
अनिष्टक्षेपणशील Sy.
असवः प्राणाः। मतुपि रः। प्राणबलवन्! Sk.

१६. प्राज्ञा M.

१७. दीप्त ईश्वरो वा Sk.

१८. पापानि श्लथय। अस्माभिः कृतानि मन्दविपाकानि कुरु। पूर्वकृतपापैरेवाहं बन्धनमरणे प्रापितः। तान्यतोऽपि तावत् शिथिलय येन पुनरीदृशं दुःखं न प्राप्नुयाम्। एनांसीति पाशा एव वाऽभिप्रेताः। अस्मत्पित्रा कृतान् पाशान् शिश्लथो मुञ्च Sk.

१९. ०शयः M.　शिथिलानि कुरु Sy.

२०. ग्रीवायां बद्धमूर्ध्वम् Sk.

२१. अश्वथय P. उच्छ्वथय M.

२२. कट्यां बद्धमपि Sk.　२३. विश्लिषय P.

अवश्लथय । अवमम्[1] । अत ऊर्ध्वम्[2] । अदितेः[3] पुत्र[4] ! त्वत्स्वामिके[5] । ससन्ध्यावन्दनादिके[6] व्रते ।
प्रमादरहिताः[7] । अस्यै पृथिव्यै[8] । स्यामामृताः[9] सन्तः[10][11] ।

I. 25.

**यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि ॥१॥**

**यच्चिद्धि** । यत् । वयम्[12] । तव । अन्यमनुष्यवत्[13] । असत्यस्तेयादिकरणाद् व्रतम्[14] ।
अन्वहम् । हिंसामस्ततस्त्वां[15] स्तुम इति सूक्तोपक्रमेषु[16] क्रियापदमनेकत्र[17] न दृष्टमिति[18] ।

**मा नो वधाय हत्नवे जिहीळानस्य रीरधः । मा हृणानस्य मन्यवे ॥२॥**

**मा नो वधाय** । मा । अस्मान् । आयुधाय[19] । हन्त्रे[20] । क्रुद्धस्य[21] स्वभूताय । वशं नय[22] ।

---

१. M. reads अव मम् for अवश्लथय । अवमम् । पादयोर्बद्धम् Sk.

२. अतजूर्धम् P. अथ पाशत्रयविमोक्षानन्तरमेव Sk.

३. अभितो D. अदित्यै P. ४. वृत्र P.

५. त्वं स्वामिके P.

६. ससध्यवन्दनादिक P. त्वदीये कर्मणि Sy. तव यागकर्मणि त्वद्देवत्येऽस्मिन् यागे Sk. व्रतमिति कर्मनाम । निवृत्तिकर्म वारयतीति सतः । इदमपीतरद् व्रतमेतस्मादेव वृणोतीति सतः । अन्नमपि व्रतमुच्यते यदावृणोति शरीरम् । N. 2. 13.

७. अपराधरहिताः Sy. अपगतपापाः Sk.

८. खण्डनराहित्याय Sy. वागर्थम् Sk.

९. M. reads पृथिव्यस्या माता for पृथिव्यै । स्यामामृताः । १०. सन्ता P.

११. Ms. D. puts the figure ॥२४॥ here to indicate the end of the twenty-fourth hymn. No such number is given in P. and M.

१२. अयं P. D.

१३. हे वरुण यथा लोके विशः प्रजाः कदाचित्प्रमादं कुर्वन्ति तथा वयमपि ते तव सम्बन्धि यच्चिद्धि यदेव किञ्चिद् व्रतं कर्म द्यविद्यवि प्रतिदिनं प्रमिनीमसि प्रमादेन हिंसितवन्तस्तदपि व्रतं प्रमादपरिहारेण साङ्गं कुर्विति शेषः Sy.

१४. यागकर्म Sk.

१५. ० मंस्तत D. प्रमादेन करणमस्य यागस्य हिंसा · · · यद्यप्यन्यमनुष्यवद् अहन्यहनि प्रमादेन यागं कुर्मस्तथापि माऽस्माकं तापाय हननाय च पूर्वक्रुद्धस्य वशं नैषीरिति वा Sk.

१६. ०पमेषु P. १७. Omitted by M.

१८. V. Mādhava ignores चित् । हि । प्र । देव । वरुण ।

१९. आधाय M. त्वत्कर्तृकाय वधाय Sy. तापाय Sk.

२०. हन्तुः पापिहननशीलस्य तव सम्बन्धिने Sy. हननाय Sk.

२१. अनादरं कृतवतः Sy.

२२. संसिद्धान् विषयभूतान् मा कुरु Sy. योऽस्मान् ताडयति मारयति च तस्य पूर्वक्रुद्धस्य मा वश्यान् कार्षीः Sk.

मा च। हृणानस्य[१]। मन्यवे[२]। हिंसापरो हृणानः।

**वि मृ॒ळी॒काय॑ ते॒ मनो॑ र॒थीरश्वं॒ न सन्दि॑तम्। गी॒र्भिर्व॑रुण सीमहि ॥३॥**

**वि मृळीकाय**। सुखार्थम्[३]। सारथिः[४]। बद्धम्[५]। इव। अश्वम्। तव क्रुद्धम्[६]। मनः। स्तुतिभिः। विमोचयाम[७] इति[८]।

**परा॒ हि मे॒ विम॑न्यवः॒ पत॑न्ति॒ वस्य॑इष्टये। वयो॒ न व॑स॒तीरुप॑ ॥४॥**

**परा हि मे**[९]। मम। विविधा[१०] इच्छा[११]बुद्धयः[१०]।[१२] श्रेयइच्छार्थं[१३] वरुणं राजानं प्रति। परापतन्ति[१४]। यथा। पक्षिणः। आवासस्थानान्यनुभूतानि[१५]। उपगच्छन्ति[१६]।

**क॒दा क्ष॑त्र॒श्रियं॒ नर॒मा वरु॑णं करामहे। मृ॒ळी॒काया॑रु॒चक्ष॑सम् ॥५॥**

**कदा क्षत्रश्रियम्**। बलं यत्र यत्र[१७]। कदा तम्[१८]। नेतारम्[१९]। वरुणम्। अभिमुखं कुर्मः[२०]। सुखार्थम्[२१]। बहूनां द्रष्टारम्[२२]।

---

१. भणानस्य M. क्रुद्धस्य Sy. इदानीं क्रुध्यतः। यः साम्प्रतमेव क्रोद्धुमिच्छति तस्यापि क्रोधार्थं मास्मान् वश्यान् कार्षीः Sk.

२. मन्यवेऽहिंस्वामिके सन्ध्यावन्दनादिके व्रते प्रमादरहिता अस्यै पृथिव्यै स्यामामृतास्सन्तः यच्चिद्धि यद्यन्तवान्यमनुष्यवत् असत्यस्तेयादिकरणाद्व्रततमन्वहं हिंसामस्ततस्त्वां स्तुम इति सूक्तोपक्रमेषु क्रियापदमनेकत्र दृष्टमिति मा नो वधाय मास्मानायुधाय हन्त्रे क्रुद्धस्य स्वभूताय वशन्नयो मा च हृणानस्य मन्यवे P.

३. आत्मनो जीवितलक्षणाय सुखाय Sk.

४. रथस्वामी Sy. रथे सम्यग् बद्धमश्वं रथीर्यथा विमोक्ष्यति तद्वत् Sk.

५. सम्यक् खण्डितं दूरगमनेन श्रान्तम्। यथा स्वामी श्रान्तमश्वं घासप्रदानादिना प्रसादयति तद्वत् Sy. ६. क्रुद्ध P.

७. विशेषेण बध्नीमः, प्रसादयाम इत्यर्थः Sy. विगतान्तकर्मा करोमि। वेः स्यतिर्विमोचने। विमुञ्चामः। षोऽन्तकर्मणीति श्यनि। षिञ् बन्धने इत्यस्यैव वा। विगतबन्धनं कुर्मस्त्वन्मनः Sk.

८. V. Mādhava ignores वरुण

९. भि P. १०. क्रोधरहिता बुद्धयः Sy.

११. विधा P. D. १२. बुद्धय P. कामाः Sk. १३. श्रेयस M. अतिशयेन वसुमतो जीवनस्य प्राप्तये Sy. वसुनः। प्राप्तये। इष् गतौ। धनस्याधिगत्यै Sk.

१४. विविधं त्वां प्रति प्राप्नुवन्ति Sk.

१५. S.omits अनुभूतानि.

१६. V. Mādhava ignores हि

१७. Omitted by M. S. adds श्रीः after यत्र यत्र। बलसेविनम् Sy. क्षत्रं बलधनयोः। तद्यत्र श्रयति तम्। बलवन्तं धनवन्तं वा Sk.

१८. कद P. १९. नराकारम् Sk.

२०. अस्मिन्कर्मण्यागतं करवाम Sy.

२१. मज्जीवनसुखाय Sk. २२. बहुदर्शनं वा विमोचनविलम्बनात् परिदेवनैषा Sk.

**तदित्समानमाशाते वेनन्ता न प्र युच्छतः । धृतव्रताय दाशुषे ॥६॥**

तदित्समानम्[1] । तदानीम् । एव । सह[2] । आगच्छतो[3] मित्रावरुणौ[4] । कामयमानौ । नच । प्रमाद्यतः[5] । धृतकर्मणे[6] । यजमानाय कर्मपौष्कल्यार्थमिति[7] ।

**वेदा यो वीनां पदमन्तरिक्षेण पतताम् । वेद नावः समुद्रियः ॥७॥**

वेदा यः[8] । प्रजानाति । यः[9] । अन्तरिक्षेण[10][11] । गच्छताम् । पक्षिणाम् । आवासस्थानं यत्र सायं[12] वसन्ति[13] । वेद च । नावः । समुद्रेण गच्छन्तीर्मनुष्यास्तु[14][15] पततः[16] पश्यन्ति[17] विसृज्यमानाश्च नावो नतु तेषामावासं[18] नच विसर्गस्थानमिति ।

**वेद मासो धृतव्रतो द्वादश प्रजावतः । वेदा य उपजायते ॥८॥**

वेद मासः[19] । वेद[20] । द्वादश । मासान्[21] । धृतसन्ध्यावन्दनादिकर्मा[22] । स्वे स्वे काले प्रजायमानानृतुलिङ्गैः[23] । त्रयोदशमुपजायमानमधिमासं च । वेत्ति ।

---

१. तत्र अमानं P.

२. तदित्-अस्माभिर्दत्तं तदेव हविः Sy. यजमानो यद्धविर्ददाति तत् Sk.

३. साधारणम् Sy. साधारणं मित्रावरुणयोः Sk.

४. आगच्छंतौ D. M. आगच्छत P. तौ व्याप्नुतो भक्षयतो वा। अशू व्याप्तौ। अश भक्षणे Sk.

५. यजमानः केवलाय वरुणायैव ददाति चेदवश्यमुभावप्याशाते न प्रमाद्यतः। ... अथवा आशाते इति लोटि लट्... आवां हरिश्चन्द्रशुनःशेपौ तत्साधारणमायुरश्नवावहै कामयमानौ न प्रमाद्यावः। अत्रापि तस् वसि। यागे स्तुतौ। यतः स्वकर्मणां परित्यक्त्रे स्तोतृभ्यः कामानां दात्रे च वरुणाय यो यागः स्तुतिर्वा तत्र यतो न प्रमाद्यावस्तत-आयुरश्नवावहै Sk.

६. अपरित्यक्तकर्मणेयजमानायोपकर्तुम्Sk.

७. अर्थमिति is missing in M. S. reads ०पौष्कलार्थमिति

८. वेदा यः missing in M.

९. S. omits यः

१०. P. D. and M. read प्रजानामित्यन्तरि० for प्रजानाति। यः। अन्तरि०।

११. ० रिक्षे M.

१२. पांसुवर्जितत्वाद् दुर्ज्ञेयमपि वीनां चान्येषां च पदं जानाति Sk.

१३. वदन्ति M.

१४. गच्छन्तीं M. गच्छन्त्यर् P. समुद्रे भवाया अपि नावः पदं च यो वेद Sk.

१५. मनुष्यस्तु P.

१६. वततः P.

१७. पश्यन्ती M.

१८. M. reads न इत्येषां for नतु तेषां।

१९. मास M.

२०. द्वेद M.

२१. मासाद् P. मासश्चन्द्रमाः। 'वृको मासः' इति चन्द्रे। द्वादशमासा एवात्र Sk.

२२. ०कर्म P. M. स्वीकृतकर्मविशेषः Sy. अपरित्यक्तकर्मा Sk.

२३. ० सृतु० M. तदोत्पद्यमानप्रजायुक्तान् Sy. प्रजासहितान् Sk.

**वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः । वेदा ये अध्यासते ॥९॥**

**वेद वातस्य**। वेद । वायोः। आवासस्थानम्[1]। विस्तीर्णस्य। दर्शनीयस्य। महतः[2]। वेद[3] च। नक्षत्राणि[4] यानि[5] दिव्यध्यासते।

**नि षसाद धृतव्रतो वरुणः पस्त्या३स्वा । साम्राज्याय सुक्रतुः ॥१०॥**

**नि षसाद**। निषीदति[6]। धृतकर्मा[7]। वरुणः। गृहभूतासु नदीषु[8]। साम्राज्यं कुर्वन्[9]। सुप्रज्ञः[10][11]।

**अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति । कृतानि या च कर्त्वा ॥११॥**

**अतो विश्वानि**। अस्माद् वरुणादेवंजातीयकानि । विश्वानि। आश्चर्याणि[12]। प्राज्ञः[13]। अभिपश्यति[14] यान्यनेन[15]। कृतानि। यानि। च। कर्तव्यानि।

**स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत् । प्र ण आयूंषि तारिषत् ॥१२॥**

**स नो विश्वाहा**[16][17]। सः। अस्मान्। सर्वदा[18]। सुक्रतुः[19]। आदित्यः। शोभनेन[20] पथा। कृणोतु[20]। अस्माकम्। आयूंषि च। प्रतारयतु[21]।

---

१. मार्गम् Sy; Sk.
२. गुणैरधिकस्य Sy. महतो बलवतो महतो वेगेन शीघ्रस्य। ऋष्वबृहतौ महति व्याप्तौ बले वेगे चेमे। व्याप्तस्य महाबलवतो महावेगवत इत्यर्थः Sk.
३. देव P.
४. ये देवाः Sy. य उपर्यासते देवादयस्तांश्च यो वेद तस्मै वरुणाय न प्रयुच्छतः। तद्यागान् स्तुतीश्च कुर्व एव Sk.
५. सनि P.
६. P. and D. add स before निषीदति। निषण्णवान्। य एतानि वेद स निषसादेति वा Sk.
७. सर्वेषां वा यज्ञस्य वा लोकपालत्वात् Sk.
८. दैवीषु प्रजासु Sy. गृहेषु Sk.
९. कुर्वत् P. D. प्रजानां साम्राज्यसिद्धयर्थम् Sy. सर्वयज्ञस्याधिपत्याय निषीदति Sk.
१०. शोभनकर्मा Sy. सुकर्मा सुप्रज्ञश्च Sk.
११. V. Mādhava ignores आ
१२. लोकानां शुभाशुभकर्माणि Sk.
१३. ज्ञाता Sk. [illegible] Sy.
१४. ० पश्यन्ति P
१५. लोकपालत्वाद् वरुणः... यस्य प्राणिनो यानि शुभाशुभानि तस्य तत्फलदानार्थं प्रतिपाल्यते Sk.
१६. विश्वाह P.
१७. य इदं करोति सः Sk.
१८. सर्वता M.
१९. सुप्रज्ञः सुकर्मा वा Sk.
२०. शोभने P. अस्मान्... शोभनमार्गेण सहितान् करोतु Sy. नयतु। सर्वदाऽभिप्रेतेषु तं तं पन्थानमुपदिशतु येन प्रवृत्ता वयमभिप्रेतानि प्राप्नुमः Sk.
२१. प्रवर्धयतु Sy; Sk.

**बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् । परि स्पशो नि षेदिरे ॥१३॥**

**बिभ्रद्द्रापिम्**[1] । बिभ्रत् । कवचम् । हिरण्मयम् । वरुणः । आच्छादयति । रूपं दीप्तम्[2] । परितश्चैनम्[3] । निषीदन्ति[4] । ज्ञापका[5] रश्मयः ।

**न यं दिप्सन्ति दिप्सवो न द्रुह्वाणो जनानाम् । न देवमभिमातयः ॥१४॥**

**न यं दिप्सन्ति** । यं वरुणम् । हिंसार्थिनः । न । हिंसितुमिच्छन्ति । जनानामन्येषाम् । द्रोग्धारश्च यस्मै । न[6] द्रुह्यन्ति । न यं चाभिमन्यन्ते[7] । अभिमातयश्चोत्तरत्र सम्बन्धः[8] ।

**उत यो मानुषेष्वा यशश्चक्रे असाम्या । अस्माकमुदरेष्वा ॥१५॥**

**उत यः** । अपिच । यः । मनुष्येषु[9] । अन्नम् । असाधारणम्[10] । चक्रे सः । अस्माकमपि[11] । उदरेषु । आकरोतु[12] । प्रथम आकारः सप्तम्यर्थं[13] स्फुटीकरोति[14] ।

**परा मे यन्ति धीतयो गावो न गव्यूतीरनु । इच्छन्तीरुरुचक्षसम् ॥१६॥**

**परा मे** । परागच्छन्ति[15] । मे[15] । बुद्धयो[16] वरुणं[17] राजानं प्रति । यथा । गावो[18] । गोमार्गान्[19] प्रति गच्छन्ति । इच्छन्त्यः[20] । बहूनां द्रष्टारं[21] द्रष्टुम् ।

---

१. बिभ्रद्रापि M. बिभ्रद्रापीं D. बभूवद्रावि P. २. पुष्टं स्वशरीरम् Sy.

३. परत० P. ४. सर्वतो निषण्णाः Sy. कृताकृतप्रत्यवेक्षणार्थं प्राणिनः परितो निषीदन्ति। अथवा निर्णिग् घटादिद्रव्यरूपमनात्मरूपम् । उदयोत्तरकालमाबद्धहिरण्मयकवचो वरुणो रश्मिभिराच्छादयति घटादिद्रव्यरूपम् । रश्मिभिस्तमोऽपनीय यावत्किंचिद्रूपं तत्सर्वं प्रकाशयतीत्यर्थः । तत्सहचरिताश्च देवानां स्पशः प्राणिकर्मज्ञानार्थं सर्वतो निषीदन्तीति पुराणेषु प्रसिद्धम् Sk.

५. हिरण्यस्पर्शिनो रश्मयः Sy.

६. M. reads द्रौग्धा रश्मयः स्मैनद् for द्रोग्धारश्च यस्मै न । ७. पाप्मानः Sy. तद्धिंसकाश्चोरादयस्तेऽपि तं न हिंसन्ति । असुरैश्चोरादिभिर्वा प्रयुज्यमाना हिंसाश्च न हिंसन्ति। देवं वरुणं नॄन् वा Sk.

८. V. Mādhava ignores देवम्

९. मानुषेषु च दैवेषु च Sk.

१०. सम्पूर्णं चक्रे नतु न्यूनं कृतवान् Sy. आभीक्ष्ण्येन Sk. ११. सकलमस्माकं च तिर्यक्सदृशानां नृणामुदरेषु च। आङस्त्रितयाद् आदयन्त्यौ चार्थे Sk.

१२. आ चक्रे सर्वतः कृतवान् Sy.

१३. सम्यगर्थं M.

१४. V. Mādhava ignores आ

१५. P. D. and M. read परागच्छन्निमे

१६. बुधयो M. प्रज्ञाः कर्माणि वा। धीरेव धीतिः।... मद्बुद्धयो मत्स्तुतिकर्माणीति वा Sk. १७. विरणं P.

१८. यस्मिन्भूप्रदेशे गावश्चरन्ति स गव्यूतिः। गाव इव स्वचरणभुवः प्रति Sk.

१९. गोमार्गमनु P. मे मार्गान् M. गोष्ठान्यनुलक्ष्य गच्छन्ति तद्वत् Sy.

२०. च्छन्त्यः P. २१. बहुभिर्द्रष्टव्यम् Sy.

**सं नु वोचावहै पुनर्यतो मे मध्वाभृतम् । होतेव क्षदसे प्रियम् ॥१७॥**

सं[1] नु[2] वोचावहै[3]। त्वं चाहं च वरुण ! अधुना[4]। संवादं पुनः पुनः कुर्वः। यतः। मे। मधुस-[6]
दृशं स्तोत्रम्।[7] संभृतं त्वं च।[8] होतेव। प्रियम्। क्षदसे।[9] क्षदिः[10] शकलीभावकर्मा यथा होताऽध्रिगुं
वदन् वाचा पशुं शकलीकरोत्येवमिदं तुभ्यं दत्तमिदं तुभ्यं दत्तमिति वदसि।

**दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि । एता जुषत मे गिरः ॥१८॥**

दर्शं नु। दृष्टवानस्म्यहम्।[11] इदानीम्।[12] सर्वस्य[13] दर्शनीयं[14] वरुण![15] दर्शञ्चास्य।[16] रथम्।
भूमेः। उपरि। मम।[17] स्तुतीः। एताः। सेवताम्।[18]

**इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके ॥१९॥**

इमं मे। इमम्। मे। वरुण![19] शृणु। हवं श्रुत्वा। च। अद्य[20] माम्। सुखय।[21] त्वाम्। रक्षणे-
च्छुरहम्।[22] कामये[23] यद्वाऽभिगच्छामि।

**त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि । स यामनि प्रति श्रुधि ॥२०॥**

त्वं विश्वस्य। त्वम्। विश्वस्य।[24] दिवः। च। पृथिव्याः। च। राजसि।[25] प्राज्ञ![26] सः।

---

१. सन्न D. २. ०वहे M. D.
३. आवां हरिश्चन्द्रशुनःशेपौ। नौ मुञ्चेति। पुनः सम्भूतौ। मां मुञ्चेति हरिश्चन्द्रं वा। त्वं चाहं च पुनः संवोचावहै। मां विमुच्य मया संभाषस्व। अहमपि भवन्तं मुच्यमान इति हि तदाशास इत्यर्थः Sk.
४. संभूय प्रियवार्ता करवावहै Sy.
५. यतो यदर्थं येनोपस्तीर्याभिघार्य चाहं जुहुषितस्तदाज्यलक्षणं मध्वाहृतमृत्विग्भिः। यत आज्यं गृहीत्वा मां स्तोतुमुपस्थिता ऋत्विजः Sk.
६. मधुरं हविः Sy. ७. संभृत P.
८. होत्रा M. यथा होता अध्रिगुप्रैषदानेनैवं त्वमपि निर्मोक्षणेन विशससीष्टं मच्छरीरम्।...यत्र यज्ञे मदर्थं मध्वाहृतं यत्र च होतेव विशससि प्रियं मत्तनुं तत्र क्षिप्रं संवोचावहै पुनः Sk.
९. अश्नासि Sy. १०. सकलिभाव० P.
११. दस्म्यवान० P. महता प्रयत्नेन Sk.
१२. खलु Sy. क्षिप्रम् Sk. १३. सर्वैः Sy.
१४. दर्शनीय M. द्रष्टारं वा वरुणम् Sk.
१५. Omitted by M. S. reads वरुणं
१६. दशञ्चास्य P. दर्शनं चास्य S.
१७. सम P. D. M. १८. सेवितवान् Sy.
१९. इमम्। मे। वरुणः। Omitted by M.
२०. अत ऊर्ध्वं च Sk.
२१. सुखं य D. M. सुखाय P.
२२. आत्मपालनतर्पणकामः Sk.
२३. शब्दयामि, स्तौमीत्यर्थः Sy. आयाचे। चक कान्तौ। त्वं मां पालय तर्पय चेति कामये Sk. २४. S. adds जीवनम् after विश्वस्य। सर्वस्यार्यनीयस्य Sk.
२५. राजन् सि P. राजन् वि M. राजासि S. ईशिषेSk. २६. यज्ञवन्Sk. मेधाविन् Sy.

गमने[1]ऽभिलषित[2]मस्माकम्। प्रतिश्रुधि[3]।

उदु॒त्त॒मं मु॑मुग्धि नो॒ वि पाशं॑ मध्य॒मं चृ॑त। अवा॑ध॒मानि॑ जी॒वसे॑ ॥२१॥

उदुत्तमम्। उत्तमस्य पाशस्य। उन्मोचनम्। मध्यमस्य। विचर्तनम्[4]। अवमोचनम्[5]। अवमानां[6] बन्धनानाम्। जीवनायेति[7]।

I.26.

वसि॑ष्वा॒ हि मि॑येध्य॒ वस्त्रा॑ण्यूर्जां पते। सेमं नो॑ अध्व॒रं य॑ज ॥१॥

वसिष्व[8]। आच्छादय[9]। यज्ञिय[10]! ज्वालाः[11]। अन्नानाम्[12]। पते! अथ। अस्माकम्। यज्ञम्[13]। इमम्। यज[14]।

नि नो॒ होता॒ वरे॑ण्यः॒ सदा॑ यविष्ठ॒ मन्म॑भिः। अग्ने॑ दि॒वित्म॑ता॒ वचः॑ ॥२॥

नि नो होता। निकामय[15]। अस्मान्[16]। होता। वरणीयः। सदा। युवतम! पूजनीयैः[17] स्तुतिभिः। अग्ने! दीप्तिमता स्तोत्रेण[18]।

---

१. क्षेमप्रापणेऽस्मदीये Sy. मरणकाले। मृत्युं प्रतिगम्यते यस्मिन् स कालो यामा तत्र Sk.

२. ०भिलक्षित० M. ३. ०श्रुतिः M. मदमरणं प्रतिजानीहि। त्वां मुञ्चामीति प्रतिज्ञां कुरु। न त्वं म्रियसे Sk.

४. विवर्तनं D. मध्यमं पाशं तत्रैवावस्थितं विश्लथय...अधमानि...अधोमुखं मुञ्च जीवनाय Sk. ५. अपमोचनम् S.

६. अधमानां S. अधमानि मदीयान् पादगतान् पाशान् Sy.

७. Ms. D. puts the figure ॥२५॥ here to indicate the end of the twenty-fifth hymn. No such number is given in P. and M. V. Mādhava ignores नः

८. वसिष्वा M. ९. ० दयेय D. परिधत्स्व Sk. १०. यज्ञस्य योग्य Sy. यज्ञार्ह Sk. ११. ज्वालां P. आच्छादकानि तेजांसि Sy. वस्त्राणि Sk.

१२. हविर्लक्षणान्नानां स्वामिन्! Sk.

१३. ये M. यस्त्वमन्येषामयक्षि स त्वं वस्त्राणि परिधायेममस्माकं यज्ञं यज होतृत्वेन निषद्य Sk.

१४. V. Mādhava ignores हि। सः

१५. निषीद Sk. १६. अस्मान D. अस्माकं होता Sy. अस्माकम् Sk.

१७. ज्ञापकैस्तेजोभिर्युक्त इति शेषः Sy. मदतिशयज्ञानैः...अग्नेर्यौवनं बह्विन्धनत्वात् Sk. पूजनीयैः a masculine form is qualifying a feminine स्तुतिभिः। It should have been पूजनीयाभिः।

१८. वचसा स्तूयमानः सन् निषीदेति शेषः Sy. एतैर्युक्तस्त्वं मे होत्रं कुरु Sk.

**आ हि ष्मा॑ सू॒नवे॑ पि॒तापि॒र्यज॑त्या॒पये॑ । सखा॒ सख्ये॒ वरे॑ण्यः ॥३॥**

आ[1] हि ष्मा[2]। कश्चिदग्नेः स्तोता पुत्रस्थाने[3] भवति तस्मा[4] अयं पिता[3] भूत्वा[5] यजति। ज्ञातिः[6]। ज्ञातये। मित्राय। मित्रम्। वरणीयः[7]। हिशब्दो[8] विस्मये[9]।

**आ नो॑ ब॒र्ही रि॒शाद॑सो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा । सीद॑न्तु॒ मनु॑षो यथा ॥४॥**

आ नो बर्हिः[10]। आसीदन्तु[11]। बर्हिः। अस्माकम्। इमे देवाः। मनोरिव[12] प्रजापतेः। रिशतामसितारः[13]।

**पू॒र्व्य॑ होत॑र॒स्य नो॒ मन्द॑स्व स॒ख्यस्य॑ च । इ॒मा उ॒ षु श्रु॑धी॒ गिरः॑ ॥५॥**

पूर्व्य होतः। पूर्वेषु[14] भव ! होतः। अस्माकम्। इमम्। सख्यम्[15]। अनुपालय[16]। स्तुतीः। च। इमाः[17]। सुष्ठु[18]। शृणु ।

**यच्चि॒द्धि शश्व॑ता॒ तना॑ दे॒वंदे॑वं॒ यजा॑महे । त्वे इद्धू॑यते ह॒विः ॥६॥**

यच्चिद्धि[19]। यदि[20]। हि[19]। वयम्। बहुना[21]। धनेन[22]। सर्वान्[23] देवान्। यजामहे। त्वयि[24]। एव[24] तेभ्योऽपि। हूयते[25]। हविः[26]।

---

१. आङ मर्यादार्थे Sk. २. आहिषु M. आहिष्व P. ३. पितृस्थानीयस्त्वं पुत्रस्थानीयाय मह्यमभीष्टं देहीति शेषः Sy. त्वमेव मे पिताऽऽपिश्च सखा च Sk. ४. तस्माद् M.
५. भुत्वा P. ६. ज्ञानि P. ज्ञाति D.M. ते यस्मान्मर्यादया पुत्रार्थं ज्ञात्यर्थं सख्यर्थं च यजन्ति Sk. ७. वरणीयाः Sk.
८. हिः यस्मादर्थे Sk. ९. V. Mādhava ignores स्म १०. अ M.
११. आसीदन्तु। बर्हिः omitted by M.
१२. यथा मनुषः प्रजापतेर्यज्ञमासीदन्ति तद्वत् Sy. मनुष्या इव हिंसितृक्षेप्तारः। सर्वे देवा इत्यर्थः Sk.
१३. ० मशतारः M. हिंसकानदन्तः Sy.
१४. अस्मदादेः पूर्वमुत्पन्न Sy. चिरन्तन Sk.
१५. संख्यं M. अस्मदीयस्यास्य प्रवर्तमानस्य यज्ञस्य सख्यस्य चास्मदनुग्रहस्य च सिद्धचर्थम् Sy. ङस् अमि। स्तुत्यस्तोतृत्वलक्षणं देवैर्नृणां सख्यम्। ...ङौ वा ङस्। अस्मिश्च सख्ये मोदस्व Sk. १६. ० लयं D. त्वं हृष्टो भव Sy. तत् स्तुहि Sk.
१७. शोभनः शुनःशेपो देवानां स्तोता इत्येतच्च प्रकाशय। इमाः शृणु च स्तुतीरित्यर्थः Sk.
१८. V. Mādhava ignores उ
१९. यद्यपि Sy; Sk. २०. ह D.
२१. शाश्वतेन नित्येन Sy. २२. विस्तृतेन हविषा Sy. हविर्लक्षणेन धनेन Sk.
२३. अन्यमन्यं वरुणेन्द्रादिरूपं नानाविधं देवताविशेषम् Sy. अन्यमन्यमपि देवम् Sk.
२४. त्वेय्येव P. त्वयि वै M. २५. हूतये P.
२६. V. Mādhava ignores चित्

प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः । प्रियाः स्वग्नयो वयम् ॥७॥

प्रियो नः[1]। प्रियः। नः। अस्तु। विश्पतिः[2]। होता[3]। मादयिता[4]। वरणीयः। वयं चास्मै स्वग्नयः[5]। प्रियाः[6] स्याम[7]।

स्वग्नयो हि वार्यं देवासो दधिरे च नः । स्वग्नयो मनामहे ॥८॥

स्वग्नयो हि[8]। स्वग्नयः[9]। हि[10]। वरणीयं धनम्[11]। अस्मभ्यम्। देवाः[12]। धारयन्ति[13]। ततो वयम्। स्वग्नयो[14] हविर्वहनायाग्निम्। स्तुमः[15]।

अथा न उभयेषाममृत मर्त्यानाम् । मिथः सन्तु प्रशस्तयः ॥९॥

अथा नः[16]। अमृत ! अग्ने ! तव च। अस्माकं[17] च। मर्त्यानाम्[18]। उभयेषाम्। परस्परम्। प्रशस्तयः। सन्तु सुष्टुतमिति[19] त्वं[20] ब्रूहि सुदत्तमिति[21] वयमिति[22][23]।

---

१. ना P. २. प्रियः। नः। Omitted by M. यथाऽस्माकं प्रियो भवति तथोपकरोत्वित्यर्थः Sk. ३ विशो नरास्तत्पतिरग्निः Sk. ४. मदयिता D. हृष्टः Sy. स्तुत्यः स्तोता वा Sk.
५. शोभनैराहवनीयादिभिर्युक्ता वयम् Sk.
६. प्रिया P. D. M. ७. स्यामः M.
८. स्वग्नयो हि omitted by D.
९. शोभनाहवनीयादियुक्ताः Sk.
१०. हिर्यस्मादर्थे वा Sk. ११. अस्मदीयं ... वरणीयं हविः Sy. सोमलक्षणं हविः Sk. १२. दीप्यमाना ऋत्विजः Sy. वयं देवा ... देवो वा दाता। हविर्दानादत्र ऋत्विजः। चशब्दश्चास्मात्परो द्रष्टव्यः। देवाश्च धारयन्ति। ऋत्विजश्च विश्वामित्रादयः। वरणीयमग्नेः स्तोत्रं देवा ऋत्विजश्च कुर्वन्ति Sk.
१३. धृतवन्तः Sy. १४. स्वग्न P. नोऽस्मत्सम्बन्धिनो वयं च तैराहवनीयादिभिः स्वग्नयः स्तुमः। ... दधिरे चेति चशब्दाद् योग्यद्वितीयसमुच्चयाध्याहारः। मन याच्ञायाम्। एवमेकवाक्यता। यस्मात् स्वग्नय ऋत्विजोऽस्मत्तो वरणीयतरं सोमलक्षणं हविर्धारयन्ति दास्यन्ति चाग्नये तस्मात् स्वग्नयो वयमात्मविमोक्षं याचामहे Sk.
१५. त्वां याचामहे Sy. १६. अम्यत M.
१७. युष्मदस्मच्छब्दयोरस्मच्छब्द एव शिष्यते नः इति Sk. १८. मनुष्याकाराणाम् अग्निः पुरुषविधः। अन्यो मनुष्य एव Sk.
१९. सुष्ठुत० P. D. M. सम्यगनुष्ठितमिति यजमानविषया प्रशंसा, सम्यगनुगृहीतमित्यग्निविषया Sy. त्वमस्मान् प्रशंस नेदृशा अन्ये स्तोतार इति। वयमपि प्रशंसामो नेदृशोऽन्यो देव इति। मिथः सहत्वे। तव चास्माकं च सह सन्तु प्रशंसाः। नहि स्तुत्यस्य स्तोत्रा विना प्रशंसाऽस्ति। न स्तोतुः स्तुत्येन। तत्र तव स्तुत्यस्यास्माभिरेव सहास्माकं च स्तोतॄणां त्वयैव सह प्रशंसाऽस्तु मान्येन केनचिदित्याशास्महे Sk.
२०. त्व च M. २१. सुदतमिति D.
२२. Omitted by M.
२३. V. Mādhava ignores अथ

**विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः । चनो धाः सहसो यहो ॥१०॥**

**विश्वेभिरग्ने ।** सर्वैः सहायभूतैः । अग्निभिः[1] । अग्ने ! अस्माकम् । इमम्[2] । यज्ञम्[3] । इदं च । स्तोत्रम् । अन्नं[4] चात्मस्थम्[5] । कुरु[4] । बलस्य[6] पुत्र[7] !

I.27.

**अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः । सम्राजन्तमध्वराणाम् ॥१॥**

**अश्वं न त्वा[8] ।** अश्वम् । इव । त्वा । वालवन्तम्[9] । नमस्कारैर्वन्दितुम्[10] । ईशानम्[11] । यज्ञानामुपक्रम इति[12] ।

**स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः । मीढ्वाँ अस्माकं बभूयात् ॥२॥**

**स घा नः ।** सः । खलु[13] । अस्माकम्[13] । बलेन[14] । स्तूयमानः[15] । विस्तीर्णगमनः[16] । सुसुखः[17] । कामानां सेक्ता[18] । अत्यन्तं[19] भवतु[20] ।

---

१. त्वद्भ्रातृभिः Sk.
२. Omitted by P.
३. M. reads **यज्ञमिमं** for **इमम् । यज्ञम्** ४. **अन्नं धा अस्मभ्यं धेहि** Sy. **चरुपुरोडाशादिलक्षणं हविश्चनः... स्थापय स्थापयितव्येषु । यज्ञं देवेषु स्तुतिं स्वकर्णे चनः स्वोदरे । मां तु मुञ्च** Sk. ५. **चारु त्वं** P.
६. **बलेन मथ्यमानारणिभ्यां जननात्** Sk.
७. Ms. D. puts the figure ॥२६॥ here to indicate the end of the twenty-sixth hymn. No such number is given in P. and M.
८. **अश्वमिव त्वा वालवन्तम् । वाला दंशवारणार्था भवन्ति । दंशो दशतेः** N. 1. 20. ९. **बलवन्तं** P. D. **वारशब्दस्य कपिलादित्वाद् रत्वम्** Sk.
१०. **वन्दितुमिच्छामः प्रारभामहे वा** Sk.
११. **यज्ञानां सम्यगीशानं संदीप्यमानं वा । सुपि वा आम् । आम्श्रुतेर्वा मध्ये । अश्वोपमानाभिप्रायः पर्येष्यः** Sk.
१२. V. Mādhava ignores **अग्निम्**
१३. **खस्वस्माकं** M. १४. **बलस्य** Sy.
१५. **पुत्रः** Sy. **आवयोः सूनुः । अरणीमथनजातत्वाद् हरिश्चन्द्रस्य । तत्साहचर्यात् सामान्याद् उभयोरपि पुत्रत्वमग्नेः** Sk.
१६. **स्वतेजोबलेन विस्तीर्णगामी । बलेनारणिमथनजात इति पूर्ववाक्यसम्बन्धी वा** Sk. १७. **सुसुखं** D. **सुसेवः सुसुखो वा** Sk. १८. **धनवान् हविर्नयनद्वारेण । वृष्टिप्रदत्वात् सेक्ता वा** Sk.
१९. **अस्माकमत्यर्थं भोक्ता भूयाद् बलेन भूयादिति वा सुशेवो भूयादिति वा पुत्रो भूयादिति वा आशंसा । अस्मान्मुक्तास्त्वां यष्टुमाशास्महे इत्यर्थः । योऽस्माकं सुसुखो विमोक्तृत्वात् स नः सूनुर्भूयादित्यत्र च सम्बध्यते** Sk.
२०. V. Mādhava ignores **अस्माकम्**

**स नो॑ दू॒राच्चा॒साच्च॒ नि मर्त्या॑दघा॒योः । पा॒हि सद॒मिद्वि॒श्वायुः॑ ॥३॥**

स नो दूरात्। सः[1]। अस्मान्[2]। दूरात्[3]। अन्तिकात्[4]। च। पापमिच्छतः। मर्त्यात्[5]। सदा। एव[6]। निपाहि[7]। सर्वेषामभिगन्ता[8]।

**इ॒मम् ऊ॒ षु त्वम॒स्माकं॑ स॒निं गा॑य॒त्रं नव्यां॑सम् । अग्ने॑ दे॒वेषु॒ प्र वो॑चः ॥४॥**

इममू षु[9]। अस्माकम्। इदम्[10]। हविषो दानम्[11]। गायत्रं च साम[12]। नवतरम्[13]। अग्ने! देवेषु[14]। प्रब्रूहि[15][16]।

**आ नो॑ भज पर॒मेष्वा वाजे॑षु मध्य॒मेषु॑ । शिक्षा॒ वस्वो॒ अन्त॑मस्य ॥५॥**

आ नो भज। प्रापय[17]। अस्मान्। दूरस्थेषु[18]। अन्नेषु। आभज च। मध्यमेषु तथा। प्रयच्छ। अन्तिकतमम्[19]। धनमिति।

**वि॒भ॒क्तासि॑ चित्रभानो॒ सिन्धो॑रू॒र्मा उ॑पा॒क आ । स॒द्यो दा॒शुषे॑ क्षरसि ॥६॥**

विभक्तासि। दाता[20]। भवसि। चित्रदीप्ते[21]! स्यन्दमानस्य गोधनस्य[22]। सङ्घे[23]। अन्तिकस्थे सति। सद्य[23] एव त्वम्। यजमानाय धनम्[24]। क्षरसि[25][24][26]।

---

१. Omitted by P.
य उक्तगुणोऽसि स त्वम् Sk.
२. अस्माकम् P. D. ३. दूरस्थात् Sk.
४. अन्तिकस्थाच्च Sk.
५. मर्त्यान् P. ६. नियमेन Sk.
७. व्याप्तगमनः Sy.
सदैव सर्वत्रगामी सर्वान्नो वा Sk.
८. V. Mādhava ignores च
९. इममूषुः D. १०. इमम् D.
११. दान M. मद्व्यतिरिक्तसोमादिहविर्दानम् Sk. १२. गोत्रं M. स्तुतिरूपं वचोऽपि Sy. स्तोत्रं च Sk.
१३. अन्यैरकृतपूर्वम् Sk. १४. देवान् प्राप्य Sk. १५. ब्रूहि P.S. १६. V. Mādhava ignores उ। सु। त्वम्।
१७. प्रापक P. आभजास्मान् परमेषूपकल्पितेषु हविर्लक्षणेष्वन्नेषु मध्यमेष्वपि। ...आमि वा नः इति। शसि वा सुप्। परमान्यन्नान्याभजास्माकं मध्यमानि च। मां तु मुञ्च Sk.
१८. दूरस्थं M. दूरस्थेन्नेषु D. उत्कृष्टेषु द्युलोकवर्तिषु Sy.
१९. अतिक० M. अन्तिकतमस्य भूलोकस्य संबन्धीनि ... वसूनि Sy.
२०. विशिष्टस्य धनस्य प्रापयिता Sy. विभक्ता Sk.
२१. विचित्रदीधिते पूज्यदीप्ते वा Sk.
२२. स्य P. यथा सिन्धोर्नद्याः समीपे ... ऊर्मिं तरङ्गोपलक्षितं कुल्यादिप्रवाहं विभजन्ति तद्वत् Sy.
२३. स्यन्दनात् सिन्धुः सोमः। ङसि ङिः। सोमस्योर्मेः सन्निकृष्टे यागकाले प्राप्ते त्वं देवानां सोमस्य विभक्ता। ऊर्मेरुपाकस्येति वा समानाधिकरणत्वात् तास्थ्यात्। आत्मान्तिकस्थस्य सोमस्योर्मेर्विभक्ता Sk. तस्मिन्नेवाहनि Sk.
२४. S. omits धनम्। यजमानाय ... कर्मफलभूतां वृष्टिं करोषि Sy. दातव्यं धनमायुर्वा Sk.
२५. रक्षसि P. D. ददासि Sk.
२६. V. Mādhava ignores आ
आकार उपमार्थः Sy.

**यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः ॥७॥**

**यमग्ने ।** यं[1] त्वम् । अग्ने ! सङ्ग्रामेषु । मर्त्यम् । रक्षसि । यं वा[2] । तत्र[3] । प्रहिणोषि[4] । सः । नियच्छति[5] । बहूनि[6] । अन्नानि ।

**नकिरस्य सहन्त्य पर्येता कयस्य चित् । वाजो अस्ति श्रवाय्यः ॥८॥**

**नकिरस्य ।** यं त्वं[7] सङ्ग्रामेषु सहनशील[8] ! रक्षस्यहिंसार्थम्[9] । अस्य[10] । परितो गन्ता । न कश्चिदस्ति[11] । यकार उपजनः कस्य[12] । चिदपि ससेनमसेनं वा न[13] कश्चिदभिभवति । श्रवणीयम्[14] । अन्नं[15] च तस्य । अस्ति शत्रुभ्यो[16] जितम् ।

**स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनिता ॥९॥**

**स वाजम् ।** सः । सङ्ग्रामम्[17] । विश्वस्य द्रष्टा[18] । अश्वैः । अस्तु । तरुता[19] तारकः[20] । मेधाविभिरश्वैः[21] । अस्तु । सङ्ग्रामं संभक्ता[22] ।

**जराबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीकम् ॥१०॥**

**जराबोध ।** स्तुत्या देवानां बोधयितः[23] ! स्तोतः[24] ! तत् । जानीहि[25][26] ।

---

१. यत् D. यः M.
२. हविर्निमित्तं यं च गच्छसि Sk.
३. निमित्तात् कर्मसंयोग इति वाजेष्विति सुप् । ... भिसि वा सुप् । ... वाजैश्च यम् ... वाजो वर्च इत्यन्ने Sk.
४. प्रेरयसि Sy. प्रीणयसि । जुन गतौ प्रीणने च Sk.
५. हि यच्छति M. नियन्तुं समर्थो भवति Sy. यमु दाने बन्धने च । यमवा जुनाः च स दाताऽन्येभ्यः Sk.
६. नित्यानि Sy. आत्मनि लब्धा वा ध्रुवाण्यन्नानि । बहूनीति वा Sk.
७. त्वा P. ८. शत्रूणामभिभवनशील! Sy. हे सहस्वन् अभिभवितः वा Sk.
९. रक्षस्व हि सोऽर्थम् M.
१०. मर्त्यस्य Sk. ११. अनिष्टः... नचैनं कश्चिदनिष्टः प्राप्नोतीत्यर्थः । परे इण् वधे वा । नचास्य कश्चिद् हन्ता Sk.
१२. सर्वस्य त्वत्तेवकस्य Sk. १३. M. adds तं after न । १४. श्रपणीयम् M.
१५. बलविशेषोऽस्ति Sy. बलं वा Sk.
१६. श्रवणीयं प्रख्यातम् Sk. १७. प्रकृतोऽग्निः Sk. १८. सर्वैर्मनुष्यैरुपेतः Sy.
१९. अस्मदर्थं गन्ताऽस्तु । तॄ प्लवनतरणयोः । गतौ च । स संग्रामं गत्वाऽस्माकं नित्यं साहाय्यं करोतु । वाजमिति ङौ वा अम् । तात्स्थ्याद्वा तच्छब्दः । संग्रामस्थमस्मच्छत्रुं हिनस्तु Sk. २०. अस्तुतन्दातार को P. २१. ऋत्विग्भिः Sy. मेधाविभिरस्माभिः स्तूयमानः Sk.
२२. फलस्य दाता Sy. अस्मत्स्तुतीनां संभक्ताऽस्तु । अस्माकमेव च Sk.
२३. बाधयितः P. स्तुत्या बोधमान ! Sy. जरां स्तुतिं यो बुध्यते बोधयति देवान् होतृत्वात् सः Sk.
२४. स्तोताः P. जराबोध अग्ने ! यन्मामवोचस्तत्त्वमेव वेत्सि Sk.
२५. विष्लृ व्याप्तौ । अयं च वेष इति कर्मनामसु पाठात्, नाम्नां चाख्यातजत्वात्, कर्मणि च करोत्यर्थस्य सम्भवात् करोत्यर्थोऽपि विष्लृ । तत् कुरु Sk.
२६. जनिहि P. प्रविश Sy.

मनुष्यस्य[1]। यज्ञियाय[2]। स्तोमम्[3]। रुद्राय। दर्शनीयम्[4]। अत्र यास्कः—"अग्निरपि रुद्र उच्यते"[5]। "जरा स्तुतिर्जरतेः[6] स्तुतिकर्मणस्तां बोध तया बोधयितरिति वा। तद्विविड्ढि[7] तत् कुरु मनुष्यस्य मनुष्यस्य[8] यजनाय स्तोमं[9] रुद्राय दर्शनीयम्"[10] इति।

**स नो॑ म॒हाँ अ॑निमा॒नो धू॒मके॑तुः पुरु॒श्च॒न्द्रः। धि॒ये वाजा॑य हिन्वतु ॥११॥**

स नो महान्[11]। सः[11]। अस्मान्[11]। महान्[12]। निमानवर्जितः। धूमकेतुः[13]। बहूनां[14] कमनीयः। कर्मणे[15]। अन्नाय च। प्रहिणोतु[16]।

**स रे॒वाँइ॑व वि॒श्पति॒र्दैव्यः॑ के॒तुः शृ॑णोतु नः। उ॒क्थैर॒ग्निर्बृ॒हद्भा॑नुः ॥१२॥**

स रेवाँइव[17]। सः। धनवानिव। मनुष्यराजा[18]। देवानाम्[19]। प्रज्ञानभूतः[19][20]। शृणोतु। अस्मान्। क्रियमाणैः स्तोत्रैः[21]। अग्निर्महातेजाः[22]।

---

१. तत्तद्यजमानरूपप्रजानुग्रहार्थम् Sy.

२. यज्ञिया P. यज्ञियं य M. यज्ञसम्बन्ध्यनुष्ठानसिद्धचर्थं तद्देवयजनम् Sy. यो वा कश्चिन्मनुष्यो यज्ञार्होऽहं वाऽन्यो वा तस्य सर्वस्यार्थाय।... रुद्रायेति वा... विशे इति आमि डे। सर्वमनुष्याणां यज्ञार्हाय Sk.

३. सोमम् S. M. reads स्तोद्रमं for स्तोमम्। रुद्राय।

४. दर्शनीयम्। अत्र यास्कः is missing in M.

५. N. 10. 7.

६. जरतो M.

७. तद्विप M.

८. Omitted by M.

९. स्तोमान् P.

१०. N. 10. 8.

११. नोस्मान् D. अस्मान् is missing in M. S. adds अग्निः after अस्मान्। अस्माकम् Sk.

१२. S. omits महान्। नि। अनियतपरिमाणः Sk.

१३. केतुः पताका। धूमः पताकास्थानीयो यस्य सः। केतुर्ज्ञानं वा धूमेन यो ज्ञायते स इति वा Sk.

१४. बहुदीप्तिः Sy.

१५. प्रज्ञार्थं यागाख्याय कर्मणे वान्नाय च Sk.

१६. प्रीणयतु Sy; Sk.

१७. स रेवान् P. D. and M.

१८. ०राजः S. प्रजापालकः Sy. सर्वार्थिनामेवमभिप्रेतानि सम्पादयन् Sk.

१९. देवो देवभवो वा प्रज्ञानसत्त्वः सर्वकर्मकर्ता वा Sk.

२०. दूतवद् ज्ञापकः Sy.

२१. अस्माकं शस्त्राणि . . . उक्थैरिति शसि भिस्। तृतीयसवनभवशस्त्रमुक्थम्। एतानि श्रुत्वाऽस्माकमभिप्रायं सम्पादयेत् Sk.

२२. प्रौढरश्मिः Sy.

**नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒ नमो॒ युव॑भ्यो॒ नम॑ आशि॒नेभ्यः॑ ।**
**यजा॑म दे॒वान्यदि॑ श॒क्नवा॑म॒ मा ज्याय॑सः॒ शंस॒मा वृ॑क्षि देवाः ॥१३॥**

**नमो महद्भ्यः**। नमः। महाशरीरेभ्यः[1]। नमः। अल्पशरीरेभ्यश्च[2][3]। नमः। युवभ्यः[4]। वृद्धेभ्यश्च। शक्ताः। चेद् वयम्[5]। देवानेव[6]। यजामः। अभ्युदयस्य[7]। अभिलापम्[8]। हे देवाः! माऽहम्[9]। वृक्षि[10] वृश्चतिश्छेदनकर्मा[11]ऽऽशाच्छेदादहं[12] निराशो[13] मा भूवमिति[14]।

## I.28.

**यत्र॒ ग्रावा॑ पृ॒थुबु॑ध्न ऊ॒र्ध्वो भव॑ति॒ सोत॑वे ।**
**उ॒लूख॑लसुताना॒मवेद्वि॑न्द्र जल्गुलः ॥१॥**

**यत्र ग्रावा**[15]। यस्मिन् यज्ञे[16]। अभिषवग्रावा। पृथुमूलः[17]। आहननप्रकार ऊर्ध्वमुखः[18]। भवति। सोमाभिषवाय तत्र। उलूखलसुतान्[19]। सोमान्। इन्द्र! त्वम्। अवजल्गुलोऽवाशिरः[20] पिब।

---

१. गुणैरधिकास्तेभ्यः Sy. तपस्तेजोधनविद्यायुर्भिर्वर्धितेभ्यो युष्मद्भ्यः Sk.
२. गुणैर्न्यूनाः(तेभ्यः) Sy. बालेभ्यः Sk. दभ्रमर्भकमित्यल्पस्य ... अर्भकमवहृतं भवति N.3.20.
३. अस्त्वशरीरेभ्यश्च D.
४. व्याप्तृभ्यः पलितेभ्यो वा तारुण्यवृद्धत्वलक्षणयोर्द्वयोरपि वयसोः। आसन्नपलितेभ्यो मध्यमवयस्केभ्यः। द्वयोरधिकारादस्य च वयसः परिशिष्टत्वाच्चैवम् Sk.
५. M. reads यद्ययं for चेद् वयम्।
६. अवगुणयागस्य दुष्करत्वाद् यदि शक्नवामेति Sk.
७. ज्येष्ठस्य देवताविशेषस्य Sy. वृद्धतरायुषो दीर्घतरस्याऽऽयुषो वा Sk.
८. अभिलाषाय S. स्तोत्रम् Sy. आशंसाम् Sk.
९. महं P.
१०. प्रक्षि P. अहं विच्छिन्नं मा कार्षम् Sy. मा ... आवृश्चत हे देवाः। ... मा छेत्त। मा म आयुषः प्रार्थनामपहार्ष्ट। दत्त मे दीर्घायुः। स्वार्थ एव वा मिप्। माहमात्मनो दीर्घायुःप्रार्थनां विच्छित्सम्। अविच्छेदेन सततमायुः प्रार्थये। भवन्तश्च यथाप्रार्थितमेव मे देयासुः Sk.
११. पृच्छति छेनन० P.
१२. ०श्छेदा० M. S. omits आशाच्छेदात्.
१३. Omitted by P.
१४. V. Mādhava ignores नमः। Ms. D. puts the figure ॥२७॥ here to indicate the end of the twenty-seventh hymn. No such number is given in P. and M.
१५. ग्रावाः D. त्रावा P.
१६. अञ्जःसवे कर्मणि Sy.
१७. विस्तीर्णाधोभागः Sk.
१८. हस्तेनोद्घृष्यमाण ऊर्ध्वो भवति Sk.
१९. उळूखकसुतान् D. उलूखलेनाभिषुतानां रसम् Sy.
२०. अवजगुललो वा शिरो पिब इति M. अवमवजगुलो वा गिरो पिब इति P. अवजद्गुलो वा गिरो पिब इति D. स्वकीयत्वेनावगत्यैव ... भक्षय ... 'गल अदने' Sy. उलूखलसुतं सोममत्यर्थं पिब। पुनः पुनः पिबेति वा। गॄ निगरणे। तत्प्रतिकूलार्थोऽवपूर्वत्वात् Sk.

**यत्र॒ द्वावि॑व ज॒घना॑धिषव॒ण्या॑ कृ॒ता । उ॒लूख॑लसुताना॒मवे॒द्विन्द्र॑ जल्गुलः ॥२॥**

यत्र द्वाविव[1]। यत्र[2]। द्वौ[3]। इव[3]। जघनौ[4]। अधिषवणफलके[4]। विस्तीर्णे (अ) ध्वर्युभिः कृते[5]। प्रतिमुखे पुरस्तात्। समापिकर्ते पश्चादित्वधिषवणफलकं[6][7] वा सूत्रमिति[8] (?)

**यत्र॒ नार्य॑पच्य॒वमु॑पच्य॒वं च॒ शिक्ष॑ते । उ॒लूख॑लसुताना॒मवे॒द्विन्द्र॑ जल्गुलः ॥३॥**

यत्र नारी[9]। यत्राभिषवप्रवृत्तं ग्रावाणं दृष्ट्वा। स्त्री भर्तरि। प्रवेशकौशलम्[10]। निर्गमनकौशलम्। च। शिक्षते[11]।

**यत्र॒ मन्थां॑ विब॒ध्नते॑ र॒श्मीन्यमि॑त॒वाइ॑व । उ॒लूख॑लसुताना॒मवे॒द्विन्द्र॑ जल्गुलः ॥४॥**

यत्र मन्थाम्। यस्मिन् यज्ञे सोमाभिषवाय[12]। ग्रावाणम्[13]। धारयन्ति[14]। रश्मीनिवाश्वानाम्[15]। यमनाय[16]। तत्रोलूखलसुतानामिति।

**यच्चि॒द्धि त्वं गृ॒हेगृ॑ह उ॒लूख॑लक यु॒ज्यसे॑ ।**
**इ॒ह द्यु॒मत्त॑मं वद॒ जय॑तामिव दु॒न्दु॒भिः ॥५॥**

यच्चिद्धि त्वम्[17]। यदि[18]। अपि[18]। हि[19]। त्वम्। उलूखल[20] ! सर्वेषु गृहेषु। युज्यसे[21]। इहापि[22]।

---

१. जघना is added after °विव by M. २. यस्मिन् कर्मणि Sy. यत्र यज्ञे Sk. ३. अद्यापि वा M.
४. जघनाधिषवण° M. यथा मैथुनकाले स्त्रीपुंसजघने। एवमभिषवकाले परस्परसम्पर्काविधिषवणफलकग्रावाणौ कृतौ Sk.
५. सम्पादिते Sy. ६. पश्चादित्व° M.
७. ०त्वभिषवण P. ८. बाः M. याः D. ९. यत्र यस्मिन् कर्मणि नारी पत्नी अपच्यवं शालाया निर्गमनमुपच्यवं च शालाप्राप्तिं च Sy. १०. यज्ञे मैथुनकाले स्वजघने नारीव पुरुषार्यकोऽभिषवग्रावा इतरस्मै ग्राव्णेऽपगमनमुपगमनं च... अपगच्छत्युपगच्छति चेत्यर्थः। तत्र सोमं पिबSk. ११. अभ्यासं करोतिSy. ददाति Sk. १२. S. omits सोम
१३. आशिरमथनहेतुं मन्थानम् Sy. सोमस्य मथितृत्वाद् ग्रावा मन्थाः। दधिमन्थनरज्जूर्वा। टाभिसोरमृशसौ। यथा दधिमन्थानेन नियन्तुं रज्जुभिर्बध्नीयुस्तद्वत्। तत्रोलूखलसुतं पिब Sk.
१४. मारयन्ति P. विबध्नन्ति Sy. विबध्नन्त्यङ्गुलीभिः Sk.
१५. अश्वरश्मीन् नियन्तुमश्वानिव Sk.
१६. यमनात् P.
१७. उलूखलमुरुकरं वा। ऊर्ध्वखं वा। उर्क्करं वा... तदुलूखलमभवत्... इति सा निगदव्याख्याता N. 9. 20, 21.
१८. यद्यपि Sy; Sk. १९. Omitted by P. and D. २०. उलूखलसुतानामिति P. २१. व्रीहाद्यवघातार्थम् Sk.
२२. स इहापि S. तथापीह मया सोमाभिषवाय युक्तस्त्वम् Sk.

दीप्ततमम्[1]। वद[2] मुसलेनाभिहतः। यथा। जयताम्। दुन्दुभिः[3]।

**उत स्म॑ ते वनस्पते॒ वातो॒ वि वा॒त्यग्र॒मित्।**
**अथो॒ इन्द्रा॑य॒ पात॑वे सु॒नु सोम॑मुलूखल ॥६॥**

**उत स्म ते**। वृक्षविकारस्य वृक्षवत् स्तुतिः। अपिच। ते। वनस्पते[4]! वातः। अग्रम्[5]।
एव। चलयतीन्द्रप्रसादात्[6]। तथा सति। इन्द्रस्य। पानार्थम्। सुनु सोमम्[7]। उलूखल[8]!

**आ॒यजी वा॑ज॒सात॑मा॒ ता ह्यु१॒च्चा वि॑ज॒र्भृ॒तः। हरी॑इ॒वान्धां॑सि॒ बप्स॑ता ॥७॥**

आयजी[9]। उलूखलमुसलयोर्द्वे भवत[10] आयष्टव्ये[11]। अन्नानां समाभक्तृतमे[12]। ते। हि। उच्चैः[13]।
विह्रियेते[14]। अश्वाविव[15] धान्यानामवहननकाले[16][17]। अन्नानि। भक्षयन्तौ।

---

१. प्रभूतध्वनियुक्तं शब्दम् Sy.
२. शब्दं कुरु Sk.
३. राज्ञां दुन्दुभिराघातिः Sk.
४. हे वनस्पतिविकार उलूखल Sk.
५. यस्मात्तवाग्रं वृक्षावस्थायाम् Sk.
६. चलयसि इन्द्र० M. चलती० S. विविधमकम्पयत् Sk.
७. सु M. सोमाभिषवं कुरु Sy.
८. उलूखलं P. हे अधिषवणफलक। ग्रावाणो वा। वा गतिगन्धनयोः। कम्पने च।... वाति स्म। उलूखले सोमाभिषवस्याभिधानात् तत्र तत्रोलूखलकश्रुतेश्च तदाकारतत्कार्यकरत्वाच्चैवम्। फलकास्थचर्मणि ग्रावभिश्चतुर्भिरध्वर्युप्रतिप्रस्थातृनेष्ट्राग्नीध्रैः सूयते सोमः। वात इन्द्रः। स यस्माद् वृक्षावस्थायामग्रकम्पनेनाचलत्वदुःखमपनीतवान् तस्मात् त्वमपि प्रत्युपकारार्थं सोमं सुनु। यस्माद् वातेन चाल्यमानमग्रं न क्वचिदप्यन्यत्र नियुक्तं निष्प्रयोजनमासीदिति वा। इदानीं तु महति प्रयोजन इन्द्रपानार्थं सोमाभिषवणे विनियुक्तमस्ति। तस्मात् सुनु सोमम्। इन्द्रः पास्यतीति वा Sk.
९. आयजि M. आयजी मर्यादया यष्ट्रणी अवघातद्वारेण यागस्य कर्तृणी Sk. आयष्टव्ये अन्नानां संभक्तृतमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने N. 9. 36
१०. ०यो द्वे P. S. omits भवतः after द्वे
११. आष्टव्ये P. D. सर्वतो यज्ञसाधने Sy.
१२. ०भर्तृतमे M. ०भक्तृतदे P. अतिशयेनान्नप्रदे Sy. अवघातवेलायामन्नस्य संभक्तृतमे Sk.
१३. उच्चेः P.
१४. वह्रियेते P. विह्रीयेते M. विशेषेण पुनः पुनर्विहारं कुरुतः Sy. पुनः पुनर्विह्रियेते। हिः यस्मादर्थे वा यस्मात्ते तत्रोच्चैर्विह्रियेते तस्मान्मर्यादया यष्ट्रणी हविः पुरोडाशावघातेनान्नस्य संभक्तृतमे च Sk.
१५. इन्द्राश्वाविव। तौ यथा धाना ऋजीषं च स्वभागं भक्षयतस्तद्वदवघातकाले चरुपुरोडाशानि बप्सतः Sk.
१६. धन्याना० M. १७. ०मपहनन० P.

**ता नो॑ अ॒द्य व॑नस्पती ऋ॒ष्वावृ॒ष्वेभि॑: सो॒तृभि॑: । इन्द्रा॑य॒ मधु॑मत्सुतम् ॥८॥**

**ता नो अद्य** । तौ । नः । अद्य । वनस्पती[1] ! [2] महान्तौ[3] । महद्भिः[4] ! सोतृभिर्ग्राविभिः[5] सह । इन्द्रार्थम्[6] । मधुमदन्धः । सुतम्[7] । परोक्षोपक्रमाः प्रत्यक्षापवर्गाश्च मन्त्रा भवन्ति विपरीताश्चेति[8] ।

**उ॒च्छि॒ष्टं च॒म्वो॑र्भर॒ सोमं॑ प॒वित्र॒ आ सृ॑ज । नि धे॑हि॒ गोरधि॑ त्व॒चि ॥९॥**

**उच्छिष्टम्** । चर्माधिषवणीयं वा सोमं वान्त्या प्रशंसतीत्युक्तम्[9] । प्रजापतेर्हरिश्चन्द्रस्यान्त्या चर्मप्रशंसा[10] वेति कात्यायनः ।

हरिश्चन्द्र ! अधिषवणफलकयोः[11] । उपरि । अवशिष्टं सोमम् । भर । सुतं च सोमम् । दशापवित्रे[12] । आसृज[13] तदर्थम्[14] । निधेह्यधिषवणफलकयोरुपरि[15] । गोः[16] । त्वचीति ।

## I. 29.

**यच्चि॒द्धि स॑त्य सोमपा अनाश॒स्ता इ॑व॒ स्मसि॑ ।**
**आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥१॥**

**यच्चिद्धि** । यत्[17] । सत्य[18] ! सोमस्य पातः ! वयम् । आशंसारहिता[19] दरिद्रैरप्रार्थिता[20] इव ।

---

१. अन्य P. २. वनस्पतिविकारभूते Sk.
३. दर्शनीयौ Sy. ४. दर्शनीयैः Sy.
५. अभिषवहेतुभिः Sy. अध्वर्युप्रतिप्रस्थातृनेष्ट्राग्नीध्रैः सह Sk.
६. ०मदयः P. माधुर्योपेतं सोमद्रव्यम् Sy. ७. ०क्रमः P.
८. वि is omitted by P. ०श्चैति M.
९. BD. III. 101. प्रजापतिं हरिश्चन्द्रं चर्म वान्त्या प्रशंसति। कर्म वान्त्येति केचित्। यान्यस्यामृच्युद्भरणासर्जननिधनादिकर्माणि तानीति। एतद्द्वारेण यागकर्मस्तुतिर्वा। चर्मण इतरस्य वोभयोर्वास्यां प्रशंसासंभवाद् यथोक्तं तत् पर्येष्यम् Sk. १०. KSA 2.
११. अनुपयुक्तं शिष्टं सोममधिषवणफलकाभ्यामुद्धर। अधिषवणफलके अत्र चम्वौ। भ्यामि ओस्। ओसि चेत्सकाशादित्याहार्यः। उदवार्थे वा। चम्यतेऽस्मिन् सोम इति चमूः। चमसम्। सुपि ओस्। हृञ् आङमध्याहरति। अवशिष्टं सोमं चमूषु चमसेष्वाहर Sk.
१२. आहृत्य दशापवित्राख्यपावनवस्त्रे Sk.
१३. प्रक्षिप Sk. १४. दत्थं P.
१५. प्रक्षिप्य स्थापय द्रोणकलशे Sk.
१६. गोस्त्वच्युपरि गोचर्मणि स्थिते द्रोणकलशेऽपनय Sk.
१७. यच्चिद्धि यद्यपि Sy. यस्मात् Sk.
१८. सत्यं M. अविसंवादिन् Sk.
१९. वयमनाशस्ता इव स्मसि अप्रशस्ता इव भवामः Sy. तवात्यन्तस्तुतिपरा भवामः। ईषदर्थे आङ। ईषत्स्तुतिपरा अनाशस्ताः। अविद्यमानेषत्स्तुतयोऽनाशस्ताः। इव एव Sk.
२०. रहिता दरिद्रैरप्रार्थिता is missing in M. दरिद्रैरपि प्रा० S.

भवामस्ततः। अस्मान्। बहुधन ! दरिद्रैः। क्षिप्रम्। आशंसय[१]। गवादिषु[२] त्वया दत्तेषु। शुभ्रिणः शोभायुक्ता इति। यद्वा[३] स्तुतिरहितानाशंसय गवादिप्रदानेनेति[४]।

**शिप्रिन्वाजानां पते शचीवस्तव दंसना।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥२॥**

शिप्रिन्वाजानाम्। हनूमन् ! अन्नपते[५] ! प्रज्ञावन्[६] ! तव विद्यते। कल्याणं कर्मेति[७]।

**नि ष्वापया मिथूदृशा सस्तामबुध्यमाने।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥३॥**

नि ष्वापय[८]। मुमूर्षुः[९] प्राणहरणार्थं[१०] यमादागते मिथुनीभूत्वा[११] दृश्यमाने द्वे स्त्रियौ पश्यति। ते त्वमिन्द्र ! निष्वापय[१२] त्वया निष्वापिते[१३] ते मया। अबुध्यमाने। सस्तां[१४] स्वपिताम्[१५]।

**ससन्तु त्या अरातयो बोधन्तु शूर रातयः।**
**आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥४॥**

ससन्तु त्याः। स्वपन्तु[१६]। त्याः[१७]। अज्ञातयः[१८]। बुध्यन्तु च। शूर ! ज्ञातयः[१९]।

---

१. प्रार्थयमानान् प्रार्थितसम्पादनेन प्रायुङ्क्ष्व Sk. २. अश्वेषु Sy. तद्देहि। गा अश्वान् शोभावतः सहस्रसंख्यान् Sk. ३. यदा M.

४. V. Mādhava ignores चित् हि। इन्द्र। सहस्रेषु। ५. धनानामन्नानां वा स्वामिन् Sk. ६. प्रज्ञा वं(नं) D. प्रजावन् S. शक्तिमन् Sy. कर्मवन् प्रज्ञावन् वा Sk.

७. कर्मविशेषोऽनुग्रहरूपः Sy. दंसना वाक् स्तुतिर्वा। दसिर्दर्शनदंसनयोः। टाप्त्वात् वाक्। यत एवमत आशंसयैतां देहीत्युक्तम् Sk.

८. निष्वावय P. निष्ठपय M.

९. ममूषुः P. मुमूर्षुः किल विकृतरूपाणि प्रेतपिशाचादिमियुनानि पश्यति। तदभावमत्र शुनःशेप आशास्ते Sk.

१०. प्राणसंहरणार्थं M.

११. ०भूते S. परस्परं संगतत्वेन दृश्यमाने यमदूत्यौ Sy. मिथुनीभूय ये दृश्येते ते मिथूदृशे। प्रेतः पिशाचो वा पुमान् स्त्री च Sk. १२. निष्ठापय M. अस्मद्दर्शनपरिहारार्थं नियमेन स्वापयSk.

१३. निष्ठापिते M. S. omits ते after निष्वापिते १४. स्वप्नं कुरुताम् Sk.

१५. सुप्तां P. D. स्वप्तान् M. स्त्रप्ताम् S.

१६. स्ववतु M.

१७. चा S. शिश्नदेवा अरातय इति शत्रौ। त्या इति टाप्। व्यत्ययेन पुंविशेषणत्वम्। . . . रातिर्दाता। तत्प्रातिकूल्ये नाशकरा अरातयः। स्त्रियां वा। हे शूर ! मन्मुक्तीच्छावन्तो ज्ञातयो बोधयन्तु। श्यनि शप्। मदायुर्दानानि बुध्यन्ताम्। म आयुर्देहीत्यर्थः। किं चाशंसयास्मान् Sk. १८. आज्ञातयः M. अदानशीलाः Sy. १९. दानशीलाः Sy.

समिन्द्र गर्दभं मृण नुवन्तं पापयामुया ।
आ तू नं इन्द्र शंसय गोष्वश्वेषु शुभ्रिषुं सहस्रेषु तुवीमघ ॥५॥

समिन्द्र गर्दभम् । संमृण[1] । इन्द्र ! गर्दभम् । शब्दायमानम्[2] । पापया[3] । अनया[4] वाचा ।

पताति कुण्डृणाच्या दूरं वातो वनादधि ।
आ तू नं इन्द्र शंसय गोष्वश्वेषु शुभ्रिषुं सहस्रेषु तुवीमघ ॥६॥

पताति । कुण्ड्ऋणाची[5] नाम पक्षी तेन[6] सह । अरण्यात्[7][8] । दूरं मत्समीपम्[9] । आपतति । वायुः[10] ।

सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम् ।
आ तू नं इन्द्र शंसय गोष्वश्वेषु शुभ्रिषुं सहस्रेषु तुवीमघ ॥७॥

सर्वं परिक्रोशम्[11] । अन्यमपि सर्वं परिक्रोष्टारं वृकादिकम्[12] । नाशय । जम्भयोश्च[13] कुरु ।

---

१. समृण P. संयण M. S. omits संमृण इन्द्र गर्दभम्

२. स्तुवन्तम् । अपकीर्तिं प्रकटयन्तमित्यर्थः Sy. अपशब्दं कुर्वन्तम् । . . . विस्वरमारटन् गर्दभोऽनिष्टसूचको हि । तेन तद्धिंसामाशास्ते । . . . किंचाशंसयास्मान् Sk.

३. पावया P. D.

४. M. reads पावयमानं या for पापया । अनया । S. omits अनया

५. कुण्ठृणाची P. कुण्डृणाची D. कुण्दृनाची M. कुटिलगत्या Sy. कुण्डाकारा भूत्वाऽञ्चतीति कुण्डृणाची वात्या । सा यथाऽधिपताति उपरि गच्छति Sk. ६. तन M.

७. अरण्यादप्यधिकं दूरं देशम् Sy.

८. अरण्यं M. यथा वातोऽपि वनाद्दूरं पतत्यरण्यात् तिर्यग्गच्छति । यथैतयोरेतदुचितमेव स्यात् तद्वत्तवापि स्तोतुरनुग्रह उचित एव । तस्मान्मामनुगृहाण । इत्यौचित्याद् योज्यम् । कुड्यमञ्चतीति वा कुण्डृणाची । कुड्यचारी गरकोलिका । याऽऽरुह्य चङ्क्रम्यत इत्यर्थः । तस्या हि कृष्णाया दर्शनमनिष्टसूचकम् । तदनेन प्रतिपाद्यते । वातोऽपि स्वप्ने मामादाय दूरं गच्छति वनात् । तच्च मुमूर्षोरचिरमरणसूचकमिति श्रुतिश्च । आशु वायुरेनं प्रहरतीति । एताभ्यां द्वाभ्यां लिङ्गाभ्यामासन्नमरणतया मां ज्ञात्वाऽनुग्राहकस्वभावेनाऽऽयुर्देहि गवादींश्च Sk. ९. पततु Sy.

१०. V. Mādhava ignores अधि

११. पवरिक्रोशं M. अस्मद्विषये सर्वत आक्रोशकर्तारं सर्वं पुरुषम् Sy.

१२. अनिष्टं यत् सूचयति तत्सर्वं शृगालवायसादिकम् Sk.

१३. जम्भयाशु S. जम्भय मारय Sy.

कृकलासम्[१]। आ तू[२] न इन्द्रेति[३]।

I.30.

**आ व॒ इन्द्रं॒ क्रिविं॑ यथा वाज॒यन्तः॑ श॒तक्र॑तुम्। मंहि॑ष्ठं सिञ्च॒ इन्दु॑भिः ॥१॥**

**आ व इन्द्रम्।** यथा। अन्नमिच्छन्तः[४]। कूपमुत्सिञ्चन्ति[५] तस्य सेकार्थमेवम्। युष्मदर्थ[६]-
महम्। दातृतमम्[७]। इन्द्रम्। सोमैर्हुतैः[८]। 'आसिञ्चे'[९] इति कामानुत्सिञ्चामीति[१०][११][१२]।

**श॒तं वा॒ यः शुची॑नां स॒हस्रं॑ वा॒ समा॑शिराम्। एदु॑ नि॒म्नं न री॑यते ॥२॥**

**शतं वा**[१३]। शतम्। वा। पूतानां सोमानाम्। सहस्रम्। वा। सम्यगाशिरेण[१४] मिश्रितानाम्।
एवम्[१५]। इच्छति[१६]। निम्नम्। इवोदकम्[१७]।

**सं यन्मदा॑य शु॒ष्मिण॑ ए॒ना ह्य॑स्यो॒दरे॑। स॒मु॒द्रो न व्यचो॑ द॒धे ॥३॥**

**सं यन्मदाय।** यत् सोमपात्रशतमस्य। बलिन[१८] इन्द्रस्य। मदाय भवति[१९] सहस्रं वा। अनेन[२०]

---

१. अस्मद् विषये हिंसाप्रदं शत्रुम् Sy. तद्दर्शनमप्यनिष्टम् । . . . अनिष्टान् सर्वान् अनुक्तांश्च नाशय। इष्टान् कुरु च Sk. २. कू D.

३. Ms. D. puts the figure ॥२९॥ here to indicate the end of the twenty-ninth hymn. No such number is given in P. and M.

४. अन्नशतमस्यमिच्छन्तः M. अन्नमिच्छन्तो वयं शुनःशेपाः Sy. हे इन्द्र त्वां बहुकर्मप्रज्ञं दातृतमं सोमैरन्नकामाः स्तुवन्तो वा सिञ्चाम इत्याशास्महे सोमैः Sk.

५. येन प्रकारेण क्रिविमवटं जलेन पूरयन्ति तद्वत् Sy. महत्या कूपोदकमाहृत्य सिञ्चेत्। तत्समीपस्थमाहावं वा Sk.

६. हे ऋत्विग्यजमाना वो युष्माकं सम्बन्धिनमिममिन्द्रम् Sy. व इत्यमि शस्। भक्त्या परवशचित्त एवम् Sk.

७. अतिशयेन प्रवृद्धम् Sy. ८. ०हुतैः P.

९. आसिञ्चेति P. D. M.

१०. तामनुसि० P. ११. तर्पयामः Sy.

१२. V. Mādhava ignores शतक्रतुम्

१३. द्वावपि वाशब्दौ चार्थे Sk.

१४. सोममिश्रितदध्नां समाशिराम्...शुद्धांश्च दधिमिश्रांश्चात्यन्तबहून् सोमान् Sk.

१५. आगच्छत्येव। सोऽस्माननुगृह्णात्विति शेषः Sy.

१६. उदकं निम्नं प्रदेशं यथा शीघ्रं गच्छति तद्वत् । . . . यस्त्वं सोमपानार्थं शीघ्रमागच्छसि तं त्वां वयं वाजयन्तः सोमैरासिञ्चाम इति समस्तार्थः Sk.

१७. V. Mādhava ignores यः। आ। उ

१८. बलार्थम् Sk. १९. मदाया P.

२०. एना इति सौ टा। . . . प्रथमायां व्यत्ययेनेदम्। यदिदं सोमानां शतं सहस्रं च मदार्थं बलार्थं चास्येन्द्रस्योदरे व्याप्तं सम्यक् धारयति Sk.

अस्य। उदरे। अन्तरिक्षम्[1]। इव। व्याप्तिः। सन्दधे[1] यथान्तरिक्षं विततं तद्वद्[2] व्याप्तमिति[3] तस्मादागच्छतीति[4]।

**अ॒यमु॑ ते॒ सम॑तसि क॒पोत॑इव गर्भ॒धिम्। वच॒स्तच्चि॑न्न ओहसे ॥४॥**

अयमु[5] ते। अयं सोमः। त्वदीयस्तं[6] त्वम्। कपोतः। कपोतीमिव[7] गर्भनिधानीं[8] पिपासुः[9]। सङ्गच्छसि[10]। स्तुतिम्[11]। च। ताम्। अस्मदीयामात्मानम्[12]। प्रापयसि[13][14]।

**स्तो॒त्रं रा॑धानां पते॒ गिर्वा॑हो वी॒र यस्य॑ ते। विभू॑तिरस्तु सू॒नृता॑ ॥५॥**

स्तोत्रम्। गीर्भिरुह्यमान![15] अन्नानाम्। पते![16] यस्य। तव। स्तोत्रमिदमनेन[17][18] क्रियते[18] स्तोत्रा[19] तस्मै[20]। सत्या[18]। श्रीः[18]। अस्तु[21][22]।

---

१. समुद्र इव। यथा समुद्रमध्ये जलं व्याप्तं तद्वत् Sy.
यथा समुद्रो व्याप्नुयात्। एवं त्वदुदरं प्राप्यावतिष्ठते व्यचो व्याप्तिः। तं त्वां वाजयन्त आसिञ्चेम सोमैः। ते त्वदुदरे व्याप्ता भवन्तु Sk.

२. यत्तद् M.

३. व्याप्तिमिति P.

४. V. Mādhava ignores हि

५. अयं ते समतसि N. 1. 10.

६. त्वदीयंस्तं M.

७. यथा कपोताख्यः पक्षी... गर्भधारिणीं कपोतीं प्राप्नोति तद्वत् Sy.

८. धानिं P. धानीं S.
गर्भो धीयतेऽस्यामिति गर्भधिस्ताम् Sk.

९. पिवांसु P.

१०. सहगच्छसि D. सततं गच्छसि Sk.

११. यदिदमुक्तमस्माकं तद्वहस्वात्मानं प्रति प्रापय। मद्वचः श्रुत्वा सोमपानतृप्तो मां मोचय Sk.

१२. अस्मदीयमा० M.

१३. प्राप्नोषि Sy.

१४. V. Mādhava ignores उ

१५. ०मानं S. गिरां वाहक Sk.

१६. चते M.
स्तुत्याश्रयधनानां स्वामिन् स्तोत्रस्तुतिवाहक विक्रान्त Sk.

१७. यस्य तव यावत्किञ्चित् स्तोत्रं तत्सर्वम्। यस्त्वं सर्वैः स्तोत्रैः स्तूयसे तस्य तव विभूतिर्वागस्तु Sk.

१८. यस्य ते तव स्तोत्रमीदृशं भवति तस्य तव लक्ष्मीः... प्रियसत्यरूपाऽस्तु Sy.
विभवतीति विभूतिः। संग्रामस्तुतिकरणसमर्थाऽस्तु Sk.

१९. स्तोत्र P. D.

२०. Omitted by P. and D.

२१. P. reads सत्याश्रिवस्तु। M. reads सत्याशीरस्तु for सत्या। श्रीः। अस्तु।

२२. V. Mādhava ignores वीर

ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो । समन्येषु ब्रवावहै ॥६॥

ऊर्ध्वस्तिष्ठ[1] । ऊर्ध्वः[2] । तिष्ठ । अस्माकम् । रक्षणाय । अस्मिन् । सङ्ग्रामे[3] । शतकर्मन्[4] । शत्रुषु[5] त्वं चाहं च[6] । सम्भूय । ब्रवावहै[7] ।

योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥७॥

योगेयोगे । प्रवेशे प्रवेशे[8] । अतिशयेन बलयुक्तम्[9] । इन्द्रम् । युद्धे युद्धे[10] । हवामहे । सखायः[11] सन्तः । रक्षणाय ।

आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः । वाजेभिरुप नो हवम् ॥८॥

आ घा[12] गमत् । उपागच्छेदिन्द्रः[13] । यदि । शृणुयात् । आह्वानम् । सहस्रसंख्यैः । पालनैः । अन्नैश्च[14] [15] ।

अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् । यं ते पूर्वं पिता हुवे ॥९॥

अनु प्रत्नस्य[16] । यमिन्द्रम्[17] । तव[18] । पिता[19] । आहूतवान्[20] तमहं त्वदर्थम् । पुराणस्यास्य ।

---

१. ऊर्ध्वं तिष्ठ D.

२. ऊर्ध्वं D. ऊर्ध्वतः S.
उत्तिष्ठ यं ब्रवीमि तत्र प्रवर्तस्व Sk.

३. आत्ममरणफलत्वाद् यज्ञ एव संग्रामः Sk.

४. शतकर्मं D. कर्म M.
बहुप्रज्ञ वा Sk.

५. शत्रु P. D. अन्येषु कार्यान्तरेषु Sy.

६. अहं च is omitted by P.

७. ब्रुवामहै D.
संभूयान्यान् देवान् मद्विमोचनार्थमभ्यर्थयावहै। एतदर्थमुत्तिष्ठ। अन्येष्विति शसि सुप् Sk.

८. Omitted by M.
'अपूर्वस्यागमो योगः' इत्यत्रेच्छाप्राप्तिः। तत्र तत्रेच्छाप्राप्तौ Sk.

९. बलवत्तरम् Sk.

१०. Omitted by M. तत्र तत्र संग्रामे Sk.

११. सखिवत्प्रियाः Sy.
हे सखाय इदमिदं ददातीतीन्द्रं तत्र तत्र पालनाय Sk.

१२. ह्वा M.

१३. उपा is missing in M.

१४. सम्बद्धपालनसहस्रैरस्मान् पालयन् अन्नानि च ददद् इत्यर्थः Sk.

१५. V. Mādhava ignores घ

१६. प्रश्नस्य M.

१७. यं नवसोममिति वा Sk.

१८. त्वाम् Sy; Sk.

१९. अस्मदीयो जनकः Sy. मम पिता Sk.

२०. P. reads हूताहूतवन्तमहः for पिता। आहूतवान्। तमहम्।

[1]निवासस्थानात्। अनुक्रमेण। हुवे। अनेकेषु [2]गच्छन्तम्। [3][4]नेतारम्।

**तं त्वा॑ व॒यं वि॑श्ववा॒रा शा॑स्महे पुरुहूत। सखे॑ वसो जरि॒तृभ्यः॑ ॥१०॥**

**तं त्वा वयम्**। तम्। [5]त्वा। वयम्। सर्वेषां [6]वरणीय! [7]प्रार्थयामः। सखे! [8]वासयितः। [9][10]स्तोतॄणाम्।

**अ॒स्माकं॑ शि॒प्रिणी॑नां॒ सोम॑पाः॒ सोम॒पाव्ना॑म्। सखे॑ वज्रि॒न्त्सखी॑नाम् ॥११॥**

**अस्माकम्**। अस्माकं सोमपानस्य [11]साधनभूतम्। [12]शिप्रायुक्तानाम्। सोमस्य पातः! सोमपातॄणाम्। सखे। वज्रिन्! सखीनामुत्तरत्र सम्बन्धः।

**तथा॒ तद॑स्तु सोमपाः॒ सखे॑ वज्रि॒न्तथा॑ कृणु। यथा॑ त उ॒श्मसी॒ष्टये॑ ॥१२॥**

[13]**तथा** [14]**तदस्तु**। यथा वयम्। त्वत्तः। [15]कामयामहे। तथाऽस्माकम्। तत् अस्तु। सखे! वज्रिन्! त्वम्। तथा। कुरु। इष्टयेऽभिलषित[16]सिद्ध्यर्थ[17]मिति।

**रे॒वती॑र्नः सध॒माद॒ इन्द्रे॑ सन्तु तु॒विवा॑जाः। क्षु॒मन्तो॒ याभि॒र्मदे॑म ॥१३॥**

**रेवतीर्नः**। [18]योऽस्माभिः सह सोमेन [19]माद्यतीन्द्र[20]स्तस्मिन्। [21]इन्द्रे। [22]बह्वन्नाः। [23]आपः। [24]अस्मा-

---

१. त्वां पुराणनिवासस्थानं सोमाख्यं प्रति Sk.
२. बहून् यजमानान्प्रतिगन्तारम् Sy. बहूनां प्रत्यवस्थाता तुविप्रतिः कृतानेकयुद्धः Sk. ३. Missing in M. पुरुषमिन्द्रम् Sy. नराकारम् Sk.
४. V. Mādhava ignores पूर्वम्
५. तं त्वा वयम्। तम्। त्वा is missing in M. ६. वरणीयं D. M.
७. आत्मजीवितम् Sk.
८. प्रशस्य धनवन् वा Sk.
९. स्तोत्रर्थम्। आत्मार्थमन्यार्थं वाऽऽशास्महे Sk.
१०. V. Mādhava ignores पुरुहूत
११. ०भूतः P. M. पानसाधनभूतशि० S.
१२. दीर्घाभ्यां हनूभ्यां नासिकाभ्यां वा युक्तानां गवां समूहस्त्वत्प्रसादादस्त्विति शेषः Sy. हनूमतां नासिकावतां वा Sk.
१३. Missing in M. १४. मिदस्तु P.
१५. चिरं जीवेमेति कामयामहे Sk.
१६. तव यागार्थं तत्तथा कुरु Sk.
१७. V. Mādhava ignores सोमपाः
१८. सहभूतैर्यो माद्यते . . . स्तूयते तृप्यते वा तस्य Sk.
१९. मदन्ती० P. D. and M.
२०. तन् M. २१. इन्द्रस्य Sk.
२२. प्रभूतबलाश्च Sy. धनसाधका बह्वन्नाश्च बह्वन्नसाधकाश्च Sk.
२३. क्षीराज्यादिधनवत्यः Sy.
२४. अस्माकं ता गावः Sy. अस्माकं स्तुतयो रेवतीः सन्तु। धनवत्यो भवन्तु। तत्साधका भवन्त्वित्यर्थः Sk.

कम्। सन्तु। क्षुधिता[1] वयम्। याभिः। मदेम[2]। शब्दवन्तो विख्याता वेति।

**आ घ॑ त्वा॒वान्त्मना॒प्तः स्तो॒तृभ्यो॑ धृष्णविया॒नः। ऋ॒णोरक्षं॒ न च॒क्र्योः॥१४॥**

आ घ त्वावान्। त्वत्सदृशः[3]। स्तोतृकार्यार्थम्[4]। शत्रूणां धर्षयितः![5] स्वयमेव। गच्छन्[6] भवति बन्धुस्तथा त्वं च स्वयमेव। आगतः सन् स्तोतॄणां कामान्[7]। ऋणोः[8] प्राक्षिपः[9]। यथा। अक्षम्। चक्रयोः[10]। प्रक्षिपन्ति[11]।

**आ यद्दुवः॑ शतक्रत॒वा कामं॑ जरितॄ॒णाम्। ऋ॒णोरक्षं॒ न शची॑भिः॥१५॥**

आ यद् दुवः[12]। स्तोतॄणाम्। परिचरणम्। शतकर्मन्[13]! कामं[14] च। अक्षम्। इव चक्रयोर्यदा त्वम्। प्रज्ञाभिः[15]। प्राक्षिपस्तदा स्वयमेवागच्छसीति[16][17]।

**शश्व॒दिन्द्रः॒ पोप्रु॑थद्भिर्जिगाय॒ नान॑दद्भिः॒ शाश्व॑सद्भि॒र्धना॑नि।**
**स नो॑ हिरण्यर॒थं दं॒सना॑वा॒न्त्स नः॑ सनि॒ता स॒नये॒ स नो॑ऽदात्॥१६॥**

शश्वदिन्द्रः[18]। इन्द्रेण दत्तं हिरण्यरथं प्रतिगृह्णंस्तं स्तौति[19]—ओष्ठव्यापारं कुर्वद्भिः।

---

१. अन्नवन्तो वयम् Sy.
क्षु शब्दे। कीर्त्यामत्र। कीर्तिमत्यः। वयं याभिर्नित्यमिन्द्रं स्तुम इति वा Sk.
२. मदेमद P. ३. तत्सदृशः M.
४. स्तोत्र S. आत्मना स्तोतृभिः स्तुतिभिर्वा व्याप्तः स्तुतः सन् स्तोतृभ्यः Sk.
५. धर्षयीत M. धाष्ट्र्ययुक्त Sy.
हे प्रगल्भाभिभवितः Sk.
६. अस्माभिर्याच्यमानः Sy.
याच्यमानः Sk.
७. काकामान् P.
८. नृणोः M. ऋणु गतौ। अन्तर्णिच्च। तिपि सिप्। आऋणोत्। स्तोतृभ्यः कामान् गमयति ददातीत्यर्थः Sk.
९. आनीय प्रक्षिपतु Sy.
१०. प्र omitted by M. यथाऽक्षं चक्रेषु प्रक्षिपेद् एवं स्तोतृषु कामान् Sk.
११. V. Mādhava ignores आ घ
१२. आयदूवः P. आयदुवः M.
यावती काचित् परिचर्या तया सर्वया स्तोतृभिरात्मानं परिचारयसि Sk.
१३. कर्म P. D. M.
१४. स्तोतॄणां कामानप्यागमयसि तद्ददासि Sk.
१५. कर्मभिः—शकटोचितव्यापारविशेषैः ... यथाऽक्षं प्रक्षिपन्ति तद्वत् Sy.
कर्मभिर्वा Sk. १६. ०तीति P. D
१७. V. Mādhava ignores आ यत् आ
१८. गश्वदिन्द्रः D.
१९. M. reads तस्तौतोष्ट for तं स्तौति। ओष्ठ०। D. reads आष्ठ for ओष्ठ। घासभक्षणानन्तरभाविनमोष्ठशब्दम् Sy.
प्रोप्रुथद्भिः प्रोथृ पर्याप्तौ ... पर्याप्तः समर्थः। समर्थैः Sk.

अत्यन्तं श्वसद्भिः[1]। अत्यन्तं हेषद्भिरेतैरश्वैः[2]। इन्द्रः। शश्वत्[3]। जिगाय। शत्रुधनानि[4]। सः। अस्मभ्यम्। कर्मवान्[5] ददातु। हिरण्यरथम्। स हि। अस्माकम्[6]। धनस्य। दाता। स एव। नः। ददात्विति।

**आश्विनावश्वावत्येषा यातं शवीरया। गोमद्दस्रा हिरण्यवत् ॥१७॥**

आश्विनौ। आयातम्। अश्विनौ! अश्वयुक्तेन[7]। अन्नेन[8]। क्षिप्रप्रेरणेन[9]। गोयुक्तम्[10]। दर्शनीयौ[11]! हिरण्ययुक्तं च।

**समानयोजनो हि वाँ रथो दस्रावमर्त्यः। समुद्रे अश्विनेयते ॥१८॥**

समानयोजनः[12]। युवयोः[13]। हि। रथः। द्वयोरप्येकभूतः[14]। दर्शनीयौ! अमरणः[15]। अन्तरिक्षमध्ये[16]। गच्छति तत[17] आयातमिति[18]।

**न्य१घ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः। परि द्यामन्यदीयते ॥१९॥**

न्यघ्न्यस्य[19]। अश्विनावेकम्। चक्रम्। रथस्य। पर्वतमूर्धनि[20]। स्थापयामासतुः[21]। अन्यत्तु[22] चक्रम्। परितः[23]। दिवम्। गच्छति।

---

१. अत्यन्तं श्वसद्भिः is omitted by P. शीघ्रगतित्वादत्यर्थं पुनः पुनर्वा श्वासं कुर्वद्भिः Sk. २. भेषद्भि० M. अत्यर्थं पुनः पुनर्वा हेषद्भिः Sk.
३. श्वं P. ४. असुरधनानि Sk.
५. दसि दंशदर्शनयोः। 'दंसना सुवितं करः' इति कर्मणि दर्शनीयत्वाद् दंसना वाक्। रूपं वा। कर्मवान् वा वाग्मी वा रूपवान् वा Sk.
६. स एवास्माकं सर्वविधुरेषु संभक्ता जीवितलाभाय च। स एवास्माकं . . . सनिता। षणु दाने। सनये Sk.
७. हे अश्विनौ अश्ववताऽन्नेनाऽऽयातम्। इत्थंभूतलक्षणाटात्वात्(?) तत्सम्बद्धौ। अश्वयुक्तौ Sk.
८. आश्वयुक्तानन्नेति P.
९. वेगवत्या इषा Sk.
१०. येगायुक्तं P. गोमत्। क्रियाविशेषणम्... गा हिरण्यं च गृहीत्वाऽऽगच्छतम् Sk.
११. अश्विनौ Sy. १२. ०योजनं D.
१३. युवतया P. १४. युवयोर्द्वयोरेकरथारूढत्वाद् उभयार्थं सकृदेव युज्यते Sy. साधारणं युज्यत एव उभयोरपि Sk.
१५. अरेणः P. अमरण M. अप्रतिहतगतिरित्यर्थः Sy
१६. अन्तरिक्षे मध्ये M. अनालम्बने Sk.
१७. त P.
१८. V. Mādhava ignores अश्विना
१९. न्यघ्न्यस्यम् P. न्यास्य M.
२०. ०मूर्ध्नः M. ०मूद्धनि D. ०मूर्ध्नि P. अघ्न्यः . . . अहन्तव्यः। प्रजापतिरादित्यो वा। तस्य मूर्धनि Sk.
२१. नियमितवन्तौ Sk. २२. अन्यन्तु P.
२३. कर्मप्रवचनीयप्रतौ परिः। दिवं प्रति Sk.

कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये । कं नक्षसे विभावरि ॥२०॥

कस्त उषः। कः। ते। उषः! कथनप्रिये[1]! थकारधकारौ[2] समानौ। भोगाय[3] भवति। मर्तः[4]। मरणवर्जिते[5]! कीदृशं[6] च[7] त्वम्[8]। व्याप्नोषि। दीप्तिमति[9]!

वयं हि ते अमन्मह्यान्तादा पराकात् । अश्वे न चित्रे अरुषि ॥२१॥

वयं हि ते। वयम्। हि। त्वाम्[10]। अज्ञासिष्म[11]। आऽन्तात्[12]। आ च पराकात्[13], पराकशब्दो[14] दूरवचनो मूलादुपक्रम्याऽऽन्तादित्यर्थः[15]। अश्वे! गमनशीले[16]! पूज्ये[17]! आरोचन इति। नकारः सम्प्रत्यर्थीयः।

त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः । अस्मे रयिं नि धारय ॥२२॥

त्वं त्येभिः[18]। त्वम्। एतैः प्रदिदित्सितैः[19]। अन्नैः। आगच्छ। दिवः[20]। दुहितः! अस्मासु। रयिम्[21]। नियच्छेति[22] ।[23]

---

१. कथनये P. स्तुतिप्रिये! Sy. 'पुरीषं कम्' इत्युदके। रश्म्याहृतं तद् यो दधाति धारयति वा सः कधः। ...कः प्रजापतिर्वा। केन विधीयते प्रकाशनरसाद्याहरणार्थं स्थाप्यत इति वा। कध आदित्यः। तस्य प्रिया। सः प्रियो यस्या इति वा। अत्यन्तसाहचर्य्याच्च तत्प्रियत्वं साध्यते। एवंभूते Sk.

२. अथकारथकारौ M. ३. पालनाय Sk.

४. मत्तः M. कं मर्तमायुरादिप्रदानेन व्याप्नोषि। ... स भुजेऽलम्। ... कं पालयितुं गच्छसीति वा। कथयैतत्सुखं ज्ञात्वा वयमपि तादृशा एव भवेम Sk. ५. ०वर्जितो D.

६. कीकीदृशं M. कीदृश D.

७. Omitted by D. and P.

८. Omitted by D.

९. विशेषप्रभावयुक्ते! Sy. भा दीप्तौ। विविधा भा विभाः। ... विभायुक्ता विभावरी Sk.

१०. त्वोम् M. ११. अज्ञासिष्ठ P. अज्ञासिष्टाम् M. न बोद्धुं समर्थाः Sy. आजीवितं याचामहे Sk.

१२. अन्तात् D. तात् M. मदायुष आ अवसानात् Sk.

१३. राकात् P. आवर्षशताद्दूरात्। . .आङ मर्यादायामभिविधौ वा। यावद्वर्षशतं पूर्वम् Sk. १४. वराक० P.

१५. ०र्थे P. १६. व्यापनशीले Sy. अश्वे न चित्रे। यथा बद्धबडवा रूपेण विचित्रा पूज्या वा तद्वत्। अश्वे बडवासदृशि व्याप्ते वा। विचित्ररूपे पूज्ये वा Sk.

१७. चायनीये Sy. १८. त्येद्भिः D. त्वेभिः M. १९. प्रसिद्धैः D. त्वं यानि वयमर्थयामहे तैः सम्बद्धाऽन्नैः। यान्यस्मद्देयान्यन्नानि तानि गृहीत्वाऽऽगच्छ Sk. २०. दिवो जातत्वाद् उषा दिवो दुहिता Sk. २१. रयम् P. अस्मभ्यं धनं नियमेन धारय Sk.

२२. निरश्चेति P.

२३. Ms.D. puts the figure ॥३०॥ here to indicate the end of the thirtieth hymn. No such number is given in P. and M.

I. 31.

त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥१॥

त्वमग्ने । हिरण्यस्तूप आङ्गिरसः । त्वम् । अग्ने ! मुख्यः[1] । अङ्गिरसां[2] च । एकः सर्वस्य द्रष्टा[3] । देवः । देवानाम् । अभवः[4] । कल्याणः । सखा[5] । तव[6] । कर्मणि त्वया प्रेरिताः । कवयः[7] । लब्धवेगा[8] लब्धव्याप्तयो वा । प्रादुर्भवन्ति[9] । मरुतः । दीप्तस्वायुधाः[10] ।

त्वमग्ने प्रथमो अङ्गिरस्तमः कविर्देवानां परि भूषसि व्रतम् ।
विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधा चिदायवे ॥२॥

त्वम् । अग्ने[11] ! मुख्यः[12] । अङ्गिरसां[13] च वरिष्ठः । कविः[14] । यज्ञम्[15] । अलङ्करोषि[16] । सर्वस्मै । भुवनाय[17] । अनेकशरीरो[18] भवन् । प्राज्ञः[19] । द्वयोर्लोकयोर्निर्माता[20] । पुरूरवसः

१. सर्वत उत्कृष्टः Sk.

२. शरीरस्थितिहेतोरशितपीतरसकर्ता च । अङ्गं शरीरावयवम् । . . . अङ्गिनः स्थित्यै अशितपीतरसस्तदङ्गिरसः । . . . इत्यङ्गिराः । जाठरो ह्यग्निरन्नं रसीकरोति । रसो लोहितमांसस्नाय्वस्थिमज्जाशुक्लभावेन परिणममानः शरीरस्थितिहेतुर्भवति Sk.

३. मनसैव । अथवा योऽयं प्रथमोऽङ्गिरा ऋषिः स त्वमेव Sk.

४. हविर्नयनाद्युपकारेण देवोऽभवः । तेषामपि दाता Sk.

५. खा M.

६. त M.

७. परिचर्यायामवस्थिता मेधाविनः Sk.

८. ज्ञानेन व्याप्नुवाना ज्ञातकर्माणो वा Sy. विदितयागादिकर्माणो वेदितव्यकर्माणो वा Sk.

९. उत्कृष्टचेष्ठिता अजायन्त । . . . केचित्तु मरुत इति ऋत्विङ्नामाचक्षते । अत्र च ऋत्विक्ष्वेव तद्वत्सु यजमानेषु वा । त्वत्कर्मण्यवस्थिता ऋत्विजो यजमाना वेदितव्यकर्माणोऽजायन्तेति योजना Sk.

१०. ०त्वायुधाः P.

११. अंग्ने P.

१२. प्रत्नः M. सर्वेषामुत्कृष्टः Sk.

१३. अतिशयेनाङ्गिरा भूत्वा Sy. शरीरस्थितिहेतोरशितपीतरसस्यातिशयेन कर्ता Sk.

१४. मेधावी Sk.

१५. कर्म Sy.

१६. ०रोति P. परिगृह्णासि । परिभूः परिग्रहे Sk.

१७. किं चेश्वरश्च विश्वभुवनार्थम् Sk.

१८. नेकशमिरः P. बहुविधः । आहवनीयाद्यनेकरूपधारीत्यर्थः Sy.

१९. प्राज्ञे P. यज्ञस्य सम्पादयिता । . . . नित्यं यज्ञयुक्तस्तस्मात्तत्सम्पादयिता Sk.

२०. द्वयोररण्योरुत्पन्नः । यद्वा द्वयोर्लोकयोर्निर्माता Sy. द्यावापृथिव्यावरणी वा मातृस्थानीये यस्य स द्विमाता Sk.

पुत्रायायवे[1]। गार्हपत्यादिव्यूहेनानेकधा[2]। शयानः[3]।

**त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते ।**
**अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ॥३॥**

**त्वमग्ने**। त्वम्। अग्ने! प्रथमः[4]। मातरिश्वने[4]। आविर्भव[5]। आविः। अभवः। शोभनकर्मेच्छया[6]। विवस्वते[7]। यद्वा[8] तस्मै मातरिश्वा त्वामाजभार। त्वयि होतरि देवैर्वृते[9]। महान्तं त्वां दृष्ट्वा द्यावापृथिव्यौ। अकम्पेताम्[10]। त्वं[11] देवानां हविर्वहनभारम्[12]। सोढवान्। अयजश्च। महतस्तान्[13]। वासयितः[14]।

**त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः ।**
**श्वात्रेण यत्पित्रोर्मुच्यसे पर्या त्वा पूर्वमनयन्नापरं पुनः ॥४॥**

**त्वमग्ने मनवे**। त्वम्। अग्ने[15]! अकथयः[16]। मनुरभ्युदयेन[17] युक्तः स्यादिति। तस्मै स्वर्ग-

---

१. पुत्रायवे P. मनुष्यार्थम् Sy. कतिप्रकारैर्मनुष्यार्थं पुनर्व्यवस्थाता। और्वशेयो वा पुरूरवसः पुत्र आयुः। तदर्थाय। कतिधात्वमग्निहोत्रदर्शपूर्णमासादिषु तावदाहवनीयत्वात् त्रिधा। पिण्डपितृयज्ञचातुर्मास्येषु चतुर्धा। प्रणीतातिरेकात् पशौ पञ्चधा। शामित्रातिरेकात् सोमाग्नीध्रधिष्ण्यातिरेकाद् यावत्तावत्संख्यात्वम् ... आमाशयो जलाशय इव Sk.

२. ०हेनेकन्धा P. D. कतिभिः प्रकारैः Sy.

३. V. Mādhava ignores चित्

४. पुरणवो वा च व P. पुरणं वोताय वः D. पुररणवो वौ यव M. प्रथमो मातरिश्वन आविर्भव is the Editor's emendation. प्रकटो भव Sy.

५. प्रथमो मुख्यो भूत्वा वर्तसे। अग्निर्वायुरादित्य इति वाय्वपेक्षया सर्वत्र मुख्यत्वावगमात् Sy.

६. विवस्वते परिचरते यजमानाय Sy.

७. यदा P. D. ८. कस्मै P.

९. ०र्व्यते M. होतृवूर्ये होतृवरणयुक्ते कर्मणि Sy.

१०. ०ता P. अबिभीतां भयाद्वा Sk.

११. युन् P.

१२. हर्विर्वगभानं देवानयुजश्च P. हर्विर्वहन० M. भारं भरणम् Sy.

१३. महः पूज्यान् Sy. १४. ०यिता P. हे प्रशस्य धनवन् वा Sk.

१५. अनेकमयं D. १६. कथमयान् P. हे अग्ने त्वं मनवे मनोरनुग्रहार्थं द्यां द्युलोकमवाशयः शब्दितवानसि। पुण्यकर्मभिः साध्यो द्युलोक इति प्रकटितवानसि Sy. हे अग्ने त्वं मनुना राज्ञा द्यां द्युलोकं कामितवान्। मनुं राजानं दिवं कामयमानं तत्प्रापणेन प्रयुक्तवान् Sk.

१७. दयन्महयौ युक्तस्यादिति ०दयेन युत्तयादिति M.

कामाय[१]। यथा[२] पुरूरवसे च त्वम्। शोभनकर्मणः[३] कर्त्रे। सुकृत्तमः। क्षिप्रम्[४]। यद्[५]। अरण्योस्त्वम्[६]। परिमुच्यसे[७]। तदानीमेव[८]। त्वाम्। पूर्वम्। अनयन्[९]। यत्पुनश्च[१०]। अपवृत्ते[११] कर्मण्यपरं च कुर्वन्ति[१२]। अयं[१२] ते[१२] योनिः[१३] ऋत्विय इति।

**त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः।**
**य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवाससि ॥५॥**

**त्वमग्ने वृषभः।** त्वम्। अग्ने! कामानां वर्षिता[१४]। पुष्टेर्वर्धकः[१५]। यजमानाय[१६]। भवसि। श्रवणीयः[१७]। योऽग्निः[१८]। स्वाहाकारहुतम्। वषट्कारहुतं[१९] च। परितः। लभते[२०] मनुष्येभ्य इति परोक्षः[२१]।

---

१. स्वर्गकामयथा P. स्वर्गमकामयथाः M.
२. Omitted by P. and M.
३. सुकृते तव परिचरणं कुर्वते Sy. पुरूरवसा सुकृता शोभनकर्माणि कृतवता Sk.
४. श्वात्रेण क्षिप्रमथनेन Sy. श्वात्रेण ... 'क्षिप्रं मक्षु तृषु श्वात्रम्' इति क्षिप्रार्थत्वान्मातरिश्वा निवर्तते। तस्य वायोरत्यन्तक्षिप्रत्वात् स एव श्वात्रः। तेन Sk.
५. यद् यदा Sy. यदा Sk.
६. त्वां M. पित्रोर्मुच्यसे परि। पितरौ द्यावापृथिव्यौ . . . परिरुपरौ। द्यावापृथिव्योरुपर्यमुच्यथाः Sk.
७. ०मुच्यये M. उत्पद्यस इत्यर्थः Sy.
८. ०नीमतः P.
९. नूयन् M. अरण्योरुत्पन्नं त्वां पूर्वं वेदेः पूर्वदेशमानयन्। आहवनीयत्वेन स्थापितवन्तः Sy. यदा पृथिव्या मुक्तवान् ततः प्रभृति मर्यादया त्वां पूर्वमाहवनीयात्मना निहितवन्तो यजमानाः Sk.
१०. यत् omitted by P. and D. मर्यादयैवापरं गार्हपत्यात्मना पुनः पुनस्तत्र कर्मणि Sk.
११. अववृते M.
१२. कुर्वञ्च यन्ते P. पुनः पश्चादपरं पश्चिमदेशमानयन्। गार्हपत्यरूपेण प्रापितवन्तः। आहवनीयकर्मानुष्ठानादूर्ध्वं गार्हपत्यरूपेण धारितवन्त इत्यर्थः Sy.
१३. योनि M.
१४. इष्टार्थदः। हविर्नयनद्वारेण वृष्टेः कर्ता वा Sk.
१५. वृष्टेर्वर्धकः P. पुष्टर्वर्धकः D. वृष्टेर्वर्धतः M.
१६. यन्ममागाय P. यागार्थं नित्यं यः स्रुचमुद्यमयति तस्य वृष्टेर्वर्षयिता वृष्टेर्वर्धयिता च भवसि Sk.
१७. अत्यन्तोत्कृष्टगुणः Sk.
१८. योनि P. D.
१९. वषड्० P. वषट्कारं च कर्म Sk.
२०. परितो जानाति, समर्पयतीत्यर्थः Sy. परि विजानाति Sk.
२१. परोष्व P.

स[1] त्वमग्ने ! एकायुरवच्छिन्नायुरमृतः[2]। अग्रे स्थित्वा मनुष्यान्[3]। परिचरसि यद्वा बहूनां प्रकाशं कुर्वाण[4] एकगमनस्त्वं प्रचरसीति।

त्वमग्ने वृजिनवर्तनिं नरं सक्मन्पिपर्षि विदथे विचर्षणे ।
यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित्समृता हंसि भूयसः ॥६॥

त्वमग्ने वृजिनवर्तनिम्[5]। त्वम्। अग्ने ! युद्धे[6]। शोभनमार्गम्[7]। नरम्। पारयसि[8]। गृहे च[9]। विद्रष्टः[10] ! यस्त्वम्। युद्धे। परिगन्तव्ये[11] सति। धने[12]। क्षुद्रैः[13]। अपि। सङ्गतान्[14]। महतोऽपि स्तोतुः[15] शत्रून्। हंसि[16]।

त्वं तमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवेदिवे ।
यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च सूरये ॥७॥

त्वं तमग्ने[17]। त्वम्। तम्[18]। अग्ने ! अमृतत्वे[19]। उत्कृष्टे। मनुष्यम्। निदधासि[20]। दिवे दिवे[21]।

---

१. स्व P.
२. एवकायु० P. मुख्यान्नः Sy. तस्योद्यतस्रुचः। ङसि ङे...अत्रापीतिहासः। औवंशेय आयुर्गन्धर्वलोकादग्निमाहृत्यायत्तसोम्यः प्रथमं देवविशः पर्यचरत्। ततोऽन्यान्। इत्येतदुच्यते। एक आयुः। प्रथममाहर्ता इत्यस्यैकायुस्त्वम्। अग्ने प्रथमं देवविशः पर्यचरद् इत्यर्थः Sk.
३. प्रथमं तं यजमानं विशस्तदनुकूलाः प्रजाः... सर्वतः प्रकाशयसि Sy.
४. कुर्वन्नेक० P. कुर्वाणेक० D. कुर्वणेक्र० M.
५. ०र्नीं P. ०नि D. ६. कर्मणि Sy. षच सेवायाम्। ... देवानां सेवितः सेव्यो वा।... सेवनशील Sk.
७. विप्लुतमार्गं सदाचाररहितम् Sy. कुटिलमार्गम् Sk.
८. वारयसि P. D. M. पालयसि पूरयसि, वा सत्कर्मानुष्ठानयोग्यं करोषीत्यर्थः Sy. पालयसि Sk.
९. सचनीये समवेतुं योग्ये Sy. यज्ञगृहे Sk.
१०. विष्वगः D. विशिष्टज्ञानयुक्त Sy.
११. ०गन्ते P. १२. घने M. संग्रामे यत्प्राप्यं धनं तन्निमित्तम् Sk.
१३. अल्पसंख्यैः शत्रुभिः Sk.
१४. सम्यग्योद्धुं प्राप्ते सति तदनुग्रहार्थं भूयसः प्रौढान् प्रतिपक्षिणः शत्रून् Sy. संगतौ। भयादसंगतान् दूरस्थानप्यन्यांश्च गत्वा बहून् हंसि Sk.
१५. स्तोतु P.
१६. हिंसि D.
१७. तम् omitted by P. D. M.
१८. यस्त्वां परिचरसि Sk.
१९. अम्यतत्वे M. देवत्वे Sk.
२०. ०ति M.
२१. सर्वकालमित्यर्थः Sk.

अन्नाय[1]। यस्त्वम्। सूरेः[2] स्तोतुः। उभयविधाय[1] जन्मने। तृष्यन्नुभयम्[3]। करोषि[4]। सुखं चास्य
भूयात्। अन्नं[5] चास्त्वित्युभयोरुत्पत्तिमिच्छन्नुभयं[6] करोषीति[7]।

**त्वं नो अग्ने सनये धनानां यशसं कारुं कृणुहि स्तवानः।**
**ऋध्याम कर्मापसा नवेन देवैर्द्यावापृथिवी प्रावतं नः ॥८॥**

त्वं नो अग्ने। त्वम्। अग्ने[8]! अस्माकम्[9]। लाभाय[10]। धनानाम्। यशस्विनम्[11]। स्तोतारं[12]
पुत्रम्। कुरु। स्तूयमानः[13]। प्राप्नुयाम[14]। वयम्। कर्म यज्ञम्। नवेन[15] स्तुतिलक्षणेनानेन। कर्मणा[16]।
तानस्मान्[17] स्तुतिप्रवृत्तान्। देवैः सह। द्यावापृथिवी। रक्षतम्[18][19]।

**त्वं नो अग्ने पित्रोरुपस्थ आ देवो देवेष्वनवद्य जागृविः।**
**तनूकृद्बोधि प्रमतिश्च कारवे त्वं कल्याण वसु विश्वमोपिषे ॥९॥**

त्वं नो अग्ने पित्रोः। त्वम्। अस्माकम्। अनवद्य! अग्ने[20]! द्यावापृथिव्योः।

---

१. यो यजमान उभयाय जन्मने द्विविधजन्मार्थं द्विपदां चतुष्पदां च लाभायेत्यर्थः Sy. कीर्त्यै अन्नाय वा।...यस्त्वां पूजयति तमिह लोकेऽन्नादीनि दत्वा धारयसि। परलोके देवत्वं च। अथवा श्रवः कीर्तिः।...यस्त्वां स्तौति तं देवत्वं प्रापयसि अन्नादीन्यपीह। तव वा तस्य वा यशसे सर्वकालमिति...डे. डौ। उभयाय जन्मने इति। इह च परत्र च Sk.

२. सु० M. अभिज्ञाय यजमानाय Sy. स्तोत्रे Sk. ३. तृष्य उ० M. कृष्य० D. यस्त्वं स्तुतिहविषोस्तृष्णया बाध्यमानः Sk.

४. मयः प्रयश्च मर्यादया विदुषे ददासि Sk.

५. अनश्चास्त्व० P.

६. ०त्युभयोरुभयोरु० M.

७. V. Mādhava ignores आ

८. Omitted by D. ९. ०क P.

१०. लेहाय P.M. लहाय D. दानार्थम् Sy.

११. हे अग्ने त्वं मां धनानां सनये यशस्वन्तं कारुं कुरु स्तूयमानः . . . हविर्लक्षणान्नयुक्तम्। नः इति अमि आम् वा। यशः कीर्तिः। अस्माकमन्तरात्मानं यजमानं वा स्तोतारं धनलाभार्थं यशस्विनं कुरु स्तूयमानः Sk.

१२. कर्मणां कर्तारं पुत्रम् Sy. स्तोतारं यष्टारं च कुर्वित्यर्थः Sk.

१३. सूय० P. स्तूयमा...M.

१४. वर्धयाम Sy. त्वत्प्रसादेन वृद्धिं प्राप्नुयाम Sk. १५. नूतनेन Sy. अन्यैरकृतपूर्वेणान्यैरपि देवैः Sk.

१६. प्राप्तेन त्वद्दत्तेन पुत्रेण Sy. पालनाख्यकर्मणा अपसा Sk.

१७. अग्निप्रसादादस्मत्कर्म। हे अग्ने! धनलाभार्थं मां यशस्विनं स्तोतारं च कृत्वा मत्स्तुत्या प्रसन्नस्तत्कर्म देवैर्द्यावापृथिवीभ्यां युक्तः पाहीत्यर्थः Sk.

१८. रकतं P. १९. V. Mādhava ignores प्र २०. अने M.

उपस्थे[1] वेद्याम्[2]। आसीद[3]। देवो देवानां मध्ये[4]। जागरणशीलः[5] सः। त्वम्। स्तोत्रे। अङ्गानां कर्ता[6] भवामीति। बुध्यस्व भव। च तस्मै[7]। प्रमतिः[8]। त्वं हि। विश्वम्। धनं कारवे। आवपसीति[9]।

**त्वम॑ग्ने प्रम॑तिस्त्वं पि॒तासि॑ न॒स्त्वं व॑य॒स्कृत्तव॑ जा॒मयो॑ व॒यम् ।**
**सं त्वा॒ रायः॑ श॒तिनः॒ सं स॑ह॒स्रिणः॑ सु॒वीरं॑ यन्ति व्रत॒पाम॑दाभ्य ॥१०॥**

त्वमग्ने प्रमतिः। त्वम्। अग्ने[10]! प्रकृष्टमतिः[11]। त्वम्। पितेव[12] च। भवसि। अस्माकम्[13]। त्वम्। अन्नस्य कर्ता[14]। तव। बन्धवः[15]। वयम्। सङ्गच्छन्ते[16]। त्वाम्। शतसहस्रसंख्याः[17]। रायः। शोभनवीरम्[18]। कर्मणां रक्षितारम्। अदाभ्य[19]!

**त्वाम॑ग्ने प्रथ॒मम॒ायुम॒ायवे॑ दे॒वा अ॑कृण्व॒न्नहु॑षस्य वि॒श्पति॑म् ।**
**इळाम॑कृण्व॒न्मनु॑षस्य॒ शास॑नीं पि॒तुर्यत्पु॒त्रो मम॑कस्य॒ जाय॑ते ॥११॥**

त्वामग्ने[20]। त्वाम्। अग्ने! पूर्वम्[21]। आयुम्[22]। अकृण्वन्[23]। आयवे मनुष्याय पुरूरवसे[24]। पुरू-

---

१. ऋत्विग्यजमानास्तिष्ठन्त्यस्मिन् उपस्थीयन्ते वा देवा इत्युपस्थो यज्ञः।...द्यावापृथिव्योर्यज्ञे ताभ्यां यजनीयानां देवानां यज्ञे त्वं देवानां मध्ये दाता Sk.
२. उपस्थे वेद्याम् missing in M. समीपस्थाने वर्तमानः Sy.
३. आसिदवः P. ४. देवानाध्यो P.
५. सर्वकार्येष्वप्रमादी। देवेष्वप्रमत्तः, देवांश्च यष्टुमुत्साहीति वा Sk.
६. स्त्रोत्रंगानां D. पुत्ररूपशरीरकारी भूत्वा Sy. अशितपीतरसानां भावापादानेन शरीराणां कर्ता च Sk.
७. चस्तस्मै D. चनस्तमै P.
८. प्रकृष्टज्ञानस्त्वं द्युस्थानां देवानामर्थायास्मत्कृतयज्ञे याः स्तुतयस्ताः श्रुत्वा बुध्यस्व। स्तोतॄणामुपर्युपरि भद्र सानुग्रह कमनीय वा स्तोत्रे बहुधनं ददासि यत् तदस्माकं च देहि Sk. ९. V. Mādhava ignores कल्याण
१०. प्रमतिः। त्वम्। अग्ने is missing in M. ११. अस्मदनुग्रहरूपप्रकृष्टमतियुक्तोऽसि Sy. प्रकृष्टज्ञानः Sk.
१२. त्वं पितृकार्यकरत्वान्नः पितासि। पितैव पितामहः। त्वत्पुत्रोऽङ्गिराः। तत्पुत्रोऽहमिति Sk. १३. अस्मान् M.
१४. आयुष्यप्रदोऽसि Sy. तण्डुलादि पचसीत्यर्थः। कृञ् दाने। स्तोतॄणां दाताऽन्नानां वा Sk.
१५. वन्धवः P. बान्धवाः S. तव सजातयो वयं पौत्रत्वात् Sk. १६. सम्यक् प्राप्नुवन्ति Sy. १७. अत्यर्थं बहवः Sk.
१८. शोभनं वीरम् S. शोभनपुरुषयुक्तम् Sy. सुष्ठु वीरो विक्रान्तः। शोभना वा वीरा यस्य सम्बन्धिनः। केन सम्बन्धेन? सामर्थ्यात् स्तोतृत्वेन। स सुवीरस्तम् Sk.
१९. अदाह्य P. अदाभ्यः D. M. अहिंस्य! Sk. २०. त्वम० P.
२१. अग्रे इति वा क्रियाविशेषणम् Sk.
२२. असुरान् प्रति गन्तारं त्वां देवाः Sk.
२३. ०वन्न...M. २४. Missing in M. आयोर्मनुष्यरूपस्य नहुषस्यैतन्नामकराजविशेषस्य Sy.

रवसः पुत्र आयुस्तथा। देवा अकृण्वन्। नहुषस्य च राज्ञः। विश्पतिं[1] नाम पुत्रं तथा।[2] मनोश्च त्वाम्।[3] इळां नाम दुहितरमकृण्वन्। या जाता सती पितरं मनुम्।[4] अन्वशास्त[5] यज्ञप्रयाजानुयाजयोर्मध्ये[6] मामवकल्पय[7] मया सर्वानेव कामान् प्राप्स्यसीति। यदा। ममकस्य पितुरङ्गिरसः।[8] पुत्रः। जायते तदानीं तं च[9] त्वामकृण्वन्नङ्गिरसामेकमिति।

**त्वं नो॑ अग्ने॒ तव॑ देव पा॒युभि॑र्म॒घोनो॑ रक्ष त॒न्व॑श्च वन्द्य।**
**त्रा॒ता तो॒कस्य॒ तन॑ये॒ गवा॑म॒स्यनि॑मेषं॒ रक्ष॑माण॒स्तव॑ व्र॒ते ॥१२॥**

त्वं नो अग्ने। त्वम्। अस्मान्।[10] अग्ने! तव। देव! रक्षणैः।[11] हविष्मतः।[12] रक्ष। पुत्रान्।[13] च। वन्द्य त्वं हि।[14] पुत्रस्य।[15] पुत्रेऽपि।[16] गवाम्। रक्षकः। भवसि। त्वदीये। कर्मणि[17] प्रवृत्तं मनुम्। अनवरतम्।[18] रक्षमाणः।[19]

**त्वम॑ग्ने॒ यज्य॑वे पा॒युरन्त॑रोऽनिष॒ङ्गाय॑ चतुर॒क्ष इ॑ध्यसे।**
**यो रा॒तह॑व्योऽवृ॒काय॒ धाय॑से की॒रेश्चि॒न्मन्त्रं॒ मन॑सा व॒नोषि॒ तम् ॥१३॥**

त्वमग्ने यज्यवे।[20] त्वम्। अग्ने! यजमानार्थम्।[21] कर्मणोत्तरम्। गोरक्षकः।[22] रक्षोभि-

---

१. सेनापतिम् Sy. ङसि ङे। आयोर्नहुषस्य च सेनापतिं चक्रुः Sk.
२. ०तिर्न्नामिपुत्रस्तथा D. ०स्तथा M.
३. त्वम् D. ४. Omitted by P.
५. ०शात् P. D. M.
धर्मोपदेशकर्त्रीम् Sy.
मनुष्यस्य वशवर्तिनीम् Sk.
६. यज्ञे० M. ७. ०ल्पयाया P.
८. ०कस्यापि कृतं गिरस P.
पितुर्यदा पुत्रः पुरूरवा नाम मदीयस्याग्नेरिळाया जायते।... इळारूपिणोऽग्नेरेव पुत्रः पुरूरवाः। अग्निर्हिरण्यस्तूपपितामहः। पितृकारकत्वात् पिता वेति व्याख्यातम्। अत उपपन्नमेतत्। ममकस्य पितुरग्नेरिळारूपिणो यदा पुत्रः पुरूरवा नामाऽजायत Sk.
९. तदान्तं च M. तदानीकञ्च P.
तदानीं हे अग्ने! त्वमेव पुत्ररूप आसीरिति शेषः Sy. १०. अस्माकम् Sk.
११. ०णै P. १२. धनयुक्तान् Sy.
हविर्लक्षणेन धनेन धनवतः Sk.
१३. यज्ञवतोऽस्मत्पुत्रपौत्रादींश्च Sk.
१४. Omitted by M.
१५. अस्मदीयस्य Sy.
तोकस्य तनयस्य।... ङसि ङिः।... पुत्रस्य पौत्रस्य चेत्यर्थः Sk.
१६. पुत्रापि P.
१७. तव यागकर्मणि व्यवस्थितानां च यजतां पुत्रपौत्राणां गवां च रक्षिताऽसि Sk.
१८. ममनुपरतं P. अनुमननपरतं M.
निमेषवर्जितं यत्नेन परिरक्षन् Sk.
१९. M. adds रक्ष before रक्षमाणः
२०. यज्यावे D.
२१. यजमानस्य Sy.
२२. ०ऽन्तरङ्गो० S. पालकः Sy.
स्तोतृयजमानानां च पालयिता Sk.

रनिषङ्गाय[1] । सर्वतो[2] ज्वालाभिः[3] पश्यन् रक्षसामनन्ववचाराय[4] । समिध्यसे । यः । दत्तहविष्कः[5] । रक्षो[6]-
वर्जिताय तस्मै प्रीणनाय[7] सोमम्[8] । पिबसि[9] यश्च तस्य[10] । स्तोतुः । मन्त्रः । तं[11] च । मनसा । कामयसे[12] ।

**त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषि तत् ।**
**आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः॥१४॥**

त्वमग्न उरुशंसाय। त्वम्। अग्ने! बहुस्तुतये[13]। यजमानाय। स्पृहणीयम्[13]। यत्। धनम्[14]। उत्तमम्। तत्[15]। प्रयच्छसि[15] तथा[16]। दानाधारभूतस्य[17] दरिद्रस्य। प्रमतिः[18]। पिता[19]। उच्यसे। प्रशास्सि[20] न्यच[21]। विद्वत्तरस्त्वम्। पक्तव्यप्रज्ञमज्ञम्[22]। प्र। दिशश्चतस्रो[23] दिशः।[24]

---

१. ०भिरभिष० P.
अन्यदेवतापरिचरणाय न निषज्यते कामभोगेषु वेत्यनिषङ्गस्तस्मै। त्वत्स्तुतियागपरायाभोगप्रधानाय वा Sk.

२. सर्वत्वो P.

३. ज्वाति P.
दिक्चतुष्टयेऽपीन्द्रियस्थानीयज्वालायुक्तः Sy. दिक्चतुष्टयाभिमुखो दीप्यसे। अक्ष्णा मुखं लक्ष्यते। समन्ताद् यज्ञे दीप्यसे इत्यर्थः Sk.

४. रक्षसमन्वचा० P. रक्षसीति नन्ववचा० D.

५. दहविष्णः P.
यो यज्युः शतहव्यः पूर्वमपि दत्तहविष्कः Sk.

६. अहिंसकाय Sy.
अहिंस्राय तुभ्यम्। वृको हिंस्रप्राणिः। तत्स्वभावरहिताय। अथवा कुक वृक आदाने इत्यस्माद्वा। आज्यसोमपयःप्रभृतीनामादात्रे इति Sk.

७. धायसे पोषकाय तुभ्यम् Sy.

८. सोमः P.

९. अच्छिन्नपानभोगार्थं दत्तहविष्क इत्यर्थः Sk.

१०. तस्या D. M.
स्तोतुरेव सतस्तस्य सम्बन्धिनं मन्त्रं त्वदीयस्तोत्ररूपं त्वदीयेन चित्तेन याचसि Sy.

११. कं M.
यो दारिद्र्यान्न यजते स्तौत्येव तस्यापि मन्त्रलक्षणां स्तुतिं मनसा हृदयेन संयाचसे। वन याच्ञायाम्। संभजसि वा सादर एव। तच्छब्दाद्यच्छब्दश्च। यस्तमिति। तं प्रार्थयसे संभजसे वा Sk.

१२. V. Mādhava ignores चित्

१३. बहुभिः स्तोतव्याय Sy. बहुस्तुताय Sk.

१४. ०णीययेद्धनम् M.

१५. तत्...अनुष्ठाता लभतामिति कामयसेSy.

१६. कथा D. तदा M. अनुग्रहपरः Sk.

१७. सर्वतो धारणीयस्य पोषणीयस्य दुर्बलस्य यजमानस्यापि Sy.

१८. ०ति P.

१९. पितृसदृश इति च Sk.

२०. प्रशास्स P. प्रशासि M.
अविपक्वप्रज्ञं परिपक्तव्यप्रज्ञं वा प्रकर्षेणानुशास्य प्रज्ञामस्य जनयसीत्यर्थः Sk.

२१. च S.

२२. वक्तव्यप्र० P. वक्तंव्यप्र० D. वक्तस्यप्र० M. शिशुम् Sy.

२३. दिक्षु निवसितानि सर्वभूतान्यपि प्रानुशास्सि विद्वत्तरः Sk.

२४. V. Mādhava ignores चित्

त्वम॑ग्ने प्रय॑तदक्षिणं॒ नरं॒ वर्मे॑व स्यू॒तं परि॑ पासि वि॒श्वतः॑ ।
स्वा॒दु॒क्षद्मा॒ यो व॑स॒तौ स्यो॑न॒कृज्जी॑वया॒जं यज॑ते॒ सोप॒मा दि॒वः ॥१५॥

**त्वमग्ने प्रयतदक्षिणम्।** त्वम्। अग्ने! दरिद्रेभ्यः[1][2]। प्रदत्तधनम्[1][3]। मनुष्यम्[4]। कवचमिव[5]।
उरसि बद्धमिषुभ्यः[6]। सर्वेभ्यो दुरितेभ्यः[7]। परिरक्षसि। स्वाद्वन्नः[8]। यः। गृहे[9] दरिद्राणाम्[10]। सुख-
कृत्[11]। जीवानामन्नप्रदानाद् यज्ञम्[12]। करोति। सः। स्वर्गस्य[13]। उपमाऽन्तिके वर्तते।

इ॒माम॑ग्ने श॒रणिं॑ मीमृषो न इ॒मम॑ध्वानं॒ यमगा॑म दू॒रात् ।
आ॒पिः पि॒ता प्रम॑तिः सो॒म्यानां॒ भृमि॑रस्यृषि॒कृन्मर्त्या॑नाम् ॥१६॥

**इमामग्ने।** अरण्ये तपोऽर्थं गतोऽग्निमाशास्ते[14]—इमाम्। अग्ने! तपोजनितां हिंसां[15] फलप्रदा-
नेन[16]। अस्मान्[17]। यथा सहामहे[18] तथा कुरु। तथा इमम्। अध्वानं[19][20] च। यं वयं[21] त्वां द्रष्टुकामाः। दूरात्[19]।

---

१. येन यजमानेन ऋत्विग्भ्यो दक्षिणा दत्ता तादृशं नरम् Sy.
२. रिन्द्रे P. D. इन्द्रेभ्यः M.
३. दत्त० D. M. धन० P.
यमु दाने बन्धने वा। त्वं दत्तदक्षिणं प्रबद्धदक्षिणं सन्ततदानम् Sk.
४. ०ष्य M. ०ष्ये D.
५. कवचानुस्यूतं योद्धारं त्वदीयं पासि यथा तद्वत् Sk. ६. बन्ध० M.
निश्छिद्रत्वेन सूचीभिः सम्यक् निष्पादितम् Sy. ७. सर्वतः Sk.
८. स्वद्वन्नः P. स्वाद्वग्नः M.
९. स्वगृहे Sy. यः स्वगृहे ऽतिथिं स्वाद्वन्नं भोजयसि Sk. १०. दरिणां P.
अतिथीनाम् Sy. ११. सुखकं D.
सुखकृत् शय्यायां शाययति Sk.
१२. जीवयजनसहितं यज्ञं, यद्वा जीवनिष्पाद्यम् Sy.
जीवो जन्तुर्याज्ञीयपशुना यथेष्टं यजते च देवान् वा त्वां वा Sk.
१३. दृष्टान्तः... यथा स्वर्गोऽनुष्ठातॄन् सुखयति तथा त्वमपिऋत्विगादीनित्यर्थः Sy.
स त्वत्प्रसादात्स्वर्गस्थ एव। अथवा दिवः स्वर्गस्योपमानभूतः। सर्वैः प्राणिभिर्मृष्टाहारसन्तुष्टैः स्वर्गोऽयमिति स्तूयते इति वाऽर्थः Sk.
१४. गताग्नि० M. हिरण्यस्तूपो यागायाग्निं विहृत्यानिष्ट्वा रक्षोभयाद् दूरं जगाम। तेषु गतेषु प्रत्यागत्य कृतापराधत्वाभिप्रायेणाग्निमाह Sk.
१५. अस्मत्सम्बन्धिनीम् Sy.
हे अग्ने आत्मन इमां हिंसां क्षमस्वास्माकम् Sk.
१६. ०दानानां P. व्रतलोपरूपाम् Sy.
१७. स्वान् P.
१८. सहामग्ने P. क्षमस्व Sy.
१९. तथा त्वदीयसेवामग्निहोत्रादिरूपां परित्यज्य ... दूरदेशं यमिममध्वानं ... वयं गतवन्तस्तमपि क्षमस्वेति शेषः Sy.
यद्वयं त्वां विहृत्यानिष्ट्वा रक्षोभयादिममत्यन्तं दूरमार्गं यमगाम तदस्मदपराधं त्वद्धिंसां मृषस्व। यस्मात्त्वं ज्ञातिः पितृस्थानीयश्च Sk.
२०. ममध्वानं M. २१. वयं वयं D.

अगाम। ज्ञातिः[1]। पालयिता। प्रमतिश्च[2]। सोमार्हाणाम्[3]। भ्रमणशीलस्त्वमन्धकारापनयनात्[4]। [5]
मनुष्याणाम्। दर्शनकृत्[6]।

**मनुष्वदग्ने अङ्गिरस्वदङ्गिरो ययातिवत्सदने पूर्ववच्छुचे।**
**अच्छ याह्या वहा दैव्यं जनमा सादय बर्हिषि यक्षि च प्रियम्॥१७॥**

मनुष्वदग्ने[7]। अङ्गिरसामेक[8]! मन्वादीनामिव[9] ममापि[10]। गृहेऽधुना[11]। अभिमुखम्[12]।
याहि। आवह च[13]। दैव्यम्[14]। जनम्[15]। आसादय च। बर्हिषि[16] यज[17]। च। प्रियं[18] देवगणम्[19]।

**एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा।**
**उत प्र णेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या॥१८॥**

एतेनाग्ने। एतेन। अग्ने[20]! स्तोत्रेण। वृद्धो[21] भव। यथा कश्चिच्छक्तया[22] महता प्रयत्नेन

---

१. प्रापणीयः Sy.
२. प्रकृष्टमतिरनुग्रहपरश्च Sk.
३. सोमसम्पादिनां सर्वयजमानानाम् Sk.
४. भूमिर्भ्राम्यतेः N. 6. 20.
५. कर्मनिर्वाहक इत्यर्थः Sy.
६. अथवा मुक्त्यर्थः। हे अग्ने इमां संसृतिं मार्जय, अस्माकं जननमरणादीन्यतिदुःखदानि शोधयापनय। दूरात् सृष्ट्यादिमयं संसाराध्वानं गताः स्म। यस्मात्त्वं बन्धुः पितृकार्यकरश्चानुग्रहमतिश्च सोमार्हाणां सतां दर्शनकृत् सम्यक्ज्ञानकरोऽसतां भ्रमयिताऽसि मोहकरः। तस्मादस्माकमृषिकृद् भवेत्यर्थः। एतदुक्तं भवति। क्रान्तेः सम्यक् ज्ञानस्य च त्वं कर्ता। त्वदायत्तौ संसारमोक्षौ। त्वं च पितृवत् सर्वजमानामनुग्रहपरश्च। अतोऽस्मान् सम्यग्ज्ञानोत्पादनेन मोचयास्मात्संसाराद् इति Sk.
७. मनुष्यवद० M. मनुष्यद० P.
८. ०रसोमेक P.
अङ्गनशील हविरादानाय तत्र तत्र गमनशील Sy.
९. ०दिना० P.
यथा मनुरनुष्ठानदेशे गच्छति,... यथा चाङ्गिरा गच्छति, यथा ... ययातिर्नाम राजा गच्छति। पूर्ववद् अन्ये च पूर्वपुरुषा यथा गच्छन्ति। यथा मन्वादयो यज्ञे गच्छन्ति तद्वत्। अथवा मन्वादीनां यज्ञे यथा त्वं गच्छसि तद्वत् Sy.
यथैतेषां मन्वङ्गिरोययातिपूर्वर्षीणां होतृत्वेन निषद्यायजः। हे अशितपीतरसस्य कर्तः तद्वन्ममापीत्यर्थः Sk.
१०. ममा P.
११. देवयजनदेशे Sy.
१२. अभिगत्य Sk.
१३. देवलोकं सर्वदेवान् वा Sk.
१४. दैव्यज्ञम् P.
१५. आवह M.
१६. अस्मदीये Sk.
१७. देहि Sy.
१८. अभीष्टं हविः Sy.
इष्टं तव कामं वा Sk.
१९. V. Mādhava ignores अग्ने शुचे।
२०. अग्नेः M.
२१. अत्यर्थं वर्धस्व। स्तूयमाना हि देवता वीर्येण वर्धन्ते Sk.
२२. अस्मदीयशक्त्या च Sy.

स्तोत्रं करोति तथा। यत्[1]। ते। चक्रम[2]। विदा। वा[3] ज्ञानेन[4] वा यद् ब्रह्म वयम् चक्रम[5]। अपिच। अस्मान्[6]। श्रेयश्च अभिप्रणय[7]। अन्नवत्या[8] त्वदीयया। सुमत्या च। अस्मान्। संसृजेति[9]।[10]

## I.32.

**इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री।**
**अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥१॥**

इन्द्रस्य नु। अथेन्द्रस्याहम्। क्षिप्रम्। वीर्याणि। प्रवक्ष्यामि। यानि[11]। चकार। पुरातनानि[12]। वज्री तान्याह[13]— अहिमसुरम्[14]। अहन्[15]। हत्वा च तेन रुद्धाः[16]। अपः सूच्येव रश्मिभिः[17]। ततर्द। प्राभिनच्च। शिलोच्चयानाम्[18]। नदीः[19] पृथिव्यां पातयितुम्[20][21]।

---

१. Missing in M.

२. चक्रम P. चक्रुम M.

३. पिदाव P.

४. ज्ञोऽनेन M. यद् ब्रह्म यथाशक्ति यथाज्ञानं करवाम Sk.

५. चक्रमः P.

६. अस्माज्छ्रेयश्च M.

७. प्रकर्षेण प्रापय Sy. स्तुतिकरणैरस्मान् प्रवर्तयसि। वस्यो वसीयोऽसि। अस्माभिः स्तुतिं कारयसीत्यर्थः। एतदुक्तमत्र। त्वत्स्तुत्यर्थं कुतोऽस्माकं शक्तिः ज्ञानञ्च। त्वदनुग्रहादेव त्वामस्तौष्म। न स्वमहिम्नेति। . . . एतेन ब्रह्मणाऽभिप्रणय। अपिच वसूनि वर्धयस्व च। अस्मभ्यं देहीत्यर्थः Sk.

८. ०णयनान्न० M.

९. ज्ञानमन्नं च नो जनयेत्यर्थः Sk.

१०. Ms. D. puts the figure ॥३१॥ here to indicate the end of the thirty-first hymn. No such number is given in P. and M.

११. अन्येनाकृतपूर्वाणि Sk.

१२. त नानि P. पूर्वसिद्धानि Sy. अत्यन्तप्रकृष्टानि. . . मेघहननापस्तर्दननदीप्रभेदनादीनि। तान्यवोचमित्यर्थः Sk.

१३. तान्याहि P.

१४. निमसुरम P. मेघम् Sy.

१५. Omitted by P. भूपातनमपां हिंसनम् Sk.

१६. पूर्वं मेघं हत्वा तदनन्तरं मेघस्था अपः पातितवान् Sk.

१७. सूर्यपरश्मिभिः M.

१८. ०यान् M.

१९. पर्वतसम्बन्धिनीर्नदीर्बहूदकत्वाद् भित्त्वा स्वकूलानि सर्वतः प्रहितवान् इत्यर्थः। तर्द विस्तारे वा। पृथिव्यामपो वितस्तार। पातिताभिर्विस्तृताभिर्वा नदीकूलभेदः। अथवा वक्षणाः पशवः। पर्वता मेघाः। तेषामेकं हत्वाऽन्येषामपि पशून् भिन्नवानित्यर्थः। अथवा पशुवचनेन वक्षणाशब्देन तत्सामीप्यात् पक्षा अत्र प्रतिपद्यन्ते। पर्वतोऽपि महीधरः। पर्वतानां पक्षान् प्राभिनत् छिन्नवान्। एवं हि चरकाध्वर्यूणां ब्राह्मणे इतिहासः श्रूयते। प्रजापतेर्वा हुतं ज्येष्ठं तोकं यत्पर्वताः। ते पक्षिण आसन्। ते यत्र यत्राकामयन् तत्तत् परापातम् आसत। अथ चेयं तर्हि शिथिलासीत्। तेषामिन्द्रः पक्षानच्छिनत्। तैरिमामदृंहत्। इतिSk.

२०. पातयितुः P.

२१. Cf. N. 7. 2.

अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।
वाश्राइव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः ॥२॥

अहन्नहिम् । अहन् । अहिम् । [1]महीधरे लीयमानम्[2] । त्वष्टा । अस्मै । वज्रम् । स्वकरण-शीलम्[3] । अकरोत् तीक्ष्णधारम्[4] । शब्दकारिण्योऽतिनव[5]प्रसूता इव । धेनवो वत्सान्[6] प्रति[7] स्यन्दमानाः । अञ्जसा[8] । अन्तरिक्षं[9] प्रति । अवगताः । आपः । यद्वोदधिं[10] प्रति गता इति ।

वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य ।
आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ॥३॥

वृषायमाणः । वृषभ[11] इवाचरन्[12] । अवृणीत[13] । सोमम् । आभिप्लविकस्य[14] पूर्वस्त्र्यह[15]स्त्रिकद्रुक[16]-स्तस्मिन् । सुतम् । अपिबत्[17] । सोमम् । आदत्त । अन्तकरम्[18] । आयुधम् । मघवा तेन । एनं[19] मेघशिर[20]-महिमसुरम् । मेघानाम् । मुख्यम्[21] । अहन् ।

---

१. M. adds तं before अहन् ।
२. ०मानः D. आश्रितम् Sy. मेघा हि स्वभावेन पर्वतेषु लीयन्ते । योग्यत्वसन्निधानाभ्यां वा वज्रत्वकरण-प्रतीतिः । प्रहर शीघ्रमयं दण्ड इति-वत् Sk.
३. ०करेणशीः D. ०शिलम् P. सुष्ठु प्रेरणीयं, यद्वा शब्दनीयं स्तुत्यम् Sy. प्रहारवेलायां शब्दकरमुपतापयितारं वा Sk.
४. तेनाहन्नित्यर्थः Sk.
५. ०भिनव० P.
६. वत्सं P.
७. हते चाहौ आपः स्यन्दमानाः स्रवन्त्यः समुद्रादन्तरिक्षात् Sk.
८. अञ्ज ऋजुना मार्गेणावजग्मुः । अधोभूमिं जग्मुः... अञ्जः क्रिया-विशेषणं वा । टार्थेऽयं सुः... अञ्जः क्षीरं वाऽमि । यथा वाश्रा धेनवोऽञ्जः क्षीरं स्रवन्ति तद्वत् समुद्रमवजग्मुरापः Sk. ९. समुद्रम् Sy. पार्थिवमेव समुद्रं स्वार्थे । अन्तं जग्मु-रिति वा Sk.
१०. ०दधि P.
११. ऋषभ P. D. वृष अशने ।... अश्नन् ।... वृषा वर्षम् । तदात्मन इच्छतीत्यर्थे सुप आत्मनः क्यच्... वृषमिच्छन् वा Sk.
१२. वाचा अन् P.
१३. न वृणीत M. प्रार्थितवान् Sk.
१४. ०प्लपिकस्य P. आभिविकस्य M. अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्याचक्षते । अभिप्लवत्र्यहेषु पीतवान् अभिषुतं तस्यैकदेशं वा Sk.
१५. ०स्त्रियह० P. ०स्त्रिवह० D. M.
१६. ०द्रुतुस्त० P. ०स्त्रितद्रतुं त० M. त्रिकद्रुकेषु ज्योतिः, गौः, आयुः, इत्येतन्नामकास्त्रयो यागास्त्रिकद्रुका उच्यन्ते Sy. १७. आ० M.
१८. आदन्तात्तकर्मकरम् M. बन्धकम् Sy.
१९. एवं M. २०. ०शिरसमसुरं S.
२१. प्रथमोत्पन्नम् Sy.

**यदि॒न्द्राह॑न्प्रथम॒जामही॑ना॒मान्मा॒यिना॒ममि॑ना॒ः प्रोत मा॒याः ।**
**आत्सूर्यं॑ ज॒नय॒न्द्यामु॒षासं॑ ता॒दीत्ना॒ शत्रुं॒ न किला॑ विवित्से ॥४॥**

यदिन्द्र[1]। यदा। इन्द्र ! हतवानसि। प्रथमजातम्[2]। अहीनां[3] यदा च। तदनन्तरं[4] तत्सहायानाम् मायावताम्[5]। मायाः। प्रकर्षेण। हिंसितवानसि[6]। तदनन्तरमहिना तिरोभूतम्। सूर्यम्। द्याम्[7]। उषसं च। प्रादुर्भावयन् त्वम्। तदानीं[8] जगति[9]। न कंचन[10] शत्रुं हतशिष्टम्[11]। अन्वविन्दः[12]।

**अह॒न्वृ॒त्रं वृ॑त्र॒तरं॒ व्यं॑स॒मिन्द्रो॒ वज्रे॑ण मह॒ता व॒धेन॑ ।**
**स्कन्धां॑सीव॒ कुलि॑शेना॒ विवृ॑क्णाहिः॑ शयत उप॒पृक्पृ॑थि॒व्याः ॥५॥**

अहन् वृत्रम्[13]। हतवान्। वृत्रम्[13]। अतिशयेन निवेष्टयितारम्[14]। व्यंसं चापरमसुरम्[15]। इन्द्रः। महता। आयुधेन[16]। हन्त्रा[17]। यथा वृक्षस्य स्कन्धांसि। कुठारेण[18]। विविधं[19] छिन्नानि शेरत[20] एवम्। अहिः। शेते[21] छिन्नपादहस्तः। पृथिव्याः। उपपर्चनः[22]।

---

१. यदिन्द्रा P.
२. प्रथमं S.
३. अहिन्मां P.
४. न्तरा P.
५. तत्सहाया तामापता P.
६. मेघहननेन तत्सहायानां मायायुक्तानां बलं प्रज्ञां चातिसन्धां प्रामिना इत्यर्थः। यदा मेघहानिस्तदैव सर्वजनवृष्टिमूलत्वात् Sk.
७. दां M.
८. तावन्तं महापरिमाणं मेघमिति वा तादीत्नार्थः Sk.
९. जगद्धि M.
१०. तादृशं मायावत्संमितमन्यं मेघशत्रुं शातयितव्यं वैरिणं वा Sk.
११. गत० M.
१२. V. Mādhava ignores उत
१३. पुत्रम् M.
आवरणशीलत्वाद् वृत्रं मेघम् Sk.
१४. विवेष्ट० D. वेष्ट० P.
अतिशयेन लोकानामावरकमन्धकाररूपम्। यद्वा वृत्रैरावरणैः सर्वान् शत्रून् तरति तं वृत्रम् Sy.
गन्तृतरमत्यर्थं नश्वरं विच्छिन्नांसमिति वा Sk.
१५. व्यवसञ्च वरम० P.
१६. महायुधेन P. D.
१७. नित्यहन्त्रा प्रहारकेणेति वा वधार्थः Sk.
१८. कुलिश इति वज्रनाम। कूलशातनो भवति ... स्कन्धो वृक्षस्य समास्कन्नो भवति। अयमपीतरस्कन्ध एतस्मादेव। आस्कन्नं काये। अहिः शयत उपपर्चनः पृथिव्याः N. 6. 17.
१९. विशेषतः Sy.
२०. शाखाः पृथिव्या उपपृक् पृथिवीसंपर्चिताः Sk.
२१. उदकरूपेण भूमौ पतितः शेते मेघश्चेत्। असुरश्चेत्स्वशरीरेण Sk.
२२. ०वर्चनः P. M.
सामीप्येन संपृक्तः Sy.

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ॥६॥

अयोद्धेव । युद्धासमर्थः ।[१] मानी यथा समर्थमाह्वयत्येवम् ।[२] आहूतवान् इन्द्रम् ।[३] महावीरम् ।[४] बहूनां बाधितारम् ।[५] ऋजीषिणम् ।[६] नच । अतारीत् ।[७] इन्द्रस्य । आयुधानाम् ।[८] सङ्गतिमथ पृथिव्यां[९] निपातितोऽवशः सन् ।[१०] नदीः ।[११] संपिष्टवान् ।[१२] इन्द्रो यस्य शातयितासीदिति ।

अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥७॥

अपात् । हस्तपादवर्जितोऽपि ।[१३] इन्द्रम् ।[१४] अपृतन्यत् ।[१५] आजघान ।[१६] अस्य । उच्छ्रिते देशे ।[१७] वज्रमिन्द्रः । वर्षितुर्वृषभस्य ।[१८] छिन्नवृषणः ।[१९] प्रतिद्वन्द्वीभवितुमिच्छन्नित्यौपमिकम् ।[२०] अनेकेषु[२१]

---

१. योद्धृरहित इव Sy. योद्धुमसमर्थोऽपि सुरापानमत्तो य आह्वयति स अयोद्धा । स इव Sk.
२. दुष्टमदोपेतो दर्पयुक्तः Sy. आत्मबलं त्वद्वीर्यं चाजानन् कुत्सितमदः Sk. ३. भूतवान् P.
४. महवीरं P. D. महाविक्रान्तम् Sk.
५. शत्रूणाम् Sk.
६. ०षिण P. D. जीषणं M. शत्रूणामपार्जकम् Sy. यत्सोमस्य पूयमानस्यातिरिच्यते तदृजीषम् । माध्यन्दिनाभिषुतनिरसीकृतमृजीषम् । तदेव तृतीयसवने हारियोजने चाभिषुणोति । तदिन्द्राश्वभागो धानाश्च विप्रुषः । एष इन्द्रस्य च ऋजीषस्य च सम्बन्धः Sk. ७. तारीत् P. तद्वन्तमिन्द्रमाहूय युद्धे इन्द्रस्य वधानां प्रहाराणां संगतिं नातारीत् नाशक्नोत् । प्रहारान् नासहत सोढुमित्यर्थः Sk.
८. ईदृशस्येन्द्रस्य सम्बन्धिनो ये शत्रुवधाः सन्ति तेषां वधानाम् Sy.
९. S. omits सं before गतिम् ।
१०. नदीषु पतितः Sy. ११. संरुजाना आत्मग्रीवास्ताः संपिष्टवान् चूर्णीकृतवान् । इन्द्रप्रहारचूर्णीभूतग्रीव इत्यसुरपक्षे । मेघपक्षे तु नद्यो रुजानाः । नदीकूलानि संपिष्य स्रोतवान् । . . . उदकरूपेण नदीः प्रति जगामेति वा Sk. रुजाना नद्यो भवन्ति । रुजन्ति कूलानि N. 6. 4. १२. संवि० M.
१३. अहस्तपाद० P. अपात् । अत्रोपमा लुप्ता । अपादिवाहस्त इवेत्यर्थः Sk.
१४. म् P. १५. अपृन्याद् M. यथा पादहस्तवर्जितः पुरुषश्चेष्टितुमशक्तस्तद्वदशक्तोऽप्यपृतन्यद् इन्द्रं प्रति किञ्चिदसंग्रामयत् Sk.
१६. पर्वतस्थं मेघं क्षिप्तवान् वर्षितुमित्यर्थः Sk.
१७. पर्वतसानुसदृशे प्रौढस्कन्धे Sy.
१८. रेतःसेचनसमर्थस्य Sy. इन्द्रस्य Sk.
१९. छिन्नमुष्कः पुरुषः Sy. वध्योऽपि. . .यथा प्रजननसमर्थस्य बलवद्वृषभस्य प्रतिद्वन्द्वेच्छया दुर्बलो वध्रिर्विक्षिप्तस्तिष्ठेद् एवं वृत्र इन्द्रस्येति Sk.
२०. ०द्वन्द्वि P. सादृश्यम् Sy. प्रतिमानं सादृश्यं बुभूषन् प्राप्तुमिच्छन् Sy.
२१. बहुत्रासकृत् Sk.

देशेषु । वृत्रः[१] । अशयत्[२] । शकलीकृतः[३][४] ।

**नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः ।**
**याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥८॥**

**नदं न** । यथा । भिन्नम् । सेतुम्[५] । आपोऽतियन्त्येवम् । अनया[६] पृथिव्या[६] सह । **शयानं** मनुष्याणाम् । मनः । आरोहन्त्यो ह्लादयन्त्यः । अतीत्य । गच्छन्ति । याः । चिदपः । वृत्रः । शरीरमहत्तया[७] । परिवृत्यातिष्ठत्[८] । तासाम् । अहिरसुरः[९] । पत्तः[१०] शायी[११] । बभूव ।

**नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार ।**
**उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥९॥**

**नीचावयाः** । नीचीनबाहुशाखा[१२] । अभवत्[१३] । वृत्रो[१४] यस्याः पुत्रो वृत्रे हन्यमाने **तन्माता** तद्वधपरिरिरक्षिषया[१५] तस्योपरि[१६] बाहू प्रसार्यातिष्ठदथ । इन्द्रः । अस्याः । अधस्ताद्[१७] वृत्रशरीर **एव** । **वज्रम्** । प्रहृतवान्[१८] तदानीं वृत्रस्य । उपरि । आसीत् । तन्माता[१९] । पुत्रश्च[२०] । अधस्तदानीम् । **दानु**-वृत्रमाता[२१] । वत्ससहिता[२२] । धेनुः । इव । शये[२३] ।

---

१. पुत्रः M. २. रयत् D. अतिष्ठत् Sk. ३. विविधं क्षिप्तस्ताडितः Sy. विखण्ड्य विखण्ड्य भूमौ क्षिप्त आसीत् । मेघपक्षे नदीतटाकादिषूदकरूपेण...बहुष्वतिष्ठद् विक्षिप्तःSk.
४. V. Mādhava ignores अधि
५. सिन्धुमिव । यथा वृष्टिकाले प्रभूता आपो नद्याः कूलं भित्त्वातिक्रम्य गच्छन्ति तद्वत् Sy. यथा महान्तं नदं भिन्नकूलमतीत्य गच्छेयुस्तद्वत् । सर्वस्योपकारिण्य आपो मेघनिरोधान्निष्फला आसुः । तदा इन्द्रो मेघं हतवान् । तदा सन्तुष्टा वयं सर्वमाह्लादयाम इति विचिन्त्यावर्षयन् इत्यर्थः Sk.
६. अमुष्यां पृथिव्याम् Sy. अनया महत्या वृद्धचा सम्बध्य तिष्ठन्तम् Sk. ७. स्वकीयेन महिम्ना Sy. सेनया वा Sk. ८. या । परिवृत्याति missing in M. ९. वृत्रो मेघः Sy.
१०. पादस्याधः शयानः Sy. पादसमीपशायीSk. ११. पत्तं शायीः P. चत्त शायी D. पत्तनशायी S.
१२. नीचान० P. न्यग्भावं प्राप्ता हता Sy. नीचीनबाहुः Sk. १३. आभ्रवद् M.
१४. वृक्षो M. १५. ०रिरक्षयिषया S.
१६. पुत्रं प्रहाराद् रक्षितुं पुत्रदेहस्योपरि तिरश्ची पतितवतीत्यर्थः Sy. १७. इन्द्रो... अस्याधस्तात् M. तयावष्टब्धोऽपि Sk.
१८. वभृतवान् P. क्षिप्तवान् इत्यर्थः । तथा व्यवस्थितताया अपीन्द्रोऽस्या वधमकृत्वा वृत्रमेव हतवान् Sk. १९. तत् omitted by P. २०. वृत्रश्च S.
२१. ०र्व्यत्र० M. कुटिलतनोः प्रलम्बबाहोः स्वमातुर्बाहुजङ्घान्तरस्थायी पुत्र आसीत् Sk. २२. वत्साहिता P. वत्सनहिता M. २३. शरीरेयः M.

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।
वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥१०॥

अतिष्ठन्तीनाम्। अतिष्ठन्तीनाम्[1]। अस्थानानाम्[2]। अपाम्[3]। मध्ये[4]। वृत्रस्य[5]। शरीरम्। अन्तर्हितम्[6]। प्रतिगच्छन्ति[7]। आप इन्द्रस्य वृत्रं निलीनं दर्शयितुं तत[8] इन्द्रेण हतः। वृत्रः। दीर्घम्। तमः[9]। आशयन्[10] ममारेति[11]।

---

१. तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य (नाम) भवति। काष्ठा दिशो भवन्ति क्रान्त्वा स्थिता भवन्ति। काष्ठा उपदिशो भवन्ति। इतरेतरं क्रान्त्वा स्थिता भवन्ति। आदित्योऽपि काष्ठोच्यते। क्रान्त्वा स्थितो भवति। आज्यन्तोऽपि काष्ठोच्यते क्रान्त्वा स्थितो भवति। आपोऽपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्तीति स्थावराणाम्... अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः। शरीरं शृणातेः शम्नातेर्वा वृत्रस्य (निण्यं) निर्णामं विचरन्ति विजानन्त्याप इति। दीर्घं द्राघतेः। तमस्तनोतेः। आशयदाशेतेः। इन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा। तस्मादिन्द्रशत्रुः। तत्को वृत्रः? मेघ इति नैरुक्ताः। (त्वाष्ट्रोऽसुर इत्यैतिहासिकाः।) अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते। तत्रोपमार्थेन युद्धवर्णा भवन्ति। अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च। विवृद्ध्या शरीरस्य स्रोतांसि निवारयाञ्चकार। तस्मिन् हते प्रसस्यन्दिर आपः। तदभिवादिन्येषर्ग्भवति N. 2. 10.

२. अवस्था० M.
उपवेशनरहितानां, प्रवहणस्वभावत्वादेतासां मनुष्यवन्न क्वापि स्थितिः सम्भवति Sy.
अपां बहुत्वाद् अनवस्थायित्वमनिवेशित्वं च युज्यत एव। स्थाननिवेशरहितानामपां मध्ये Sk.

३. अपा P.

४. ध्ये P.

५. पुत्रस्य M. ६. ०र्हित P.
निक्षिप्तम् Sy.

७. विशेषेणोपर्याक्रम्य प्रवहन्ति Sy.
विज्ञापयन्तीन्द्रायापः Sk.

८. निर्नामधेयम्। अप्सु मग्नत्वेन गूढत्वात् तदीयं नाम न केनापि ज्ञायते Sy.
वृत्रस्य शरीरं निण्यं तिरस्कृतम्... वृत्रशरीरं मरणभयादपां मध्येऽन्तर्हितमप्यापः प्रकाशयन्तीत्यर्थः Sk.

९. म्म P.
तदेन्द्रशत्रुर्वृत्रो मरणलक्षणं दीर्घं तम आस्थितवान्। दीर्घनिद्रां प्रवेशित इव। मेघे तु। मेघमध्ये ह्यापो निहिताः। तस्मादन्यथा योजना। मध्येऽवस्थिता आपो बहुभिर्निहितमेघशरीरान्निर्गमनद्वारं निण्यं विजानन्ति। नीचैर्नमतीति निण्यं निर्गमनबिलम्। अप्सु निण्येन निर्जिगमिषन्तीषु तदवरोद्धुमिच्छया दीर्घं तमः समस्तनभोमण्डलव्यापितमोरूपेणातिष्ठत्। नभसि सर्वत्र व्यातिष्ठदित्यर्थः Sk.

१०. आशयं M. सर्वतः पतितवान् Sy.

११. V. Mādhava ignores निण्यम्

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥११॥

दासपत्नीः[1]। दासाधिपत्न्यः[2]। अहिना[3] गुप्ताः। अतिष्ठन्[4]। निरुद्धाः। आपः। असुरैरिव[5]। गावस्तत्र[6]। अपाम्। बिलम्[7]। अपिहितम्[8]। यत्। आसीत्[9]। वृत्रम्[10]। जघ्निवान्[11]। अपववार[12]। तदिति।

अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः ।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून् ॥१२॥

अश्व्यो वारः। यदा तव[13] प्रतिबोधनार्थमसुरैः पीड्यमानः। कश्चित्। देवः[14]। त्वां[15] त्वदीये। वज्रे[15]। निहन्ति। तदा त्वम्। अश्वपृष्ठस्थः[16]। दंशानां वारको वाल[17] इव। भवसि शत्रूनुभयतो हंसि

---

१. ०पत्नी M. दासपत्नीर्दासाधिपत्न्यः। दासो दस्यतेः। उपदासयति कर्माणि। अहिगोपा अतिष्ठन्। अहिना गुप्ताः। अहिरयनात्। एत्यन्तरिक्षे। अयमपीतरोऽहिरेतस्मादेव। निर्ह्लसितोपसर्गः। आहन्तीति। निरुद्धा आपः पणिनेव गावः। पणिर्वणिग्भवति। पणिः पणनात्। वणिक् पण्यं नेनेक्ति। अपां बिलमपिहितं यदासीत्। बिलं भरं भवति बिभर्तेः। वृत्रं जघ्निवान्। अपववार तत्। वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा N. 2. 17.

२. दासो विश्वोपक्षपणहेतुर्वृत्रः पतिः स्वामी यासां...ता आपः Sy.
दासः कर्मकरः। श्रमादिभिर्वाऽऽतपेन वा क्षीणशक्तिः। पीतमात्रा एवैनं पान्तीति तस्य पालयित्र्य आपो दासपत्न्यः Sk.

३. मेघेन गुप्तास्तदुदरस्था आपः Sk.

४. तेन वाऽसुरेण वा तिष्ठन्ति Sk.

५. पणिनामकोऽसुरो गा अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्धवांस्तथेत्यर्थः Sy.
पणिर्वणिगुच्यते। यथा विक्रयार्थं वणिजा निरुद्धा गावस्तिष्ठेयुस्तद्वदतिष्ठन्नापः Sk.

६. तन्त्रावां M. निरुद्धानाम् Sk.

७. निर्गमनबिलम् Sk.

८. अभिहि० M. घटितम् Sk. ९. आ P.

१०. मेघं तद्रक्षितारमसुरं वा Sk.

११. जघ्निवन् P.

१२. आववार P. अपवार D.
मेघे नभसि व्याप्तेऽपां निर्गमनार्थं तद्द्वारमुद्घाटितवान् Sk.

१३. तावत् M. Omitted by P.

१४. दीप्यमानः सर्वायुधकुशलः Sy.

१५. त्वां ... प्रतिकूलत्वेन प्रहृतवान् Sy.

१६. तदानीं त्वम्...अश्वसम्बन्धी वालोऽभवः। यथाश्वस्य वालोऽनायासेन मक्षिकादीन्निवारयति तद्वद् वृत्रमगणयित्वा निराकृतवानित्यर्थः Sy.
अश्व्यः अश्वपृष्ठे साधु स्थिरयानः Sk.

१७. बाल D. पाव P.
वाहिता वारः। अश्ववारः शत्रूणां वारो वा। ... युद्धे वाऽपठितः। ... हे इन्द्र यदा त्वं वज्रं गृहीतवान् वृत्रयुद्धार्थं यदा च देवेष्वेक एव देवो मरुद्गणस्त्वां प्रति गतवांश्च। तदा त्वश्व्यो वारोऽभूरिति वाऽर्थः। त्वया यदा वज्रे गृहीते युद्धे प्रवृत्ते वा मरुत एव त्वां प्रति जग्मुः। ... अथवा सृकेणेति। टार्थे ङिः। वृत्रायुधवचनं चायुधसामान्यत्वात्। ... यदा सृकेणायुधेन त्वां प्रहृतवान् वृत्रस्तदा त्वमेक एव दानादिगुणयुक्तः Sk.

स त्वमसुरेभ्यः । अजयः[१] । गाः । अजयश्च[२] । सोमम् । अवासृजः[३] । सरणाय । सप्त । सिन्धून्[४] गङ्गाद्याः[५]
सप्त देवनद्यः[६] ।[७]

**नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहमकिरद्ध्रादुनिं च ।**
**इन्द्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो मघवा वि जिग्ये ॥१३॥**

**नास्मै विद्युत्।** अहिर्मेघरूपं धारयन्निन्द्रस्य वधार्थं विद्युदादीनकरोत् सर्वानेव तानिन्द्रो जिगाय । न । अस्मा इन्द्राय[८] । वारणार्थमभवत्[९] । विद्युत् । नच । गर्जितशब्दः[१०] । नच । याम् । वृष्टिम् । अकरोत् । अशनिम् । च । यदा । इन्द्रः । च । अहिः । च । युयुधाते । तदानीम् । विद्युदादिव्यतिरिक्ताभ्योऽपि मायाभ्यः[११] । विजिग्येऽहिम्[१२] । इन्द्रः ।

**अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत् ।**
**नव च यन्नवतिं च स्रवन्तीः श्येनो न भीतो अतरो रजांसि ॥१४॥**

**अहेर्यातारम्।** इन्द्रो वै[१३] वृत्रं हत्वा नातिमन्यमानः[१४] पराः परावतो जगाम तत्राह[१५] अहेरसुरस्य । हन्तारं त्वत्तोऽन्यम् । कम् । अपश्यः । इन्द्र ! आयातिर्वधकर्मा[१६] । हृदये । यत्[१७] । तव भयम्[१८] । आगतं वृत्रम्[१९] । जघ्नुषः । यदा त्वम् । नव । च । नवतीः[२०] । च । नदीः । उदकानि[२१] । अतरः[२२] । श्येनः । इव शीघ्रम् । भीतस्त्वमिति[२३] ।

---

१. तमजयः Sk. २. जयश्च M.
३. तदेव गाः सोमं च तदैवानुज्ञातवान् गमनाय। अवसर्गो ह्यभ्यनुज्ञा Sk.
४. सिन्धू M. ५. गः गाद्याः M. सप्तसंख्याका नदी। गङ्गा हि सप्तधा स्रोतोवती। ता वाऽन्या वा प्रधानभूता नदीः Sk.
६. देव omitted by P. देवनदीः S.
७. V. Mādhava ignores इन्द्र। शूर ८. इन्द्रस्वभृता इति वा Sk.
९. यदेन्द्रश्चाहिश्च परस्परं युयुधाते तदैते न सिषिधुः Sk.
१०. स्तनयित्नुः Sk. ११. मायामेभ्यः P. अपरेभ्योऽपि मघवैव विजिग्ये।. . . इन्द्रो यां वृष्टिं वितस्तार तत्प्रत्युपकारार्थम्। सापि ह्रादुनिर्ह्लात्कारः हनहनशब्दः. . . नासाधयन्। इन्द्रजयमहेरपनयं च Sk.
१२. ०ग्योहिम् D. १३. Omitted by M. १४. ०न्यनामः P.
१५. तत्र ह D. तद्राह M. तदाह S.
१६. आयाहिर्व० P. आयतिर्व० M. याति० S. १७. यस्मात् Sk.
१८. भवम् M. एनमन्यो हनिष्यतीतीदृशं भयं हृदये यस्मादुत्पन्नमित्यर्थः Sk.
१९. Omitted by M. २०. नवनीतिश्च M. २१. अद० M.
२२. अतिर P. अतर M. यद् भीतस्त्वं नवनवतिर्नदीर्लोकत्रयं च तीर्त्वाऽहिं हन्तुं त्वरया गतः Sk. २३. भित० P.

इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः ।
सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव ॥१५॥

इन्द्रो यातः। इन्द्रः। जङ्गमस्य। स्थावरस्य च। राजा[1]। शान्तस्य[2] हरिणादेः[3]। शृङ्गिणो महिषादेश्च[4]। वज्रबाहुः[5]। सः[6]। एव[7]। मनुष्याणाम्। राजा भूत्वा[8]। निवसति[9]। परिभवति च[10]। तानि भूतानि। अरान्। इव[11]। नेमिः[12]।

इत्थं द्वितीयमध्यायं व्याकरोत् प्रथमेऽष्टके ।
गाथिनिर्माधवो[13] नाम संगृह्यार्थं प्रकाशयन्[14] ॥

---

# [अथ तृतीयोऽध्यायः]

'एतायामोप[15] गव्यन्तः[16]' व्याचिख्यासति माधवः[17] ।
समासानां स्वराद्वृत्तिरादौ तत्र प्रदर्श्यते[18] ॥१॥

मुख्यस्तत्पुरुषः प्रोक्तो द्वन्द्वश्च तदनन्तरः[19] ।
तृतीयस्तु बहुव्रीहिरव्ययीभाव उत्तरः[20] ॥२॥

---

१. चराचरेश्वर इत्यर्थः Sk.
२. शन्तस्य P. शान्त्यस्य M. शमः शान्तः ऋषिलोकः Sk.
३. शृङ्गराहित्येन प्रहरणादावप्रवृत्तस्याश्वगर्दभादेः Sy.
४. माहि० M. शृङ्गं दीप्तम्। तद्वन्तो नक्षत्राणि चेश्वरः शान्तानां दीप्तानां च Sk. ५. ०बाहु M.
६. Omitted by M.
७. देव P. D. M.
८. दीप्तः Sk. ९. ईष्टे Sk.
१०. तदानीं M.
११. अरानिवेमिः P. रथचक्रपृष्ठं हि नेमिः। स यथाऽरान् परिगृह्णाति तद्वत्ताः सर्वास्तान् मनुष्यान् सर्वाणि तानि जङ्गमानि Sk.
१२. V. Mādhava ignores उ
१३. गाधिनिर्मा० M.
१४. प्रदर्शयन् M. १५. ०मेव M.
१६. ०तो M. RV. I. 33. 1[a].
१७. माधवो व्याचिकीर्षति M.
१८. प्रदश्यते P. १९. ०नन्तरम् M.
२०. Cf. BD. II. 105, 106. Six compounds are enumerated.

तत्रोत्तरपदार्थस्य[१] प्राधान्यं यत्र वर्तते ।
उदात्तस्तत्र[२] भवति सुरूप[३]कृत्नुमूतये[४] ॥३॥
"द्रविणोदा द्रविणसो[५]" "हव्यवाहं पुरुप्रियम्[६]" ।
"त्रिष्वादित्यं द्रुपदेषु[७]" "नो हिरण्यरथं दंस०[८]" ॥४॥
यदि स्वरः[९] पूर्वपदे तदर्थः[१०] प्रस्फुटो भवेत् ।
"भर्गभक्तस्य[११] ते वयम्[१२]" "विप्रजूतः[१३] सुतावतः[१४]" ॥५॥
"तवेद्धि सख्यमस्तृतम्[१५]" "अनाधृष्टास[१६] ओजसा[१७]" ।
"अच्छिन्नपत्राः[१८] सचन्ताम्[१९]" "अप्रजाः[२०] सन्त्वत्रिणः[२१]" ॥६॥
अनुदात्तश्च दृष्टो नञ्[२२] "अयोद्धेव[२३] दुर्मदः[२४]" ।
तादृशेषूत्तरपदे[२५] प्राधान्यमिति निर्णयः ॥७॥
कार्ययोगो यदि द्वन्द्व[२६] उभयोरपि दृश्यते ।
स्थिते[२७] पूर्वपदस्यार्थे द्वितीयस्यापि संग्रहः ॥८॥

---

१. पदार्त्थस्य D.
२. उदात्तं D.
३. सुरूपं D.
४. RV. I. 4. 1[a].
५. RV. I. 15. 7[a].
६. RV. I. 12. 2[c].
७. RV. I. 24. 13.
८. सदात् P. D. सदा M. RV. I. 30. 16. दंस० is incomplete. The complete word is दंसनावान् । ९. स्वरं P.
१०. ०र्त्थ P. D.
११. भगवभक्तं P. D. भटभ० M.
१२. RV. I. 24. 5[a]. १३. विप्रजूतः D.
१४. सुतपतः M. RV. I. 3. 5[b].
१५. ०मसूतम् M. RV. I. 15. 5[c].
१६. ०ष्टं स P.
१७. RV. I. 19. 4[b]. १८. अछि० P.
१९. RV. I. 22. 11[c]. २०. प्रजाः M.
२१. सन्तु चात्रिणः P. D. सन्त चात्रिणः M. RV. I. 21. 5[c]. २२. न P.
२३. आयोद्धा इव P. अयोद्धा इव D. तयोर्धा इव M. नञ्जायो० R.
२४. दुर्मद M. RV. I. 32. 6[a].
२५. दृत्तादृ० M.
२६. द्वन्द (उदात्त उभयोरपि द्यावापृथिवी) P.
२७. Omitted by P.

अन्तोदात्तस्ततो द्वन्द्वः "इन्द्रवायू बृहस्पतिम्"[1] ।

"ऋक्सामाभ्यामभिहितौ"[2][3] "इहेन्द्राग्नी उप ह्वये"[4] ॥९॥

समप्रधानयोर्द्वन्द्व[5][6] उदात्त उभयोरपि ।

"द्यावापृथिवी मरुतः"[7] "ह्वयामि मित्रावरुणौ"[8] ॥१०॥

प्रधान इन्द्रः पूर्वोऽत्र प्रधानः क्वचिदुत्तरः ।

स सोमारुद्रयोर्द्वन्द्वो "मा सहूती"[9][10] निदर्शनम् ॥११॥

बहुव्रीहिषु तात्पर्यं[11] विशेषणविशेष्ययोः[12] ।

"अग्निर्होता कविक्रतुः"[13] "अग्ने सूपायनो भव"[14] ॥१२॥

"मित्रं हुवे पूतदक्षं"[15] "शं नो विष्णुरुरुक्रमः"[16] ।

"पञ्चपादं"[17] "सप्तचक्रं"[18] "त्रिचक्रेण"[19] "त्रिनाभि"[20] च ॥१३॥

उदात्तश्चोभयोर्दृष्टः[21] पूर्वस्मिन्नपि चोत्तरे ।

उदात्तानुगुणश्चार्थो दर्शनीय इति स्थितिः[22] ॥१४॥

अन्तोदात्तोऽव्ययीभावः[23] सः "अनुकामं[24] तर्पयेथाम्"[25] ।

"प्रतिदोषं गृणानः"[26] च तादृशाः सन्ति चापरे ॥१५॥

---

१. ०तिः M. RV. I. 14. 3.[a]
२. ०मभ्या० M. R.
३. RV. X. 85. 11.[a]
४. RV. I. 21. 1.[a]
५. शमप्रधानयो D. ६. द्वन्द्वः D.
७. RV. X. 63. 9.[d]
८. RV. I. 35. 1.[b]
९. RV. II. 33. 4.[b]
१०. ०हूति नि० P. ०भूतीति द० M. ०हूतीति द० R.
११. बहिप्रिहिषतावयं P. १२. ०शेष्यो D.
१३. RV. I. 1. 5.[a]
१४. RV. I. 1. 9.[b]
१५. RV. I. 2. 7.[a]
१६. RV. I. 90. 9.[d]
१७. RV. I. 164. 12.[a]
१८. RV. I. 164. 3.[b]
१९. RV. I. 118. 2.[b] ०क्रण P.
२०. RV. I. 164. 2.[c] ०णाभि R.
२१. ०र्दुष्टः P. २२. P. reads च इति for इति स्थितिः २३. अतो० M.
२४. ०कामान् २५. RV. I. 17. 3.[a]
२६. RV. I. 35. 10.[d]

अनुक्रामं विभक्तयर्थे नानोरर्थोऽस्ति[1] कश्चन ।
पश्चात्कामस्य यद्वास्तु तथाप्यन्ते स्वरो भवेत् ॥१६॥

प्रतिदोषं गृणानोऽत्र वीप्सां[2] द्योतयति प्रति[3] ।
दोषाशब्दो[4] वाचकश्च[5] ततस्तस्मिन् स्वरः स्थितः ॥१७॥

अथ विग्रहवाक्यानि विस्पष्टप्रतिपत्तये[6] ।
सुरूपकर्मणां[7] कर्ता[8] पुरूणां[9] च तथा प्रियः[10] ॥१८॥

भाग्येनायं[11] तु संभक्तो विप्रैराकृष्यते[12] तथा ।
तव सख्यं न हिंसितमयोद्धेत्यस्य[13] विग्रहः ॥१६॥

न यः समर्थो युद्ध इति युद्धासामर्थ्यदर्शनम् ।
प्रधान[14] इन्द्रो वायुश्च मित्रश्च वरुणोऽपि च ॥२०॥

अग्नेः ऋतुः कविः कान्तो[15] बहुव्रीहेस्तु विग्रहः ।
उरुरस्ति क्रमो यस्य[16] त्रीणि चक्राणि सन्ति च ॥२१॥

कामेषु तर्पयेथां नः पश्चात् कामस्य वा पुनः ।
रात्रौ रात्रौ प्रतिदोषमिति विग्रहदर्शनम् ॥२२॥

सर्वेष्वेषु समासेषु यत्र यत्र स्वरो भवेत् ।
काशं कुशं वावलम्ब्य स्वरं तं स्थापयेदिति ॥२३॥

---

१. नानोरक्षस्ति P.
२. विप्सां P.
३. प्रतिः R.
४. दोषश० P. ददोषाश० M.
५. वाचतर्प P.
६. ०त्तेये P.
७. स्वरू० P.
८. कृत्ता M.
९. पुरु० P.
१०. प्रिया P. D.
११. ताग्ये० P. भगेना० R.
१२. विलैरा० P.
१३. ०येद्धे० P. ०योध्येत्यन्य वि० M.
१४. प्रथान R.
१५. क्रान्तो M. R.
१६. उत्तरस्मिन्तमो यस्य M.
विस्तीर्णो विक्रमो यस्य R.

I.33.

एतायामोप गव्यन्त इन्द्रमस्माकं सु प्रमतिं वावृधाति ।
अनामृणः कुविदादस्य रायो गवां केतं परमावर्जते नः ॥१॥

एतायाम[1]। हिरण्यस्तूपः[2]। सः। अस्माकम्। अनेकार्थाभिलाषिणीं मतिम्[3]। सुष्ठु। वर्धयति[4]। हिंसकवर्जितः[5]। उपगमनानन्तरम्[6]। अस्य[7]। धनस्य[8]। बहु[9]। आवर्जयति[10] तदेवाह[11]। गवाम्[12]। सङ्घं[13] कुविदावर्जयतीति[14]।

उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि ।
इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥२॥

उपेदहम्[15]। उप[16]। एव[17]। पतामि[18]। अहम्। धनस्य दातारम्। शत्रुभिरप्रतिगतम्[19]। इन्द्रम्[20]। अर्चयन्। उपमानभूतैः[21]। य इन्द्रः। स्तोतृभ्यः[22]। हव्यः। भवति। यज्ञेऽहनि[23] चेति[24]।

---

१. ०यामो M.
२. ०स्तु M.
३. गोलाभेन हर्षयित्वा प्रकृष्टां बुद्धिम् Sy. सुष्ठु प्रकृष्टां याच्ञाम् Sk.
४. पुनः पुनरपि पृथक् यद्यदा याचितं तत्तदा दत्तवानित्यर्थः Sk.
५. विहिं० M. शत्रुभिर्हिंसितुमशक्यः Sk.
६. ०वर्जतक P. D. M.
७. ०नन्तरस्य P.
८. सनस्य P. D. M.
९. अत्यन्तबहु।....यस्मादत्यन्तं बहुधनत्वाद्दानसमर्थ इत्यर्थः Sk.
१०. ददाति Sk.
११. देवाह P.
१२. गवामपां वा।....यस्मादिदानीमस्मभ्यं गां वृष्टिं वा ददात्येवेत्यर्थः। अथवा कित ज्ञाने इत्यस्य केतशब्दो ज्ञेयवचनः।....गवां मध्ये यत्केतं ज्ञेयमत्यन्तोत्कृष्टं गोजातं तत्परमावर्जते Sk.
१३. गोरूपस्य सम्बन्धि...उत्कृष्टं ज्ञानम् Sy.
१४. V. Mādhava ignores आ। इत। अयाम। उप। गव्यन्तः। इन्द्रम्। परमम्। नः
१५. उपदेहं M.
१६. उपशब्दः पतामीत्याख्यातेन सम्बन्धयितव्यः Sk.
१७. इच्छब्दः पदपूरणः Sk.
१८. चता० P. D. उपगच्छामि Sk.
१९. अप्रतिगतं, बलिभिरतिरस्कृतम् Sy. अप्रत्यभिभूतमित्यर्थः Sk.
२०. सेन्द्रं P. D. M.
२१. अप० P. सन्निकृष्टैरिन्द्रस्येत्यर्थः Sk.
२२. षष्ठ्यर्थे चतुर्थ्येषा। स्तोतॄणां हव्य आह्वातव्यः Sk.
२३. तदीयशत्रुभिः सह प्रवृत्ते युद्धे Sy. अधिकरणे इयं प्रथमा द्रष्टव्या। यन्ति देवता अस्मिन् इति याम यज्ञः Sk.
२४. V. Mādhava ignores जुष्टाम्। न। श्येनः। वसतिम्। अर्कैः

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥३॥

नि सर्वसेनः। निषजति[1]। समग्रया सेनयोपेतः[2] इषुधीनात्मपृष्ठेऽस्थ। समजति[3]। ईश्वरः[4]। पशून्[5] तस्मै शत्रुभ्यः। यस्य[6] शत्रुभिरपहतानाहर्तुम्[7]। इच्छति[8]। ददत्[9]। इन्द्र! बहु। वननीयं[10] धनम्। मा। पणिः[11]। भूः। अस्मासु[12]। प्रवृद्ध[13]। पणिः[14] पणनात्[15]। कारणमनपेक्ष्य[16] देहीति[17]।[18]

वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र।
धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ॥४॥

वधीर्हि[19]। वधीः[20]। हि[21] त्वम्। वज्रेण[22]। उपक्षपयितारम्[23]। धनवन्तं[24] वृत्रम्[25]। एक एव। चरन्[26]।

---

१. आत्मनः पृष्ठे रथे वा निबध्नातीत्यर्थः Sk.
२. ०चेतः P.
३. सम्यक् क्षिपति। स्वराष्ट्रं प्रति प्रेरयत्यपहरतीत्यर्थः Sk.
४. इन्द्रः Sk.
५. शत्रूणां स्वभूता गाः Sk.
६. स्य P.
यस्य वष्ट्यपहर्तुं कामयते तस्य सर्वस्यापहरति। न केनचित् प्रतिबन्धुं शक्यत इत्यर्थः। स्वाश्रितेभ्यो दानकाले यदर्पणं तदत्र क्षेपणमभिप्रेतम्। स्वाश्रितेभ्यो दानकाले समजति सम्यक् क्षिपत्यर्पयति। यस्य वष्टि क्षेप्तुं कामयते। यस्मै अभिप्रेतं स्वाश्रिताय दातुमिच्छति तस्मै ददातीत्यर्थः। अथवा गावोऽत्रापोऽभिप्रेताः। निषज्येषुधीन् मेघं घ्नन् अपः सम्यक् क्षिपति। यस्य राज्ञो यजमानस्य वा क्षेप्तुं कामयते इत्यर्थः Sk.
७. ०नाभक्तुम् M.
८. ईशति P.
९. अत्यर्थं पुनः पुनर्वा ददत् Sk.
ददिन्द्र बहुवननीयम् N. 6. 22.
१०. अत्यन्तोत्कृष्टम् Sk.
११. पणिर्वणिगुच्यते। तेन चात्र... अल्पदत्वञ्च लक्ष्यते। नाल्पदोऽभूरित्यर्थः Sk.
१२. अस्मभ्यं माल्पं दा इत्यर्थः Sk.
१३. सुप्र० P. D. प्रवृद्धसेनालक्षणेन बलेन शारीरेण वा Sk.
१४. वाणि P. पाणिः D.
१५. वणनां P.
१६. करण० P.
१७. ०मपे० P. मनवे० D.
१८. V. Mādhava ignores अधि
१९. Omitted by M. वधिहि P.
२०. वधी P. M.
२१. हिशब्दः पदपूरणः... पर्यटन् Sk.
२२. त्त्र P. घनेन कठिनेन वज्रेण Sy. निष्ठुरेण वज्रेण Sk.
२३. दस्युं दस्यून् शत्रून् Sk.
२४. धनधनवन्तं P. धनवतः Sk.
२५. पुत्रम् M.
२६. चोरम् M.

सहायभूतैः[1] मरुद्भिः सह तत्र तव। धनुषः[2]। सकाशात्। विष्वक्[3]। ते वृत्रसहायाः। विविधम्। गताः[4]। अयजमानाः[5]। ...[6] ते। मरणम्[7]। गताः[8]।

**परा॑ चिच्छी॒र्षा व॑वृजु॒स्त इ॑न्द्रा॒यज्वा॑नो॒ यज्व॑भि॒ः स्पर्ध॑मानाः।**
**प्र यद्दि॒वो ह॑रिवः स्थातरुग्र॒ निर॑व्र॒ताँ अ॑धमो॒ रोद॑स्योः ॥५॥**

**परा चिच्छीर्षा**[9]। परावबृजुः[10]। शीर्षाणि[11]। ते। इन्द्र! आसन्[12] पराङ्मुखा[13] युद्धात्। अयज्वानः। यज्वभिः[14]। स्पर्धमानाः। यदा त्वम्। दिवः[15]। स्थापयितः[16]! हरिवः[17]! उद्गूर्ण[18]! प्रातिष्ठथाः[19] शत्रून् प्रति तदानीम्। अयजमानान् तान्[20]। द्यावापृथिव्योः[21]। निरधमः[22]।

---

१. समीपवर्तिभिः शक्तियुक्तैर्मरुद्भिः सहितः Sy. शक्यन्ते यैर्दस्यवो हन्तुं ते शाकाः शक्तयः। उपशब्दस्तु धात्वर्थानुवादी। शक्तिभिश्च। ... अथवा अङ्गिरसोऽत्रोपशाका अभिप्रेताः। चरन्नित्येतदपेक्ष्य च सहयोगलक्षणे तृतीया। एक एवावधीरङ्गिरोभिः सह पर्यटन्नित्यर्थः। अङ्गिरसो हि ... घोरत्वादिदर्शनाद् इन्द्राद् किञ्चिन्न्यूनशक्तयः। अत एषां तत्सदृशशक्तित्वादिन्द्रापेक्ष उपशाकव्यपदेशः। इन्द्रस्य च सखायोऽङ्गिरसः। सखिभिश्च सह पर्यटनमप्युपपन्नम् Sk.

२. धनुःशब्दोऽपठितोऽप्यन्तरिक्षनाम। ... अन्तरिक्षस्योपरि Sk.

३. विविधं नाशमुद्दिश्य। यद्वा विष्वक् सर्वतः Sy.
इतश्चेतश्च Sk.

४. विगता नष्टा अपि सन्तः Sk.

५. सनकशब्दस्य पुराणवचनस्येदं रूपम्। चिरन्तना अयष्टारः। जन्मन एव प्रभृति यागवर्जिता इत्यर्थः Sk.

६. प्रश्नास्ते P. D. M. सूक्तास्ते F. सनकास्ते Ed. सनका एतन्नामका वृत्रानुचराः Sy.

७. नष्टा अपि सन्तस्त्वया मारिता एवेत्यर्थः Sk.

८. V. Mādhava ignores इन्द्र

९. विच्छी० M. पराचिः F.

१०. ०वृज P. परावृजुः D. M. भूमौ पर्यस्तवन्त इत्यर्थः Sk.

११. F. adds परावृत्तानि before शीर्षाणि। स्वानि शीर्षांसि त्वया छिन्नानि Sk.

१२. Omitted by F.

१३. ०खानि F.

१४. त्वदाश्रितैः Sk.

१५. ०यव M.
अथवा प्रयद्दिव इति यच्छब्द इन्द्रप्रतिनिर्देशः। अधम इत्यपि लोडर्थे लङ्। यस्त्वमव्रतानयष्टॄन् मनुष्यान् द्वयोरपि निर्धमसि। स वधीर्दस्युम् Sk.

१६. ०यितारं F.
द्युलोकस्याधिष्ठातः! Sk.

१७. धन F.

१८. ०र्णा P. उद्भूर्न F. शौर्ययुक्तेन्द्र! Sy.

१९. ०ष्ठाथाः P. प्रतिष्ठथा D. ष्ठधाः F.

२०. तदानीयमयाजमानास्तान् P.
तदानीयमयजमानास्तां D.

२१. सकाशात्। लोकद्वयादपीत्यर्थः Sk.

२२. V. Mādhava ignores चित्

अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः ।
वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन् ॥६॥

अयुयुत्सन्। अयुयुत्सन्[1]। अवद्यरहिताम्[2]। सेनामत्रतामथैनमिन्द्रम्। नवग्वाः[3]। क्षितयो[4] युद्धार्थम्। निरगमयन्[5] अथ ते। वृषायुधः[6]। छिन्नवृषणाः[7]। इव वार्धक्यात्। उत्सृष्टाः[8]। साण्डेन[9] युध्यमानाः[10]। प्रकर्षगमनवद्भिरश्वैः[11]। बलवानयमिन्द्र[12] इति जानन्तो युद्धात्। प्रतिगताः[13][14]।

१. अयुयुत्सन्। अयुयुत्सावन्तः ये असुराः योधयितुमिच्छादंतः अनवद्यस्य दोषरहितस्य इन्द्रस्य सेनामाश्रिताः नवस्वा क्षितयः तानयातयन्त हतवन्तः। नवभिर्मासैः सिद्धिं गताः नवग्वाः प्रजननसमर्थो वृषभः तेन ताडिता वध्रयो यथा न युध्येयुः। तद्वत्प्रजननासमर्थबलीवर्दवद्धरनिष्ठा अत्यन्तवृद्धाः अथो एनमिन्द्रं नववा क्षितयो युद्धार्थं निगमयन्वने वृषा आयुधच्छिन्नवृषणा इव वर्धस्यादुष्टस्साण्डा न युध्यमानाः प्रकर्षगमनवद्भिरश्वैर्वलवानयमिन्द्र इति जानंतो युद्धात् प्रतिगताः F. सेनां प्रति ... वृत्रस्यानुचरा योद्धुमैच्छन् ... नवनीयगतयः स्तोतव्यचरित्राः। यद्वाऽङ्गिरसां सत्रमासीनानां मध्ये ये नवभिर्मासैरवाप्तफला उत्थितास्तेषां नवग्वा इति संज्ञा Sy.
एकवाक्यताप्रसिद्धचर्थं यत्तच्छब्दावध्याहर्तव्यौ। येऽसुरा ... योधयितुमिष्टवन्तः Sk. २. अनवद्य० P. गर्हणीयदोषरहितस्येन्द्रस्य सेनाम् Sy. अनवद्यस्य प्रशस्यस्येन्द्रस्य सेनाम् Sk.
३. अङ्गिरसो नवग्वा इत्युच्यन्ते। ते किल तपस्यन्तो नवभिर्मासैः सिद्धिं गताः। ते कांश्चिदयातयन्त Sk.
४. मनुष्याः Sk.
५. युद्धार्थमिन्द्रं नानाविधैर्मन्त्रैः प्रोत्साहितवन्तः Sy. हतवन्तः। णिच्छ्रुतिसामर्थ्याद्विन्द्रेण घातितवन्तः Sk.
६. वृषायुध P.
प्रजननसमर्थो बलवान् वृषस्तेन सह ये युध्यन्ते ते वृषायुधः Sk.
७. नपुंसका इव Sy. वध्रयः प्रजननसमर्था बलीवर्दाः। निर्गता अष्टाभ्यो निरष्टाः। पतितदशना अत्यन्तवृद्धा अबलीवर्दाः। ये वध्रयो निरष्टाश्च वृषेण सह युयुत्सन्ते। ते यथा ताडिता अत्यन्तपराङ्मुखा नश्येयुस्तद्वतः Sk. ८. ०ष्टः D. M. ष्ट P. तेनेन्द्रेण निराकृताः Sy.
९. सान्देन P. सन्धेन M. १०. यध्यमाना P. स्वकीयामशक्तिं ज्ञापयन्तः Sy.
११. ०द्भिः रथैः M. प्रवणैः पलायितुं सुशकैर्मार्गैः Sy. प्लवमानैरत्यन्तशीघ्रगतिभिरश्वै रथैर्वा Sk.
१२. ०वानमि० M. ०वानयामि० P. इन्द्राच्चितयन्तः ... इन्द्रस्य पराक्रमम्। अथवा चित सञ्चोदने इत्यस्य चितयन्त इति रूपम्। चोदयन्तोऽश्वान् Sk.
१३. ०गताम: P. D. M. दूरे गतवन्तः Sy. आगमन्। नष्टा इत्यर्थः। अथवा निरष्टा इत्येतदशू व्याप्तौ इत्येतस्य रूपम्। प्रवद्भिरित्येतेन च सम्बध्यते। प्रवद्भिरित्येतच्चाङ्गिरोविषयम्। यथा वृषेण सह युयुत्समाना वध्रयस्तेन व्याप्ता नश्येयुरेवं निरष्टा निश्चयेन व्याप्ताः प्रवद्भिः प्लवमानैरत्यन्तशीघ्रगतिभिरङ्गिरोभिः। यस्यानुचराणामृषीणामीदृशः पराक्रमःसस्वयमसह्यपराक्रम इत्यङ्गिरःपराक्रमादेवेन्द्रस्य पराक्रमं जानन्तश्चोदयन्तो वाऽश्वान् अप्राप्तादेवेन्द्राद् आयन् गता नष्टाः। ये इन्द्रस्य सेनामयुयुत्सन् ते केचिद्धताःकेचिन्नष्टा इतिसमस्तार्थःSk.
१४. V. Mādhava ignores इन्द्रात्

त्वमेतान्रुदतो जक्षतश्चायोधयो रजस इन्द्र पारे ।
अवादहो दिव आ दस्युमुच्चा प्र सुन्वतः स्तुवतः शंसमावः ॥७॥

त्वमेतान् । त्वम् । एतान् । अव्रतान्[1] । रुदतः । हसतः[2] । च[3] । पृथिव्याः[4] । पारे[5] । योधितवानसि[6] । इन्द्र![7] तदानीम् । उच्छ्रितात्[8] । दिवः[9] । असुरम्[10] । अधः[11] । नीतवानसि[12] । सुन्वतः । स्तुवतश्च । प्रार्थनाम्[13] । प्रकर्षेण[14] । अरक्षः[15] ।

चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः ।
न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात्सूर्येण ॥८॥

चक्राणासः[16] । कुर्वाणाः[17] । आच्छादनं महत्तया[18] । पृथिव्याः । हिरण्मयेन । अलङ्कारेण[19] । शोभमानाः[20] । ते[21] । इन्द्रं प्रति । गच्छन्तः[22] । न । तीर्णवन्तः[23] सोऽयम्[24] । सूर्येण सह । परितः । रश्मीन्[25] । निहितवान्[26] ।

---

१. असुरान् वा Sk.
२. अवतान P. D. वृतान् F.
३. सर्वास्ववस्थासु वर्तमानानित्यर्थः Sk.
४. अन्तरिक्षस्य परभागे Sy.
अन्तरिक्षलोकस्य द्युलोकस्य वा Sk.
५. पारे अन्ते अवस्थितान् F.
अन्ते Sk. ६. योधयितवानिह F.
७. Omitted by F.
८. उच्छ्रिता P. D.
उत्कर्षेण Sy. उच्चैरप्यवस्थितम् Sk.
९. अवस्थितवान् भयादन्तरिक्षस्य दिवो वाऽन्तान्नष्टानपि सत इत्यर्थः Sk.
१०. उपक्षयितारम् Sy.
११. अमो P. D. M.
१२. नित० F. द्युलोकादानीय,... उत्कर्षेण अवादहो दग्धवानसि Sy. दहतिरप्यत्र सामर्थ्यान्निधमनार्थः। अधो निरधमः। निधमसि Sk.
१३. ०ना F. कामम् Sk.
१४. तर्पितवान् वाऽसि Sk.
१५. V. Mādhava ignores आ
१६. ०णासहं F. १७. ०ण P.
१८. सर्वतो बध्यते येन पृथिवी स पृथिव्याः परिणाहः। खातप्राकारादिकं दुर्गाणि कुर्वन्त इत्यर्थः Sk.
१९. मणिना Sk. २०. शोभनानाः P.
२१. ते इत्यसुराणां प्रतिनिर्देशः Sk.
२२. वर्धमानाः सन्तः Sy.
हिनोतिर्वृद्ध्यर्थः Sk.
२३. तितिरुर्नवन्त F.
जेतुं न समर्था आसन् Sy.
तरतिः शक्नोत्यर्थः। शक्नोतेश्च कर्मभूतधात्वन्तरानुषङ्गस्य नित्यत्वात् प्रतियोद्धुमिति वाक्यशेषः Sk.
२४. तान् F. २५. रश्मीः D. रश्मिभिः F.
'बाधकान् वृत्रानुचरान्...आदित्येन... परिहितान् व्यवहितानकरोत् Sy.
[स्पशो बाधकान् न केवलम्। किं तर्हि ? सूर्येणान्यैरपि देवैः सह सम्मन्त्र्येत्यर्थः। यस्माच्चारचक्षुर्मन्त्रशक्तियुक्तश्चेत्यर्थः Sk.
२६. विहि० M. निह० F.

परि॒ यदि॑न्द्र॒ रोद॑सी उ॒भे अबु॑भोजीर्महि॒ना वि॒श्वतः॑ सीम् ।
अम॑न्यमानाँ अ॒भि मन्य॑मानै॒र्निर्ब्र॒ह्मभि॑रधमो॒ दस्यु॑मिन्द्र ॥९॥

परि यदिन्द्र[1]। इन्द्र ! त्वम्[2]। माहात्म्येनाद्यां[3]श्छत्रून्[4] हत्वा। द्यावापृथिव्यौ। उभे[5] अपि। सर्वतः[6]। पर्यबुभोजीर्निःसपत्नमभुङ्‌थाः[7]। तदानीमङ्गिरोभिः[8][9] प्रयुज्यमानैरमन्यमानानव्रतान्[10][11][12]। अभिमन्यमानैः[13]। मन्त्रैर्दिवः[14][15]। शत्रून्[16]। निरधमः[17][18]।

न ये दि॒वः पृ॑थि॒व्या अन्त॑मा॒पुर्न मा॒याभि॑र्धन॒दां प॒र्यभू॑वन् ।
यु॒जं वज्रं॑ वृष॒भश्च॑क्र॒ इन्द्रो॒ निर्ज्योति॑षा॒ तम॑सो॒ गा अ॑दुक्षत् ॥१०॥

न ये दिवः। या आपः[19]। दिवः। पृथिव्याः। अन्तम्[20]। न। आपुः[21]। न[22]। कर्मभिः[23]। धनस्य[24] दातारमिन्द्रम्। परितोऽभवन्[25] तेषां जयार्थम्। सहायम्[26]। वज्रम्। वर्षिता। इन्द्रः। चक्रे[27] ततः।

१. इन्द्र is omitted by F. यदिति प्रथमान्तः। व्यत्ययेन तु नपुंसकता। यस्मादर्थे वा। यस्त्वं यस्माद्वा Sk. २. त्व P.

३. त्वदीयेन महिम्ना विश्वतः सीं सर्वतः परिगृह्य Sy. मन्त्रार्थमनुध्यातुमशक्तानपि केवलपाठकान् यजमानान् Sy.

४. ०नान्यान्० F. महता वीर्येण Sk.

५. उभावपि F.

६. ०र्जिनिः० P. परिपालयसि भुङ्क्षे वा Sk.

७. ०मभुङक्थाः P. ०मभुङक्ताः D. मभुंजथाः F.

८. P. adds नां प्रकर्षेणारक्षः before तदानीम्। स तस्माद् वा Sk.

९. तदानीं गिरोभि F.

१०. ०मानारमन्य० P. ०मानानमन्य० F.

११. अस्तुवतः Sk.

१२. ०नम्रतान् M. ०ननाश्रितान् F.

१३. अभिष्टुवद्भिः Sk.

१४. ऋग्यजुःसामलक्षणैः Sk.

१५. दिवा P. D.

१६. चोरं वृत्रादिरूपमसुरम् Sy. दस्युम्। अमन्यमानानिति बहुवचनसामानाधिकरण्याद् बहुवचनस्थाने इदमेकवचनम्। अनभिष्टुवतः शत्रून् Sk.

१७. F. adds दस्यः शत्रुः तं before निरधमः। धमतिरत्र . . . कलयतेरर्थे वर्तते। स्वस्मात् स्थानाद् अवकलयसीत्यर्थः Sk.

१८. V. Mādhava ignores यत्। सीम्। इन्द्र

१९. येऽप्यसुराः Sk.

२०. अन्तर्न P. D. M.

२१. न प्राप्नुवन्ति। द्यावापृथिव्योरेकदेशवर्तिन इत्यर्थः Sk.

२२. ता F.

२३. प्रज्ञाभिः Sk.

२४. धनप्रदां भूमिम् Sy.

२५. परिभवन्ति। इन्द्रान्न्यूनप्रज्ञा इत्यर्थः। Sk. २६. स्वहस्तयुक्तम् Sy. सम्बद्धम् Sk.

२७. तानपि वज्रेण हतवानित्यर्थः Sk.

ज्योतिषा[1]। गा अपः[2]। तमसो मेघात्[3]। निरधुक्षद्[4] दस्युं हत्वेति।

**अनु॑ स्व॒धाम॑क्षर॒न्नापो॑ अ॒स्याव॑र्धत॒ मध्य॒ आ ना॒व्या॑नाम्।**
**स॒ध्रीची॑नेन॒ मन॑सा॒ तमि॑न्द्र॒ ओजि॑ष्ठेन॒ हन्म॑नाहन्न॒भि द्यून्॥११॥**

अनु स्वधाम्[5]। वृत्रे हते। इन्द्रस्य। आपः स्वसारम्[6]। अक्षरन्[7] अयञ्चेन्द्रो[8] नावा[9] तार्याणामपां[10][11] मध्ये। अवर्धत। सहायभूतेनानुगुणेन[12]। धृष्टेन[13]। मनसा। वलवत्तमेन[14]। हननसाधनेन[15]। हतवान्। असुरम्। दिवसेषु[16] तेष्विति[17]।

---

१. सौरेण वैद्युतेन च Sk.

२. आपः M. स्वभूता गाः Sk.

३. मेयात् F.

४. निःशेषेण दुग्धवान्। मेघं भित्त्वा जलं वृष्टवानित्यर्थः।...दुह प्रपूरणे... संहितायां भष्भावाभावश्छान्दसः Sy. यत्र गुहादौ तमोरूपेण स्थापितास्तत-स्ततस्तेषामसुराणां स्वभूता गा निरधु-क्षन्निर्दग्धवान् निष्कासितवानित्यर्थः। अथवा ये इति मेघानां प्रतिनिर्देशः। मेघा द्यावापृथिव्योरेकदेशवर्तिन इन्द्राच्च न्यूनप्रज्ञाः। तानपि वज्रेण हतवान्। हत्वा च वैद्युतेन ज्योतिषा तदीयात्तमस आपो निरधुक्षत् क्षारितवान् Sk.

५. अनुशब्दो लक्षणे कर्मप्रवचनीयः Sk.

६. अन्नं व्रीह्यादिरूपमनुलक्ष्य Sy. स्वधेत्युदकनाम। यत् पूर्वपतितमुदकं तत् प्रति।...अन्विति पश्चाद्भावे। स्व-धेत्यप्यन्ननाम। अस्येत्येतच्च स्वधामित्ये-तेन सम्बध्यते। अस्येन्द्रस्य स्वभूतां हवि-र्लक्षणां स्वधामन्वेतदीयस्य हविषः पश्चात्। यदास्मै हविर्दीयते तदनन्तर-मित्यर्थः। किमक्षरन्? आपो वृष्टिलक्ष-णाः। कथं पुनर्मेघेन निरुद्धाः सत्योऽ-क्षरन्? Sk. ७. अस्येन्द्रस्य स्वभूताः प्रसादेन वा। अनुपक्षीणायामेव पूर्ववृष्टौ पुनरप्यवर्षन् Sk.

८. तदानीमयं वृत्रो...नावा तरणयोग्यानां बह्वीनामपां मध्ये...समन्ताद्... वृद्धिं प्राप्तः। प्रभूतजले वर्तमानोऽपि न ममार किन्त्वभिवृद्ध एव Sy.

९. स्वसारमद्वक्षरंनञ्चेन्द्रो M. ०न्नयेञ्चेन्द्रो P. वृत्रो हत इन्द्रस्य स्व-भूता आपः वृष्टिलक्षणा आपः स्वधां वृष्टिलक्षणां अन्वक्षरन्। अयज्वेंद्रा F.

१०. वावा M. ११. तार्यमपां F. तमिति तच्छब्दादचच्छब्दोऽध्याहार्यः। यो मेघो वृष्टिनिरोधाभिप्रायेणावर्धत मध्येऽवस्थितानामपामेवाधः। कियती-नाम्?...नावा तार्याणामत्यन्तबह्वीना-मित्यर्थः Sk. १२. सहगच्छता Sy.

१३. दृष्टेन F. सहाञ्चति गच्छतीति। सध्रीचीनेन सहगामिना वज्रेण। केन सहगामिना? मनसा। यत्रैव मनो गच्छति तत्रैव गन्त्रा। यत्र मनसेष्यते तत्र निपत-तेत्यर्थः। तं मेघमिन्द्रः Sk.

१४. F. adds तथा सहानुगामिना मनसा यत्र मनोनुगच्छति तत्र गंता तेन वज्रेण after बलवत्तमेन।

१५. हन्त्रा मेघानाम् Sk.

१६. F. adds वार्षिकेषु before तेष्विति। येषु वार्षिकेष्वहःसु हन्तुं योग्यस्तेष्वि-त्यर्थः Sk. १७. V. Mādhava ignores आ। अभि

न्या॑विध्यदिली॒बिश॑स्य दृ॒ळ्हा वि शृ॒ङ्गिण॑मभिन॒च्छुष्ण॒मिन्द्रः॑ ।
याव॒त्तरो॑ मघव॒न्याव॒दोजो॒ वज्रे॑ण॒ शत्रु॑मवधीः पृत॒न्युम् ॥१२॥

न्याविध्यत्।[1] निरविध्यत्। उदकस्य[2] निर्गमनद्वारमावृत्य शयानस्य। दृढानि[3] द्वाराणि मेघस्य।[4] तेजस्विनम्।[5] शुष्णासुरञ्च।[6] व्यभिनत्।[7] इन्द्रः।[8] यावत्। वेगः।[9] यावच्च। बलम्।[10] मघवन्! तत् सर्वमादाय। पृतनाकामम्।[11] शत्रुं शुष्णम्।[12] अवधीः।[13]

अ॒भि सि॒ध्मो अ॑जिगादस्य॒ शत्रू॒न्वि ति॒ग्मेन॑ वृष॒भेणा॒ पुरो॑ऽभेत् ।
सं वज्रे॑णासृजद्वृ॒त्रमिन्द्रः॒ प्र स्वां म॒तिम॑तिर॒च्छाश॑दानः ॥१३॥

अभि सिध्मः।[14] साधयिता कर्मणामिन्द्रः।[15] अस्य शुष्णस्य।[15] शातयितव्यान्[16] सहायान्।[17] अभ्य-

---

१. निरविध्यदिलाबिलशयस्य दृढानि। व्यभिनच्छृङ्गिणं शुष्णमिन्द्रः N. 6. 19.

२. भूमेर्बिले शयानस्य वृत्रस्य सम्बन्धीनि Sy. इलीबिशो मेघः।... इळेत्यन्ननाम... बीजरूपमन्नमुद्भिनत्ति वर्धयत्युदकरूपो वा गच्छतीतीळाबिसः। इळाबिसः सन्निळीबिश उच्यते।... अथवा इळाशब्दोऽत्रान्नहेतुत्वादुदके वर्तते। बिशशब्दोऽप्येकदेशलोपेन बिलशयशब्दस्यार्थे। अन्नहेतोरुदकस्य बिलेषु शेते तान्यपावृत्य तिष्ठतीतीळाबिशो मेघः Sk.

३. दृंहितान्यसुरेण निरुद्धानि प्रभूतान्युदकानीन्द्रो... नितरां विद्धवान्। यद्वा दृळ्हानि प्रबलानि सैन्यानि नितरां विद्धवान् Sy. निदुर्व्यथानि... उदकनिर्गमनबिलानि Sk.

४. मेधस्य F.

५. F. adds इलिं निविशतोसुरस्य दृढानि पुराणि निर्भिद्य ताडितवान् हतवानित्यर्थः before तेजस्विनम्। गोमहिषादिशृङ्गसमानैरायुधैरुपेतम् Sy. दीप्तम् Sk.

६. जगतः शोषकं वृत्रम् Sy. बलवन्तम्।... कस्यचिन्मेघस्य बिलान्युद्घाटितवान्। कञ्चित्तु शतशतशर्करं भग्नवानित्यर्थः। अथवा... शुष्णो नामासुरः ...तं विविधं भिन्नवान् विदारितवानित्यर्थः। शुष्णसम्बन्धाच्चेळाबिशोऽप्यसुर एव। तस्य स्वभूतानि दृढानि पुराणि निरविध्यत्।... निभृतं ताडितवान् हतवानित्यर्थः Sk.

७. विदारितवानित्यर्थः Sk.

८. अत्रो P.

९. वेगा P. शरीरसामर्थ्यलक्षणं बलम् Sk.

१०. सेनालक्षणं बलम्। यावदित्युद्देशात् तावदित्यध्याहार्यम् Sk.

११. संग्रामकामम् Sk.

१२. अस्मदीयं वा Sk.

१३. V. Mādhava ignores वज्रेण

१४. सिध्मोध्य: F.

१५. साधको वज्रः Sy. अथवा सिध्म इति वज्र उच्यते। साधयिता वज्रः Sk.

१६. इन्द्रस्य Sy.; Sk.

१७. शासयि F. इन्द्रवैरिणः Sy. शत्रून् Sk.

जिगात्। व्यभिनच्च। वज्रेण। कामानां वर्षित्रा। पुराणि। वज्रेण। वृत्रम्। समयोजयत्। इन्द्रः। अवर्धयत्। स्वाम्। मतिम्। शत्रुपुराणि शातयन्।

आवः कुत्समिन्द्र यस्मिँश्चाकन्प्रावो युध्यन्तं वृषभं दशद्युम्।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥१४॥

आवः कुत्सम्। रक्षितवानसि। कुत्सम्। इन्द्र! यस्मिन् कुत्से स्तुतीः। कामितवानसि। प्रावश्च। युध्यन्तम्। स्तुतीनां वर्षितारम्। दशद्युं नाम युद्धे। शफैश्च्युतः। रेणुः। अन्तरिक्षम्। नक्षत् वृद्धमासीद्युद्धम्। अथ। श्वित्रायाः पुत्रो दशद्युस्त्वयोपबृंहितः। शत्रूणामभिभवाय कस्मिंश्चिद्ध्रदे भयात प्रविष्टस्ततः। उत्तस्थौ। अस्योत्तरा भूयसे निर्वचनाय। आवः शममिति।

---

१. विनाशितवानित्यर्थः Sk.
२. श्रेष्ठेनायुधेन Sy. अभिगतेन वज्रेण तिग्मेन तीक्ष्णेन Sk.
३. वर्षेता F.
४. वृत्रस्य पुराणि Sy. तेषां शत्रूणां स्वभूताः पुरो नगराणि Sk.
५. वृत्रेण वज्रं च P. D. M.
६. ०जद्यत् M.
७. वर्धयन् P. F. वद्धयन् D. वर्जयत् M.
८. घातयन् F. वृत्रं हिंसन् Sy. पुनः पुनरसुरान् तत्पुराणि च...य ईदृशं कर्म पुनः पुनः करोति स तत्कर्मसम्बन्धाद् आत्मीयस्तुतिं वर्धयति। अथवा मतिरिति प्रज्ञैवोच्यते। स्वप्रज्ञामवर्धयदिति। यो यन्नित्यं करोति तस्य तत्र प्रज्ञाकौशलं वर्धते Sk. शाशदानः शाशादद्यमानः N. 6. 16.
९. Omitted by F.
१०. कुत्सं नाम ऋषिम्। यस्मिन्कुत्से यागं कुर्वति Sk.
११. स्तुति P. स्तुतिं F.
१२. प्रश्च P. प्रापश्च D. M. प्रकर्षेणारक्षः Sk.
१३. F. adds राजानं after वर्षितारम्। वृषभनामानं राजानम् Sk.
१४. बहुदीप्तिम् Sk.
१५. ०द्युन्नामा P. दशं नाम M. दशद्युनामानम् F.
१६. युधे P.
१७. शफे च्युतः P. शवै० M. त्वदीयाश्वस्य शफात् पतितः Sy.
१८. नक्षत P. D. तक्षत M. गतवान्नक्षत F. नक्षतिर्गतिकर्मा वा व्याप्तिकर्मा वा। गतवान् व्याप्तवान् वा Sk.
१९. प्रवृ F.
२०. ०सीत वृद्धम् M.
२१. अधश्चित्रायाः P. अथ चित्रायाः M. अत् श्वि० F. श्वित्राख्याया योषितः पुत्रः पुरा शत्रुभयाज्जले मग्नः सन् Sy. शु इति क्षिप्रनाम। इ गतौ। शु इता श्वित्रा, आशुगामिनी जगतः प्रकृतिः, तस्यापत्यं श्वैत्रेयो वायुः Sk.
२२. शत्रुमनुष्याभिभवनाय Sk.
२३. ०श्चिध्रदे P. कस्मिन् द्वन्दे F.
२४. क्षयात् F.
२५. जलादुत्थितवान् Sy. शत्रुष्वभिभवनार्थं युद्धवेलायां महान्तं रेणुं वात्यां चाकरोदित्यर्थः Sk.
२६. वः P.

आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् ।
ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥१५॥

बलाभावाच्छान्तम्[1]। वृषभम्[2]। उदकेषु भयाद्। गतम्। पृथिवीजयार्थम्[3]। श्वित्राया अपत्यं[4] दशद्युम्[5]। आवः[6]। चिरम्[7]। तस्मिन्[8]। स्थिताः शत्रवः। कृतवन्तो[9] युद्धमथ तेषाम्[10]। शत्रुत्वमिच्छताम्। उपद्रवाणि[11][12]। अधराणि[11]। चकारेति[13][14]।

## I.34.

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना ।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ॥१॥

त्रिश्चिन्नः[15]। त्रिः। चित्[16]। अस्माकम्[17]। अद्य[18]। भवतम्[19]। प्राज्ञौ। विभवति[20]। युवयोः।

---

१. बलागावात् M. त्वदीयपरिपालनेन चित्तव्याकुलतां परित्यज्य शान्तम् Sy. शान्तात्मकम् Sk.

२. F. adds नाम राजानम् after वृषभम्। तुग्र्या बुर्बुरमित्युदकनामसु पठितत्वात् ... तुग्रशब्दोऽन्तरिक्षवचनः। तत्रभवास्तुग्रियाः ... इकारलोपश्छान्दसः Sy. वृषभं नाम राजानम् ... अप्सु स्थितमद्भ्य उत्तारितवानसीत्यर्थः Sk.

३. शत्रुभिः सह युद्धवेलायां क्षेत्रप्राप्त्यर्थम् Sy. क्षेत्रशब्देनात्रैकदेशवचनेन समस्ता पृथिवी लक्ष्यते। पृथिवीजयाय। अद्भ्य उत्तारितां पृथिवीं जेष्यतीत्येवमर्थम् Sk.

४. मित्राया P. ५. गां जलेषु गतं मग्नमित्यर्थः Sy. गां गन्तारं देवान् शत्रून् वा प्रति Sk. ६. आपः P.

७. चिरान् P. F. adds गां गन्तारं शत्रुं देवाव after चिरम्। ज्योक् चित् चिरकालमपि Sy. ज्योगिति निपातश्चिरवचनः। चिच्छब्दः पदपूरणःSk. ८. एकवाक्यताप्रसिद्ध्यर्थं यच्छब्दोऽत्राध्याहार्यः। यं वृषभं चिरमत्र पृथिव्यां तस्थिवांसः स्थिताः प्रतिष्ठितास्तच्छत्रवोऽसुरा वा अक्रन्। करोतिरिह क्रियासामान्यवचनः सामर्थ्यात् प्रक्षेपे वर्तते। अप्सु क्षिप्तवन्तः। यं पृथिव्यां चिरप्रतिष्ठितमपि सन्तं शत्रवोऽसुरा वा राज्योच्छेदादप्सु प्रक्षिप्तवन्त इत्यर्थः Sk.

९. शत्रुत्वम् Sy.

१०. युद्धमत्युक्षिप्तवन्त उक्तार्थं च तेषाम् F.

११. निकृष्टानि दुःखानि Sy. यानि स्वभूतानि वेदनानि। अपठितमपि धननामैतत्। धनानि तान्यधराणि तस्याधोवर्तीन्यकः कृतवानसि। शत्रुधनानि तस्यायत्तान्यकरोदित्यर्थः Sk.

१२. उपावाणि F. १३. चकारोति F.

१४. V. Mādhava ignores मघवन्। चित्। Ms. D. puts the figure ॥३३॥ here to indicate the end of the thirtythird hymn. No such number is given in P. M. and F. १५. त्रिश्चिन्नः। D. M. नः is omitted by F. त्रिश्चित् त्रिवारम् ... अत्र त्रिरिति वचनं सवनत्रयापेक्षम्। आदरातिशयद्योतनार्थं वा Sy. त्रिशब्दोऽत्र सर्वत्र त्रिशब्दस्य बहुत्वमात्रप्रतिपत्त्यर्थत्वाद् बहुकृत्व इत्यस्यार्थे। बहुकृत्वः Sk.

१६. चिच्छब्दस्तु पदपूरणः Sk.

१७. अस्मान् Sk. १८. त्रिश्चदद्य P. त्रिश्विदद्य D. त्रिश्विदस्माकमद्य M.

१९. भवन्तं D. भवनं M. भवतिरिह प्राप्त्यर्थः। प्राप्नुतम्। ... बहुकृत्वोऽप्यस्मत्समीपमागच्छतमित्यर्थः Sk.

२०. ह भवति P. प्राज्ञौ त्रिः कृत्वः बद्ध प्रामुतं बांधामनुधः रातिः देवमपि विक्षुर्गमनसमर्थयदागत्याभवतोस्मभ्यः धनं दास्यत तदपि प्रभूतमित्यर्थः। भवति F. व्याप्तः Sy.

गमनमनेकेषु[1]। दानम्[2]। च। युवयोः। हि[3]। युगलम्[4]। रात्र्येव[5]। अहः[6]। सुश्लिष्टं तौ युवामस्मान् प्रति[7]। गन्तारौ। भवतम्[8]। देवैः[9]।

**त्रयः॑ प॒वयो॑ मधु॒वाह॑ने॒ रथे॒ सोम॑स्य वे॒नामनु॒ विश्व॒ इद्वि॑दुः।**
**त्रयः॑ स्क॒म्भास॑ः स्कभि॒तास॑ आ॒रभे॒ त्रिर्नक्तं॑ या॒थस्त्रिर्व॑श्विना॒ दिवा॑॥२॥**

त्रयः पवयः[10]। त्रीणि। मधुपात्राणि[11]। मधुवाहने भवतः। रथे तं रथम्[12]। सोमस्य[13]। कान्तां[14]

---

१. गमनसाधनभूतो रथः Sy.
यान्त्येतेनेति यामो रथ इहोच्यते Sk.

२. हे अश्विनौ यदागत्यास्मभ्यं धनं दास्यथस्तदपि प्रभूतमित्यर्थः Sk.

३. हिशब्दो यस्मादर्थे Sk.

४. युगठ्ठरात्र्येहस्सु शिष्टन्तौ P. युगलरात्र्येवाहस्सु शिष्टन्तौ D. युगकं रात्र्येवान्हस्सु ग्विषं तौ F. परस्परनियमरूपः सम्बन्धविशेषोऽस्ति खलु Sy.
यस्माच्च युवयोः स्वभूतं यन्त्रमपि विभु। येन यन्त्रेण युवामपि शत्रून् हथ। तदपि सवं गमनप्रतिबन्धकम् Sk.

५. हिमयुक्तया रात्र्येव Sy.
हिमेति रात्रिनाम। तत्रभवा हिम्या उषाः।...अथवा हिम्येव वासस इत्येतदुपमानम्। युवयोर्हि यन्त्रमित्येतेन च सम्बध्यते। अयं च पादो भिन्नमेव वाक्यं पूर्वस्मादर्धर्चात्। युवयोरिति षष्ठीनिर्देशाज्ज्योतिरिति वाक्यशेषः। युवयोर्ज्योतिर्यन्त्रम्... वासःशब्देन रात्रिर्लक्ष्यते। रात्र्यापि स्वसम्बन्धि तमो लक्ष्यते। यथोषाः शार्वरस्य तमसस्तद्वदित्यर्थः Sk.

६. सूर्यरश्म्याच्छादनयुक्तस्य वासरस्य। ...यथा रात्र्या सह दिवसस्य सम्बन्धः कदापि नापैति तद्वत् Sy.
वास इत्यपठितमप्यहर्नाम Sk.

७. यथोषा नियमेनाहरुत्पत्त्याऽभिमुखं करोत्येवं युवां नियमेन रथमस्मदभिमुखं कुरुतः। येनासावस्मत्समीपमागच्छतीत्यर्थः Sk.

८. युवामुभौ ... मेधाविभिर्ऋत्विग्भिः ... अभितो नियन्तव्यावनुग्रहवशात् तदधीनौ भवतम् Sy. अभ्यायंशब्दः क्विबन्तः। सेनाया अभ्यायन्तारौ।... स्वसेनयाऽस्मानाभिमुख्येन यन्तारौ भवतमित्यर्थः Sk.

९. मेधाविभिः सह। कैः? त्रयस्त्रिशता देवैः Sk.

१०. वयः M. मधुपूर्णास्त्रयः पवयः Sk.

११. वज्रसमाना दृढाश्चक्रविशेषाः Sy.

१२. मधुरद्रव्याणां नानाविधखाद्यादीनां वहनेन युक्ते Sy. आगच्छतोः पिपासितयोर्युवयोरस्ति रथे पेयं मध्वित्यर्थः Sk.

१३. तनुथं P.

१४. सोमस्य चन्द्रस्य वेनां कमनीयां भार्यामभिलक्ष्य... यदा सोमस्य वेनया सह विवाहस्तदानीं नानाविधखाद्ययुक्तं चक्रत्रयोपेतं प्रौढं रथमारुह्याश्विनौ गच्छत इति सर्वे देवा जानन्तीत्यर्थः Sy.
सोमस्य चोपरि वेनां कान्ति युवयोरिच्छामेत्यर्थः Sk.

सूर्याम्[१]। अनु तस्याः स्वयंवरे[२]। सर्वे। एव देवास्तं रथं प्रत्यक्षेण[३]। अजानन्[४] तस्मिन्[५]। तिस्रः। स्थूणाः। अवष्टम्भनार्थम्। स्थापिताः[६]। तौ युवाम्[७]। रात्रेरस्मान्[८]। त्रिः[९]। आगच्छतम्। अह्नः[७]। च।

**समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम्।**
**त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतम् ॥३॥**

समाने अहन्। एकस्मिन्। अहनि। त्रिरागतौ[१०] हे अवद्यानि[११] विनाशयन्तौ! त्रिः[१२]। अद्यास्माकम्। यज्ञम्। मधुना[१३]। सिञ्चतम्[१४]। तथा[१५] रात्रिः[१६]। उषसः। च। बलयुक्तानि[१७]। अन्नानि। युवाम्। अस्मभ्यम्। त्रिः[१८]। दोग्धम्[१९]।

---

१. सूर्यम् P.

२. तस्य P.

३. सर्व एव यजमाना जानन्त्यागच्छतोः। आगताभ्यां युवाभ्यां सोमाभिलषितं जानन्तः सर्व एव यजमानाः सोमं दास्यन्तीत्यर्थः Sk. अवष्टम्भनायागच्छतोरागतयोर्वा श्रान्तयो रथे सदसि वाऽवष्टम्भनस्तम्भा अपि विद्यन्त एवेत्यर्थः Sk.

४. प्रत्यक्षो P.

५. The passage beginning with रथं and ending with अजानन् is missing in M.

६. ०पितवाः P. आरभे आरब्धुमवलम्बितुम्...यदा रथस्त्वरया याति तदानीं पतनभीतिनिवृत्त्यर्थं हस्तालम्बनभूताः स्तम्भा इत्यर्थः Sy. स्कभितासः प्रतिबद्धाः।... रथे सदसि वा Sk.

७. युवां तादृशेन रथेन... रात्रौ... त्रिवारं गच्छथः। तथा... दिवसेऽपि त्रिर्याथः। रात्रावहनि च रथमारुह्य पुनः पुनः क्रीडथ इत्यर्थः Sy. त्रिर्बहुकृत्वो नक्तं रात्रौ... यातमस्मत्समीपम्... बहुकृत्व एवाश्विनौ दिवा Sk.

८. युवा M.

९. त्रीः M. बहुकृत्वः Sk.

१०. अहन् त्रिरित्यनयोः कारकक्रियाविशेषणयोरवद्यगोहना इत्यनयाऽऽमन्त्रितस्थया क्रियया सम्बन्धः Sk.

११. त्रिवारमनुष्ठानगतानां दोषाणां संवरणकारिणौ भवतम् Sy. अवद्यगोहनौ गर्ह्यस्य तमसो गोहितारौ। स्वेन ज्योतिषापहन्तारावित्यर्थः Sk.

१२. बहुकृत्वः Sk.

१३. उदकेन Sk.

१४. ०त P.

१५. कथा P.

१६. रात्रिषु दिवसेषु च नैरन्तर्येण Sy. आभ्यां ददतु। उषःशब्देनात्र साहचर्यादहर्लक्ष्यते। सप्तम्येकवचनस्य स्थान उभयत्र प्रथमाबहुवचनम्। रात्रौ चाहनि च पिन्वतम्। सततं दत्तमित्यर्थः Sk.

१७. उषद्वश्चञ्चलयुक्ताणि P. उषसश्चञ्च (ब) लयुक्तानि D.

१८. बहुकृत्वः Sk.

१९. तिर्दोद्धं P. The passage beginning with यज्ञम् and ending with दोग्धम् is omitted by M. सिञ्चतं, प्रयच्छतमित्यर्थः Sy. सिञ्चतं क्षालयतम्। बलकराण्यन्नान्यस्मभ्यं दत्तमित्यर्थः Sk.

त्रिर्व॒र्तिर्या॑तं॒ त्रिरनु॑व्रते॒ जने॒ त्रिः सु॑प्रा॒व्ये॑ त्रे॒धेव॑ शिक्षतम् ।
त्रिर्ना॒न्द्यं॑ वहतमश्विना यु॒वं त्रिः पृक्षो॑ अ॒स्मे अ॒क्षरे॑व पिन्वतम् ॥४॥

त्रिर्वर्तिः[1]। त्रिः। मार्गम्[2]। गच्छतम्[3]। त्रिः। अनुकूलकर्मणि[4]। जन आगच्छतम्[5]। त्रिः[6]।
सुष्ठु[7] परिरक्षणीये तथा। त्रेधा[8] च। दत्तम्[9]। इवेति पूरणम्[10]। त्रिरस्माकम्[11][12][13]। हर्षजननं[14] धनम्। वहतम्[15]।
त्रिः[12]। अन्नम्[16]। अस्मासु[17]। उदकानीव[18] पर्जन्यः[19]। पिबतम्[20][21]।

त्रिर्नो॑ र॒यिं व॑हतमश्विना यु॒वं त्रिर्दे॒वता॑ता॒ त्रिरु॒ताव॑तं॒ धियः॑ ।
त्रिः सौ॑भग॒त्वं त्रिरु॒त श्रवां॑सि न॒स्त्रिष्ठं॑ वां॒ सूरे॑ दुहि॒ता रु॑ह॒द्रथ॑म् ॥५॥

त्रिर्नो रयिम्। त्रिः[22]। अस्मभ्यम्। धनम्। वहतम्[23]। त्रिः। यज्ञे[24]। दत्तम्[24]। अपिच। कर्माणि[25]।

---

१. त्रिवर्तिः P.

२. अस्मदीयवर्तनसाधनं गृहम् Sy. वर्तिः, वर्तन्या प्रसिद्धेन मार्गेण यातम् Sk.

३. गच्छत P. D.

४. अन्यकू० P. अस्मदनुकूलव्यापारयुक्ते Sy. अनुव्रते जने। अनुव्रतशब्द आपन्नभक्तवचनः प्रसिद्धो लोके। बहुकृत्वो भक्ते आपन्ने मादृशे जने। नित्यं भक्तस्य मादृशस्य मनुष्यस्य समीपं गच्छतमित्यर्थः Sk.

५. ०त P. D.

६. तिः P. बहुकृत्वः Sk.

७. सुष्ठु प्रावयति प्रतर्पयति यो देवताः स सुप्रावी यष्टा तस्मै Sk.

८. त्रिधाशब्दस्त्रिधाशब्दस्य बहुत्वमात्रप्रतिपत्त्यर्थत्वाद् बहुधाशब्दस्यार्थे Sk.

९. पुनः पुनरनुष्ठानमुपदेष्टव्यम् Sy. बहुप्रकारं दत्तम्। किं सामर्थ्याद्धनम् Sk.

१०. ०रण P.

११. ति० P.

१२. बहुकृत्वः Sk.

१३. The passage beginning with त्रिर्वर्तिः and ending with त्रिरस्माकम् is omitted by M.

१४. नन्दनीयं सन्तोषकरं फलम् Sy. पुत्रादिसमृद्धिम्।...हे अश्विनौ ! युवां पुत्रादिसमृद्धिमपि दत्तमित्यर्थः Sk.

१५. वहत P. वहतः M.

१६. बहुवचनान्तसामानाधिकरण्यदर्शनाद् बहुवचनान्तं द्रष्टव्यम्...अन्नानि Sk.

१७. अस्मभ्यम्।

१८. उदकानि च P. D. उदकानिव M. यथा मेघोऽन्यो वा कश्चित् प्रभूतान्युदकानि तथा बहुकृत्वोऽस्मभ्यं दत्तमित्यर्थः Sk.

१९. ०न्या P. D.

२०. प्रयच्छतम् Sy.

२१. V. Mādhava ignores अश्विना। युवम्

२२. बहुकृत्वः Sk.

२३. वहत P. वहतः M. दत्तम् Sk.

२४. देवैर्युक्ते कर्मणि Sy. आगच्छतमिति शेषः Sy. त्रिरावृत्ते यागे। पुनः पुनर्यजद्भ्योऽस्मभ्यमित्यर्थः Sk.

२५. अस्मद् बुद्धीः Sy. प्रज्ञा वाऽस्मदीया बहुकृत्वो रक्षतमित्यर्थः Sk.

रक्षतम्[1]। त्रिः[2]। सौभाग्यम्[3]। त्रिः। उत। अन्नानि[4]। त्रिभिश्चक्रैर्यस्तिष्ठति[5] तम्। युवयोः। रथम्[6]। सूर्ये[7] स्वयंवरार्थं गतयोस्तस्य[8]। दुहिता[9]। आरुरोह[10] [11]।

**त्रिर्नो॑ अश्विना दि॒व्यानि॑ भेष॒जा त्रिः पार्थि॑वानि॒ त्रिरु॑ दत्तम॒द्भ्यः।**
**ओ॒मानं॑ शं॒योर्मम॑काय सू॒नवे॑ त्रि॒धातु॒ शर्म॑ वहतं शुभस्पती ॥६॥**

त्रिर्नो अश्विना। त्रिः[12]। अस्मभ्यम्। अश्विनौ। दिवि भवानि। भेषजानि[13]। दत्तम्। त्रिः। पार्थिवानि[14]। त्रिः। च। आन्तरिक्षाणि[15]। शंयोर्बार्हस्पत्यस्य[16] यज्जगतः[17]। रक्षकम्[18]। सुखं[19] तत्। त्रिगुणम्[20] उदकपती[21]! सूनवे। मदीयाय[22]। आवहतम्[23]।

---

१. रक्षतः M.　　२. बहुकृत्वः Sk.

३. ०भग्यम् D.　सुधनताम्। किम्? साकाङ्क्षत्वाद्योग्यत्वाच्च व्यवहितस्यापि वहतमित्यस्यानुषङ्गः। वहतं दत्तम् Sk.

४. उद्वानानि P. उतानानि D. कीर्तिं वा बहुकृत्वो वहतम् Sk.

५. दभिश्चक्रे य० P. ०श्चक्रे य० D. M. अश्विनोस्त्रिचक्रो रथः। स त्रिषु चक्रेषु स्थितत्वाल्लोकत्रयव्यवस्थितत्वाच्च त्रिष्ठः। तं त्रिष्ठम् Sk.

६. रथ M.

७. षष्ठयर्थे सप्तमी Sk.

८. सूर्यस्य पुत्री Sy.

९. तत्प्रभवत्वाच्चोषसो दुहितृव्यपदेशः। सूर्यस्य दुहिता उषाः Sk.

१०. ०रोहा P.　०रोद M.

११. V. Mādhava ignores अश्विना। युवम्। नः।　　१२. बहुकृत्वः Sk.

१३. त्रिप्रकाराण्यौषधानि Sk.

१४. दन्तिरपाक्षिवानि P. ०रपार्त्थिवानि D.

१५. अन्तरिक्षात्। ...लोकत्रयभेषजानि तान्यस्मभ्यं बहुकृत्वो दत्तमित्यर्थः Sk.

१६. चतुर्थ्यर्थे षष्ठी। शंयोः सुखकामाय ममकाय मामकीनाय... पुत्राय Sk.

१७. यज्ञगतः P. D.

१८. ओमानं सुखविशेषम् Sy. सर्वोपस्करपालनसमर्थम् Sk.

१९. शर्म। गृहनामैतत् Sk.

२०. तत्रि P. वातपित्तश्लेष्मधातुत्रयशमनविषयं सुखम् Sy. धीयन्ते प्राणिनां देहेष्विति धातवः शरीरस्थितिहेतवोऽन्नरसाः। देवपितृमनुष्योपभोग्यैरन्नरसैस्त्रिभिरभ्युपेतम् Sk.　　२१. ०कवति P. शोभनस्यौषधजातस्य पालकौ Sy.

२२. मदीया च वहतं P. प्रापयतम्। दत्तम्।...अथवा शंयोरिति सुखेच्छापादानत्वादिष्यमाणस्य याचितत्वात् शं च दत्तमित्यर्थः। न गृहम्। ओमानमित्यवतेस्तृप्तिकर्मणः। अवनं पालनं वा। त्रिधात्वित्यपि त्रयाणां धातूनां समूहः। अवनपालनयोरन्यतरदेवपितृमनुष्योपभोग्यान्यतररसत्रयसमूहं सुखं च दत्तमित्यर्थः। अथवा त्रिधात्विति शर्मण एव विशेषणं नार्थान्तरप्रतिनिर्देशः। धातुशब्देन तु शीतोष्णवर्षकालास्त्रय उच्यन्ते। त्रिषु कालेषु भवत् त्रिधातु शर्म। कालत्रयेऽपि सुखं दत्तमित्यर्थः Sk.

२३. M. ignores this stanza.

त्रिर्नो अश्विना यजता दिवेदिवे परि त्रिधातु पृथिवीमशायतम् ।
तिस्रो नासत्या रथ्या परावत आत्मेव वातः स्वसराणि गच्छतम् ॥७॥

त्रिर्नो अश्विना। अश्विनौ[1]। यजनीयौ[2]। अह्नः[3]। त्रिः। अस्मान्। वेदिभूतां पृथिवीम्[4]। बर्हिषा[5] त्रिधातुना[5][6]। पर्यशायतं[7] परितस्तारितवन्तौ[8] त्रिधातु[9]। तिस्रो[10] वेदीः[11]। नासत्यौ[12]। रथ्यौ[13]। दूरात्[14]। आगच्छतम्[15]। व्याप्त इव। वायुः। [16]अहानि यथा वायुर्दिवसेषु संचरति।

---

१. Omitted by M.

२. यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया। यौ यजता यष्टव्यौ यागार्हौ Sk.

३. अहः M.
प्रतिदिनम् Sy. अहन्यहनि Sk.

४. अस्मदीयां वेदिरूपां भूमिम् Sy.

५. कक्ष्यात्रययुक्ते आस्तीर्णे बर्हिषि... त्रिवारं...शयनं कुरुतम् Sy.
त्रिधात्विति पृथिवीसामानाधिकरण्याद्व्यत्ययेन नपुंसकता। पृथिवीशब्देनापि समस्तभूमण्डलवचनेनैकदेशोऽत्र लक्ष्यते। त्रिभिरपि रसैरुपेतां निवासभूमिम् Sk.

६. ०तुन्ना P.

७. अस्माकं स्वभूतां वेदिलक्षणां पृथिवीं पर्यशायतमश्नुवाथाम्। सर्वतो व्याप्नुतमित्यर्थः। अथवा अशायतमिति शेः रूपम्। शेतिश्च स्थानार्थः।...पर्यशायतम्। परिप्रापयतम्। दत्तमस्मभ्यमित्यर्थः। अथवा न इति षष्ठी। पृथिवीविशेषणार्था। पृथिवी च वेदिरभिप्रेता। अशायतमित्यपि प्रकृत्यन्तरस्यैवाश्नोतेरूपम्। अस्माकं स्वभूतां वेदिलक्षणां पृथिवीम्। अथवा धातुशब्दः कालवचनः। ततः क्रियाविशेषणम्। त्रिषु पूर्वाह्णमध्यन्दिनापराह्णलक्षणेषु कालेषु भवत् त्रिधातु। अशायतम्। सर्वासु यागवेलास्वशायतमित्यर्थः Sk.

८. ०न्तो M.

९. ०धाकु F. D.

१०. किञ्च तिस्रोऽप्यस्मदीया ऐष्टकपाशुकसौमीकवेदिलक्षणाः Sk.

११. तिस्रेवेदिः P.

१२. यद्यपि चाश्विनोरन्यतरस्येदं नामधेयं तथापि साहचर्यादुभयोर्व्यपदेशः Sk.

१३. रक्ष्यौ D.
रथस्य वोढारौ रथे वा साधू Sk.

१४. दूरस्थोऽपि Sk.

१५. आत्मशब्देनात्रात्मसम्बन्धान्मन उच्यते। वातशब्दोऽपि लुप्तेवशब्दम् उपमानमेव। द्वितीयं मन इति इव च। वात इव। यथा वायुमनसी शीघ्रं गच्छतस्तद्वत्।...आत्मेति वातस्यैव विशेषणम्। न पृथगुपमा। वातो हि सर्वस्यात्मा सर्वशरीराणां पाञ्चभौतिकत्वात्। यथा सर्वस्यात्मा वातः शीघ्रं गच्छति तद्वच्छीघ्रं गच्छतमिति। अनयोश्चार्धर्चयोः पूर्वेण निवासभूमिप्राप्तिराशास्यते परेण यागकालेषु वेदिगमनमित्यस्यां तावत् कल्पनायामपौनरुक्त्यमेव। यदा तु पूर्वेण वेदिव्याप्तिरुक्ता तदा परेण वेदिगमनमुच्यते। गमनोत्तरकालं व्याप्तिः पूर्वेण। इत्येवमपौनरुक्त्याद् वाक्यभेदाद् वाऽर्धर्चयोस्तुल्यार्थत्वेऽप्यपौनरुक्त्यमेव Sk.

१६. यथा प्राणिनामात्मभूतः। प्राणवायुस्तदीयानि शरीराणि गच्छति तद्वत् Sy.
सप्तम्यर्थे चात्र प्रथमा। यजनीयेष्वहस्सु शीघ्रं गच्छतः Sk.

**त्रिरश्विना सिन्धुभिः सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतम् ।**
**तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितम् ॥८॥**

**त्रिरश्विना** । सप्तादित्यरश्मयो[1] मातरो[2] यासां नदीनां[3] ताभिः । अश्विनौ ! त्रिः[4] कृतमेतद्विशदमाह त्रय[5] इति । कूपस्य समीपं प्रभूतोदकं निपान[6]माहावस्त्रयः[7] । आहावाः कृता[8] एतदेव स्पष्टमाह त्रेधेति द्रोणकलश[9] आधवनीयः पूतभृदिति[10] त्रय आहावास्तेषु त्रेधा । सोमः[11] । कृत एवं कृते । तिस्रः । वेदीः[12] । अभि । प्रबलेन । दिव[13] आगच्छतं युवाम् । अहोरात्रैः[14] । निहितम्[15] । आदित्यम्[13] । रक्षेथे ।

**क्व१त्री चक्रा त्रिवृतो रथस्य क्व१त्रयो वन्धुरो ये सनीळाः ।**
**कदा योगो वाजिनो रासभस्य येन यज्ञं नासत्योपयाथः ॥९॥**

**क्व त्री चक्रा**[16] । क्व । त्रीणि । चक्राणि । त्रिभिश्चक्रैर्वर्तमानस्य[17] युवयोः । रथस्य । क्व वा । त्रयः[18] । फलकाः सङ्घाटाः प्रउगाकारस्य कोणेषु त्रयः फलकाः सङ्घाटा[19] भवन्ति । ये । सनीडाः[20]

---

१. सप्तसंख्याका गङ्गाद्या नद्यो मातर उत्पादिका येषां जलविशेषाणां ते सप्तमातरः Sy. सप्तच्छन्दांसि मातृभूतान्यभिषवद्वारेण येषां ते सप्तमातरः सोमाः । ... छन्दोभिरभिषुतैः सोमैः सम्बद्धाः Sk.
२. ०रौ P. D.
३. स्यन्दनात् सिन्धवः सोमा उच्यन्ते Sk.
४. बहुकृत्वः Sk.
५. त्रयमिति D.
६. ०न आ० P. यथोक्तजलयुक्तस्य सोमस्याधारभूताः कूपसदृशास्त्रयस्त्रिसंख्याका द्रोणकलशाधवनीयपूतभृदाख्या निष्पन्ना इति शेषः Sy.
७. तृयः M.
८. युष्मदर्थं कृताः । सामर्थ्यादस्माभिः Sk.
९. द्रोणकलश द्रोणकलशः P. बहुकृत्वोऽस्माभिर्युष्मदर्थं सर्वैः छन्दोभिरभिषुतानां सोमानां पूर्णा आहावस्थानीयाः पूतभृद्धवनीयद्रोणकलशास्त्रयोऽप्युपकल्पिता इत्यर्थः Sk.
१०. पुत्रभृ० M.
११. पुरोडाशादिविभागेन त्रेधा हविष्कृतम् Sk.
१२. देवी दीः P. त्रिभ्यः पृथिव्यादिलोकेभ्य ऊर्ध्वं गच्छन्तौ Sy. पृथिवीशब्देनात्र साहचर्यात् सर्वे लोका उच्यन्ते। उपरीत्येतद्दिव इत्येतेन सम्बध्यते Sk.
१३. दिवो नाकं द्युलोकसम्बन्धिनमादित्यम् Sy. यौ युवां त्रीनपि लोकानुपरि द्युलोकस्य प्रवा गन्तारौ तौ नाकं स्वर्गं स्वव्यापारेण रक्षेथे Sk.
१४. ०रात्रै P.
१५. हितमुपकारकं सर्वप्रजानाम् Sk.
१६. त्रि P.
१७. ०श्चते वर्त० M. त्रिसंख्याकैरश्रिभिरुपेतस्य Sy.
१८. ०का P. सारथिस्थानं बन्धुर उच्यते Sk.
१९. ०टः M.
२०. सनीठ्ठ P. नीडं गृहसदृशं रथस्योपर्य्युपवेशस्थानम् । तेन सह वर्तन्त इति सनीडाः । ते काष्ठविशेषा वन्धुरो नीडबन्धनाधारभूताः Sy. समानस्थानाः । एकस्मिन्नेव प्रदेशे स्थिताः । मनुष्यस्य शकटस्येव भिन्नप्रदेशवर्तिन इत्यर्थः Sk.

एकस्मिन् रथे फलकाः[१] सङ्घटिताः। कदा च। योगो[२] रथे युवयोः[३]। बलवतः[४]। रासभस्य[५]। येन[६] रासभेन। नासत्यौ! वज्रम्[७]। उपगच्छथः[८]।

**आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः।**
**युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति ॥१०॥**

आ[९] नासत्या। आगच्छतम्। नासत्यौ! हूयते। हविस्तम्[१०]। सोमम्[११]। पिबतम्। सोमपैः[१२]। आस्यैर्बहुवचने[१०] न तात्पर्यमस्ति यद्वा बहूनि भवन्ति देवशरीराणि। युवयोः। हि[१३]। रथम्। उदकवन्तम्[१४]। उषसः[१५]। पूर्वमपररात्र एव[१६]। सविता[१७]। दिवसकरणाय[१८]। इच्छति[१९]। चित्रम्[२०]। प्रेरयति[२१] चेति[२२]।

---

१. फलके M. २. योगे M.
३. ०यो D.
४. वेगवतः Sk.
५. युष्मदीयाश्वस्य। कदा युष्मदीयोऽश्वो रथे नियोक्ष्यत इत्यर्थः Sk.
६. येन चक्रत्रयनीडकाष्ठत्रयरासभयोजनसहितेन रथेन ... प्राप्नुथः Sy.
७. यज्ञमस्मदीयं यागस्थानम् Sy. यज्ञम् Sk.
८. किमसन्निहितानि वां गमनसाधनानि येन नागच्छथ इत्येवमागमनविलम्बनादुपालम्भोऽयम् Sk.
९. आस P.
१०. सोमलक्षणम् ... व्यत्ययेनेदं बहुवचनम्। मधुपाभ्यामास्याभ्याम् Sk.
११. मधुरद्रव्याणि हवींषि Sy. आगत्य मध्वो मधुस्वादमिदं मधुस्वादस्य वाऽस्यैकदेशं स्वांशलक्षणम् Sk.
१२. (प्रेरयति चेति) सोमपैः P. मधुरद्रव्यपानयुक्तैः Sy.
१३. हिशब्दो यस्मादर्थे Sk.
१४. उदकं तमुदकन्तम् P. उदकं उदकन्तम् D. उदकं तम् M. अक्षाञ्जनसाधनेन घृतेनोपेतम्। उषःकालात्पुरा Sy.
१५. उषसश्च स्वभूतं रथम् Sk.
१६. क्रियाविशेषणमेतद्। अन्याभ्यो देवताभ्यः प्रथमम् Sk.
१७. यजमाननामधेयमेतच्छाकपूणिना पठितम्। सर्वस्य यज्ञस्य प्रसविताऽभ्यनुज्ञाता यजमानः Sk.
१८. अस्मद्यज्ञार्थम् Sy. ऋताय ... यज्ञं प्रति गमनाय Sk.
१९. ०वसे करयोच्छतिः P. सवितर्दिवसेकर० D. सवितेव दि० M. यजमानो यस्माद्युष्मदीयमौषसं च रथं पूर्वमिच्छति तस्मादागच्छतमित्यर्थः। अथवा सविता प्रकाशद्वारेण सर्वस्य प्रसुवन् सूर्य उच्यते। उषस इत्येतच्च ऋतायेत्येतेन सम्बध्यते। इष्यतीत्यपि भूतकाले लट्व्यत्ययेन द्रष्टव्यः। यस्माद् युवयोः स्वभूतं रथं पूर्वमतीते काले सविता सर्वस्य प्रसविता सूर्यो दुहितुरुषस ऋताय गमनायेष्यतीष्टवान् प्रार्थितवान्। तदेतत् Sk.
२०. मित्रं D. विचित्रं पूजनीयं वा Sk.
२१. प्रर० P.
२२. वेति M.

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥११॥

आ नासत्या। आयातम्। नासत्यौ! त्रयस्त्रिंशद्भिः[1]। देवैः। इह[2]। पातव्यं[3] सोमम्। आयुश्च। प्रवर्धयतम्[4]। पापानि च। विनाशयतम्[5]। द्वेष्टृंश्च[6]। निषेधतम्[7]। भवतं च। सहभूताव-स्माभिः[8]।

आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं वहतं सुवीरम् ।
शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ ॥१२॥

आ नो अश्विना। आवहतम्। अश्विनौ[10]! त्रिवृता। रथेन। अस्मभ्यम्। इतोमुखम्[11]। सुवीरम्[12]। रयिम्[13]। शृण्वन्तौ[14]। वामहम्। रक्षणार्थम्[15]। भृशमाह्वयामि। वृद्धचर्थम्। च। अस्माकम्। भवतम्। युद्धे[16][17]।

---

१. त्रयस्त्रि P.

२. अस्मिन् देवयजनदेशे Sy. यज्ञे Sk.

३. यातव्यं D. मधुस्वादं च पानार्हं च सोमलक्षणं हविस्तत् प्रत्यायातम् Sk.

४. ०यत M.

५. निःशेषेण शोधयतम् Sy. निःशोधयतम्। सर्वाण्यपनयतमित्यर्थः। Sk.

६. द्वष्टृंश्च D. द्वेष्यं वाऽस्माकम् Sk.

७. सेधतिरत्र सामर्थ्याद् वधार्थः। हतम्।... अथवा सेधतिर्गतिकर्मा।... शुद्धोऽपि च सोपसर्गार्थो द्रष्टव्यः। यत्किञ्च द्वेष्टृ द्वेष्यं वास्माकं तत्सर्वमपगमयतमित्यर्थः Sk.

८. सहभुवावेकस्थानवर्तिनौ नित्यमस्मदीयेषु यज्ञेष्वागच्छतमित्यर्थः Sk.

९. The passage beginning with देवैः and ending with सहभूता-वस्माभिः is omitted by P.

१०. ०ना D.

११. अस्मदभिमुखम् Sk.

१२. शोभनैर्वीरैरुपेतम् Sk.

१३. रयीं D.

१४. गृण्वन्तौ D. नित्यमस्मदीयमाह्वानम् Sk.

१५. तर्पणाय पालनाय वा Sk.

१६. नित्यं चास्मान् सङ्ग्रामेषु जयलक्षणया वृद्धया वर्धयतमित्यर्थः Sk.

१७. This stanza is omitted by P. Ms. D. puts the figure ॥३४॥ here to indicate the end of the thirtyfourth hymn. No such number is given in P. and D.

I.35.

**ह्वया॒म्य॒ग्निं प्र॑थ॒मं स्व॒स्तये॒ ह्वया॑मि मि॒त्रावरु॑णावि॒हाव॑से ।**
**ह्वया॑मि॒ रात्रीं॒ जग॑तो नि॒वेश॑नीं॒ ह्वया॑मि दे॒वं स॑वि॒तार॑मू॒तये॑ ॥१॥**

ह्वयाम्यग्निम् । ह्वयामि । अग्निम्[1] । मुख्यम्[2] । अविनाशाय[3] । ह्वयामि । मित्रावरुणौ[4] । इह । रक्षणाय । ह्वयामि[5] । रात्रिम्[6] । जङ्गमस्य[7] । निवेशयित्रीम्[8] । ह्वयामि । देवम् । सवितारम् । रक्षणाय ।

**आ कृ॒ष्णेन॒ रज॑सा॒ वर्त॑मानो निवे॒शय॑न्न॒मृतं॒ मर्त्यं॑ च ।**
**हि॒र॒ण्यये॑न सवि॒ता रथे॒ना दे॒वो या॑ति॒ भुव॑नानि॒ पश्य॑न् ॥२॥**

आ कृष्णेन । कृष्णवर्णेन । रजसा[9] द्युलोकेन । वर्तमानः[10] । निवेशयन्[11] । देवान्[12] । मर्त्यान्[12][13] । च । हिरण्मयेन । सविता । रथेन । देवः । आयाति[14] । सर्वाणि[15] भुवनानि[16] । पश्यन्[17] ।

---

१. अग्नि P. M.

२. आदौ Sy.
क्रियाविशेषणं वा प्रथमशब्दः । अन्याभ्यो देवताभ्यः प्रथममग्रम् Sk.

३. ०नाशाना P.

४. ०णाविहार० P. D. ०णविहार० M.

५. ह्वयामि ह्वयामि P.

६. रात्रीं D.

७. जगमस्य D.

८. वैशयित्रीं P. स्वापकरीम् Sk.

९. तमसा वा रात्र्या वा व्याप्ते जगति Sk.

१०. ०मानतो P.
वर्तत इति गतिकर्मा । . . . हेतौ शानच् । आगमेनात्मीयेन हेतुना Sk.

११. ०शय P.
शुद्धोऽप्ययं निविशिरभिपूर्वार्थो द्रष्टव्यः । व्यापारेष्वभिनिवेशाद् यत्नेन व्यापारयन्नित्यर्थः Sk.

१२. देवं. . .मनुष्यञ्च. . .यद्वा । अमृतं मरणरहितं प्राणं, मर्त्यं मरणसहितं शरीरञ्च निवेशयन् Sy.
उदिते हि सवितरि सर्वः स्वव्यापारे प्रवर्तते । अत एवमुच्यते—आवर्तमानो निवेशयन्नमृतं मर्त्यं चेति Sk.

१३. मनुष्यान् M.

१४. आयति D.

१५. सतानि P.

१६. भूतानि Sk.

१७. कृताकृतप्रत्यवेक्षणार्थं पश्यन् । अथवा निवेशयन्निति निवेशः स्वाप एवाभिप्रेतः । कृष्णेन रजसा इत्येतच्च निवेशयन्नित्येतेन सम्बध्यते । सप्तम्यर्थे चात्र तृतीया । आवर्तमानो निवेशयन्निति तु हेतुमद्भावे । एवं योजना । कृष्णायां रात्रौ निवेशयन् स्वापयन् अमृतं मर्त्यं चावर्तमानश्च । कदा सामर्थ्यादहनि । हिरण्ययेन सविता रथेन आ देवो याति । क्व याति ? सामर्थ्याद् रात्रौ । निवेशयन्नमृतं मर्त्यं चोदयगिरिं प्रत्यायाति । उत्तरकुरुस्थानि भूतानि पश्यन् अहनि । पृथिवीं प्रत्यायाति तत्रस्थानि भूतानि पश्यन् Sk.

याति॑ दे॒वः प्र॒वता॒ यात्यु॒द्वता॒ याति॑ शु॒भ्राभ्यां॑ यज॒तो हरि॑भ्याम् ।
आ दे॒वो या॑ति सवि॒ता प॑रा॒वतोऽप॒ विश्वा॑ दुरि॒ता बाध॑मानः ॥३॥

याति देवः[1]। याति। देवः[2]। प्रवणेन[3] मार्गेण प्रातः। यात्यनन्तरम्[4]। उन्नतेन[5]। याति। शोभनाभ्याम्[6]। अश्वाभ्याम्। यष्टव्यः[7]। आयाति। देवः[8]। सविता। दूरात्[9]। अपबाधमानः[10]। विश्वानि। दुरितानि।

अ॒भीवृ॑तं॒ कृश॑नैर्वि॒श्वरू॑पं॒ हिर॑ण्यशम्यं यज॒तो बृ॒हन्त॑म् ।
आस्था॒द्रथं॑ सवि॒ता चि॒त्रभा॑नुः कृ॒ष्णा रजां॑सि॒ तवि॑षीं॒ दधा॑नः ॥४॥

अभीवृतम्[11]। परिवृतम्[12]। हिरण्यैः[13]। नानारूपम्[14]। हिरण्मयशम्यम्[15]। यष्टव्यः[16]। महान्तम् रथम्। आस्थितः। सविता। चित्रदीप्तिः[17]। कृष्णानि[18]। तेजांसि[19][18]। बलं[20] च। दधानः[21]।

वि जना॒ञ्छ्या॒वाः शि॑ति॒पादो॑ अख्य॒न्रथं॒ हिर॑ण्यप्रउगं॒ वह॑न्तः ।
शश्व॒द्विशः॑ सवि॒तुर्दै॒व्य॑स्यो॒पस्थे॒ विश्वा॒ भुव॑नानि तस्थुः ॥५॥

वि जनान्[22]। व्यख्यन्[23]। जनान्[24]। श्यामवर्णाः[25]। श्वेतपादाः[26]। हिरण्मयप्रउगम्[27]। रथम्।

---

१. देवाः D. २. याति देवः omitted by P. and D. ३. शीघ्रयायिना . . . रथेन Sk. ४. यत्य० P.
५. ऊर्ध्वगामिना। केन? रथेनैव Sk.
६. श्वेताभ्याम् Sy. ७. ०व्या P.
८. यत्र यथा गन्तव्यं शीघ्रं वोढ्वं वा रथेन वाश्वैर्वा तत्र तथा गच्छतीत्यर्थः Sk.
९. उदयगिरेः Sk. १०. अवबा० D. अपञ्चाधमानः M. सविता बाधते। रश्मिसंस्पर्शस्य शुचिकरत्वादहनि च पापनिवृत्त्यर्थं प्रायश्चित्तानुष्ठानम् Sk.
११. अभिवृत्तं P. अभिवृतं D.
१२. पर० M. परिवृत्तं P. अभितो वर्तमानम् Sy. सुवर्णखचितमित्यर्थः Sk.
१३. ०ण्यै D.
१४. सर्वरूपम् Sk. १५. हिरण्यशम्यम्। अश्वानां स्कन्धेषु रथयोजनवेलायां नियन्तुं प्रक्षेप्यमाणाः शङ्कवः शम्यास्ताः सुवर्णमय्यो रथे वर्तन्ते Sy. वोढुरश्वस्यानडुहो वानपगमार्थं या निधीयते सा शम्येति प्रसिद्धा। सा हिरण्मयी यस्य तं हिरण्यशम्यम् Sk.
१६. यागार्हम् Sk.
१७. विचित्रदीप्तिर्वा पूजनीयदीप्तिर्वा Sk.
१८. अन्धकारयुक्ततया कृष्णवर्णान् लोकानुद्दिश्य . . . तविषीं बलं स्वकीयं प्रकाशरूपम् Sy.
१९. ते तेषांसि P. ते तेजांसि D.
२०. तृतीयार्थे चात्र द्वितीया। स्वेन तेजोबलेन दधानो धारयन्निरुन्धन् इत्यर्थः Sk.
२१. बल द्वा दधाना P. २२. विजानन् P.
२३. व्यन् D. व्यख्यं M. विशेषेण प्रकाशितवन्त इत्यर्थः Sy. विविधं प्रकाशयन्ति Sk. २४. जनां P.
२५. ०र्णा P. D. M. श्यावा एतन्नामकाः सूर्याश्वाः Sy. २६. शितिपादः श्वेतैः पादैरुपेताः . . . शितयः श्वेतवर्णाः पादा येषां ते शितिपादाः Sy. २७. रथस्य मुखम् ईषयोरग्रं युगबन्धनस्थानं प्रउगमित्युच्यते। तच्चात्र सुवर्णमयम् Sy. यत्र रथो निबध्यते स प्रदेशः प्रउग उच्यते। स हिरण्मयो यस्य तम् Sk.

वहन्तोऽश्वाः[1] । सदा[2] । सवितुः[3] । दिवि भवस्य । उपस्थे[4] । विशो[5] व्याप्ता दिशः[6] । तिष्ठन्ति[7] । सर्वाणि[8] च । भुवनानि ।

तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् ।
आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ॥६॥

तिस्रो द्यावः[9] । तिस्रः । द्यावः सन्ति तत्र । द्वे सवितुः । उपस्थे[10] भवत उत्सङ्गेऽस्थ । अपरा । यमस्याग्नेः[11] । भुवने । विराजते[12] वैद्युतस्य । चक्रनिर्गमननिरोधार्थमाणि[13] रथाक्षान्ते निहितम् । रथाङ्गानि च । अमृतानि[14] । कञ्चन[15] । अधितिष्ठन्ति[16] । यः । तत् । जानाति[17] सः । इह[18] तत् । ब्रवीतु ।

---

१. वनन्तो श्वाः P. वहन्तौ श्वाः M.
२. बहवो नित्यं वा Sk.
३. पितुः M. प्रेरकस्य सूर्यस्य Sy.
४. समीपस्थाने Sy. उपस्थाने Sk.
५. प्रजाः Sy. ६. दिशि M.
७. सर्वे च लोकाः प्रकाशाय सूर्यसमीपे तस्थुः Sy. बहवो मनुष्याः सर्वाणि च भूतजातानि सवितारमुपतिष्ठन्ते इत्यर्थः Sk. ८. सवाणि D.
९. तिस्रः । द्यावः omitted by M. स्वर्गोपलक्षिताः प्रकाशमाना लोकाः Sy. द्युशब्दोऽत्र दिवोऽवयवेषु देवस्थानेषु वर्तते । त्रीणि दिवोऽवयवभूतानि स्थानानि सवितुः । अथवा स्वत एव दर्शनाद् दिवां बहुत्वं प्रतिपत्तव्यम् । तिस्रो दिवः सवितुः स्वभूताः Sk.
१०. उपना M. समीपस्थाने वर्तेते द्युलोकभूलोकयोः सूर्येण प्रकाशितत्वात् Sy. समीपे Sk.
११. ०ग्ने D. एका मध्यमा भूमिरन्तरिक्षलोकः . . . पितृपतेर्गृहे Sy.
१२. पिरजते P. विरान् गन्तॄन् सहते । प्रेताः पुरुषा अन्तरिक्षमार्गेण यमलोके गच्छन्तीत्यर्थः Sy. अथवा विराषाडिति विपूर्वस्य राजतेर्दीप्त्यर्थस्येदं रूपम् । विविधं दीप्ता । अथवा द्युसाहचर्यात् त्रयो लोका अत्र तिस्रो दिव इष्यन्ते । तासां द्वे समीपे द्यौरन्तरिक्षं च । एका तु पृथिवी यमस्य भुवने । अग्निरत्र यम उच्यते । . . . तस्य स्वभूते पार्थिवे लोके विराषाड् विविधं स्वदीप्त्या दीप्ता Sk.
१३. ०मनोनिरो० P. रथाद्बहिरक्षच्छिद्रे प्रक्षिप्तः कीलविशेष आणिरित्युच्यते । रथसम्बन्धिनमाणिमधिगम्य यथा रथस्तिष्ठति Sy. चक्रस्याक्षान्निर्गमननिरोधार्थः कील आणिरुच्यते । रथे भवो रथ्यः । यथा रथ्यमाणिं सर्वाणि रथाङ्गान्याश्रितानि Sk.
१४. अमृतानि चन्द्रनक्षत्रादीनि ज्योतींषि जलानि वा . . . सवितारमधिगम्य स्थितानि Sy.
एवं सवितारम् अमृता । अमृतमित्युदकनाम । रश्म्याहृतान्युदकानि । अथवाऽमृतशब्दो देववचनः । प्रथमाबहुवचनस्यायमाकारः । अमृता देवाः Sk.
१५. The passage beginning with भवत and ending with कञ्चन is omitted by M.
१६. अधिष्ठितवन्तः । आश्रिता इत्यर्थः Sk.
१७. यस्तजोनाति P.
१८. ह P. केनापि वक्तुमशक्यः सवितुर्महिमेत्यर्थः Sy. लोके Sk.

अग्निना सवित्रा चोभयतः[१] स्थिताभ्यामाणिभ्यामिव तिस्रो द्यावो[२] ध्रियन्ते विनष्टा[३] इति यद्वा सर्वेषाममरणानि सवितरि[४] तिष्ठन्तीति तत् सविता वोऽमृतत्वमासुवदिति[५] मन्त्रः[६]।

**वि सु॒प॒र्णो अ॒न्तरि॑क्षाण्यख्यद्गभी॒रवे॑पा॒ असु॑रः सुनी॒थः ।**
**क्वे॒३॑दानीं॒ सूर्यः॒ कश्चि॑केत कत॒मां द्यां र॒श्मिर॒स्या त॑तान ॥७॥**

वि सुपर्णः[८]। व्यख्यत्[७]। शोभनपतनः। अन्तरिक्षाणि[९] त्रीणि। गम्भीरवेगः[१०]। प्राज्ञः[११]। प्रशस्यः[१२] सः[१३]। इदानीम्[१४]। सविता सुवीर्यः[१५]। क्व भवति रात्रौ। कश्चैनम्। जानाति। कतमां[१६] च। द्याम्[१७]। अस्य। रश्मिः। आततानेति[१८] रात्रौ पृच्छति।

**अ॒ष्टौ व्य॑ख्यत्क॒कुभः॑ पृथि॒व्यास्त्री धन्व॒ योज॑ना स॒प्त सिन्धू॑न् ।**
**हि॒र॒ण्या॒क्षः स॑वि॒ता दे॒व आगा॒द्दध॒द्रत्ना॑ दा॒शुषे॒ वार्या॑णि ॥८॥**

**अष्टौ व्यख्यत्।** अष्टौ[१९]। दिशः। व्यख्यत्। अन्तरिक्षसम्बन्धीनि[२०]। त्रीणि च[२१]। अन्तरिक्षाणि।

---

१. चोभयताभ्यां आणि० P.
२. घ्यापो M. ३. विष्टा P.
४. सवितुरिति M. ५. वोम्यतंत्व० M.
६. V. Mādhava ignores उ
७. विशेषेण ख्यापितवान् Sy. विविधं प्रकाशितवान् Sk.
८. सूर्यस्य रश्मिः। 'सुपर्णा इति पञ्चदश रश्मिनामानि' इति तन्नामसु पठितत्वात् Sy. सुगमनः सविता। अथवा सुपर्ण इति रश्मिनाम।... सुपर्णवान् रश्मिमान् Sk. ९. अन्तरिक्षोपलक्षितानि लोकत्रयस्थानानि Sy. अन्तरिक्षावयवा अत्रान्तरिक्षशब्देनोच्यन्ते। बहून्येव वाऽन्तरिक्षाणि। अन्तरिक्षसाहचर्याद्वा त्रयोऽपि लोका अन्तरिक्षाण्युच्यन्ते Sk.
१०. ०वेशः P. गम्भीरकम्पनः। रश्मेः प्रकम्पनं चलनं केनापि द्रष्टुमशक्यमित्यर्थः Sy. गभीरकर्मा Sk. ११. असुरः सर्वेषां प्राणदः... अस्यति शत्रून् इत्यसुरः... यद्वा असून् प्राणान् राति ददातीत्यसुरः Sy. १२. सुनयनः शोभनप्रापणः। मार्गप्रकाशनेनाभीष्टदेशं प्रापयतीत्यर्थः Sy.
१३. प्रशस्तः P. अनयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ। इदानीमिति च रात्र्यभिप्रायमेतत्। यो दिवान्तरिक्षाणि व्यख्यत् स क्व इदानीं रात्रौ Sk. १४. इनीं P. १५. सुवीरः P.
१६. कमां P. १७. दिवोऽवयवं द्युलोकमेव वा Sk. १८. प्रकाशयति। अथवा द्यामिति द्वितीयानिर्देशात् कर्मप्रवचनीयशब्दाध्याहारः। कतमां द्यां प्रति रश्मिरस्य...आत्मानं विस्तारयति Sk.
१९. चतस्रो दिशः। चतस्रोऽवान्तरदिशः। ता एताः Sk.
२०. ०न्धिनी M. धन्वेत्यन्तरिक्षनाम। अत एव च दर्शनादन्तरिक्षाणां त्रित्वं प्रतिवक्तव्यम्। तदवयवेषु वाऽऽद्यमध्यान्तेषु धन्वशब्दो वर्तते। साहचर्याद्वा त्रयो लोकास्त्रीणि धन्वान्युच्यन्ते Sk.
२१. त्री च M.

कार्येष्ववकाशप्रदानेन[1] योजकानि । सप्त च । सिन्धून्[2] । हिरण्मयाक्षः[3] । सविता । देवः । आगात्[4] । प्रयच्छन् । रत्नानि । वरणीयानि[5] । यजमानाय ।

**हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते ।**
**अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ॥९॥**

हिरण्यपाणिः । हिरण्मयपाणिः[6] । सविता[7] जगतः[8] । विद्रष्टा[9] । द्यावापृथिव्योः । उभयोः[10] । मध्येन । गच्छति । अपबाधते[11] च । रक्षः[12] । सूर्यं[13] च । प्राप्नोति[14] । कृष्णेन । तेजसा[15] सूर्ये च । द्युलोकम् । विध्यति[16] ।

**हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ् ।**
**अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥१०॥**

हिरण्यहस्तः । हिरण्यहस्तः । बली[17] । प्रशस्यः । सुखयिता । धनवान्[18] सविता । अभिमुख[19]-

---

१. काष्वेवका० P. प्राणिनः स्वस्वभोगेन योजयितॄन् Sy.
२. योजना सप्त सिन्धून् । नदीनामैतत् । शोणाद्यान्महतः प्रभूतान्नदान् । अथवा सप्तसंख्यायोगात् सिन्धवोऽत्र रश्मय उच्यन्ते । तृतीयार्थे द्वितीया । सप्तभी रश्मिभिर्व्यस्यदित्यर्थः Sk.
३. परोर्धर्चो भिन्नमेव वाक्यं यत्तच्छब्दावध्याहृत्यैकवाक्यतां नेयः । यो व्यस्यत् ककुभः स हिरण्याक्षो हिरण्मये एव हिरण्यसदृशे वाऽक्षिणी यस्य स हिरण्याक्षः Sk.
४. उदित इत्यर्थः Sk.
५. उत्कृष्टानि Sk.
६. हिरण्मयापाणिः P. Omitted by M. सुवर्णमयहस्तयुक्तः । यद्वा यजमानेभ्यो दातुं हिरण्यं हस्ते धृतवान् Sy. हिरण्मयौ पाणी यस्य स हिरण्यपाणिः Sk.
७. सभृता P.
८. कृताकृतस्य Sk.
९. विन्द्रद्रष्टो वा P. D. अपि द्रष्टो M. विविधदर्शनयुक्तः Sy.
१०. Omitted by D. उभयेनाम् M. मध्ये स्थित उभे अपि द्यावापृथिव्यौ ज्योतिषा व्याप्नोतीत्यर्थः Sk.
११. अवबा० M.
१२. रोगादिबाधाम् Sy. अमीवा हिंसिता शत्रुर्यजमानस्य । तमो वा प्रकाशस्य हिंसितृत्वात् । तमपबाधते Sk.
१३. प्रथमार्थे द्वितीया । सूर्यः सर्ता सविता । कं प्रति ? सामर्थ्यादस्तपर्वतम् । अथवा सर्तव्यत्वात् सूर्यसम्बन्धाय । सूर्योऽस्तपर्वत इहोच्यते । तं प्रति । अस्तं च गच्छतीत्यर्थः Sk.
१४. वेतिर्गतिकर्माऽयम् । गच्छति च Sk.
१५. तमसा Sk.
१६. सर्वतो व्याप्नोति Sy. अभिगमयति व्यापयतीत्यर्थः Sk.
१७. प्राणदाता Sy. प्रज्ञावान् Sk.
१८. तनावान् M.
१९. भुवभिमुख P. अस्मदभिमुखम् Sk.

इह। आयातु। रक्षसः। हिंसानिधानान्।[१] निषेधन्।[२] उदस्यात्।[३] देवः। प्रतिरात्रम्।[४] अस्माभिः[५] स्तूयमानः।

ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥११॥

ये ते पन्थाः। ये। तव। मार्गाः। चिरन्तनाः।[६] रेणुवर्जिताः। सुष्ठु[७] कृताः। अन्तरिक्षे। तैः।[८] अस्मान्।[८] पथिभिः। सुगमैः। रक्ष।[९] अपिच। अस्मान्।[१०] अधिब्रूहि।[११] पुनर्न इति पूरणम्।[१२]

## I.36.

प्र वो यह्वं पुरूणां विशां देवयतीनाम्।
अग्निं सूक्तेभिर्वचोभिरीमहे यं सीमिदन्य ईळते ॥१॥

प्र वो यह्वम्। कण्वो[१३] घौरः। प्रयाचामहे। बह्वीनाम्।[१४] वः।[१५] देवानिच्छन्तीनाम्। विशाम्।[१६] महान्तम्। अग्निम् वयम्। शोभनवचनैः।[१७] वचोभिः। यमग्नि सर्वे। अपि।

---

१. ०निधाना P. हिंसानिषेधान् M. असुरान् Sy. रक्षसां रक्षःशब्देनैवोक्तत्वाद्विशेषणार्थः क्रियाशब्दोऽयम्। यातुर्हिंसा। तस्यां घातव्याः स्थापयितव्या यातुधानाः। तान् यातुधानान् हिंसार्हानित्यर्थः Sk.

२. निषधन् D. निषेधदन् M. सेधतिरत्र सामर्थ्याद्वधार्थो गत्यर्थो वा ण्यर्थश्च। अपघ्नन् अपगमयन् वा Sk.

३. लोडर्थे लुङ। तिष्ठत्वस्मदीयायां वेद्याम् Sk. ४. अत्र च साहचर्यादहनि वर्तते Sk.

५. प्रतिरत्रवस्मा० P.

६. ०न्तन M. पूर्वसिद्धाः Sy.

७. P. adds सुखाः before सुष्ठु।

८. न इति तादर्थ्ये चतुर्थी। तृतीयानिर्देशाच्च योग्यक्रियाध्याहारः। तैरस्मदर्थमागत्य Sk.

९. अन्यरक्ष M. १०. अस्माकम् M.

११. अधि is omitted by M. अधिवचनमाज्ञापनम्। आज्ञापय च यदाज्ञापयितव्यम् Sk.

१२. V. Mādhava ignores सवितः। अद्य। देव।
Ms. D. puts the figure ॥३५॥ here to indicate the end of the thirtyfifth hymn. No such number is given in P. and M.

१३. कण्ड्वो D. १४. बह्वनां P.

१५. व इति द्वितीयैकवचनस्य स्थाने बहुवचनम् Sk.

१६. वशा P. मनुष्यजातीनाम् Sk.

१७. सूक्तरूपैर्वाक्यैः Sy. सूक्तैः Sk.

अन्येऽभिलषितम्। याचन्ते[1]।

जनासो अग्निं दधिरे सहोवृधं हविष्मन्तो विधेम ते।
स त्वं नो अद्य सुमना इहाविता भवा वाजेषु सन्त्य ॥२॥

जनासो अग्निम्। अग्ने! यं[2] त्वामन्येऽपि। जनाः। असारयन्[3]। बलस्य वर्धयितारं तं वयमपि। हविष्मन्तः[4]। परिचरामः। सः[5]। त्वम्। नः। अद्य। शोभनमनाः[6]। इह। रक्षकः। भव। युद्धेषु[7]। भजनीय[7][8]!

प्र त्वा दूतं वृणीमहे होतारं विश्ववेदसम्।
महस्ते सतो वि चरन्त्यर्चयो दिवि स्पृशन्ति भानवः ॥३॥

प्र त्वा दूतम्। प्रवृणीमहे। त्वाम्[9]। दूतम्[10]। होतारम्। सर्वधनम्[11]। महतः[12]। भवतः[13]। तव। विचरन्ति। अर्चयः। दिवि[14] च। स्पृशन्ति। भासमानाः[15]।

देवासस्त्वा वरुणो मित्रो अर्यमा सं दूतं प्रत्नमिन्धते।
विश्वं सो अग्ने जयति त्वया धनं यस्ते ददाश मर्त्यः ॥४॥

देवासस्त्वा[16]। वरुणादयः। देवाः। त्वाम्[17]। दूतम्[17]। पुराणम्। समिन्धते[18] तथा। यः। तुभ्यं हविः। प्रयच्छति। मनुष्यः[19]। सः। त्वया[20]। विश्वम्[21]। धनम्। जयति[22][23]।

---

१. अथवा सूक्तानां वचसां स्तुतिकारणत्वादीमहे ईळते इत्येतावुभावपि स्तुत्यर्थौ। बह्वीनां मनुष्यजातीनां मध्ये वयं स्तुमः। यमन्येऽपि स्तुवन्तीत्यर्थः Sk.

२. यः D. ३. धृतवन्तः Sy. परिचर्यया धारयन्ति। परिचरन्तीत्यर्थः Sk. ४. भविष्टन्तः M.

५. स त्वं न इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः Sk. ६. अनुग्रहपरः Sk.

७. भजनीञ्च D. अन्नेषु...दानशील Sy.

८. दातः Sk. ९. त्वा P.

१०. दूत M. ११. सर्वज्ञम् Sy.

१२. सुदीप्तस्य सतः Sk.

१३. नित्यं वर्तमानस्य Sy.

१४. दिवीति द्वितीयार्थे सप्तमी। दीप्तयोऽपि दिवं स्पृशन्ति Sk.

१५. ०ना M. त्वदीया रश्मयः Sy.

१६. देवास्त्वां D.

१७. त्वन्दतं P.

१८. तेजसा दीपितवन्तः। देवा अपि त्वां परिचरितवन्तः। न केवला मनुष्या इत्यर्थः Sk. १९. मसह्वः P.

२०. त्वा P. अनुगृह्यमाणः Sk.

२१. बहु Sk.

२२. स्ववशे करोति। लभते इत्यर्थः Sk.

२३. V. Mādhava ignores अग्ने

मन्द्रो होता गृहपतिरग्ने दूतो विशामसि ।
त्वे विश्वा संगतानि व्रता ध्रुवा यानि देवा अकृण्वत ॥५॥

मन्द्रो होता। मादयिता[1]। होता[2]। गृहपतिः। अग्ने! दूतः। मनुष्याणाम्[3]। भवसि। त्वयि[4]। विश्वानि। कर्माणि। ध्रुवाणि। सङ्गतानि[5]। यानि। देवाः पृथक् पृथक्। कुर्वन्ति। वर्षणनियमनोत्क्षेपणादीनि[6] यानि प्रत्येकं[7] देवाः कृण्वन्ति[8] तानि सर्वाणि त्वयि सङ्गतानीति।

त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः ।
स त्वं नो अद्य सुमना उतापरं यक्षि देवान्त्सुवीर्या ॥६॥

त्वे इदग्ने। त्वयि[9]। एव[10]। अग्ने! शोभनधने। युवतम! सर्वदेवार्थम्[11]। हविः। आहूयते। सः। त्वम्। नः। अद्य। सुमनाः[12]। अपिच[13]। अपरांश्च[14]। यज। देवान्। शोभनेन वीर्येण।

तं घेमित्था नमस्विन उप स्वराजमासते ।
होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अति स्रिधः ॥७॥

तं[15] घेम्[16]। तम्[17]। ह। एनम्[18]। इत्थम्[19]। हविष्मन्तः[20]। उपासते[21]। स्वराजम्[22]। वाग्भिः[23]। अग्निम्।

---

१. स्तोता Sk.
२. Omitted by M.
३. यजमानरूपाणां प्रजानाम् Sy.
४. तव Sk. ५. स्तोतृभिर्यष्टृभिश्च सह सख्यानि Sk.
६. वर्षन्निनियमनो० P. ०नियंमनो० M. हविर्विहनादीनि। अग्नेः कर्माणि देवैः कृतानि Sk.
७. प्रत्यकं P. ८. पिबन्ति P.
९. स त्वं न इति तच्छब्दाद् यच्छब्दाध्याहारः। यस्मिन् त्वयि Sk.
१०. इदिति पदपूरणः Sk.
११. बहु सर्वं वा Sk.
१२. अनुग्रहपरः Sk.
१३. अवि D. १४. ०राश्च P. D. M. अपरमिति च सप्तम्यर्थे द्वितीया। अपरस्मिन्नपि काले। अद्य चागामिनि च काले इत्यर्थः Sk.
१५. त M. १६. घे P. घेत् D.
१७. तम् missing in M.
१८. घ ईमिति पदपूरणौ Sk.
१९. सत्यनामैतत्। सत्यम् Sk.
२०. अन्नयुक्ता नमस्कारयुक्ता वा Sy. स्तुतिमन्तः Sk. २१. स्तुतिभिः परिचरन्ति। स्तुवन्तीत्यर्थः Sk.
२२. स्वदीप्तम् Sk.
२३. वाभिः P. D. सप्तभिर्वषट्कर्तृभिः Sy. होत्राभिः। यज्वनामैतत्। स ह्याहुतिलक्षणेषु यागेषु वर्तत आहुतिभिश्च Sk.

मनुष्याः। प्रज्वलयन्ति। अतितरन्तः[1]। शत्रून्[2]।

**घ्नन्तो॑ वृ॒त्रम॑तर॒न्रोद॑सी अ॒प उ॒रु क्षया॑य चक्रिरे।**
**भुव॒त्कण्वे॒ वृषा॑ द्यु॒म्न्याहु॑तः॒ क्रन्द॒दश्वो॒ गवि॑ष्टिषु ॥८॥**

घ्नन्तो वृत्रम्। घ्नन्तः[3]। उपद्रवम्[4]। अतरन्। द्यावापृथिव्यौ[5]। अन्तरिक्षं च। विस्तीर्णम्। निवासाय स्थानम्। कुर्वन्ति[6] स्तोतारोऽग्नेः सोऽग्निरधुना[7]। कण्वे मयि[8]। वर्षिता[9]। भवतु। अन्नवान्[10]। आहुतः[11]। गवामन्वेषणेषु[12]। क्रन्दत्[13]। अश्वो[14] यथा[15] शब्दायमानोऽश्वो गाः साधयति तद्वत् साधयिता।

**सं सी॑दस्व म॒हाँ अ॑सि॒ शोच॑स्व देव॒वीत॑मः।**
**वि धू॒मम॑ग्ने अरु॒षं मि॑येध्य सृ॒ज प्र॑शस्त द॒र्श॒तम् ॥९॥**

सं सीदस्व। संसीदस्व[16]। महान्[17]। असि[17] ज्वालातिशयेन[18]। देवान्[19] प्रति[20] गन्ता। विसृज[21]। धूमम्। अग्ने! आरोचमानम्[22]। यज्ञिय[23]! प्रशस्त! दर्शनीयम्।

---

१. अभितरस्तः P. अभितरन्तः D. अग्निप्रसादादेव निस्तीर्णवन्तः। अथवा . . . हतवन्तः Sk.
२. क्षेपयितॄन् शोषयितॄन् वा। बलवतः शत्रूनित्यर्थः Sk. ३. घ्नन्तम् M.
४. उपद्रवतरं P. D. न पलायमानं वृत्रम् Sk. ५. निस्तीर्णाः . . . अग्नेः स्तोतारो यष्टारश्च Sk. ६. कुर्वन्ती M. अग्निप्रसादात् त्रिष्वपि लोकेषु यथाकामं न्यवसन्नित्यर्थः Sk. ७. ०ग्निः P.
८. षष्ठ्यर्थे सप्तम्येषा। ममापि कण्वस्य Sk
९. कामानां वर्षिता। दातेत्यर्थः Sk.
१०. भवन्त्वन्नानावान् P. भवन् त्वं नवान् M. यशस्वी अन्नवान् धनवान् वेत्यर्थः Sk. ११. अहुतः P. आहूतः D. सर्वतो होमयुक्तश्च Sy. आङ्मर्यादावचनः। मर्यादयाहूतः सन् Sk.
१२. गोविषयेच्छायुक्तेषु संङ्ग्रामेषु Sy. गावः सोमाः। ते यत्रेष्यन्ते देवताभिः। गावो वा याभिरिष्यन्ते यजमानैस्ता गविष्टयः। तासु। यज्ञेष्वित्यर्थः Sk.
१३. क्रन्दन्नाह्वयन् देवान्। . . . अथवा क्रन्दत् इत्याख्यातम्। . . . क्रन्दत् क्रन्दतु। ह्वयतु च देवता यज्ञेष्वित्यर्थः Sk.
१४. न्देदश्वौ P. लुप्तोपमैतद् द्रष्टव्यम्। अश्व इव महता शब्देनेत्यर्थः। अथवा-ऽश्वशब्दोऽत्र क्रियाशब्दः। अष्टा व्याप्ता उच्यते Sk. १५. या M.
१६. अस्मद्वेद्याम् Sk. १७. महांसि P.
१८. दीप्यस्व Sk. १९. गरवान् P.
२०. अतिशयेन देवान् कामयमानः Sy. अतिशयेन देवान् प्रति गन्ता कामयिता वा देवानाम् Sk. २१. विमुञ्च Sk.
२२. ०मानाय D. गमनशीलम् Sy. स्वदीप्त्या दीप्तम्। बहुलमित्यर्थः। अथवा . . . अरुषो गन्ता। दिवं प्रति गन्तारम्। दिवस्पृशमित्यर्थः Sk.
२३. मेधार्ह Sy.

यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन ।
यं कण्वो मेध्यातिथिर्धनस्पृतं यं वृषा यमुपस्तुतः ॥१०॥

यं त्वा देवासः। यम्। त्वा। देवाः[1]। मनवे[2]। निदधुः[3]। अस्मिन्[4] लोके। यष्टृतमम्[5]। हविषां वोढः[6]! यं च। कण्वपुत्रः। मेध्यातिथिः[7]। धनस्य स्प्रष्टारं[8] निदधे[9]। यं च। वृषा[10]। यं च। उपस्तुतः[11]।

यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि ।
तस्य प्रेषो दीदियुस्तमिमा ऋचस्तमग्निं वर्धयामसि ॥११॥

यमग्निम्। यम्। अग्निम्। कण्वपुत्रः। मेध्यातिथिः[12]। यज्ञात्[13]। जनयित्वा[14]। समिन्धे[15]। तदर्थमेतानि[16]। अन्नानि[17]। प्रदीप्यन्ते[18] तथा। तम्। इमाः। ऋचो वर्धयन्ति। तं वयं च। वर्धयामः[19][20][21]।

---

१. देवासः P.

२. अथवा मनुशब्दो मनुष्यपर्यायः। तादर्थ्ये चतुर्थी। . . . यं त्वा . . . मनुष्याणामर्थाय Sk.

३. दधुरित्यपि दार्तिर्निधानार्थः। . . . विनिहितवन्त इत्यर्थः Sk.

४. देवयजनदेशे Sy.

५. यष्टृतमं D.
अतिशयेन पूज्यं यष्टृतमं वा Sy.

६. वोढार् P.

७. ०धाति० M.
अथवा कण्वश्च मेध्यातिथिश्च Sk.

८. स्पृष्टारं D. स्पृष्टार P.
धनेन प्रीणयितारं कृत्वा दधे Sy.
धनस्य पालयितारं धनेन वा प्रीणयितारं यजमानानाम्। दानार्थे वा. . . धनस्य दातारमित्यर्थः Sk.

९. सीदधे P.

१०. वृषेन्द्रः Sy. वृषा नाम ऋषिः Sk.

११. ०स्तुतं P. अन्योऽपिस्तोता Sy.
उपस्तुतो नाम ऋषिः Sk.

१२. अथवा कण्वो मेधातिथिश्च Sk.

१३. आदित्यादध्याहृत्य Sy.
आदित्यादधिगम्य लब्ध्वा। आदित्यादानीयेत्यर्थः Sk.

१४. यज्ञानयित्वा M.

१५. समिधे P. D. M. दीपितवान् Sk.

१६. तस्य सम्बन्धिन्य इषः। अन्नानि Sk.

१७. अन्यानि P. D. M.
गमनस्वभावा रश्मयः Sy.

१८. प्रदिव्यन्ते P. सम्बन्धेन सम्बन्धीन्यन्नानि दीप्यन्ते। तद्वृत्ततया। तेन यानि यष्टृभ्योऽन्नानि दत्तानि तानि न कुतश्चिन्न्यूनानि भवन्तीत्यर्थः Sk.

१९. वयं च तमेवाग्निमन्याभिरपि स्तुतिभिर्वर्धयामसि। स्तूयमाना हि देवता वीर्येण वर्धन्ते। अत एवमुच्यते। तमिमा ऋचो वयं चान्याभिरपि स्तुतिभिर्वर्धयाम इति Sk.

२०. P. adds यन्त्वा देवासः यन्त्वा देवासो मनवे दधुरस्मि after वर्धयामः।

२१. V. Mādhava ignores अग्निम्

रायस्पूर्धि स्वधावोऽस्ति हि तेऽग्ने देवेष्वाप्यम् ।
त्वं वाजस्य श्रुत्यस्य राजसि स नो मृळ महाँ असि ॥१२॥

रायस्पूर्धि[1]। धनेन[2]। पूरय। अन्नवन्[3]! अस्ति। हि[4]। ते। अग्ने! देवेषु धनेश्वरेषु। ज्ञातेयम्[5]। त्वम्[6]। अन्नस्य। श्रोतव्यस्य[7]। ईश्वरो भवसि। सः। अस्मान्। सुखय। महान्। भवसि[8]।

ऊर्ध्व ऊ षु णं ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥१३॥

ऊर्ध्व ऊ षु णः[9]। यथा। सविता सर्वरक्षार्थमूर्ध्वस्तिष्ठत्येवम्[10]। अस्मद्रक्षार्थम्[11]। ऊर्ध्वः[12][13]। तिष्ठ[14]। तथा च सन् भव। अन्नस्य। दाता[15]। यदा[16] वयमाज्येन त्वाम्। अञ्जद्भिः[17]। ऋत्विग्भिः[18]। विविधं हवामहे[19][20]।

१. रायः स्पूर्धि M. रायस्फूद्धि D.
२. धनानि Sy.
धनस्य।... अथवा राय इति द्वितीया-बहुवचनम्। पूर्द्धि इत्यपि याच्ञाकर्म। याच्ञाया चात्र दानं लक्ष्यते। धनानि देहीत्यर्थः Sk.
३. अन्नावन् P.
४. ए M.
हिशब्दो यस्मादर्थे Sk.
५. प्रापणीयं सख्यम् Sy.
देवानां मध्य आप्यं प्राप्तव्यम्। यस्मादस्माभिरर्थिभिर्मनुष्यैर्देवेभ्य आप्तव्यं तद् देवानां मध्ये तवैवास्ति नान्यस्य कस्यचिदित्यर्थः। अथवा आप्यमिति आपिशब्दस्य ज्ञातिवचनस्य भावप्रत्ययान्तस्य रूपम्। यस्मादस्ति तव देवेष्वापित्वं ज्ञातित्वम्। यस्मात्तव देवा ज्ञातयः। ज्ञातित्वाच्च तदीयानि धनानि त्वां ददतमनुमन्यन्ते इत्यर्थः Sk.
६. त्वां P. D.
स नो मृळ इति तच्छब्दाद् यच्छब्दोऽध्याहार्यः। यस्त्वम् Sk.
७. अत्यन्तोत्कृष्टस्य। अथवा श्रुतस्य प्रख्यातस्य Sk.
८. यस्मान्महानसि प्रभावतः। महाप्रभावाश्चाऽऽश्रितानां सुखकरा भवन्ति Sk.
९. उषूणः P. ऊष्मणः D. M.
१०. सर्वदाऽस्माकमूतये पालनायोत्तिष्ठति तद्वत् Sk.
११. ऊर्ध्वं M. १२. ०र्थः P.
१३. ऊर्ध्वं M. D. Omitted by P.
१४. व्याप्रियस्वेत्यर्थः Sk.
१५. सनिर्लाभः। चतुर्थ्याश्चायं टादेशः। अन्नस्यापि लाभायोर्ध्वस्तिष्ठ Sk.
१६. यस्मात् Sk.
१७. ०द्भि D. छन्दांस्यत्राञ्जय उच्यन्ते। तैः Sk.
१८. ऋन्विद्भिः P.
१९. जवामहे P. यज्ञेषु नित्यं विविधं ह्वयामः। यस्मान्नित्यं यज्ञेषु त्वामाहूय यजामहे इत्यर्थः Sk.
२०. V. Mādhava ignores उ। सु

ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह ।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥१४॥

ऊर्ध्वो नः। ऊर्ध्वः[1]। अस्मान्। रक्षसः[2]। निपाहि[3]। तेजसा[4]। विश्वम्। रक्षः[5]। सन्दह। कुरु च। अस्मान्। ऊर्ध्वान्[6]। चरणाय[7]। जीवनाय च। वेदय[8]। देवेषु[9]। अस्माकम्[10]। परिचर्याम्[11]।

पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः ।
पाहि रीषत उत वा जिघांसतो बृहद्भानो यविष्ठ्य ॥१५॥

पाहि नो अग्ने। पाहि। अस्मान्। अग्ने! रक्षसः। पाहि। हिंसितुः। अदातुश्च[12]। पाहि। न्यूनीकर्तुः[13]। अपि। च। ताडयितुः[14]। महादीप्ते! युवतम!

---

१. ऊर्ध्वतयात्र यत्नो लक्ष्यते। ऊर्ध्वो यत्नवान् Sk. २. पापात् Sy.; Sk.

३. निवाहि P. M. न्निपाहि D. नियमेन रक्ष Sk.

४. ज्ञानेन Sy. केतुरिति प्रज्ञानाम। इह तु प्रज्ञानात्मत्वाद् दाहकत्वाद्दाहकरणत्वोपपत्तेश्च ज्योतिषि वर्तते। स्वेन ज्योतिषा Sk.

५. अत्रिशब्दो रक्षोवचनः। अत्तारं राक्षसम् Sk.

६. ऊर्ध्वतयात्र व्यापारसामर्थ्यमविकलशरीरता च लक्ष्यते। अविकलशरीरान् सर्वव्यापारसमर्थान् Sk.

७. अस्मादुर्ध्वाञ्चरक्षणाय P. अस्माकं दूर्ध्वां च० D. अस्मादूर्ध्वं च० M. गमनाय Sk.

८. लम्भय Sy. जानीहि। ज्ञानेन चात्र करणं प्रतिपाद्यते। कुरु Sk.

९. षष्ठ्यर्थे सप्तम्येषा। देवानाम् Sk.

१०. नः। तादर्थ्ये एषा चतुर्थी। अस्माकमर्थाय Sk.

११. धनं हविःस्वरूपम् Sy. परिचर्याः। अस्मदर्थं देवान् परिचरेत्यर्थः। अथवा न इति षष्ठी। अस्माकं या देवानां परिचर्या तां जानीहि। यद्वयं देवान् परिचरामस्तज्जानीहि। ज्ञात्वा चानुरूपं फलं देहीत्यर्थः Sk.

१२. हिंसित्युदातुश्च P. D. हिंसिदातुश्च M. अदातुर्हविषाम। अयागशीलादित्यर्थः Sk.

१३. न्यूदिकर्तुः P. न्यूतीकर्तुः D. न्यूदूकर्तुः M.
हिंसकाद् व्याघ्रादेः सकाशात् Sy. रेषणं हिंसा ताडनलक्षणाऽत्राभिप्रेता। प्रहारैस्ताडयन्तः Sk.

१४. ताढ्ढहयतुः P. ताडयतु D. M. हन्तुमिच्छतः शत्रोः सकाशात् Sy. जिघांसतो हन्तुमिच्छतः Sk.

घनेव विष्वग्वि जह्यराव्णस्तपुर्जम्भ यो अस्मध्रुक् ।
यो मर्त्यः शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत ॥१६॥

**घनेव** । यथा [1]तप्तं [2]लोहपिण्डं [3]कर्मारो [4]घनेन [5]विष्वग् [6]घ्नन्त्येवम् । [7]अदातॄन् । सर्वतः । [8]अधिकं [9]जहि । [10]तापयितृदंष्ट्र ! यो वा । अस्मान् [11]द्रोग्धा । यो वाऽस्मान् । मर्त्यः । आयुधैः । अत्यन्तम् । [12]तनूकरोति । सः । मा । अस्माकम् । रिपुः । [13]ईशिष्ट ।

अग्निर्वव्ने सुवीर्यमग्निः कण्वाय सौभगम् ।
अग्निः प्रावन्मित्रोत मेध्यातिथिमग्निः साता उपस्तुतम् ॥१७॥

**अग्निर्वव्ने**[14] । अग्निः । [15]प्रायच्छत् । [16]सुवीर्यं धनम् । अग्निः । कण्वाय । [17]सुभगत्वम् । अग्निः । [18]प्रावत् । मित्राणि । अपिच । [19]मेध्यातिथिम् । अग्निः । [20]सङ्ग्रामे । [21]उपस्तुतं [22]चावत् ।

अग्निना तुर्वशं यदुं परावत उग्रादेवं हवामहे ।
अग्निर्नयन्नववास्त्वं बृहद्रथं तुर्वीतिं दस्यवे सहः ॥१८॥

**अग्निना** [23]तुर्वशम् । [24]अग्निना सह । दूरात् । तुर्वशम् । यदुम् । उग्रदेवञ्च [25]राजर्षीन् । आह्व-

---

१. तत्स्थं P.
२. यथा कठिनेन दण्डपाषाणादिना भाण्डादिभङ्गं करोति तद्वत् Sy.
३. कार्मारो M.
४. तप्तं लोहं येन हन्यते स घन उच्यते। तृतीयैकवचनस्य चायमाकारः Sk.
५. एवं विष्वक् नानाभूतानपि विजहि Sk.
६. पिष्वन्त्ये० P. विष्वन्त्ये० M. विष्व . . . न्त्येवम् D.
७. अयष्टॄन् इत्यर्थः Sk.
८. ०तोदिकं D. M.
९. ०तोदिक्कण्डहि P. १०. ०दंषु P. तप्यमानरश्मियुक्ताग्ने ! Sy. तीक्ष्णदंष्ट्र ! इत्यर्थः Sk.
११. अथवा योऽस्मध्रुगिति परेण सम्बध्यते । योऽस्मध्रुक् यश्च मर्त्यो मनुष्यः शिशीते Sk.
१२. कर्शयति । येऽस्माकं सहायास्तानायुधैरुच्छिनत्तीत्यर्थः । अथवा अक्तुभिरिति द्वितीयार्थे तृतीया । यश्चाक्तून्यायुधान्यतिशिशीते सुष्ठु निश्यतीत्यर्थः Sk.
१३. मा तस्य वशवर्तितां गमामेत्यर्थः Sk.
१४. व्ने is missing in M.
१५. याचितः Sy. १६. सूषियं P.
१७. सुधनतां दत्तवान् Sk. १८. प्राच M.
१९. मेध्याति० D. मेधाति० M.
२०. संग्र उमे P. सन्यन्ते संभज्यन्ते यत्र धनानि योद्धृभिः सा सातिः सङ्ग्रामोऽत्राभिप्रेतः Sk.
२१. उपस्तुतनामानम् Sk.
२२. चाववत् P. चापत् M.
२३. कुर्वन् D.
२४. परिचर्यातिशयेन तदनुचरतामापन्नम् Sk. २५. राजानम् Sk.

यामः। अग्निः। नववास्त्वादीं[1]स्त्रीन्। अनयत्[2]। उपक्षपयितुः[3]। अ[4]भिभविता।

**नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।**
**दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥१९॥**

**नि त्वामग्ने।** निदधे[5]। त्वाम्। अग्ने! मनुः। अनेकस्मै[6]। जनाय। ज्योतिर्भूतम्[7]। सन्दी-[8]
प्यस्व। कण्वे[9] मयि। यज्ञाज्जातो[10] हविर्भिः। उक्षितः[11]। यं त्वाम्। नमस्यन्ति[12]। मनुष्याः।

**त्वेषासो अग्नेरमवन्तो अर्चयो भीमासो न प्रतीतये ।**
**रक्षस्विनः सदमिद्यातुमावतो विश्वं समत्रिणं दह ॥२०॥**

**त्वेषासः।** दीप्ताः। अग्नेः[13]। बलवन्तः[14]। अर्चयः। भयङ्कराः[15]। न। प्रतिगमनाय[16]। रक्षोभि-[17]
रभिभवितृभिर्युक्तान्[18]। सदा। एव। यातुमावतो[19] यो मत्सदृशस्त्वामुपगच्छति तस्माद्। विश्वम्।
रक्षः[20]। सन्दहेति[21]।

---

१. नवाचास्त्वा० M. नववास्त्वं नामासुरम्।...तुर्वीतिम्। तुर्वि थुर्वि दुर्वि हिंसार्थाः। नववास्त्वं हिंसितवानित्यर्थः। अथवा तुर्वीतिरित्यसुरान्तरस्य नामधेयम् Sk. २. इहानयतु Sy. अग्निर्नयदिति तु नयतिस्सामर्थ्याद्वधार्थः। नववास्त्वं च तुर्वीतिं चाग्निर्हतवानित्यर्थः Sk.

३. द्वितीयार्थे चतुर्थ्येषा। दस्युं शत्रुम् Sk.

४. ०यित्याभि० P. D. ०यित्याभिभवता M. सहस्वन्तं बलवन्तम्। अथवा सहेति तृतीयार्थे द्वितोया। सहसा स्वबलेन नीतवानित्यर्थः Sk. ५. पृथिव्यां निहितवान् Sk. ६. अहेकन्यै P. बहूनां मनुष्याणामर्थाय Sk. ७. ज्योतिष्मन्तम् Sk. ८. सद्दी० M.

९. इयं सप्तमी...यजति Sk. १०. यज्ञाज्ञातो D. अथवा ऋत आदित्यस्ततो जातः। आदित्यादाहृत इत्यर्थः Sk.

११. आहुत्याज्येन सिक्तः Sk.

१२. कर्मार्थं परिचरन्ति Sk.

१३. अग्ने M. १४. आत्मपर्यायममशब्दं व्याचक्षते। आत्मवन्तः। यत्नवन्त इत्यर्थः। अथवा गत्यादिषु। गमनवन्तः। अम रोगे। तमसो रोगवन्तः। तमसो भगवन्त इत्यर्थः Sk.

१५. ०करो ह P. १६. अस्माभिः प्रत्येतुं न शक्या इति शेषः Sy. केनचित्प्रत्यभिभवितुमशक्या इत्यर्थः Sk.

१७. बल्वतः Sy. रक्षोजातिमतः। राक्षसानित्यर्थः Sk. १८. ०र्युक्तार्थः P.

१९. यतु० P. मत्सदृशस्याप्युपरि रक्षोरूपानेवेत्यर्थः। अथवा यातुधानैर्निर्मीयमानत्वाद्यातुमा हिंसा। तद्वतो यातुमावतःSk.

२०. भक्षकमस्मद्बाधकं शत्रुम् Sy. अत्तारम्। ...व्याघ्रादिकं संदह Sk.

२१. Ms. D. puts the figure ॥३६॥ here to indicate the end of the thirtysixth hymn. No such number is given in P. and M.

I.37.

क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम् । कण्वा अभि प्र गायत ॥१॥

क्रीळं वः शर्धः।[1] क्रीळमानम्।[2] यूयम्। मरुताम्।[3] वेगम्।[3] अप्रत्यूतमन्यस्मिन्।[4] रथे यः शोभते तम्।[5] कण्वाः![5] अभिप्रगायत।[6,7]

ये पृषतीभिर्ऋष्टिभिः साकं वाशीभिरञ्जिभिः । अजायन्त स्वभानवः ॥२॥

ये पृषतीभिः। ये। पृषद्वर्णैरश्वैः।[8] ऋष्टिभिश्चांसस्थैः।[9] साकम्। वाशीभिश्च कटाहाकारैरायुधैः।[10] आभरणैश्चाञ्जनसाधनैः सह। प्रादुर्भवन्ति। स्वदीप्तयस्तेषां शर्ध इति।[11]

इहेव शृण्व एषां कशा हस्तेषु यद्वदान् । नि यामञ्चित्रमृञ्जते ॥३॥

इहेव शृण्वे।[12] यदामी गमनप्रारम्भे। हस्तस्थाः।[13] वादयन्ति।[14] अश्वाजनीस्तदानीम्।[15] समीपस्थितानामिव[16] कशानामाहननशब्दः[17] श्रूयते किञ्चैते। गमनप्रारम्भे।[18] प्रसाधनमात्मनः।[19] चित्रम्।[20] कुर्वन्ति।[21]

---

१. क्रीळं वः शर्धः omitted by P.

२. कीलमानम् D. M. क्रीडनस्वभावकम् Sk. ३. मरुत्समूहरूपं...बलम् Sy. मरुतां स्वभूतं मरुत्समूहरूपं वा Sk.

४. अप्रत्युतम० M. भ्रातृव्यरहितम् Sy. ऋ गतौ। अन्यत्राश्रिततया गन्ताऽर्वाऽऽश्रित इत्यर्थः। ततोऽन्योऽनर्वा। तमनर्वाणम्।... अन्यत्रानाश्रितमित्यर्थः Sk.

५. मम कण्वस्य पुत्राः पौत्राश्च Sk.

६. प्रकर्षेणाभिष्टुत Sk. ७. Cf. N.7.2.

८. पृषत्यो बिन्दुयुक्ता मृग्यो मरुद्वाहनभूताः Sy. ९. ऋषिभि० P. D. ऋष्टिश्वांसस्थैः M. 'अंसेषु वा ऋष्टयः' इत्यंसस्थत्वदर्शनात्तळनाः शक्तयो वा ऋष्टय उच्यन्ते। ताभिश्च Sk. १०. ०भिश्चक्रीकटहा० P. ०भिः चक्रीकटा० D. ०भिश्च कटहा० M. वाश्यः शब्दविशेषाः परकीयसेनाभीतिहेतवः Sy.

११. स्वादी० P. अपराश्रयविभूतयः। सर्वोपकरणैस्सहैव ये जाता इत्यर्थः। तेषां शर्धोऽभिप्रगायतेत्येव यच्छब्दश्रुतेः पूर्वयर्चैकवाक्यता परया वा Sk.

१२. इवशब्दः ... पदपूरणः। एवशब्दार्थे वा Sk. १३. एषां मरुतां हस्तेषु स्थिताः कशाः स्वस्ववाहनताडनहेतवो यद्वदान् यद्वदन्ति यं ध्वनिं कुर्वन्ति तं ध्वनिमिहेवात्रेव स्थित्वा ... शृणोमि Sy.

१४. वदन्ति। हस्तैर्गृहीता कशा अश्वानाघ्नन्त्यः शब्दं यदा कुर्वन्तीत्यर्थः Sk.

१५. अश्वाश्वाज० P. अश्वाजिनी० D.

१६. ये पृषत्यादिभिः सहैवाजायन्त तेषामेषामिहैव पृथिव्यामेव शृण्वे। ...लडर्थे च लिट् श्रूयते। किम्? सामर्थ्याच्छब्दम् Sk. १७. शब्दं P. १८. प्रगमन० M. सङ्ग्रामे Sy. यदा च यामन् रथम् Sk.

१९. ऋञ्जतिः प्रसाधनकर्मान्यत्र। इह तु सामर्थ्याद् गत्यर्थः, अन्तर्णीतण्यर्थः। निगमयन्ति नियतेन मार्गेण गमयन्ति। यदाश्वं रथेन वा गच्छन्तीत्यर्थः Sk.

२०. च M. विचित्रं पूज्यं वा Sk.

२१. V. Mādhava ignores नि

**प्र वः शर्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे । देवत्तं ब्रह्म गायत ॥४॥**

प्र वः शर्धाय । प्रगायत[1] । यूयम्[2] । वेगवते[3] । वृक्षादीनां घर्षणं[4] कुर्वते । दीप्तयशसे । बलवते[5] मारुताय । देवदत्तं[6] भाग्यलब्धं[7] देवदत्तम् । ब्रह्म ।

**प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतम् । जम्भे रसस्य वावृधे ॥५॥**

प्र शंस[8] । प्रस्तुहि[9] । गोषु स्थितम्[10] । अहन्तव्यम्[11] । क्रीळमानम्[12] । यत् । शर्धः[13] । मारुतं तत् । रसस्य पयसः । अन्तः । ववृधे[14] । जम्भशब्द उदरवचनः[15] । "पृश्नियै वै पयसो मरुतो जाताः" इति ब्राह्मणम् ।

**को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः । यत्सीमन्तं न धूनुथ ॥६॥**

को वो[16] वर्षिष्ठः । यदा[17] । समीपम्[17] । इव । सर्वमेव[18] परिगृह्य । कम्पयथ तदानीम् । मरुतः! युष्माकम्[19] । कः । वर्षितृतमः[20] । दिवः । च । पृथिव्याः । च । कम्पयितारः ! आकारः पूरणः ।

---

१. प्रशब्दयत । प्रकर्षेणोच्चारयतेत्यर्थः Sk.
२. यूयमस्मत्पुत्रादय ऋत्विजो वा Sk.
३. प्रसहनशीलाय Sy.
बलाय मारुताय Sk.
४. घषणं M.
शत्रुघर्षणयुक्ताय Sy. महते Sk.
५. भगवते P. बलवते बलवते M.
६. देवेभ्यो मरुद्भ्यो दत्तं रक्षितम् । अस्माभिर्मरुदर्थमुपकल्पितमित्यर्थः । अथवा देवदत्तमिति दाते रूपम् । अथवा देवेनेन्द्रेण दत्तमिति । . . . देवेनेन्द्रेण दत्तं देवदत्तं ब्रह्म स्तुतिलक्षणम् Sk.
७. गार्ग्याल्लब्धं M.
८. शंसः M.
९. क्रीळं यदिति यच्छब्दश्रुतेस्तच्छब्दोऽत्राध्याहार्यः । तत्प्रशंस । . . . आत्मन एवायमन्तरात्मनः प्रैषः । प्रकर्षेण स्तुहि हे अन्तरात्मन् Sk.
१०. गोष्विति निमित्ते एषा सप्तमी । प्रयोजनस्य निमित्तत्वेन विवक्षा । गोषु निमित्तभूतासु । गवार्थमित्यर्थः Sk.
११. शत्रुभिर्हन्तुमशक्यम् Sk.
१२. कीलमानं D. M.
१३. शर्ध M.
१४. जम्भतिरत्र सामर्थ्यात् पानार्थः । तृतीयार्थे च सप्तमी । जम्भेन पानेन रसस्य सोमरसस्य वावृधे वीर्येण वर्धते Sk.
१५. ०चन D. १६. पो P. वा M.
१७. यद् यस्मात्कारणात् सीं सर्वतोऽन्तं न वृक्षाग्रमिव Sy.
१८. ०मेवं M.
सीमिति परिग्रहार्थीयः । सर्वं जगत् । अन्तं न अन्तमिव । यथा कश्चिच्छायाया वंशस्य वाऽन्तं धुनुयाद् एवं धूनुथ । भयेन कम्पयथेत्यर्थः Sk.
१९. तस्मात्कारणात् कम्पयितॄणां युष्माकं मध्ये कः प्रबल इति प्रश्नः Sy.
२०. वृद्धतमः कः ? Sy.
वृद्धतमः । न कश्चिदपि वृद्धतमः । सर्वे सवयस्का इत्यर्थः Sk.

**नि वो॒ यामा॑य॒ मानु॑षो द॒ध्र उ॒ग्राय॑ म॒न्यवे॑ । जिही॑त॒ पर्व॑तो गि॒रिः ॥७॥**

नि[1] वो यामाय[1]। निदध्रे[2]। स्थूणादिकम्[3]। युष्माकम्[4]। गमनाय[5]। उद्गूर्णाय[6]। अभिमन्त्रे स्थिरं[7] स्थूणादिकं दृढं निहन्ति। मानुषः[8]। पर्ववान्[9]। गिरिश्च[10]। कम्पते[11]।

**येषा॒मज्मे॑षु पृथि॒वी जु॑जु॒र्वाँइ॑व वि॒श्पतिः॑ । भि॒या यामे॑षु॒ रेज॑ते ॥८॥**

येषामज्मेषु[12]। येषाम्[13]। उत्क्षेपकेषु[14]। गमनेषु[15]। पृथिव्योषधिवनस्पतियुक्ता[16]। जीर्णः[17]। राजेव[18] परबलागमने। कम्पते। भिया पूर्वत्र सम्बन्धः।

---

१. नि वायो मायां M.
२. नियमेन स्वयज्ञे धारयति Sk.
३. Omitted by P. and D.
४. द्वितीयार्थे चतुर्थी...यामं रथं मानुषो मनुष्यो निदध्रे।... अथवा यामशब्दो यागवचनः। स्वार्थ एव च तादर्थ्ये चतुर्थी। युष्माकं यागाय। यूयं यज्ञे यास्यथेत्येवं तु मनुष्यो नियमेन धारयति। किम्? सामर्थ्यात् सोमलक्षणानि हवींषि Sk. ५. उद्गूणाय M. तीव्राय Sy. ६. अदिमन्त्रे P. मन्यवे चालनार्थमभिमन्यमानाय Sy. मन्युर्मन्यतेर्दीप्तिकर्मणः। दीप्तिरिहाभिप्रेता। उग्रायै दीप्त्यै। प्रकृष्टायैश्वर्यायेत्यर्थः Sk. ७. स्थितं P.
८. ०षा P. ९. पर्वतः P. D. बह्ववयवयुक्तः। महानपि सन्नित्यर्थः Sk.
१०. मेघो महीधरो वा। अथवा पर्वतो गिरिरिति समुच्चीयमानार्थौ। एतेन परस्परविशेषणविशेष्यभूतौ। गिरिश्च पर्वतश्च। मेघश्च महीधरश्चेत्यर्थः। अथवैवमन्यथास्या ऋचोऽर्थयोजना। व इति द्वितीयाबहुवचनम्। यन्त्यस्मिन् देवा इति यामो यज्ञः। युष्मान् यज्ञाय मनुष्यो नियमेन धारयति। किञ्चोग्राय मन्यवे जिहीत। मन्युरिति क्रोधनाम। पञ्चम्यर्थे च चतुर्थी। उग्रात् क्रोधाद् गच्छति। उग्रेभ्यः क्रुद्धेभ्यो युष्मद् बिभ्यन्नश्यतीत्यर्थः। कः? पर्वतो गिरिरपि। महान् गिरिः। किमुतान्य इत्यर्थः Sk. ११. गच्छेत् Sy. अन्यत्र गच्छति। युष्मद्भयान्नश्यतीत्यर्थः Sk.
१२. ०मज्मेषं P. ०मज्येषु D. ०मब्जेषु M.
१३. युष्माकम् Sk. १४. गमनेषु Sk.
१५. यामेष्वित्येतत्तु अज्मेष्वित्येतेन सम्बन्धयितव्यः। तृतीयार्थे चात्र सप्तमी। यामै रथैरज्मेष्विति। येषु युष्मासु रथैर्गच्छत्सु कम्प्येते हन्तुं गच्छन्तीत्यजानती पृथिव्यपि भयेन कम्पते। किमुतान्य इत्यर्थः। अथवा येषामित्येतद् भियेत्येतेन सम्बन्धयितव्यः। तत्सम्बन्धे च... पञ्चम्यर्थे षष्ठी। अज्मेष्वित्यप्यज्मशब्दो गृहनाम। अज्मेष्विति यामेष्विति च समुच्चीयमानार्थे एते। सप्तमीनिर्देशाच्च योग्यक्रियाध्याहारः। येभ्यो युष्मदज्मेषु यामेषु गृहेषु च रथेषु व्यवस्थितेभ्यो भिया भयेन पृथिवी रेजते इति। येभ्यः स्वस्थेभ्यश्चासीनेभ्यो युद्धाभिमुखेभ्यश्च भयेन पृथिवी कम्पत इत्यर्थः। तेषाम्। ये मानुष इत्येवं तच्छब्दश्रुतेः पूर्वयर्चैकवाक्यता परया वा Sk.
१६. ०युक्तं P. १७. जीणः M.
१८. पुत्रपौत्रादीनां मनुष्याणां पतिर्विश्पतिः। कुलज्येष्ठोऽत्राभिप्रेतो न राजा। यथा जीर्णोऽत्यन्तं वृद्धो भिया भयेन रेजते कम्पते Sk.

**स्थिरं हि जानमेषां वयो मातुर्निरेतवे । यत्सीमनु द्विता शवः ॥९॥**

स्थिरं हि। स्थिरम्। हि[१]। जन्म। मरुताम्[२]। वयश्च[३]। मातुः। निर्गमनाय[४] न पुनर्जननाय[५] मातरं प्रविशन्ति[६]। यच्चैषाम्[७]। सर्वं जगत्। अनुप्रविशति तत्। बलम्। द्विधा भवति दिवि च पृथिव्यां चेति।

**उदु त्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत । वाश्रा अभिज्ञु यातवे ॥१०॥**

उदु त्ये। उदत्नत[८]—उत्तता[९] अकुर्वन् विस्तीर्णौषधीरकुर्वन्। अमी[१०]। प्रेरयितारः[११]। शब्दायन्तः[१२]। दिशः[१३]। गमनेषु[१४] यदि गच्छन्त्योषधिभिर्विस्तारयन्ति[१५] दिश इति तथा। धेनूश्च[१६]। अभिगतजानुकम्[१७]। यातुम्[१८]अकुर्वन्नोषधि[१९]सद्भावादुत्क्षिप्तपादाश्चरन्ति[२०] धेनव इति[२१]।

---

१. हिशब्दः पदपूरणः Sk.
२. येषामज्मेषु येभ्यो वा भिया पृथिवी रेजते तेषामेषां मरुताम् Sk.
३. पयश्च P. सयश्च M. यौवनलक्षणम्। यथा मनुष्यजाताः शीघ्रमेव म्रियन्तेवृद्धीभवन्ति च न तद्वदेते मरुत इत्यर्थः Sk.
४. मातुरुदरे पुनर्गर्भवासमननुभवितुमित्यर्थः। यो हि म्रियते वृद्धीभवति च तेनावश्यं मातुरुदरे पुनर्गर्भवासोऽनुभवितव्यः Sk.
५. ०र्जन्मनाय P. ६. प्रवशन्ति P.
७. यत्। षष्ठचा अत्र लुक्। येषां सीमनु ...अन्विति लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः। सर्वं प्रति द्विता द्विधा द्विविधमपि सांयौगिकं च हस्त्यश्वादि शरीरं च। शवः बलम्। ये द्विविधेनापि बलेन न कुतश्चिन्न्यूना इत्यर्थः Sk. ८. उदुत्तत P. अतनिषत विस्तारितवन्तः Sy. ऊर्ध्वं विस्तारयन्ति। मेघं प्रति गर्जयन्ति तदीयाश्चापो विक्षिपन्तीत्यर्थः Sk.
९. उक्तता M. १०. पूर्वप्रकृताः Sy. य उक्तगुणाः... ते मरुतः Sk.
११. तारं P. M. वाच उत्पादका मरुतः। वायवो हि ताल्वोष्ठादिषु सञ्चरन्तो वाचमुत्पादयन्ति Sy. सूनवः पुत्राः... पृश्नेर्वा रुद्रस्य वा Sk.
१२. शब्दोऽयन्तः M.
१३. दिशे D. अपः Sy. आपोऽत्र काष्ठा उच्यन्ते। गर्जितलक्षणा वाचः Sk. १४. गमेषु M. तृतीयार्थे सप्तमी। अज्मैरजनैः स्वगमनैः Sk.
१५. न्त्यौषधी० P. ०षधी० M.
१६. उदकं विस्तार्य तत्पानार्थं वाश्रा हम्भारवोपेता गा अभिज्ञु जान्वाभिमुख्यं यथा भवति तथा यातवे गन्तुं प्रेरितवन्त इति शेषः Sy. वाश्रा वाशनशीलाः शब्दकारिणीः। बह्वीरित्यर्थः Sk.
१७. ०गतधेनुकं M. अभिज्ञु। क्रियाविशेषणमेतत्। अभिगतं जानु यस्मिन् उत्तानने तदभिज्ञु। निपात्य जानुम्। महता यत्नेनेत्यर्थः Sk.
१८. यातवे पृथिवीं गन्तुम्। पृथिव्यां पातनायेत्यर्थः Sk.
१९. ०षघी० P. M. २०. प्ताः पादा० P.
२१. V. Mādhava ignores उ

**त्यं चिद्घा दीर्घं पृथुं मिहो नपातममृध्रम् । प्र च्यावयन्ति यामभिः ॥११॥**

त्यं चिद्घ[1]। त्यम्[2]। चित्[3]। खलु[4]। दीर्घम्[5]। विस्तीर्णम्[6]। मेघस्य[6]। पुत्रम्[7]। अमृदुम्[8]। गमनैः। प्रच्यावयन्ति[9] मरुत इति शिलोच्चयाभिप्रायमिति ।

**मरुतो यद्ध वो बलं जनाँ अचुच्यवीतन । गिरीँरचुच्यवीतन ॥१२॥**

मरुतः। मरुतः। यत्। वः[10]। बलं तत्। जनान्। च्यावयति[11] तत्। शिलोच्चयानपि[12]। च्यावयति[13][14]।

**यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना । शृणोति कश्चिदेषाम् ॥१३॥**

यद्ध यान्ति। यदा। खलु। यान्ति। मरुतस्तदानीम्। मार्गेऽमी[15]। सह। शब्दं कुर्वन्ति[16] तं शब्दम्। एषाम्[17]। कः। चिदपि। शृणोति सर्वो जन आगोपालं[18] शृणोति[19]।

---

१. घः D.
२. तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। योऽयं वैद्युतो नामाग्निस्तदपि Sk.
३. चिदित्यप्यर्थेSk.
४. घेति पदपूरणःSk.
५. दीप्ति M.
६. मेघं स्तीर्णस्य P. स्तीर्णं मे० M. सेचनीयस्य जलस्य न पातयितारं, वृष्टिमकुर्वन्तमित्यर्थः Sy.
७. म् M. मेघाद्धि वैद्युतोऽग्निर्जायते। अथवा नपादिति पौत्रस्यैव नाम न पुत्रस्य। तत्रादित्यो मिडुच्यते। सोऽपि हि रश्म्याहृताभिरद्भिर्मध्यमं सिञ्चति। ताभ्यश्चाद्भ्यो मेघो जायते। मेघाद् वैद्युत इत्येवमादित्यपौत्रत्वमस्य Sk.
८. अमृतं P. अम्यदं M. केनाप्यहिंस्यम् Sy. अहिंस्यमहिंसितारं वा साधूनाम्। अथवा मृध्रशब्दो मृदुपर्यायः।...अमृध्रममृदुं तीक्ष्णम्। अथवा मृध्रशब्दो निर्वीर्यवचनः। एवं हि छागलेयिनां श्रुतौ प्रयोगः। "दक्षिणेन हस्तेन देवान् असृजत्। सव्येन नरान्। ते देवा वीर्यवन्तोऽभवन् मृध्रा असुराः" इति। अत्र च वीर्यवत्प्रतियोगित्वेनोपादानान्मृध्रशब्दो निर्वीर्यवचन इति गम्यते। अमृध्रं वीर्यवन्तम् Sk.
९. विद्युतमपि स्वगमनैरेव कुर्वन्तीत्यर्थः Sk.
१०. वा M.
११. ०यन्ति P. D. स्वस्वव्यापारेषु प्रेरयत Sy. स्वराष्ट्रेभ्यश्च्यावितवन्तः Sk.
१२. ०यानिति P. मेघान् Sy. मेघान् पर्वतान् वा Sk.
१३. ०यन्ति D. Omitted by P.
१४. V. Mādhava ignores ह
१५. मार्गेमी M.
१६. यान्तश्च सम्ब्रुवते परस्परेण सम्भाषन्ते Sk.
१७. तदा शृणोति कश्चिदेषां मरुतां सम्भाषणं न सर्वः। यस्यैवैते मरुतः प्रसादवन्तः स एवैतान् गच्छतोऽध्वनि भाषमाणान् शृणोति नापरः Sk.
१८. आ लो (गो) पालं M.
१९. V. Mādhava ignores ह। आ

प्र यात॒ शीभ॑मा॒शुभि॑ः सन्ति॒ कण्वे॑षु॒ वो॒ दुव॑ः। तत्रो॒ षु मा॑दयाध्वै ॥१४॥

प्र यात। उद्युक्ता[1] भवत। क्षिप्रम्। शीघ्रैरश्वैः। सन्ति। कण्वेषु। वः। परिचर्याः[2]। तत्र[3]। सुष्ठु[4]। मदत[5] [6]।

अस्ति॒ हि ष्मा॒ मदा॑य व॒ः स्मसि॑ ष्मा व॒यमे॑षाम्। विश्वं॑ चि॒दायु॑र्जी॒वसे॑ ॥१५॥

अस्ति हि ष्म। अस्ति। हि[7]। मदाय[8]। वोऽस्मासु[9] स्तोत्रं[7] तथा। एषां भवतां स्तोतारः[10]। वयम्। परिपूर्णम्[11]। आयुः[12]। जीवितुम्[13]। भवामः[14] [15]।

I.38.

कद्ध॑ नू॒नं क॑धप्रियः पि॒ता पु॒त्रं न हस्त॑योः। द॒धि॒ध्वे वृ॒क्तब॑र्हिषः ॥१॥

कद्ध[16] नूनम्। सुखम्। पुरा[17]। स्तोत्रप्रीताः[18]! पिता[19]। पुत्रम्। इव। हस्तयोरस्मान्।

---

१. उपयातास्मान् Sk. २. ०र्या D. यस्मादागतान् युष्मान् वयं परिचरिष्याम इत्यर्थः Sk.

३. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहार्यः। योऽस्मदीयो यज्ञो वेदिर्वा तत्र सुष्ठु मादयध्वै।...तर्पयतात्मानम् Sk. ४. सुष P.

५. मेदत P. मदतः M. तृप्ता भवत Sy.

६. V. Mādhava ignores उ

७. अस्माभिः प्रयुज्यमानं हविर्वो विद्यते Sy. हिशब्दो यस्मादर्थे... विद्यामहे वयमपि Sk.

८. मादा M. सोमः।...यस्माद्युष्मन्मदकरणसमर्थः सोमोऽस्तीत्यर्थः Sk.

९. वो is missing in M.

१०. स्तोतासे M. भृत्यभूता वयम् Sy. यस्माद् वयमपि युष्माकं परिचारकाः सोमस्यार्पयितारः स्तुतिभाजश्च विद्यामह इत्यर्थः Sk. ११. विश्वमिति बहुनाम Sk. १२. आयुरित्येतच्चात्रान्ननाम। अन्नमपि बह्वस्तीत्यर्थः Sk.

१३. अस्मज्जीवनार्थम्। यत्सोमेनात्मानं तर्पयित्वा जीवनायास्मभ्यमन्नं दास्यते तदपि बह्वस्तीत्यर्थः Sk.

१४. विद्यामहे खलु Sy.

१५. V. Mādhava ignores स्म। स्म। चित्। Ms. D. puts the figure ॥३७॥ here to indicate the end of the thirtyseventh hymn. No such number is given in P. and M.

१६. कदा खलु Sy. कच्छब्दः कदेत्यस्य पर्यायः। ह नूनमिति पदपूरणौ Sk.

१७. पुरा M. अवश्यम् Sy.

१८. कमुदकं तद् दधाति धारयतीति कधो मेघः। स प्रियो येषां ते कधप्रियाः। व्यत्ययेनैकवचनं द्रष्टव्यम्। अथवा कध आदित्य उदकस्य धारयितृत्वात्। प्रजापतिना वा प्रकाशादचर्थं निहितत्वात्। प्रीञ् तर्पणे। प्रियस्तर्पयिता येषां ते कधप्रियाः। मरुतो हि वर्षासु रश्म्याहृतैरुदकैरादित्येन तर्प्यन्ते। तेषां सम्बोधनं हे कधप्रियाः Sk.

१९. यथा पिता बालकं पुत्रं लालयन् हस्तयोर्धारयत्येवं... धारयन्ते धारयिष्यथ।...कदाऽस्मान् लालयिष्यथेत्यर्थः Sk.

दधिध्वे[1]। यज्ञार्थं[2] छिन्नबर्हिषो मरुतः[3]!

**क्व॑ नू॒नं कद्वो॒ अर्थं॒ गन्ता॑ दि॒वो न पृ॑थि॒व्याः । क्व॑ वो॒ गावो॒ न र॑ण्यन्ति ॥२॥**

**क्व नूनम्**। क्व। सम्प्रति यूयं स्थ। क्व[4]। वः। गमनं भवति। गच्छत[5]। द्युलोकात्। इहागताश्च न गच्छत। पृथिव्याः[6]। क्व। युष्मान्[7]। पशून्[8]। इव। रमयन्ति[9]।

**क्व॑ वः सु॒म्ना नव्यां॑सि॒ मरु॑तः॒ क्व॑ सुवि॒ता । क्वो॒ ३ विश्वा॑नि॒ सौभ॑गा ॥३॥**

**क्व वः सुम्ना**। क्व। वः। सुखानि[10]। नवतराणि। मरुतः! क्व वा। शोभनगमनानि[11] कल्याणानि। अत्र यास्कः—"सुविते सु इते सूते सुगते। प्रजायामिति वा[12]" इति। क्व वा। वः। सर्वाण्येव[13]। सौभगानि[14]।

**यद्यू॒यं पृ॑श्निमातरो॒ मर्ता॑सः॒ स्यात॑न । स्तो॒ता वो॑ अ॒मृतः॑ स्यात् ॥४॥**

**यद्यूयम्**। यद्यपि[15]। यूयम्। पृश्निमातरः[16]। मर्ताः[17]। भवथ तथापि। युष्माकम्। स्तोता।

---

१. रधिध्वे M.
२. सर्वैर्मनुष्यैर्वृक्तमास्तीर्णं बर्हिर्येषां ते वृक्तबर्हिषः। सर्वमनुष्यैः कृतयागा इत्यर्थः Sk.　३. V. Mādhava ignores नूनम्　४. कदा Sy. युष्माकं गमनं क्व कदा वा। यूयं गन्तारः स्थेत्यर्थः Sk.　५. गच्छति M.
६. द्वितीयार्थे षष्ठ्येषा।...द्युलोकान्न पृथिवीम्। एतदुक्तं भवति। स्वस्मिन् स्थाने नूनमसन्निहिता एव स्थ। येनाहूयमाना अपि नागच्छथेति Sk.
७. यूयमिष्टान् M.
८. अश्वा अत्र गाव उच्यन्ते। क्व वो युष्माकं स्वभूता गन्तारोऽश्वा न...रमन्ते। एतदुक्तं भवति सर्वत्रैव रमन्ते। अतोऽस्मत्समीपं किं नागच्छथेति Sk.
९. शब्दयन्ति Sy.　१०. सुखा P. प्रजापशुरूपाणि धनानि Sy. परिचर्यासुखानि Sk.　११. शोभनानि प्राप्याणि मणिमुक्तादीनि भवदीयानि Sy. सुगतानि स्थानानि। यत्र च पुनः पुनर्गम्यते तत्सुगतं भवति। अतोऽनेन गमनौचित्यं प्रतिपाद्यते। क्वान्यत्र भवतामुचितं गमनमित्यर्थः Sk.
१२. N.4.17.　१३. विश्वमिति बहुनाम Sk.　१४. सौभागनि P. सौभाग्यरूपाणि गजाश्वादीनि Sy. भग इति धननाम। शोभनानि धनानि सुभगानि। सुभगान्येव सौभगानि। ...क्व वाऽन्यत्र बहूनि शोभनानि हविर्लक्षणानि धनानि। क्वान्यत्र परिचर्यातिरेके सुखं वौचित्यं वा हविरतिरेको वा येनास्मत्समीपं नागच्छथेति समस्तार्थः Sk.　१५. यदि Sk.
१६. पृश्निवर्णा गौः पृश्निः। सा माता येषां ते पृश्निमातरः... अथवा पृश्निर्गौरित्युभे अपि द्युनामनी। द्यौर्माता येषां ते पृश्निमातरः Sk.　१७. मत्ताः M.

भवति। अमृत[1] इति।

**मा वो॑ मृ॒गो न यव॑से जरि॒ता भू॒दजो॑ष्यः । प॒था य॒मस्य॑ गा॒दुप॑ ॥५॥**

**मा वो मृगः।** मा। भूत्। युष्माकम्। मृगः।[2] इव। यवसे।[3] स्तोता। असेव्यो[4] मा वो गमद्[5] यमस्य पथा न। उपगच्छतु मृतः।[6] वैवस्वतस्य। पथेति।

**मो षु ण॒ः परा॑परा॒ निर्ऋ॑ति॒र्दु॒र्हणा॑ वधीत् । प॒दी॒ष्ट तृष्ण॑या स॒ह ॥६॥**

**मो[7] षु[8] णः।** मा। एव। अस्मान्। अधोऽधः।[9] दुःखेन[10] हन्तव्यम्।[11] दारिद्र्यम्।[12] वधीत्[13] सा[14] निर्ऋतिर्मदीयया। तृष्णया।[15] सह। पततु[16] धनसद्भावे हि तृष्णा विनश्यति।[17]

---

१. अम्यत M. देवः स्यात्। ततः सर्वकामान् युष्माकं समर्धयेदिति वाक्यशेषः। . . . अथवा यदिति वचनात्तत इत्येतत्तृतीय एव पादेऽध्याहर्तव्यः। यदि यूयं मर्तासो मनुष्याः स्यातन ततो युष्माकं प्रसादेन स्तोता वोऽमृतो मरणवर्जितः स्यादिति। एतदुक्तं भवति। यूयं चेन्मनुष्या अभविष्यत, अवश्यमीदृशीभिः स्तुतिभिः प्रासत्स्यत, फलेन (च) स्तोतारं समयोजयिष्यत। देवास्तु भवन्तः। अतो न जानीमः किं यूयं न प्रसत्स्यथ। फलेन वा स्तोतारं न संयोजयिष्यथेति Sk.

२. यथा तृणे भक्षणीये मृगः कदाचिदप्यसेव्यो न भवति किन्तु सर्वदा तृणं भक्षयति तद्वत् Sy. ३. यवसशब्दः सस्यवचनः। सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः। यथा सस्यवतो देशात् सर्वस्य विनाशकरत्वान्मृगः सर्वस्य प्रिय एवं वो जरिता Sk.

४. युष्माकं स्तोता माभूदजोष्योऽप्रियः। कस्य सामर्थ्यात्? सर्वस्य। सर्वस्यैव प्रियोऽस्त्वित्यर्थः। एतत्तावज्जीवतः स्तोतुराशास्यते Sk. ५. वमद् M. यमलोकसम्बन्धिमार्गेण मा. . .गच्छतु। तस्य मरणं मा भूदित्यर्थः Sy. मरणोत्तरकालमपि पथा यमस्य। यम आदित्यस्तस्य यः पन्था देवयानस्तेन . . . उपगच्छतु। देवयानेन पथा स्वर्गलोकमुपगच्छत्वित्यर्थः। अथवा व इत्येतदजोष्य इत्येतेन सम्बध्यते। पथा यमस्येत्यपि यमशब्दो यज्ञवचनः। गादित्यपि मध्यमपुरुषबहुवचनस्य स्थाने प्रथमपुरुषैकवचनम्। मा कदाचिदपि स्तोता युष्माकमप्रियोऽभूत्। किं तर्हि? सर्वदैव यज्ञस्य यो नियतः पन्थास्तेनोपगच्छत स्तोतारमित्यर्थः Sk. ६. म्यतः M.

७. षू M. ८. मो इति निपातसमाहारो निपातान्तरं वा मेत्यस्यार्थे वर्तते Sk.

९. अद्धो० P. मा नोऽस्मान् परापराऽत्यन्तपरा युष्मत्प्रसादादेव दूरवर्तिनीत्यर्थःSk.

१०. परापरा उत्कृष्टादप्युत्कृष्टा, अतिबलेत्यर्थः Sy. ११. केनापि हन्तुं दुश्शक्या Sy. दुःखं हन्तीति दुर्हणा Sk.

१२. ० व्यान् P. १३. रक्षोजातिदेवता Sy. निर्ऋतिर्मृत्युदेवताSk. १४. अवधीत्M.

१५. तृष्णा नाम निर्ऋतेर्दुहिता। तया सह Sk.

१६. अस्मत्तोऽवगच्छतु। अथवा परापरेत्येतत् पदीष्टेत्येतेन सम्बध्यते। परापरा गच्छतु। दूरं गच्छत्वित्यर्थः Sk.

१७. V. Mādhava ignores सु

**स॒त्यं त्वे॒षा अम॑वन्तो॒ धन्व॑ञ्चि॒दा रु॒द्रिया॑सः । मिहं॑ कृण्वन्त्यवा॒ताम् ॥७॥**

सत्यं त्वेषाः[1]। सत्यम्। दीप्ताः। बलवन्तः[2]। निरुदके[3]। अपि देशे। रुद्रपुत्राः[4]। वृष्टिम्। कुर्वन्ति[5]। निरन्तराम्[6]।

**वा॒श्रेव॑ वि॒द्युन्मि॑माति व॒त्सं न मा॒ता सि॑षक्ति । यदे॑षां वृ॒ष्टिरस॑र्जि ॥८॥**

वाश्रेव[7]। प्रसूता[8] धेनुरिव[9]। विद्युत्। गर्जितशब्दं करोति[10]। वत्सम्[11]। इव। माता। सचते[12] लोकम्। यत्। एभिर्मरुद्भिः[13]। वृष्टिः[14]। सृज्यते।

**दिवा॑ चि॒त्तमः॑ कृण्वन्ति प॒र्जन्ये॑नोदवा॒हेन॑ । यत्पृ॑थि॒वीं व्यु॒न्दन्ति॑ ॥९॥**

दिवा चित्। अहनि। अपि[15]। अन्धकारम्। कुर्वन्ति[16]। पर्जन्येन। उदकवाहेन[17][18]। यदा। पृथिवीम्[19]। क्लेदयन्ति[20]।

**अध॑ स्व॒नान्म॒रुतां॒ विश्व॒मा सद्म॒ पार्थि॑वम् । अरे॑जन्त॒ प्र मानु॑षाः ॥१०॥**

अध[21] स्वनात्। अनन्तरम्[22]। मरुताम्[23]। स्वनात्[24]। पार्थिवम्[25]। विश्वम्[26]। सद्म[27]।

---

१. ०षा P. D. M.
२. अमशब्द आत्मपर्यायः। आत्मवन्तः। यत्नवन्त इत्यर्थः। अथवा गत्यादिषु गमनवन्तः। अथवा अम रोगे। शत्रूणां रोगवन्तः Sk.
३. अन्तरिक्षेऽप्यधि। निरालम्बनस्यान्तरिक्षस्याप्युपरीत्यर्थः Sk.
४. रुद्रेण पालितत्वात्तदीया मरुतः Sy.
५. वातवर्जितां वातेनानुपहार्याम्। निरालम्बनेऽप्यन्तरिक्षे स्थिता निर्वातं वर्षन्तीत्यर्थः। अथवा धन्वेति मरुदेश उच्यते। तस्याप्युपरि वृष्टिं कुर्वन्ति। अत्यन्तनिरुदकानपि देशान् वृष्टया उदकवतः कुर्वन्तीत्यर्थः Sk. ६. V. Mādhava ignores अवाताम् ७. वश्रेव M.
८. शब्दयुक्ता प्रस्नुतस्तनवती Sy. वाशनशीलाऽभिनवप्रसूता Sk. ९. ०रिति P.
१०. मेघान् स्फोटयति Sk. ११. वद्मिव M.
१२. ते ते P. मरुतः सेवते। सिषक्तिः सेवनार्थः Sy. यथा च माता वत्सं तद्वत् सिषक्ति सेवते उपगच्छतीत्यर्थः। कम्? सामर्थ्यान्मेघं वा मरुतो वा Sk.
१३. ऐभि० M. एभिर्लक्षीकृत्यताम्मरुद्भिः P. एषां मरुतां सम्बन्धिनी Sy.
१४. सृष्टिः M.
१५. अप्यस्यन्ध० M. १६. मरुतः Sk.
१७. उदवाहेन P. D.
१८. उदकधारिणा ... मेघेन सूर्यमाच्छाद्य Sy. उदकवता मेघेनादित्यं छादयन्तो दिवापि तमः कुर्वन्तीत्यर्थः Sk.
१९. ०वी P. २०. यदा वर्षन्तीत्यर्थः Sk.
२१. अधः M. २२. अनन्तं M. अधशब्दः पदपूरणोऽपिचेत्यस्य वार्थे Sk.
२३. मरुततां P. २४. स्वनान् M.
२५. पृथिव्यां भवम् Sk. २६. सर्वम् Sk.
२७. सत्म D. M. सदनं स्थानम् Sk.

अरेजताकम्पत सीदन्त्यस्मिन्निति सद्[1]म गृहम्[2]। प्रकर्षेण। मानुषाश्चारेजन्त[3][4] [5]।

**मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु । यातेमखिद्रयामभिः ॥११॥**

**मरुतो वीळुपाणिभिः**। मरुतः। दृढैः पाणिभिः[6] सह। चित्राः[7]। नदीः। लक्षीकृत्य[8] ताः पूरयितुम्। यात। अच्छिद्रैर्[9]गमनैः[10][11]।

**स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् । सुसंस्कृता अभीशवः ॥१२॥**

**स्थिरा वः सन्तु**। आगच्छतां भवतां रथनेमयः। स्थिराः। सन्तु। अथ परोक्षः-रथाः[12]। अश्वाश्च। एषां स्थिराः सन्तु। सुसंस्कृताश्च[13]। अश्वप्रग्रहा[14] भवन्तु[15]।

**अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम् । अग्निं मित्रं न दर्शतम् ॥१३॥**

**अच्छा वद**[16]। अभिवदत[16][17]। तया[18]। गिरा। स्तोतुम्[19]। ब्रह्मणः। पतिम्। अग्निम्।

---

१. भयेन कम्पन्ते Sk. २. सत्म D. सत्र M. ३. मनुषा० P. मनुष्यग्रहणं चात्र जङ्गममात्रोपलक्षणार्थम्। शब्दादपि मरुतां सर्वं स्थावरं जङ्गमं च प्रकर्षेण बिभेति भयेन कम्पत इत्यर्थः Sk. ४. ०न्तः M.

५. V. Mādhava ignores आ

६. पाणिशब्दोऽप्यत्राश्वानामग्रपादे खुरेषु वा वर्तते। दृढाग्रपादैर्दृढखुरैर्वा Sk.

७. चित्र P. कूलयुक्ताः Sy. रोधस्वत्य इति नदीनाम। ... विचित्रा नदीः प्रति यात गच्छत Sk.

८. अनुशब्दोऽपि लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः Sk.

९. अच्छिद्रै० P. D. M. अच्छिन्नगमनैः Sy. अखिन्नगामिभिरश्वैः। सर्वदाऽश्रान्तैरश्वैरित्यर्थः। यज्ञेष्वागच्छन्तः क्रीडार्थम् Sk. १०. नै M.

११. V. Mādhava ignores ईम्

१२. रथानां सम्बन्धिनः Sk.

१३. संस्कृता संस्कृताश्च D.

१४. अङ्गुलयः Sy.

१५. भवतामागच्छतां सर्वाण्यागमनसाधनानि सुदृढानि भवन्त्वित्यर्थः Sk.

१६. आभिमुख्येन ... ब्रूहि Sy. अच्छाशब्द आप्तुमित्यस्यार्थे Sk.

१७. वदेत्यन्तरात्मनः प्रैषः। हे अन्तरात्मन् आप्तुं वद। प्रकरणान्मरुतः Sk.

१८. देवतास्वरूपं प्रकाशयन्त्या। ... मित्रमपि Sy. तना धननामैतत्। हविर्लक्षणेन धनेन Sk.

१९. ०तु D तृतीयायाश्च स्थाने चतुर्थी। वाचा स्तुतिलक्षणया युष्मानहं हविषा स्तुत्या चाऽऽप्तवानित्येतन्मरुतो वदेत्यर्थः। अथवा अच्छा वदेत्यच्छाऽभेः स्थाने। अभिवद। स्तुहीत्यर्थः। तना हेतावियं तृतीया। धनेन हेतुना। धनलाभार्थमित्यर्थः। केन स्तवान उच्यते। गिरा जरायै वाचा स्तुतिलक्षणया Sk.

मित्रम्[१]। इव[१] च। दर्शनीयं मारुतं गणम्।

**मिमीहि श्लोकमास्ये पर्जन्यइव ततनः। गाय गायत्रमुक्थ्यम् ॥१४॥**

**मिमीहि श्लोकम्।** निर्मिमीहि[२] पूर्वम्[३]। श्लोकम्[४]। आस्येऽथ[५] तम्। पर्जन्य इव[६] वृष्टिम्[७]। विस्तारय। गायत्रं[८] च साम[९]। उक्थार्हम्[१०]। स्तोतः!

**वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम्। अस्मे वृद्धा असन्निह ॥१५॥**

**वन्दस्व मारुतम्।** स्तुहि[११]। मारुतम्। गणम्[१२]। दीप्तम्[१३]। स्तुतिकामम्[१४]। शस्त्रवन्तम्[१५]। अस्मासु[१६]। भवन्तु। प्रवृद्धाः। इह मरुतः[१७]।

---

१. नशब्द उपमार्थीयस्त्रिभिरप्येतैः सम्बन्धयितव्यः। ब्रह्मणस्पतिमिव चाग्निमिव च मित्रमिव च। कीदृशं मित्रं दर्शतं दर्शनीयम्। अथवा दर्शतमिति मरुतां गणाभिधानं न मित्रस्य। गणाभिप्रायं चैकवचनम्। अच्छा वदा दर्शनीयं मरुतां गणमिति Sk.

२. निमि० M.
मिमीहीत्यात्मन एवायमन्तरात्मनः प्रैषः। निर्मिमीष्व कुरु हे अन्तरात्मन् श्लोकम्... स्तुतिलक्षणं शब्दम् Sk.

३. पूर्वं पूर्वं M.

४. निर्मिमीहि पूर्वम्। श्लोकम् omitted by P.

५. तृतीयार्थे सप्तम्येषा। आस्येनात्मीयेन वदनेन Sk.

६. यथा पर्जन्यः शब्दं विस्तारयति तद्वद्विस्तारय Sk.

७. वृष्टं P.

८. गाय... स्तुहि Sk.

९. स्तुत्यम् Sk.

१०. उकथा M.
प्रशस्यम् Sk.

११. नमस्कुरु स्तुहि वा Sy.

१२. गण M.

१३. दीप्त P.

१४. स्तुतियोग्यम् Sy. अथवा... स्तुत्यमित्यर्थः Sk.

१५. अर्चनोपेतम् Sy.
अर्किणं स्तोतृप्रयुक्तैर्गुणैर्मन्त्रवन्तमन्नवन्तं वा Sk.

१६. अस्माकं सु P.
अस्माकमिहास्मिन्कर्मणि Sy.
यस्माद् अस्मे अस्माकं स्वभूते वृद्धा वीर्येण परिवृद्धा मरुतोऽसन्नित्यं भवन्तीह कर्मणि। यस्मादस्मदीये कर्मणि नित्यं मरुतः सन्निहिता भवन्ति तस्माद् वन्दस्व मारुतं गणमिति समस्तार्थः। अथवा वन्दस्व मारुतं गणमित्यर्धर्च एव समाप्तं वाक्यम्। तृतीयस्तु पाद आशीर्भिन्नमेव वाक्यम्। मरुतां प्रसादेनास्माकं परिवृद्धा असन् भवन्तु। काः? सामर्थ्यात् सम्पदः Sk.

१७. Ms. D. puts the figure ॥३८॥ here to indicate the end of the thirtyeighth hymn. No such number is given in P. and M.

## I.39.

**प्र यदित्था परावतः शोचिर्न मानमस्यथ ।**
**कस्य क्रत्वा मरुतः कस्य वर्पसा कं याथ कं ह धूतयः ॥१॥**

प्र यदित्था । प्रास्यथ[1] । इत्थं[2] मरुतः ! दूरात् । यत् । तेजः[3] । इवात्मीयम् । शब्दम् । तत् कस्य[4] । कर्मणा[5] । मरुतः ! केन[6] वा । वेष्टिताः । कं[7] च देशं यूयम् । याथ । कं वा तत्र पुरुषम्[8] । हे कम्पयितारः ![9]

**स्थिरा वः सन्त्वायुधा पराणुदे वीळू उत प्रतिष्कभे ।**
**युष्माकमस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः ॥२॥**

स्थिरा[10] । स्थिराणि[11] । युष्माकम् । सन्तु । आयुधानि । शत्रूणां प्रेरणाय[12] । अपिच[13] । दृढं[14] च ।

---

१. ०स्यत P.
प्रकर्षेण क्षिपथ Sk.

२. अस्मादन्तरिक्षात् Sy.
सत्यमेव Sk.

३. यथा सूर्यस्य तेजोऽन्तरिक्षाद् भूमौ प्रक्षिप्यते तद्वत् Sy.
यथाऽग्निरादित्यो वा सर्वत्र स्वदीप्तिं प्रास्यत्येवं मानं वृष्टिद्वारेण सर्वस्य निर्मातारं मेघं प्रास्यथ ... अथवा मानो गर्व उच्यते । शोचिरित्यपि प्रथमान्तम् । क्षेप्तृवचनं क्षिप्यमाणवचनम् । यथाऽग्नेरादित्यस्य वा शोचिर्दीप्तिर्दूरात्तमांसि प्रास्यत्येवं यूयं शत्रूणां मानं गर्वं दूरात् प्रास्यथ क्षिपथ नाशं गमयथेत्यर्थः Sk.

४. यजमानस्य Sk.

५. कर्मन्ना P.
कस्य यजमानस्य क्रतुना संगच्छध्व इति शेषः Sy. कर्मणा हेतुना Sk.

६. कस्य वा वर्पसा रूपेण Sk.

७. कं यजमानमुद्दिश्य...देवयजनदेशे गच्छथ Sy. कं वा यजमानं प्रति ... कं सुखनामैतत् । क्रियाविशेषणं चैतद् द्रष्टव्यम् । सुखम् । अक्लेशेनेत्यर्थः । निपातो वा कंशब्दः पदपूरणः । ... शत्रूणां यत्कर्म कुर्वन्तं यद्रूपं वा यं वा यजमानं प्रति यूयमक्लेशेन गच्छथ तं मह्यं कथयत । सुखमहमपि तत्कर्मा तद्रूपः स एव च भवामि । इत्यागमनविलम्बनादुपालम्भोऽयम् Sk.

८. अनुगृह्णीयेति शेषः Sy.

९. V. Mādhava ignores ह

१०. स्थिराः P. M.

११. अविचलानि नित्यसन्निहितानि Sk.

१२. अपनोदनाय Sy.
स्वस्थानादपकालनाय Sk.

१३. Omitted by M.

१४. विळु दृढमभेद्यमेकचित्तमत्रोच्यते । एकचित्तं चास्त्वित्यर्थः । किं तत् ? सामर्थ्यात्सेनालक्षणं बलम् Sk.

प्रतिष्कम्भितुम्[1]। युष्माकम्। अस्तु[2]। बलम्। अतिशयेन स्तोतव्यम्। मा। मायावतः। मर्त्यस्याय-जमानस्य[3]।

परा ह यत्स्थिरं हथ नरो वर्तयथा गुरु।
वि याथन वनिनः पृथिव्या व्याशाः पर्वतानाम् ॥३॥

परा ह। पराहथ[4]। यदा[5]। स्थिरं पर्वतादिकं[6] यदा वा। नरः[7]! गुरुभारमपि[8] शिलादिकं तृणमिव। चलयथ[9] तदा। पृथिव्याः। वृक्षात्[10]। मध्येन। गच्छथ[11] तथोपरि च। पर्वतानाम्[12]। दिशः[13]। मध्येन। गच्छथ विवि[14]ञ्चन्तः[15]।

---

१. प्रतिबन्धायापि शत्रूणाम्। एतदुक्तं भवति। सर्वस्यैव द्विविधाः शत्रवः। उच्छेद्या उच्छेदका वा। तत्र येऽस्माकमुच्छेद्याः शत्रवस्तेषां स्थानादपकालनाय। ये तूच्छेदकास्तेषां प्रतिबन्धाय युष्माकमायुधानि नित्यं सन्निहितानि सन्तु। सेनालक्षणं चाभेद्यमस्त्विति। अथवा वीळू इति दीर्घत्वदर्शनादायुधानां च प्रकृतत्वात्तत्समानाधिकरणप्रथमाबहुवचनान्तो विळूशब्द इति व्याख्यातव्यम्। स्थिराणि चायुधानि विळूनि चेति। अस्मच्छत्रूणामपकालनाय प्रतिबन्धाय च नित्यं सन्निहितानि दृढानि च युष्माकमायुधानि भवन्त्वित्यर्थः। अथवा विळू इत्यूकारस्य प्रगृह्यत्वदर्शनाद्वीळूशब्दो द्विवचनान्तः। स्थिराणि व आयुधानि सन्त्वस्मच्छत्रूणां पराणोदाय। किञ्च वीळू उत वीळू च स्तः। कौ? द्विवचननिर्देशाद् युद्धोपकरणाच्चेषुधी वा रथाश्वौ वा। किमर्थम्? प्रतिष्कभे प्रतिबन्धायापनयनाय। धारणाय वेत्यर्थः। कस्य? सामर्थ्याद्रिपूणां वा युष्माकं वा रथस्थानाम् Sk.

२. अस्त्वित्येतन्मेत्येतेन सम्बन्धयितव्यम्। ...युष्माकं स्वभूतं बलमतिशयेन स्तोतव्यं माऽस्तु माभूत्। कस्य? मर्त्यस्य मायिनो मायावतः। युष्मद्बलमशठस्यैवातिशयेन स्तुतोः प्रतिपद्यतां मा शठस्येत्यर्थः Sk. ३. ०यमा० P. मनुष्यस्य शत्रोर्मा बलं मा भवतु Sy.

४. ०हाथ P. ५. यथा M. यत् Sk.

६. स्वस्मात्प्रदेशाच्चालयितुमशक्यम् Sk.

७. ननः P. ८. दुष्प्रलोपमपीत्यर्थः Sk.

९. गमयथ। प्रलोपयथेत्यर्थः Sk.

१०. वृक्षाणां P. वृक्षान्...वियुज्य मध्ये गच्छथ। अरण्यगतानां निबिडानां वृक्षाणां मध्ये यस्य कस्यापि वृक्षस्य भग्नत्वादितरवृक्षाणां परस्परवियोगेन प्रौढो मार्गो भवति Sy. ११. विगच्छथ। लङ्घयथेत्यर्थः।...उड्डीय वृक्षानपि लङ्घयथेत्यर्थः Sk. १२. ०तानोन् P. किं पुनः पर्वतानां दिग्भिः सम्बन्धः। दिक्षु पर्वता व्यवतिष्ठन्ते। अथवा पर्वतानामिति द्वितीयार्थे षष्ठी। दिशः पर्वतांश्च विगच्छथेति। ऊर्ध्वं तिर्यक् च लङ्घनसमर्थाः स्थेत्यर्थः। अथवा याथनेति यातिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः। विगमयथ वनिनः पृथिव्या भूमितो वि आशाः पर्वतानाम्। आशाशब्द इच्छावचनः। पर्वत इत्यपि मेघनाम। अस्माभिर्वर्षितव्यमित्येवंरूपा आशा मेघानामपि गमयथ नाशयथेत्यर्थः Sk.

१३. पार्श्वदिशः Sy. १४. विञ्चतः M.

१५. V. Mādhava ignores ह

नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां रिशादसः ।
युष्माकमस्तु तविषी तना युजा रुद्रासो नू चिदाधृषे ॥४॥

नहि वः शत्रुः[1]। नहि । वः । शत्रुः[2]। ज्ञायते[3] स्वर्गे[4]। नच । भूम्याम् । रिशतामसितारः[5]!
युष्माकम्[6]। अस्तु । बलम् । हविर्लक्षणेन[7] धनेन सहायेन[8]। रुद्रपुत्राः! क्षिप्रम्[9]। शत्रूणामाधर्षणाय[10][11]।

प्र वेपयन्ति पर्वतान्वि विञ्चन्ति वनस्पतीन् ।
प्रो आरत मरुतो दुर्मदाइव देवासः सर्वया विशा ॥५॥

प्रवेपयन्ति । प्रकम्पयन्ति[12]। शिलोच्चयान् । पृथक् कुर्वन्ति[13]। वनस्पतीन् इत्थम् । मधुमत्ता[14]
इव । प्रगच्छथ[15]। देवाः! मरुतः! सर्वैः[16]। अनुचरैः सह[17]।

उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः ।
आ वो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः ॥६॥

उपो रथेषु । यूयं रथेषु[18]। पृषद्वर्णा[19] अश्वाः । उपायुङ्ग्ध्वम्[20]। प्रष्टिर्भूत्वा[21]। वहति ।

---

१. शत्रून् D. २. शातयिता Sk.
३. जज्ञायते P. ज्ञायथे M. नच बभूव ... विद सत्तायाम् Sy. विद्यते Sk. ४. द्युलोक इत्यर्थः Sk.
५. शत्रुहिंसका मरुतः . . . रिश हिंसायाम्। रिशन्ति हिंसन्तीति रिशाः। . . . तान् अदन्तीति रिशादसः Sy. रिशतोऽस्यन्तीति रिशादसः। हिंसितॄणां प्रतिहिंसितार इत्यर्थः Sk.
६. रुद्रपुत्रा मरुतो युष्माकमेकोनपञ्चाशत्सं-ख्यानां भवताम् . . . तना अस्तु विस्तृता भवतु Sy. ७. हविलक्ष० P. D. युष्मदीयहविर्लक्षणेन धनेन युक्ता अस्मदीयं हविरुपभुङ्क्तामित्यर्थः Sk.
८. ०यनेP. युजा योगेन परस्परैकमत्येन Sy.
९. अथवा नू चिदाधृष इत्येतत् पूर्वानपेक्षं भिन्नमेव वाक्यम्। नूचिच्छब्दश्चात्र नशब्दस्यार्थे। . . .नाधृषे नाभिभवनाय। कः? सामर्थ्याद् यूयम्। प्रकृतत्वाद्वा तविष्यो युष्मदीयाः। . . . बलं न कुत-श्चिदभिभवं प्राप्नोतीत्यर्थः Sk.
१०. शूद्राणामाधर्मणाय P. वैरिणां सर्वतो धर्षणाय Sy. ११. V. Mādhava ignores अधि। तना। चित्
१२. प्र is omitted by P.
१३. उत्खनन्तीत्यर्थः Sk.
१४. यथा दुर्मत्ताः सन्तः प्रकर्षेण हुङ्कारयन्त आगच्छन्ति तद्वत् Sk. १५. प्राग० P.
१६. सर्वया . . . प्रजया सहिताः Sy. सर्वया स्वपरिचारकमनुष्यजात्या सह Sk.
१७. V. Mādhava ignores उ
१८. P. adds अश्वेषु after रथेषु
१९. बिन्दुयुक्ता मृगीः Sy. २०. उपयुङ्ध्वंP. ०ङ्ध्वं D. M. अस्मद्यज्ञागमनार्थम् Sk.
२१. वृष्टिर्भू०P. प्रष्टिभू०D. प्रष्टर्भत्वा M. चतुर्गवस्य रथस्यैकस्यामेव धुरि यः पार्श्वे द्वितीयो नियुज्यते स प्रष्टिरित्यु-च्यते। एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छ-ब्दावध्याहार्यौ। यः प्रष्टिर्वहति रोहितो लोहितवर्णस्तं च Sk.

रोहितवर्णो[1]ऽश्वस्तं चोपायुङ्ग्ध्वम्।[2] आशृणोति।[3] भवताम्। गमनाय।[4] पृथिवी[5] किं मरुत आग-
च्छन्तीति भयेन।[6] बिभ्यति च मानुषाः।[7]

**आ वो॑ म॒क्षू तना॑य॒ कं रुद्रा॒ अवो॑ वृणीमहे।**
**गन्ता॑ नू॒नं नोऽव॑सा॒ यथा॑ पु॒रेत्था कण्वा॑य बि॒भ्युषे॑ ॥७॥**

आ वो मक्षु।[8] आवृणीमहे।[9] युष्माकम्। रुद्रपुत्राः! रक्षणम्।[10] पुत्राय[11] तथा सति गच्छत।[12]
सम्प्रति।[13] अस्मान्।[14] रक्षणेन। यथा। पुरा[15]ऽन्येषामाह्वान[16] एवम्।[17] बिभ्युषे कण्वाय गच्छतेति।[18]

**यु॒ष्मेषि॑तो मरुतो॒ मर्त्ये॑षित॒ आ यो नो॒ अभ्व॒ ईष॑ते।**
**वि तं यु॑योत॒ शव॑सा॒ व्योज॑सा॒ वि यु॒ष्माका॑भिरू॒तिभिः॑ ॥८॥**

युष्मेषितः। युष्माभिः प्रेषितः। मरुतः! मर्त्यैर्वा[19] प्रेषितः। यः। महान्।[20] अस्मान्।

---

१. ०वणो० D. मृगावान्तरजातिर्लोहितवर्णः Sy.
२. ०युकूध्वं P. ०युङ्ध्वं D. ०युध्वं M.
३. अनुजानातीत्यर्थः Sy. मर्यादया शृणोति। अतस्तं वयमपि शुश्रूमह इत्यर्थः Sk.
४. यामशब्दो रथवचनः ...षष्ठचर्थे चतुर्थी। तच्छब्दश्रुतेश्च शब्दमिति वाक्यशेषः। युष्माकं स्वभूतस्य गच्छतो रथस्य शब्दं पृथिवी।...आ वो यामायेति व इति... संप्रदानत्वात् संप्रदाने चतुर्थी। यान्त्यस्मिन् देवा इति यामो यज्ञः। द्वितीयार्थेऽत्र चतुर्थी। युष्मभ्यं यज्ञं समस्ता पृथिवी...आशृणोति प्रतिजानीते। युष्मान् यक्ष्यामीत्येतन्न कश्चिन्नाभ्युपगच्छतीत्यर्थः। अतश्चान्यत्र व्यापृता मरुतः कदाचिदस्मद्यज्ञं नागच्छेयुरपीत्येवमाशङ्किता युष्मदागमनादबीभयन्त बिभ्यत्यस्मद्विधा मानुषाः। यस्मादन्यव्यापृतानां युष्माकं स्वयज्ञेऽनागमनाद् बिभेमि तस्माद्यत्नेन ब्रवीमि। न्ययुङ्ग्ध्वं पृषतीर्वडवाः प्रष्टिं च रोहितमिति समस्ताः स्युर्मन्त्रार्थाः Sk.
५. अन्तरिक्षम् Sy. ६. युष्मत्तो यागमकुर्वन्तोऽस्मद्विधा मानुषाः Sk.
७. V. Mādhava ignores उ। चित्
८. पो M.
९. प्रार्थयामहे। युष्माभिः पाल्यमानाः पुत्रादिसन्तानं धनं वा प्राप्स्याम इत्येवमर्थं युष्मदीयं पालनं क्षिप्रं प्रार्थयामहे इत्यर्थः Sk. १०. ०ण D.
११. अथवा तनेति धननाम। धनार्थम् Sk.
१२. गच्छति P. गच्छथ M.
१३. नूनमिति पदपूरणः Sk.
१४. पूर्वस्मिन्काले कर्मान्तरेषु...अस्मदीयरक्षणेन निमित्तेन यूयं यथा प्राप्तवन्तः Sy. कर्मणि चतुर्थी। एकवचनस्य स्थाने बहुवचनम्। मह्यम् Sk.
१५. यथैव पुरा तद्वदिदानीमपि पालनहस्ता मां कण्वमाशङ्कितं युष्मदागमनभीतं प्रत्यमुतोऽन्तरिक्षादागच्छथेत्यर्थः Sk.
१६. ०षां मां वान P. १७. एव P. D.
१८. V. Mādhava ignores कम्
१९. मर्त्यैवा D. मारकैरन्यैर्वा प्रेषितः Sy.
२०. शत्रुः Sy

आहिनस्ति[1]। तं यूयम्। शवसा[2]ऽस्मत्तः[3]। पृथक् कुरुत[4]। ओजसा[5] च तथा। यौष्माकीणैः[6] परिरक्षणैश्चास्मान्[7] अवतेति।

**असामि हि प्रयज्यवः कण्वं दद प्रचेतसः।**
**असामिभिर्मरुत आ न ऊतिभिर्गन्ता वृष्टिं न विद्युतः॥९॥**

असामि हि। प्रकर्षेण यष्टव्याः। प्रकृष्टज्ञानाः। कण्वम्[8]। हि माम्[9]। असाधारणम्[10]। मनु-[11] ष्येभ्यः पति हि। दत्त[12]। असाधारणैश्च[13]। पालनैः। अस्मान्। आगच्छत[14]। वृष्टिम्। इव। विद्युतः[15] शीघ्रम्[16][17]।

**असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः।**
**ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम्॥१०॥**

असाम्योजः[18]। असाधारणम्[19]। बलम्[20]। बिभृथ[21]। शोभनदानाः[22]। असाधारणम्[19]। वेगं च[23]।

---

१. आभिमुख्येन प्राप्नोति Sy. आगच्छति। कः? सामर्थ्याद् हिंसिता Sk.
२. सेनालक्षणेन Sk.
३. ० स्मत्तं D. ०स्मत्त M.
४. अन्नेन . . . विभक्तं कुरुत Sy. तमस्मत्तोऽपनयतेत्यर्थः Sk.
५. कुरुतैजसा M.
६. यौष्माणीकैः P. युष्मत्सम्बन्धिभी रक्षणैश्च वि युयोत Sy. किञ्चित्सेनालक्षणेन बलेन किञ्चित्स्वशरीरबलेन किञ्चित्पालनमात्रेणैवेत्यर्थः Sk.
७. ० श्चास्थानव० M.
८. कण्वा P. यजमानमेतन्नामकमृषिम् Sy. चतुर्थ्यर्थे द्वितीयैषा। मह्यं कण्वाय Sk.
९. Omitted by M.
१०. सम्पूर्णमेव यथा भवति तथा Sy. साम्यर्धम्। न सामि असामि समग्रम्। किं तत्? सामर्थ्याद् धनम् Sk.
११. ० रणमनु० M.
१२. धारयत Sy.
१३. दत्ताः साधा० M. सम्पूर्णैः Sy. समग्राभिः Sk.
१४. समग्रपालनहस्ता अस्मान्प्रत्यागच्छतेत्यर्थः Sk.
१५. यथा वृष्टिं मरुतो व्याप्नुवन्तो विद्युत आगच्छन्ति तद्वत् Sk.
१६. The passage beginning with मनुष्येभ्यः and ending with शीघ्रम् is omitted by P.
१७. V. Mādhava ignores मरुतः
१८. असामि सामिप्रतिषिद्धम्। सामि स्यतेः ... असुसमाप्तं बलं बिभृत कल्याणदानाः N. 6. 23.
१९. सम्पूर्णम् Sy.
२०. शारीरं बलम् Sk.
२१. विभृत D. बिभ्रथ M.
२२. शोभनदातारः शोभनदाना वा Sk.
२३. बलम् Sy. सेनालक्षणमपि बलम्। द्विविधेनापि . . . उपेताः स्येत्यर्थः Sk.

कम्पयितारः[1]। कण्वं मां यो द्वेष्टि तस्मै[2]। परितो मन्युमानाय[3]। शरम्[4]। इव। द्वेषम्[5]। विसृजतेति[6]।

I.40.

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥१॥

उत्तिष्ठ ब्रह्मणस्पते[7]। उत्तिष्ठ[8]। ब्रह्मणः[9]। पते! देवानिच्छन्तः[9]। त्वाम्। याचामहे त्वत्सहाया[10] मरुतश्च[11]। उपगच्छन्तु। सुदानाः[12]। इन्द्र! त्वं च। क्षिप्रकारी[13]। भव। सहायः[14 15]।

त्वामिद्धि सहसस्पुत्र मर्त्य उपब्रूते धने हिते ।
सुवीर्यं मरुत आ स्वश्व्यं दधीत यो व आचके ॥२॥

त्वामिद्धि[16]। त्वाम्[17]। एव। सहसः[18]। सूनो[18]! मर्त्यः[19]। उपस्तौति[20]। निहिते[21]। धने तद्रक्षार्थं[22]

---

१. शत्रूणाम् Sk.

२. ऋषीणां द्वेषं कुर्वते शत्रवे तद्विनाशार्थम् Sy. मत्प्रभृतीनामृषीणां द्वेष्ट्रे Sk.

३. परीतो M. कोपपरिवृताय Sy. परिगतो मन्युर्येन स परिमन्युः। तस्मै परिमन्यवे। क्रुद्धायेत्यर्थः। अथवा मन्युर्मन्यतेर्दीप्तिकर्मणो दीप्तिरत्रोच्यते। परिगतदीप्तये। स्वदीप्त्या ऐश्वर्यादिकया दीप्तायापीत्यर्थः Sk.

४. यथा कश्चित् कस्मैचिदिषुं क्रुद्धः सृजेत् तद्वत् सृजत विसृजत क्षिपत Sk.

५. द्वेषकारिणं हन्तारम् Sy. द्विषं सर्वलोकद्वेष्टारं तमृषीणां द्वेष्टारं नित्यक्रुद्धम्। ऐश्वर्यादिदीप्त्या वा दीप्तमपि सर्वलोकद्वेष्यं कुरुतेत्यर्थः Sk.

६. V. Mādhava ignores मरुतः। Ms. D. puts the figure ॥३९॥ here to indicate the end of the thirtyninth hymn. No such number is given in P. and M.

७. ब्राह्मणः M.

८. अस्मद्यज्ञमागन्तुम् Sk.

९. ०न्त P. १०. ०हायया M.

११. ०तं च M.

१२. शोभनदातारः शोभनदाना वा Sk.

१३. सोमस्य प्राशकः। . . . यद् वा वृत्रस्य हिंसको भव Sy.

१४. यं M. सह Sy. सह ब्रह्मणस्पतिना Sk.

१५. V. Mādhava ignores प्र

१६. त्वमि० D.

१७. त्वम् D.

१८. बलस्य बहुपालक Sy.

१९. आत्मानमेव कण्वः परोक्षरूपेण प्रतिनिर्दिशति। अयं कण्वनामा मनुष्य उपगम्य ब्रूते। अस्मदीयं यज्ञं ब्रह्मणस्पतिना सहागच्छेत्येतदभ्यर्थयते इत्यर्थः Sk.

२०. ० स्यौति P.

२१. शत्रुषु प्रक्षिप्ते धने Sy. वेदयां हविर्निधायत्यर्थः Sk.

२२. हविराख्ये . . . धने हिते इति निमित्त एषा सप्तमी। प्रयोजनस्य च निमित्तत्वेन विवक्षा। धने हिते निमित्तभूते। हितं धनं लब्धुमित्यर्थः Sk.

मरुतः ! च । यः । युष्मान् । आकामयते[1] मर्त्यः[2] सः । सुवीर्यम्[3] । स्वश्व्यं[4] च । धारयेत्[5] ।[6]

**प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।**
**अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥३॥**

**प्रैतु ब्रह्मणस्पतिः ।** प्रगच्छतु[7] । ब्रह्मणः । पतिः[8] । प्रैतु । देवी[9] । वाक्[10] । अभिनयन्तु[11] । अस्माकम्[12] । बलयुक्तम्[13] । नृभ्यो हितम् । हविष्पङ्क्त्यादिभिर्ब्राह्मणविहिताभिः[14] पङ्क्तिभिः समृद्धम्[15] । यज्ञम्[16] । देवाः ।

**यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः ।**
**तस्मा इळां सुवीरामा यजामहे सुप्रतूर्तिमनेहसम् ॥४॥**

**यो वाघते ।** यः । ऋत्विजे[17] । ददाति । शोभननरोपेतं[18] शोभनयानं[19] वा[20] । धनम् । सः । धारयति ।

---

१. योऽस्मदादिर्युष्मान् प्रार्थयत इत्यर्थः Sk.

२. ममर्त्यः M.

३. शोभनवीर्ययुक्तं च धनम् Sy.

४. ० श्वं P. D.

५. दधातिर्दानार्थः । लोट् मध्यमपुरुषे बहुवचनं चैतद् द्रष्टव्यम् । दत्त ।... अथवा दधीतेति दधातिर्धारण एव । ...सुवीर्यं स्वश्व्यं च धनं दधीत धारयेत यो व आवक इति । नचादत्तस्य धारणं सम्भवतीत्यर्थः Sk.

६. V. Mādhava ignores हि

७. च्छत M. अस्मान् प्राप्नोतु Sy.

८. पति M. पति P.

९. देहि P.

१०. प्रियसत्यरूपा वाक् Sy.

११. अभिगमयन्तु M. अस्माकं स्वभूतमन्येऽपि यज्ञमाप्नुवन्तीत्यर्थः Sk.

१२. अमस्माकं P.

१३. ब्रह्मणस्पत्यादयो देवता वीरं शत्रुं निःशेषेण दूरे प्रेरयन्तु Sy.

ऋत्विक्कर्तृत्वाद् वीरपुत्रफलत्वाद् वा वीरोऽत्र यज्ञ उच्यते । वीरकर्तृकं वीरपुत्रफलार्थं वाऽस्मद्यज्ञम् Sk.

१४. ०भि ब्रा० D. हविष्पज्यादिभिर्ब्रा० M.

१५. सम्यद्धं M.

पङ्क्तिभिः संसाध्यत इति पङ्क्तिराधाः सोमयागः । स हि चतसृभिः पङ्क्तिभिः संसाध्यते । ...तं पङ्क्तिराधसं ब्रह्मणस्पतिप्रसादात् Sk.

१६. यज्ञम्...अस्मान्...आभिमुख्येन नयन्तु Sy.

१७. ऋत्विग्वते यजमानाय Sk.

१८. सुष्ठु नेतव्यम्...सुखेन नीयते इति सूनरम् Sy.

१९. ० नयनं M.

२०. Omitted by P.

अक्षीणम्। अन्नं[1] वयं च। तस्मै मानवीम्। इलाम्।[2] सुपुत्राम्।[3] आयजामहे। शोभनप्रतरणाम्।[4]
उपद्रवरहिताम्।[5]

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे॥५॥

प्र नूनम्। प्रवदति।[6] इदानीम्।[7] ब्रह्मणः। पतिः। मन्त्रम्।[8] प्रशस्तम्।[9] यस्मिन् मन्त्रे।
इन्द्रादयः। स्थानानि। चक्रिरे[10] श्रवणार्थं यं मन्त्रमुपासत इति।

तमिद्वोचेमा विदथेषु शंभुवं मन्त्रं देवा अनेहसम्।
इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत्॥६॥

तमिद्वोचेम। तम्। एव। वोचेम।[11] यज्ञेषु।[12] सुखस्य भावयितारम्। मन्त्रम्।[13] देवाः!
अपापं[14] ताम्। च। इमाम्।[14][15] वाचं देवाः। नरः![16] यूयं कामयध्वमयं च स्तोता। युष्माकं स्वभूतानि

---

१. श्रवः कीर्तिम्। कीर्तिमान् भवतीत्यर्थः Sk.

२. इळामेतन्नामधेयां मनोः पुत्रीम् Sy. हविर्लक्षणमन्नम् Sk.

३. शोभनैर्वीरैर्भटैर्युक्ताम् Sy. शोभना वीराः कर्तारो यस्यास्तां सुवीराम्। शोभनैर्ऋत्विग्भिरुपकल्पितामित्यर्थः Sk.

४. सुष्ठु प्रकर्षेण हिंसाकारिणीम् Sy. तुर्वतिर्हिंसार्थः। सुष्ठु प्रतुर्वन्ते शत्रवो यया तां सुप्रतूर्तिम्। देवा हि हविरुपभोगाद्वीर्यमाप्नुवन्ति। तेन च वीर्येण शत्रून् घ्नन्ति Sk.

५. ० वहरितां M. केनाप्यहिंस्याम् Sy. अनेहसोऽपापाः। एतज् ज्ञात्वा ब्रह्मणस्पते कीर्त्यर्थं हविरर्थं च धनमस्मभ्यं देहीत्यर्थः Sk.

६. वदतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः। प्रवादयति। सर्वस्तोतृभिरुच्चारयतीत्यर्थः Sk.

७. अवश्यम् Sy. नूनमिति पदपूरणः Sk.

८. P. adds दानं before मन्त्रम्। स्तुतिलक्षणम् Sk.

९. शस्त्रयोग्यम् Sy.

१०. चिक्रिरे P. यमिन्द्रादयोऽपि नैघण्टुकवृत्त्या स्थिता इत्यर्थः Sk.

११. उच्चारयामेत्याशास्महे Sk.

१२. आत्मीयेषु Sk.

१३. स्तुतिलक्षणमन्त्रम् Sk.

१४. अवापन्तां चेमं P. अपावन्तां चेमा M. अहिंसनीयं दोषरहितम् Sy.

१५. स्तुतिलक्षणाम् Sk.

१६. मनुष्याकाराः Sk.

१७. ब्रह्मणस्पतिना सह Sk.

सर्वाणि[1]। धनानि[1]। अश्नोतु[2][3]।

**को देवयन्तमश्नवज्जनं को वृक्तबर्हिषम्।**
**प्रप्र दाश्वान्पस्त्याभिरस्थितान्तर्वावत्क्षयं दधे ॥७॥**

**को देवयन्तम्**। कः[4]। यजमानम्[5]। अश्नोतु। जनम्[6]। को वा[7]। छिन्नबर्हिषम्[8]। प्रास्थित[9]। यजमानः। विड्भिर्ऋत्विग्भिः[10]। तेषां मध्ये ब्रह्मणस्पतिरागच्छन्[11]। निवासम्[12]। करोतीति[13] पूर्वार्धस्योत्तरम्।

**उप क्षत्रं पृञ्चीत हन्ति राजभिर्भये चित्सुक्षितिं दधे।**
**नास्य वर्ता न तरुता महाधने नार्भे अस्ति वज्रिणः ॥८॥**

**उप क्षत्रम्**। ब्रह्मणस्पतिर्धनं[14] स्तोतॄणाम्। उपपृञ्चति[15]। भयम्। अपि। वरुणादिभिः[16] सहागत्य[17]। हन्ति तथा भये सति[18]। शोभननिवासं गृहम्[19]। प्रयच्छति[20] ब्रह्मणस्पतेः। अस्य। आयुधवतः।

---

१. सर्वापि वामा वननीया वाग् वो युष्मान् ...व्याप्नुयात्Sy. वननीयानि धनानिSk.
२. अश्नातु P. D.
व्यत्ययेनायमुत्तमस्य स्थाने प्रथमपुरुषः। अश्नुयाम प्राप्नुयाम Sk.
३. V. Mādhava ignores इत्
४. क इति सामर्थ्याच्छत्रोर्निर्देशः। कः ? शत्रुः Sk. ५. जनम् Sy.
ब्रह्मणस्पतिप्रभृतीन् देवान् यष्टुमिच्छन्तम् Sk. ६. प्राप्नोति Sk.
७. जनः M. यजमानम् Sy.
मनुष्यं न कश्चिदपि व्याप्तुं शक्नोतीत्यर्थः Sk. ८. आस्तीर्णबर्हिष्कम्। प्रवृत्तयागमेवेत्यर्थः Sk.
९. प्रतिष्ठते। होमार्थमाहवनीयं प्रति गच्छतीत्यर्थः Sk.
१०. विभिः P. विटिभः M. पस्त्याभिर्मनुष्यैर्ऋत्विग्भिः Sy.
पस्त्याभिः। पस्त्यमिति गृहनाम। अत्राहुतयः पस्त्या उच्यन्ते। ... आहुतिभिः सम्बद्धाः। गृहीताहुतय इत्यर्थः Sk.
११. अन्तर्वावद् अन्तःस्थितबहुधनोपेतम्। यद् वा अन्तःस्थितपुत्रपौत्रादिप्रयुक्तबहुविधवागुपेतम् Sy.
१२. निवासस्थानं गृहम् Sy.
अन्तरत्यर्थं गतं लीनं प्रकाशं क्षयं दधे धारयति। सर्वलोकप्रकाशं महान्तं परिक्षयं न प्राप्नोतीत्यर्थः Sk.
१३. इति is omitted by P.
१४. क्षत्रं बलं... स्वात्मनि Sy.
१५. ०वृञ्चति M. आत्मना सम्पर्कं नयत। धनं च लभत इत्यर्थः Sk.
१६. राजभिर्दीप्तैर्ब्रह्मणस्पतिप्रभृतिभिः। तृतीयानिर्देशादनुगृहीता इति शेषः Sk.
१७. शत्रून्। ... अथवा हन्तीति हनिरन्तर्णीतण्यर्थः। घातयति शत्रून् दीप्तैर्ब्रह्मणस्पतिप्रभृतिभिः Sk.
१८. भीतिहेतौ युद्धेऽपि.. सुष्ठु निवासस्थैर्यं धारयति न तु पलायते Sy.
१९. शोभनं निवसनं P. D.
२०. धारयति। भयकालेऽपि स्वस्थानान्न प्रच्यवत इत्यर्थः Sk.

महति[1]। अल्पे वा सङ्ग्रामे। न। अस्ति। अभिगन्ता[2]। नच। तारकः[3]।[4]

I.41.

**यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा। नू चित्स दभ्यते जनः ॥१॥**

**यं रक्षन्ति**। यम्। वरुणादयः। प्रचेतसः[5]। रक्षन्ति। क्षिप्रम्[6]। एव। सः। जनः[7] शत्रून्। हिनस्ति हिंस्यते वा याचितृभिः[8]।

**यं बाहुतेव पिप्रति पान्ति मर्त्यं रिषः। अरिष्टः सर्व एधते ॥२॥**

**यं बाहुतेव**। यम्। धनादीनां बहुतेव[9] वरुणादयः। पूरयन्ति च। मर्त्यम्। शत्रोः[10] सः। सर्वः। हिंसितः[11]। वर्धते[12]।[13]

**वि दुर्गा वि द्विषः पुरो घ्नन्ति राजान एषाम्। नयन्ति दुरिता तिरः ॥३॥**

**वि दुर्गा**[14]। अमी वरुणादयो यान् परिरक्षन्ति। एषाम्[15]। दुर्गाणि[16]। शत्रून्। शत्रुपुराणि च। विघ्नन्ति[17]। दुरितानि च। तिरः[18]। नयन्ति।

---

१. वहृति P.
प्रभूतधननिमित्ते युद्धे Sy.

२. प्रवर्तयिताऽन्यः कोऽपि नास्ति, स्वयमेव प्रवर्तत इत्यर्थः Sy. वर्तयिता Sk.

३. तरणस्योल्लङ्घनस्य कर्ताऽन्यः कोऽपि नास्ति Sy.
हिंसयिता।...नैनं कश्चित् स्वस्मात् स्थानादपकालयति। नाप्यल्पे महति वा सङ्ग्रामे गृहीतायुधं हिनस्तीत्यर्थः Sk.

४. V. Mādhava ignores न। Ms. D. puts the figure ॥४०॥ here to indicate the end of the fortieth hymn. No such number is given in P. and M.

५. प्रवोचेतसः P. प्रवृद्धज्ञानाः Sk.

६. नूचिदित्ययं सामर्थ्यादत्र नशब्दस्यार्थे। दभ्नातिर्वधकर्मा। न स हन्यते केनचिद् जनो मनुष्यः Sk.

७. जनं M.　८. यचित्राभिः P.

९. स्वकीयो बाहुवर्गोऽपेक्षितं धनमानीय यथा पूरयति तद्वत् Sy.
बाहुभ्यामिव। ... यथा कश्चिद् बाहुभ्यां पूरयेद् एवं त्वमन्नेन च धनेन च पूरयसीत्यर्थः Sk. १०. हिंसकात् Sy.
रक्षन्ति च मर्त्यं ... हिंसितुः सकाशात् Sk. ११. केनाप्यहिंसितः Sy.
शत्रुभिरहिंसितःSk.

१२. सर्ववृद्धिभिः Sk.

१३. V. Mādhava ignores पान्ति

१४. दुर्गां M.

१५. द्विषाम्।...एषां द्विषां स्वभूताः पुर इति Sk.

१६. गन्तुं दुःशकानि शत्रुनगराणि Sy.

१७. विविधं...घ्नन्ति Sk.

१८. रितः M.
तिरः... इति प्राप्तस्य नामनी। प्राप्तान्युत्पन्नानि सन्तीत्यर्थः Sk.

**सुगः पन्थां अनृक्षर आदित्यास ऋतं यते । नात्रावखादो अस्ति वः ॥४॥**

सुगः पन्थाः । शोभनगमनः[1] । पन्थाः । आदित्याः । यज्ञम्[2] । गच्छते[3] । कण्टकवर्जितोऽस्तु[4] । अस्मिन् । भवताम्[5] । अवखादः[6] । न । अस्ति[7] । चरुपुरोडाशादिकं सर्वमेव भवतां भक्ष्यं न किञ्चित् त्याज्यमिति ।

**यं यज्ञं नयथा नर आदित्या ऋजुना पथा । प्र वः स धीतये नशत् ॥५॥**

यं यज्ञम् । यं मनुष्यम् । यज्ञम् । नयथ[8] । नरः[9] ! आदित्याः ! ऋजुना । पथा । प्रव्याप्नोतु[10] । सः । भवताम् । कर्मणे[11] ।

**स रत्नं मर्त्यो वसु विश्वं तोकमुत त्मना । अच्छा गच्छत्यस्तृतः ॥६॥**

स रत्नम्[12] । यो भवतां[13] कर्मण्युद्युक्तः[14] सः । रत्नम्[15] । मर्त्यः । वासयितृ[16] । व्याप्तम्[17] । पुत्रम्[18] । च । आत्मनैव[19] । अभिगच्छति[20] । अहिंसितः[21] ।

---

१. सुखं गम्यते येन स सुगः पन्थाः Sk.
२. ० त्याय P.
३. षष्ठ्यर्थे एषा चतुर्थी । यज्ञं गच्छतः । एतज् ज्ञात्वाऽऽगच्छतेत्यर्थः Sk.
४. कुण्डव P.
५. भवतोम् P.
६. अवाखादः M.
अवखाद इति खादिः सामर्थ्याद्धिंसार्थः । नचात्रास्मद्यज्ञे कश्चिद्धिंसिता तिष्ठति युष्माकमागतानां सतामित्यर्थः । अथवाऽत्रेति प्रकृतत्वात् पन्थाः प्रतिनिर्दिश्यते । ततोऽवखादो गर्त उच्यते । गर्तोऽप्यत्र पथि नास्ति युष्माकं यत्राऽऽगच्छन्तो यूयं प्रस्खलिष्यथ । एतज् ज्ञात्वाऽऽगच्छतेत्यर्थः Sk.
७. नस्ति P.
८. आत्मसमीपं प्रापयथ । प्राप्त्यर्थो वा सामर्थ्यान्नयतिः । प्राप्नुथ Sk.
९. मनुष्याकाराः Sk.
१०. प्रत्याप्नो० M.
११. युष्मत्पानायोपभोगाय Sy.
यजमानस्य प्रज्ञायै । युष्मत्प्रसादेन प्रज्ञाविवृध्यर्थमित्यर्थः Sk.
१२. सरंयत्नं M.
१३. यो युष्मान् स्तौति यजते च Sk.
१४. यो मनुष्यान् देवान् कामयमानो भवति तन्माघ्नन्तं शपन्तं भवतां कर्मण्योद्युक्त P. यो मनुष्यान् देवान् कामयमानो भवति तमाघ्नन्तं शपन्तं वा भवता कर्मण्युद्युक्तः D. See RV. 1.41.8.
स तादृशो भवद्भिरनुगृहीतः Sy.
१५. रमणीयम् Sk.
१६. धनम् Sy; Sk.
१७. सर्वम् Sy. बहु च Sk.
१८. अपत्यञ्च Sk.
१९. ० नेव P. D.
स्वेन सदृशम् Sy.
२०. प्राप्नोति Sk.
२१. शत्रुभिः Sk.

**कथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः । महि प्सरो वरुणस्य ॥७॥**

**कथा राधाम**[1]। कथम्[2]। राधयामः[3]। सखायः! स्तोमम्[4]। मित्रस्य। अर्यम्णश्च कथं वा।
महत्[5]। रूपम्[6]। वरुणस्य[7] स्तुमः[8]।

**मा वो घ्नन्तं मा शपन्तं प्रति वोचे देवयन्तम् । सुम्नैरिद्व आ विवासे ॥८॥**

**मा वो घ्नन्तम्**। यो युष्मान्। देवान्[9] कामयमानो भवति तम्[10]। मा[11]। घ्नन्तम्। शपन्तं वा[12]
नाहम्। प्रतिहन्मि[13] नच प्रतिशपामि[14]। सुखाद्युद्दिश्य[15]। युष्मान्। परिचरामि[16]। एव।

**चतुरश्चिद्ददमानाद्बिभीयादा निधातोः । न दुरुक्ताय स्पृहयेत् ॥९॥**

प्रसङ्गाद्दुरुक्तनिन्दां करोति—
**चतुरश्चिदिति**[17]। चतुरः[18]। चिदक्षान्[18]। धारयतः[19] प्रतिकितवात्[20] कितवो यथा।

---

१. ० मः M.
२. राधयाः M. कथम्। राधयामः is omitted by P. संसाधयामहे Sk.
३. ऋत्विजो मत्पुत्रादयो वा Sk.
४. स्तोमान् P. ५. महान्तम् Sk.
६. मित्रादीनां त्रयाणां...महद्...रूपम्। अतस्तदनुरूपं...स्तोत्रं...केन प्रकारेण ...साधयामः Sy.
रूपवन्तम्। अत्यन्तशोभनमित्यर्थः Sk.
७. वरुणंन्य M. ८. स्तुमहः P.
९. युष्मानेवान् M.
देवान्कामयमानं यजमानं यः शत्रुर्हन्ति, ...तादृशं शत्रुं वो युष्मभ्यं मा प्रतिवोचे दुरुक्तकथनभीत्याऽहं न कथयामि Sy.
१०. त D.
११. मा वो युष्माकं स्वभूतं घ्नन्तमपि। मा शपन्तम्। शप आक्रोशे। आक्रोशन्तम् Sk. १२. पा P.
१३. प्रतिह० P. प्रतिवोचामीत्याशासे Sk.
१४. प्रतिशपन्तामि M.
तथा यजमानं यः शत्रुः शपति, तमपि शपन्तं मा प्रतिवोचे भवद्भिरेव विचार्य शिक्षणीय इत्यर्थः Sy.
१५. ० द्युदिश्य M. धनैरेव Sy.
१६. एतदुक्तं भवति। एवमहमत्यन्तं युष्मद्भक्तो येन युष्माकं स्वभूतं यष्टारमपि घ्नन्तमप्याक्रोशन्तमपि प्रतिपत्त्याशासे परिचरामि वा Sk.
१७. ० श्विदिति D.
चतुरश्चिद् (अक्षान्) धारयत इति। तद्यथा कितवाद् बिभीयादेवमेव दुरुक्ताद् बिभीयात्। न दुरुक्ताय स्पृहयेत् कदाचित् N. 3. 16.
१८. ० रश्विद० D. कपर्दकान् Sy.
चिच्छब्द उपमायाम्...यथा चतुरोऽक्षान् ददमानाद् धारयतः कितवादानिधातोरानिधानात्तेषामक्षाणां प्रतिकितवो बिभेति तदयं पातयिष्यति येन मां जेष्यतीत्येवं युष्माकं वरुणादीनां प्रसादेन मादृशः सर्वः स्तोता बिभीयादित्याशासे Sk.
१९. ० ता M. P. adds कः after धारयतः।
२०. ० वान् P. D. M.

बिभीयात्[१]। आनिधानात्[२] किमयं चतुरोऽक्षान् पातयति जयायान्यूनानीति इहाक्षेषु[३] निहितेषु चतुरश्चतुरस्तान् विभजन्ति तत्र यदा विभक्तेभ्योऽधिकास्त्रयो[४] भवन्ति द्वावेको वा न तदा जयो भवति यदा चत्वारो भवन्ति तदा जयस्तस्मात् कितवाद् यथा बिभीयादेवं[१] दुरुक्ताद्[५] बिभीयात्। न। दुरुक्ताय[६]। स्पृहयेदिति[७]।

I.42.

**सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात् । सक्ष्वा देव प्र णस्पुरः ॥१॥**

**सं पूषन्।** पूषन्! दुर्गान्। मार्गान्[८]। सन्तारय[९]। पापं[१०] च। विनाशय[११]। मेघादापो जायन्तेऽद्भ्यः पृथिवीति विमुचो[१२] नपात्[१३] तदधिपतिः पूषा। प्रसक्तो[१४] भव जिगमिषूणाम्। अस्माकम्[१५]। अग्रतः[१५]।

**यो नः पूषन्नघो वृको दुःशेव आदिदेशति । अप स्म तं पथो जहि ॥२॥**

**यो नः पूषन्।** यः। अस्माकम्। पूषन्! आहन्ता[१६]। स्तेनः[१७]। दुःसुख[१८] इहागन्तव्यमिति। वदति[१९]। तम्। पथः[२०]। अपजहीति[२१]।

अस्योत्तरा[२२] भूयसे निर्वचनाय—

---

१. विभी० P.
२. अस्य जयो भविष्यति न भविष्यतीत्यन्यो भीतिं प्राप्नुयात् Sy.
३. आहा० P. ४. ० कारस्त्रयो M. ० कासुयोभ P. ५. दुरुक्तव . . . P. ० क्ताय M. ६. दुरुक्तमप्रियम्। स्पृहाऽभिलाषः। माप्रियमभिलाषीत्। मा कश्चिदप्यप्रियं वोचदित्यर्थः Sk.
७. Ms. D. puts the figure ॥४१॥ here to indicate the end of the fortyfirst hymn. No such number is given in P. and M.
८. मार्गात् . . . अस्मानभीष्टस्थानं सम्यक् प्रापय Sy. मार्गात् Sk.
९. अस्मान् Sk. १०. वापं M.
११. पापं चापगमयेत्यर्थः Sk.
१२. जलविमोचकहेतोर्मेघस्य पुत्र! Sy. संहारकाले सर्वमिदं ग्रसितुरपत्य! Sk.
१३. नवा M. १४. प्रसक्ष्व प्रगच्छ Sk.
१५. ०कंमग्र० P. महति प्रतिभयेऽस्मिन् पथ्यग्रतोगाम्यस्माकं भवेत्यर्थः Sk.
१६. अघः पापः Sk. १७. अस्मदीयस्य धनस्यादाताऽपहर्तेत्यर्थः Sy.
१८. दुस्सहः P. दुस्सखः D. सेवितुं दुःशको दुष्टसुखो वा Sy. कुत्सितसुखः। अन्यायोपात्तेन हि धनेन यत्सुखं धन्यते कुत्सितं तत् Sk.
१९. अनेन मार्गेण गन्तव्यमित्येवमाज्ञापयति Sy. सहायभूतेभ्यश्चौरेभ्यो गच्छतः कथयतीत्यर्थः Sk. २०. ० जिही० P. D. हन्तिरत्र गत्यर्थः...अपगमयतम् Sk.
२१. V. Mādhava ignores स्म
२२. अस्या उत्तरा P. D.

**अप॒ त्यं प॑रिप॒न्थिनं॑ मुषी॒वाणं॑ हुर॒श्चितं॑म् । दू॒रमधि॑ स्रु॒तेर॑ज ॥३॥**

अपेति[1] । अपगमय[2] । तम् । गमनप्रतिबन्धकरम्[3] । परोक्षं हर्तारम्[4] । प्रत्यक्षेण च हरत[5] आहृत्य च धनानां[6] चेतारम्[7] । मार्गात्[8] । अधि[9] । दूरमिति ।

**त्वं तस्यं॑ द्वया॒विनो॒ऽघशं॑सस्य॒ कस्यं॑ चित् । प॒दाभि ति॑ष्ठ॒ तपु॑षिम् ॥४॥**

त्वं तस्य । प्रत्यक्षपरोक्षहरणयुक्तस्य[10] । स्तेनस्य[11] । अन्यतरस्य[12] । अपि[13] । पादेन[14] । अभितिष्ठ[15] । बलम्[16] ।

**आ तत्ते॑ दस्र मन्तु॒मः॒ पूष॒न्नवो॑ वृणीमहे । येन॑ पि॒तॄनचो॑दयः ॥५॥**

आ तत्ते । आवृणीमहे[17] । रुद्र ! रक्षणम्[18] । तव । दर्शनीय[19] ! ज्ञानवन्[20] ! येन[21] । पितॄनङ्गिरसः पणिभिरपहृतासु गोषु । अचोदयः[22] ।

---

१. चेति M.
२. अवग० M.
३. मार्गप्रतिबन्धकम् Sy.
४. हन्तारं P.
तस्कररूपम् Sy.
मोषितारम् Sk.
५. हरन्त D.
कौटिल्यानां सञ्चेतारम् Sy.
६. सनानां P. D. M.
७. ० र P. चौरम् Sk.
८. सूयते गम्यतेऽनयेति स्रुतिः पन्थाः Sk.
९. अति M.
अधिशब्दः . . . पदपूरणः Sk.
१०. द्वयाविनः । द्वयं यस्यास्ति । इह च राजभयमपरत्र चापुण्यम् । तद्वान् द्वयावी तस्य Sk.
११. अस्मास्वघमनिष्टं शंसतः Sy.
१२. न्यत ० P.
अनिर्दिष्टविशेषस्य कस्यापि Sy.
कस्यापि स्वभूतस्य । अथवा कमिति सुखनाम । सुखस्यापि । त्वां परिचरतोऽपीत्यर्थः Sk.
१३. अवि M.
१४. वादेन P. M.
१५. आक्रामत Sk.
१६. परसन्तापकं देहम् Sy.
तापयित्रीम् । काम् ? सामर्थ्यादिषुशक्ति वा । क्रोधनाम वा तपुषिशब्दः । अस्मद्विषयं क्रोधम् Sk.
१७. प्रार्थयामहे Sk.
१८. क्षणस्यं P.
क्षणं D. M.
१९. यद् वा वैर्युपक्षयकारिन् Sy.
तमसां चौराणां वोपक्षयितर्दर्शनीय वा Sk.
२०. ० वान् D. ०वत् M.
मन्तुर्मननं तद्वन् Sk.
२१. ये M.
येनास्मदीयान् पितॄनप्यचोदयः प्रेरितवान् । महत्सु प्रतिभयेषु वाऽध्वनि वा प्रेरितवानसीत्यर्थः Sk.
२२. V. Mādhava ignores तत् ।

अधा नो विश्वसौभग हिरण्यवाशीमत्तम। धनानि सुषणा कृधि ॥६॥

अधा[1] नः। अथ[2]। अस्माकम्। विश्वकल्याण[3]! अतिशयेन[4] हिरण्यवाग्युक्त[5]! धनानि। सुदानानि[6]। कुरु।

अति नः सश्चतो नय सुगा नः सुपथा कृणु। पूषन्निह क्रतुं विदः ॥७॥

अति नः। चौरैः सक्तान्[7]। अस्मान्। अतिशयेन[8]। सुगमेन[9]। शोभनेन[10] पथा[9] च। अस्मान्। कृणु[11]। पूषन्! अध्वनि। प्रज्ञानम्[12]। लम्भयेति[13]।

अभि सूयवसं नय न नवज्वारो अध्वने। पूषन्निह क्रतुं विदः ॥८॥

अभि सूयवसम्। अभिनयास्मान्[14]। सूयवसं[15] देशं प्रापय। नच[16]। नवज्वालो[17] दवाग्निः। अध्वने भवतु[18]।

---

१. अथा D. २. अधशब्दः पदपूरणः। अपिचेत्यस्य वार्थे Sk.

३. पश्वक ० P. कृत्स्नधनयुक्त! यद्वा कृत्स्नसौभाग्ययुक्त Sy. बहु शोभनं धनं यस्य स विश्वसौभगः Sk.

४. Omitted by P. and D. अतिशयेन सुवर्णमयायुधवन् Sy.

५. ० वान् युक्त P. D. M. हिरण्यसदृशी प्रीतिकरी हितरमणा वातिशयेन यस्य वाक् स हिरण्यवाशीमत्तमः Sk. ६. सुलभानि।...यानि धनानि लब्धुं वयं प्रस्थितास्तानि सुलभानि कुर्वित्यर्थः Sk. ७. अस्मद्बाधनाय प्राप्नुवतः शत्रून्, नोऽत्यस्मानतिक्रम्य ... अन्यत्र प्रापय Sy. सश्चतो गच्छतः Sk.

८. ०येन य P. D. ९. सुष्ठु गन्तुं शक्येन ...शोभनमार्गेण Sy. १०. Omitted byP. ११. करोतिः... सामर्थ्यादिह नयने वर्तते। नय Sk. १२. ० न M. आत्मीयं कर्म रक्षाख्यम् Sk.

१३. ० यति P. जानीहि Sy. जानीहि। ज्ञानेन चात्र करणं प्रतिपाद्यते। कुर्वित्यर्थः। तव ह्येतत्कर्म यत्पथि रक्षणम् Sk.

१४. प्रापय। प्रतिदेह्यस्मभ्यमित्यर्थः Sk.

१५. शोभनतृणोपलक्षितं सर्वौषधियुक्तम् Sy. शोभनमन्नम् Sk. १६. वा M.

१७. नूतनः सन्तापः।...मार्गे गच्छतामस्माकमिदानीन्तनः क्लेशः कोऽपि मा भूत् Sy. ज्वरसदृशत्वाज्ज्वारोऽत्र बुभुक्षोच्यते। सा नवा यस्य स नवज्वारोऽत्यन्तबुभुक्षितः। स नाध्वने न समर्थोऽध्वने। यस्माद् बुभुक्षितो नाध्वानं गन्तुं शक्नोतीत्यर्थः। अथवा नवं नवं ज्वरयति पुनः पुनः सन्तापयतीति नवज्वारोऽग्निरादित्यो वोच्यते। नशब्दश्च पुरस्तादुपचारोऽप्यत्र सामर्थ्यादुपमार्थीयो द्रष्टव्यः। नवज्वारो न अग्निरादित्यो वा इव। यथाग्निरादित्यो वा प्रापयति तद्वदित्यर्थः। किमर्थम्? अध्वने मार्गार्थम्। पथ्यदनार्थमित्यर्थः।.. .. अथवैवमन्यथास्या ऋचोऽर्थयोजना। शोभना यवसा यस्मिन् स सूयवसः। तं सूयवसं सन्तं देशं प्रापयास्मान्। नवज्वार इव। किञ्चाध्वने पूषन्निह। अध्वन इति सप्तम्यर्थे चतुर्थी इहेत्यनेन समानाधिकरणः। इहाध्वनि हे पूषन् क्रतुं रक्षणाख्यमात्मकर्म विदः Sk. १८. भवत M.

**शग्धि पूर्धि प्र यंसि च शिशीहि प्रास्युदरम् । पूषन्निह क्रतुं विदः ॥९॥**

शग्धि । शक्तो भव[1] । पूरय कामान्[2] । प्रयच्छ धनानि[3] । संस्कुरु[4] । चास्मान्[5] । पूरय च । उदरम्[6] ।

**न पूषणं मेथामसि सूक्तैरभि गृणीमसि । वसूनि दस्ममीमहे ॥१०॥**

न पूषणम् । न वयम् । पूषणम् । आक्रोशामः[7] किन्तु । सूक्तैः[8] । अभिष्टुमः । धनानि । दर्शनीयम्[9] । याचामहे[10] ।

I.43.

**कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे । वोचेम शंतमं हृदे ॥१॥**

कद्रुद्राय । कदा वयम् । रुद्राय । प्रचेतसे[11] । सेक्तृतमाय[12] । वृद्धाय[13] । हृदयस्य[14] । शन्तमं[15] स्तोत्रम् । वोचेमेति स्तोतुकामस्य वचनम् ।

**यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम् ॥२॥**

यथा नः । यथा । अस्माकमियम् । पृथिवी[16] । भेषजम् । पश्वादिभ्यः[17] । कुर्यादिति ।

---

१. शग्धीति याच्ञाकर्मा । याच्ञया चात्र दानं लक्ष्यते । देहि Sk.
२. बहु देहीत्यर्थः Sk.
३. प्रकृष्टं च देहीत्यर्थः Sk.
४. अन्यदप्यपेक्षितं वस्तु Sy.
५. अस्मान् सर्वेषु मध्ये तीक्ष्णीकुरु, तेजस्विनः कुर्वित्यर्थः Sy. सर्वार्थयोग्यं कुर्वित्यर्थः Sk. ६. जीवनोपायं चास्माकं कल्पयेत्यर्थः Sk. ७. निन्दामः Sy. नायोग्याभिः स्तुतिभिः स्तुम इत्यर्थः Sk.
८. शोभनैर्वचनैः Sk. ९. चौराणां तपसां चोपक्षयितारं दर्शनीयं वा Sk.
१०. Ms. D. puts the figure ॥४२॥ here to indicate the end of the fortysecond hymn. No such number is given in P. and M. ११. प्रवृद्धज्ञानाय Sk.
१२. ॰माया P. मीढु इति धननाम । तद्वान् मीढ्वान् । अथवा मिह सेचने इत्यस्य वा । मीढ्वान् सेक्ता । मध्यमस्थानत्वाद्वर्षिता रुद्रः । अतिशयेन मीढ्वा मीढुष्टमः । तस्मै मीळ्हुष्टमाय Sk.
१३. Omitted by M.
१४. अस्मदीयहृन्निष्ठाय Sy.
१५. सुखतमं... मनसः प्रीतिकरमित्यर्थः Sk.
१६. अनुपक्षीणो रुद्रः Sk.
१७. सर्वत्र द्वितीयार्थे चतुर्थी । पशुम् अश्वादिपशुजातं नॄन् परिचारकांश्च मनुष्यान् । यथा च गां गोजातम् । यथा च तोकाय । तोकमपत्यम् । कीदृशम्? रुद्रियं रुद्रार्हम् । यद्रुद्र एव दातुमर्हति नान्यः कश्चिदित्यर्थः । अथवा पश्व इत्याद्याः स्वार्थ एव तादर्थ्यचतुर्थ्यः । अदितिरित्यदितिशब्दोऽनुपक्षयवचनः । द्वितीयार्थे चात्र प्रथमा । यथा नोऽस्माकमदितिमनुपक्षयं कुर्यात् । पश्वाद्यर्थमिति । यथाऽस्मदीयानां पश्वादीनामनुपक्षयं कुर्यादित्यर्थः । अथवाऽदितिरिति स्वार्थ एव प्रथमा । न इत्यपि चतुर्थी । क्रियमाणं तत् । सामर्थ्यात्पालनम् । यथाऽस्मदीयं पश्वाद्यर्थं च पालनं कुर्यात् । यथास्माकमस्मदीयानां पालनं कुर्यादित्यर्थः । कीदृशमनुपक्षयं पालनं वा? उच्यते । रुद्रियं रुद्रार्हमिति । यथा नोऽस्मानदितिः करत्पश्वाद्यनुपक्षयपालनानामन्यतमं तथा कद्रुद्राय वोचेम शन्तमं स्तोममित्येवमस्या ऋचो यथाशब्दश्रुतेः पूर्वयर्चैकवाक्यता Sk.

**यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति । यथा विश्वे सजोषसः ॥३॥**

**यथा नः** । यथा । अस्मान् । मित्रावरुणौ जानीतो[1] रुद्रस्तुतिप्रवृत्तान् । यथा वा स्वयम् । रुद्रः । यथा वा । सर्व एव देवाः । एकीभूता[2]स्तथा कदा वोचेमेति ।

**गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् । तच्छंयोः सुम्नमीमहे ॥४॥**

**गाथपतिम्** । स्तोत्र[3]पतिम् । यज्ञपतिम् । रुद्रम् । सुखकरं[4] भेषजम् । बार्हस्पत्यस्य शंयोर्यत्[5] प्रजा[6]विषयम् । सुखम् । तत् । याचामहे[7] ।

**यः शुक्रइव सूर्यो हिरण्यमिव रोचते । श्रेष्ठो देवानां वसुः ॥५॥**

**यः शुक्रइव**[8] । यः । ज्वलन्निव[9] । सूर्यः[10] । हिरण्यमिव । रोचते । श्रेष्ठः[11] । देवानाम् । वासयितो[12]त्तरत्र सम्बन्धः ।

**शं नः करत्यर्वते सुगं मेषाय मेष्ये । नृभ्यो नारिभ्यो गवे ॥६॥**

**शं नः करति** । सोऽस्माकम्[13] । अश्वादीनाम् । शोभनगमनम्[14] । सुखम् । करोतु ।

---

१. ०नीते P.

२. समानप्रीतयः Sy.
सम्प्रीयमाणाः । यथा मित्रादीनां देवानामपि प्रकाशा भवेम तथा कदा रुद्राय वोचेम स्तौम ? (स्तुयाम) इत्यर्थः । एवमनयोरप्यृचोर्यथा नो अदितिः करत् पश्वाद्यनुपक्षयपालनानामन्यतरद् यथा चापि मित्रादयो देवा अपि चिकेतन्ति तथा कदा रुद्राय वोचेम शन्तमं हृदयस्य स्तोममिति यथाशब्दश्रुतेः पूर्वयर्चैकवाक्यभावात् तस्याश्च रुद्रप्राधान्यादनयोरपि रुद्रप्राधान्यमेवावगम्यते Sk.

३. स्तुतिभिः स्तुत्यमित्यर्थः Sk.

४. ०करभे० D. सुखरूपौषधोपेतम् । यद्वा उदकरूपौषधोपेतम् Sy.
सुखस्योत्पादकमित्यर्थः Sk.

५. सुखकरम् Sk.

६. प्रज्ञा० M.

७. अस्य यजमानस्यात्मनो वा कण्वाख्यस्यर्षेरर्थाय Sk.

८. Omitted by P. D. M.

९. सूर्यवद्दीप्तिमान् Sy.
यथा शुक्रवर्णः सूर्यः Sk.

१०. सोर्यः M.

११. अत्रेष्टः M.

१२. वसुर्धनवान् प्रशस्यो वा Sk.

१३. सुखमस्माकं स्वभूताय . . . करोतु । . . . अश्वाय Sk.

१४. ०नाग० D.
सुप्रियमित्यर्थः । अथवा शं सुगमिति समुच्चीयमाने एते । सुखं च पन्थानं च करोत्वित्यर्थः Sk.

**अस्मे सो॑म॒ श्रिय॒मधि॒ नि धे॑हि श॒तस्य॑ नृ॒णाम् । महि॒ श्रव॑स्तुविनृ॒म्णम् ॥७॥**

**अस्मे सोम ।** सौम्यस्तृचः—अस्मासु । सोम ! श्रियम् । अधिनिधेहि[1] । मनुष्याणाम्[2] । शतस्य पर्याप्तिम्[3] । महच्च । अन्नम्[4] । बहुबलम् ।

**मा नः॑ सोमपरि॒बाधो॒ मारा॑तयो जुहुरन्त । आ न॑ इन्दो॒ वाजे॑ भज ॥८॥**

**मा नः सोम०**[5] । मा । अस्मान् । अपहर्तारः[6] । हिंसन्तु[7] । सोम ! मा च । शत्रवस्त्वम् । अस्मान् । इन्दो ! सङ्ग्रामे[8] । सेवस्व ।

**यास्ते॑ प्र॒जा अ॒मृत॑स्य॒ पर॑स्मि॒न्धाम॑न्नृ॒तस्य॑ ।**
**मू॒र्धा नाभा॑ सोम वेन आ॒भूष॑न्तीः सोम वेदः ॥९॥**

**यास्ते प्रजाः ।** याः । ते । सोम ! प्रजाः[9] । अमृतस्य[10] । तृतीये[11] । लोके । स्थितस्य परिचरन्ति[12] तासां तद्धविः[13] । सर्वेषामुच्छ्रितस्त्वम्[14] । उत्तरवेदिनाभौ[15] । कामयस्व त्वाम्[16] । परिचरन्तीश्च ताः[17] । जानीहीति[18] ।

१. अधिशब्दः . . . पदपूरणः । निधेहि स्थापय । अस्मभ्यं देहीत्यर्थः Sk.
२. ०ष्यां M. ३. ०प्तां M. पुरुषाणां शतस्य पर्याप्ताम् Sy. मनुष्यशतस्य योग्याम् । अत्यन्तमहतीमित्यर्थः Sk. ४. यशः Sk.
५. The mss. add सोम after नः as a part of *pratīka* but सोम is not a complete word as it is one of the members of a compound. A Vedic *pratīka* always ends on a complete word or phrase. सोमं M. ६. सोमस्य परितो बाधका यागरहिताः Sy. सोमस्य परिबाधितारोऽपहर्तारो राक्षसादयः Sk.
७. मा यज्ञेऽन्यत्र वा संमोहं प्रापिपन्नित्यर्थः Sk. ८. बलविषयेऽन्नविषये वा Sy. सङ्ग्रामस्थानीये यज्ञे सङ्ग्राम एव वा Sk.
९. षष्ठीनिर्देशात् परिचारका इति वाक्यशेषः । यास्ते तव परिचारका अस्मदाद्याः प्रजाः Sk. १०. अमरणधर्मणः Sk.
११. तृती P. वेद्याख्ये स्थाने Sk.
१२. ऋतस्य गतस्य प्राप्तस्य वेदिस्थस्य सत इत्यर्थः Sk. १३. तान्त० P. तांत०D. तान्तर्धविः M. १४. मूर्धा मूर्धनि प्रधानभूते Sk. १५. वेदिना० P. D. M. संनहनयुक्ते यज्ञगृहे Sy.
१६. कामस्व P.D. १७. अलङ्कुर्वन्तीः Sy. मर्यादया त्वलङ्कुर्वन्तीः . . . अथवाऽऽभूषन्तीरिति भू सत्तायामित्यस्यैव रूपम् । मर्यादया भवन्तीः श्रुतिस्मृत्युदितया मर्यादया वर्तमानेत्यर्थः । हे सोम वेदः । विदित्वा च मत्प्रवणा एता न्यायवृत्ताश्चेति मन्यमानः कामयस्वेत्यर्थः Sk.
१८. Ms. D. puts the figure ॥४३॥ here to indicate the end of the fortyfourth hymn. No such number is given in P. and M.

## I 44.

अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥१॥

अग्ने विवस्वत्। प्रस्कण्वः[1] काण्वः। अग्ने! परिचरणवत्[2]। उषसः। पूज्यम्[3]। धनम्[4]। अमर्त्य[5]! यजमानाय। आवह[6]। जातधन[7]! त्वं तथा। उषर्बुधश्च[8]। अद्य[9]। देवानावह[10]।

जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् ।
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥२॥

जुष्टो हि। पर्याप्तः[11]। हि[12]। दूतस्त्वम्[13]। असि। हविषां वोढा। अग्ने! रथीः[14]। अध्वराणाम्। "रथो[15] ह वा एष भूतो[16] देवेभ्यो हव्यं वहति" इति ब्राह्मणम्। स त्वमश्विभ्याम्[17]। उषसा च। सहितः। शोभनवीर्यम्। महत्। अन्नम्[18]। अस्मासु[19]। धेहि[20]।

---

१. कण्वः P.
२. विशिष्टनिवासोपेतम् Sy. विवासनवत्। तमसां विवासनकरम्। किं तत्? सामर्थ्याज्ज्योतिः Sk.
३. नानाविधम् Sy. विचित्रं पूज्यं वा Sk.
४. धननामैतत्। इह तु धनसादृश्यादौषसे ज्योतिषि वर्तते। उज्ज्वलनत्वेन प्रीतिकरत्वेन धनसदृशम् Sk.
५. ममर्त्य M.
६. वह P.
७. जातानां वेदितः Sy. जातप्रज्ञान Sk.
८. तथो उर्बु० P. ०षबु० M. यागगमनार्थमुषःकाले ये बुध्यन्ते त-उषर्बुधस्तान्। अथवा विवस्वदित्यग्नेरेव सम्बोधनम्।...उषस इत्यपि द्वितीया-बहुवचनान्तं हूयमानवचनम्। चित्रं राध इत्यपि हविर्लक्षणं धनमभिप्रेतम्। द्वितीयानिर्देशाच्च कर्मप्रवचनीयप्रति-शब्दाध्याहारः। हे अग्ने विवस्वद् विवसनवत्! तमसां विवासयितः! उषसं चित्रं हविर्लक्षणं धनं प्रति देवांश्चावह Sk.
९. अद्या P.
१०. देवानां वहः M.
११. सेवितः Sy. प्रियः Sk.
१२. हिशब्दो यस्मादर्थे Sk.
१३. दूरतस्त्वम् M.
१४. रथो यस्यास्ति (इति) स रथी सारथिः। तत्स्थानीयश्च Sk.
१५. रहोऽय वा M. अथो ह वा D.
१६. दूतो P.
१७. यस्मादिति वचनात् तस्मादित्यध्या-हर्तव्यम्। तस्मात् सजूः सम्प्रीयमाणोऽ-श्विभ्यामुषसा च सह Sk.
१८. श्रवो धनं यशोऽन्नं वा Sk.
१९. अस्मभ्यम् Sk.
२०. देहि Sk.

**अद्या दूतं वृणीमहे वसुमग्निं पुरुप्रियम् ।**
**धूमकेतुं भाऋजीकं व्युष्टिषु यज्ञानामध्वरश्रियम् ॥३॥**

**अद्या[१] दूतम्** । अद्य[२] । दूतम्[३] । वृणीमहे । वासयितारम्[४] । अग्निम्[५] । बहुप्रियम्[६] । धूमप्रज्ञानम्[७] । प्रसिद्धभासमुषसः[८] । व्युष्टिषु[९] । यज्ञानाम्[१०] । योऽध्वरं[११] श्रयति ।

**श्रेष्ठं यविष्ठमतिथिं स्वाहुतं जुष्टं जनाय दाशुषे ।**
**देवाँ अच्छा यातवे जातवेदसमग्निमीळे व्युष्टिषु ॥४॥**

**श्रेष्ठं यविष्ठम्** । प्रशस्यतमम्[१२] । युवतमम् । यजमानानाम् । अतिथिम्[१३] । सुष्ठ्वाहुतम् । पर्याप्तम्[१४] । जनाय[१५] । यजमानाय[१६] । देवान् । प्रति । गन्तुम् । जातप्रज्ञम्[१७] । अग्निम् । स्तौमि । प्रातः-कालेषु[१८] ।

**स्तविष्यामि त्वामहं विश्वस्यामृत भोजन ।**
**अग्ने त्रातारममृतं मियेध्य यजिष्ठं हव्यवाहन ॥५॥**

**स्तविष्यामि[१९]** । स्तोष्यामि[२०] । त्वाम्[२१] । अहम् । अमृत[२२] ! सर्वस्य पुरुषस्य[२३] । भोजयितः[२४] ! अग्ने ! रक्षितारम्[२५] । अमृतम्[२६] । यज्ञार्ह[२७] ! यष्टृतमम्[२८] । हविषां वोढः !

---

१. अद्य M. २. अद्या D.
३. अद्य । दूतम् omitted by P.
४. धनवन्तं प्रशस्यं वा Sk.
५. अग्नि P.
६. बहूनां यजमानानां प्रियम् Sk.
७. धूमरूपध्वजयुक्तम् Sy. धूमेन यः केत्यते ज्ञायते स धूमकेतुस्तं धूमकेतुम् । अथवा धूमस्य कर्ता धूमकेतुस्तं धूमकेतुम् Sk.
८. भा दीप्तिर्यस्य स भाऋजीकः । . . . तं भाऋजीकं ऋजुभासम् Sk.
९. व्युष्ट M. उषसः व्युष्टिवेलायाम् । प्रभातकाल इत्यर्थः Sk.
१०. यजमानानाम् Sy. ११. सो० M. अध्वरार्हिंसिता श्रीर्येन सोऽध्वरश्रीः Sk.
१२. ०तम P. १३. अतिथिस्थानीयं यजमानानाम् Sk. १४. प्रीतम् Sy. सर्वयजमानैर्जुष्टं प्रियम् Sk. १५. P. adds ये after जनाय १६. Omitted by M. षष्ठ्यर्थे चतुर्थी । यजमानस्य Sk. १७. जातानां वेदितारम् Sy.
१८. प्रातस्तौमि कालेषु P. उषःकालेषु Sy.
१९. स्तोष्या P. २०. स्तविष्यामि P.
२१. त्वम् D. २२. अम्यत M. मरणवर्जित ! Sk. २३. कृत्स्नस्य जगतः पालक ! Sy. सर्वस्य हविर्लक्षणस्यान्नस्य भोक्तः ! Sk. २४. ०यितारम् M.
२५. सर्वस्तोतॄणाम् Sk.
२६. अम्यतं M. २७. यज्ञार्हं P. D. M.
२८. Omitted by P. and D.

सुशंसो बोधि गृणते यविष्ठ्य मधुजिह्वः स्वाहुतः ।
प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे नमस्या दैव्यं जनम् ॥६॥

सुशंसो बोधि। सुस्तवः[1]। बुध्यस्व। स्तुवते[2]। युवतम ! मादयितृजिह्वः[3]। स्वाहुतः[4]। प्रस्कण्वस्य मम। जीवनाय। आयुः। वर्धयन्। नमस्कुरु[5]। सर्वान् देवान्।

होतारं विश्ववेदसं सं हि त्वा विश इन्धते ।
स आ वह पुरुहूत प्रचेतसोऽग्ने देवाँ इह द्रवत् ॥७॥

होतारं विश्ववेदसम्। होतारम्[6]। सर्वधनम्[7]। समिन्धते[8]। हि[9]। त्वाम्। विशः[10]। स त्वम्। आवह। पुरुहूत[11] ! प्रचेतसः[12]। अग्ने ! देवान्[13]। इह। क्षिप्रम्[14]।

सवितारमुषसमश्विना भगमग्निं व्युष्टिषु क्षपः ।
कण्वासस्त्वा सुतसोमास इन्धते हव्यवाहं स्वध्वर ॥८॥

सवितारम्। सवितृप्रभृतीन्। अग्निं च। यष्टव्यम्। रात्र्याः[15]। व्युष्टिषु त्वमावह[16]। कण्वपुत्राः[17]। अभिष्टुतसोमाः[18]। त्वाम्। दीपयन्ति। हव्यवाहम्। स्वध्वर[19] !

---

१. स्तुस्तवः M.
यतच्छब्दावध्याहृत्यैकवाक्यता नेया। यस्त्वं सुशंसः स बोधि बुध्यस्व। शृण्वित्यर्थः Sk.
२. स्तवते P.
स्तुवतो मम Sk.
३. ०जिह्व P. D. M.
मधुस्वादमाज्यं मधु तस्मिन् जिह्वा यस्य स मधुजिह्वः। नित्यमाहुतिलक्षणस्यास्वादयितेत्यर्थः। अथवा जिह्वेति वाङ्नाम। मधुरवचनान्मधुजिह्वस्तस्य सम्बोधनं हे मधुजिह्वः Sk.
४. न्वाहुतः P.
५. पूजय Sy.
६. तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यं होतारम् Sk.
७. ०जनम् P. D. सर्वज्ञम् Sy. सर्वप्रज्ञं वा Sk.
८. सन्दीपयन्ति Sk.
९. हिशब्दः पदपूरणः Sk.
१०. मनुष्याः Sk.
११. बहुभिराहूत ! Sk.
१२. प्रचेतसम् P.D. प्रवृद्धज्ञानान् Sk.
१३. देवा हि M.
१४. अग्ने। देवान्। इह। क्षिप्रम्। Omitted by P. and D.
१५. प्रभातकाल इत्यर्थः Sk.
१६. त्वं मावह त्वं M.
१७. मेधाविन ऋत्विजः Sy.
मत्प्रभृतयः Sk.
१८. ०ष्टुत स्मेमाः M.
१९. This stanza is omitted by P. and D.

पतिर्ह्यध्वराणामग्ने दूतो विशामसि ।
उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ॥९॥

पतिर्हि । पतिः । हि[1] । यज्ञानाम्[2] । अग्ने ! दूतः । विशाम्[3] । असि सः । उषसि प्रबुद्धान् । आवह[4] । सोमपानाय । देवान् । अद्य । सर्वस्य । द्रष्टॄन्[5] ।

अग्ने पूर्वा अनूषसो विभावसो दीदेथ विश्वदर्शतः ।
असि ग्रामेष्ववित पुरोहितोऽसि यज्ञेषु मानुषः ॥१०॥

अग्ने पूर्वाः । अग्ने ! गतासु[6] । अपि । उषःसु[6] । विभावसो[7] ! प्राज्वलः[8] । सर्वस्य दर्शनीयः[9] स त्वम् । ग्रामेषु[10] । असि गृहेषु । पुरोनिहितः । रक्षिताऽरण्येषु च । यज्ञेषु[11] । पुरोहितः । मनुष्यहितः[12] ।

नि त्वा यज्ञस्य साधनमग्ने होतारमृत्विजम् ।
मनुष्वद्देव धीमहि प्रचेतसं जीरं दूतममर्त्यम् ॥११॥

नि[13] त्वा[14] यज्ञस्य । निधीमहि[15] । त्वाम् । यथा मनुर्[16]निदधे[17] तद्वदिति[18] ।

---

१. पतिः । हि omitted by M.
हिशब्दो यस्मादर्थे Sk.
२. पतिर्हि । पतिः । हि । यज्ञानाम् omitted by P. and D.
३. मनुष्याणाम् Sk.
४. ०हसे D.
५. द्रष्टन् P. सूर्यदर्शिनः Sy.
स्वरादित्यो द्यौर्वा । तद्वद्ये दृश्यन्ते ये तस्य द्रष्टारो वा ते स्वर्दृशस्तान् । आदित्यस्य दिवो वा सदृशास्तद्दर्शिनो वेत्यर्थः Sk.
६. गताः स्वव्युषः स M.
अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । एकस्या एव चोषसः कालभेदापेक्षया पूर्वापरव्यपदेशः । अवयवापेक्षं च बहुवचनम् । पूर्वा उषसः प्रत्यद्यैवोषस उदयकाल इत्यर्थः Sk.
७. विविधा भा धनस्य यस्य स विभावसुस्तस्य सम्बोधनं हे विभावसो Sk.
८. दीप्यस्व Sk.
९. सर्वजनप्रकाश इत्यर्थः Sk.
१०. जनपदनिवासस्थानानि ग्रामः । तेषु रक्षिता Sk.
११. यज्ञेषु च पूर्वस्यां दिश्याहवनीयात्मना स्थापितः पुरोहितस्थानीयो वाऽसि Sk.
१२. ०ष्यस्य हितः P.
मानुषो मन्त्रज्ञाता । अथवा मानुष इति षष्ठी । मनुष्यस्य स्वभूतेषु यज्ञेषु Sk.
१३. हि D. M.
१४. त्वं P.
१५. यज्ञे स्थापयाम इत्यर्थः Sk.
१६. मनुष्यवत् Sk.
१७. मनुन्निदधे P.
१८. V. Mādhava ignores यज्ञस्य । साधनम् । अग्ने । होतारम् । ऋत्विजम् । देव । प्रचेतसम् । जीरम् । दूतम् । अमर्त्यम्

यद्देवानां मित्रमहः पुरोहितोऽन्तरो यासि दूत्यम् ।
सिन्धोरिव प्रस्वनितास ऊर्मयोऽग्नेर्भ्राजन्ते अर्चयः ॥१२॥

यद् देवानाम् । यत्[1] । देवानाम्[2] । मित्राणां पूजयितः[3] ! मनुष्यैः पुरोहितो[4] देवानां[5] मनुष्याणाम् । मध्ये वर्तमानः[6] । यासि । दूत्यं[7] तदानीम् । समुद्रस्येव[8] । प्रकृष्टशब्दाः । वीचयस्तव । अग्ने ! भ्राजन्ते[9] । दीप्तयः ।

श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।
आ सीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ॥१३॥

श्रुधि श्रुत्कर्ण । शृणु । श्रवणपरकर्ण[10] ! हविषां वोढृभिरन्यैः[11][12] । त्वया सहैकगमनैः[13] । यज्ञं[14] च । प्रातर्गच्छद्भिस्तेऽस्मिन्[15][16] । बर्हिषि । आसीदन्तु । मित्रः । अर्यमा चेति[17] ।

शृण्वन्तु स्तोमं मरुतः सुदानवोऽग्निजिह्वा ऋतावृधः ।
पिबतु सोमं वरुणो धृतव्रतोऽश्विभ्यामुषसा सजूः ॥१४॥

शृण्वन्तु स्तोमम् । त्वया ह्रूयमानाः शृण्वन्तु । स्तोमम् । मरुतः ! शोभनदानाः[18] । अग्न्यास्याः[19] ।

---

१. यदा Sk.

२. यत् देवानाम् omitted by P. and M.

३. ०यिता P. ०यितं M. पूजक Sy. पूज्य वा Sk.

४. पूर्वस्यां दिश्याहवनीयात्मना स्थापितः Sk. ५. देवयजनमध्ये वर्तमानः Sy. अन्तरः सन्निकृष्टः। कस्य सामर्थ्याद्देवानां यजमानानां वा। . . . आहवनीयमास्थाय देवानां दूतकर्म करोषीत्यर्थः Sk.

६. ०मानाय असि P.

७. देवानां . . . दूतकर्म Sy.

८. यथा सिन्धोर्नद्या महान्तः शब्दवन्त ऊर्मयो भ्राजेरन् तद्वत्तवाग्नेर्भ्राजन्तेऽर्चयो ज्वालाः Sk.

९. भूजंते M. १०. श्रोतृकर्ण Sk.

११. वोढृभिः वोढूभिः P.

१२. अन्यैः omitted by P. and D.

१३. ०काग० P. हव्यं गृहीत्वा त्वया सह ये यान्ति ते सयावानः। तैस्सयावभिः Sk.

१४. अध्वरम्। सप्तम्यर्थे द्वितीया। बर्हिषीत्यस्य चेदं विशेषणम्। अस्मदीयेऽध्वरे यद् बर्हिस्तत्र Sk.

१५. अन्ये च प्रातर्यावाणः प्रातर्गामिनो देवाः Sk. १६. तस्मिन् M.

१७. V. Mādhava ignores देवैः। अग्ने

१८. शोभनदातारः शोभनदाना वा Sk.

१९. अग्नियास्याः P. अग्निर्जिह्वास्थानीयो मुख्यो येषु मरुत्सु तादृशाः Sy. अग्निर्जिह्वास्थानीयो येषां तेऽग्निजिह्वाः। सर्वेषामेव हि देवानामग्निर्जिह्वास्थानीयः Sk.

यज्ञस्य[1] वर्धयितारः। पिबतु। सोमम्। वरुणः। घृतकर्मा[2]। अश्विभ्याम्। उषसा च। सहितः[3]।[4]

I.45.

त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत।
यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥१॥

त्वमग्ने वसून्। त्वम्। अग्ने![5] अस्मिन् यज्ञे। वस्वादीन्। यज। तद्व्यतिरिक्तमपि दैव्यम्[6]। जनम्। सुयज्ञम्[7]। मनुष्येषु[8] प्रादुर्भवन्तम्। घृतं[9] प्रति गन्तारम्।

श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः।
तान्रोहिदश्व गिर्वणस्त्रयस्त्रिंशतमा वह ॥२॥

श्रुष्टीवानो[10] हि। क्षिप्रसम्भक्तारः[11]। हि[12]। दाशुषे। देवाः। अग्ने! सुमतयः[13]। तान्। रोहिदश्व[14]! गीर्भिर्वननीयेह[15]। आवह[16]। त्रयस्त्रिंशत्संख्याकान्[17]।

---

१. सत्यस्य यज्ञस्य वा वर्धकाः Sy.

२. घृतव्रताकर्मा P.
अपरित्यक्तस्वव्यापारः Sk.

३. P. adds निति after सहितः।
सह प्रीयमाणः Sk.

४. Ms. D. puts the figure ॥४४॥ here to indicate the end of the fortyfourth hymn. No such number is given in P. and M.

५. त्वम्। अग्ने! omitted by P.

६. देव्यं M.

७. ०ज्ञेषु P. D.

८. मनुना प्रजापतिनोत्पादितम् Sy.
मनोः प्रजापतेः सकाशाज्जातम् Sk.

९. उदकस्य सेक्तारम् Sy.
उदकस्य क्षरितारम्। वर्षितारमित्यर्थः। अथवाऽऽहुतिलक्षणं घृतं प्रतिक्षरतीति घृतप्रुषम्। सर्वयजमानानामाज्याहुतिभिर्यष्टव्यमित्यर्थः Sk.

१०. श्रुष्टि० D.

११. श्रुष्टिः फलस्य दानम्। तद्भाजः खलु Sy.
अथवा श्रुष्टिशब्दोऽत्र श्रुतवचनः। श्रुतवन्तः श्रुष्टीवानः। बहुश्रुता इत्यर्थः Sk.

१२. हिशब्दः पदपूरणः Sk.

१३. विशिष्टप्रज्ञानाः Sy.
विविधप्रज्ञाः। ऊहापोहसमर्थाः Sk.

१४. श्रोहि० P. ०दश्च D. नोहि० M.
रोहितवर्णा अश्वा यस्य स रोहिदश्वस्तस्य सम्बोधनं रोहिदश्व! Sk.

१५. स्तुतिभिः सम्भजनीय स्तुतीनां वा सम्भक्तः Sk.

१६. नीयेवाहवः P.

१७. ०संध्याकान् P.
अष्टौ वसवः। एकादश रुद्राः। द्वादशादित्याः प्रजापतिश्च वषट्कारश्चेत्येते त्रयस्त्रिंशद्देवाः। तांस्त्रयस्त्रिंशतमावह Sk.

प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।
अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥३॥

प्रियमेधवत्[1]। प्रियमेधादिचतुष्कस्येव। महाकर्मन्! प्रस्कण्वस्यापि। शृणु। ह्वानमिति[2]।

महिकेरव ऊतये प्रियमेधा अहूषत ।
राजन्तमध्वराणामग्निं शुक्रेण शोचिषा ॥४॥

महिकेरवः[3]। महाकर्माणः[4]। ऊतये[5]। प्रियमेधास्त्वाम्[6]। अहूषत[7]। ईशानम्[8]। यज्ञानाम्। अग्निम्। शुक्रेण[9]। तेजसा।

घृताहवन सन्त्येमा उ षु श्रुधी गिरः ।
याभिः कण्वस्य सूनवो हवन्तेऽवसे त्वा ॥५॥

घृताहवन[10]। प्रियघृतहविष्क! भजनशील[11]! इमाः। स्तुतीः। शृणु। याभिः। कण्वपुत्राः। रक्षणाय[12]। त्वाम्[13]। हवन्ते[14] [15]।

---

१. Omitted by P. and D. प्रियमेधः। प्रियाऽस्य मेधा। यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानम्। प्रस्कण्वः कण्वस्य पुत्रः। कण्वप्रभवः। यथा प्राग्रम्। अर्चिषि भृगुः सम्बभूव। भृगुर्भृज्यमानो न देहे। अङ्गारेष्वङ्गिराः। अङ्गारा अङ्कनाः (अञ्चनाः)। अत्रैव तृतीयमृच्छतेत्यूचुः। तस्मादत्रिः। न त्रय इति। विखननाद्वैखानसः। भरणाद् भारद्वाजः। विरूपो नानारूपः। महिव्रतो महाव्रत इति N. 3. 17.

२. V. Mādhava ignores जातवेदः

३. व M.

४. ०र्मणः D. प्रौढकर्माणः Sy. महतः स्तोमस्य कर्तारः Sk.

५. पालनाय तर्पणाय वात्मनः Sk.

६. प्रिययज्ञाः Sk.

७. आहूतवन्त आह्वयन्ति वा Sk.

८. ०मेधाः स्वामहूषत्रे ईशानं M. दीप्यमानम् Sy.

९. शुक्रवर्णया दीप्त्या दीप्तमित्यर्थः। अथवा शुक्रेण च शोचिषेत्येतद्राजन्तमध्वराणामित्येतेन सम्बध्यते। राजतिश्च दीप्त्यर्थः। शुक्रेण शोचिषा राजन्तं दीप्यमानम्। क्व? अध्वराणाम्। षष्ठीनिर्देशान्मध्य इति वाक्यशेषः। यज्ञानां मध्ये। वेदिस्थमित्यर्थः Sk.

१०. ०वनः M. घृतेनाहूयमान! Sy. घृतमाहूयते यस्मिन् स घृताहवनः। तस्य सम्बोधनं हे घृताहवन Sk.

११. फलप्रदाग्ने! Sy. दातः! Sk.

१२. पालनाय तर्पणाय वा Sk.

१३. त्वा M.

१४. वयं कण्वपुत्रा आह्वयाम इत्यर्थः Sk.

१५. V. Mādhava ignores उ। सु

त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः ।
शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे ॥६॥

त्वां चित्रश्रवस्तम[1] । चित्रश्रवसश्रुतेन[2] योऽतिशेषे[3] । यं त्वां स्तुतिभिः । मनुष्येषु[4] । जाताः[5] । भजन्ते[6] । ज्वालाकेशम्[7] । बहुप्रियः[8] । अग्ने ! हविषः[9] । वहनाय[10] ।

नि त्वा होतारमृत्विजं दधिरे वसुवित्तमम् ।
श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु ॥७॥

नि[11] त्वा होतारम् । निदधिरे[12] । त्वाम् । होतारम् । ऋत्विजम् । अतिशयेन धनानां लम्भयितारम्[13] । श्रुत्कर्णम्[14] । सर्वतः पृथुतमम्[15] । मेधाविनः । अग्ने ! दिवसागमनेष्वहर्मुखेषु[16] ।

आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः ।
बृहद्भा बिभ्रतो हविरग्ने मर्ताय दाशुषे ॥८॥

आ त्वा विप्राः । आगमयन्ति[17] । त्वाम् । अभिष्टुतसोमाः । मेधाविनः । सोमलक्षणमन्नम्[18] । अभि । बृहती[19] । दीप्तिः[20] । हविश्च । धारयन्तः । अग्ने । मर्ताय[21] । यजमानाय होतारः[22] ।

---

१. त्वञ्चित्रं श्रवत्तम P. ०स्तमः M.
२. ०श्रवणश्रु० D.
अतिशयेन विविधहवीरूपान्नयुक्त ! Sy.
अतिशयेन पूज्यं चित्रं वाऽन्नं वा धनं वा यशो वा यस्य स चित्रश्रवस्तमः। तस्य सम्बोधनं हे चित्रश्रवस्तम Sk.
३. ष P. ४. प्रजासूत्पन्ना यजमानाः Sy.
मनुष्यलोकेषु Sk.
५. जन्तवो मनुष्याः Sk.
६. भवन्ते M. आह्वयन्ति Sy.
७. ०श P. D.
शोचिर्दीप्तिर्ज्वालाख्या। सा केशस्थानीया यस्य स शोचिष्केशः। तं शोचिष्केशम् Sk.
८. Omitted by P. and D.
९. बहुप्रियागे M. १०. हवनाय M.
११. हि M. १२. स्थापयन्ति Sk.
१३. लब्धृतमम् Sk. १४. श्रुत्कर्तुम् M.
श्रुतिशीलः कर्णो यस्य तम् Sk.
१५. अतिशयेन प्रख्यातम् Sy.
१६. इष्टय एषणानि। दिवः स्वर्गस्यैषणानि येषु यागेषु ते दिविष्टयः Sy.
दिवमिष्यते याभिर्गन्तुं ता दिविष्टयस्तासु। यागेष्वित्यर्थः Sk.
१७. ०गयन्ति M.
आच्यावयन्ति। आह्वयन्तीत्यर्थः Sk.
१८. हविर्लक्षणमन्नमभिलक्ष्य Sy.
१९. ०ती: P. M. महान्तम् Sy.
बृहती भा दीप्तिर्यस्य तद् बृहद्भाः। स्वदीप्त्याऽत्यन्तदीप्तम् Sk.
२०. दीप्तीः P. भासमानम् Sy.
२१. मत्ताय M.
मनुष्यस्य यजमानस्यार्थाय Sk.
२२. होतरः P.

प्रा॒त॒र्याव्णः॑ सहस्कृत सोम॒पेया॑य सन्त्य ।
इ॒हाद्य दैव्यं॒ जनं॑ ब॒र्हिरा सा॑दया वसो ॥९॥

प्रातर्याव्णः।[1] प्रातर्याव्णो देवान्।[2] मथनबलेन कृत![3] सोमपानार्थम्। भजनीय![4] अस्मिन् यज्ञे। बर्हिः। आसादय। दैव्यम्। जनम्। वासयितः![5] पूर्वार्धस्य संग्रह उत्तरः।

अ॒र्वाञ्चं॒ दैव्यं॒ जन॒मग्ने॒ यक्ष्व॒ सहू॑तिभिः ।
अ॒यं सोमः॑ सुदानव॒स्तं पा॑त ति॒रोअ॑ह्न्यम् ॥१०॥

अर्वाञ्चं दैव्यम्। अस्मदभिमुखम्। दैव्यम्। जनम्। अग्ने![6] यज। समानाह्वानैस्तत्त-[7] दनुचरैः[8] सह। अथ देवानाह—अयम्। सोमोऽभिषुतः। शोभनदानाः! तम्। पिबत। पूर्वस्मिन्नहनि[9] तिरोभूते जातमथवा[10] प्राप्तेऽहनि[11] प्रादुर्भूतमिति।[12]

I.46.

ए॒षो उ॒षा अपू॑र्व्या॒ व्यु॑च्छति प्रि॒या दि॒वः । स्तु॒षे वा॑मश्विना बृ॒हत् ॥१॥

एषो उषाः। यतः पूर्वमन्यो न प्रादुर्भवति सा।[13] एषा अपूर्व्या।[14] प्रादुर्भवति।[15] दिवो[16] दुहितृ-त्वात्।[17] प्रिया तत्राहम्।[18] बृहता स्तोत्रेण। वाम्। अश्विनौ! स्तौमि भवतोः काले।[19]

---

१. ०र्याव्नः M.

२. Omitted by D. प्रातर्ये यज्ञान् प्रति गच्छन्ति ते देवाः प्रातर्यावाणः Sk.

३. सहसा कृत! बलादुत्पादित! प्राणाद्धि बलान्मथ्यमानोऽयं जायते। तेनैवमामन्त्र्यते सहस्कृतेति Sk.

४. ज भज० P. फलदातः Sy. दातः Sk.

५. प्रशस्य धनवन् वा Sk.

६. आग्ने M.

७. युगपदाहूयेत्यर्थः। अथवा सहाह्वातारः सहूतयः।. . . .सहाह्वातृभिरन्यैरग्निभिः सहाहूयेत्यर्थः Sk.

८. देवान्तरैः सह Sy.

९. पूर्वस्मिन्न होतारः हनि P. एतन्नामकम्। पूर्वस्मिन् अह्न्यभिषुतो यः सोम उत्तरेऽहनि हूयते तस्यैतन्नामधेयम् Sy. १०. जत० P.

११. ०र्भवतमिति P.

१२. Ms. D. puts the figure ॥४५॥ here to indicate the end of the fortyfifth hymn. No such number is given in P. and M.

१३. यतः पूर्वाऽन्या नास्ति साऽपूर्वा। सर्वप्रथमेत्यर्थः। अपूर्वैवापूर्व्या Sk.

१४. र्वा P. १५. तमो वर्जयति Sy. विवासयति। तमांसि विवासयत्युदितेत्यर्थः Sk. १६. दिवा M.

१७. प्रियः M. अत्यन्तसाहचर्याद् दिवः प्रियोषेत्यभिधीयते Sk.

१८. बृहन्महत् सुष्ठ्वित्यर्थः Sk.

१९. V. Mādhava ignores उ

**या द॒स्रा सिन्धु॑मातरा मनो॒तरा॑ र॒यी॒णाम् । धि॒या दे॒वा व॑सु॒विदा॑ ॥२॥**

या दस्रा[1] । यौ[2] । दर्शनीयौ[3] । नदीनां[4] निर्मातारौ[5] । धनानाम् । अनुमन्तारौ[6] । कर्मणा[7] । देवौ । वसूनां[8] लम्भयितारौ[9] तौ[10] स्तौमि ।

**वच्य॑न्ते वां ककु॒हासो॑ जू॒र्णाया॒मधि॑ वि॒ष्टपि॑ । यद्वां॒ रथो॒ विभि॒ष्पता॑त् ॥३॥**

वच्यन्ते वाम् । उच्यन्ते[11] । युवयोः । स्तोत्राणि[12] । जीर्णायाम्[13] । रात्रा अपररात्रे[14] विष्टब्[15] रात्रिविष्टम्भनात् । यस्मिन् काले । युवयोः[16] । रथः । अश्वैः[17] । पततिः[18] ।

**ह॒विषा॑ जा॒रो अ॒पां पिप॑र्ति॒ पपु॑रिर्नरा । पि॒ता कुट॑स्य चर्ष॒णिः ॥४॥**

हविषा[19] जारः । हविषा[20] । अपाम्[21] । जारयिता[22] तेजसा द्यावापृथिवी । नेतारौ[23] !

---

१. दस्रौ P.
२. Omitted by P.
३. दस्रनामानौ । यद्यपि चाश्विनोरेको दस्रनामा नासत्यनामापरस्तथापि साहचर्यादन्यतरनाम्नापि सर्वत्रोभयोर्व्यपदेशः । ...अथवा...दर्शनीयौ । अथवा... शत्रूणामुपक्षपयितारौ Sk.
४. समुद्रमातृकौ । यद्यपि सूर्याचन्द्रमसावेव समुद्रजौ, तथाप्यश्विनोः केषाञ्चिन्मते तद्रूपत्वात्तथात्वम् Sy.
५. निर्मि० P. वृष्टिद्वारेण Sk.
६. मनसा तारयितारौ Sy. ज्ञातृतरौ ।... अथवा...याचितारौ हविर्लक्षणानां धनानाम् । अथवा...दातृतरौ धनानामित्यर्थः Sk.
७. ०णां P. M. प्रज्ञया Sk.
८. निवासस्थानस्य Sy.
९. लब्धारौ Sk.
१०. Omitted by P.
११. वचतिर्गत्यर्थः । गच्छन्ति Sk.
१२. स्वभूताः . . . महान्तोऽश्वाः Sk.
१३. ०या M. नानाशास्त्रैः स्तुतायाम् Sy. आदिसृष्टावुत्पन्नत्वाद् अत्यन्तचिरन्तनी द्यौर्जूर्णेत्युच्यते Sk.
१४. स्वर्गलोके Sy.
१५. विष्टत्वं P. विष्टभ M. विष्टबिति दिवोऽभिधानम् । जीर्णाया दिव उपरि Sk.
१६. सुव० M. १७. पक्षिसदृशैः Sk.
१८. V. Mādhava ignores अधि
१९. हविषापां जरयिता । पिपर्ति पपुरिरिति पृणातिनिगमौ वा । प्रीणातिनिगमौ वा । पिता कृतस्य कर्मणश्चायितादित्यः N.5.24. २०. सोमलक्षणेन Sk.
२१. ०षा वां P. ०षा चा D. ०षां वा M.
२२. जरयतां P. अपाञ्च जरयिताग्निः । कथम् ? जठरावस्थस्तावदशितपीतं जरयंस्तदन्तर्गता अपो जरयति । अतोऽग्निर्भवत्यपां जारः । अथवाऽपामित्येतद्धविषेत्येतेन सम्बध्यते । वसतीवर्येकधानालक्षणानामपां सम्बन्धिना सोमलक्षणेन । वसतीवर्येकधानामिश्रेण सोमेनेत्यर्थः । जार आहारस्य जरयिताग्निः पिपर्ति... पूरयति । कम् ? प्रकरणसामर्थ्याद् युवामश्विनौ । बहुसोमं युवामश्विभ्यां ददातीत्यर्थः Sk. २३. मनुष्याकारौ Sk.

पूरयिता[1]। कृतस्य[2] कर्मणः। पालयिता। द्रष्टाऽऽदित्यस्तत्र वां[3] स्तौमीति।

**आदारो वां मतीनां नासत्या मतवचसा। पातं सोमस्य धृष्णुया ॥५॥**

आदारो[4] वाम्। तीव्रत्वादादारकः[5]। युवयोः। बुद्धीनां[6] सोमः[7]। नासत्यौ[8]! प्रियस्तोत्रौ[9]! तम्[10]। सोमम्। पिबत। मनसो धर्षणम्[11]।

१. पूरयिता सोमेन। देवानां होतृत्वात्। सर्वदेवानामग्निः सोमेन पूरयिता Sk.

२. कुटस्य चर्षणिः कर्मणो द्रष्टा Sy. पिता पालयिता यज्ञस्य कृत्स्नस्य वा जगतः। कुटस्य चर्षणिः। कुट कौटिल्य इत्यस्य कुटो यज्ञविभ्रंश उच्यते। स हि श्रुतिविहितादृजोर्मार्गादपेतश्च। तस्य चर्षणिर्द्रष्टा। अथवा कुटिलचित्तः कुटः शठः पुमान्। तस्य द्रष्टा। भक्ताभक्तयोः पुंसोर्विशेषज्ञ इत्यर्थः। अथवा कुटशब्दः कृतशब्दपर्यायः। कृतस्य पुण्यस्य पापस्य च द्रष्टेति। यास्कस्तु जारोऽपामित्यादिभिरादित्य उच्यत इति मन्यते। . . . तदनुपपन्नम्। अपां पिपर्ति पपुरिरिति सोमलक्षणेन हविषाश्विपूरणस्यादित्येऽसम्भवात्। रसानुप्रदानान्मध्यमस्याऽनाश्विनत्वप्रसङ्गाच्च। हविषोदकेनापां जार इत्यादिगुणयुक्त आदित्यः पिपर्तीत्यादित्यव्यापारप्रधानत्वादस्या ऋचः सत्यपि नरेत्यश्विनोः सम्बोधने। . . . नच यथाग्न्यभिधानपक्षे सोमलक्षणेन हविषाऽग्निः। हे नरौ युवां पूरयतीत्येवमश्विनोः प्राधान्यश्रवणादाश्विनत्वमेवमादित्याभिधाने सम्भवत्युदकेनाश्विनोरपूर्यमाणत्वात्। आदित्यो हि मध्यमं वोदकेन पूरयेद् भूमिं वा नाश्विनौ। तस्माद्यया व्याख्यातमपां जार इत्यादिभिरग्निरेवोच्यते नादित्यः Sk.

३. वा P.

४. आदरो M.

५. कीप्रत्वादादरकः P. प्रेरकः Sy. आदार इति ण्यन्तस्याद्रियते रूपम्। . . . आदरयिता Sk.

६. बुद्धानां P.
स्तुतीनाम्। युष्मत्स्तुतीराद्रियमाणानामृत्विजां प्रयोजक इत्यर्थः। अग्निर्हि दैव्यो होता तदधिष्ठितास्तु मानुषाः स्तुवन्तीत्यग्नेः स्तुतीराद्रियमाणान् ऋत्विजः प्रति प्रयोजकत्वम्। अथवाऽऽदार इति ण्यन्तस्यैव चाद्रियते रूपम्। वां मतीनामित्यपि मतयो यजमानानां बुद्धयः। आदरिता युवयोर्बुद्धीनाम्। अत्यन्तं युष्मत्परिचर्यापरत्वाद्युवां मनसा चिन्तयतस्तस्याप्यादरितेत्यर्थः Sk.

७. सोमपा P.

८. नासत्यनामानौ। अथवा सत्यावेव नासत्यौ। द्वौ प्रतिषेधौ प्रकृतिं गमयतः। सत्यावेव Sk.

९. अभिमतवचनेन Sk.

१०. स्तोमं P.
सोमस्य वैकदेशं स्वांशलक्षणम् Sk.

११. प्रथमाया अयं यादेशः। क्रियाविशेषणञ्चैतद् द्रष्टव्यम्। धृष्णु यद् धृष्टं प्रगल्भम्। निःशङ्कौ सर्वलोकप्रकाशं पिबतमित्यर्थः Sk.

**या नः पीपरदश्विना ज्योतिष्मती तमस्तिरः । तामस्मे रासाथामिषम् ॥६॥**

या नः पीपरत्[1] । यदन्नम् । अस्मान्[2] । उज्ज्वलम्[3] । अश्विनौ ! दारिद्र्यलक्षणात्[4] तमसः[5] । अन्यत्र । पारयति । तत् । अन्नम् । अस्मभ्यम् । दत्तम् ।

**आ नो नावा मतीनां यातं पाराय गन्तवे । युञ्जाथामश्विना रथम् ॥७॥**

आ नो नावा । आयातम् । अस्माकं[6] भवतोः । नावा । स्तोत्राणाम् । पारम्[7] । गन्तुम्[8] । जलमुत्तीर्य । अश्विनौ । आगच्छतस्तत ऊर्ध्वं गमनार्थम् । रथं च[9] युञ्जाथामिति ।

**अरित्रं वां दिवस्पृथु तीर्थे सिन्धूनां रथः । धिया युयुज्र इन्दवः ॥८॥**

अरित्रं[10] वाम् । समुद्रगमनसाधनं[11] जलपात्रम् । वाम् । दिवोऽपि । पृथग्[12] भवत्यथ । जलानाम्[13] । उत्तरणदेशे[14] । रथ उपतिष्ठति[15] । कर्मणा[16] नानाविधेन यज्ञे । सोमाश्च[17] भवद्भ्याम्[18] । युज्यन्ते[19] ।

---

१. यानावपरां P. याना पी० D.
२. अस्माद् P. D. अस्माकम् Sk.
३. रसवीर्यादिरूपज्योतिर्युक्ता Sy. ज्योतिषा सारवती सर्वलोकप्रकाशा वा Sk.
४. दारिद्र्यरूपमन्धकारं . . . अन्तर्हितं विनष्टं कृत्वा Sy.
५. तमस्तिरः। तिरस्सत इति प्राप्तस्य नाम। प्राप्तं मानसं तमः। येनानेन पुत्रदारपोषणशक्तिप्रतिघातजेन मानसेन व्याप्ताः . . . अथवा न इति द्वितीया। यानस्मान् . . . पूरयति। तर्पयतीत्यर्थः। ज्योतिष्मती च। तमस्तिरः। . . . तमस्तिरस्करोति। तिरस्कारेण चात्र प्रकाशो लक्ष्यते। सर्वलोकप्रकाशा भवन्तीत्यर्थः Sk.
६. अस्मान् Sk.
७. अन्तम् Sk.
८. अश्विनावागमिष्यतः। तावागतौ यक्ष्यामहे। ताविष्टौ कामान्नः सम्पादयिष्यतः। इत्येवमादिकामानामभिलाषलक्षणानामस्मन्मतीनां पारमन्तं गन्तुम्। युष्मदागमनसम्बद्धानस्मदभिलाषान् फलप्राप्तिसम्बद्धान् कर्तुमित्यर्थः। फलप्राप्त्यन्ता हि सर्वाभिलाषाः Sk.
९. युङ्क्ततथामिति P. किन्वास्मान् प्रत्यागन्तुम्। . . . यत्र नावा गन्तव्यं जले तत्र नावाऽऽयातम्। यत्र रथेन स्थले तत्र रथेनेत्यर्थः Sk.
१०. Omitted by M.
११. गच्छति येन नौस्तदरित्रम्। अपल्लक इत्यपभ्रंशेन यन्नाविकानां प्रसिद्धं तत् Sk.
१२. विस्तीर्णम् Sy. विस्तीर्णतरम् Sk.
१३. समुद्राणाम् Sy. नदीनाम् Sk.
१४. ०रदे० M.
१५. जले स्थले च गमनसाधनं युवयोरस्तीत्यर्थः Sk.
१६. अभिषवादिसंस्कारकर्मणा Sk.
१७. अभिषवादिभिः संस्कारैः संस्कृता इत्यर्थः। एतज् ज्ञात्वा गमनसाधनानां गमनप्रयोजनस्य पिपासितस्य सोमस्य विद्यमानत्वाद् आगच्छतमित्यर्थः Sk.
१८. पद्भ्यां M.
१९. युक्ताः Sk.

दि॒वस्क॑ण्वास॒ इन्द॑वो॒ वसु॒ सिन्धू॑नां प॒दे । स्वं व॒व्रिं कुह॑ धित्सथः ॥९॥

दिवस्कण्वासः । दिवः पतन्ति[1] । हे कण्वाः[2] ! दीप्ता रश्मयः[3] । वासकमादित्याख्यं तेजश्च[4] । अपाम्[5] । स्थाने प्रादुर्भवति तत्र युवामश्विनौ[6] ! स्वम्[7] । रूपम् । कस्मिन् । निधातुमिच्छथः[8] ।

अभू॑दु॒ भा उ॑ अं॒शवे॒ हिर॑ण्यं॒ प्रति॒ सूर्यः॑ । व्य॑ख्यज्जि॒ह्वयासि॑तः ॥१०॥

अभूदु भाः । अभूत् । दीप्तिः[9] । रश्मेरनन्तरमुदयवेलायाम् । हिरण्यम्[10] । प्रत्यासीत् सूर्यस्तत्सदृशोऽभवदित्यर्थस्तदनन्तरम् । जिह्वया[11] ज्वालया । अबद्धः[12] । प्रकाशयति सर्वं[13] जगत्[14] ।

---

१. दिव इत्यपादानपञ्चमीनिर्देशाद्योग्यक्रियाध्याहारः । दिव आगतयोरश्विनोः Sk.

२. कण्वपुत्राः । यद्वा मेधाविन ऋत्विजः Sy. मत्पितुः कण्वस्यापत्यभूता मत्पुत्रादयः । अथवा कण्व इति मेधाविनाम । मेधाविन ऋत्विजो मत्पुत्रादयो वा Sk.

३. P. D. M. read वा after रश्मयः

४. अस्मदादिनिवासहेतुभूतमुषःकालीनं ज्योतिः Sy.
सोमधनम् । धनतया चात्र तद्वत्त्वं स्वामित्वं प्रतिपाद्यते । दिव आगतावश्विनौ सोमानां स्वामिनौ भविष्यतः । दिव आगताभ्यामश्विभ्यां वयं सोमं दास्याम इत्यर्थः Sk.

५. ०श्चापादां P. ०श्चापदां D. M.
सिन्धवोऽत्र स्यन्दनादाहुतय उच्यन्ते । तासां पदं स्थानं यज्ञः । तत्र । सर्वाहुतीनां स्थानभूते यज्ञ इत्यर्थः । अथवा सिन्धवोऽत्राप उच्यन्ते . . . तासां पदमन्तरिक्षम् । पञ्चम्यर्थे सप्तमी । अपां स्थानादन्तरिक्षात् । दिवो वाऽन्तरिक्षाद्वागतयोरित्यर्थः Sk.

६. ०मग्निना D.

७. स्वस्थाने Sk.

८. धारयितुम् । . . . स्वशरीरेण वर्तेथे येनास्मद्यज्ञानागच्छथ इत्यर्थः Sk.

९. ०प्तिरश्मे P. D.
उषःकालीनरश्मिसिद्धयर्थम् Sy.
अंशवो रश्मयः । षष्ठीबहुवचनस्य स्थान इदं चतुर्थ्येकवचनम् । अंशूनामादित्यरश्मीनाम् Sk.

१०. ०ण्यमप्र० P. D. M.
प्रतिशब्दोऽत्र सामर्थ्यादुपमायां द्रष्टव्यः । सूर्योऽपि हिरण्यमिव । सूर्योऽप्युदयाभिमुखीभूत इत्यर्थः । उदयवेलायां हिरण्यसदृशः सूर्यो भवति । हिरण्यसदृशी च भा अभूच्च Sk.

११. जिह्वायां P. जिह्वास्थानीयत्वादत्र जिह्वाऽऽदित्यदीप्तिरुच्यते । उद्यन् ह्यादित्यो रसानादत्ते जिह्वास्थानीयया दीप्तचेत्यर्थः Sk.

१२. ०लायां बद्धा P. ०लया बद्धः D. M.
स्वकीयदीप्तेः सूर्यप्रवेशेन स्वयं कृष्णो भूत्वा Sy.

१३. त्रैलोक्यं वा दिशो वा Sk.

१४. V. Mādhava ignores उ । उ

**अभूदु पारमेतवे पन्था ऋतस्य साधुया । अदर्शि वि स्रुतिर्दिवः ॥११॥**

अभूदु पारम्। अपरां[1] दिशं प्रति गन्तुमुद्युक्तस्य[2]। आदित्यस्य। साधुः[3]। अभवत्। पन्थाः[4]। दिवः[5]। मध्ये कश्चन[6]। मार्गोऽपि[7]। अदर्शि येन सूर्यो गच्छति[8]।

**तत्तदिदश्विनोरवो जरिता प्रति भूषति । मदे सोमस्य पिप्रतोः ॥१२॥**

तत्तदित्। उषसि। तत् तत्[9]। एव। अश्विनोराश्रितविषयम्[10]। रक्षणम्। स्तोता। अलङ्करोति[11] प्रकाशयति यद्रक्षणम्[12]। सोमस्य। मदे[13]। पूरयतोरभूदिति[14]।

**वावसाना विवस्वति सोमस्य पीत्या गिरा । मनुष्वच्छंभू आ गतम् ॥१३॥**

वावसाना[15]। वसनशीलौ। यजमाने[16]। सोमपानेन। स्तोत्रेण च हेतुना[17]। सुखस्य भावयितारौ। नरवदिह[18]। आगतम् अपिवा मनोरिव यज्ञे[19]।

---

१. अपारं M.
रात्रेः पारभूतमुदयाद्रिं गन्तुम् Sy.

२. ०द्युक्तः स्यादिः M. ऋतस्य यज्ञस्य Sk.

३. कीदृशमहः ? साधुया साधु शोभनम् Sk.

४. पथिस्थानीयत्वाद् आपतत्यनेन यज्ञ इति वा पन्था अहरत्राभिप्रेतः। अहरपि प्रवृत्तमित्यर्थः Sk.

५. द्योतनात्मकस्य सूर्यस्य Sy.
सूर्यलोकस्य Sk.

६. प्रसृता दीप्तिः Sy.

७. अदर्शनी P. D. एतदुक्तं भवति। अभूत् प्रभाऽऽदित्यरश्मीनाम्। सूर्योऽपि हिरण्यसदृश उदयाभिमुखोऽभूत्। यज्ञपरिसमाप्त्यर्थमहरपि प्रवृत्तम्। अतः परं भवतोर्यागकालोऽतिवर्तते Sk.

८. V. Mādhava ignores उ

९. तच्छब्दश्रुतेर्योगार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। . . . यद्यदुत्कृष्टम्। . . . Sk.

१०. शृतोराश्रि० P. ०राश्रु० D.
अस्मद्विषयम् Sy.

११. भवति Sk.

१२. यद्रक्षक्षणा P.

१३. सोमेन मत्तयोः सतोरित्यर्थः Sk.

१४. कम् ? सामर्थ्यात् स्तोतारमेव। एतदुक्तं भवति। यदीयन सोमेनाश्विनावात्मानं तर्पयतस्तं यद्यदुष्कृष्टं पालनं तेन तेन पालयत इति Sk.

१५. यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया। . . . अत्यर्थं वसनशीलौ व्यवस्थानशीलौ Sk.

१६. यजमाननामधेयमेतच्छाकपूणिना पठितम्। तेन चात्र स्वगृहं प्रतिपाद्यते। यजमानगृह इत्यर्थः Sk.

१७. सोमपानार्थं स्तुत्यर्थं चेत्यर्थः Sk.

१८. मनाविव Sy.

१९. मनोमिव P.

युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् । ऋता वनथो अक्तुभिः ॥१४॥

युवोरुषाः।[1] युवयोः।[2] श्रियम्।[3] उषाः। अनूपाचरत्[4] पश्चाद् युवयोरागच्छति।[5] परितो गन्त्रोः।[6] यज्ञान्[7] युवाम्। रात्रिभिर्गच्छन्तीभिः[8] सह। सम्भजथः।

उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभिः ॥१५॥

उभा पिबतम्। उभौ सोमम्। अश्विनौ! पिबतम्। उभौ च। अस्मभ्यम्। सुखम्।[9] यच्छतम्। रक्षणपरैः।[10] गमनैरिति।[10]

इत्थं तृतीयमध्यायं व्याकरोत् प्रथमेऽष्टके।
विश्वामित्रकुले जातो माधवः सुन्दरीसुतः॥[11]

# [अथ चतुर्थोऽध्यायः]

"अयं वां मधुमत्तमः"[12] माधवो व्याचिकीर्षति।
प्रदर्शयन्समस्तानां स्वरव्यत्यासकारणम् ॥१॥

---

१. युवयोरुषाः M.

२. युवो P. M. युवोः D.
युवोरित्येतदन्वित्येतेन सम्बध्यते। अनुशब्दस्य पश्चाद्भावे। युवयोः पश्चात् Sk.

३. थियम् M. ज्योतिर्लक्षणाम् Sk.

४. ०चरथ P.
उपागच्छति प्रतिपद्यते। अश्विनोर्हूर्ध्वं मध्यरात्रात् कालः। ततः पर उषसः। अथवा युवोरित्येतत् श्रियमित्येतेन सम्बध्यते। युवयोः श्रियमुषा अनूपाचरद् अनुगच्छति। युवयोः श्रिया सदृशीत्यर्थः Sk.

५. ०श्चाद्विवयो० P. ०श्चाद्वि वयो० D.

६. गच्छन्तो P. गन्तोः D. गन्त्र्योः M.

७. यज्ञगतानि हवींषि Sy.

८. रात्रिपर्यायैः सम्बद्धानित्यर्थः। अथवा अक्तुशब्दोऽत्र सोमवचनः।..... सोमैः सम्बद्धान्। सोमयागानित्यर्थः Sk.

९. गृहं सुखं वा Sk.

१०. अविद्रियाभिः प्रशस्ताभिः, ऊतिभिः रक्षाभिः Sy.
अविद्रियाभिः . . . अविदारणीभिः। ...ऊतिभिः पालनैस्सह। स्थिराणि च पालनानीत्यर्थः Sk.

११. Ms. D. puts the figure ॥४६॥ here to indicate the end of the fortysixth hymn. No such number is given in P. and M.

१२. RV. I. 47. 1ª.

आद्युदात्ताः समासस्था अन्तोदात्ता भवन्ति च ।
अन्तोदात्ताश्चाद्युदात्तास्त्यजन्तः[1] प्राकृतं[2] स्वरम् ॥२॥

विश्वशब्द[3] आद्युदात्तो "विश्वे देवासो अस्त्रिधः[4]"[5] ।
"विश्वं सम[6]त्रिणं दह"[7] "पतिर्विश्वस्य भूमनः[8]" ॥३॥

अन्तोदात्तः समासस्थो "विश्वामित्रस्य[9] रक्षति[10]" ।
"अग्निं[11] च विश्वशंभुवमापश्च विश्वभेषजीः[12]" ॥४॥

तत्राहुः[13] कारणमिदं[14] विश्व्यर्थः[15] केवले स्फुटः[16] ।
समस्ते तु प्रत्ययार्थः प्रकृत्यर्थोपसर्जनः[17] ॥५॥

दर्शयेदसमस्तार्थमयं व्याप्त इतीदृशम् ।
मित्रं व्याप्तस्य सर्वस्य समस्तेऽर्थे[18] प्रदर्शयेत्[19] ॥६॥

अन्तोदात्तो वीरशब्दः "स[20] घा वीरो न रिष्यति[21]" ।
आद्युदात्तो बहुव्रीहौ "रयिं[22] वहतं सुवीरम्[23]" ॥७॥

---

१. ०न्तं M.
२. प्रकृति P. D. प्रकृतं M.
३. विश्वे R.
४. ०सोऽस्त्रि० R. M. अस्त्रीयधः P. अस्त्रधा D. Raja's text is short by one syllable in b.
५. RV. I. 3. 9[a].
६. ०मि० D.
७. RV. I. 36. 14[b]. Raja's reference of this quotation is wrong.
८. RV. IX 101. 7[c].
९. मित्रस्य omitted by P.
१०. RV. III. 53. 12[c].
११. अग्निश्च R.
१२. RV. I. 23. 20[c-d].
१३. ०हुत् P.
१४. ०णमिति दं P.
१५. ०र्थ R.
१६. ०टं P.
१७. प्रकृत्यर्थः प्रत्ययार्थोप० R. प्रत्ययार्थः प्रत्यर्थोपसर्जनं P.
१८. समर्त्येऽर्थं P.
१९. प्रदर्शयन् P. D.
२०. सखा R. P. D. M.
२१. RV. I. 18. 4[a].
२२. Raja reads रथं for रयिम्
२३. RV. I. 34. 12[b].

अमित्रान्[१] वीरयत्येष इत्यर्थः केवले भवेत् ।
कल्याणवीरमित्यर्थे[२] समस्तस्य प्रदर्शयेत् ॥८॥
तात्पर्ये यदि पूर्वस्मिंस्तदा[३] तत्र स्वरो भवेत् ।
"ऋष्ववीरस्य बृहतः"[४] इति तत्र निदर्शनम् ॥९॥
सर्वेष्वेषु[५] समासेषु कार्या[६] सूक्ष्मेक्षिका बुधैः ।
पदेषु चासमस्तेषु शुद्धमर्थमभीप्सुभिः ॥१०॥
प्रकृतौ प्रत्यये वापि स्वरो यत्र व्यवस्थितः ।
तात्पर्यं तत्र शब्दस्य स्थापयेदिति निर्णयः ॥११॥

I.47.

**अयं वां मधुमत्तमः सुतः सोमं ऋतावृधा ।**
**तमंश्विना पिबतं तिरोअंह्नयं धत्तं रत्नानि दाशुषे ॥१॥**

अयं वाम् । प्रस्कण्वः ।अयम् । युवयोः[७] । सुतः । सोमः । तम्[८] । पिबतमिति[९][१०] ।

**त्रिवन्धुरेण त्रिवृता सुपेशसा रथेना यातमश्विना ।**
**कण्वासो वां ब्रह्म कृण्वन्त्यध्वरे तेषां सु शृणुतं हवंम् ॥२॥**

त्रिवन्धुरेण । त्रयो[११] यस्य वन्धुरास्तेन । त्रिकोणेन[१२] । सुरूपेण[१३] । रथेन । आयातम् । अश्विनौ !

---

१. अमिद्वीर० M. Cf. वीरो वीरयत्यमित्रान् N. I. 7.
२. ०ण वीर्यमि० R. M. Cf. वीरवन्तः कल्याणवीरा वा। N. I. 7.
३. ०न्तद P.
४. RV. I. 52. 13b. Raja's reference of this quotation is wrong.
५. ष्वेषां० P. D. M. ६. कार्यं M.
७. तादर्थ्ये एषा चतुर्थी। युवयोरर्थाय Sk.
८. तमिम् P. ९. पिबति P.
१०. V. Mādhava ignores मधुमत्तमः। ऋतावृधा। अश्विना। तिरोअह्न्यम्। धत्तम्। रत्नानि। दाशुषे
११. उन्नताननरूपत्रिविधबन्धनकाष्ठयुक्तेन Sy. सारथिस्थानं वन्धुर उच्यते Sk.
१२. अप्रतिहतगतितया लोकत्रये वर्तमानेन Sy. त्रिभिश्चक्रैर्वर्तते गच्छतीति त्रिवृत्। तेन त्रिवृता Sk.
१३. शोभनसुवर्णयुक्तेन Sy.

कण्वासः[1]। युवयोः। स्तोत्रम्। कुर्वन्ति। यज्ञे। तेषाम्। सुष्ठु। शृणुतम्[2]। ह्वानम्।

अश्विना मधुमत्तमं पातं सोमंमृतावृधा।
अथाद्य दस्रा वसु बिभ्रता रथे दाश्वांसमुप गच्छतम् ॥३॥

अश्विना मधुमत्तमम्। सोमपानानन्तरम्[3]। दाश्वांसम्[4]। धनेन[5] सह[6]। उपगच्छतमिति[7]।

त्रिषधस्थे बर्हिषि विश्ववेदसा मध्वा यज्ञं मिमिक्षतम्।
कण्वासो वां सुतसोमा अभिद्यवो युवां हवन्ते अश्विना ॥४॥

त्रिषधस्थे[8]। यस्मिन् बर्हिषि त्रयाणां धातूनां सहावस्थानं तत्रासीनौ। सर्वज्ञौ[9]। मधुनेमम्[10]। यज्ञम्[11]। सेक्तुमिच्छतम्[12]। कण्वाः। वाम्[13]। अभिषुतसोमाः[14] स्तोत्रादभिषवाच्च[15]। अभिगतदीप्तयः। अश्विनौ! हवन्ते[16]। पादान्तरे वामिति प्रयुक्तम्[17]।

---

१. P. reads तैरस्मानपि रक्षतमुदकस्य पती पिबतञ्च सोमं यज्ञस्य वर्धयितारौ सुपुराणः सुदासे दस्रा वैजवनाय सुदासे before कण्वासः।
कण्वपुत्रा मेधाविन ऋत्विजो वा Sy.
कण्वपुत्रा मत्प्रभृतयः Sk.

२. ०ताह्वानम् P.

३. सोमपानार्थम् Sy.

४. दाश्वांसं यजमानं दानार्थम् Sk.

५. धानेन P.

६. सहा उपग० P. सहोपाग० D. M.
उपगम्य यजमानाय धनं दत्तमित्यर्थः Sk.

७. V. Mādhava ignores अश्विना। मधुमत्तमम्। पातम्। सोमम्। ऋतावृधा। अद्य। दस्रा। रथे।

८. ०धस्ते D.
कक्ष्यात्रयरूपेणास्तीर्णतया त्रिषु स्थानेष्ववस्थिते... दर्भे स्थित्वा Sy.
सह तिष्ठन्ति येषु देवतास्तानि सधस्थानि। सवनान्यत्राभिप्रेतानि। तानि त्रीणि यस्मिंस्तत्त्रिषधस्थम्। सौमिकपरिस्तरणं बर्हिः। अथवाऽऽहवनीयादयोऽग्नयः सधस्थाः सहस्थातृत्वात्। ते त्रयो यस्मिन् तत्त्रिषधस्थम्। तस्मिंस्त्रिषधस्थे बर्हिषि। सप्तमीनिर्देशाद् व्यवस्थितमिति शेषः Sk.

९. अथवा विश्वमिति बहुनाम। वेद इत्यपि धननाम। विश्ववेदसा बहुधनौ Sk.

१०. ०नेम D.
मधुरेण रसेन Sy. उदकेन Sk.

११. अस्मदीयम् Sk.

१२. अभिवर्षितुमिच्छतमित्यर्थः Sk.

१३. युवयोरर्थाय Sk.

१४. ०षुतोसो० P. ०भिष्टुतसो० M.

१५. स्तोत्रादषवान्याभिगत० P.
अभिगता दीप्तिर्यैस्तेऽभिद्यवः। ब्राह्म्या दीप्त्या दीप्ता इत्यर्थः। अथवा द्यु इत्यहर्नाम। अत्यन्तदुष्प्रापं प्राप्तं यागाहो यैस्तेऽभिद्यवः Sk.

१६. पदा० P. D. M.

१७. V. Mādhava ignores युवाम् and writes वामिति प्रयुक्तम्

याभिः कण्वम॒भिष्टि॑भिः प्राव॑तं यु॒वम॑श्विना ।
ताभिः ष्व१॒स्माँ अ॑वतं शुभस्पती पा॒तं सोम॑मृतावृधा ॥५॥

याभिः कण्वम्[1]। यैः[2]। कण्वम्। अभिगमनैः[3]। प्रावतम्[4]। युवाम्[5]। अश्विनौ! तैः। अस्मानपि रक्षतम्। उदकस्य[6]। पती! पिबतञ्च। सोमम्। यज्ञस्य वर्धयितारौ! सुः पूरणः[7]।

सु॒दासे॑ दस्रा॒ वसु॒ बिभ्र॑ता॒ रथे॒ पृक्षो॑ वहतमश्विना ।
र॒यिं स॑मु॒द्रादु॒त वा॑ दि॒वस्पर्य॒स्मे ध॑त्तं पुरु॒स्पृह॑म् ॥६॥

सुदासे दस्रा। पैजवनाय[8] सुदासे। दर्शनीयौ! धनम्। रथे। बिभ्रतौ[9]। अश्विनौ! अन्नं[10] च। आवहतम्[11]। अस्मभ्यम्। अपि। अन्तरिक्षात्। दिवः[12]। वा। आहृत्य[13]। बहुभिः स्पृहणीयम्। रयिम्। धत्तम्[14]।

यन्ना॑सत्या परा॒वति॒ यद्वा॒ स्थो अधि॑ तु॒र्वशे॑ ।
अतो॒ रथे॑न सु॒वृता॑ न॒ आ ग॑तं सा॒कं सूर्य॑स्य र॒श्मिभिः॑ ॥७॥

यन्नासत्या। यदि। नासत्यौ! दूरे[15] भवथः[16]। यत्[17]। वा। स्थः। अन्तिके[18]। ततः। रथेन। सुवर्तनेन[19]। अस्मान्। आगच्छतम्। सह। सूर्यस्य। रश्मिभिरुषसि[20] प्रादुर्भूतैः[21]।[22]

---

१. कण्वा P.
२. येभिः P.
३. याभिः . . . रक्षाभिः Sy. युष्मदभ्येषणशीलाभिः। युष्मदन्वेषणपराभिः। स्तुतिभिरित्यर्थः Sk.
४. चक्षुःप्रदानेन प्रकर्षेण रक्षितवन्तौ स्थः Sk.
५. यूयम् P.
६. शोभनस्य कर्मणः पालकौ Sy.
७. पुराणः P.
८. वैज० P.
९. पिबतौ P.
१०. अश्विनावनं P. D. अश्विनो वनं M.
११. प्रापितवन्तौ स्थः Sk.
१२. दिवा P. D.
१३. वानूत्य P. वां दूत्य D. वादृत्य M.
१४. वत्तम् Sk.
१५. अमुष्मिन् लोक इत्यर्थः Sk.
१६. भवतः M.
१७. यदि Sk.
१८. स्थान्तिके M. अस्मिन्नेव लोक इत्यर्थः Sk.
१९. सुगतिना Sk.
२०. सहयोगित्वमात्रमत्र रश्मीनाम्। अश्विनोरेव तु प्राधान्यम् Sk.
२१. ०भूते M.
२२. V. Mādhava ignores अधि

अर्वाञ्चा वां सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप ।
इषं पृञ्चन्ता सुकृते सुदानव आ बर्हिः सीदतं नरा ॥८॥

अर्वाञ्चा वाम्। अभिमुखौ[1]। वाम्। अश्वाः। यज्ञं ये[2] श्रयन्ति ते। सवनानाम्[3]। समीपे। वहन्तु[4]। अन्नम्। सुष्ठु कुर्वते[5]। शोभनदानाय[6] यजमानाय। संयोजयन्तौ[7]। आसीदतम्। बर्हिः। नेतारौ[8]!

तेन नासत्या गतं रथेन सूर्यत्वचा ।
येन शश्वदूहथुर्दाशुषे वसु मध्वः सोमस्य पीतये ॥९॥

तेन नासत्या गतम्। तेन[9]। नासत्यौ। आगच्छतम्[10]। रथेन। सूर्यसदृशरूपेण[11][12]। येन[13]। बहु[14]। धनम्। ऊहथुः[15]। यजमानाय। मधुसदृशम्[16]। सोमम्। पातुम्।

उक्थेभिरर्वागवसे पुरूवसू अर्कैश्च नि ह्वयामहे ।
शश्वत्कण्वानां सदसि प्रिये हि कं सोमं पपथुरश्विना ॥१०॥

उक्थेभिरर्वाक्। स्तोत्रशस्त्रैः[17]। रक्षणाय[18]। अस्मदभिमुखम्[19]। बहुधनावश्विनौ[20]! नि ह्वयामहे।

---

१. अस्मदभिमुखा युवाम् Sk.

२. यैः M.
यज्ञसम्बद्धा इत्यर्थः। अथवा अध्वर इति ध्वरतेर्हिंसाकर्मणः क्रियावचनः। अनुपहिंसिता श्रीर्येषां तेऽध्वरश्रियः। लक्ष्मीवन्तो दर्शनीया इत्यर्थः Sk.

३. अस्मदनुष्ठेयानि त्रीणि सवनान्येवोपलक्ष्य Sy.
सवनशब्दो यज्ञनाम वा तदवयवप्रातस्सवनमाध्यन्दिनसवनतृतीयसवनवचनो वा। . . . सवनान्युप यज्ञानां वा . . . तदवयवानां प्रातस्सवनादीनां वा समीप इत्यर्थः Sk.

४. पिबन्ति M.

५. शोभनानां सुकृतानां कर्त्रे Sk.

६. शोभनानां च हविषां दात्रे यजमानाय Sk.

७. इषमन्नं पृञ्चन्ता। पृचिरत्र सामर्थ्याद्दानार्थे। ददतौ Sk.

८. V. Mādhava ignores इत्

९. तौ M.

१०. आगतम् Sk.

११. सूर्यसंवृतेन, सूर्यरश्मिसदृशेन वा Sy.
हिरण्यखचितत्वादत्यन्तोज्ज्वलेनेत्यर्थः Sk.

१२. ०रूपेनण P.

१३. यौ M.

१४. सर्वदा Sy.

१५. प्रापितवन्तौ स्थः। दत्तवन्तावित्यर्थः Sk.

१६. मधु is omitted by M.

१७. स्तोत्रशब्दैः P.

१८. सोमेन तर्पणाय Sk.

१९. अस्मद् is omitted by P.
आत्माभिमुखम् Sk.

२०. बहुयज्ञं धनाविश्विनौ P.

नित्यम्। हि[1]। कण्वानां[2] सदसि। प्रिये। यज्ञे। अश्विनौ युवाम्। खलु। सोमम्। पीतवन्ताविति[3]।[4]

I.48.

सह वामेन न उषो व्युच्छा दुहितर्दिवः।
सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ॥१॥

सह वामेन। सह। वननीयेन[5]। अस्माकम्[6]। उषः! व्युच्छ[7]। दुहितः[8]! सहान्नेन। महता। दीप्तिमति! धनेन[9] च। देवि[10]! दानवति! इत्यन्नं दानं च वामिति[11][12]।

अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवन्त वस्तवे।
उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनाम् ॥२॥

अश्वावतीः। अश्ववत्यः[13]। गोमत्यः[14]। विश्वस्य धनस्य सुष्ठु वेदयित्र्यः[15]। अत्यन्तं दिवः। च्यवन्त[16]। दिवसकरणायेदानीम्[17]। माम्। प्रति। सूनृतवाचः[18]। उदीरय। उषः[19]! चोदय[20]। धनम्।

---

१. हिशब्दस्तु पदपूरणः Sk.

२. कण्वपुत्राणां मेधाविनां वा Sy.

३. यस्मात् पूर्वेष्वपि कालेषु नित्यमस्मदीयेषु सदस्सु सोमान् पीतवन्तौ स्थस्तस्मादुत्पन्नप्रणयत्वादिदानीमपि नियतं ह्वयाम इत्यर्थः Sk.

४. Ms. D. puts the figure ॥४७॥ here to indicate the end of the fortyseventh hymn. No such number is given in P. and M.

५. वदनीयेन P. D. M. धनेन Sy. अत्यन्तोत्कृष्टेनान्नेन Sk.

६. अस्माकमर्थाय Sk.

७. विविधं तमांसि विवासय। प्रकाशं कुर्वित्यर्थः Sk.

८. आदित्यतेजसो दिवि जायमानत्वादुषा दिवो दुहिता Sk.

९. यशसा च सह Sk. १०. देवी D. M. अन्नयशोधनान्यस्मभ्यं ददती व्युच्छेत्यर्थः Sk. ११. नावमिति M.

१२. V. Mādhava ignores दिवः। द्युम्नेन १३. बह्वश्वोपेताः Sy.

१४. अश्वान् गाश्च स्तोतृभ्यो ददत्य इत्यर्थः Sk. १५. लम्भयित्र्यः Sy. सर्वस्य भूतजातस्य सुष्ठु वेदयित्र्यः। प्रकाशिका इत्यर्थः। स्वयमेव वा वेदित्र्यः Sk. १६. ०न्तं D. गतवत्यः। समस्तं त्रैलोक्यं प्राप्तवत्य इत्यर्थः Sk.

१७. प्रजानां निवासाय Sy. स्वज्योतिषा तमसामाच्छादनाय। प्रकाशनायेत्यर्थः Sk. १८. स्तृणातावाचः M. स्तुतिलक्षणा वाचः। मम वाचः प्रति प्रेरय येनाहं त्वां प्रभूताभिः स्तुतिभिः स्तौमीत्यर्थः। अथवा सूनृतेत्युषोनाम। यत्तच्छब्दावध्याहृत्य पूर्वेणार्धर्चेन सहैकवाक्यतैवं योज्या। या अश्वावतीत्यादिगुणा भूरि च्यवन्त वस्तवे तास्त्वमुदीरय मां प्रति सूनृताः प्रकाशरूपा उषसः Sk.

१९. प्रकाशरूपाणामुषसामधिष्ठात्र्या अधिदेवताया इदमुषःशब्देन सम्बोधनम् Sk.

२०. देहीत्यर्थः Sk.

आढ्यानां[1] तत आहृत्य[2] भिक्षुभ्यः।

**उवासोषा उच्छाच्च नु देवी जीरा रथानाम्।**
**ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥३॥**

उवासोषाः। पुरापि[3] व्युष्टवती[4] सम्प्रति। च। व्यौच्छत्[5]। क्षिप्रम्। उषाः[6]। क्षेप्त्री[7]। रथानां[8] ये रथाः[9]। उषसः। आगमनेषु[10]। तिष्ठन्ति। अन्नमाजिहीर्षवः[11]। समुद्रे। इव[12] नाविकाः।

**उषो ये ते प्र यामेषु युञ्जते मनो दानाय सूरयः।**
**अत्राह तत्कण्व एषां कण्वतमो नाम गृणाति नृणाम् ॥४॥**

उषो[13] ये ते। उषसि[14] शयाने[15] शयानः प्रस्कण्व उदाराणां नामान्यसावसाविति ब्रूत इति समुदायार्थः। उषः! तव[16]। आगमनेषु[17]। ये। प्राज्ञाः[18]। मनः। दानाय[19]। प्रायुञ्जत[20]। अत्र[21]। एव।

---

१. मघोनां धनवतां यष्टॄणां स्वभूतम्। ये धनवन्तो न यजन्ते तेभ्योऽपहृत्येत्यर्थः। अथवा मघशब्दोऽत्र हविर्लक्षणे धने वर्तते। षष्ठीनिर्देशाद्योग्यमिति शेषः। हविर्लक्षणेन धनेन धनवतामस्मादृशां योग्यम्। यष्टॄणां यद्योग्यमित्यर्थः Sk.

२. अस्मदर्थम् Sy.

३. पुरोपि P.

४. निवासमकरोत्, प्रभातं कृतवतीत्यर्थः Sy. प्रागपररात्रादुवास रात्र्या सहोषितवत्युषा। रात्रावेवानुप्रविष्टाऽदृश्यरूपाभवदित्यर्थः Sk.

५. व्युच्छति प्रभातं करोति Sy. व्युष्टवती चापररात्रे Sk.

६. उषा M.

७. क्षिप्री P. प्रेरयित्री Sy. क्षिप्रा Sk.

८. रथो रंहतेर्गतिकर्मणो गन्तेहाभिप्रेतः। ...गन्तॄणां मध्ये। अथवा रथानामिति षष्ठीनिर्देशात् सकाशादिति वाक्यशेषः। क्षिप्रा रथानामपि सकाशात् Sk.

९. P. adds न after रथाः

१०. परिचरणेषु दध्रिर आत्मानं धारितवन्तः। परिचर्यायां स्थिता इत्यर्थः Sk.

११. तष्ठन्त्यनमाजि० P. ०जिहो० D. धनकामाः...यथा समुद्रमध्ये नावः सज्जीकृत्य प्रेरयन्ति तद्वत् Sy. श्रव इति धननाम। तत्कामाः श्रवस्यवो वणिजः। यथात्यन्तधनाशया समुद्रे वणिजो व्यवतिष्ठन्ते तद्वत्। य एवोषसं परिचरन्ति तेषामेव सा उवास उच्छाच्च तत्कार्यकरत्वान्नेतरेषां यष्टॄणामित्यर्थः Sk.

१२. समुद्रमिव P. D.

१३. ये ये P.

१४. उष्यसि M.

१५. शयानाः P. शयने M.

१६. तुभ्यम् Sk.

१७. यामेषु यज्ञेषु Sk.

१८. प्रज्ञाः P. स्तोतारः Sk.

१९. हविषाम् Sk.

२०. प्रेरयन्ति। दानशीला उदाराः प्रभवः प्रातःकाले दातुमिच्छन्तीत्यर्थः Sy. ये तुभ्यं यज्ञेषु हवींषि ददतीत्यर्थः Sk.

२१. ०त अ० P. D. पृथिव्यास्सन्निहिताया अयं प्रतिनिर्देशः Sk.

कण्वानां वरिष्ठः[1]। कण्वपुत्रः[2]। एषाम्[3]। नृणाम्। तत्। नाम। उच्चारयति[4]।

**आ घा योषेव सूनर्युषा याति प्रभुञ्जती।**
**जरयन्ती वृजनं पद्वदीयत उत्पातयति पक्षिणः ॥५॥**

**आ घा योषेव।** आयाति[5]। उषाः[6]। स्त्रीव। प्रकर्षेण रक्षन्ती[7]। सूनरीत्यप्युषो नाम शोभननरेति[8] मनुष्याणाम्। उपद्रवम्[9]। जरयन्त्युषस्यागतायां पद्वत्[10] पुरुषादिकम्[11]। चलति[12]। पक्षिणः। चेयम्। उद्गमयति[10]।

**वि या सृजति समनं व्यर्थिनः पदं न वेत्योदती।**
**वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनीवति ॥६॥**

**वि या**[13] सृजति। विसृजति[14]। या। सङ्ग्रामं युयुत्सून्[15]। प्रेरयति[16] या च।

---

१. अतिशयेन मेधावी कण्वो महर्षिः Sy. ... तेषामेषां मनुष्याणां मध्ये कण्व एव कण्वतमो नाम गृणाति। कण्व इति सोऽयमित्यभिसम्बन्धात् पितृशब्दः पुत्रे प्रयुज्यते। आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेणाभिधानम्। कण्वतम इति कण्वशब्दो मेधाविनाम। अतिशयेन मेधावी कण्वतमः। अयं कण्वपुत्रः प्रस्कण्वो नाम मेधावितमस्तव नाम स्तौतीत्यर्थः। नामस्तुत्या चात्र नामवतामेव स्तुतिः प्रतिपाद्यते। त्वां स्तौतीत्यर्थः। स्तोतारस्तुभ्यं यज्ञेषु हवींषि ददति। समस्तायामेतस्यां पृथिव्यां तेषां मध्येऽहमेव कण्वपुत्रस्त्वामतिशयेन स्तौमि नान्यः कश्चिदिति समस्तार्थः Sk.

२. षषां P. ३. नृषणाम् P.

४. ०न्ति M. ५. उदितेत्यर्थः Sk.

६. आयातमषा M. ७. स्वेन ज्योतिषा कृत्स्नं जगत् प्रकर्षेण पालयन्ती Sk.

८. सुष्ठु गृहकृत्यस्य नेत्री गृहिणीव Sy. शोभना नरा यस्याः स्तोतृत्वेन यष्टृत्वेन च सन्ति सा सूनरी Sk.

९. गमनशीलं जङ्गमं प्राणिजातम्।...असकृदुषस्यावृत्तायां वयोहान्या प्राणिनो जीर्णा भवन्ति Sy. १०. बलं कालेन हि प्राणिनां जीर्यते। कालं चोषा अतिपातयति। अत एवमुच्यते जरयन्ती वृजनमिति ... चटकादयो हि पक्षिण उषउदयवेलायां स्वेभ्य आवासकेभ्य उत्पतन्ति। अतस्तानुषा एवोत्पातयतीत्युच्यते Sk.

११. पादयुक्तं प्राणिजातम् Sy. यथा कश्चित् पादवानागच्छेत् तद्वदागच्छति Sk.

१२. निद्रां परित्यज्य स्वस्वकृत्यार्थं गच्छति Sy. १३. व्या M.

१४. विसर्गो ह्यनुज्ञा। अनुजानाति Sk.

१५. समीचीनचेष्टावन्तं पुरुषम्...गृहारामादिचेष्टाकुशलान् पुरुषान् उषःकालः शयनादुत्थाप्य स्वस्वव्यापारे प्रेरयतीति प्रसिद्धम् Sy. समनं सङ्ग्रामनामैतत्... उषउदयोत्तरकालं...योद्धारो युध्यन्ते। अत उषा एव सङ्ग्राममनुजानातीत्युच्यते। अथवा समनमिति संपूर्वस्य मनेर्वा ज्ञानार्थस्यानेर्वा प्राणार्थस्य रूपम्। ज्ञानं प्राणं वेत्यर्थः। उभयमपि ह्येतदुषउदयोत्तरकालं प्रवर्तते Sk. १६. ०यन्ती P.

भिक्षून्[1] सा। पदम्[2]। इव[2]। निदधाति[2]। शनैः शनैरागच्छन्त्युषा इति रश्म्यभिप्राय[3]वचनम्[3]। पक्षिण[4] इव। केचन[5]। पतनशीला वृक्षेषु। आसते। तव। व्युच्छन्ने[6]। उषः[7]!

एषायुक्त परावतः सूर्यस्योदयनादधि।
शतं रथेभिः सुभगोषा इयं वि यात्यभि मानुषान् ॥७॥

एषायुक्त[8]। एषा। उद्युक्ता[9]। दूरात्। सूर्यस्य। उदयनाद्[10] दिवः[11]। शतम्[12]। रथानधिरुह्य[13]। सुधना[14]। उषाः। मानुषान्। अभि। विविधम्[15]। याति[16][17]।

विश्वमस्या नानाम चक्षसे जगज्ज्योतिष्कृणोति सूनरी।
अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्रिधः ॥८॥

विश्वमस्याः। उषसः। दर्शनाय[18]। सर्वमेव[19]। जगत्[20]। शिरो[21] नमयति[22]। ज्योतिश्च। कृणोति।

---

१. व्यर्थिनोऽर्थिनः कार्यवन्तः। कार्यवन्तश्च कार्येषु विसृजन्ति। सर्वे हि कार्यवन्तः स्वकार्येषूषउदयोत्तरकालं प्रवर्तन्ते Sk.

२. स्थानं . . . न कामयते। उषःकालः शीघ्रं गच्छतीत्यर्थः Sy.
यथा कश्चिदेकं पदं गच्छेत्तद्वत् क्षणेन गच्छति Sk.

३. रश्यभिप्रायं M.　रम्याभिप्रायं P.　रम्याभि० D.

४. पक्षिणः पतनशीलास्तव व्युष्टौ स्वेष्वावासकेषु नासते। त्वदुदयवेलायां स्वेभ्य आवासकेभ्य उत्पतन्तीत्यर्थः Sk.

५. पक्षिणोदके च M.　पक्षिणोद केचन P. D.

६. हे. . .उषोदेवते! . . . त्वदीये प्रभातकाले . . . पतनयुक्ताः . . . पक्षिणो . . . न तिष्ठन्ति। किन्तु स्वस्वनीडाद्विनिर्गत्य गच्छन्तीत्यर्थः Sy.

७. उषाः P. D.

८. ०क्ता M.

९. स्वकीयानां रथानां शतं योजितवती Sy.
युक्तवत्यश्वान् रथेषु Sk.

१०. यतः स्थानात् सूर्य उदेति ततः Sk.

११. ०नादिव

१२. शतमिति तृतीयार्थे द्वितीया। शतेन रथैः Sk.

१३. अधिशब्दस्तु . . . पदपूरणः Sk.

१४. सौभाग्ययुक्ता Sy.

१५. अभिविधं P. D. मानुषादविधि M.
विशेषेण Sy.

१६. इतश्चेतश्च पार्थिवं लोकं स्वभासा व्याप्नोतीत्यर्थः Sk.

१७. V. Mādhava ignores अधि। इयम्

१८. प्रकाशाय Sy.

१९. सस० D.

२०. सर्वस्य जगत एतदायत्तं दर्शनीयमित्यर्थः Sk.

२१. जच्छिरः M.

२२. नगमयति P.

उषाः सा। दिवः। दुहिता सर्वान्। द्वेष्टॄन्।[1] क्षपयितॄंश्च।[2] तिरस्कुर्वन्ती[3] प्रादुर्भवतु।[4][5]

**उष॒ आ भा॑हि भा॒नुना॑ च॒न्द्रेण॑ दुहितर्दि॑वः ।**
**आ॒वह॑न्ती॒ भूर्य॒स्मभ्यं॒ सौभ॑गं व्यु॒च्छन्ती॒ दिवि॑ष्टिषु ॥९॥**

उष आ भाहि। उषः! अभिमुखम्। भाहि। तेजसा। ह्लादकेन।[6] दिवः। दुहितः! आवहन्ती।[7] बहु। धनम्।[8] अस्मभ्यम्। प्रादुर्भवन्ती।[9] दिवसानामन्वेषणेषु।[10]

**विश्व॑स्य॒ हि प्राण॑नं॒ जीव॑नं॒ त्वे वि यदु॒च्छसि॑ सूनरि ।**
**सा नो॒ रथे॑न बृह॒ता विभा॑वरि श्रु॒धि चि॑त्रामघे॒ हव॑म् ॥१०॥**

विश्वस्य हि। विश्वस्य। हि[11] प्राणिनः।[12] प्राणनम्। जीवनं च। त्वयि[13] भवति। यदा[14] त्वम्। व्युच्छसि।[15] उषः! प्रकाशं कुर्वन्ती।[16] सा। अस्माकम्। रथेन। बृहताऽऽगता।[17] दीप्तिमति![18] शृणु। चित्रधने![19] ह्वानम्।

**उषो॒ वाजं॒ हि वंस्व॒ यश्चि॒त्रो मानु॑षे॒ जने॑ ।**
**तेना व॑ह सु॒कृतो॑ अध्व॒राँ उप॒ ये त्वा॑ गृ॒णन्ति॒ वह्न॑यः ॥११॥**

उषो वाजम्। उषः! हि।[20] अन्नं[21] देवि! यः।[22] पूजनीयः।[23] मनुष्येषु[24] भवत्यथ।

---

१. सर्वाञ्चेष्टॄन् D. किञ्च द्वेषः सर्वप्राणिद्वेष्यं तमः Sk.
२. शोषयितॄन् Sy. शोषयितॄन् वा। कान्? सामर्थ्यान्नक्तञ्चरान् रक्षआदीन्। रक्षआदीनपि विवासयतीत्यर्थः Sk.
३. ०न्ति D. अपोच्छति तमश्च विवासयति Sk. ४. ०न्तु M.
५. V. Mādhava ignores सूनरी। मघोनी ६. सुखकरेणेत्यर्थः Sk.
७. ०हितावह० P. आनयन्ती Sk.
८. सौभाग्यम् Sy. प्रभूतमस्मभ्यं शोभनं धनं ददातीत्यर्थः Sk. ९. ०न्ति P.
१०. दिवसेषु Sy. दिवमिष्यते याभिर्गन्तुं ता दिविष्टयः। तासु। अस्मदीयेषु यज्ञेष्वित्यर्थः Sk. ११. हिशब्दः पदपूरणः Sk. १२. Omitted by P.
१३. सर्वे प्राणिनस्त्वत्प्रसादात् प्राणन्ति जीवन्ति चेत्यर्थः Sk.
१४. यस्मात् Sy. यद् या Sk.
१५. ०युसि P. तमांसि विवासयसि Sk.
१६. कुर्व M. १७. आयाहीति शेषः Sy. महता रथेनास्मान् प्रत्यागन्तुम् Sk.
१८. विशिष्टप्रकाशयुक्ते Sy.
१९. उषोनामैव वा चित्रामघशब्दः Sk.
२०. हिशब्दस्तु पदपूरणः Sk.
२१. अनं P. हविर्लक्षणम् Sy.
२२. या P.
२३. चायनीयः Sy.
२४. मनुष्ये जने जाते यजमाने Sy. मनुष्यलोके Sk.

तेनाग्नेन[1]। सुकर्मणः[2]। यज्ञान्। उपावह[3]। ये। त्वाम्। स्तुवन्ति। स्तोतारः[4]।

विश्वान्देवाँ आ वह सोमपीतयेऽन्तरिक्षादुषस्त्वम्।
सास्मासु धा गोमदश्वावदुक्थ्य१मुषो वाजं सुवीर्यम् ॥१२॥

विश्वान् देवान्। विश्वान्[5]। देवान्[6]। आवह। सोमपानाय। अन्तरिक्षात्[7]। उषः! त्वम्[8]।
सा[9]। अस्मासु। धेहि। गोमत्। अश्ववत्। प्रशस्यम्। उषः! वाजम्[10]। शोभनवीर्यम्[11]।

यस्या रुशन्तो अर्चयः प्रति भद्रा अदृक्षत।
सा नो रयिं विश्ववारं सुपेशसमुषा ददातु सुग्म्यम् ॥१३॥

यस्या रुशन्तः। यस्याः। दीप्यमानाः। अर्चयः। प्रत्यदृक्षन्त[12]। कल्याणाः। सा। नः। रयिम्।
सर्ववरणीयम्[13]। सुरूपम्। उषाः। ददातु। सुखकरम्[14]।

---

१. तेन कारणेन Sy. तेन दत्तेनोपावह Sk.

२. शोभनान्नान् स्वर्गादिफलावाप्तिकरणानि Sk.

३. उपाह्व D. उवावह M.

४. यज्ञनिर्वाहकाः Sy. स्तुतीनां वोढारो मत्प्रभृतयः। यच्छब्दश्रुतेस्तेषामित्यध्याहार्यम्। तेनान्नेन स्तोतॄन् यज्ञकरणसमर्थान् कुर्वित्यर्थः। अथवा तेनेति हेतौ तृतीया। तेन हविर्भूतेन हेतुना तदन्नं हविर्भूतमुपभोक्तुमित्यर्थः। आवह। कान्? आत्मसहचारिणो विश्वान् देवान्। . . . कीदृशान्? सुकृतः शोभनकर्मकारिणः। क्व? अध्वरानुप। . . . यज्ञान् प्रति यज्ञेष्वित्यर्थः। कस्य स्वभूतेषु? उच्यते। ये त्वा गृणन्ति वह्नयस्तेषाम् Sk.

५. Omitted by P. आत्मसहचारिणः Sk.

६. देवा M.

७. ०नातरि० P.

८. उषस एवात्र प्राधान्यं सहचारित्वमात्रं विश्वेषां देवानाम् Sk.

९. सास्मास्विति तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यां त्वामेवमवोचाम साऽस्मासु धाः स्थापय। अस्मभ्यं देहीत्यर्थः Sk.

१०. वाचम् M. अन्नम् Sk.

११. शोभनवीर्यसहितं शोभनवीर्यं वा Sk.

१२. ०क्षत P. D.
०क्षन्तदृक्षन्त M.
प्रतिदृश्यन्ते Sy.

१३. विश्वस्य वारकम्। यद्वा विश्वैर्वरणीयम् Sy.

१४. सुष्ठु गन्तव्यम् Sy.
सुखनामैतत्। सुखं च। अथवा रयेरेवैतद्विशेषणम्। सुखकरं रयिम् Sk.

ये चि॒द्धि त्वामृष॑यः॒ पूर्व॑ ऊ॒तये॑ जुहू॒रेऽव॑से महि ।
सा नः॒ स्तोमाँ॑ अ॒भि गृ॑णीहि॒ राध॒सोषः॑ शु॒क्रेण॑ शो॒चिषा॑ ॥१४॥

**ये चिद्धि ।** ये[1]। चित्[2]। हि। त्वाम्। ऋषयः। पूर्वे। रक्षणाय[3]। आहूतवन्तः। महति[4] !
सा। अस्माकम्। स्तोमान्। अभिगृणीहि[5]। धनेन[6]। उषः! शुक्रेण[7]। तेजसा युक्तेति[8]।

उषो॒ यद॒द्य भा॒नुना॒ वि द्वारा॑वृ॒णवो॑ दि॒वः ।
प्र नो॑ यच्छतादवृ॒कं पृ॒थु च्छ॒र्दिः॒ प्र दे॑वि॒ गोम॑ती॒रिषः॑ ॥१५॥

**उषो यदद्य ।** उषः! यत्[9]। अद्य। तेजसा। दिवः[10]। द्वारौ[11] पूर्वापरौ[12] सूच्येव[13] विद्धवती[14] तदानीम्।
प्रयच्छ[15]। अस्मभ्यम्। स्तेनरहितम्[16]। विस्तीर्णम्। गृहम्। प्रयच्छ च। देवि! गोमन्ति[17]। अन्नानि।

सं नो॑ रा॒या बृ॑ह॒ता वि॒श्वपे॑शसा मिमि॒क्ष्वा समिळा॑भि॒रा ।
सं द्यु॒म्नेन॑ विश्व॒तुरो॑षो महि॒ सं वाजै॑र्वाजिनीवति ॥१६॥

**सं नो राया[18]।** संयोजय। अस्मान्। धनेन। महता[19]। सर्वरूपेण[20]। संमिमिक्ष्व[21]। च। गोभिः[22]।

---

१. सा न इति तच्छब्देनोषसः प्रतिनिर्देशाद् य इति यच्छब्द उषोविषयो द्रष्टव्यः। व्यत्ययेन पुंलिङ्गता। द्वितीयैकवचनस्य स्थाने प्रथमाबहुवचनम्। ... यां त्वाम् Sk.
२. चिच्छब्दः पदपूरणः Sk.
३. क्षेणाय M. अवतिरत्र गत्यर्थः। स्वयज्ञान् प्रतिगमनाय Sk.
४. महिते! पूजनीये वा Sy.
५. अभिष्टुहि Sk.
६. धनं देहीत्यर्थः Sk.
७. नित्यं चास्मान् प्रति शुक्रेण ज्योतिषा व्युच्छेत्यर्थः। अथवा ये चिद्धि त्वां सा नः स्तोमानिति श्रुतौ यच्छब्दतच्छब्दौ परस्परसम्बन्धासम्भवाद्योग्यार्थसम्बन्धवन्तौ यच्छब्दतच्छब्दावध्याहृत्य निराकाङ्क्षीकर्तव्यौ। ये त्वामृषयः पूर्वे जुहुरे तेषामिव यां त्वामस्तोष्मः सा नोऽस्माकमपि स्तोमान् अभिगृणीहि राधसेति Sk.
८. V. Mādhava ignores अवसे
९. यां त्वामद्य Sk.
१०. दिवौ P. ११. द्यारौ M.
१२. पूर्वापरदिग्भागावन्धकारेणाच्छादितौ Sy.
१३. सूच्यप M.
१४. वर्धयति P. वद्ध भवति D. M. विश्लिष्य प्राप्नोषि Sy. विविधं गच्छसि। ... कृत्स्नां दिवं स्वज्योतिषा व्याप्नोषीत्यर्थः Sk.
१५. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः। सा प्र नो यच्छतात् Sk.
१६. हिंसकरहितम् Sy. परैरनादेयम् Sk.
१७. गोमन्नानि P. १८. राय D.
१९. महतः P. २०. बहुरूपेण सर्वरूपेण वा Sk. २१. समीक्ष्य P. संगमय। सम्बन्धय। धनमस्मभ्यं देहीत्यर्थः Sk. २२. इळेत्यन्ननाम। ...अन्नैश्च संमिमिक्ष्व Sk.

सम्[1]। यशसा। सर्वशत्रूणां हिंसकेन[2]। संयोजय[3]। अन्नैश्च[4]। अन्नवति[5]!

## I.49.

**उषो भद्रेभिरा गहि दिवश्चिद्रोचनादधि ।**
**वहन्त्वरुणप्सव उप त्वा सोमिनो गृहम् ॥१॥**

**उषो भद्रेभिः**। उषः! भद्रैः[6]। आगच्छ। दीप्तात्। लोकात्[7]। उपवहन्तु[8]। त्वाम्। अरुणरूपा अश्वाः[9]। सोमिनः। गृहम्[10][11]।

**सुपेशसं सुखं रथं यमध्यस्था उषस्त्वम् ।**
**तेना सुश्रवसं जनं प्रावाद्य दुहितर्दिवः ॥२॥**

**सुपेशसम्**। सुरूपम्[12]। सुद्वारम्[13]। रथम्। यम्। अध्यस्थाः। उषः! त्वम्। तेन। शोभनान्नं[14] हविष्मन्तम्। यजमानम्। अद्य। प्ररक्ष[15]। दिवः। दुहितः!

---

१. खं M.

२. अन्तकर्त्रेत्यर्थः Sk.

३. वाजशब्दोऽत्र बलवचनः। बलैश्च संमिमिक्ष्व Sk.

४. ०वन्त इति M.
अन्नसाधनभूतक्रियायुक्ते Sy.
प्रत्युपसर्गं चाख्यातानुषङ्गादाख्यातभेदाच्च वाक्यभेदाद्वाजिनीवतीत्येतस्योष इत्येतेन सह पर्यायवत्त्वेऽप्यपुनरुक्तत्वम्। सम्बन्धिशब्दो वोषस एव विशेषणम्। वाजिनीशब्दोऽन्ननामधेयम्। अन्नवती। अथवा वाजीत्यन्ननाम। तस्मात् स्त्रियामीकारः। वाजिन्यो बडवास्तद्वती वाजिनीवती Sk.

५. V. Mādhava ignores उषः। महि। Ms. D. puts the figure ॥४८॥ here to indicate the end of the fortyeighth hymn. No such number is given in P. and M.

६. कल्याणैरश्वैः Sk.

७. दिव उपर्यवस्थितात् . . . आदित्यमण्डलादागच्छ Sk.

८. उपशब्दः प्रतिशब्दस्यार्थे गृहमित्यनेन च सम्बन्धयितव्यः। सोमवतो यजमानस्य गृहं प्रति Sk.

९. गावः Sy.

१०. गृहा P.

११. V. Mādhava ignores चित्। अधि

१२. शोभनावयवं, शोभनरूपयुक्तं वा। यद्वा शोभनहिरण्ययुक्तम् Sy.

१३. शोभनेन खेनाकाशेन युक्तं, विस्तृतमित्यर्थः। यद्वा सुखहेतुभूतम्। अथवा सुखमिति क्रियाविशेषणम्। सुखं यथा भवति तथेत्यर्थः Sy.

१४. ०नान्नहेवि० M.

१५. प्रकर्षेण गच्छ Sy.
प्रकर्षेणागच्छ Sk.

वयश्चित्ते पतत्रिणो द्विपच्चतुष्पदर्जुनि ।
उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ॥३॥

वयश्चित्ते[१] । पक्षिणः । पत्रयुक्ताः[२] । द्विपात् । चतुष्पाच्च[३] । उषः ! शुक्रवर्णे[४] ! तव । आगमनकालान्[५] । प्रति । प्रगच्छन्ति[६] । अन्तरिक्षपर्यन्तेभ्यः[७] ।[८]

व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम् ।
तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषत ॥४॥

व्युच्छन्ती हि । व्युच्छन्ती[९] । हि[१०] । रश्मिभिः । सर्वम् । लोकम् । भासयसि[११] । ताम् । त्वाम् उषः ! धनकामाः[१२] । गीर्भिः । कण्वाः[१३] । आहूतवन्तः[१४] ।[१५]

I.50.

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥१॥

उदु त्यम्[१६] । उद्वहन्ति[१७] । तम्[१८] । जातवेदसम् । अश्वाः केतवो[१९] रश्मयो वा । सर्वेषां भूतानाम् । दर्शनाय[२०] ।

---

१. पय० M. चिच्छब्दोऽत्रोपमायाम् । वय इव पक्षिण इव ते तव Sk.
२. पुत्र० M. पतनशीला गमनशीला अश्वाः Sk. ३. प्रति Sk.
४. ०वर्णो D. शुक्रो वर्णे M. शुभ्रवर्णे Sy. शुक्लवर्णे Sk.
५. ०लात् P. D. गमनान्यनुलक्ष्य Sy. यो यो गमनकालस्तत्र तत्रेत्यर्थः Sk.
६. प्र is omitted by P. and D.
७. ०रिप० P. परिशब्दः . . . पदपूरणः । अथवा परिशब्दोऽन्तशब्दात् पूर्वो द्रष्टव्यः । . . . दिवः पर्यन्तेभ्यः प्रारन् Sk.
८. V. Mādhava ignores चित् । परि
९. तां त्वामिति च तच्छब्दाद्यच्छब्दोऽध्याहर्तव्यः । यां त्वाम् Sk.
१०. व्युच्छन्ती हि omitted by M. हिशब्दः पदपूरणः Sk.
११. ०यति P. D. M. सर्वं जगत् . . . प्रकाशयसीत्यर्थः Sk.
१२. स्तुतिलक्षणाभिः Sk.
१३. कण्वपुत्राः Sk. १४. आत्मन एवेदं परोक्षरूपेण प्रथमपुरुषेणाभिधानम् । अहं कण्वपुत्रः प्रस्कण्वनामा हुतवानित्यर्थः Sk.
१५. Ms. D. puts the figure ॥४६॥ here to indicate the end of the fortyninth hymn. No such number is given in P. and M.
१६. सूर्यः सर्तेवा । सुवतेर्वा । स्वीर्यतेर्वा . . . उद्वहन्ति तं जातवेदसं रश्मयः केतवः । सर्वेषां भूतानां दर्शनाय सूर्यमिति । (कमन्यमादित्यादेवमवक्ष्यत् ।) N. 12. 14, 15.
१७. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यं सर्वप्राणिनो नमस्यन्ति Sk.
१८. तज्जा० M. तत् जा० D. जातप्रज्ञानम् Sk.
१९. सत्यतत्त्वाः । सूर्यस्य हि स्वयं प्रज्ञानसत्त्वादश्वैरपि प्रज्ञानसत्त्वैरेव भवितव्यम् । अथवा केतवो रश्मयः । प्रज्ञानसत्त्वात् त उद्वहन्ति Sk. उदिते हि सूर्ये सर्वं भूतजातं द्रष्टुं समर्थं भवति नानुदिते Sk. २०. V. Mādhava ignores उ । देवम् । सूर्यम्

अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥२॥

अप[१] त्ये। अपयन्ति[२]। नक्षत्राणि। रात्रिभिः सहागच्छन्तीभिः[३]। अमी[४]। स्तेनाः। इव। सूर्यम्[५]। विश्वस्य द्रष्टारं[६] दृष्ट्वा।

अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा ॥३॥

अदृश्रमस्य। अदर्शमहम्[७][८]। अस्य[९]। केतून्[१०]। विभवन्ति[११][१२]। जनान्। प्रति[१३]। रश्मयः। भ्राजन्तः। अग्नयः। इव दीप्यमाना इति[१४]।

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ॥४॥

तरणिः। क्षिप्रगन्ता[१५]। विश्वस्य[१६] दर्शकः। ज्योतिषः कर्ता[१७]। असि। सूर्य! विश्वं च। दिवम्[१८]। प्रकाशयसि।

---

१. आप M. २. अवय० M. अदृश्यतां प्रतिपद्यन्त इत्यर्थः Sk.
३. सह ग० P.
४. M. adds अमीभिः before अमी। तस्करा नक्षत्राणि च रात्रीभिः सह सूर्यं आगमिष्यतीति भीत्या पलायन्त इत्यर्थः Sy.
५. पञ्चम्यर्थे चतुर्थी। सूर्यात्। सूर्योदयोत्तरकालं हि नक्षत्राणि रात्र्यश्च न दृश्यन्ते Sk. ६. द्रष्टातं P. कीदृशात् सूर्यात्? विश्वचक्षसे स्वज्योतिषा सर्वस्य दर्शयितुर्द्रष्टुर्वा Sk.
७. लडर्थेऽयं लुङ्।... प्रथमपुरुषबहुवचनस्य स्थाने व्यत्ययेनेदमुत्तमपुरुषैकवचनम्। दृश्यन्त इत्यर्थः। कुत एतत्? केतव इत्यादिष्वभिहितकर्मत्वनिमित्तायाः प्रथमाया दर्शनात् Sk.
८. ०र्शनमहम् M. अनुक्रमेण प्रेक्षन्ते Sy.
९. अदर्शमहस्य P. अस्य सूर्यस्य... प्रज्ञापका रश्मयो... जनान्।... जातान् सर्वान्... सर्वं जगत्प्रकाशयन्तीत्यर्थः Sy.
१०. के दृश्यन्ते? उच्यते। अस्य सूर्यस्य स्वभूताः केतवः प्रज्ञानतत्त्वा रश्मयः।... अथवा अदृश्रमित्युत्तमपुरुषश्रुतिसामर्थ्याद् रश्मीनां च दर्शनकर्मत्वात् केतव इत्यादिषु द्वितीयार्थे व्यत्ययेन प्रथमा। अदर्शमहमस्य केतून् रश्मीन् जनाननु विभ्राजमानानग्नीनिव Sk.
११. विशब्दस्तु भ्राजन्त इत्येतेन सम्बन्धयितव्यः Sk. १२. ०ति M.
१३. मनुष्यान् व्याप्यावस्थिता इत्यर्थः Sk.
१४. The third *pāda* of this stanza is quoted in N. 3. 15.
१५. तरिता, अन्येन गन्तुमशक्यस्य महतोऽध्वनो गन्तासि। यद्वोपासकानां रोगात्तारयितासि। 'आरोग्यं भास्करादिच्छेत्' इति स्मरणात् Sy. १६. सर्वैः प्राणिभिर्दर्शनीयः।... यद्वा विश्वं सकलं भूतजातं दर्शतं द्रष्टव्यं प्रकाश्यं येन स तथोक्तः Sy. सर्वस्य हि दर्शनीयो द्रष्टा वा Sk.
१७. यद्वा चन्द्रादीनां रात्रौ प्रकाशयिता। रात्रौ हि अम्मयेषु चन्द्रादिबिम्बेषु सूर्यकिरणाः प्रतिफलिताः सन्तोऽन्धकारं निवारयन्ति यथा द्वारस्थदर्पणोपरि निपतिताः सूर्यरश्मयो गृहान्तर्गतं तमो निवारयन्ति तद्वदित्यर्थः... यद्वा हे सूर्य अन्तर्यामितया सर्वस्य प्रेरक परमात्मन् तरणिः संसाराब्धेस्तारकोऽसि। यस्मात्त्वं... विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः।... ज्योतिषः सूर्यादेः कर्ता Sy.
१८. सर्वं च जगदाभासयसि। रोचनं प्रकाशस्वभावकम् Sk.

**प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वं स्वर्दृशे ॥५॥**

प्रत्यङ् देवानाम्। "तस्मात् सर्वं एव मन्यते मां[1] प्रत्युदगात्" इति ब्राह्मणम्। देवानां विशो देवानित्यर्थे देवान्[2]। मनुष्यान्। च त्वम्। अभिमुख[3] उदेषि किं बहुना सर्वं जगदपि[4]। प्रत्यङ्ङु-[5]देषि। सर्वस्य[6] पदार्थस्य। दर्शनाय।

**येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ॥६॥**

येना पावक[7]। येन। शोधयितः! तेजसा[8]। जनान्। प्रत्यर्थार्थम्। गच्छन्तम्[9]। त्वम्[10]। आच्छादयितः[11]! पश्यसि[12] "तत् ते वयं स्तुम इति वाक्यशेषः[13]" इति यास्कः।

---

१. मा P. D. २. मरुन्नामकान् देवान् Sy. देवानां स्वभूता या विशस्तान् . . . द्रष्टुम्। पुरस्तादुदितस्य भवतः पश्चादवस्थितान् सर्वदेवान् द्रष्टुमित्यर्थः Sk.

३. उदेतुश्चेदं सूर्यस्य विशेषणं नोदयतिक्रियायाः। कुत एतत्? ंल्लिङ्गत्वात्। प्रतीच्यां च दिशि सूर्योदयस्यासम्भवात्। प्रत्यङ् उदेषि प्राच्यां दिशि पश्चान्मुखः स्थित्वा त्वमुदेषीत्यर्थः Sk.
प्रत्यङ्ङिदं सर्वम्। [उदेषि। प्रत्यङ्ङिदं ज्योतिरुच्यते। प्रत्यङ्ङिदं सर्वम्] (इदम्) अभिविपश्यसीति N. 12. 24.

४. ०दभि P. ५. ०त्यङ् दे० M. ०त्यङ्दे० P. ६. तथा...व्याप्तं...स्वर्लोकं ...द्रष्टुम्। ...यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुख्येन पश्यन्ति तथोदेषीत्यर्थः। ...लोकत्रयवर्तिनो जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति Sy. स्वश्शब्दोऽत्र द्युनाम। द्युलोकं च द्रष्टुम्। यावदिदं किञ्चित्सर्वं पश्चादवस्थितं द्रष्टुं सर्वतः पूर्वं पश्चान्मुखस्त्वमुदेषीति समस्तार्थः Sk. ७. भुरण्युरिति क्षिप्रनाम। भुरण्युः शकुनिः। भूरिमध्वानं नयति। स्वर्गस्य लोकस्यापि वोळ्हा। तत्सम्पाती भुरण्युः। अनेन पावकख्यानेन। भूरण्यन्तं जनाँ अनु। त्वं वरुण पश्यसि N. 12. 22.

८. दर्शनेन ज्योतिराख्येन Sk.

९. धारयन्तं पोषयन्तं वा Sy. मनुष्यलोकं प्राप्तवन्तमित्यर्थः Sk.

१०. ०न्त त्वाम् P. ०न्तस्त्वाम् D.

११. अनिष्टनिवारक Sy.

१२. तं प्रकाशं स्तुम इति शेषः। यद्वा उत्तरस्यामृचि सम्बन्धः। तेन चक्षसा व्येषीति Sy. साकाङ्क्षत्वाच्च वाक्यस्य तेनाद्य वयं स्तुम इति वाक्यशेषः। एवमत्र सत्यपि वरुणस्यामन्त्रणे . . . सूर्यस्यैव प्राधान्यं न वरुणस्य। सौर्यं हीदं सूक्तं न वारुणम्। अथवा सूर्यस्य सूक्तभाक्त्वाद्वरुण इति क्रियाशब्देन सूर्यस्यैवामन्त्रणम्। भुरण्यशब्दस्तु क्षिप्रकारिवचनः। . . . भुरण्यतिः क्षिप्रत्वार्थोऽपि न गतिकर्मैवेति गम्यते। येन हे पावक! चक्षसानुग्रहात्मकेन दर्शनेन भुरण्यन्तं क्षिप्रं यागान् स्तुतीश्च कुर्वन्तं मनुष्यं जनाननु मनुष्यान् प्रति वर्तमानम्। मनुष्यमध्यगतमित्यर्थः। त्वं हे वरुण! ज्योतिषा कृत्स्नस्य जगत आवरितः! सूर्यं पश्यसि। साकाङ्क्षत्वाद्वाक्यस्य पूर्ववत्तेन वयं स्तुम इति वाक्यशेषः। आशीरर्थो वा वाक्यशेषोऽध्याहर्तव्यः। तेनास्मानपि पश्येति। अथवा यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्य पूर्वयर्चैकवाक्यता योज्या। येन चक्षसा भुरण्यन्तं पश्यसि तेन प्रत्यङ्ङुदेषीति। परया वा येन चक्षसा भुरण्यन्तं पश्यसि तेन वि द्यामेषीति Sk. १३. N. 12. 22.

**वि द्यामे॑षि॒ रज॑स्पृ॒थ्वहा॒ मिमा॑नो अ॒क्तुभि॑ः पश्य॒ञ्जन्मा॑नि सूर्य ॥७॥**

वि द्यामेषि[1]। पृथु। रजोऽन्तरिक्षम्। रात्रिभिः सह[2]। अहानि। कुर्वन्[3]। द्याम॰ ंच। पश्यन्[5] सर्वाण्येव[6]। जातानि[7]। व्येषि[8] मध्ये गच्छसि[9]।

**स॒प्त त्वा॑ ह॒रितो॑ रथे॑ वह॑न्ति देव सूर्य । शो॒चिष्के॑शं विचक्षण ॥८॥**

सप्त त्वा। सप्त। त्वाम्। बडवाः[10]। रथ[11] आरोप्य। वहन्ति[12]। देव! सूर्य! ज्वलद्रश्मिम्[13]। विद्रष्टः[14]! "केशा रश्मयः"[15] इति यास्कः[16] केशसादृश्याद्वेति।

**अयु॑क्त स॒प्त शु॒न्ध्युवः॑ सूरो॒ रथ॑स्य न॒प्त्यः॑ । ताभि॑र्याति॒ स्वयु॑क्तिभिः ॥९॥**

अयुक्त[17] सप्त। युक्तवान्। सप्त। बडवाः[18]। सूरः। रथस्य। नेत्रीः[19]। ताभिः[20]। याति। स्वेन

---

१. व्येषि द्याम्। रजश्च। पृथु महान्तं लोकम्। अहानि च मिमानोऽक्तुभी रात्रिभिः सह। पश्यञ्जन्मानि जातानि सूर्य N. 12. 23. २. अक्तुशब्दोऽयं ज्योतिर्वचनः।... आत्मीयैर्ज्योतिर्भिः। रश्मिभिर्हि सूर्योऽहानि करोति। अथवाऽक्तुशब्दो रात्रिनामैव।... अहानि निर्मिमानोऽक्तुभिः रात्रिभिः सह Sk.

३. स्वोदयास्तमयाभ्याम्। उदयेन हि सूर्योऽहानि करोति अस्तमयेन रात्रिम् Sk.

४. कुर्वामन्तरिक्षं M.

५. अनुग्राह्यतयाऽनुगृह्णन्नित्यर्थः Sk.

६. जननधर्माणि भूतजातानि Sk.

७. ज्येष्टि M. ८. विशेषेण Sy. दयां दयुलोकं ... विविधं गच्छसि Sk.

९. V. Mādhava ignores सूर्य। Ms. P. and D. ignore this stanza. १०. वद्धव M. अश्वाः। रसहरणशीला रश्मयो वा... हरित इति आदित्याश्वानां संज्ञा। 'हरित आदित्यस्य' (निघ० १. १५. ३.) इति निघण्टावुक्तत्वात् Sy. हरिच्छब्दो हरितशब्दपर्यायो नीलवर्णवचनः। हरितवर्णा बडवाः Sk.

११. सप्तमीनिर्देशादत्र स्थितमिति वाक्यशेषः। रथे स्थितं वहन्ति Sk. १२. ०हति M.

१३. ज्वलदृष्टिम् M. तेजांस्येव यस्मिन केशा इव दृश्यन्ते स तथोक्तस्तम् Sy. शोचिर्दीप्तिः रश्म्याख्या। सा केशस्थानीया यस्य स शोचिष्केशः। तं... दीप्तरश्मिकमित्यर्थः Sk.

१४. विचक्षण! सर्वस्य प्रकाशयितः! Sy. सर्वस्य द्रष्टः! Sk. १५. N. 12. 25.

१६. The passage beginning with सप्त त्वा and ending with यास्कः is omitted by P. and D.

१७. अक्त M. १८. शोधिका अश्वस्त्रियः Sy. १९. नेतिः P. नेतीः D. न पातयित्र्यः। याभिर्युक्ताभी रथो न याति न पतति तादृशीभिरित्यर्थः Sy. रथस्यापत्यभूतः।... अथवा नप्त्य इति तु नप्तृशब्दपर्यायः प्रथमैकवचनान्तं सूर्यस्य विशेषणम्। नप्ता सूर्य इति। कस्य नप्ता? सामर्थ्यादपाम्। अद्भ्यो हि वैद्युतात्मनाऽग्निर्जायते। अग्नेः सूर्यः।... अथवा नप्त्य इति क्रियाशब्दो द्वितीयाबहुवचनान्तो बडवानामेव विशेषणार्थः। न न पतन्ति पतन्त्येव यास्ता नप्त्यः। सततगामिनीरित्यर्थः Sk.

२०. ताभिर्यातीति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः Sk.

युज्यमानाभिः[1]। शोधनादश्वाः शुन्ध्युवः[2]।

उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम्।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥१०॥

उद्वयम्। उदगन्म[3]। वयम्। तमः[4]। विहाय[5]। उपरि स्थितम्[6]। ज्योतिः[7]। पश्यन्तः[8] किं तज् ज्योतिरित्याह—दीप्यमानम्[9]। देवेषु। सूर्यम्। अगन्म। ज्योतिः। उत्तममिति।

उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम्।
हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥११॥

उद्यन्नद्य। उद्यन्[10]। अद्य। मित्राणां[11] पूजयितः[12]! आरोहन्[13]। उद्गततरं[14] च। द्याम्। मम हृदयस्य[15] रोगम्। त्वचि[16] हरिमाणम्। च। नाशय।

दुर्वर्णत्वं प्राप्तः प्रस्कण्वस्त्वचमपश्यदिति।[17]

---

१. स्वयमेव या रथे युज्यन्ते ताः स्वयुक्तयः। ताभिः स्वयुक्तिभिः Sk.

२. शुन्ध्युरादित्यो भवति शोधनात् तस्य स्वभूताः। आत्मन एव स्वभूता इत्यर्थः। अथवोदकचरो मरुन्नाम यश्शकुनिः स शुन्ध्युरुच्यते। द्वितीयाबहुवचनं चेदम्। मरुत्सदृशामित्यर्थः। क्रियाशब्दो वा शुन्ध्युशब्दः। शोधयित्रीः शुन्ध्युवः Sk.

३. ऊर्ध्वं गताः प्राप्ताः। सूर्येण सहैकात्मकतां सूर्यलोकं वा प्राप्ताः स्म इत्यर्थः। प्राप्तिहेतोश्च दर्शनस्य भूतकालत्वात् प्राप्तेरेवायं हेतुभूतकालसम्प्रेषितत्वाद्वेत्थेवं भूतकालप्रत्ययेनापदेशः। देवश्चेददद्य वर्षिष्यति संपन्नाः शालय इति यथा Sk.

४. तेमः M. तमस उपरि रात्रेरूर्ध्वं वर्तमानं, तमसः पापात् परि उपरि वर्तमानं वा पापरहितमित्यर्थः Sy. तमोऽभिभूय व्यवस्थितमित्यर्थः। . . . पाप्मा वै तमः। पाप्मानमेव तमोऽपहते स्वः पश्यन्तः। उत्तरमिति। अयं वै लोकोऽद्भ्य उत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति Sk.

५. विहारय D. ६. ०स्थित M.

उद्गततरमुत्कृष्टतरं वा Sy. उत्तरमुन्नततरमत्यन्तोत्कृष्टम् Sk.

७. तेजस्विनम् Sy. सौर्यं ज्योतिः Sk.

८. स्तुतिभिर्हविर्भिश्चोपासीनाः सन्तः Sy.

९. दानादिगुणयुक्तम् Sy.

१०. उद्गच्छन् Sk.

११. सर्वेषामनुकूलदीप्तियुक्त! Sy.

१२. पूज्यो वा Sk.

१३. ०यितारो० P.D.M.

१४. उद्गततरां दिवम् . . . आरोहन्, यद्वा . . . अन्तरिक्षं प्रकर्षेण प्राप्नुवन् Sy. उदात्ततराम् Sk. १५. हृदस्य M.

१६. शरीरगतकान्तिहरणशीलं बाह्यं रोगम्। यद्वा शरीरगतं हरिद्वर्णं रोगप्राप्तं वैवर्ण्यमित्यर्थः Sy. हरितवर्णम् Sk.

१७. V. Mādhava ignores सूर्य

शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।
अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥१२॥

शुकेषु[1] मे। हरितवर्णेषु[2] शुकेषु[3]...[4]। च। मदीयमपि। हरिमाणं वयम्। निदध्मः[5]। अपिच[6]। हारिद्रवेषु[7] पक्षिषु। सर्वेऽमी[8] मदर्थमपि हरिता भवन्त्वित्यर्थः "सिंहे मे मन्युर्व्याघ्रे मेऽन्तरामयः"[9] इति यजुः[10] ।

उदगादयमादित्यो विश्वेन सहसा सह ।
द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम् ॥१३॥

उदगादयम्। उदितः। अयम्। आदित्यः[11]। सर्वेण। बलेन[12]। सह। द्विषन्तम्। मह्यम्। वशीकुर्वन्[13]। मैव[14]। अहम्[15]। द्विषते। वशो[16] भवामीति[17] ।

## I.51.

अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम् ।
यस्य द्यावो न विचरन्ति मानुषा भुजे मंहिष्ठमभि विप्रमर्चत ॥१॥

अभि[18] त्यं मेषम्। सव्य आङ्गिरसः[19]। अभिमदत[20]। तं[21] मेधातिथेः[22]।

---

१. शुक्रेषु P. २. हतव० P. D.
३. शुके P. ४. विचदिकासू P. विचट्टिकासु D. विचदितासु M. रोपणाकासु शारिकासु पक्षिविशेषेषु Sy. रोपणाका नाम हरितकटिका Sk.
५. आशिषि लिङर्थेऽयं लट् द्रष्टव्यः। निधेयामेत्याशास्महे Sk.
६. अथोशब्दश्चार्थे Sk.
७. हरि० D. हरितालद्रुमेषु Sy. हारिद्रवा नामात्यन्तशीघ्रगामिनः पक्षिणः Sk.
८. सर्वेपि P. स च हरिमा तत्रैव सुखेनास्ताम्, अस्मान्मा बाधिष्टेत्यर्थः Sy.
९. The quotation is untraced.
१०. यजः P. ११. अदितेः पुत्रः Sk.
१२. रश्मिसमूहलक्षणेन ... अथवा ये यक्षगन्धर्वादय आदित्यमण्डले निवसन्ति तत्समूहलक्षणमत्राभिप्रेतम्। यक्षादिभिः परिवृतमित्यर्थः Sk. १३. हिंसन् Sy.
१४. नैव हिंसां करोमि। सूर्य एवास्मदनिष्टकारिणं रोगं विनाशयत्वित्यर्थः Sy. अस्य भगवतः प्रसादान्माऽहं शत्रोर्वशं गच्छेयम् Sk. १५. मेवाह P. मैवाह M.
१६. पशो M. १७. Ms. D. puts the figure ॥५०॥ here to indicate the end of the fiftieth hymn. No such number is given in P. and M. १८. आदि P.
१९. The word ऋषिः is to be understood after आङ्गिरसः ।
२०. अर्चतिकर्मायम्। पुत्रादीनां वायं प्रैषः सहायानां वर्त्विजाम्। मया सहाभिषुत हे मत्पुत्रादय ऋत्विजो वा Sk.
२१. D. adds अभिमततमं after तम्
२२. मेदधातिथेः P.

मेषम्[1]। पुरुहूतम्[2]। ऋगर्हम्[3]। इन्द्रम्[4]। स्तुतिभिः। धनस्य। आकरम्[5]। यस्य। रश्मयः[6]। इव[7]। इतस्ततश्चरन्ति[8]। मनुष्यहितानि कर्माणि[9]। भोगाय[10] तम्। अभिष्टुत[11]। मेधाविनम्। अत्र शाटचायनकम्[12]—अथ मैधातिथम्। मेधातिथिगृहपतयो विभिन्दुकीयाः सत्त्रमासते। तेषां दृढच्युदागस्तिरुद्गातासीद् गौरीवितिः प्रस्तोताऽच्युतच्युत् प्रतिहर्ता वसुक्षयो होता सनकनवकावध्वर्यू। पशुकामो मेधातिथिर्जनिकामौ सनकनवकौ। यत्कामा इतरे तत्कामा नानाकामा ह वै स्म पुरा सत्त्रमासते। ते ह स्म नानैव कामान् ऋद्ध्वाप्त्वोत्तिष्ठन्ति। तेषां ह स्मेन्द्रो मेधातिथेर्मेषस्य रूपं कृत्वा सोमं व्रतयति। तं ह स्म बाधन्ते। मेधातिथेर्नो मेषः सोमं व्रतयतीति। स उ ह स्मैषां स्वमेव रूपं कृत्वा सोमं व्रतयति। ततो ह वा इदमर्वाचीनं मेधातिथेर्मेष इत्याह्वयन्तीति[13]।

**अ॒भीमव॑न्वन्त्स्वभि॒ष्टिमू॒तयो॑ऽन्तरिक्ष॒प्रां तवि॑षीभि॒रावृ॑तम्।**
**इन्द्रं॒ दक्षा॑स ऋ॒भवो॑ मद॒च्युतं॑ श॒तक्र॑तुं॒ जव॑नी सू॒नृतारु॑हत् ॥२॥**

अभीमवन्वन्[14]। अभ्यसेवन्त[15]। एनम्[16]। सुष्ठु शत्रूणामन्वेष्टारम्[17]। मरुतः[18]। अन्तरिक्षस्य

१. शत्रुभिः स्पर्धमानम्। यद्वा . . . मेधातिथिं यजमानमिन्द्रो मेषरूपेणागत्य तदीयं सोमं पपौ। स ऋषिस्तं मेष इत्यवोचत् Sy. मेषमितीन्द्रस्याभिधानम्। तं मेषं मेषरूपम् Sk. २. बहुभिर्यजमानैराहूतम् Sk. ३. यगर्हम् M. ऋग्भिर्विक्रियमाणं स्तूयमानमित्यर्थः। . . . यद्वा ऋग्भिर्मीयते शब्द्यते इति ऋग्मीस्तम् Sy. ऋग्मियम्। ऋच स्तुतौ। अर्चनमृक् स्तुतिः। तद्वन्तमृग्मियम्। अर्चनीयं वेन्द्रम् Sk. ४. इन्द्र D. ऋगमहिन्द्र P. ५. आकारं P.D.M. समुद्रस्थानीयम्। समुद्रवद्धनानामाश्रयमित्यर्थः Sk. ६. द्युलोकाः Sk. ७. व P. न Sk. ८. इततश्च० P. विशेषेण वर्तन्ते Sy. न विगच्छन्ति। नातिक्रामन्तीत्यर्थः Sk. ९. मानुषा मननानि ज्ञानान्यभिप्रायलक्षणानि। यस्य सर्वं द्युलोकं वशवर्तीत्यर्थः। अथवा द्यावो नेति नशब्द उपरिष्टादुपचार उपमार्थीयः। मानुषशब्दोऽपि मनुष्यजातिवचनः। यस्य स्वभूतानि यष्टॄणि मानुषाणि द्यावो न द्युलोका इव। यथा द्युलोका दीप्तिमन्त एवं दीप्तियुक्तानि विचरन्ति। समस्तायां पृथिव्यां परिभ्रमन्तीत्यर्थः Sk. १०. भुजे पालनात्मनः Sk. ११. अभिपूजयत Sy.

१२. Mss. read शास्त्रानकम् but the correct reading is obviously शाटचायनकम् १३. Cf. B. Ghosh, *Collection of the Fragments of Lost Brāhmaṇas*, pp. 5, 6.

१४. अभीममन्वन् M. अभि० P.

१५. अभ्यसे० P. सम्भक्तवत्यः सेवितवत्य इत्यर्थः Sk. १६. ०न्तौनं M.

१७. ०न्वेष्टा P. शोभनाभ्येषणवन्तं, शोभनाभिगमनमित्यर्थः Sy. सुष्ठ्वभियष्टव्यं सुष्ठु वाभ्येषणशीलं शत्रूणाम् Sk.

१८. रक्षितारः Sy. ऊतिशब्दोऽत्र पालनाद् गमनाद्वा मरुदादिसेनासु वर्तते। मरुदादिसेनाः Sk.

पूरयितारम्[1]। बलैः[2]। आवृतम्। इन्द्रम्। वृद्धाः[3]। ऋभवश्च। शत्रुमदस्य[4] च्यावयितारं तमिमम्[4]। शतक्रतुम्[5]। वेगस्य[6] कारयित्री[7]। स्तुतिः[8]। आरोहति[9]।

त्वं गोत्रमङ्गिरोभ्योऽवृणोरपोतात्रये शतदुरेषु गातुवित्।
सुसेनं चिद्विमदायावहो वस्वाजावद्रिं वावसानस्य नर्तयन् ॥३॥

त्वं गोत्रम्। त्वम्। बलं[10] मेघरूपम्[11]। अङ्गिरसामर्थाय। अपावृणोः[12] पशूनाहर्तुम्[13]। अपिचासुरैः। शतद्वारेषु[14] यत्र गृहेषु प्रक्षिप्ताय। अत्रये[15]। मार्गस्य[16] लम्भयिता तथा। अन्नेन सह विमदाय[17] ऋषये। धनम्[18]। च। अवहः[19]। युद्धे[20]। वर्तमानस्य विमदस्यार्थाय[21]। वज्रम्[22]। भ्रामयन्[23]।

---

१. स्वबलेन Sk. २. परिवृतम् Sk.
३. दक्षयितारः प्रवर्धयितारः Sy. दक्षतिरुत्साहार्थीयः। उत्साहिन ऋभवः। अथवा दक्षशब्दोऽत्रात्मपर्यायः। . . . सामर्थ्याच्चान्तर्णीतमत्वर्थः। आत्मवन्तः। आत्मवत्तया चात्र यत्नवत्ता लक्ष्यते। सर्वार्थेषु यत्नवन्त ऋभव इत्यर्थः Sk.
४. शत्र० D. शत्रुमनस्य P. मदः सोमो मदकरत्वात्। तं प्रति च्यवते गच्छतीति मदच्युत्। तं मदच्युतम्। अथवा मदो गर्वः। च्यवतिरपि सामर्थ्यादन्तर्णीतण्यर्थः। शत्रूणां मदस्य गर्वस्य च्यावयितारम् Sk.
५. बहुकर्माणं बहुप्रज्ञं वेन्द्रम् Sk.
६. वृत्रवधं प्रति प्रेरयित्री Sy. वेगेन गन्त्री Sk. ७. ०यिती M.
८. प्रियसत्यात्मिका वाक् Sy. स्तुतिलक्षणा वाक्...अथवा सूनृता माध्यमिका वाक् Sk.
९. आरूढवती Sy. मेघवधकाले व्याप्नोतीत्यर्थः Sk.
१०. वयं P. ववं D. अव्यक्तशब्दवन्तं वृष्ट्युदकस्यावरकं मेघम्...यद् वा . . . गोसमूहं पणिभिरपहृतं गुहासु निहितमङ्गिरोभ्य ऋषिभ्यः . . . गुहाद्वारोद्घाटनेन प्राकाशयः Sy.
११. त्वं मेघ० M.
१२. उद्घाटितवान् Sk.
१३. पशूनां हर्तुम् P. D. M.
१४. शतं मोहनद्वाराणि येषु तानि शतदुराणि तेषु।...अथवा शतदुराः सोमयागा अत्रोच्यन्ते। तेषु प्राग्वंशसदोहविर्धानसम्बन्धीनि बहूनि द्वाराणि Sk.
१५. ०यो P.
१६. गातुर्निर्गमनमार्गः। विदिर्लाभार्थो ज्ञानार्थो वा। निर्गमनमार्गस्य लब्धा ज्ञाता वा...गातुविदित्यपि गातुशब्दो गमनवचनः। अत्र स्वभूतेषु शतदुरेषु बहुद्वारेषु सोमयागेषु गातुविद् गमनज्ञः। अनुभूतगमनः। नित्यगमन इत्यर्थः Sk.
१७. मीमदाय P. विमाय M.
१८. प्रापितवान्। दत्तवानित्यर्थः Sk.
१९. तदीयैः शत्रुभिस्सह सङ्ग्रामे Sk.
२०. स्वबलेनाच्छादयतः Sk.
२१. त्रिमर्दस्या० P. D. स्तोतुः Sy.
२२. अद्रिविकारत्वादद्रिर्वज्रोऽत्राभिप्रेतः। पाषाणमयं वज्रम् Sk.
२३. आत्मन एव स्वभूतं नर्तयन् हस्ततलस्थमुत्पातयन्नित्यर्थः Sk.

त्वम॒पाम॑पि॒धाना॑वृणो॒रपा॑धारयः॒ पर्व॑ते॒ दानु॑म॒द्वसु॑ ।
वृ॒त्रं यदि॑न्द्र॒ शव॒साव॑धी॒रहि॑मादि॒त्सूर्यं॑ दि॒व्यारो॑हयो दृ॒शे ॥४॥

त्वमपाम्। त्वं मेघस्थानाम्। अपाम्। अपिधानानि[१]। अपावृणोस्तथा[२]। शिलोच्चये[३]। असुरसम्बन्धि[४]। वसु[५]। धारितवान्[६] मेघे[७] वा[८]। वृत्रम्। यत्। इन्द्र! बलेन। अवधीः। अहिं[९] च। अनन्तरम्। एव। सूर्यम्[१०]। दिवि। आरोहयः[११]। सर्वेषां दर्शनाय[१०]।

त्वं मा॒याभि॒रप॑ मा॒यिनो॑ऽधमः स्व॒धाभि॒र्ये अधि॒ शुप्ता॒वजु॑ह्वत ।
त्वं पिप्रो॑र्नृमणः॒ प्रारु॑जः॒ पुरः॒ प्र ऋ॒जिश्वा॑नं दस्यु॒हत्ये॑ष्वाविथ ॥५॥

त्वं मायाभिः। त्वम्। कृत्रिमैः[१२]। कृत्रिमान्[१३]। अपाधमः[१४]। ये[१५]। अन्नैर्देवानपहाय[१६] वयमेव[१७] देवा

---

१. Omitted by P. and D. ०धनानि M. निर्गमनबिलघट्टनानि Sk.

२. उद्घाटितवान् Sk.

३. पर्ववति पूरयितव्यप्रदेशयुक्ते स्वकीयनिवासस्थाने ... हिंसायुक्तस्य। यद्वा दनुरसुरमाता सैव दानुस्तद्वतस्तादृशस्य वृत्रादेर्वसु धनमधारयः। शत्रून् जित्वा तदीयं धनमपहृत्य स्वगृहे न्यचिक्षिप इत्यर्थः। यद्वा दानुमदिति वसुविशेषणम्। शोभनदानयुक्तमित्यर्थः Sy. मेघे Sk.

४. दानुमत्। दानुरत्र माध्यमिका वाक्। तद्वत् Sk.

५. वृष्ट्युदकलक्षणं धनम्। यथाकालमुदकनिर्गमनार्थं त्वमेव मेघस्य द्वाराण्यपावृणोस्त्वमेव च मेघ उदकमधारय इत्यर्थः। अथवाऽधारयः पर्वत इति पर्वतोऽत्र शिलोच्चय एवाभिप्रेतः। धारितवानस्यात्मीये दुर्गपर्वते। किम्? दानुमद्वसु दानुर्नामासुराणां माता। सा यस्मिन्नन्तर्गतास्ति तदिदं दानुमद्वसु धनम्। असुरान् पराजित्य तेषां मातरं धनं च स्वर्गे निहितवानित्यर्थः Sk.

६. धातृवान् M.

७. मेघं P.

८. Omitted by P. and D.

९. अहन्तव्यमन्येन हन्तुमशक्यम् Sk.

१०. द्युलोके ... द्रष्टुं सूर्यम्। ... वृत्रेणावृतं सूर्यं तस्माद् वृत्रादमूमुचः Sy.

११. ० हय P. D. M. यदेति वचनादाच्छब्दोऽयं तदेत्यस्यार्थे। इच्छब्दः पदपूरणः Sk.

१२. जयोपायज्ञानैः। मायेति ज्ञाननाम, 'शची माया' (निघ० ३. ६. ६.) इति तन्नामसु पाठात्। यद्वा मायाभिः लोकप्रसिद्धैः कपटैः Sy. स्वाभिर्मायाभिः Sk.

१३. उक्तलक्षणमायोपेतान् वृत्रादीनसुरान् Sy. मायावतोऽसुरान् Sk.

१४. अवायमः P. अवाधमः D. अबाधमः M. स्वस्थानेभ्यो निष्कालितवान् Sk.

१५. येन्यैः P. येनैः M.

१६. दवान० P. ०नवाहय M.

१७. P. and D. adds वयेव देवानपहाय before वयमेव।

इति स्वस्मिन्[1]। आस्ये। होमं कृतवन्तः[2]। त्वम्। पिप्रोः[3]रसुरस्य। हे नृमणः ! नृषु[4] मनोऽस्य। पुराणि।
प्रारुजः[5]। प्ररक्षितवानसि। ऋजिश्वानं[6] च। सङ्ग्रामेषु[7] [8]।

**त्वं कुत्सं॑ शुष्ण॒हत्ये॑ष्वावि॒थार॑न्धयोऽतिथि॒ग्वाय॒ शम्ब॑रम् ।**
**म॒हान्तं॑ चिदर्बु॒दं नि क्र॑मीः प॒दा स॒नादे॒व द॑स्यु॒हत्या॑य जज्ञिषे ॥६॥**

**त्वं कुत्सम्**। त्वम्। कुत्सम्। तस्य शत्रोः शुष्णासुरस्य[9] सङ्ग्रामेषु[10]। रक्षितवानसि तथा।
अतिथिग्वाय[11] दिवोदासाय। शम्बरमसुरम्। वशमनयः[12] तथा। महान्तम्। अर्बुदासुरम्। पदा[13]।
नि[14]। क्रमीः[15] किं बहुना। चिरात्। एवारभ्य। दस्युहननाय। आसीः[16]।

**त्वे विश्वा॒ तवि॑षी स॒ध्र्य॑ग्घि॒ता तव॒ राधः॑ सोमपी॒थाय॑ हर्षते ।**
**तव॒ वज्र॑श्चिकिते बा॒ह्वोर्हि॒तो वृ॒श्चा शत्रो॒रव॒ विश्वा॑नि॒ वृष्ण्या॑ ॥७॥**

**त्वे विश्वा**। त्वयि। सर्वाणि[17]। बलानि[17]। सह[18]। निहितानि[19]। तव। धनम्[20]। सोमपानाय।
हृष्यति[21] बहु भवति। तव। वज्रः[22]। प्रख्यात[23] आसीत्। बाह्वोः[24]। निहितः स त्वम्। शत्रोः[25]। सर्वाणि।

---

१. अस्मिन् M. २. प्रक्षिप्तवन्तः। स्वशरीरभोगपरा इत्यर्थः Sk.
३. विप्रो ० P. विप्रो ० M.
४. नृषु यजमानेषु रक्षितव्येष्वनुग्रहबुद्धियुक्त Sy. नृषु मनो यस्य स नृमणाः। तस्य सम्बोधनं हे नृमणः Sk.
५. व्रारुज P. प्रकर्षेण भग्नवानसि Sk.
६. ०तवानस्म्यृजि० D. ०तवान्। नस्य्याज० M. ऋषिं विदथिनः पुत्रम् Sk.
७. दस्यूनामुपक्षपयितृणां हननेन युक्तेषु सङ्ग्रामेषु। यद्वा दस्यूनां हनने निमित्तभूतेषु Sy. दस्यवो हन्यन्ते येषु ते दस्युहत्याः सङ्ग्रामास्तत्काला वा। तेषु Sk.
८. V. Mādhava ignores अधि
९. कृष्णासु० P. १०. तत्कालेषु वा Sk.
११. ०थिश्च य M. अतिथीन् प्रति परिचारकतया गच्छतीत्यतिथिग्वो दिवोदासः . . . तस्मा अतिथिग्वाय Sk. हिंसां प्रापयः Sy.
१२. वशं नयः P. D. M. १३. चदा D.
१४. नि इत्येष आ इत्येतस्य स्थाने। आक्रान्तवान् Sk. १५. निकूपी P. निकमीः D. निक्रमिः M. १६. सीः P. जन्मन एव प्रभृति त्वं शत्रूनवधीरित्यर्थः Sk.
१७. सर्वं बलम् Sy. सर्वत्र Sk.
१८. सध्रीचीनमपराङ्मुखं यथा भवति तथा Sy. सहाञ्चति गच्छतीति। सध्रीचीति स्त्रीलिङ्गता तविषीसामानाधिकरण्यात्। सध्र्यगिति व्यत्ययेनात्र नपुंसकता। सध्र्यक् सध्रीची सर्वैरवयवैः सहगामिनी। पिण्डितेत्यर्थः Sk.
१९. निहितम् Sy. यावत् किञ्चिद् बलं सर्वं पिण्डीकृतं त्वयि निहितमित्यर्थः Sk.
२०. मनः Sy. सोमलक्षणं धनम् Sk.
२१. इन्द्रो मां पास्यतीति प्रीत्या हृष्यतीव Sk.
२२. वज्रं M. २३. अस्माभिर्ज्ञायते Sy. शत्रुहननेन ज्ञायते Sk. २४. बाह्मो M. बान्वोः P. निहितं वज्रं गृहीत्वा शत्रून् घ्नन् निर्व्यापारो न तिष्ठसीत्यर्थः Sk.
२५. आत्मीयस्यास्मदीयस्य वा Sk.

वीर्याणि[१]। अपवृश्च[२]।

**वि जानीह्यार्यान्ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान् ।**
**शाकी भव यजमानस्य चोदिता विश्वेत्ता ते सधमादेषु चाकन ॥८॥**

**वि जानीहि**। विविच्य जानीहि। आर्यान्[३]। दस्यून्[४]। च ततः। अव्रतान्[५]। अनुशास[६] त्वम्। यजमानाय[७]। वशं नय। सहायः[८]। भव। यजमानस्य धनस्य[९]। चोदयिता। सर्वाणि। एव[१०]। तानि[११]। यज्ञेषु[१२] वक्तुमहम्। कामितवान्[१३]स्मि[१४]।

**अनुव्रताय रन्धयन्नपव्रतानाभूभिरिन्द्रः श्नथयन्ननाभुवः ।**
**वृद्धस्य चिद्वर्धतो द्यामिनक्षतः स्तवानो वम्रो वि जघान संदिहः ॥९॥**

**अनुव्रताय**। अनुगतकर्मणे[१५] यजमानाय। वशं[१६] नयन्[१७]। अयजमानान्[१८]। आभवद्भिर्[१९]वर्ध[२०]मानैः। विपरीतान्[२१]। विश्लथयन्[२२]। इन्द्रः। वृद्धस्य च। वर्धमानस्य[२३]। च[२४] शत्रोः[२५]। दिवम्। व्याप्नुवतः[२६]।

---

१. बलानि Sk.
२. उप० P. अववृश्चत्। अधश्छिन्धि Sk.
३. जानीभ्यार्यान् P.
साधुवृत्तान्। यागपरानित्यर्थः Sk.
४. ये च दस्यवो यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। ये च दस्यवो देवानां शत्रुभूता अयागपरास्तानयष्टॄंश्च विजानीहीत्यर्थः Sk. ५. अकर्मणो यागकर्मवर्जितान्। अयष्टॄनित्यर्थः Sk.
६. दुष्टानामनुशासनं निग्रहं कुर्वन् Sy.
निगृह्णन्नित्यर्थः Sk.
७. यजमानायाव्रतान् ... दस्यून् ... हिंसां प्रापय। यद् वा यजमानस्य वशं गमयSy.
८. शक्तियुक्तः Sy. शकिरिह याच्ञाकर्मा। याच्ञया चात्र तत्पूर्वकं दानं लक्ष्यते। दाता भवेत्यर्थः। कस्मै ? सामर्थ्याद्यजमानाय Sk. ९. यागकर्मणि Sk.
१०. इच्छब्दः पदपूरणः Sk. ११. तो M.
१२. सह माद्यन्ति येषु देवतास्ते सधमादा यज्ञाः। तेषु Sk. १३. तानितवानस्मि P.
आत्मनोऽप्यर्थाय ... चाकन ... प्रार्थयत इत्यर्थः Sk. १४. V. Mādhava ignores ते १५. अनुकूलकर्मणे Sy. अनुव्रतशब्दो भक्तपर्यायः। अनुव्रताय भक्ताय Sk. १६. हिंसयन् वशीकुर्वन् वा Sy. १७. नय P. D. नयन् नय M.
१८. अपगतयागकर्मणः। अभक्तानित्यर्थः Sk.
१९. यजमाननाभव० P. यजमानाभव० D. यजमानानामभव० M. आभिमुख्येन भवन्तीत्याभुवः स्तोतारस्तैः Sy. आभूशब्दोऽपठितः सर्वत्र महन्नाम द्रष्टव्यः। करणे चैषा तृतीया सहयोगलक्षणा वा। महद्भिर्वा मरुद्भिस्सह Sk.
२०. ०वर्तमानैः M.
२१. ० ताद् M. अनाभुवोऽमहतः Sk.
२२. ताडयन् Sk.
२३. वर्तमानस्य M.
२४. Omitted by M.
२५. तस्येन्द्रस्य Sy.
२६. व्याप्नुवतो गच्छतो वेत्यर्थः Sk.

स्तूयमानः[1]। वमितेषूणाम्। विहन्ति[2]। समुपचयान्[3]।

तक्षद्यत्त उशना सहसा सहो वि रोदसी मज्मना बाधते शवः।
आ त्वा वातस्य नृमणो मनोयुज आ पूर्यमाणमवहन्नभि श्रवः ॥१०॥

तक्षद्यत्ते। यदा। तव। बलम्। उशनाः। स्तुतिबलेन[4]। समस्करोत्[5] तदा। महत्तया[6][7]। द्यावापृथिव्यौ। विबाधते[8] तदानीम्। त्वामश्वाः। वातस्य[9]। श्रवणम्[10]। अभि। आवहन् बलेन[11]। आपूर्यमाणम्। नृमणः! महावेगाः[12]। शुष्णान्महान्[13] वातो[14] निर्गतस्तमभ्यावहन्निति[15][16]।

मन्दिष्ट यदुशने काव्ये सचाँ इन्द्रो वङ्कू वङ्कुतराधि तिष्ठति।
उग्रो ययिं निरपः स्रोतसासृजद्वि शुष्णस्य दृंहिता ऐरयत्पुरः ॥११॥

मन्दिष्ट यत्। कविपुत्रे[17]। उशनसि स्तोत्रेण[18]। यदा। सहायः। इन्द्रः। मन्दिष्ट तदानीम्[19] इन्द्रः। पङ्गुं पङ्गुतरं चाश्वौ गमनार्थम्[19]। अध्यतिष्ठद् अथ। उद्गूर्ण[20] इन्द्रः। मेघरूपं[21] शुष्णासुरम्। स्रोतसा। अपः। निरसृजत्। व्यैरयत्[22]। शुष्णासुरस्य। शिलासङ्घटिताः[23]। पुरः।

---

१. एतत्संज्ञक ऋषिः Sy. ह्रस्वनामैतद् द्रष्टव्यम्। ... ह्रस्वोऽपि परिमाणतः Sk.

२. हतवान् वा Sk. ३. ० चया P. सम्यगुपचिता वल्मीकवपाः Sy. उपचयादेतदुक्तं भवति। ये तावदभक्ता अमहान्तस्तान् महद्भिः प्रहारैर्महद्भिर्वा मरुद्भिस्सह ताडयन् भक्ता अप्यत्यन्तमहान्तस्तेषामपि भक्तैः स्तूयमान उपचयान् विहन्तीति Sk.

४. आत्मीयेन बलेन Sy.

५. तनूकृतवान्। सम्यक् तीक्ष्णमकार्षीदित्यर्थः Sy. तक्षतिः करोतिकर्मा Sk.

६. सर्वस्य शोधकेन स्वतैक्ष्ण्येन। यद्वा रोदसी यस्माद् वृत्रादेर्बिभीतस्तं बाधत इत्यर्थः Sy. ७. ०त्तय M.

८. व्यावबाधत P. D. M.

९. पातस्य D.

१०. हविर्लक्षणमन्नमभिलक्ष्य Sy.

११. ज्वलेन P. १२. ० गात् D. मनोव्यापारमात्रेण युक्ताः Sy.

१३. P. adds (वको ज्योतिषः कर्तासि सूर्यं विश्वञ्च दिवं प्रकाशयसि प्रत्यङ् देवानां तस्मात् सर्वं इव मन्यते) after महान् १४. वपतो P.

१५. ० मभ्यव ० D. M.

१६. V. Mādhava ignores शवः

१७. तव पुत्रे P. १८. स्तो० M.

१९. तदानीं इन्द्रो वंकुतरं M. तदानीमिळोन्द्रा वंकूपं कूतरं P. अतिशयेन कुटिलं गच्छन्तौ।... यद्वा वङ्कुतरा अतिशयेन वक्रं गच्छति रथे वङ्कू वक्रगमनशीलावश्वौ संयोज्येति योजनीयम् Sy.

२०. अथोगूर्णः M.

२१. गमनयुक्तान्मेघात् Sy.

२२. वैर० D. M.

२३. ०तान् P. प्रवृद्धाः Sy.

आ स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु मन्दसे ।
इन्द्र यथा सुतसोमेषु चाकनोऽनर्वाणं श्लोकमा रोहसे दिवि ॥१२॥

**आ स्मा रथम्**। आतिष्ठसि। रथम्। सोमपानार्थम्। शार्यातस्यानिन्द्रं[१] सोममाजिहीर्षतो हविर्धानात्[२]। प्रभृताः सोमाः। येषु। त्वम्। मन्दसे ततो रथमास्थितवानसि[३] ततः। यथान्येषु। सुतसोमेषु सोमम्। कामितवानस्यैवं[४] तत्रापि कामितवानसि तन्तौ। प्रस्खलितम्[५]। श्लोकम्[६]। दिवि। आरोहयस्तत्रापि पानादिति[७]।

अददा अर्भां महते वचस्यवे कक्षीवते वृचयामिन्द्र सुन्वते ।
मेनाभवो वृषणश्वस्य सुक्रतो विश्वेत्ता ते सवनेषु प्रवाच्या ॥१३॥

**अददा अर्भाम्**[८]। दत्तवानसि। कन्याम्[९]। स्तुतिवत[१०] इच्छते। कक्षीवते। वृचयां[११] नाम भाग्याम्[१२]। इन्द्र! सुन्वते[१३] तथा। मेना च। अभवः। वृषणश्वस्य[१४]। सुक्रतो[१५]! विश्वानि। तानीमानि। ते यज्ञेषु। प्रवाच्यानि। अत्र शाट्यायनकम् —

"वृषणश्वस्य[१६] मेन इति। वृषणश्वस्य ह[१७] मेना[१८] भूत्वा मघवा कुल[१९] उवासेति। अथ ताण्ड्यकम्[२०]-
वृषणश्वस्य मेन[२१] इति। वृषणश्वस्य ह[२२] मेनस्य[२३] मेनका नाम दुहिताऽऽस। तां हेन्द्रश्चकम[२४] इति। वृषणश्वस्य राज्ञो मेना नाम दुहिता त्वमभवः[२५] स्वांशेन। अथ तां चकमे चेन्द्र[२६] इत्यर्थः[२७]।

इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः ।
अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्रयन्ता ॥१४॥

**इन्द्रो अश्रायि**[२८]। इन्द्रः स्तोतृभिः। आश्रीयते। सुकर्मणस्तस्य[२९]। निर्गमने[३०]। पज्रकुलजाते[३१]-

---

१. शर्या० P. २. ०तोर्ह० P. ०विद्धा० D. ३. रथवानास्थित० P.
४. अस्यापि शार्यातस्य सोमान् Sy.
५. गमनरहितं स्थिरम् Sy.
६. यशो वा Sy. यद्वेमं यजमानं... द्युलोक उक्तलक्षणं यशः प्रापयसि Sy.
७. V. Mādhava ignores स्म। इन्द्र
८. अदां P. अभां M. ९. अल्पां युवतिमित्यर्थः Sy. १०. स्तुतव० P.
११. प्रच० D. पृपया० M. १२. भान्यां D.
१३. सू० P. १४. मेनाचाहवो वृषणश्च M. ०णश्चस्य P. १५. सुकृतो P.
१६. ०णश्चस्य P. १७. Omitted by Ghosh, op. cit. १८. मे ह ना P.
१९. इवा० M. २०. ताण्डकम् P. D.
२१. मेहन P. २२. Omitted by P. हं M. २३. Omitted by P.
२४. तां महेन्द्रश्चकाम P. २५. भव० P. M.
२६. चेन्द्र इन्द्र P. २७. V. Mādhava ignores इत् २८. अश्रंयि P.
२९. शोभनप्रज्ञान् वा Sy. ३०. नैर्धन्ये निमित्तभूते सतिSy. ३१. वज्र० P.D.M.

ष्विन्द्रस्य। स्तोमः। दुर्यः[1]। यूपः[2]। इवोच्छ्रितस्तिष्ठति। दुर्यभवो दुर्यो यज्ञस्थः। "अङ्गिरसः[3] पज्राः[4]" "पज्रो[5] वाऽऽङ्गिरसः[6] पशुकामस्तपोऽतप्यत" इति च[7] शाटचायनकम्[8]। अश्वादीन्[9] स्तोतृभ्य इच्छन्। इन्द्रः। एव[10]। धनस्य[11]। प्रदाता। निवसति[12]।

**इदं नमो वृषभाय स्वराजे सत्यशुष्माय तवसेऽवाचि।**
**अस्मिन्निन्द्र वृजने सर्ववीराः स्मत्सूरिभिस्तव शर्मन्त्स्याम ॥१५॥**

इदं[13] नमो वृषभाय। इदम्। नमनसाधनं[14] स्तोत्रम्। वृषभाय[15]। स्वयमेव[16] सर्वेषामीश्वराय[17]। सत्यबलाय। वृद्धायास्माभिः[18]। उक्तम्। अस्मिन्[19]। इन्द्र! उपद्रवे[20]। सर्ववीरैर्युक्ता[21] अस्माकम्[22]।

---

१. द्वारि निखाता स्थूणेव Sy.
२. स यथा स्तवनार्हो वेदिद्वारे भवो यूपो वेदिं यज्ञं वाश्रितस्तद्वदङ्गिरसो हीन्द्रस्य सहायाः। ... तस्मादुपपन्नमिन्द्रस्य सङ्ग्रामेष्वङ्गिरआश्रयत्वम्। अथवैवमन्यथास्यार्धर्चस्यार्थयोजना। अश्रायीति णिच् स्वार्थ एव कर्मणि। श्रयतिः शुद्धोऽपि सामर्थ्यादुत्पूर्वार्थे। उदश्राय्यतिशयवद्गुणाभिधानेन गुणैरुच्छ्रितः कृत इत्यर्थः। क्व? सुध्यः सुप्रज्ञस्य सुकर्मणो वा मम स्वभूते निरेके। रमेरिदम्। नियमेन रम्यते येन यत्र वा तन्निरमणं निरेकं स्तोत्रमिहाभिप्रेतम्। तत्र कथमुदश्रायि? उच्यते। पज्रेषु स्तोम आङ्गिरस ऋत्विजो वा पज्रा अभिप्रेताः। लुप्तोपमं चेदं द्रष्टव्यम्। पज्रेष्विव स्तोमः। दुर्यो न यूपो द्वारि भव इव च यूपः। यथाङ्गिरस ऋषय ऋत्विजो वोच्छ्रितं महान्तं स्तोमं कुर्वन्ति यथा च यूपमुच्छ्रितं कुर्वन्ति तद्वदित्यर्थः Sk.
३. ०स्यांगि० P. D. I propose to read आङ्गिरसः Ed.
४. वज्राः P. D. M.
५. वज्रो P. D. M.
६. वांगि० D.
७. Omitted by P. and D.
८. B. Ghosh, op. cit. P. 7
९. अश्वैर्गोभी रथैर्धनैश्च तद्वानित्यर्थः Sk. इदंयुरिदं कामयमानः। अथापि तद्वदर्थे भाष्यते। वसूयुरिन्द्रो वसुमानित्यत्रार्थः N. 6. 31.
१०. इव M.
११. यावत् किञ्चित् त्रैलोक्ये धनं तस्य सर्वस्य Sk.
१२. वर्तते Sy. ईष्टे Sk.
१३. उदं M.
१४. ० नसासाध ० P. तेन सूक्तेन नमः स्तुतिलक्षणम् Sk.
१५. Omitted by M.
१६. वर्षित्रे Sk.
१७. स्वकीयेन तेजसा राजमानाय Sy. स्वयमेव दीप्ताय Sk.
१८. बुद्धा ० M. वृद्धास्मभिः P.
१९. उत्तमस्मिन् P. D.
२०. वर्जनवति सङ्ग्रामे Sy. बलवति संसारे सङ्ग्रामे वा। अथवा वर्ज्यते यत्र वैगुण्यं स वृजनो यज्ञ इहाभिप्रेतः। तत्र Sk.
२१. सर्वैः पुत्रैः पौत्रैश्चोपेताः Sk.
२२. ०र्युक्तास्मा० P. ०क्तारस्मा० D. वयम् Sy.

स्तोतृभिश्च सह। तव। सुखे। कल्याणम्। स्याम।

## I.52.

त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभ्वः साकमीरते।
अत्यं न वाजं हवनस्यदं रथमेन्द्रं ववृत्यामवसे सुवृक्तिभिः ॥१॥

त्यं सु मेषम्। तम्। सुष्ठु। पूजय। सर्वज्ञं। मेधातिथेः। मेषम्। शतम्। यस्य। प्राज्ञाः। सह। उत्तिष्ठन्ति। वेगवन्तम्। इव। अश्वम्। रथं प्रति। हवनं प्रति गन्तारम्। आवर्तयामि। इन्द्रम्। रक्षणाय। स्तोत्रैः।

---

१. विद्वद्भिः पुत्रादिभिः सह ... भवेम निवसेमत्यर्थः। यद् वा त्वत्सम्बन्धिनि शोभने यज्ञगृहे सूरिभिर्विद्वद्भिर्ऋत्विग्भिः सह स्याम। शर्मेति गृहनाम। 'शर्म वर्म' (निघ० ३. ४. २१.) इति पठितत्वात् Sy.

२. त्वया दत्ते शोभने गृहे Sy.

३. सुखं P. D.
शरणे वा गृहे वा सुखे वा स्याम। त्वया दत्तं शरणं गृहं सुखं वा प्राप्नुयामेत्यर्थः Sk.

४. स्यामः D. M.

५. Ms. D. puts the figure ॥५१॥ here to indicate the end of the fiftyfirst hymn. No such number is given in P. and M.

६. सुमहया। अर्चतिकर्मायम्। आत्मन एव चायमन्तरात्मनः प्रैष ऋत्विगन्तरस्य वा। सुष्ठु स्तुहि हे अन्तरात्मन् ऋत्विग्वा Sk.

७. स्वरादित्यो द्यौर्वा। तस्य वेदितारं लब्धारं वा। यद् वा। स्वः सुष्टुवरणीयं धनं तस्य लम्भयितारम् Sy.
सर्वस्य ज्ञातारं लब्धारं वा Sk.

८. शत्रुभिः सह स्पर्धमानम् Sy.
मेषरूपम् Sk.

९. बहुनामैतत्। बहवो यस्य Sk.

१०. प्रज्ञाः P. स्तोतारः Sy.
अपठितमपि महन्नामैतत्। महान्तः। के ते? सामर्थ्यात् स्तोतारः Sk.

११. स्तुतौ प्रवर्तन्ते। यद्वा यस्येन्द्रस्य रथं ...शतसंख्याका अश्वाः...सह...गमयन्ति Sy. ईरते प्रेरयन्ति। उच्चारयन्तीत्यर्थः। किं तत्? सामर्थ्यात् स्तुतीः। बहवो महान्तश्च स्तोतारो यं सह स्तुवन्तीत्यर्थः। अथवा सुभ्व इति स्त्रीलिङ्गमेतत्। शतं यस्य स्वभूताः सुभ्वो महत्यः। कास्ताः? मरुदादिसेनाः। साकमीरते सह गच्छन्ति शत्रूणामुपरि Sk.

१२. गमनसाधनम् Sy.
अत्यं न अश्वमिव। यथा कश्चिदश्वमावर्तयेत्तद्वत् Sk.

१३. सोमलक्षणमन्नं प्रति। अथवा वाजमित्यपठितमपि बलनाम। सामर्थ्याच्चान्तर्णीतमत्वर्थम्। बलवन्तम् Sk.

१४. तृतीयार्थे द्वितीयैषा। रथेन Sk.

१५. वहनं P. D. आह्वानं यागं वा Sy.

१६. ० रमं वर्त ० P. अत्यर्थं पुनः पुनर्व्यावर्तयेयमित्याशासे Sk.

१७. तर्पणाय Sk.

१८. सुष्ठु वर्जितदोषाभिः स्तुतिभिः Sk.

स पर्व॑तो न ध॒रुणे॒ष्वच्यु॑तः स॒हस्र॑मूति॒स्तवि॑षीषु वावृधे ।
इन्द्रो॒ यद्वृ॒त्रमव॑धीन्नदी॒वृत॑मु॒ब्जन्नर्णां॑सि॒ जर्हृ॑षाणो॒ अन्ध॑सा ॥२॥

स पर्वतो न[1][2]। सः। शिलोच्चयः[3]। इव[4]। उदकधारासु[4]। अक्षीणः[5]। बहुरक्षणः[6]। शत्रुबलेषु[7] प्रविष्टः। ववृधे। इन्द्रः। यत्[8]। वृत्रम्। अवधीत्[9]। नदीनामावरीतारं[10][11] वृत्रनिरुद्धानि। उदकानि[12] तेजोभिः[13]। विध्यन्। हृष्यन्[14]। सोमेन।

स हि द्व॒रो द्व॒रिषु॑ व॒व्र ऊध॑नि च॒न्द्रबु॑ध्नो॒ मद॑वृद्धो मनी॒षिभिः॑ ।
इन्द्रं॒ तम॑ह्वे स्वप॒स्यया॑ धि॒या मंहि॑ष्ठराति॒ स हि पप्रि॒रन्ध॑सः ॥३॥

स हि द्वरः। स। हीन्द्रः[15]। वारयिता[16]। वारयितॄणां[17] मध्ये। वरणीयः[18]। श्रद्धेयेप्यर्थे[19]।

---

१. सर्वतो P. २. नः M.
३. सलीशल P. पर्वत इति मेघनाम।... मेघ इव Sk.
४. इवोदक ० P.
सर्वस्य धारकेषूदकेषु Sy.
तृतीयार्थे चैषा सप्तमी।...उदकैः। ... मेघोऽत्यन्तबहुनोदकेन वर्धतेऽत्यन्तं महान् भवति Sk.
५. ० ण P. चलनराहित्येन स्थितः Sy.
एवमच्युतो यत्र स्थितस्तस्मात्स्थानादप्रच्युतः। तत्रैव स्थितस्सन्नित्यर्थः Sk.
६. स्वर ० P.
बहुसेनो बहुपालनो वा Sk.
७. तृतीयार्थे चात्र सप्तमी। शारीरैः सामर्थ्यलक्षणैर्बलैः Sk.
८. यदा Sk.
९. अवधिष्ट वर्धते वा। अथवा स पर्वतो नेति पर्वतः शिलोच्चय एवाभिप्रेतः। अच्युत इत्येतस्य त्विदमुपमानम्। यथा पर्वतोऽच्युतः स्थिरस्तद्वदयोऽच्युत इति। धरुणेऽपीत्यपि 'यस्य च भावेन' इत्येवं सप्तमी। तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः। उदकेषु प्राप्तव्येषु। उदकार्थमित्यर्थः। किं करोति ? उच्यते। सहस्रमूतिस्तविषीषु वावृधे Sk.
हतवान् हन्ति वा Sk.
१०. नद्यः शब्दकारिण्य आपः। तासाम् Sk.
११. ० वरि ० P. M.
नदनान्नद्य आपस्तासाम् Sy.
१२. मेघस्थानि Sk.
१३. अधः पातयन् Sy.
ऋजूनि कुर्वन्। भूमिपाताभिमुखानि कुर्वन्नित्यर्थः Sk.
१४. सोमलक्षणेनान्नेन Sk.
१५. हिशब्दः पदपूरणः Sk.
१६. स हीव वारयीव M. अतिशयेनावरीता Sy.
१७. आवरीतृषु शत्रुषु Sy. आवरितॄणां मध्ये यावन्तः केचनावरितारस्तेषां सर्वेषां मध्येऽतिशयेनावरितेत्यर्थः Sk.
१८. वरणीय P. D. सम्भक्तो व्याप्य वर्तते Sy. अत्यर्थं च वरणीयो याचितव्यः। किम् ? सामर्थ्याद्यद्विष्टम् Sk.
१९. श्रद्धये० P. उद्धृतजलवत्यन्तरिक्षे Sy. ऊधनि सोमलक्षणे। रसानुप्रदानसामान्याद्यज्ञोऽत्र ऊधा उच्यते। तत्र Sk.

कमनीयबुध्नः[1]। स्तोत्रैर्वृद्धः[2]। मनीषिभिः[3]। तम्। इन्द्रम् अहम्। शोभनकर्मेच्छया। बुद्धया। ह्वयामि। पूज्यतमदानम्[4]। सः। हि[5]। अन्नेन[6] माम्। पूरयति[7]।

आ यं पृणन्ति दिवि सद्मबर्हिषः समुद्रं न सुभ्व१ः स्वा अभिष्टयः।
तं वृत्रहत्ये अनु तस्थुरूतयः शुष्मा इन्द्रमवाता अह्रुतप्सवः ॥४॥

आ यं पृणन्ति[8]। आपूरयन्ति। यम्। दिवि[9] स्थितम्। सोमाः[10]। उदधिम्। इव। शोभनभवनाः[11]। आत्मीयाः[12]। नद्यः[13]। तम्। वृत्रहनने[14]। अनुतस्थुः[15]। मरुतः[16]। शोषकाः[17]। इन्द्रम्। गमनरहिताः[18]। अपालयितारो[19] हिंसितरूपाः[20]।

अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः।
इन्द्रो यद्वज्री धृषमाणो अन्धसा भिनद्वलस्य परिधीँरिव त्रितः ॥५॥

अभि स्ववृष्टिम्। स्वा वृष्टिर्यस्य[21] तं सोमम्[22]। मदे[23]। युध्यत[24] इन्द्रस्य। अस्य साहाय्यार्थं

---

१. सर्वासां प्रजानामाह्लादकमूलः Sy. चन्द्रः ... कान्तिरुच्यते। बुध्नमन्तरिक्षं निवासस्थानतया यस्य सम्भूतं स चन्द्रबुध्नः Sk.

२. माद्यन्त्येभिरिति मदाः सोमास्तैर्वर्धितः Sy. सोममदेन परिवृद्धः सन् Sk.

३. मेधाविभिर्ऋषिभिर्ऋत्विग्भिर्वा Sk.

४. प्रवृद्धधनं प्रवृद्धदानं वा Sy.

५. हिशब्दोऽत्र यस्मादर्थे Sk.

६. अन्नस्यास्मदपेक्षितस्य Sy.

७. यस्मात्स दाताऽन्नस्य Sk.

८. वृणन्ति P. M. ९. दिवः P.

१०. सोमः M. ११. सुष्ठु भवन्तीति सुभ्वो नद्यः Sy. महत्यो नद्यः Sk.

१२. ० वन आ० P. ० वनात्नीया० M.

१३. नद्य D. नभ्यः M. अभिष्टयः ... अभिगन्त्र्योऽभिकामिन्यो वा Sk.

१४. वृत्रहननकाले Sk. १५. ०हनेनेनु० P. तिष्ठतिरत्र सामर्थ्याद् गत्यर्थः। अनुगतवत्योऽनुगच्छन्ति वा। अथवा तं वृत्रहत्येऽन्वित्यनुशब्दः 'तृतीयार्थे' इत्येवं कर्मप्रवचनीयः। तेन सह वृत्रहननकाले स्थिता इत्यर्थः Sk. १६. सेना मरुदादीनाम् Sk. १७. बलवत्यः Sk.

१८. गमनयितारहिताः P. वान्ति प्रातिकूल्येन गच्छन्तीति वाताः शत्रवस्तद्रहिताः Sy. वातरहिताः। अथवाऽविद्यमानो विनियन्ता वातो यासां ता अवाताः। वायुनापि रोद्धुमशक्या इत्यर्थः Sk.

१९. पा० P. अकुटिलरूपाः शोभनावयवा इत्यर्थः Sy. २०. अहिंसितरूपाः Sk.

२१. स्वा वृष्टिर्यस्य स स्ववृष्टिर्वृष्टेः स्वामी। कोऽसौ ? इन्द्रः Sk.

२२. सोम M. स्वभूतवृष्टिमन्तं वृत्रम् Sy.

२३. मद M. २४. य्यध्य० P. अस्य युध्यत इत्यस्य शब्देनानुदात्तेन प्रकृतत्वादिन्द्रस्यानुदेशः(अन्वादेशः Ed.) स्ववृष्टिमित्येतत्सामानाधिकरण्याच्चोभयत्र द्वितीयार्थे षष्ठी। सोममदे प्राप्ते स्ववृष्टिमिममिन्द्रं युध्यमानम् Sk.

यथा प्रवणे। आपो यन्त्येवम्। अभिसस्रुः। मरुतः। इन्द्रः। यदा। वज्री। सोमेन। धर्षयन्। वलम्।
अभिनत्। पापानिव। त्रित आप्त्यः।

परीं घृणा चरति तित्विषे शवोऽपो वृत्वी रजसो बुध्नमाशयत्।
वृत्रस्य यत्प्रवणे दुर्गृभिश्वनो निजघन्थ हन्वोरिन्द्र तन्यतुम् ॥६॥

परीं घृणा। परिचरति। वृत्रम्। दीप्तिः। बलं च तस्य। दीप्तम्। अपः। आवृत्य। अन्तरिक्ष-
लोकस्य। बुध्नम् अपां मूलमावृत्य। आशयत्। वृत्रस्य। यदा। प्रवणे। दुर्ग्रहश्वासस्य। निहतवान्।
हन्वोरंसि। इन्द्र ! वज्रं शब्दकारिणम्।

---

१. प्रवणशब्दो निम्नवचनः। यथा निम्ने प्रदेशे Sk.

२. लघुगामिन्य आपोऽभिगच्छेयुस्तद्वत् Sk. भिन्नवान् भिनत्ति वा Sk.

३. अभिगतवत्योऽभिगच्छन्ति वा Sk.

४. मरुदादिसेनाः Sk.

५. सर्षयन् P. हृष्यन् अन्धसा सोमलक्षणेनान्नेन। सोमेन जन्यमानहर्षः सन्नित्यर्थः Sk.

६. मेघनामैतत्। द्वितीयार्थे चात्र षष्ठी। मेघम् Sk.

७. पापनीव P. M. देवानां हविर्लेपनिघर्षणायाग्नेः सकाशादप्स्वेकतो द्वितस्त्रित इति त्रयः पुरुषा जज्ञिरे।... तत्रोदकपानार्थं प्रवृत्तस्य कूपे पतितस्य (त्रितस्य) प्रतिरोधायासुरैः परिधयः परिधायकाः कूपस्याच्छादकाः स्थापिताः। तान्यथा सोऽभिनत्तद्वत् Sy.

८. अप्त्यः D. यथा परिधीन् त्रितो भिन्नवान् तद्वत्। ...अथवा वलस्येति स्वार्थ एव षष्ठी। परिधीति तूत्तम्भनानि परिधय उच्यन्ते सर्वतो निधीयमानत्वात्। मेघस्योत्तम्भनान्यभिनदित्यर्थः। इवशब्दः ...पदपूरणः। त्रित इत्यपि त्रिशब्दादाद्यादित्वात् सप्तम्यास्तसिः। त्रिषु प्रदेशेष्वग्रमध्यमूलेष्वभिनदिति। अथवा त्रित इति प्रथमान्तमिन्द्रविशेषणम्। त्रितस्त्रिस्थान इन्द्रः Sk.

९. घृणाः M. १०. लिडर्थेऽयं लट्। परिचचार सर्वतो भ्रान्तवतीत्यर्थः Sk.

११. ईम् एनं त्वामिन्द्रम् Sy.

१२. दीप्ता स्तनयित्नुलक्षणा त्वदीया वाक् Sk. १३. दीप्तवच्च शवस्त्वदीयं मरुल्लक्षणम् Sk. १४. त्वदीयम् Sy.

१५. अधोभागम् Sk.

१६. अपादृद्धूलमा० P.

१७. शेतिरिह स्थानार्थः। आस्थितवान् Sk.

१८. मेघस्यासुरस्य वा Sk.

१९. निम्नप्रदेशे Sk.

२०. ०गृह० P. ०हश्चास० D. M. दुर्ग्रहव्यापनस्य। तस्य हि व्यापनं न केनापि ग्रहीतुं शक्यते Sy. क्षिप्रश्वासो दुर्गृहो यस्य स दुर्गृभिश्वा। दुस्सहश्वास इत्यर्थः। तस्य Sk.

२१. निहि० P. D. M. हन्तिरत्र गत्यर्थः। सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। नियमेन गमितवानसि Sk.

२२. हबो० D. हनुप्रदेशे Sk.

२३. ०हारि० M. प्रहारं विस्तारयन्तम् Sy.

ह्रुदं न हि त्वा न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना ।
त्वष्टा चित्ते युज्यं वावृधे शवस्ततक्ष वज्रमभिभूत्योजसम् ॥७॥

ह्रदं[1] न हि[2]। ह्रदम्। ऊर्मयः[3]। इव। त्वाम्[4]। तव वर्धनानि[5]। स्तोत्राणि। न्यृषन्ति[6] तवोपरि चलन्ति त्वद्विषये पुनः पुनः प्रवर्तन्ते। त्वष्टा[7]। च[8]। तव। सदृशम्। बलम्। वर्धितवान्। अकरोत्[9]। वज्रम्। अभिभवितृबलम्[10] [11]।

जघन्वाँ उ हरिभिः संभृतक्रतविन्द्र वृत्रं मनुषे गातुयन्नपः ।
अयच्छथा बाह्वोर्वज्रमायसमधारयो दिव्या सूर्यं दृशे ॥८॥

जघन्वाँ उ[12]। जघन्वान्[13]। अश्वैः[14]। सम्भृतप्रज्ञ[15]! इन्द्र! वृत्रम्। मनुष्यार्थम्[16]। अपः[17]। गमयितुमिच्छन्[18] अग्रहीत्[19]। बाह्वोः[20]। आयसम्[21]। आयुधम् अथ तं हत्वा[22] सर्वेषाम्। दर्शनाय। दिवि। सूर्यम्[23]। आधारयः[24]।

बृहत्स्वश्चन्द्रममवद्यदुक्थ्यमकृण्वत भियसा रोहणं दिवः ।
यन्मानुषप्रधना इन्द्रमूतयः स्वर्नृषाचो मरुतोऽमदन्ननु ॥९॥

बृहत्[25] स्वश्चन्द्रम्। बृहत् साम। स्वयमेव[26] कान्तम्। बलवत्[27]। यदा[28]। प्रशस्यम्।

---

१. ह्रु० P. २. भिः M.
३. यथा ह्रदं प्रभूता उदकोर्मयो घर्षयुस्तद्वत् Sk. ४. त्वं P.
५. वृद्धिकराणि। स्तूयमाना हि देवता वीर्येण वर्धन्ते Sk. ६. न्युष० M. नितरां प्राप्नुवन्त्येव Sy. नियमेन गच्छन्ति Sk. ७. त्वाष्टा P. देवशिल्पी Sk. ८. अपि Sk.
९. तीक्ष्णीचकारSy. १०. वज्रभिदभि० P. अभिभवितृबलयुक्तम् Sk.
११. V. Mādhava ignores हि। यानि
१२. ०न्व उ P. ०न्वं उ D. ०न्वान् M.
१३. शत्रर्थे क्वसुच्।... घ्नन् Sk.
१४. आत्मीयैः।... तृतीयानिर्देशाद् गत्वेति शेषः Sk. १५. सम्पादितकर्मन् वा Sy. सम्भृतकर्मन् सम्भृतप्रज्ञ वा Sk.
१६. मनो राज्ञ ऋषेर्वा मनुष्यस्य वार्थाय Sk.
१७. तदनन्तरं... वृष्ट्युदकानि प्रावर्तयेत्यध्याहारः Sy. १८. यगमयितुमिच्छन्त P. मार्गम् Sy. गमनमिच्छन्। कस्य? अपां वृष्टिलक्षणानामुदकानाम् Sk.
१९. गृही P. अग्रहीः Sy. निर्बद्धवानसि Sk.
२०. बाहुभ्यामत्र सम्बन्धाद्धस्तौ लक्ष्येते। हस्ताभ्यां गृहीतवानसीत्यर्थः Sk.
२१. लोहमयम् Sk. २२. हृत्वा P.D.M.
२३. अधा० D. M. स्थापितवानसि Sk.
२४. V. Mādhava ignores उ
२५. महत् परिमाणतः सारतो वा स्तुतिरूपम् Sk.
२६. स्वकीयेन... आह्लादकेन तेजसा युक्तम् Sy. २७. अमशब्द आत्मपर्यायः। तेन चात्र प्रयत्नो लक्ष्यते। आत्मवत् प्रयत्नवत्। महता प्रयत्नेनेत्यर्थः Sk.
२८. यत् Sk.

अकुर्वत[1]। भयेन[2] स्तोतुः। दिवः। रोहणनिमित्तम्[3]। यदा वा[4]। मनुष्यहितसङ्ग्रामाः[5]। इन्द्रम्[6]। मरुतः[7]। स्वः[8] दिवि स्थितम्। देवाः सन्तः। मनुष्यान् सेवमानाः[9]। अन्वमदन्[10]। उत्तरत्र सम्बन्धः।

**द्यौश्चिदस्यामवाँ अहेः स्वनादयोयवीद्भियसा वज्र इन्द्र ते ।**
**वृत्रस्य यद्बद्बधानस्य रोदसी मदे सुतस्य शवसाभिनच्छिरः ॥१०॥**

द्यौश्चिदस्य। द्यौः[11]। अपि। बलवान्[12]। अस्य। अहेः[13]। स्वनात्[14]। तदानीम्। भयेन[15]। अयोयवीत्[16] अकम्पत[17]। यदा[18]। द्यावापृथिवी।[19]बाधमानस्य। सोमस्य। मदे[20]। तव। वज्रः। बलेन। वृत्रस्य। शिरः। अभिनत्[21] तदाऽयोयवीदिति। वृत्र[22] एवाहननादहिरुक्तः[23]।[24]

**यदिन्न्विन्द्र पृथिवी दशभुजिरहानि विश्वा ततनन्त कृष्टयः ।**
**अत्राह ते मघवन्विश्रुतं सहो द्यामनु शवसा बर्हणा भुवत् ॥११॥**

यदिन्न्विन्द्र[25]। यदि[26]। एव, इयम्[27]। इन्द्र ! पृथिवी। दशगुणा भवति। यदि[28] च। अहानि।

---

१. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तत् . . . कृतवन्तोऽस्मदीया ऋत्विजः पुत्रपौत्रादयो वा Sk. २. भयेद M. वृत्रभयेन . . . एवंविधेन स्तोत्रेण वृत्राद् भीता इन्द्रमस्तोषतेत्यर्थः Sy. परिचर्यावैगुण्यभयेन Sk.
३. द्युलोकारोहणसमर्थम्। साद्‌गुण्याद्यङ्गविध्वंसकरैरसुरै रक्षोभिर्वान्तरावलोप्तुमशक्यमत्यन्तसगुणमित्यर्थः Sk.
४. भावा M. ५. मनुष्यार्थो मानुषः। . . . असुरैर्मेघैर्वा सह मनुष्यार्थः सङ्ग्रामो येषां ते मानुषप्रधनाः Sk.
६. इन्द्रमित्येतत्त्वन्त्येनानुशब्देन सह सम्बन्धयितव्यः Sk.
७. ऊतयोऽवितारः। रक्षितारो गन्तारो वेत्यर्थः Sk.
८. स्वः। सर्वपर्यायोऽयम्। सर्वे Sk.
९. प्राणरूपेण Sy. नृभिर्ये सेव्यन्ते सेवन्ते वा नॄन् वृष्टिप्रदानादिना ते नृषाचः Sk.
१०. सोमेन मत्ता इन्द्रेण सहेत्यर्थः Sk.
११. द्यो: P. D. १२. आत्मवान् प्रयत्नवान् Sk. १३. अहे P. अहन्तव्यस्यान्येन हन्तुमशक्यस्य वृत्रस्य Sk.
१४. स्वभूतात् . . . श्वासशब्दात् Sk.
१५. वृत्रश्वासाद् बिभ्यतस्तद्वर्जं सर्वे देवा नष्टा इत्यर्थः Sk.
१६. अयय० P. पृथग्भूतः। नष्ट इत्यर्थः। . . . अकम्पतेत्यर्थः Sk. १७. यद M.
१८. रोदसी इति चानुदात्तत्वप्रसिद्ध्यर्थं व्यत्ययेन द्वितीयायाः स्थाने आमन्त्रितप्रथमा द्रष्टव्या Sk.
१९. बाधनशीलस्य वृत्रस्य Sy. वृष्टिप्रतिबन्धकरणेनात्यर्थं बाधमानस्य Sk. २०. सोमेन मत्तस्य सतस्तवेत्यर्थः Sk.
२१. तदानीं द्युलोको भयराहित्येन निश्चलो बभूवेति शेषः Sy. २२. वृतं P. वृता D.M. २३. ०दति ० P.
२४. V. Mādhava ignores इन्द्र
२५. यदिन्द्र M.
२६. इन्न्विति पदपूरणम् Sk.
२७. एवयम् P. २८. यदा D. P.

सर्वाण्येव । विस्तारयेयुः । मनुष्याः सर्वदा ब्रुवाणाश्चरेयुः । अत्र । एव । ते । मघवन् ! बलकृतं सर्वं कर्म । विश्रुतं भवति तव । बलेनागतम् । शत्रुहिंसनम् । द्युसदृशम् । भवति महत्तयेति ।

**त्वमस्य परि रजसो व्योमनः स्वभूत्योजा अवसे धृषन्मनः ।**
**चकृषे भूमिं प्रतिमानमोजसोऽपः स्वः परिभूरेष्या दिवम् ॥१२॥**

**त्वमस्य परि** । त्वम् । अस्य । अन्तरिक्षलोकस्य । अन्ते स्थितः सन् । स्वभूतबलः । रक्षणार्थम् । शत्रूणामभिवनशील ! तिष्ठसि । चकृषे कृतवानसि च । भूमिं बलवताम् । बलस्य । प्रतिद्वन्द्वित्वम् अन्तरिक्षम् । सर्वम् । परिभवन् । आगच्छसि । दिवमिति ।

**त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः ।**
**विश्वमाप्रा अन्तरिक्षं महित्वा सत्यमद्धा नकिरन्यस्त्वावान् ॥१३॥**

**त्वं भुवः** । त्वम् । भुवः । प्रतिमानम् । पृथिव्याः । दर्शनीयवीरस्य । स्वर्गस्य च । पतिः ।

---

१. एकत्र सङ्घात्य विस्तारयेयुः Sk.
२. विस्तरेययुः P.
३. अत्र यदिति प्रक्रान्तत्वादत्रशब्दोऽथेत्यस्य स्थाने । अर्थादपीत्यस्यार्थे Sk.
४. मेघवद् M. ५. वृत्रवधादिकारणं बलम् Sy. सैनालक्षणं बलम् Sk.
६. विख्यातम् Sk.
७. सामर्थ्यलक्षणेन बलेन Sk.
८. ०सनान्युस० P. ०सनन्युस० D. द्यामनु । दिवं प्रति । द्युलोके व्यवस्थितं सदित्यर्थः Sk.
९. बर्हणा परिवृद्धं भुवद् भवेत् । दशगुणायाः पृथिव्याः सर्वेभ्यश्च संहतेभ्योऽहोभ्यः सकाशात्तवैव महत्तरं बलमिति समस्तार्थः Sk.
१०. V. Mādhava ignores नु
११. अन्त P. उपरिप्रदेशे Sy.
१२. स्वभूतिः स्वसामर्थ्यम् । सा बलं यस्य स स्वभूत्योजाः Sk.
१३. कृत्स्नं जगद् वृष्टिप्रदानद्वारेण पालयितुमित्यर्थः Sk.
१४. ०शीलचित्त D. शत्रुधर्षणचित्त Sk.
१५. तष्ठसि P. १६. च । कृष्टे M.
१७. भूमीं P. भूमिं प्रतिमानमुपमानमोजस आत्मीयस्य बलस्य Sk.
१८. प्रतिनिधिरभूः Sy.
१९. सुष्ठ्वरणीयं गन्तव्यम् Sy. स्वः दिवं च Sk.
२०. अन्तरिक्षलोकं ... द्युलोकञ्च ... परिग्रहीता Sy. त्रयो लोकाः समुदितास्तव बलस्योपमा भवति परिभूः Sk.
२१. ०भवनाग० P. प्राप्नोषि Sy. यावत् किञ्चित् सर्वस्य परिगृह्य त्वमेषि आ आगच्छसि च Sk.
२२. सोमं पीत्वा पृथिवीतो दिवं द्युलोकम् Sk.
२३. त्वम् । भुवः । omitted by M. भुवो भवसि प्रतिमानम् । ... पृथिव्यपि त्वयोपमीयते । किं पुनरन्यान्युपमेयानि । सर्वत्र त्वमुत्कृष्ट इत्यर्थः Sk.
२४. ऋष्व इति महन्नाम । ... महान्तो वीरा यस्मिन् सैन्ये तदृष्ववीरम् । तस्य Sk. २५. बृहतो महतः Sk.

अभवः[1]। विश्वम्। आपूरितवानसि[2]। अन्तरिक्षम्। महत्तया। सत्यमद्धेति सत्यनामनी सत्यं[3] तथैव। न त्वत्सदृशः कश्चिदस्तीति।

**न यस्य॒ द्यावा॑पृथि॒वी अनु॒ व्यचो॒ न सिन्ध॑वो॒ रज॑सो॒ अन्त॑मान॒शुः।**
**नोत स्ववृ॑ष्टिं॒ मदे॑ अस्य॒ युध्य॑त॒ एको॑ अ॒न्यच्च॑कृषे॒ विश्व॑मानु॒षक् ॥१४॥**

न यस्य[4]। यस्येन्द्रस्य। द्यावापृथिवी[5]। व्याप्तिम्[6]। न। अन्वानशाते[7]। न[8]। नद्योऽपि[9]। तेजसः। अन्तम्[10]। आपुः। न। अपिच। वृत्रम्[11]। सोममदे। युध्यतः। अस्य[12] तेजसोऽन्तं नानशुः[13]। किं बहुना एक[14] एव त्वम्। अन्यत्। सर्वम्। अनुस्यूतम्[15]। कृतवानसि।

**आर्च॒न्नत्र॑ म॒रुतः॒ सस्मि॑न्ना॒जौ विश्वे॑ दे॒वासो॑ अमद॒न्ननु॑ त्वा।**
**वृ॒त्रस्य॒ यद्भृ॑ष्टि॒मता॑ व॒धेन॒ नि त्वमि॑न्द्र॒ प्रत्या॒नं ज॒घन्थ॑ ॥१५॥**

आर्चन्नत्र[16]। प्रहर भगवो जहि वीरयस्वेति[17] सर्वस्मिन्[18]। अस्मिन्[19]।

---

१. परिभवः M. भवसि त्वम्। महद्भिः शूरैरुपेतं तव महत्सैन्यमित्यर्थः Sk.
२. असि omitted by M.
३. अत्यन्तसत्यमेतत् Sk. ४. न यस्य omitted by P. ५. ०पृथि P.
६. ०प्तिः D. ७. नाह्वान० M.
८. Omitted by M. ९. ददद्यो० M. अन्तरिक्षलोकस्योपरि ... स्यन्दनशीला आपः Sy. स्यन्दनात् सिन्धव आदित्यरश्मय इहोच्यन्ते Sk. १०. अनु प्राप्नुवन्ति। यतो व्याप्ते द्यावापृथिव्यौ न्यूनतरेण तेजसा चादित्यरश्मय इत्यर्थः। अथवा सिन्धव इति नदीनाम। रज इत्युदकमुच्यते। यतो व्याप्ते द्यावापृथिव्यौ न्यूनतरे यस्य च स्वभूतस्य वृष्टिलक्षणस्योदकस्यान्तं नद्यो न व्याप्नुवन्ति। वृष्ट्येकदेशेन ह्रियन्ते। न सर्वां वृष्टिं प्रति गच्छन्तीत्यर्थः। अथवैवमन्यथास्यार्धर्चस्यार्थयोजना। द्यावापृथिवी अनुव्यच इत्यनुशब्दो 'हीने' ... इत्येवं कर्मप्रवचनीयः। ... द्यावापृथिवी इति कर्मप्रवचनीययोगलक्षणद्वितीयान्तम्। व्यच इत्यपि प्रथमान्तम्। यस्य तव द्यावापृथिव्योः सकाशादन्यूना व्याप्तिरित्यर्थः। न सिन्धवो रजसोऽन्तमानशुरित्ययं तु पादो द्विधा पूर्ववद् व्याख्येयः Sk. ११. पुत्रं M. स्वा वृष्टिर्यस्य स स्ववृष्टिः। वृष्टेः स्वामी। तं स्ववृष्टिम् Sk. १२. अस्य युध्यत इति प्रकृतत्वादिन्द्रस्यायमन्वादेशः। स्ववृष्टिमित्येतत्सामानाधिकरण्याच्चोभयत्र द्वितीयार्थे षष्ठी। नापि यं व्याप्नुवन्ति वृष्टेः स्वामिनं सोममदे प्राप्ते भवन्तमेनं युध्यमानमित्यर्थः। के न व्याप्नुवन्ति। सामर्थ्याच्छत्रवः Sk.
१३. नामशुः M. १४. सहायवर्जितः Sk.
१५. अन्तस्यू० P. आनुषक्तम्। ... सकलमपि भूतजातं त्वदधीनमभूदिति भावः Sy. आनुपूर्व्येणात्मानुगुणं स्ववशवर्तीत्यर्थः Sk. १६. Omitted by P. and D.
१७. ०रयस्मेति P. १८. सस्मिन्। सर्वशब्दस्यायमेकाक्षरलोपः पर्यायान्तरं वा Sk.
१९. तस्मिन् यद्वा सर्वस्मिन् Sy.

सङ्ग्रामे[१]। मरुत इन्द्रम्। आर्चन्[२]। व्याप्ताः[३]। मरुतो देवाः[४]। त्वाम्[५]। अन्वमदन्[६] मदिः सकर्मकश्च भवति। वृत्रस्य। यदा[७]। श्रीमता[८]। वज्रेण। निजघन्थ[९]। त्वम्। इन्द्र! अननसाधनं[१०] मुखं[११] प्रति[९]।

## I.53.

**न्यू३षु वाचं प्र महे भरामहे गिर इन्द्राय सदने विवस्वतः।**
**नू चिद्धि रत्नं ससतामिवाविदन्न दुष्टुतिर्द्रविणोदेषु शस्यते ॥१॥**

**न्यू षु वाचम्**[१२]। सुनि[१३]प्रभरामहे[१४]। स्तोत्रम्[१५]। महत इन्द्राय। यजमानस्य। गृहे[१६]। स्तुतयः[१७]। इन्द्राय भवन्ति। क्षिप्रम्। एव[१८]। हि[१९] शत्रूणाम्[२०]। रत्नम्[२१]। स्वपतामिव[२२] धनं चोरः, इन्द्रः। विन्दति ततः प्रभरामहे तत्र च। धनप्रदेषु[२३]। दुष्टुतिः[२४]। न। प्रशस्यते तस्मात् सुष्ठु प्रभरामहे[२५]।

---

१. सङ्ग्रामस्थानीये दुस्तरे यज्ञे। यावान् कश्चिदयं पृथिव्यां यज्ञस्तत्र सर्वत्रेत्यर्थः। अथवा . . . इन्द्रसखा देवा एवात्र मरुत उच्यन्ते। आजिरित्यपि सङ्ग्राम एवोच्यते न तत्स्थानीयो यज्ञः। . . . अथ सर्वस्मिन् सङ्ग्रामे मरुतस्त्वां स्तुवन्त इत्यर्थः Sk.

२. आर्चत् M. स्तुवन्ति स्तुवन्तो वा Sk.

३. सर्वे Sy; Sk.

४. देवाः Sk.

५. अनु त्वा। 'तृतीयार्थे' . . . इत्येवमयमनुशब्दः कर्मप्रवचनीयः। सहार्थश्चात्र तृतीयार्थः। त्वया सहेत्यर्थः Sk.

६. अनुक्रमेण हर्षं प्रापयन्। यद्वा त्वदीयमदानन्तरं तेऽपि मदं प्राप्ताः Sy. सोमेन माद्यन्ति मत्ता वा Sk.

७. यस्माद् यदा वा Sk.

८. भ्रंशयति शत्रूनिति भृष्टिरश्रिस्तद्वता Sy. अश्रीमता Sk.

९. प्रतिशब्दोऽत्र धात्वर्थानुवादी। नियमेन हतवान् हंसि वा Sk.

१०. आनं प्राणम् Sk.

११. यद्वा श्वासहेतु घ्राणम् Sy.

१२. वाचा P.

१३. उ सु इति पदपूरणौ Sk.

१४. नियमेन प्रभरामः प्रापयामः। उच्चारयाम इत्यर्थः Sk.

१५. शस्त्रलक्षणां वाचम् Sk.

१६. यज्ञगृहे Sy; Sk.

१७. न केवलां शस्त्रलक्षणां वाचम्। किं तर्हि? अन्या अपि गिरो लौकिकस्तुतिलक्षणा यजुस्सामलक्षणा वा वाचः Sk.

१८. इव M. चिच्छब्दः पदपूरणः Sk.

१९. हिशब्दो यस्मादर्थे Sk.

२०. असुराणाम् Sy.

२१. चरन्तं P. Omitted by D. यस्मात् क्षिप्रमिन्द्रो रत्नं धनं ससतामिव स्वपतामिवात्यन्तनिष्प्रतिकाराणां शत्रूणामविदत् . . . अविन्दत्। लब्धवान्। प्रभूतधनवानित्यर्थः Sk.

२२. ०पन्ता० M. ०मि P.

२३. ऋत्विजोऽत्र द्रविणोदा उच्यन्ते यजमाना वा हविर्लक्षणस्यैव धनस्य दातृत्वात्। तेषु शस्यते। शस्त्रधर्मेण क्रियते। यस्माच्चास्य न कश्चिदप्यृत्विक् यजमानो वा अयोग्यां स्तुतिं करोतीत्यर्थः।

२४. यस्माच्चास्येन्द्रस्य न दुष्टुतिः कुत्सिता स्तुतिः Sk.

२५. V. Mādhava ignores उ

**दुरो अश्वस्य दुर इन्द्र गोरसि दुरो यवस्य वसुन इनस्पतिः ।**
**शिक्षानरः प्रदिवो अकामकर्शनः सखा सखिभ्यस्तमिदं गृणीमसि ॥२॥**

दुरो[1] अश्वस्य । दाता[2] । अश्वस्य[3] । दाता[4] । इन्द्र ! गोश्च[5] । असि[6] । दुरः । यवस्य[7] । धनस्य । ईश्वरः । पालयिता[8] । शिक्षाया[9] नेता शासिता सर्वेषाम् । पुराणः[10] । कामानामकर्शिता[11] । सखा । सखिभ्यः[12] । तं[13] वयम् । इदम् । स्तुमः ।

**शचीव इन्द्र पुरुकृद्द्युमत्तम तवेदिदमभितश्चेकिते वसु ।**
**अतः संगृभ्याभिभूत आ भर मा त्वायतो जरितुः काममूनयीः ॥३॥**

शचीव इन्द्र । प्रजावन्[14] ! इन्द्र[15] ! बहूनां[16] कर्तः ! अतिशयेन दीप्तिमन् ! तव । एव[17] । इदम् । अभितः[18] । वसु[19] । ज्ञायते[20] । अतो वसु नः । संगृह्य । अभिभवितः ! शत्रूणां मह्यम्[21] । देहि । मा । त्वामिच्छतः । स्तोतुः[22] । कामम्[23] । ऊनयीः कार्षीः[24] ।

**एभिर्द्युभिः सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना ।**
**इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि ॥४॥**

एभिर्द्युभिः[25] । एभिः[26] । यागदिवसैः[27] । एभिश्च । सोमैः[28] । प्रीयमाणः[29] स्तोतृणामर्थाभावजनिताम्[30] ।

---

१. दूतो P. २. सर्वस्तोतॄणां दुरो द्वारं निमित्तभूमिः । दातेत्यर्थः Sk.
३. जात्यभिप्रायमेतदेकवचनम् । अश्वानाम् Sk. ४. Omitted by D.
५. गवां च द्वारमसि Sk.
६. ०श्वासि M. ७. यवानां च द्वारमसि Sk. ८. कृत्स्नस्य जगतः Sk.
९. दानस्य Sy. शिक्षतिर्दानकर्मा । छान्दसश्चात्र चतुर्थीसमासः पूर्वनिपातश्च । नरेभ्यो दाता धनानां शिक्षानरः Sk.
१०. एवं नचाल्पदः Sk.
११. कामानामकर्शयिताऽतनूकर्ता । यावत् काम्यते ततोऽधिकस्य दातेत्यर्थः Sk.
१२. सखीनां यजमानानाम् Sk. १३. त M.
१४. ०वान् M. प्रज्ञावान् Sy. कर्मवन् प्रज्ञावन् वा Sk. १५. इन्द्रं च M.
१६. प्रभूतस्य वृत्रवधादेः कर्तः ! Sy. बहूनां वृत्रवधादीनां कर्मणां कर्तः ! Sk.
१७. इच्छब्दः पदपूरणः Sk. १८. उभयतो दक्षिणे वामे च पार्श्वे Sk. १९. प्रभूतं धनम् Sk. २०. दृश्यत इत्यर्थः Sk.
२१. अस्मभ्यम् Sy. The use of both नः and मह्यम् in the same sentence is strange and unnecessary. Either would have been quite enough.
२२. मम Sk. २३. इच्छाम् Sk.
२४. उतयीः काषिभी P. मुनिरकार्षीत् M. परिहीणं मा कार्षीः । पूरयेत्यर्थः Sy. न्यूनीकार्षीः । यावदहमिच्छामि तावद्देहि मा स्तोकमित्यर्थः Sk.
२५. ०र्द्युतिभिः M. २६. ऐभिः M.
२७ यादि ० P. दीप्तैश्चरुपुरोडाशादिभिः Sy. सप्तम्यर्थे तृतीयैषा । द्यु इति चाह्नो नामधेयम् । एतेष्वहस्सु । साम्प्रतमेवेत्यर्थः Sk. २८. ०मै D. २९. प्रि० M. उत्तरार्धर्चस्यैर्भूयोभिर्बहुवचनान्तैः सामानाधिकरण्याद् बहुवचनान्तस्य स्थान इदमेकवचनम् । सुमनसः । प्रीतियुक्ताः सन्त इत्यर्थः Sk. ३०. ०वे जनति तां P.

अमतिम्[१]। गोभिः[२]। अश्ववता च धनेन। निरुन्धान[३] इन्द्रो भवति वयं तेन। इन्द्रेण[४]। उपक्षपयितारं[५] दस्युम्। दरयन्तः। प्रत्नैः[६] सोमैः[७]। पृथक्कृत[८]द्वेष्टारः[९]। अन्नेन[९]। संरब्धा[१०] भवेम[११]।

**समिन्द्र राया समिषा रभेमहि सं वाजेभिः पुरुश्चन्द्रैरभिद्युभिः।**
**सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाश्ववत्या रभेमहि ॥५॥**

समिन्द्र राया[१२]। इन्द्र! धनेन[१३]। संरब्धा भवेम[१४]। अन्नेन[१५] च। सं च[१६]। बलैः[१७]। बहूनां स्पृहणीयैः[१८]। अभिगतदीप्तिभिः[१९]। सं च। देव्या[२०]। मत्या[२१]। यस्या वीरा[२२] बलं भवन्ति अश्वयुक्तायाः[२३]। गोमुखायाः[२४]।

---

१. मतिं D. M. अज्ञानम्। अथवा मन्यतेरर्चतिकर्मणः कर्तर्ययं क्तिन्। इन्द्रस्यास्तोतारमात्मीयं शत्रुम् Sk.

२. अश्वित्ववचनादश्वशब्दाद् ... अयमिनिर्द्रष्टव्यः। स्वार्थिको वा। बहुवचनस्य स्थान एकवचनम्। तृतीयानिर्देशाच्च युक्ता इति वाक्यशेषः। गोभिरश्वैर्युक्ता इत्यर्थः Sk.

३. एभिरिन्दुभिः सोमैर्निरुन्धानः। इदमपि बहुवचनान्तस्यैव स्थान एकवचनम्। निरुन्धानाः। प्रतिबध्नन्तः Sk.

४. इन्द्रण P. ५. आत्मीयं शत्रुम् Sk.

६. प्रश्नैः M. ७. सोमैर्मत्तेनेन्द्रेण स्वशत्रून् घातयन्त इत्यर्थः Sk.

८. ०कृतं द्वे० M. ०कृतं चेष्टारः D. अत्र द्वेषशब्दो द्वेषवचनो द्वेष्टृवचनो वा। पृथग्भूतद्वेषसः ... अपगतजनद्वेष्टृका वेत्यर्थः Sk.

९. ०रान्नेन P. अनेन M. अन्नेन सह। अथवा इषेति द्वितीयार्थे तृतीया। इषं सम्यक् Sk.

१०. लभेरिदम्। कपिलादित्वाद् रत्वम्। सम्यक् लभेमहीत्याशास्महे। किम्? सामर्थ्याद् धनं यशो वा Sk.

११. ०मः M.

१२. पुनः पुनः संशब्दश्रुतेः प्रतिसंशब्दं रभेमहीत्याख्यातमनुषक्तव्यम् Sk.

१३. द्वितीयार्थे सर्वत्रात्र तृतीया। सहयोगलक्षणा वा तृतीया। तैर्वा सुखं वा गृहं वा यशो वा पूजां वेति वाक्यशेषः। धनं धनेन वा सह सुखादीनां किञ्चित् Sk.

१४. सम्यग् लभेमहीत्याशास्महे Sk.

१५. P. adds अनेन after अन्नेन। सम्यग्लभेमहि इषमन्नमन्नेन वा सह सुखादीनां किञ्चित् Sk.

१६. Omitted by D.

१७. सञ्चपलैः P. सञ्चलैं M. सम्यग्लभेमहि बलानि बलैर्वा सह सुखादीनां किञ्चित् Sk. १८. कान्तैः Sk.

१९. स्वदीप्त्या दीप्तैरित्यर्थः Sk.

२०. देव्य M. स्वदीप्त्या द्योतमानां द्योतमानया सह सुखादीनां किञ्चित् Sk.

२१. मात्या P. प्रकृष्टया मत्या ज्ञानेन Sk.

२२. विता P. वीरं विशेषेण शत्रूणां क्षेपणसमर्थं शुष्मं बलं यस्याः Sy. वीराः पुत्रास्ते बलं यस्याः सा वीरशुष्मा तया। बलवत्पुत्रसहितया Sk. २३. श्व० M. अश्वायु० P. अश्वसहितया Sk.

२४. ०या M. स्तोतृभ्यो दानार्थमग्रे प्रमुखत एव गावो यस्याः सा तयोक्ता Sy. गावोऽग्रभूता यस्याः सा गोअग्रा। प्रधानभूताभिर्गोभिस्सहिता। तया Sk.

ते त्वा मदा॑ अमद॒न्तानि॒ वृष्ण्या॒ ते सोमा॑सो वृत्र॒हत्ये॑षु सत्पते।
यत्का॒रवे॒ दश॑ वृ॒त्राण्य॑प्र॒ति ब॒र्हिष्म॑ते॒ नि स॒हस्रा॑णि ब॒र्हयः॑ ॥६॥

ते त्वा मदाः। ते। त्वा। सोमाः[1]। अमदन्[2]। तानि। वर्षणनिमित्तानि[3]। के त इत्याह—ते। सोमासः। वृत्रहननेषु। सतां[4] पते! यदा[5] त्वम्। स्तोत्रे। दश सहस्राणि[6]। उपद्रवाणाम्[7]। निबर्हयसि[8]। यजमानाय। शत्रुभिरप्रतिगतः[9]।

यु॒धा यु॒धमुप॒ घेदे॑षि धृष्णु॒या पु॒रा पु॒रं समि॒दं ह॒ंस्योज॑सा।
नम्या॒ यदि॑न्द्र॒ सख्या॑ परा॒वति॑ निब॒र्हयो॒ नमु॑चिं॒ नाम॑ मा॒यिन॑म् ॥७॥

युधा[10] युधम्[11]। युद्धेनानुस्यूतमन्यत्। युद्धम्[12]। उपगच्छसि[13]। धृष्णुम्[14]। पुरेण[15] च। पुरं[16] शत्रूणाम्। सह। इदम्। विनाशयसि[17]। बलेन[18]। अनुगुणेन। इन्द्र! मरुद्गणेन[19]। दूरेण[20]। नमुचिम्[21]। नामा-

---

१. मादका मरुतः Sy.
सुरालक्षणा मदाः Sk.
२. मदन् D.　　३. वर्षनि० M.
सेचनसमर्थस्य तव सम्बन्धीनि चरु-पुरोडाशादीनि हवींषि Sy.
बलानि Sk.　　४. सत्वां M.
५. Omitted by M.
यद् यैः Sk.　　६. ०स्रम् M.
सहस्रशब्दश्चोभयवचनः। उभयवचनत्वेऽपीह संख्यामात्रवचनो न संख्येयवचनः। कुत एतद्? दशेत्येतेन सामानाधिकरण्यात्। दशसंख्यया च सहस्रसंख्या परिच्छिद्यते। न तत्संख्येयाः। अतोऽत्र सहस्रशब्दस्य संख्यामात्रवचनत्वाद् वृत्राणीत्येतस्य च तत्संख्यया प्रतिनिर्देशार्थत्वात् षष्ठ्यर्थे द्वितीया। Sk.　　७. वृत्राणां शत्रूणाम् Sk.
८. वधकर्मायम्। हतवानसि Sk.
९. ०हतः M.
अप्रति। वृत्राणामिदं विशेषणम्। इन्द्रस्य वा।. . . अत्रावतिष्ठतेर्बध्नातेर्वा ससाधनस्यार्थे प्रतिशब्दः। अप्रत्यवतिष्ठमानोऽप्रतिबध्यमानो वेत्यर्थः Sk.
१०. युधा P.
११. युद्धेनादस्यूत० M. ०स्यूतमस्युर्यद् P.
१२. युधं प्रतियोद्धारम् Sk.
१३. भूते लट्। उपगतवानसि Sk.
१४. धृष्णं P. M.
शत्रूणां धर्षकस्त्वम् Sy.
प्रथमैकवचनस्यायं याऽऽदेशः। धृष्णुः प्रगल्भः। निश्शङ्कस्सन्नित्यर्थः Sk.
१५. पुरशब्दः शरीरवचनः। शरीरेण च शरीरम्। यो योद्धा अस्त्रवान् अस्त्रयुद्धेनोपगन्तव्यस्तं तेनोपगतवानसि। यो बाहुयुद्धार्थं शरीरेणेत्यर्थः Sk.
१६. ०नां D.
१७. भूतेऽत्रापि लट्। सम्यग्घतवानसि Sk.
१८. आत्मीयेन Sk.
१९. सहायभूतेन वज्रेण Sy.
प्रणतेन Sk.
२०. ०णा P. दूरे M.
दूरदेशे Sy.
दूरे स्थितम् Sk.
२१. ०चि P.

सुरम्[1]। मायाविनम्[2]। निबर्हयस्तदानीम्[3][4]।

त्वं करञ्जमुत पर्णयं वधीस्तेजिष्ठयातिथिग्वस्य वर्तनी।
त्वं शता वङ्गृदस्याभिनत्पुरोऽनानुदः परिषूता ऋजिश्वना ॥८॥

त्वं करञ्जम्[5]। त्वम्। करञ्जम्[6]। अपिच। पर्णयम्[7]। अवधीः। तेजिष्ठया[8]। शक्त्या[9]। दिवोदासस्य[10] रक्षार्थं तथा। त्वमृजिश्वनः[11] शत्रोः। वङ्गृदस्य[12]। बह्वीः[13]। पुरः। अभिनो[14] याः। ऋजिश्वना राज्ञा। परिगता[15] ऋजिश्वनः[11] शत्रुपुराण्यवष्टभ्यावस्थितस्य साहाय्यं कृतवानसि। अनानुदः[16] पश्चाद्भावस्य दातेति[17]।

त्वमेताञ्जनराज्ञो द्विर्दशाबन्धुना सुश्रवसोपजग्मुषः।
षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ॥९॥

त्वमेताञ्जनराज्ञः। त्वम्। एतान्[18]। जनपदानां राज्ञः[19]। विंशतिम्[20]। बन्धुर्वर्जितेन[21]।

---

१. हतवानसि Sk. २. ०य त० D.
३. M. adds इति after तदानीम्
४. V. Mādhava ignores घ। इत्। यत् ५. ०ञ्ज M.
६. करञ्जनामानमेतमसुरम् Sk.
७. वर्ण० P.M. पर्णयनामानमपरम् Sk.
८. तीक्ष्णतमया Sk. ९. वर्तनी वर्तन्या धारया। कस्य ? सामर्थ्याद् वज्रस्य Sk.
१०. अतिथीन् प्रति परिचारकतया गच्छतीत्यतिथिग्वो दिवोदास इहोच्यते। ...षष्ठीनिर्देशाच्चार्थायेति वाक्यशेषः। तादर्थ्यचतुर्थ्यर्थे वा षष्ठी। अतिथीनां परिचरितुर्दिवोदासनाम्नो राज्ञोऽर्थायेत्यर्थः Sk.
११. ०श्वनः M. ऋजिश्वनेत्संज्ञकेन राज्ञा ...शतसंख्याका वङ्गृदस्यैतत्संज्ञकस्यासुरस्य Sy. ऋजिश्वना। ऋजिश्वा नाम राजा विदथिनः पुत्रो यस्य मन्त्रान्तरेष्वपि दर्शनम्।...तेन। अथवा ऋजिश्वनेति तादर्थ्यचतुर्थ्यर्थे तृतीया। ऋजिश्वनो राज्ञोऽर्थाय Sk.
१२. वागृ० P. वंकुस्य M. वङ्गृदनाम्नोऽसुरस्य Sk.
१३. शता। द्वितीयैकवचनस्यायमाकारः। शतम् Sk. १४. ०हिनो M.
१५. परितोऽवष्टब्धाः Sy. सर्वतः प्रेरिताः स्वेभ्यः स्थानेभ्यः। भयेनेतश्च प्रणाशितलोकाः सन्तीत्यर्थः Sk.
१६. ०वानन्यना० M. अनु पश्चाद् द्यति खण्डयतीत्यनुदोऽनुचरः। तादृशोऽनुचररहित एक एव Sy. अनुददातीत्यनुदः। अविद्यमानोऽनुदो यस्य सोऽनानुदः। यदीयं दानं प्राभूत्यादन्योऽनुकर्तुमपि न शक्नोतीत्यर्थः Sk.
१७. अननुदः is a negative form. The meaning should have been पश्चाद्भावस्य न दातेति
१८. एतां D. १९. आत्मीयानां जनानां राज्ञः। स्वराज्येषु प्रतिष्ठितान् सत इत्यर्थः Sk. २०. ०ति P.
२१. द्वितीयार्थे तृतीयैषा।...बन्धुर्वर्जितान्। वैरिणोऽसुरानित्यर्थः Sk.

सुश्रवसा[1] राज्ञा। उपजग्मुषो[2] युद्धार्थम्। तदनुचराणां भटानामियं संख्या षष्टिमिति[3]। विश्रुतस्त्वम्[4]। न्यवधीः। चक्रेण[5]। दुष्पतनेन[6]। रथ्यायाम्[7]।

**त्वमा॑विथ सु॒श्रव॑सं॒ तवो॒तिभि॒स्तव॒ त्राम॑भिरिन्द्र॒ तूर्व॑याणम्।**
**त्वम॑स्मै॒ कुत्स॑मतिथि॒ग्वमा॒युं म॒हे रा॒ज्ञे यूने॑ अरन्धनायः ॥१०॥**

त्वमाविथ[8]। त्वम्। अरक्षः। सुश्रवसं राजानम्। तव। ऊतिभिस्तथा[9]। तव। त्राणैः[10]। इन्द्र! तूर्वयाणं च। त्वम्। अस्मै[11] सुश्रवसे। महते। राज्ञे। यूने। कुत्सादींस्त्रीन्। वशमनयः[12]।

**य उ॒दृचीन्द्र॒ दे॒वगो॑पाः॒ सखा॑यस्ते॒ शि॒वत॑मा॒ असा॑म।**
**त्वां स्तो॑षाम॒ त्वया॑ सु॒वीरा॒ द्राघी॑य॒ आयुः॑ प्रत॒रं दधा॑नाः ॥११॥**

य उदृचीन्द्र[13]। ये वयम्। उदर्के[14]। देवैर्गुप्ताः[15][16]। सहायाः[17]। ते। अत्यन्तं कल्याणाः[18]। अभूम[19] ते[20]

१. सु॰ P.
श्रव इति धननाम। शोभनेन धनेन Sk.

२. उपगतानन्वितान्। धनेन समृद्धान् सत इत्यर्थः। अथवाऽबन्धुना सुश्रवसेति द्वे अपि तृतीयान्ते समानाधिकरणे। बन्धुरिति तु धननाम। श्रव इत्यन्ननाम। उपजग्मुष इत्यपि स्वार्थे कर्तर्येव क्वसुः। धनवर्जितेन शोभनेनान्नेनोपगतान्। पक्वान्नमात्रे फल्गुना करेणोपगतान्। सुवर्णरजतमाणिक्यशुक्तिकादिधनं सारभूतं करमददत इत्यर्थः Sk.

३. सहस्राणां षष्टिं,... नवसंख्योत्तरां नवतिम्। तान् राज्ञ ईदृक्संख्याकाननुचरांश्च Sy.

४. विश्वा॰ P. विश्रि॰ M.

५. सूर्यरथस्यावयवभूतेन Sk.

६. दष्पन्तनेन P.
दुष्प्रपदनेन, शत्रुभिः प्राप्तुमशक्येनेत्यर्थः Sy. दुर्गमेण। तीक्ष्णधारत्वाद् दुस्सहेनेत्यर्थः Sk.

७. रथसम्बन्धिना Sy.

८. त्वा॰ P. ॰विधः D. ॰वितय M.

९. ॰थो M.

१०. त्वदीयैस्त्रायकैः पालकैर्बलैः Sy.

११. तूर्वयाणस्यायमन्वादेशः। तादर्थ्ये चात्र चतुर्थी। अस्य तूर्वयाणस्यार्थाय Sk.

१२. ॰मान॰ M.
आत्मनो वशमनैषीः। तूर्वयाणस्य कार्येषु नियोगार्थं कुत्सादीनपि स्ववशेऽकार्षीरित्यर्थः Sk. १३. ॰न्द्रः M.

१४. उद्गता स्तुतिर्यस्मिन् स उद्गयज्ञः। तत्र। अथवा 'सुष्ठु सुवीरं यज्ञस्यागुर उदृचम्' इति प्रैषेषु दर्शनाद् उदृक्शब्दः समाप्तिवचनः। उदृचि समाप्तौ। कस्य? सामर्थ्याद्यज्ञस्य वा स्तुतीनां वा Sk. १५. देवैदेवैर्गु॰ P.

१६. प्ता M.
देवा गोप्तरो येषां ते देवगोपाः। सर्वैर्देवैः पाल्यमाना इत्यर्थः Sk.

१७. सखिवदत्यन्तं प्रियाः Sy.

१८. सुखकरीणां स्तुतीनां कर्तार इत्यर्थः Sk.

१९. भवाम Sk. २०. अभूतमे P. D. M.

वयम् । त्वाम्[1] । स्तूयाम[2] । त्वया[3] । सुपुत्राः[4] । दीर्घतरं च । आयुः । प्रकृष्टतरम् । दधाना[5] इत्यन्नपुत्र-योराशासनम्[6] ।

## I.54.

**मा नो॑ अ॒स्मिन्म॑घवन्पृ॒त्स्वंह॑सि न॒हि ते॒ अन्तः॒ शव॑सः परी॒णशे॑ ।**
**अक्र॑न्दयो न॒द्यो॒३॒॑ रोरु॑व॒द्वना॑ क॒था न क्षो॒णीर्भि॒यसा॒ समा॑रत ॥१॥**

**मा नो अस्मिन्** । मा । अस्मान् । अस्मिन् । सङ्ग्रामेषु[7] जायमाने । उपद्रवे[8]ऽत्याक्षीः[9] । नहि । ते । बलस्य । पर्यन्तः केनचिदपि व्याप्तुं शक्यः स त्वम् । नदीः[10] । उदकानि[11] । क्रन्दयसि[12] । रोरूयमाणः[13] । कथम्[14] । न[15] । पृथिव्यास्तिस्रस्तव[16] । भयेन । सङ्गच्छन्ते[17] भयाद्धीन्द्रस्य भूमयो विधृतास्तिष्ठन्ति ।

**अर्चा॑ श॒क्राय॑ शा॒किने॒ शची॑वते शृ॒ण्वन्त॒मिन्द्रं॑ म॒हय॑न्न॒भि ष्टु॑हि ।**
**यो धृ॒ष्णुना॒ शव॑सा॒ रोद॑सी उ॒भे वृषा॑ वृष॒त्वा वृ॑ष॒भो न्यृ॒ञ्जते॑ ॥२॥**

**अर्चा शक्राय**[18] । उच्चारय[19] स्तोत्रम्[20] । शक्राय[18] । सहायाय[21] । प्रज्ञावते[22] । शृण्वन्तम्[23] । इन्द्रम्

---

१. त्वा P. २. स्तु० M. नित्यं त्वां स्तूयामेत्याशास्महे Sk.
३. हेतावियं तृतीया । त्वया हेतुना Sk.
४. त्वदनुग्रहाच्छोभनैः पुत्रैः पौत्रैश्च युक्ता इत्यर्थः Sk. ५. चिरं श्लाघ्यं च जीवन्त इत्यर्थः Sk. ६. Ms. D. puts the figure ॥५३॥ here to indicate the end of the fifty-third hymn. No such number is given in P. and M.
७. एकवचनस्य स्थानेऽत्र बहुवचनम् । सङ्ग्रामे Sk. ८. पापे Sy. पापेऽत्यन्तभयानके Sk. ९. ०त्यां M.
१०. गङ्गाद्याः Sk. ११. ०कोनि M. तृतीयाबहुवचनस्यायमाकार आदेशः । वनैरुदकैर्गर्जन् । वृष्टिलक्षणैरुदकैरापूरयन् शब्दवतीर्नदीरकरोः करोषि वेत्यर्थः Sk. १२. कन्द० P. शब्दवतीरकरोरकार्षीर्वा Sk.
१३. स्तनयित्नुलक्षणं शब्दं कुर्वन् Sk.
१४. एतच्च कर्म कुर्वतो भवतः कथा कथं न Sk. १५. नः M.
१६. प्राप्यस्ति० P. The reading should be पृथिव्यः nom. pl. and not पृथिव्याः gen. sing. त्वदीयं बलमवलोक्य त्रयोऽपि लोका बिभ्यतीति भावः Sy. क्षोणीर्माध्यमिका वाक् Sk. १७. समित्येष निरित्येतस्य स्थाने...मेघान्निर्गता निर्गच्छन्ति वेत्यर्थः । अथवा समित्येष स्वार्थ एव । सामर्थ्यात्त्वन्येन सह सङ्गतिरभिप्रेता । कथमन्येन सह सङ्गता । कथं त्वत्तो न नष्टा न नश्यन्ति वेत्यर्थः Sk.
१८. शकाय D. द्वितीयार्थ एताश्चतुर्थ्यः । शक्रमिन्द्रम् Sk. १९. Missing in M. पूजय Sy. अर्चेत्यात्मन एवान्तरात्मनः प्रैष ऋत्विगन्तरस्य वा । स्तुहि हे अन्तरात्मन् ऋत्विग्वा Sk.
२०. त्रं M. २१. शक्तियुक्ताय Sy. शाकिने शक्तिमन्तम् Sk. २२. कर्मवन्तं वा प्रज्ञावन्तं वा Sk. २३. मा च विप्रकृष्टं निरादरं वा । किं तर्हि ? शृण्वन्तमिन्द्रम् । सन्निकृष्टं सादरं वा सन्तमित्यर्थः । स्वयमपि च मा निरादरः Sk.

पूजयन्[1]। अभिष्टुहि[2]। यः। शत्रूणामभिभवित्रा[3]। बलेन। उभे। द्यावापृथिव्यौ। प्रसाधयति[4]। वर्षणशीलः[5]। वृषभः[6]। वृषत्वेन चेति।

**अर्चा॑ दि॒वे बृ॑ह॒ते शू॒ष्यं१॒॑ वचः॒ स्वक्ष॑त्रं॒ यस्य॑ धृष॒तो धृ॒षन्मनः॑ ।**
**बृ॒हच्छ्र॑वा॒ असु॑रो ब॒र्हणा॑ कृ॒तः पु॒रो हरि॑भ्यां वृष॒भो रथो॒ हि षः ॥३॥**

अर्चा दिवे। उच्चारय[7]। दीप्ताय। महते[8]। बलनिमित्तम्[9]। वचः[10]। अनाश्रितपरबलम्[11]। यस्य शत्रून्[12]। धर्षयतः[13]। धृष्टम्[14]। मनः। महाकीर्तिः शत्रूणाम्[15]। असिता[16]। शत्रुपरिबर्हणार्थं तस्येन्द्रस्य[17]। रथः[18]। कामानां वर्षिता। अश्वाभ्याम्। पुरस्क्रियते स्तोतॄणामिति[19]।

---

१. नमस्काराञ्जलिपुटकरणादिना Sk.
२. ०ष्टुभिहि D. ३. ०विता P. D. M.
४. प्रसाधनं च भूषणं वशीकरणं वा। नियमेन प्रसाधयति भूषयति स्ववशे वा कुरुत इत्यर्थः। उभयमपि ह्येतद् वृष्टिप्रदानेन द्यावापृथिव्योरिन्द्रः करोति Sk.
५. वर्षिता कामानाम्। यद्वा वृष्ट्युदकानाम् Sy. पुनः पुनर्वर्षिता। वर्षणशील एवेत्यर्थः Sk. ६. वर्षितृत्वेन। वृष्टिप्रदानेनेत्यर्थः Sk. ७. आत्मन एव चायमन्तरात्मनः प्रैषः। उच्चारय हे अन्तरात्मन् Sk. ८. तादर्थ्यचतुर्थ्यावेते। दीप्तस्य महतश्चेन्द्रस्यार्थाय Sk.
९. शूषमिति सुखनाम। तत्र साधु शूष्यम्। तादृशं स्तुतिलक्षणम् Sy. बलवृद्धिकरमित्यर्थः Sk. १०. वयः D. स्तुतिलक्षणम्। स्तूयमाना हि देवता वीर्येण वर्धन्ते। अत एवमुच्यते उच्चारयेन्द्राय शूष्यं वच इति Sk.
११. बलपरं P. स्वबलं परानाश्रितम् Sk.
१२. शत्रुं M. १३. शत्रूनभिभवतः Sk.
१४. प्रगल्भं मनः। यस्य बलेन शत्रून् घ्नन् न कुतश्चिन्मनसा बिभेमीत्यर्थः Sk.
१५. महाधनः Sk. १६. ०तं P. यद्वा असुः प्राणो बलं वा तद्वान्। रो मत्वर्थीयः। अथवा असवः प्राणास्तेन चाऽपो लक्ष्यन्ते 'प्राणा वा आपः' (तैः ब्रा. ३. २.५.२.) इति श्रुतेः। तान् राति ददातीत्यसुरः Sy. असुरो वृत्रोऽन्यो वा कश्चित् Sk. १७. बर्हणा परिबर्हणा N. 6. 18. बर्हिर्वृद्धयर्थः। इन्द्रस्य चेदं विशेषणम्। परिवृद्धेनेन्द्रेण कृतः। अथवा बर्हणा हिंसोच्यते। निबर्हयतेर्वधकर्मत्वात्। बर्हणया हिंसया कृतः Sk.
१८. तथा P. रथो रंहतेर्गतिकर्मणो गन्तेहोच्यते। . . . रंहिता च स कृतः। आत्मनोऽनुगन्ता च स कृत इत्यर्थः। अथवा रूढिबलाद्रथशब्दो रथवचन एवान्तर्णीतमत्वर्थः। रथवांश्च स कृतः। रथेन च स सेवकः कृत इत्यर्थः। अथवा बृहच्छ्रवा इति श्रूयमाणश् श्रवः स्तनयित्नुलक्षणः शब्द इहाभिप्रेतः। असुर इत्यपि प्रज्ञावत्त्वात् प्राणवत्त्वाद्वा मेघ उच्यते। बर्हणाशब्दो वधवचनः। निबर्हयतेर्वधकर्मकत्वात्। येनेन्द्रेण महान् स्तनयित्नुलक्षणशब्दो मेघो वधेन प्राग्घरिप्राप्तेर्दूरस्थेनैव सता वृषभः कृतः। वृष्टिप्रदः कृत इत्यर्थः। मा च मंस्थाः कियानयं पुरुषकार इति। किं कारणम्? रथो हि षः। हिशब्दो यस्मादर्थे। यस्माद् इन्द्रो रंहिता गन्ता नष्टा। स मेघानां नष्टृत्वाच्च दुर्हण इत्यर्थः . . . पुरो हरिभ्याम्। प्राग्घरिप्राप्तेरप्राप्तेन तदीयं स्थानं स्वस्थानम्। स्वेनैव सतेत्यर्थः Sk.
१९. V. Mādhava ignores हि

त्वं दिवो बृहतः सानु कोपयोऽव त्मना धृषता शम्बरं भिनत् ।
यन्मायिनो व्रन्दिनो मन्दिना धृषच्छितां गभस्तिमशनिं पृतन्यसि ॥४॥

त्वं दिवः। त्वम्। दिवः[1]। महतः। समुच्छ्रितं[2] मेघम्[3]। अकोपयः[4]। अवभिन्नवान्[5]। आत्मनैव[6]। धर्षयित्रा[7]। शम्बरमसुरम्। यदा। मायावतोऽन्यान् स्वबलेन। मृदूकर्तुः[8]। हृष्टेन[9] मनसा। धृष्टम्[10]। तीक्ष्णां शत्रूणाम्। गृहीताम्[11]। अशनिम्। अयोधयस्तदानीमिति[12] यद्वा बहुमशनिं[13] चेति।

नि यद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना ।
प्राचीनेन मनसा बर्हणावता यदद्या चित्कृणवः कस्त्वा परि ॥५॥

नि यद्वृणक्षि[14]। निवृणक्षि[15]। यदा[16]। शब्दकारिणः[17]। शुष्णस्यादित्यस्य[18] शोषयितुः। मूर्धनि[19]।

---

१. यद्यसुरा अपि द्युलोकैकदेशवासिन एव ततोऽत्र द्युशब्दो द्युलोकवचन एव। अथ न ततो दीप्तवचनः। त्वं द्युलोकस्य दीप्तस्य वा सुरपुरस्य Sk.

२. तं is missing in M.

३. उपरिप्रदेशम् Sy. प्रदेशम् Sk.

४. भग्नवानसि Sk.

५. चूर्णीकृतवानित्यर्थः Sk.

६. ०मानै० M.

७. ०यिता P. D. M. निश्शङ्केन मनसा Sk.

८. मृदुकर्तुं P. मृदु० D. म्य० M. मृदुभावं प्राप्तान्। यद्वा वृन्दं समूहः, असुरसमूहवतः Sy. अत्यन्तबलवत्त्वात् परबलानां मृदू-कर्तुः. . . अत्यन्तं च बलवतः शम्बरस्य स्वभूतामित्यर्थः Sk.

९. मन्दतिरर्चतिकर्मा। स्तुतिमता स्तुत्येन वज्रेण मनसा वा Sk.

१०. धृषता प्रागल्भ्यं प्राप्नुवता मनसा Sy. निःशङ्कम् Sk.

११. ०तिम् P. D. ०तीम् M. हस्तेन गृहीताम्। यद्वा गभस्तिरिति रश्मि-नाम तद्वतीम् Sy. बाहुना-मैतत्। तात्स्थ्यात्त्वत्राशनौ वर्तते। बाहुस्थाम् Sk.

१२. आ० D. तानसुरान् जेतुं पृतनारूपेणेच्छसि। तान्प्रति प्रेरयसीत्यर्थः Sy. यदाशनिहस्तेन शम्बरेण सहायुध्यथा इत्यर्थः Sk.

१३. I propose to read बाहुम् Ed.

१४. निवृणक्षि यच्छ्वसनस्य मूर्धनि शब्द-कारिणः। शुष्णस्यादित्यस्य (च) शोषयितू रोरूयमाणो वनानीति वा। वधेनेति वा N. 5. 16.

१५. नियमेन हतवानसि Sk.

१६. यस्मात् Sy; Sk.

१७. अन्तरिक्षे श्वसितीति श्वसनो वायुः। . . . वायुना सूर्यकिरणैश्च वृष्टा आपः सूर्यस्योपरि पुनरवस्थाप्यन्ते। तदेवा-वस्थापनमिन्द्रः करोतीत्युपचर्यते Sy. श्वसनस्य श्वासकारिणः। महाश्वास-स्येत्यर्थः Sk.

१८. शुष्णनाम्नोऽसुरस्य Sk.

१९. द्वितीयार्थे सप्तम्येषा। मूर्धानं मस्तकम् Sk.

मृदूकर्तुः[1] स्थितानि। उदकानि[2]। रोरूयमाणः[3]। शत्र्वभिभवमुखेन[4]। वृद्धिमता[5]। मनसा। यत्[6]। इदानीम्। अप्येतत्[7]। कृणोषि[8] शुष्णादुदकाहरणं[9][10] तम्। त्वाम्[11]। कः परिभवति।

त्वमा॑विथ॒ नर्यं॑ तु॒र्वशं॒ यदुं॒ त्वं तु॒र्वीतिं॑ व॒य्यं॑ शतक्रतो।
त्वं रथ॒मेत॑शं॒ कृत्व्ये॒ धने॒ त्वं पुरो॑ नव॒तिं द॑म्भयो॒ नव॑ ॥६॥

त्वमाविथ[12]। त्वम्। अरक्षः[13]। नर्यादीन्[14] पञ्च[15]। शतकर्मन्[16]! तथा। कर्मार्हधननिमित्तम्[17]। त्वमेतशस्य[18]। रथम्[19]। एतशं चावः। त्वम्। पुरः[20]। नव नवतिं[21] चापि। अनाशय[22] एतेषां रक्षणप्रकारमितस्ततो वक्ष्यन्त्यृषय इति।

---

१. मृदु कर्तु P. मृदु० D. म्य० M. अत्यन्तबलवत्त्वात् परबलानां मृदूकर्तुः। अत्यन्तबलवत इत्यर्थः Sk.

२. वनशब्दस्तीक्ष्णवचनः। तृतीयैकवचनस्य चायं याऽऽदेशो द्रष्टव्यः। तीक्ष्णेन वज्रेण। वधवचनः सामर्थ्याद्वनशब्दो वधेन प्रहारेणेत्यर्थः Sk.

३. शब्दं कुर्वन् Sk.

४. शत्रवहिभव० P. D. M. प्रकर्षेण गन्त्रा, अपराङ्मुखेनेत्यर्थः Sy. प्रागञ्चितेन गतेन अपराङ्मुखेन। उत्साहवतेत्यर्थः Sk.

५. बर्हणा शत्रूणां हिंसा तद्वता Sy. हिंसावता वा Sk.

६. यस्मात् Sk.

७. अप्येवमेतत् M.

८. करोषि ईदृशानि कर्माणि Sk.

९. ०ष्णाम्० M. घर्मकाले सूर्यस्योपरि भौमान् रसानवस्थापयसि वर्षासु च वर्षयसीति। यस्मादेतत् कुरुषे तस्मात्कारणात् . . . त्वाम् . . . उपरि को वर्तते? न कोऽपीत्यर्थः Sy.

१०. ०कहृ० D.

११. त्वा P. M. यस्मादिति वचनात् तस्मादित्यध्याहार्यम्। तस्मात् कस्त्वा परि। परिशब्दोऽध्यर्थे। कस्तवाधिकोऽन्यस्तवोपरि। सर्वस्य त्वमुपरीत्यर्थः Sk.

१२. त्वा० M.

१३. ०क्षकः P. D. M.

१४. नर्यं नरेषु भवं साधुं वा मनुष्यं मनुष्यहितं वेत्यर्थः। कम्? तुर्वशं नाम राजानमृषिं वा। यदुं च। त्वमेव तुर्वीतिं नाम राजानमृषिं वाऽसुरैरगाध उदके प्रक्षिप्तं गाधकरणेन पालितवानसि Sk.

१५. त्रीन् Sy.

१६. ०र्मं D. बहुविधप्रज्ञ वा Sy.

१७. कर्मापिधननिमित्त P. कर्माहृ० D. धनार्थं यत्कर्मेत्यर्थः। कतमत् पुनस्तत्? सङ्ग्रामः। सङ्ग्रामार्थमश्वरथौ पालितवानित्यर्थः। अथवा कृत्व्यशब्दः कर्तव्यवचनः। सप्तमी चैषा। धनार्थं यः कर्तव्यः सङ्ग्रामस्तत्रेत्यर्थः Sk.

१८. अयं M.

१९. एतश इत्यश्वनाम। एतशमश्वञ्च Sy. एतश इत्यश्वनाम Sk.

२०. Omitted by P. and D.

२१. नवीतिं P.

२२. विष्णुसहितो हतवानसि Sk.

स घा राजा सत्पतिः शूशुवज्जनो रातहव्यः प्रति यः शासमिन्वति ।
उक्था वा यो अभिगृणाति राधसा दानुरस्मा उपरा पिन्वते दिवः ॥७॥

स घा राजा । सः । खलु । जनः । राजा । सतां च पतिः[1] । वर्धते[2] । दत्तहविष्कः । यः । शासितारमिन्द्रम्[3] । प्रतिगच्छति प्रीणयति वा[4] । यः । वा । उक्थानि[5] । अभिवदति[6] सः[7] । हविषाम्[8] । दाता[9] । अस्मै । दिवः सकाशात् । अभ्राणि । दोग्धि[10] ।

असमं क्षत्रमसमा मनीषा प्र सोमपा अपसा सन्तु नेमे ।
ये त इन्द्र ददुषो वर्धयन्ति महि क्षत्रं स्थविरं वृष्ण्यं च ॥८॥

असमं[11] क्षत्रम्[12] । असमम्[11] । बलम्[13] । असमा । प्रज्ञा[14] । प्रभवन्तु[15][16] । सोमस्य पातारः[17] । कर्मणा[18] । नेमशब्दोऽर्धवचनः[19] केचनेत्यर्थस्तानाह[20] । ये । तव । इन्द्र ! ददिवांसः[21] । वर्धयन्ति । महत् । बलम्[22] । प्रवृद्धम् । पुंस्त्वं[23] च ।

---

१. पालयिता Sk.
२. वर्धयति Sy. सर्वाभिर्वृद्धिभिः Sk.
३. इन्द्रकर्तृकमनुशासनं, यद्वा तस्य स्तुतिम् Sy. कृत्स्नस्य जगतः शासितृत्वाच्छास इन्द्रः । तं प्रति Sk. ४. व्याप्नोति Sy. गच्छति व्याप्नोति वा । य इन्द्रं दत्तेन हविषोपसर्पति व्याप्नोति वेत्यर्थः Sk.
५. यो तवाक्तानि P. उक्थशब्दः स्तोत्रवचनः । तृतीयाबहुवचनस्यायमाकारः । स्तोत्रैर्वा Sk. ६. शंसति Sy. अभिष्टौति Sk. ७. सह M.
८. हविर्लक्षणेनान्नेन सह Sy. धनेन मुक्तायास्मै Sk. ९. दानुरिति स्तनयित्नुलक्षणा माध्यमिका वागुच्यते।... माध्यमिका वाक् Sk. १०. सेचयति । प्रक्षालयतीत्यर्थः ।...धनं चास्य भवति । मेघाश्च गर्जन्तो वर्षन्तीत्यर्थः Sk.
११. असमा P. अन्यैर्मनुष्यैः Sk.
१२. क्षत्रा P. १३. बल P. क्षत्रं धनम् Sk. १४. समा P.
१५. प्र । उपसर्गोऽयम् । उपसर्गाश्च पुनरेवमात्मकाः । यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः । प्रवचन्ति प्रकरोतीति । यत्र तु क्रियावाची शब्दो न प्रयुज्यते ससाधनां तत्र क्रियामाहुः । अतोऽत्र शुद्धोऽपि प्रशब्दः प्रवृद्धशब्दार्थे । प्रवृद्धाश्च पुत्रादिभिः Sk.
१६. भ० D. M. प्रवृद्धा भवन्तु Sy. सन्तु भवन्तु । धनप्रज्ञे एषामतुल्ये स्ताम् । पुत्रादिभिश्च प्रवृद्धा यागेन यष्टारः सन्त्वित्यर्थः Sk. १७. यष्टार इत्यर्थः Sk. १८. यागकर्मणा Sk. १९. नेम इति सर्वनामशब्द एतच्छब्दसमानार्थः Sy.
२०. ०र्थास्ता० M. २१. दभिवांसः P. हविर्दत्तवन्तः ।... यद्वा ददुषो यजमानेभ्यो यागफलं दत्तवतस्तवेति योजनीयम् Sy. धनानि दत्तवन्तः Sk.
२२. हविराख्यं धनम् Sk. २३. स्तूयमाना हि देवता वीर्येण वर्धन्ते । अतोऽत्र बलवर्धनेन तत्कारणं स्तुतिकरणं प्रतिपद्यते । ये तव धनदानोत्तरकालं हवींषि वर्धयन्ति स्तुतीश्च कुर्वन्तीत्यर्थः Sk.

**तुभ्येदेते बहुला अद्रिदुग्धाश्चमूषदश्चमसा इन्द्रपानाः ।**
**व्यश्नुहि तर्पया काममेषामथा मनो वसुदेयाय कृष्व ॥९॥**

तुभ्येदेते । तुभ्यम्[१] । एव । एते[२] । बहवः । ग्रावदुग्धाः[३] । चमससादिनः[४] । सोमाः[५] । इन्द्रस्य तव पानार्हास्[६]तानिमान् । व्याप्नुहि[७] । तर्पय चात्मीयम्[८] । कामम् । एतैः[९] । अथात्मनः । मनः[१०] । वसुदानाय[११] कुरु ।

**अपामतिष्ठद्धरुणह्वरं तमोऽन्तर्वृत्रस्य जठरेषु पर्वतः ।**
**अभीमिन्द्रो नद्यो वव्रिणा हिता विश्वा अनुष्ठाः प्रवणेषु जिघ्नते ॥१०॥**

अपामतिष्ठत् । अपाम्[१२] । अतिष्ठत्[१३] । धारकगह्वरयुक्तम्[१४] । तम[१५] इवेत्येतदेवाह । वृत्रासुरस्य[१६] । जठरेषु[१७] मेघोऽतिष्ठदिति[१८] । अभिजिघ्नते[१९] । एनम्[२०] । पर्वतः[२१] । वारकेण[२२] मेघेन । निहिताः[२३] । विश्वाः[२४] । नदीः[२५] । अनुतिष्ठन्[२६] । प्रवणेषु[२७] । इन्द्रोऽभिजिघ्नत[१९] इति द्विकर्मको निष्पेषो हन्तेरर्थः[२८] ।

---

१. तुभ्येति तादर्थ्ये चतुर्थी । त्वदर्थाः Sk. २. एत P. ३. अद्रिभिर्ग्रावभिरभिषुताः Sy. अभिषवग्रावभिः क्षारिताः Sk. ४. चमसोभिनः P. D. चमसोदिनः M. चमूषु चमसेष्ववस्थिताः Sy. अधिषवणफलके अत्र चमूशब्देनोच्येते । . . . तत्सादिनः । अधिषवणफलकयोरभिषुता इत्यर्थः Sk. ५. चमसाः । तात्स्थ्यात्तात्स्थ्य एतत् । चमसस्थाः । के ते ? सामर्थ्यात्सोमाः । अथवा चम्यमानत्वाच्चमसाः सोमा एवोच्यन्ते Sk. ६. इन्द्रस्य पानेन सुखकराः Sy. हे इन्द्र पानाः पानार्हाः सम्यक् संस्कृता इत्यर्थः Sk. ७. विविधमेतानाप्नुहि । पिबेत्यर्थः Sk. ८. एषां त्वदीयानामिन्द्रियाणाम् Sy. ९. एतैर्यावदिच्छमेतान् पिबेत्यर्थः Sk. १०. Omitted by P. ११. धनदानाभिमुखमित्यर्थः . . . धनं मह्यं देहीत्यर्थः Sk. १२. अपामिति षष्ठीनिर्देशान्निरोधायेति वाक्यशेषः । एकवाक्यताप्रसिद्ध्यर्थं च यत्तच्छब्दावध्याहर्तव्यौ । यद् वृष्टिलक्षणानामपां निरोधायातिष्ठत् Sk. १३. ०ष्ठन् M. १४. धरुणशब्दो धारावचनः । धारानिरोधकम् Sy. धरुणमित्युदकनाम । ह्वृ कौटिल्येऽन्यत्र । इह तु सामर्थ्यान्निरोधसामर्थ्ये । उदकस्य ह्वारकम् । निरोधसमर्थमित्यर्थः Sk. १५. मेघलक्षणं तमः Sk. १६. मेघनामैतत् । मेघाख्यस्य तमसोऽन्तः Sk.

१७. उदरप्रदेशेषु . . . मध्ये पर्वतः पर्ववान् मेघोऽभूत् । अतस्तमोरूपेण वृत्रेण मेघस्यावृतत्वाद् वृष्ट्युदकमप्यावृतमित्युच्यते Sy. एकवचनस्य स्थाने बहुवचनम् . . . उदरे Sk. १८. इति omitted by P. लडर्थे लङ् । तिष्ठति Sk. १९. ०जघ्न० P. D. M. हन्तिरत्र गत्यर्थः । सामर्थ्याच्चान्तर्णीतण्यर्थः । छान्दसत्वाच्चैकवचनस्य स्थाने बहुवचनम् । अभिहन्त्यभिगमयति । पातयतीत्यर्थः । अथवा जिघ्नत इति हन्तिर्वधार्थ एव Sk. २०. ईम् एवमित्यस्यार्थे Sk. २१. ०तं M. वज्र इह पर्ववत्त्वात् पर्वतशब्देनोच्यते । . . . साकाङ्क्षत्वाच्चातिष्ठदित्येतदेवाख्यातमनुषक्तव्यम् । अत्रापि वज्रोऽतिष्ठत् । वृष्टिनिरोधायावस्थितस्य मेघस्योदर इन्द्रो वज्रं क्षिपतीत्यर्थः Sk. २२. ०केन M. आवरणशीलेन Sk. २३. पिहिताः Sy. २४. विश्वाः सर्वा बह्वीर्वा Sk. २५. नदनान्नद्य इति व्युत्पत्त्या नदीशब्देनाऽऽप उच्यन्ते Sy. शब्दकारिणीरपः Sk. २६. ननु० P. अनुक्रमेण तिष्ठन्तीः Sy. अनुष्ठाः । अपामिदं विशेषणं द्वितीयाबहुवचनान्तम् । इन्द्रस्य वा प्रथमाबहुवचनान्तम् । तृचादीनामनुष्ठात्रीरपः । अनुपधादीनामनुष्ठातेन्द्रः Sk. २७. निम्नेषु प्रदेशेषु Sk. २८. V. Mādhava ignores अन्तः

स शेवृधमधि धा द्युम्नमस्मे महि क्षत्रं जनाषाळिन्द्र तव्यम् ।
रक्षा च नो मघोनः पाहि सूरीन्राये च नः स्वपत्या इषे धाः ॥११॥

स शेवृधम्[1] । सः । सुखे[1] वर्धमानं सुखकरम् । अन्नम्[2] । अस्मासु[3] । अधिधेहि[4] । महच्च । धनम्[5] । जनस्याभिभवितृ[6] । वृद्धम्[7] । रक्ष । च । अस्मान् । शत्रुभ्यो हविष्मतः[8] । पाहि । स्तोतॄन्[9] । शोभनापत्याय[10] । धनाय[10] । अन्नाय[10] । च[11] । अस्मान् । कुर्वित्यन्नं पुत्रं चाशास्ते[12] ।

I.55.

दिवश्चिदस्य वरिमा वि पप्रथ इन्द्रं न मह्ना पृथिवी चन प्रति ।
भीमस्तुविष्माञ्चर्षणिभ्य आतपः शिशीते वज्रं तेजसे न वंसगः ॥१॥

दिवश्चिदस्य[13] । द्युलोकात्[14] । अपि । इन्द्रस्य[15] । उरुत्वम्[15] । विस्तीर्णमासीत्[16] । इन्द्रम्[17] । न । महत्त्वेव[18] । पृथिवी[19] । अपि[20] । प्रतिभवति । भयङ्करः[21] । वृद्धिमान्[22] । मनुष्यरक्षार्थम्[23] । वज्रम् ।

१. शं शमनम् । रोगाणां शमने सति यद् वर्धते तादृशम् Sy.
शेवशब्दस्य सुखनाम्नोऽयं वकारलोपो द्रष्टव्यः । शेवपर्यायो वा शेशब्दः । सुखस्य वर्धयितृ । . . . अथवा शेवृधमिति सुखनाम । सुखं च Sk.

२. यशः Sy. ३. अस्मभ्यम् Sk.

४. ०देहि M. अधिशब्दः . . . पदपूरणः । दधातिर्दानार्थः । देहि Sk.

५. बलम् Sy. ६. शत्रुजनानाम् Sy. शत्रुजनस्याभिभवितृ Sk.

७. Omitted by P. and D. वृद्धिकरमित्यर्थः Sk.

८. धनवतः कृत्वा Sy. धनवतः Sk.

९. विदुषोऽन्यानपि Sy.

१०. शोभनपुत्रयुक्ताय . . . अन्नाय च . . . स्थापय Sy.
राये च । द्वितीयार्थे सर्वत्रात्र चतुर्थी । धनं च । स्वपत्यै इषे । शोभनापत्ययुक्तं चान्नं धा देह्यस्मदीयेभ्यः स्तोतृभ्यः Sk. ११. ०त्याधययधनान्नाय P.

१२. V. Mādhava ignores इन्द्र । Ms. D. puts the figure ॥५४॥ here to indicate the end of the fiftyfourth hymn. No such number is given in P. and M. १३. ०स्युं M.

१४. दिव इति षष्ठीनिर्देशात् सकाशादिति वाक्यशेषः । द्युलोकस्याप्यस्येन्द्रस्य Sk.

१५. ०स्यारुत्वं P. D.

१६. विविधं प्रथितम् Sk.

१७. प्रति Sk. १८. महत्त्वेन Sy; Sk.

१९. पृथिवी अपि उभे अपि द्यावापृथिव्याविन्द्रान्महत्त्वेन न्यूनतरे इत्यर्थः Sk.

२०. आपि M. २१. शत्रूणाम् Sk.

२२. प्रज्ञावान् बलवान्वा Sy.
तुविशब्दस्य बहुनाम्नोऽयं सकार आगमो द्रष्टव्यः । पर्यायान्तरं वा । बहुभिर्बलैस्तद्वान् Sk.

२३. मनुष्येभ्यः स्तोतृभ्यः Sy.
षष्ठ्यर्थे एषा चतुर्थी । शत्रुभूतानां मनुष्याणाम् Sk.

तीक्ष्णीकरोति[1]। शत्रूणामातापयिता[2]। यथा[3]। ऋषभः[4] शृङ्गे[5]। तैक्ष्ण्यार्थं[6] निश्यति।

**सो अर्णवो न नद्यः समुद्रियः प्रति गृभ्णाति विश्रिता वरीमभिः।**
**इन्द्रः सोमस्य पीतये वृषायते सनात्स युध्म ओजसा पनस्यते ॥२॥**

सो अर्णवः[7]। सः[8]। समुद्रः[9]। इव। समुद्रपत्नीः[10]। नदीः[11]। प्रतिगृह्णाति[12]। विविधं श्रिताः[13] सेनाः। उरुत्वैः[14]। इन्द्रः। सोमस्य। पानाय। वृष इवाचरति। चिरादेवारभ्य[15]। सः। योद्धा। बलमहत्तया[16] स्तोतृभिः। स्तूयते[17]।

**त्वं तमिन्द्र पर्वतं न भोजसे महो नृम्णस्य धर्मणामिरज्यसि।**
**प्र वीर्येण देवतातिं चेकिते विश्वस्मा उग्रः कर्मणे पुरोहितः ॥३॥**

त्वं तमिन्द्र[18]। त्वम्। तम्[19]। इन्द्र! स्तोतारं धनप्रदानेन[20]। मेघम्। इव[21]। मनुष्याणाम्।

---

१. शिशीते निश्यति। वज्रं तेजसे तेजनाय। तीक्ष्णत्वायेत्यर्थः। हिंसावचनो वा सामर्थ्यात् तेजतिः। शत्रूणां हिंसनायेत्यर्थः Sk. २. ०णां मा० D. ०मता० P.

३. According to N. 1.4, the particle न has the sense of negation as well as of comparison in the Vedic literature. But the established use is to place it immediately before that which it makes negative and to place it immediately after that which it compares : उभयमन्वध्यायम् ... पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति...उपरिष्टादुपाचारस्तस्य येनोपमिमीते। The particle *na* should not have here the sense of comparison as it does not follow *Vaṃsagaḥ*. But all the three commentators explain t as a particle of comparison and not of negation.

४. वननीयगमनत्वाद्वंसगो वृषभ उच्यते।... यथा नदीकूलेऽन्यत्र वा वृषभोऽवस्किरमाणः स्वशृङ्गे द्वे निश्येत् तद्वदित्यर्थः Sk.

५. श्रृंगे P. ६. ते० D. ७. सोर्णवः M.

८. य उक्तगुण इन्द्रः सः Sk.

९. अर्णवानुदकवानुच्यते। समुद्रिय इति घप्रत्ययः स्वार्थे द्रष्टव्यः। समुद्र एव समुद्रियः। यथोदकवान् पार्थिवः समुद्रो नदीं तद्वत् Sk. १०. ०प्रातिनीः M.

११. शब्दकारिणीः वृत्रेणावृता आपः Sy.

१२. ०ह्लाति D. M. स्वीकृत्य ववर्षेति भावःSy. किम् ? सामर्थ्यात् स्तुतीः Sk.

१३. व्याप्ताः Sy. १४. यद्वा सनातनः Sy.

१५. स्वकीयैः संवरणैर्यद्वा उरुत्वैः Sy. वरणैः। विविधं वरणीया इत्यर्थः Sk.

१६. बलकृतेन वृत्रवधादिरूपेण कर्मणा Sy. स्वेनैव बलेन। परमनाश्रित्येत्यर्थः Sk.

१७. स्तोत्रमिच्छति Sy. १८. त्विन्द्र M.

१९. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यं स्तोतार इच्छन्ति त्वं तम् Sk. २०. भोजनाय... पर्ववन्तं मेघं नाकार्षीः। नहि हतो भुङ्क्ते Sy.

२१. नशब्दः... पदपूरणः Sk.

भोगाय।[1] करोषि त्वम्।[2] महतः।[3] धनस्य।[4] धारकाणां कर्मणाम्।[5] ईशिषे सोऽयमिन्द्रः। देवतासु।[6]
वीर्येण। अति प्रचेकिते।[7] विश्वस्मै।[8] कर्मणेऽयम्। उद्गूर्णो यजमानैः।[9] पुरो निधीयते।[10]

**स इद्वने नमस्युभिर्वचस्यते चारु जनेषु प्रब्रुवाण इन्द्रियम्।**
**वृषा छन्दुर्भवति हर्यतो वृषा क्षेमेण धेनां मघवा यदिन्वति ॥४॥**

स इद्वने।[11] सः। एव। अरण्ये।[12] नमस्युभिः।[13] स्तूयते जनपदेऽपि।[14] शोभनम्। इन्द्रियम्।[15]
जनेषु।[16] प्रब्रुवाणः प्रकाशयन्निवाब्रुवाण एव।[17] वर्षिता। उपच्छन्दयिता।[18] भवति।[19] इच्छतः।[20] वर्षिता।
क्षेमं कुर्वन्[21] यजमानानाम्। मघवा। यदि।[22] स्तुतिवचनम्।[23] प्राप्नोति।[24]

---

१. भोजनाय Sk.
२. यं स्तोतार इच्छन्ति तं मेघं वृष्टिप्रदानेन तेषां भोग्यं करोषीत्यर्थः। अथवा पर्वत इह शिलोच्चय एवाभिप्रेतः। उपमार्थीय एव च नशब्दः। तमिति तु शत्रोर्मेघस्य वा प्रतिनिर्देशः। यं स्तोतार इच्छन्ति तं शत्रुं मेघं वा पर्वतमिव फलादिना तेषां भोग्यं करोषीत्यर्थः Sk.
३. अतः P.
४. बलस्य Sk.
५. कुबेरादीनाम् Sy.
मरुत्प्रभृतीनाम् Sk.
६. ०ताः सु M.
वीर्येण देवतात्वेन च युक्तः Sk.
७. ०चेकिरे P. ०चेतिते D.
सुष्ठु प्रज्ञायते। वीर्यवान्देवश्च नेन्द्रसदृशोऽपरोऽस्तीत्येवं सुष्ठु प्रज्ञायत इत्यर्थः। अथवा देवतेति प्रथमैवैषा। इन्द्राख्या देवता वीर्यवतीत्येवं सुष्ठु प्रज्ञायते इत्यर्थः Sk.
८. विश्वशब्दः सर्वपर्यायो बहुनाम वा। सर्वस्य बहुनो वा Sk.
वृत्रवधादेः कर्मणोऽर्थाय Sk.
९. ०णे युष्मद्गूर्णो M.
अप्रसह्यः Sk.
१०. अग्रतः कृतः। सर्वाणि बहूनि वा वृत्रवधादीनि कर्माणि कर्तुः प्रधानीकृत इत्यर्थः। केन? सामर्थ्याद्देवैः Sk.
११. इद्यग्ने M.
१२. वननीये यज्ञे Sk.
१३. पूजयितृभिः Sk.
१४. यद्वा वचः स्तोत्रमात्मन इच्छति Sy.
१५. इन्द्रं P.D. वीर्यमात्मीयम् Sk.
१६. तैस्तैर्वृत्रवधादिभिर्वीरकर्मभिः प्रब्रुवन्निव Sk.
१७. ०यन्नेवा० P.
१८. स्तुत्यः। अथवा . . . छन्दतिः कान्त्यर्थः। कामयिता हविषां स्तुतीनां वा भवति Sk.
१९. भवतीच्छया P. भवच्छतः M.
कामयमानस्य यजमानस्य Sk.
२०. यष्टृणामर्थाय वर्षतीत्यर्थः Sk.
२१. एवम्भूतो यजमानः क्षेमेणेन्द्रकृतेन रक्षणेन युक्तः सन् . . . प्रेरयति। यद्वा मघवा वृषा इन्द्रः क्षेमेण . . . मनसा . . . यजमानैः कृतां स्तुतिं . . . व्याप्नोति Sy.
क्षेमेणाविघ्नेन Sk.
२२. यदा Sk.
२३. 'धेट् पाने' इत्यस्य धेनाऽऽहुतिरुच्यते स्तुतिर्वा। ताम् Sk.
२४. व्याप्नोति। यदा इज्यते स्तूयते वेत्यर्थः Sk.

**स इन्महानि समिथानि मज्मना कृणोति युध्म ओजसा जनेभ्यः ।**
**अधा चन श्रद्दधति त्विषीमत इन्द्राय वज्रं निघनिघ्नते वधम् ॥५॥**

स इन्महानि[1]। सः। एव। महतः[2]। सङ्ग्रामान्[3]। बलेन[4]। करोति[5]। योद्धा। बलेन। जनार्थं यदाऽयम्[6]। शत्रुषु[7] हन्तारं वज्रम्[8]। निहन्ति[9]। अथास्मै[10]। दीप्तिमते[11]। इन्द्राय। श्रद्दधते[12] सत्यमसौ बलवानिति[13]।

**स हि श्रवस्युः सदनानि कृत्रिमा क्ष्मया वृधान ओजसा विनाशयन् ।**
**ज्योतींषि कृण्वन्नवृकाणि यज्यवेऽव सुक्रतुः सर्तवा अपः सृजत् ॥६॥**

स हि श्रवस्युः। सः। हि[14]। अन्नमिच्छन्[15]। असुरपुराणि[16]। कृत्रिमाणि। ओजसा। विनाशयन्[17]। भोगसाधनभूतया[18] पृथिव्या[19]। वर्धमानः। ज्योतींषि[20]। कृण्वन्। स्तेनवर्जितानि[21]। यजमानाय[22]। अवसृजति[23]। सरणाय[24]। उदकानि[25]।

---

१. इं म० M. ०हंसि २. यद्वा मह्यन्ते पूज्यन्त इति महानि प्रवृद्धानि Sy. वृत्रादिभिः सह Sk. ३. ०मात् P.D.
४. P. adds योद्धा before बलेन सर्वस्य शोषकेन Sy. सेनाख्येन Sk.
५. भूतेऽयं लट्। कृतवान् Sk.
६. अयं omitted by P.
७. मेघेषु Sy. वधं हननार्हम् Sk.
८. तृतीयार्थे द्वितीयैषा। वज्रेण Sk.
९. ०हति P. अत्यर्थं निघ्नता Sk.
१०. अधशब्द एतस्मादित्यस्यार्थे द्रष्टव्यः। . . . एतस्मादेव कारणात् Sk.
११. षष्ठ्यर्थे चतुर्थ्येषा। दीप्तिमत इन्द्रस्य Sk. १२. ०धे P.
सत्यतया प्रतिपद्यन्ते। . . .अस्माकं मनुष्याणामर्थाय वृत्रादिभिः सह महतः सङ्ग्रामान् कृतवान्। तस्मादन्यमपि वधार्हं वज्रेण जिघांसत इन्द्रस्य निःसंशयमयं हन्तीत्येवं श्रद्दधतीति समस्तार्थः Sk.
१३. V. Mādhava ignores चन।
१४. हिशब्दः पदपूरणः Sk. १५. यशो वाऽऽत्मन इच्छन् Sy. हविरिच्छन्नित्यर्थः Sk. १६. दुर्भिक्षनिमित्तकानां रक्षःपिशाचादीनां सदनानि स्थानानि Sk.
१७. पिना० M. दुर्भिक्षनिमित्तरक्षःपिशाचादिस्थानविनाशार्थमित्यर्थः Sk.
१८. ०सन्धान० M. १९. यद्वा क्ष्मयेत्योजोविशेषणम्। शत्रूणामभिभवित्रा बलेनेत्यर्थः Sy. समस्तया पृथिव्या. . .। यावन्तः केचन पृथिव्यां यष्टारस्तैः सर्वैः स्तुतिभिः हविर्भिश्च वर्धमान इत्यर्थः Sk.
२०. ०तिषि P. D. ऐश्वर्यलक्षणानि।. . . ऐश्वर्याणि च कर्तुमित्यर्थः Sk.
२१. ०ण्वंस्ते M. वृकेणावरकेण तेन रहितानि Sy. आदातृवर्जितानि। अनपहार्याणीत्यर्थः Sk.
२२. यष्टृणामर्थाय। यष्टॄन् वाऽनपहार्यैरैश्वर्यैरीश्वरान् कर्तुमित्यर्थः Sk.
२३. वृष्टिलक्षणा अपः. . . अधः क्षिपति। पातयति वर्षतीत्यर्थः Sk.
२४. पृथिवीं प्रति गमनाय Sk.
२५. V. Mādhava ignores सुक्रतुः

दानाय मनः सोमपावन्नस्तु तेऽर्वाञ्चा हरी वन्दनश्रुदा कृधि ।
यमिष्ठासः सारथयो य इन्द्र ते न त्वा केता आ दभ्नुवन्ति भूर्णयः ॥७॥

**दानाय मनः ।** दानाय[1] । मनः । सोमस्य[2] पातः ! अस्तु । तव । अस्मदभिमुखौ । अश्वौ । स्तुतीनां श्रोतः ! आकृणुष्व[3] । यन्तृतमाः । सारथयः[4] । ये[5] भवन्ति । इन्द्र ! त्वदीयाः[6] । न । त्वां शत्रूणाम् । अभिमननानि[7] । भ्रमणशीलानि[8] । आदभ्नुवन्ति[9] ।

अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे ।
आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इन्द्र भूरयः ॥८॥

**अप्रक्षितम् ।** अप्रक्षीणम् । धनम् । बिभर्षि[10] । हस्तयोरनभिभूतम् । बलम् । शरीरे । विश्रुत[11] इन्द्रः । धारयति[12] । यथा । उदकोद्धरणपरैः[13] । कूपाः । परिवृता[14] भवन्त्येवम् । तव । अङ्गेषु[15] तानि तानि । बहूनि । कर्माणि[16] परिवृतानि[17] । अत्र ताण्ड्यकम्[18] —

"सर्वाणि भूतान्यस्तुवन्[19]तस्यैक[20]मङ्ग[21]मस्तुतमचायदिति ।"[22]

---

१. अस्मान् प्रति दानाय Sk. २. सोमपावस्य P. ३. करोतिरत्रान्तर्णीतण्यर्थः । मर्यादया कारय Sk. ४. सयः M.
५. यच्छब्दश्रुतेस्तैरिति वाक्यशेषः Sk.
६. त्वदी M. ७. ज्ञातारोऽप्यसुराः Sk.
८. प्रातिकूल्यज्ञातारः । . . . स्वकीयाऽऽयुधादीनां भर्तारः । यद्वा भीतास्तीक्ष्णाः शत्रवः Sy. भूर्णयो भ्रमणशीलाः Sk.
९. अभिभवन्ति P. आदभवन्ति M. हिंसन्ति . . . यस्माज्जानन्तोऽप्यनवस्थायिनोऽपि च सन्तोऽसुरा न त्वामागच्छन्तो हिंसितुं शक्नुवन्ति तस्मादागमनार्थमर्वाञ्चा हरी कारयेत्यर्थः Sk.
१०. अक्षयं धनं तवास्तीत्यर्थः Sk.
११. पिश्रूतः P. १२. दधे । व्यत्ययेनायमुत्तमपुरुषः । धारयसि । स्वशरीरेण चानभिभूतपूर्वबलयुक्तोऽसीत्यर्थः Sk.
१३. ०कोन्ध० M. १४. किञ्चावृतासः परिवृताः । के ? सामर्थ्यात् त्वदर्थाः सोमाः । कथम् ? अवतासोनकूपाइवोदकार्थिभिः । केन परिवृताः ? उच्यते । कर्तृभिः । . . . त्वदर्थान् संस्कृतान् सोमान् परिवृता ऋत्विजस्त्वत्प्रतीक्षा आसते इत्यर्थः Sk.
१५. शरीरेषु . . . विद्यन्ते Sy. किञ्च तनूषु । व्यत्ययेनेदं बहुवचनम् । शरीरे ते Sk. १६. क्रतवः प्रज्ञाः कर्माणि वा । . . . स्वशरीरेण च त्वं बहुप्रज्ञो बहुवृत्रवधादिकर्मयुक्तो वेत्यर्थः Sk.
१७. कर्माणि परिवृतानि omitted by P. त्वदीयास्तनवः कर्तृभिर्वृत्रादेरसुरस्य वधं कुर्वद्भिर्बलकृतैः कर्मभिरावृतास आवृताः । बलकृतानि सर्वाणि कर्माण्येतस्य शरीरमावृत्यावतिष्ठन्ते Sy.
१८. ताण्डकम् P. D. १९. भूतान्यस्तुवन् missing in M. ०निस्तु० P.
२०. ०स्यए० P.D. २१. ०कमागमःस्तु० P.
२२. Ms. D. puts the figure ॥५५॥ here to indicate the end of the fiftyfifth hymn. No such number is given in P. and M.

I.56.

**एष प्र पूर्वीरव तस्य चम्रिषोऽत्यो न योषामुदयंस्त भुर्वणिः ।
दक्षं महे पाययते हिरण्ययं रथमावृत्या हरियोगमृभ्वसम् ॥१॥**

एष प्र पूर्वीः । अयम् । तस्य यजमानस्य । प्रोद्यच्छति[1] । अवस्थितानि[2] चमसादीनि[3] । बहूनि । अन्नानि । अश्वः[4] । यथा । अश्वां[5] मैथुनायाधः स्थितां दृढां[6] परिगृह्योद्यच्छति[7] । भुर्वणिरत्ता[8] भुर्वतेरत्ति-[9] कर्मणः । प्रवृद्धं[10] सोममात्मानम् । पाययते । महते वृत्रहननकर्मणे[11] । हिरण्मयम्[12] । रथम् । आवृत्य । हरिभ्यां युक्तम्[13] । दीप्तम् ।

**तं गूर्तयो नेमन्निषः परीणसः समुद्रं न संचरणे सनिष्यवः ।
पतिं दक्षस्य विदथस्य नू सहो गिरिं न वेना अधि रोह तेजसा ॥२॥**

तं गूर्तयः[14] । तं त्वाम्[15] । उद्युक्ताः । गमनमिच्छन्तो[16] मनुष्याः । सन्नद्धाः[17] प्रतीक्षन्ते । समुद्रम् । इव । सञ्चरणकाले द्वीपान्तराद्धनमिच्छन्तो वणिजः[18] । पतिम् । बलस्य । यज्ञस्य च ।

---

१. प्रकर्षेण पानार्थमुद्धरति Sy. प्रशब्दः . . . पाययत इत्याख्यातेन सम्बन्धयितव्यः Sk.

२. ०च्छद्यव० P. M. अवेत्युपसर्ग उदयंस्तेत्याख्यातेन सम्बन्धयितव्यः । . . . अव उदयंस्त । उदित्येष नीत्येतस्य स्थाने । अवन्ययंस्त । अधो नियच्छत्यात्मनः । किम् ? अनिर्देशात् कृत्स्नं जगत् Sk.

३. I should like to suggest चमसादिषु for चमसादीनि । चमूषु चमसेष्ववस्थिताः सोमलक्षणा इषः Sy. चम्रिषः । चम्यन्ते इति चम्रिषः सोमा इहाभिप्रेताः । पूर्वस्मिस्तावत्काले ये सोमास्ते तस्येत्यर्थः Sk.

४. न्यश्वः D. M. यश्वः P.

५. ०श्वा P. D. ०त्वा M.

६. ०तानूढां D.

७. ०न्ति D. M. ०न्ती P.

८. भूभुर्वणिरत्तं P. भूभुर्व० D. भूवणिरक्ता च M. भुर्वतिरत्तिकर्मा N. 9. 23. सोमभक्षणशीलाः Sk.

९. पर्वतेरक्तिक० M.

१०. प्रसिद्धं M.

११. सङ्ग्रामाय Sk.

१२. सोमम् । किं पुनः सोमहिरण्मययोः सादृश्यम् ? उज्ज्वलत्वं प्रियता वा Sk.

१३. ०क्त M.

१४. त P. D. M.

१५. स्तोतारः Sy.

१६. नमस्कारपूर्वं गच्छन्तः । यद्वा नीतहविष्काः Sy.

१७. परितो व्याप्नुवन्तः । . . . यजमानास्तमिन्द्रं स्तुतिभिरधिरोहन्ति स्तुवत इत्यर्थः Sy.

१८. यथा नावा समुद्रमधिरोहन्ति Sy.

क्षिप्रम्[1]। बलं[2] त्वमिन्द्र[3] ! गिरिम्। इव। कान्तः[4] सिंहः[5]। तेजसा युक्तः[6]। अधितिष्ठ[7]।

**स तुर्वणिर्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः।**
**येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि ॥३॥**

**स तुर्वणिः**[8]। सः। क्षिप्रः[9]। महांश्च तस्य। वीरकर्मणि[10]। रेणुवर्जितं[11] शुद्धं[12] बलम्। शिलोच्चयस्य। सानुः। इव पृथग्भूतं विस्पष्टम्। राजते शत्रूणाम्। हिंसया[13]। बलं प्रकाशं भवति। येन शवसा। शुष्णमसुरम्[14]। मायाविनम्। दृढशरीर[15] इन्द्रः। सोममदे[16]। दुर्धरः[17]। आत्मीयदेशेषु[18]। कारागृहे निगले[19]। अत्यन्तम्। रमयत्[20]।

**देवी यदि तविषी त्वावृधोतय इन्द्रं सिषक्त्युषसं न सूर्यः।**
**यो धृष्णुना शवसा बाधते तम इयर्ति रेणुं बृहदर्हरिष्वणिः ॥४॥**

**देवी[21] यदि तविषी[22]।** देवम्[23]। यदि। बलम्। त्वां वर्धयत्[24] तव। रक्षणार्थम्। इन्द्रम्। सेवते[25]।

---

१. ०प्तं M. २. बल M. बलवन्तम् Sy. ३. हे स्तोतः Sy.
४. I propose to read कान्ताः। सहस्तेजसा युक्तः। for कान्तः सिंहः etc. Ed.
५. कान्ताः स्त्रियः।...यथा पर्वतं स्वाभिमतपुष्पोपचयार्थमधिरोहन्ति Sy.
६. The passage beginning with मनुष्याः and ending with युक्तः is omitted by P.
७. ०ष्ठः M. स्तुहीति यावत् Sy.
८. स तुर्वणिः omitted by P. तुर्वणिस्तूर्णवनिः N. 6. 14.
९. ०प्तः M. शत्रूणां हिंसिता क्षिप्रकारी वा Sy.
१०. वीरैः पुरुषैः कर्तव्ये सङ्ग्रामे Sy.
११. अनवद्यम् Sy.
१२. ०द्ध D.
१३. ०सा० P. D. M. हिंसकम्Sy.
१४. सर्वस्य शोषकमसुरम् Sy.
१५. अयोमयकवचयुक्तदेहः Sy.
१६. सोमपानेन हर्षे सति Sy.
१७. दुष्टानां शत्रूणां धर्तावस्थापयिता Sy.
१८. कारागृहेषु Sy.
१९. I propose to read निगडे for निगले Ed.
२०. ०तमरमयन् P. D. The reading in the text is रामयत् which becomes रमयत् in the pada-text. V. M. seems to repeat the reading of the text, without explaining it. The correct classical reading should be अरमयत्. न्यवासयत् Sy.
२१. देवि P. २२. ०षीः M.
२३. द्योतमानम् Sy.
२४. त्वया स्तोत्रा वर्धितम् Sy.
२५. सोमवतत्र P. समवैति Sy.

उषसम् । इव । सूर्यः । य इन्द्रः । धृष्णुना । बलेन सङ्ग्रामस्थम् । तमः[1] । बाधते स[2] इन्द्रः स्तोतः ! त्वदर्थं सङ्ग्राममागत्य । महत् । रेणुम्[3] । उत्थापयति[4] । शत्रूणां हरणशीलस्वनः[5] ।

वि यत्तिरो धरुणमच्युतं रजोऽतिष्ठिपो दिव आतासु बर्हणा ।
स्वर्मीळ्हे यन्मद इन्द्र हर्ष्याहन्वृत्रं निरपामौब्जो अर्णवम् ॥५॥

वि यत्तिरः[6] । वृत्रं हत्वाऽपोऽवासृज इति समुदायार्थः । यदा त्वम्[7] । तिरो[8] भूत्वा[9] जगतः । धारकम् । अक्षीणम् । उदकम् । अन्तरिक्षात् । दिक्षु । विविधं स्थापितवानसि । परिबर्हणया[10] मेघस्य । यदा च । उदकार्थे सङ्ग्रामे[11] सोमस्य मदे सति । हृष्टया बुद्ध्या[12] वृत्रमसुरम् । हतवानसि तदा त्वम् । अपां पूर्णम् । अर्णवं मेघमधः स्थितं रश्मिभिः । हतवानसि[13] । अर्ण इत्युदकनाम तद्यस्यास्तीति सोऽर्णव इति[14] ।

त्वं दिवो धरुणं धिष ओजसा पृथिव्या इन्द्र सदनेषु माहिनः ।
त्वं सुतस्य मदे अरिणा अपो वि वृत्रस्य समया पाष्यारुजः ॥६॥

त्वं दिवः । त्वम् । दिवः[15] । उदकम्[16] । प्रयच्छसि[17] । बलेन । पृथिव्याः । इन्द्र ! तेषु तेषु । स्थानेषु । महान्[18] । त्वम् । सोमस्य । मदे । गमयसि[19] । अपस्तथा[20] त्वं वृत्रशरीरेण[21] । तुल्यया । शिलया[22] । वृत्रम् । व्यारुजो हिंसार्थयोगे कर्मणि षष्ठी दृष्टेति स्तुतिमात्रमेव भवति सूक्तेनाशीः[23] ।

---

१. ०म P. २. Omitted by P.
३. रेषणं हिंसनम् Sy.
४. शत्रून् गमयति Sy.
५. गच्छन्तो हरन्तीत्यर्हरयः शत्रवः । तेषां व्यथोत्पादनेन स्वनयिता शब्दयितेन्द्रः Sy. ६. यि० P.
७. ०यात्ते M.
८. तरितो P. D. M. वृत्रेण तिरोहितम् Sy.
९. भूतः P. D.
१०. हन्ता Sy.
११. मीळ्हमिति धननाम । स्वः । सुष्ठु गन्तव्यं मीळ्हं धनं यस्मिन् तस्मिन् सङ्ग्रामे Sy. १२. शक्त्या Sy.
१३. वर्षणाभिमुखमधोमुखमकार्षीः Sy.
१४. V. Mādhava ignores इन्द्र
१५. दिव M. १६. देवकं M. सर्वस्य जगतो धारकं वृष्टिजलम् Sy.
१७. स्थापयसि Sy. १८. प्रवृद्धः Sy.
१९. मेघान्निरगमयः Sy.
२०. ०यन्यवस्त० M.
२१. पुत्र० M. धृष्टया Sy.
२२. शी० M. यद्वा शक्त्या Sy.
२३. Ms. D. puts the figure ॥५६॥ here to indicate the end of the fiftysixth hymn. No such number is given in P. and M.

## I.57.

**प्र मंहिष्ठाय बृहते बृहद्रये सत्यशुष्माय तवसे मतिं भरे ।**
**अपामिव प्रवणे यस्य दुर्धरं राधो विश्वायु शवसे अपावृतम् ॥१॥**

**प्र मंहिष्ठाय** । दातृतमाय । महते । महाधनाय । सत्यबलाय । वृद्धाय[1] । स्तुतिम् । प्रभरामि । येन[2] स्तोतृणां प्रदीयमानं धनं स्तोतृभिः । दुर्धरं[3] भवति । अपामिव वेगात्[4] । प्रवणाभिमुखः[5] । सर्वगामि[6] । धनं स्तोतृणाम् । बलाय । विवृतद्वारम् ।

**अध ते विश्वमनु हासदिष्टय आपो निम्नेव सवना हविष्मतः ।**
**यत्पर्वते न समशीत हर्यत इन्द्रस्य वज्रः श्नथिता हिरण्ययः ॥२॥**

**अध[7] ते विश्वम्** । सर्वमिदं जगत् । अनन्तरम्[8] । एव । क्रमेण तव । यागाय । अभवत्[9] तथा । यजमानस्य । सवनानि[10] च त्वामेव । आपः । निम्नानीवाभिगच्छन्ति[11] । यदा । इन्द्रस्य । विवरणस्य[12] कर्ता । हिरण्मयः । वज्रः[13] । शिलोच्चये[14] । न । समशीत[15] सहायस्थानं[16] नाकरोत् । भित्त्वा निर्गत इत्यर्थः । 'प्रेप्साकर्मा[17] हर्यतिः'[18] कामयमानस्य[19] शिलोच्चयेन[20] भेदमिति[21] ।

**अस्मै भीमाय नमसा समध्वर उषो न शुभ्र आ भरा पनीयसे ।**
**यस्य धाम श्रवसे नामेन्द्रियं ज्योतिरकारि हरितो नायसे ॥३॥**

**अस्मै भीमाय** । उषः ! शुभ्रे ! अस्मै । भीमायेन्द्रायास्मान् । यज्ञे । अन्नेन[22] । संसृज[23]

---

१. आकारतः प्रवृद्धाय Sy.
२. यस्येन्द्रस्य बलम् Sy.
३. दुद्धरं D. दुर्धरमन्यैर्धर्तुमशक्यम् Sy.
४. वेगा M. यथा जलानां वेगः केनाप्यवस्थापयितुं न शक्यते तद्वत् Sy.
५. निम्नप्रदेशे Sy. ६. सर्वेषु व्याप्तम् Sy.
७. अथ M. ८. ०न्तम् M.
९. अन्वभवत् । यद्वा इष्टये हविरादिभिस्तव प्राप्तये इति योज्यम् Sy.
१०. यज्ञजातानि Sy.
११. निम्नानि भूस्थलान्याप इव त्वाम् Sy.
१२. विविर० P. श्नथिता शत्रूणां हिंसनशीलः ।....अप्रतिहतः सन् Sy. ...
१३. ०ज्र P.
१४. पर्वते पर्ववति शिलोच्चये वृत्रे वा Sy.
१५. सहशी० M. संसुप्तो नाभवत् । किन्तु जागरितः सन्नवधीदित्यर्थः Sy.
१६. सहावस्थानं is suggested, Ed.
१७. प्रेस्वाक० P. १८. Cf. N. 7. 17.
१९. हर्यतः शत्रुवधं प्रेप्सत इन्द्रस्य...यद्वा हर्यतः शोभनः Sy.
२०. I propose to read शिलोच्चयस्य for शिलोच्चयेन Ed.
२१. भेदतमि० P.
२२. यज्ञन्नेन P. हविर्लक्षणमन्नम् Sy.
२३. सम्यक् सम्पादय Sy.

व्युष्टा सती। स्तुत्यतमाय। सम्प्रत्यर्थीयो[1] नकारः। यस्येन्द्रस्य। शरीरम्[2]। नाम[3] च। श्रवणाय[4]। अकारि बलं[5] च[6]। ज्योतिश्च कृतम्। गमनाय। यथा। अश्वा[7] गच्छन्ति तद्वदिति[8]।

**इमे तँ इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो।**
**नहि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति नो हर्य तद्वचः॥४॥**

इमे त इन्द्र। ते[9]। इमे। वयम्। इन्द्र! तव स्वभूताः। बहुभिः स्तुत! ये। त्वाम्। आरभ्य। चरामः। बहुधन[10]! नहि[11]। त्वत्तः। अन्यः। गीर्भिर्वननीय[12]! स्तोतणाम्। स्तोत्राणि। सहते[13] नहि दरिद्रः स्तोत्राणि सोढुं शक्नोति। पृथिवीव सर्वद्रव्याणि[14]। अस्माकम्। स्तुतीः। प्रतिकामय[15]।

**भूरि त इन्द्र वीर्यं तव स्मस्यस्य स्तोतुर्मघवन्काममा पृण।**
**अनु ते द्यौर्बृहती वीर्यं मम इयं च ते पृथिवी नेम ओजसे॥५॥**

भूरि त इन्द्र। बहु[16]। ते। इन्द्र! वीर्यम्[17]। तव वयम्। स्मस्त्वम्[18]। अस्य सर्वस्य[19]। स्तोतुः। मघवन्! आपूरय। कामम् इन्द्र! अनुममे[20]। बृहती[21]। द्यौः। तव। वीर्यं त्वदीयाद् वीर्याद्धीना[22]

---

१. ०त्यर्थितः M.
२. सर्वस्य धारकम् Sy.
३. स्तोतृषु नमनशीलं प्रसिद्धम् Sy.
४. अन्नाय हविर्लक्षणान्नलाभार्थम् Sy.
५. लं P. इन्द्रत्वस्य परमैश्वर्यस्य लिङ्गं यस्येन्द्रस्यैवंविधम् Sy.
६. Omitted by M.
७. यथाऽश्वान्सादिनः स्वाभिलषितदेशं गमयन्ति तद्वदिन्द्रोऽपि स्वाभिमतहविर्लाभाय स्वकीयं तेजो गमयतीति भावः Sy.
८. V. Mādhava seems to ignore आ. It is however quite possible that he interprets आभर by संसृज
९. तं D. M.
१०. ०नं M.
११. निहि P.
१२. ०नीयः M.
१३. प्राप्नोति Sy.
१४. समुद्र० P. स्वकीयानि भूतजातानि Sy.
१५. V. Mādhava ignores तत्।
१६. हु P.
१७. न केनाप्यवच्छेत्तुं शक्यते Sy.
१८. स्म त्वम् M. स्वभूता भवामः Sy.
१९. सेव्यस्य P. सव्यस्य M.
२०. अन्वमंस्त...प्रह्वीबभूव Sy.
२१. बृहस्पती P. D. महान् द्युलोकः Sy.
२२. विद्धीना P. ०द्धिना D. I propose to read वीर्याद्भीता for वीर्याद्धीना Ed.

मीयते[१]। इयम्। च। ते। पृथिवी तव[२]। ओजसे[३]। अर्द्धे भवति इदं[४] भूयान्[५] न वेति सन्देहे ओजसेऽर्द्धे भवत्योजस्तु[६] पूर्णमेवेति।

**त्वं तमिन्द्र पर्वतं महामुरुं वज्रेण वज्रिन्पर्वशश्चकर्तिथ।**
**अवासृजो निवृताः सर्तवा अपः सत्रा विश्वं दधिषे केवलं सहः ॥६॥**

**त्वं तमिन्द्र।** पूर्वोक्तस्य समर्थनम्—

त्वम्। तम्। इन्द्र[७]! मेघम्[८]। महान्तम्। विस्तीर्णम्। वज्रेण। वज्रिन्! पर्वशः। शकलीकृतवानस्यथ। अवासृजश्च। निरुद्धाः[९]। अपः। सरणाय। सत्यमेव। व्याप्तम्। धारयसि। असाधारणम्। बलमिति सर्वानुक्तान् कामान् आशास्ते सूक्तेनेति।[१०]

I.58.

**नू चित्सहोजा अमृतो नि तुन्दते होता यद्दूतो अभवद्विवस्वतः।**
**वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति ॥१॥**

**नू[११] चित्[१२] सहोजाः।** नोधा आङ्गिरसः—

क्षिप्रम्। एव। मथनेन[१३] जातः। मरणवर्जितः। निश्चलति[१४]। होता[१५]। यदा। दूतः[१६]। भवति। यजमानस्य[१७]। साधुतमैः रक्षोभिरनुपहतैः। मार्गैः। अन्तरिक्षम्। परिच्छिनत्ति[१८]। परिचरति। यज्ञे। हविषा[१९] देवानिति।

---

१. मियते P. M. त्वद्बलाद् भीता सत्यध एव वर्तंत इति भावः Sy.
२. व P. D.
३. ओजसे बलाय Sy.
४. भवीवं P.
५. भूया इदाण्यमिति P. भूयां इदाण्यमिति D. भूयामिदाण्यमिति M.
६. ०ति आ० D.
७. इन्द्रं P. M.
८. वृत्रासुरं वा Sy.
९. आवृताः Sy.
१०. Ms. D. puts the figure ॥५७॥ here to indicate the end of the fiftyseventh hymn. No such number is given in P. and M.
११. आ M.
१२. वित् M.
१३. गमनेन P. बलेन जातः Sy.
१४. ०तानि चल० P. D. M. नितरां व्यथयति। उत्पन्नमात्रस्याग्नेः स्प्रष्टुमशक्यत्वात्। यद्वा निर्गच्छति। तुन्दतिर्गत्यर्थः सौत्रो धातुः Sy.
१५. देवानामाह्वाता होमनिष्पादको वा Sy.
१६. सुतः P.D. सूतः M. देवान् प्रति हविर्वहनाय दूतः Sy.
१७. परिचरतो यजमानस्य Sy.
१८. निर्ममे। पूर्वं विद्यमानमप्यन्तरिक्षमसत्कल्पमभूत्। इदानीं तस्य तेजसा प्रकाशमानं सद् उत्पन्नमिव दृश्यते Sy.
१९. हविषा चरुपुरोडाशादिलक्षणेन Sy.

**आ स्वमद्म युवमानो अजरस्तृष्वविष्यन्नतसेषु तिष्ठति ।**
**अत्यो न पृष्ठं प्रुषितस्य रोचते दिवो न सानु स्तनयन्नचिक्रदत् ॥२॥**

आ स्वमद्म[१]। आतिष्ठति। स्वम्। अन्नं तृणगुल्मादिकमात्मना[२]। सम्मिश्रयन्[३]। अजरः। क्षिप्रं सर्वम्[४]। भक्षयन्। काशेषु वनस्थैः काष्ठैः[५]। उक्षितस्याग्नेः[६]। पृष्ठम्। अश्वः। इव। रोचत-इतस्ततः शीघ्रगमनात् तथाऽसौ। स्तनयन्। दिवः। सानुं[७] मेघः[८]। इव[८]। शब्दं करोति।

**क्राणा रुद्रेभिर्वसुभिः पुरोहितो होता निषत्तो रयिषाळमर्त्यः ।**
**रथो न विक्ष्वृञ्जसान आयुषु व्यानुषग्वार्या देव ऋण्वति ॥३॥**

क्राणा रुद्रेभिः[९]। कुर्वाणः[१०]। रुद्रादिभिः[११]। पुरो निहितः। होता[१२] यज्ञे। निषण्णः[१३]। शत्रुधनानामभिभविता। अमर्त्यः[१४]। रथः। इवान्नार्थम्[१५]। मनुष्येष्वाघारादिभिः[१६][१७]। प्रसाध्यमानः[१८]। प्रक्षिपति[१९]। अनुषक्तम्[२०]। धनानि[२१]। देवः[२२]।

**वि वातजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः ।**
**तृषु यदग्ने वनिनो वृषायसे कृष्णं त एम रुशदूर्मे अजर ॥४॥**

वि वातजूतः। वितिष्ठते[२३]। वातप्रेरितः। अतसेषु[२४]। अनायासेन। हूयमानैः[२५] काष्ठैः। ज्वाला-

---

१. ०मद्य M. २. ०गुन्मा० P. D.
३. स्वकीयज्वालया Sy. ४. सर्व M.
५. प्रभूतेषु काष्ठेषु Sy. ६. दग्धुमितस्ततः प्रवृत्तस्याग्नेः Sy. ७. सानुः P.D.M.
८ V.M. explains न in the sense of इव but as it precedes सानु it should be construed as a negative particle, cf. N. 1. 4. See footnote no. ३ on P. 277. गम्भीरं शब्दमात्मानमचीकरत् Sy.
९. काणा D.
१०. हविर्वहनं कुर्वाणः Sy.
११. रुद्रैर्वसुभिश्च Sy.
१२. देवानामाह्वाता Sy.
१३. हविःस्वीकरणाय देवयजने निषण्णः Sy.
१४. मरणरहितः Sy.
१५. इवानोर्थं P. D. M.
१६. यजमानलक्षणेषु मनुष्येषु Sy.
१७. ०घातादि० P. १८. स्तूयमानः Sy.
१९. विशेषेण प्रापयति Sy.
२०. आनुषक्तं यथा भवति तथा Sy.
२१. ०नादि P. सम्भजनीयानि धनानि। ...यद्वा... वरणीयानि हवींषि स्वयं प्राप्नोति Sy.
२२. Missing in M.
२३. वि वातजूतः। वि missing in M. विशेषेण तिष्ठति Sy.
२४. उन्नतेषु वृक्षेषु Sy.
२५. भूय० M. स्वकीयाभिर्जिह्वाभिः Sy.

लक्षणेनाङ्कुशेन[1] च युक्तः। महास्वनः। क्षिप्रम्। यदा[2] त्वम्। अग्ने! वृक्षान्[3] प्रति। वृषेवाचरसि[4] दहसीत्यर्थस्तदानीम्। तव। गमनमार्गः[5]। कृष्णो भवति। श्वेतज्वालासङ्घ[6]! अजर[7]!

**तपुर्जम्भो वन आ वातचोदितो यूथे न साह्वाँ अव वाति वंसगः।**
**अभिव्रजन्नक्षितं पाजसा रजः स्थातुश्चरथं भयते पतत्रिणः ॥५॥**

तपुर्जम्भः[8]। तापयितृज्वालादंष्ट्रः। वृक्षेषु। वातेन प्रेरितः। ज्वालासङ्घे। न। सहनशीलोऽग्निरिव[9] वाति वननीयगमनोऽधोगच्छति[10]। अक्षीणमप्यरण्यमध्यस्थमपि[11]। उदकम्[12]। ज्वालया[13]। अभिगच्छन्[14]। अवावाति[15] तस्मादग्नेः[16]। स्थावरम्। जङ्गमं च। बिभेति। पक्षिणश्च[16]।

**दधुष्ट्वा भृगवो मानुषेष्वा रयिं न चारुं सुहवं जनेभ्यः।**
**होतारमग्ने अतिथिं वरेण्यं मित्रं न शेवं दिव्याय जन्मने ॥६॥**

दधुष्ट्वा[17] भृगवः। आदधुः[18]। त्वाम्[19]। भृगवः। मानुषेषु। धनम्। इव। शोभनम्। स्वाह्वानम्[20]। जनानाम्। होतारम्[21]। अग्ने! अतिथिम्[22]। वरणीयम्। मित्रम्। इव। सुखकरम्[23]। दिवि जाताय[24]। देवगणाय[24]।

---

१. सरणशीलेन तेजःसमूहेन Sy.
२. दा M.
३. ०त् M. वनसम्बन्धान् वृक्षान् दग्धुम्Sy.
४. पृष्ट्वोपच० M. वृषवदाचरसि Sy.
५. ०र्गं D.
६. संघः P. दीप्तज्वाल Sy.
७. जर P. ०रः M. जरारहिताग्ने! Sy.
८. तपूंषि ज्वाला एव जम्भा आयुधानि मुखानि वा यस्य स तथोक्तः Sy.
९. सहशी० M. सर्वमभिभवन् Sy.
१०. ०नीयाग० P. D. यथा वननीयगतिर्वृषो गोयूथे सर्वमभिभवन् वर्तते तद्वत्Sy.
११. आभिमुख्येन . . . व्याप्नोति Sy.
१२. अक्षितम् अक्षीणं रज आर्द्रवृक्षान्तर्गतमुदकम् Sy.
१३. ०क D.
१४. तेजोबलेन Sy.
१५. अपवा० P. ०ववा० D.
१६. पतनवतः Sy.
१७. ०धुष्वा D. M. ०धुष्वा P.
१८. आधानसम्भारेषु मन्त्रैः स्थापनेन समस्कुर्वन् Sy.
१९. ०धुष्ट्वां P. M. अदधुष्वां D.
२०. स्वस्वा० M. यजमानार्थमाह्वातुं सुशकम् Sy.
२१. देवानामाह्वातारम् Sy.
२२. अतिथिवत् पूज्यम्। यद्वा देवयजनदेशेषु सततं गन्तारम् Sy.
२३. ०कर D.
२४. देवत्वप्राप्तये Sy.

**होतारं सप्त जुह्वो३ यजिष्ठं यं वाघतो वृणते अध्वरेषु ।**
**अग्निं विश्वेषामरतिं वसूनां सपर्यामि प्रयसा यामि रत्नम् ॥७॥**

**होतारं सप्त ।** होतारं प्रवृताहुतीनाम्[1] । होतारः[2] । सप्त होतारः । यष्टृतमम् । यम् । ऋत्विजः[3] सप्त । वृणते[4] । यज्ञेषु । अग्निम् । विश्वेषाम् । अभिगन्तारम्[5] । धनानाम् । परिचरामि । अन्नेन । याचे च । रत्नम्[6] ।

**अच्छिद्रा सूनो सहसो नो अद्य स्तोतृभ्यो मित्रमहः शर्म यच्छ ।**
**अग्ने गृणन्तमंहस उरुष्योर्जो नपात्पूर्भिरायसीभिः ॥८॥**

**अच्छिद्रा[7] सूनो ।** अच्छिद्रम्[8] । गृहम्[9] । सहसः[10] । पुत्र[11] ! अस्मभ्यम् । अद्य । स्तोतृभ्यः । मित्राणां[12] पूजयितः[12] ! प्रयच्छ । अग्ने[13] ! स्तुवन्तम् । अवर्तेः[14] । रक्ष । अन्नस्य[15] । पुत्र ! आयसैः[16] । पुरैः[17] । गर्भोऽस्योषधीनामिति मन्त्रः ।

**भवा वरूथं गृणते विभावो भवा मघवन्मघवद्भ्यः शर्म ।**
**उरुष्याग्ने अंहसो गृणन्तं प्रातर्मक्षू धियावसुर्जगम्यात् ॥९॥**

**भवा वरूथम् ।** भव । गृहम्[18] । स्तुवते[19] । दीप्तिमन्[20] । भव । धनवन्[21] । हविष्मद्भ्यः[22] । गृहम्[23] । रक्ष । अग्ने ! स्तुवन्तम् । अवर्तेः[24] । प्रातः[25] । एवाग्निः । कर्मणा[26] वासयितेह । आगच्छत्विति देवाग्ने-गृहं[27] सूक्तेनाशास्ते[28] ।

---

१. देवानामाह्वातारम् Sy. २. होतारः seems to be quite unnecessary. ३. यत्वि० M.
४. वृणुते M. ५. प्रापयितारम् Sy.
६. रत्नं रमणीयं कर्मफलञ्च Sy.
७. ०छि० D. ८. अच्छेद्यानि Sy.
९. शर्म शर्माणि सुखानि Sy.
१०. सदसः P. D. M. ११. ०त्राअ० D.
१२. अनुकूलदीप्तिमन्! Sy. १३. ०ग्नेः M.
१४. पापात् Sy. १५. ०क्षां नस्य M.
१६. व्याप्तैः । यद्वाऽयोवद् दृढतरैः Sy.
१७. सैः पुरैः missing in M. पालनैः Sy.
१८. अनिष्टनिवारकं गृहम् Sy.
१९. स्तुवते यजमानाय Sy. २०. ०मद् M. विशिष्टप्रकाशाग्ने ! Sy.
२१. ०वद् M. २२. हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः Sy. २३. शर्म सुखं यथा भवति तथा भव Sy. २४. पापकारिणः शत्रोः Sy. २५. प्र० P. इदानीमिव परेद्युरपि Sy.
२६. कर्मणा बुद्धया वा प्राप्तधनोऽग्निः Sy.
२७. ०ग्ने गृ० P. D. २८. Ms. D. puts the figure ॥५८॥ here to indicate the end of the fifty-eighth hymn. No such number is given in P. and M.

## I.59.

**वया इदग्ने अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयन्ते ।**
**वैश्वानर नाभिरसि क्षितीनां स्थूणेव जनाँ उपमिद्ययन्थ ॥१॥**

**वया इदग्न ।** ओषधीषु[1] मनुष्येषु भूम्यां संवत्सरे[2] तथा पचन्[3] यो वर्तते सोऽग्निर्वैश्वानरः[4] स्मृतः—शाखाः । एव । अग्ने ! तव । अन्ये । अग्नयः[5] । त्वयि । सर्वे । देवाः । माद्यन्ति[6] । वैश्वानर[7] ! नाभिस्थानीयः[8] । असि । प्रजानाम्[9] । यथोत्तम्भनार्थमुपमीयमाना[10][11][12] स्थूणा वंशान् धारयत्येवं[13] त्वम्[14] । जनान्[15] । अयच्छथाः ।

**मूर्धा दिवो नाभिरग्निः पृथिव्या अथाभवदरती रोदस्योः ।**
**तं त्वा देवासोऽजनयन्त देवं वैश्वानर ज्योतिरिदार्याय ॥२॥**

**मूर्धा दिवः[16] ।** उच्छ्रितः[17] । स्वर्गस्य । नहनम्[18] । अग्निः । पृथिव्याः । अथ । अभवत्[19] । अरतिः[20] । द्यावापृथिव्योः—इतस्तत्र गच्छति ततोऽस्यामित्यर्थोऽपिवा[21][22] द्यावापृथिव्योर्मध्ये गच्छत्यादित्यः सन्—तम्[23] । त्वाम् । देवासः । अजनयन्त[24] । देवम्[25] । वैश्वानर[26] ! ज्योतिर्भूतम् । आर्याय मनवे[27] ।

---

१. आष० D.
२. भूवत्सरे P. D. M.
३. चवन् ० M.
४. वैस्तुति P. D. M.
५. ततस्त्वत्तोऽन्ये न सन्तीति भावः Sy.
६. नहि त्वद्व्यतिरेकेण तैर्जीवितुं शक्यते Sy. ७. विश्वेषां नराणां जाठररूपेण सम्बन्धिन्नग्ने Sy.
८. संनद्धा असि अवस्थापको भवसि Sy.
९. मनुष्याणाम् Sy.
१०. अतस्त्वमुपमिदुपस्थापयिता सन् । यद्वोपमिदित्येतद् दृष्टान्तविशेषणम् । . . . उपमिदुपनिखाता स्थूणेव । वंशधारणार्थं निखातः स्तम्भो यथा गृहोपरिस्थं वंशं धारयति तद्वत् Sy.
११. ०र्थः उप० P.
१२. ०नः P. D.
१३. ०न्ति ए० D.
१४. त्वज्ज० D.
१५. ०च्छू० D.
१६. मिवेः P. विदः M.
१७. ०त D. M. शिरोवत्प्रधानभूतः Sy.
१८. संनाहको रक्षक इत्यर्थः Sy.
१९. भ० M.
२०. अरिति P. आतिः D. अधिपतिः Sy.
२१. ०वि P.
२२. Omitted by D.
२३. त P. D.
२४. ०न्तस्त D.
२५. दानादिगुणयुक्तम् Sy.
२६. ०रं M.
२७. विदुषे . . . यजमानाय वा Sy.

आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरेऽग्ना वसूनि ।
या पर्वतेष्वोषधीष्वप्सु या मानुषेष्वसि तस्य राजा ॥३॥

आ सूर्ये न। आदधिरे[1]। सूर्ये[2]। इव। रश्मीन्। ध्रुवान्[3] असुरैः सह विजयमुपयन्तो देवाः। अग्नौ। वैश्वानरे। यानि। पर्वतादिषु। वसूनि। यानि च[4]। मानुषेषु। तस्य सर्वस्य[5]। ईश्वरस्त्वम्[6]। भवसि।

बृहतीइव सूनवे रोदसी गिरो होता मनुष्यो न दक्षः ।
स्वर्वते सत्यशुष्माय पूर्वीर्वैश्वानराय नृतमाय यह्वीः ॥४॥

बृहतीइव सूनवे। आत्मनः सूनवे वैश्वानराय तदर्थम्। महती इव[7] भवतः[8]। द्यावापृथिव्याविति[9] पदान्तः[10]। गिरः। होता। मनुष्यश्च[11]। समर्थः। सर्ववते[12]। सत्यबलाय[13]। वह्वीः[14]। वैश्वानराय। नेतृतमाय[15]। महतीः प्रयुङ्क्ते[16]।

दिवश्चित्ते बृहतो जातवेदो वैश्वानर प्र रिरिचे महित्वम् ।
राजा कृष्टीनामसि मानुषीणां युधा देवेभ्यो वरिवश्चकर्थ ॥५॥

दिवश्चित्ते[17]। दिवः। अपि। ते[18]। महतः। जातवेदः! वैश्वानरः[19]। प्ररिरिचे। महत्त्वम्[20]।

---

१. अग्नौ ... धनानि ... आहितानि स्थापितानि बभूवुः Sy. २. निश्चला रश्मयः किरणाः सूर्ये न यथा सूर्ये आधीयन्ते तद्वत् Sy. ३. ध्रुवासु० P. D.
४. Omitted by P. ५. धनजातस्य Sy.
६. ईशस्त्वं M. ७. ०तीव P.
८. महतो वैश्वानरस्यावस्थानाय द्यावापृथिव्यौ विस्तृते जाते इत्यर्थः Sy.
९. वैश्वानर is the son of द्यावापृथिवी is stated in RV. 3. 3. 11.
१०. विति पदान्तः omitted by D. I propose to read पदान्तरे for पदान्तः Ed.
११. तत्र दृष्टान्तः। ... यथा मनुष्यो लौकिको वन्दी दातारं प्रभुं बहुविधया स्तुत्या स्तौति तद्वत् Sy.
१२. सर्वते M. I propose to read स्वर्वते for सर्ववते Ed. शोभनगमनयुक्ताय Sy.
१३. अवितथबलाय Sy.
१४. पूर्वीर्बहुविधाः Sy.
१५. नृतमायातिशयेन सर्वेषां नेत्रे Sy.
१६. V. Mādhava ignores न
१७. ०श्वि० D. १८. तो P. D.
१९. ०र P. As वैश्वानर is in the vocative case, the visargas should be deleted. I propose therefore to read वैश्वानर for वैश्वानरः Ed.
२०. ०हि० P.

राजा। भवसि। मानुषीणाम्[1]। विशां मनुष्याणामित्यर्थः। युद्धेन। देवेभ्यश्च। धनम्[2]। चकर्थ[3]।

**प्र नू म॑हि॒त्वं वृ॑ष॒भस्य॑ वोचं॒ यं पू॒रवो॑ वृत्र॒हणं॑ सच॑न्ते ।**
**वै॒श्वा॒न॒रो दस्यु॑म॒ग्निर्ज॑घ॒न्वाँ अधू॑नो॒त्काष्ठा॒ अव॒ शम्ब॑रं भेत् ॥६॥**

**प्र नू महित्वम्**[4]। प्रब्रवीमि तत्। महित्वम्[5]। महाभाग्यम्। क्षिप्रम्। वर्षितुरपाम्। यम्। पूरयितव्याः। मनुष्याः[6]। मेघहननम्[7]। सेवन्ते वर्षकामाः। वैश्वानरः[8]। अग्निः। उपक्षयितारम्[9]। घ्नन्। अवाधूनोत्[10]। अपः काष्ठाः[11]। अवाभिनच्च। मेघम्[12]।

**वै॒श्वा॒न॒रो म॑हि॒म्ना वि॒श्वकृ॑ष्टिर्भ॒रद्वा॑जेषु यज॒तो वि॒भावा॑ ।**
**शा॒त॒व॒ने॒ये श॒तिनी॑भिर॒ग्निः पु॑रुणी॒थे ज॑रते सू॒नृता॑वान् ॥७॥**

**वैश्वानरः।** वैश्वानरः। महत्तया। सर्वमनुष्यः[13] सर्वाः प्रजा अस्य। भरद्वाजेषु[14]। यष्टव्यः[15]। दीप्तिमान्[16] शतवनो[17] नाम कश्चित् तस्य पुरुणीथस्तस्मिन्नयम्[18]। अग्निः। शतसंख्याभिः[19]। स्तुतिभिः[20] स्तूयते। सत्यकर्मा[21] वैश्वानराग्नेः स्तुतिमात्रमिति।[22]

---

१. **मनोर्जातानाम्** Sy.
२. **असुरैरपहृतं धनम्** Sy.
३. **देवाधीनमकार्षीः** Sy. ४. **मंहि** D. **तत्को वैश्वानरः? मध्यम इत्याचार्याः। वर्षकर्मणा ह्येनं स्तौति. . .प्रब्रवीमि तत्। महित्वं महाभाग्यम्। वृषभस्य वर्षितुरपाम्। यं पूरवः पूरयितव्या मनुष्याः। वृत्रहणं मेघहनम्। सचन्ते सेवन्ते वर्षकामाः। दस्युर्दस्यतेः। क्षयार्थात्। उपदस्यन्त्यस्मिन्रसाः। उपदासयति कर्माणि। तमग्निर्वैश्वानरो घ्नन्। अवाधूनोदपः काष्ठा अभिनत्। शम्बरं मेघम्** N. 7. 22-23. ५. **०हृ०** D. **माहात्म्यम्** Sy. ६. **मा०** P.
७. **०हनं** D. M. **मेघस्य हन्तारम्** Sy.
८. **अत्र वैश्वानरशब्देन मध्यमस्थानस्थो वैद्युतोऽग्निरभिधीयते** Sy.
९. **रसानां कर्मणां वोपक्षयितारं राक्षसादिकम्** Sy. १०. **अपाधुनोत्** P. **अधोमुखान्यपातयत्** Sy.
११. **काष्ठां** M. **वृष्ट्युदकानि** Sy.
१२. **तन्निरोधकारिणं मेघम्** Sy.
१३. **विश्वे सर्वे मनुष्या यस्य स्वभूताः स तथोक्तः** Sy.
१४. P. adds **एव** before **प्रजा**
१५. **पुष्टिकरहविर्लक्षणान्नवत्सु यागेषु यद्वैतत्संज्ञेषु ऋषिषु** Sy.
१६. **विशेषेण प्रकाशयिता** Sy.
१७. **शीत०** P.
**शतसंख्याकान् क्रतून् वनति सम्भजते इति शतवनिस्तस्य पुत्रः शातवनेयः** Sy.
१८. **बहूनां नेतरि, एतत्संज्ञके राजनि च** Sy.
१९. **गत०** M. **बहुभिः** Sy.
२०. Omitted by P. and D.
२१. **सूनृता प्रिया सत्या वाक् तद्युक्तः** Sy.
२२. Ms. D. puts the figure **॥५९॥** here to indicate the end of the fiftyninth hymn. No such number is given in P. and M.

I.60.

वह्निं यशसं विदथस्य केतुं सुप्राव्यं दूतं सद्योअर्थम् ।
द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद्भृगवे मातरिश्वा ॥१॥

वह्नि[1] यशसम्[2]। वोढारमग्निम्[3]। यशस्विनम्। यज्ञस्य। ध्वजभूतम्[4]। सुष्ठु प्रकर्षेण रक्षणीयम्[5]। दूतम्[6]। सद्यो गन्तारम्[7]। द्वयोररण्योर्जायमानम्[8]। धनमिव। प्रशस्तम्। बन्धुम्[9]। भरत्[10]। भृगवे दिव आहृत्य। मातरिश्वा।

अस्य शासुरुभयासः सचन्ते हविष्मन्त उशिजो ये च मर्ताः ।
दिवश्चित्पूर्वो न्यसादि होतापृच्छ्यो विश्पतिर्विक्षु वेधाः ॥२॥

अस्य शासुः[11]। अस्य। शासनम्[12]। उभये[13]। सेवन्ते। हविष्मन्तः[14]। उशिजो[15] देवा उशिक् वष्टेः[16] कान्तिकर्मणः। ये। च। मर्ताः[17] सोऽयम्[18]। दिवः[19]। अपि। प्रत्नः। होता[20]। प्रष्टव्यः[21]। विशां स्वामी[22]। नृषु[23]। स्थापितो[24] मातरिश्वना। विधातेति[25]।

---

१. वर्हि M.
२. यंश० D.
३. हविषां वोढारम् Sy.
४. प्रकाशयितारम् Sy.
५. रक्षितारम् Sy.
६. देवैर्हविर्वहनलक्षणे दूत्ये नियुक्तम् Sy.
७. यदा हवींषि जुह्वति सद्यस्तदानीमेव हविर्भिः सह देवान् गन्तारम्। यद्वा। सद्योऽर्थमरणं गमनं यस्य तम् Sy.
८. द्वयोर्द्यावापृथिव्योररण्योर्वा जायमानम् Sy.
९. मित्रम् Sy.
१०. धनं P. भरं D.
अहरत्। अकरोदित्यर्थः Sy.
११. अस्य शासुः omitted by P.
१२. शंसनम् P. शासम् M.
शासितुरस्याग्नेः Sy.
१३. उभेये P.
उभयेऽपि देवा मनुष्याश्च। यद्वा। स्तुतिभिः स्तोतारो यज्ञैर्यजमानाश्च Sy.
१४. हविषा युक्ता ये... मरणधर्माणो यजमानाः Sy.
१५ उशिजः कामयमाना देवाः।... यद्वा। उशिज इति मेधाविनाम। उशिजो मेधाविनः स्तोतारो हविष्मन्तो हविर्युक्ता मर्ता यजमानाः Sy.
१६. उशिन्यष्टेः M.
१७. मत्ताः P. M.
१८. सायम् P. Missing in M.
१९. आदित्यादपि पूर्वं उषःसु वर्तमानो भूत्वा Sy.
२०. होमनिष्पादकोऽग्निः Sy.
२१. पूज्य इत्यर्थः Sy.
२२. स्वामिन् P. D.
पालयिता Sy.
२३. अग्निहोत्रहोमार्थ... यजमानेषु Sy.
२४. अध्वर्युणाऽन्यायतने न्यधायि स्थाप्यते Sy.
२५. विधाताभिमतफलस्य कर्ता Sy.

तं नव्यसी हृद आ जायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः ।
यमृत्विजो वृजने मानुषासः प्रयस्वन्त आयवो जीजनन्त ॥३॥

**तं नव्यसी।** तमग्निम्। जायमानं मत्तो[1] हृदयान्निर्गम्य। नवतरा[2]। सुष्टुतिः। कीर्त्यमाना[3]। मादयितृजिह्वम्[4]। व्याप्नोतु। यम्। ऋत्विजः[5]। उपद्रवे[6]। मनुष्येषु[7]। जाताः। हविष्मन्तः[8]। गच्छन्तस्तत्परिहारार्थमरण्योः। जनयन्ति[9]।[10]

उशिक्पावको वसुर्मानुषेषु वरेण्यो होताधायि विक्षु ।
दमूना गृहपतिर्दम आँ अग्निर्भुवद्रयिपती रयीणाम् ॥४॥

**उशिक् पावकः[11]।** कामयिता। शोधयिता[12]। मानुषेषु[13]। वासयिता देवः सन्। वरणीयः। निहितः[14]। निविष्टेषु। दममनाः[15]। गृहे। गृहपतिः[16] सोऽयम्। अग्निः। भवति। रयीणाम्[17]। रयिपतिः[18]।

तं त्वा वयं पतिमग्ने रयीणां प्र शंसामो मतिभिर्गोतमासः ।
आशुं न वाजंभरं मर्जयन्तः प्रातर्मक्षू धियावसुर्जगम्यात् ॥५॥

**तं[19] त्वा वयम्[20]।** तम्[21]। त्वा। वयम्[22]। पतिम्[23]। अग्ने! रयीणाम्। प्रशंसामः। स्तुतिभिः।

---

१. मर्तो P. हृदयवस्थितात्प्राणाज्जायमानम्।...अग्निर्हि वायोरुत्पद्यते वायुश्च प्राण एव Sy.
२. ० रासु D.
३. ० त्य० P. सुष्ठु कीर्तयित्री Sy.
४. ०ह्वा० P. मादयितृज्वालम् Sy.
५. ऋतौ काले यष्टारः Sy.
६. सङ्ग्रामे प्राप्ते सति Sy.
७. मनोः पुत्राः Sy.
८. हविर्लक्षणान्नोपेताः Sy.
९. यज्ञार्थमुदपादयन् Sy.
१०. V. Mādhava ignores आ
११. ०क D.
१२. ०धिता P.
१३. मनुष्येषु M. यज्ञगृहं प्रविष्टेषु मानुषेषु यजमानेषु Sy.
१४. स्थाप्यते Sy.
१५. ०मानाः M. रक्षसां दमनकरेण मनसा युक्तः Sy.
१६. गृहाणां पालयिता च सन् Sy.
१७. न केवलमेकस्य रयेरपि तु सर्वेषामित्याह रयीणामिति। यद्वा। रयीणां मध्ये उत्कृष्टं यद्धनं तस्य पतिरित्यर्थः Sy.
१८. V. Mādhava ignores आ
१९. ते M.
२०. तं त्वा वयम् omitted by P.
२१. त्वं M
२२. वयं नोधसः । स्तोतुरेकत्वेऽप्यात्मनि पूजार्थं बहुवचनम् Sy.
२३. रक्षितारम् Sy.

गोतमाः[1]। अश्वम्[2]। इव। अन्नस्य[3] हर्तारम्। पाणिना स्पृशन्तः[2] सादिनो[4] यथाऽग्निरस्मिँल्लोक आहुतस्तदुक्तं[5] सूक्ते[6]।

## I.61.

**अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय ।**
**ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा ॥१॥**

अस्मा इदु प्र[7]। इन्द्राय[8]। एव[9]। वृद्धाय[10]। प्रभरामि[11] शत्रूणाम्। हिंसित्रे[12]। अन्नम्[13]। इव। स्तोत्रम्। महते[14]। स्तुत्या समाय[15]। अधृतगमनाय[16]। वहनसाधनम्[17]। इन्द्राय हि। स्तोत्राणि[18]। अत्यन्तं[19] स्तोतृभिर्दत्तानि[20]।

**अस्मा इदु प्रयइव प्र यंसि भराम्याङ्गूषं बाधे सुवृक्ति ।**
**इन्द्राय हृदा मनसा मनीषा प्रत्नाय पत्ये धियो मर्जयन्त ॥२॥**

अस्मा इदु प्रयइव[21]। अस्मै। एव। अन्नमिव स्तोत्रम्[22]। प्रयच्छामि। भरामि[23]। स्तोत्रम्।

---

१. ०मासः P. गोतमगोत्रोत्पन्नाः Sy.
२. मार्जयन्तः...यथाऽश्वमारोहन्तः पुरुषास्तस्य वहनप्रदेशं हस्तैर्निमृजन्ति तद्वद् वयमप्यग्नेर्हविर्वहनप्रदेशं निमृजन्त इत्यर्थः Sy.
३. वाजस्य हविर्लक्षणान्नस्य भर्तारम् Sy.
४. ०दिवो M. ५. आहुः त० M.
६. V. Mādhava ignores प्रातर्मक्षू धियावसुर्जगम्यात्। Sy. explains the uncommented passage in the following way : धियावसुः कर्मणा बुद्ध्या वा प्राप्तधनः सोऽग्निः प्रातः श्वोभूतस्याह्नः प्रातःकाले मक्षु शीघ्रं जगम्याद् आगच्छतु। Ms. D puts the figure ॥६०॥ here to indicate the end of the sixtieth hymn. No such number is given in P. and M.
७. Omitted by M.
८. इन्द्रोऽप्यध्रिगुरुच्यते N. 5. 11
९. 'इत्' 'उ' इति निपातद्वयं पादपूरणे। ...यद्वाऽवधारणार्थम् Sy.
१०. वृत्राय P. ११. प्रहरामि करोमीत्यर्थः Sy. १२. ०ते M. त्वरमाणाय। यद्वा तुर्वित्रे शत्रूणां हिंसित्रे Sy.
१३. यथा बुभुक्षिताय पुरुषाय कश्चिदन्नं प्रहरति Sy. १४. गुणैर्महते Sy.
१५. ऋचा समाय। यादृशो स्तुतिः क्रियते तत्समायेत्यर्थः Sy. १६. ० यावृत ० P. D. अप्रतिहतगमनायेत्यर्थः Sy.
१७. वहनीयं प्रापणीयं वा। अत्यन्तोत्कृष्टमित्यर्थः Sy. १८. म्। इन्द्राय हि। स्तो missing in M. हविर्लक्षणान्यन्नानि Sy.
१९. पूर्वैर्यजमानैरतिशयेन दत्तानि Sy.
२०. V. Mādhava ignores उ
२१. ०या M. प्रिय P.
२२. स्तोत्ररूपमाघोषम् Sy.
२३. सम्पादयामि Sy.

बाधित्रे[1]। मुप्रवृत्तमिति[2] प्रथमपादोक्तमेवोक्तम्[3]। इन्द्राय। हृदादिभिः। पुरागाय[4]। पालयित्रे[5]। कर्माणि[6]। संस्कुर्वन्ति[7]।

**अस्मा इदु त्यमुपमं स्वर्षां भराम्याङ्गूषमास्येन ।**
**मंहिष्ठमच्छोक्तिभिर्मतीनां सुवृक्तिभिः सूरिं वावृधध्यै ॥३॥**

**अस्मा इदु त्यन्**[8]। अस्मै। एव। तम्[9]। उपमानभूतम्। सर्वस्य दातारम्[10]। भरामि[11]। स्तोत्रम्[12]। आस्येन[13]। दातृतमम्[14]। स्तुतीनाम्। अभिमुखोक्तिभिः[15]। सुप्रवृत्तैः[16]। प्राज्ञम्[17]। वर्धयितुमाङ्गूषं[18] भरामीति[19]।

**अस्मा इदु स्तोमं सं हिनोमि रथं न तष्टेव तत्सिनाय ।**
**गिरश्च गिर्वाहसे सुवृक्तीन्द्राय विश्वमिन्वं मेधिराय ॥४॥**

**अस्मा इदु स्तोमम्।** अस्मै। एवाहम्[20]। स्तोत्रम्[21]। संप्रेरयामि। रथम्। इव। संस्कर्ता[22] निष्कृतमन्ते[23]। तत्सिनाय[24] तेन यो वध्यते तस्मै स्वामिने[25]। गिरः। च केवलाः[26]। गीर्भिरुह्यमानाय[27]। सुप्रवृत्ताः[28] संहिनोमि। इन्द्राय। सर्वस्य प्रीणनं[29] हविश्च। यज्ञार्हाय[30][31]।

---

१. त्रम्। वाधित्रे missing in M. शत्रूणां बाधनाय समर्थम् Sy.
२. सुष्ठ्वावर्जकम् Sy.
३. ० दोक्तम् M.
४. पूरणाय P. अन्येऽपि स्तोतारः Sy.
५. पुराणाय। पालयित्रे missing in M. स्वामिने Sy. ६. मार्जयन्ति Sy.
७. V. Mādhava ignores उ
८. त्या P. ९. तद् M. तं प्रसिद्धम् Sy. १०. सुष्ठ्वरणीयस्य धनस्य दातारम् Sy. ११. करोमीत्यर्थः Sy. १२. आघोषम् Sy.
१३. अस्ये० D. १४. अतिशयेन प्रवृद्धमेवंलक्षणम् Sy. १५. स्तुतीनां सम्बन्धिभिः ...स्वच्छैर्वचोभिः Sy. १६. ०भि P.
१७. सुष्ठ्वावर्जकैः। समर्थैरित्यर्थः Sy.
१८. ० मांशुषं शुषं M.
१९. V. Mādhava ignores उ
२०. इदु स्तोमन्। अस्मै। एवाहम्। missing in M.
२१. शस्त्ररूपं स्तोत्रम् Sy.
२२. तष्टेव तष्टा तक्षको रथनिर्माता ... यथा रथं प्रेरयति तद्वत् Sy.
२३. The reading is not clear.
२४. तत् तत् सिनाये P. सिनमित्यन्ननाम ... तेन रथेन सिनमन्नं यस्य स तथोक्तः Sy.
२५. रथस्वामिने Sy.
२६. शस्त्रसम्बन्धिनीः केवला ऋचश्च Sy.
२७. ० यः M.
२८. शोभनमावर्जनं यथा भवति तथा प्रेरयामि Sy.
२९. विश्वव्यापकं विश्वैर्व्याप्तं सर्वोत्कृष्टं हविश्च सं हिनोमीत्यनुषङ्गः Sy.
३०. ० यं P. मेधाविने Sy.
३१. V. Mādhava ignores उ। इव

अस्मा इदु सप्तिमिव श्रवस्येन्द्रायार्कं जुह्वा३ समञ्जे ।
वीरं दानौकसं वन्दध्यै पुरां गूर्तश्रवसं दर्माणम् ॥५॥

अस्मा इदु सप्तिमिव। अस्मै। एव। अश्वमिव[१]। अन्नेच्छया[२]। स्तोत्रम्[३]। वाचा[४]। संश्लेप-[५]यामि। वीरम्[६]। दाननिलयम्[७]। असुरपुराणाम्। दारयितारम्। वन्दितुम्[८]। उद्गूर्णान्नं[९] समञ्ज[१०] इति[११][१२]।

अस्मा इदु त्वष्टा तक्षद्वज्रं स्वपस्तमं स्वर्यं१ रणाय ।
वृत्रस्य चिद्विदद्येन मर्म तुजन्नीशानस्तुजता कियेधाः ॥६॥

अस्मा इदु त्वष्टा[१३]। अस्मै। एव। त्वष्टा[१४]। अकरोत्[१५]। वज्रम्[१६]। अति[१३]शयेन शोभनकर्मयुक्त-[१७]मच्छतया। शब्दकुशलम्[१८]। युद्धाय। वृत्रस्य[१९]। चित्। विदत्[२०]। येन वज्रेण। द्युस्थानम्[२१]। हिंसन्[२२]। ईश्वरः[२३]। हिंसित्रा[२४] वज्रेण। कियतो[२५] बलस्य धारयितेति बलवन्तमाहेति[२६]।

अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना ।
मुषायद्विष्णुः पचतं सहीयान्विध्यद्वराहं तिरो अद्रिमस्ता ॥७॥

अस्येदु मातुः। अस्य। एवेन्द्रस्य[२७] जगतः। निर्मातुः[२८] स्वभूतेषु। सवनेषु[२९]। सद्य एव। महत्[३०]।

---

१. यथाऽन्नलाभाय गन्तुकामः पुमानश्वं रथेनैकीकरोति तद्वत् Sy.
२. ० वोग्नेच्छ० M. वाग्नेच्छ० D. अन्नलाभायेत्यर्थः Sy.
३. स्तुतिरूपं मन्त्रम् Sy.
४. आह्वानसाधनेन वागिन्द्रियेण Sy.
५. समक्तं करोमि Sy.
६. शत्रुक्षेपणकुशलम् Sy.
७. दानालयम् D.
८. वन्दितुं स्तोतुं प्रवृत्तोऽस्मीति शेषः Sy.
९. प्रशस्यान्नम् Sy. १०. समज्ञ D.
११. The passage beginning with अस्मै। एव। and ending with समञ्ज इति is omitted by P.
१२. V. Mādhava ignores उ। इन्द्राय
१३. अस्मा इदु त्वष्टा। अस्मै। एव। त्वष्टा। अकरोत्। वज्रम्। अति is omitted by P. १४. त्वष्टा विश्वकर्मा Sy.
१५. तीक्ष्णमकरोत् Sy.
१६. वर्जकमायुधम् Sy.
१७. ० क्ताम ० P. The reading is not clear.
१८. सुष्ठु शत्रुषु प्रेर्यं यद् वा स्तुत्यम् Sy.
१९. वृत्रस्य चिद् आवरकस्यासुरस्य Sy.
२०. प्राहार्षीदित्यर्थः Sy.
२१. मर्मस्थानम् Sy.
२२. शत्रून् हिंसन् Sy.
२३. ऐश्वर्यवान् Sy.
२४. हिंसीश्चयो हि० P
२५. कि० D. बलवान् Sy.
२६. V. Mādhava ignores उ
२७. 'इत्' 'उ' इत्येतन्निपातद्वयं पादपूरणम्। यद्वाऽवधारणार्थम् Sy.
२८. वृष्टिद्वारेण सकलस्य जगतो निर्मातुः Sy.
२९. अवयवभूतेषु प्रातःसवनादिषु त्रिषु सवनेषु Sy. ३०. महतोऽस्य यज्ञस्य Sy.

पानीयं[1] सोमम्। पपिवान्[2]। चारूणि[3] च। अन्नानि पशुपुरोडाशादीनि। भक्षयित्वा। मुषितवान्[4] वराहरूपः[5]। विष्णुः[6]। पचतमन्नमसुरपुराणां[7] स्वभूतम्। बलवांस्तम्[8]। वराहम्[9]। अविध्यदिन्द्रः[10][11]। तिरः। वज्रम्। क्षेप्ता वराहो[12] मेघो वराह एव वा। "वराहोऽयं वाममोषः[13] सप्तानां गिरीणां परस्ताद् वित्तं[14] वेद्यमसुराणां बिभर्ति[15]" इति ब्राह्मणमध्वर्युभ्योऽवगन्तव्यमिति[16]।

**अस्मा इदु ग्नाश्चिद्देवपत्नीरिन्द्रायार्कमहिहत्य ऊवुः।**
**परि द्यावापृथिवी जभ्र उर्वी नास्य महिमानं परि ष्टः ॥८॥**

अस्मा इदु ग्नाश्चित्[17]। अस्मै। एव[18]। स्त्रियः[19]। देवपत्न्यः[20]। इन्द्राय[21]। स्तोत्रम्[22]। अहिहनने[23]। अरक्षन्नस्तुवन्नित्यर्थः[24] सोऽयं तेजसा। द्यावापृथिवी[25]। परिहरति[26]। न। अस्य[27]। ते। महत्त्वम्। परितः। भवतः[28]।

---

१. सोमलक्षणमन्नम् Sy.

२. पविवां M.
यदाग्नौ हूयते तदानीमेव पानं कृतवानित्यर्थः Sy.

३. शोभनानि धानाकरम्भादिहविर्लक्षणान्यन्नानि भक्षितवानिति शेषः Sy.

४. मृषि० P. अपहरन् Sy.

५. वराहो मेघो भवति। वराहारः... अयमपीतरो वराह एतस्मादेव। बृहति मूलानि। वरं वरं मूलं बृहतीति वा N. 5. 4.

६. सर्वस्य जगतो व्यापकः...यद्वा। विष्णुः सुत्यादिवसात्मको यज्ञः।... स विष्णुः...परिपक्वमसुरधनं यत्तन्मुषायद् अचूचुरत्। तदनन्तरं दीक्षोपसदात्मनां दुर्गरूपाणां सप्तानामह्नां परस्तादासीत्। अद्रिमस्ता सहीयानिन्द्रो दुर्गाण्यतीत्य तिरः प्राप्तः सन् वराहमुत्कृष्टदिवसरूपं तं यज्ञं विध्यत् Sy.

७. ०त्वम० D.
परिपक्वमसुराणां धनं यदस्ति तत् Sy.

८. बलंवास्तं P.
अतिशयेन शत्रूणामभिभविता Sy.

९. मेघम् Sy.

१०. वरामहवि० M. अताडयत् Sy.

११. अद्यदि० P. १२. वरं P.

१३. वामुमोष D. वामुपोष P.

१४. वै० P. १५. ब० P.

१६. V. Mādhava ignores उ

१७. इद M.

१८. V. M. seems to explain इदु as one word by एव. Both Sk. and Sy. take इदु as one word in the sense of अवधारणार्थे।

१९. गमनस्वभावा अपि स्थिताः Sy.

२०. देवानां पालयित्र्यो गायत्र्यादया देवताः Sy. २१. इन्द्रय P.

२२. अर्चनसाधनं स्तोत्रम् Sy.

२३. अभिह० P. D. M. वृत्रस्य हनने निमित्तभूते सति Sy.

२४. ० क्षण स्तु० P. समतन्वत चक्रुरित्यर्थः Sy. २५. द्यावापृथिव्यौ Sy.

२६. परिजहार अतिचक्रामेत्यर्थः Sy.

२७. नस्य P.

२८. V. Mādhava ignores उ। उर्वी

अस्येदेव प्र रिरिचे महित्वं दिवस्पृथिव्याः पर्यन्तरिक्षात् ।
स्वराळिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥९॥

अस्येदेव । अस्य । एव महत्त्वम्[1] । त्रिभ्योऽपि लोकेभ्यः । प्रकर्षेण[2] । अतिरिक्तमासीत्[3] । परिः[4] पञ्चम्यर्थं स्फुटीकरोति । स्वयमेव राजा[5] । इन्द्रः । गृहे[6] । च । सर्वैराहृतः[7] । शोभनारिः[8] । अमत्रो महान्[9] । गच्छति[10] । युद्धार्थम् ।

अस्येदेव शवसा शुषन्तं वि वृश्चद्वज्रेण वृत्रमिन्द्रः ।
गा न व्राणा अवनीरमुञ्चदभि श्रवो दावने सचेताः ॥१०॥

अस्येदेव शवसा[11] । अस्य । एव । बलेन । शुष्यन्तम् । विवृश्चत्[12] । वज्रेण । वृत्रम् । इन्द्रः । गाः[13] । इव । संहता[14] नदीर्[15]वृत्राद्[16] अभ्यमुञ्चदिमं[17] लोकं[18] प्रत्यपातयद्[19] अन्नस्य[20] । दानाय[21] । मनुष्याणाम् । सचेताः[22] सुमतिः ।

अस्येदु त्वेषसा रन्त सिन्धवः परि यद्वज्रेण सीमयच्छत् ।
ईशानकृद्दाशुषे दशस्यन्तुर्वीतये गाधं तुर्वणिः कः ॥११॥

अस्येदु त्वेषसा[23] । अस्य । एव । दीप्तेन बलेन ।.........गच्छन्ति[24] । यस्मादसौ[25] ।

---

१. ०त्वं P. D. M. २. पक० D.
३. अतिरिच्यते। अधिकं भवतीत्यर्थः Sy.
४. उपर्यर्थः। त्रीन् लोकानतीत्योपरि प्ररिरिचे इत्यर्थः Sy.
५. स्वेनैव तेजसा राजमानः Sy.
६. दमयितव्ये विषये Sy.
७. ०त P. D. M. विश्वस्मिन् सर्वस्मिन् कार्ये उद्गूर्णः समर्थः। यद्वा विश्वं सर्वमायुधं गूर्तमुद्यतं यस्य स तथोक्तः Sy.
८. शोभने शत्रौ हन्तव्ये सति हन्ता वीर्यवत्तम इति गम्यते Sy.
९. अमत्रो युद्धादिषु गमनकुशलः। मात्रयेयत्तया रहितो वा Sy.
१०. आवहति मेघान् प्रापयति। मेघैः परस्परयुद्धं कारयित्वा वृष्टिं चकारेति भावः Sy.
११. ०सं P. १२. व्यच्छिनत् Sy.
१३. चौरैरपहृताः Sy. १४. वृत्रेणावृताः Sy.
१५. रक्षणहेतुभूता अपः Sy.
१६. ०वृत्रम् P. वृत्रान् D. वृत्रात् M.
१७. अवर्षीत् Sy.
१८. उञ्चतादिमाभ्यमुञ्चतादि० P.
१९. ०यत्य० P.
२०. श्रवः कर्मफलभूतमन्नम्...आभिमुख्येन ददातीति शेषः Sy.
२१. दावने हविर्दात्रे यजमानाय Sy.
२२. सचेताः तेन यजमानेन समानचित्तः सन् Sy.
२३. त्वो० P. P. adds रन्त after त्वेषसा
२४. कुरु हलयो रन्त नगन P. कुरु विलयो रन्तनं D. कूटयोरन्तं न M.
२५. ०ति P. स्वे स्वे स्थाने रमन्ते Sy.

वज्रेण[१]। नदीः[२]। सर्वतः[३]। पर्ययच्छत्[४]। ऐश्वर्यम्[५]। यजमानाय[६] वरम्[७]। दातुमिच्छन्[८]। तुर्वीतये[९]। गाध[१०] उदके स्थिताय[११] ऋषये[१२]. . . . . . . . .शत्रूणां[१३] तारकः[१४]।

**अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।**
**गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥१२॥**

अस्मा इदु प्र भर[१५]। अस्मै। इत्। उ। प्र। भर[१६]। त्वरमाणः[१७]। वृत्राय। वज्रम्[१६]। ईशानः[१८]। कियतो[१९] बलस्य धारयति[२०] गोः[२१]। इव। पर्वाणि[२२]। विरद[२३]। तिरश्चीनं[२४] वृत्रम्। प्रेरयन्[२५]। उदकमार्गान्[२६]। अपाम्[२७]। चरणाय।

**अस्येदु प्र ब्रूहि पूर्व्याणि तुरस्य कर्माणि नव्य उक्थैः ।**
**युधे यदिष्णान आयुधान्यृघायमाणो निरिणाति शत्रून् ॥१३॥**

अस्येदु प्र ब्रूहि[२८]। अस्य। एव। प्रब्रूहि[२९] स्तोतः! प्रत्नानि। क्षिप्रस्य[३०]। कर्माणि[३१]। स्तुत्योऽ-

---

१. यजेण P.
२. समुद्राः। यद्वा गङ्गादद्याः सप्त नद्यः Sy.
३. सीम् एनान् सिन्धून् Sy.
४. सर्वयच्छत् M. परितो नियमितवान् Sy.
५. वृत्रादिशत्रुवधेनात्मानमैश्वर्यवन्तं कुर्वन् Sy. ६. हविर्दत्तवते यजमानाय Sy.
७. फलम् Sy. ८. वरौमिच्छन् M. प्रयच्छन् Sy. ९. तुंविंतये M. तूर्णसम्भजनः।....यद्वा तुर्विता शत्रूणां हिंसिता Sy. १०. ऽगा० M.
११. ०या M. १२. विषये D. एतत्संज्ञायोदके निमग्नाय ऋषये Sy.
१३. स्वलोकृतवत् P. न्मलंकृतवान् D. स्मलङ्कृतवान् M. I suggest स्थलं कृतवान् for the missing part, Ed. अवस्थानयोग्यं धिष्ण्यप्रदेशं कोऽकार्षीत् Sy.
१४. V. Mādhava ignores कः
१५. भवर M. अस्मै प्रहर। तूर्णं त्वरमाणः। वृत्राय वज्रमीशानः। कियेधाः कियद्धा इति वा। क्रममाणधा इति वा। गोरिव पर्वाणि विरद मेघस्य। इष्यन्नर्णांसि। अपां चरणाय N. 6. 20.
१६. इमं वृत्रं वज्रेण प्रहरेत्यर्थः Sy.
१७. ०णं P. ०णा D. यद्वा। शत्रून् हिंसन् Sy. १८. ईश्वरः सर्वेषाम् Sy.
१९. कियतोऽनवधृतपरिमाणस्य बलस्य धाता। यद्वा क्रममाणं शत्रुबलं दधात्यवस्थापयतीति कियेधाः Sy.
२०. धारयिता is suggested for धारयति
२१. यथा मांसस्य विकर्तारो लौकिकाः पुरुषाः पशोरवयवानितस्ततो विभजन्ति तद्वत् Sy.
२२. अवयवसन्धीन् Sy.
२३. विरुति M. विलिख। छिन्धीत्यर्थः Sy.
२४. ०श्वी ० D. तिर्यगवस्थितेन Sy.
२५. प्रेरन् M. तस्माद् वृत्राद् गमयन् Sy.
२६. वृष्टिजलानि Sy.
२७. भूप्रदेशं प्रति गमनाय Sy.
२८. प्रस्तुहि M. २९. प्रशंस Sy.
३०. क्ष० P. युद्धार्थं त्वरमाणस्य Sy.
३१. एतत्कृतानि बलकर्माणि Sy.

यम्। उक्थैः। यदायम्[1]। युद्धाय। आयुधानि[2]। प्रेरयन्[3]। शत्रून्। हिंसन्[4] युद्धात्। गमयति[5] तदा[6] प्रब्रूहीति।

**अस्येदु भिया गिरयश्च दृळ्हा द्यावा च भूमा जनुषस्तुजेते।**
**उपो वेनस्य जोगुवान ओणिं सद्यो भुवद्वीर्याय नोधाः ॥१४॥**

**अस्येदु भिया**। अस्य। एव। भयेन[7]। पर्वताः। च। दृढाः स्वस्थाने तिष्ठन्ति। द्यावाभूमी। च। प्रादुर्भूतात्[8]। कम्पेते। कान्तस्येन्द्रस्य[9] रक्षणम्[10]। उपोच्चारयन्[11]। सद्य एव[12]। भवतु[13]। वीर्याय। नोधाः[14] [15]।

**अस्मा इदु त्यदनु दाय्येषामेको यद्वव्ने भूरेरीशानः।**
**प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः ॥१५॥**

**अस्मा इदु त्यत्**[16]। अस्मै। एव। तत्[17] स्तोत्रम्। एषां[18] स्वभूतम्। अन्वदायि[19]। यस्मादयम्। एक[20] एव धनम्। प्रयच्छति[21]। भूरेः[22]। ईश्वरः। प्रावत्[23]। एतशं[24] नाम। सूर्ये। स्पर्धमानम्। स्वश्वपुत्रे[25]। अभिषोतारम्। इन्द्रः।

**एवा ते हारियोजना सुवृक्तीन्द्र ब्रह्माणि गोतमासो अक्रन्।**
**ऐषु विश्वपेशसं धियं धाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥१६॥**

**एवा ते[26] हारियोजन**। एवम्। ते। हरी[27] प्रापयितारौ यस्य तस्य। सुप्रवृत्तानि[28]। इन्द्र!

---

१. या० P. २. वज्रादीनि Sy.
३. ०यत् M. आभीक्ष्ण्येन Sy.
४. हिन् M. ५. अभिमुखं गच्छति Sy.
६. यदा M. ७. पक्षच्छेदभयेन Sy.
८. ०द्भू M. ९. कान्तेस्ये० P.
१०. दुःखस्यापनायकम् Sy.
११. अनेकैः सूक्तैः पुनः पुनरुपशब्दयन्... इत्यर्थः Sy.
१२. सद्यवे P. १३. अभवत् Sy.
१४. M. adds अयं after नोधा। ऋषिः Sy.
१५. V. Mādhava ignores उ
१६. त्यक् D. १७. तत्प्रसिद्धम् Sy.
१८. एषां स्तोतॄणां सम्बन्धि Sy.
१९. ०दयी P. अकारीत्यर्थः Sy.
२०. एक एव शत्रून् जेतुं समर्थः Sy.
२१. यत्स्तोत्रं... ययाचे Sy.
२२. बहुविधस्य धनस्य... स्वामी Sy.
२३. प्रापद् P. M. २४. एशं P.
२५. स्वश्वस्वश्व० P. स्वश्च० D. स्वश्च ...M. पुत्रे is missing in M.
२६. न्ते M. २७. हारी P. हर्योरश्वयोर्योजनं यस्मिन् रथे स तथोक्तः। तस्य स्वामित्वेन सम्बन्धी हारियोजनः Sy. २८. सुष्ठ्वावर्जकान्यभिमुखीकरणकुशलानि Sy.

स्तोत्राणि[1]। गोतमाः[2]। अक्रन्[3] कृतेषु[4] च। एतेषु[5]। विश्वरूपाम्[6]। बुद्धिम्[7]। आधाः। प्राणे[8] स्तुतिमात्रं सूक्तमिति।

इत्थं चतुर्थमध्यायं व्याकरोत् प्रथमेऽष्टके।
अष्टकस्य कुले जातो माधवो वेङ्कटात्मजः॥

---

# [अथ पञ्चमोऽध्यायः]

अथ "प्र मन्महे"[9] ऽध्यायं माधवो व्याचिकीर्षति।
अवग्रहविहीनानामादावर्थं प्रदर्शयन् ॥१॥

पदकारः पदानीह नावगृह्णाति[10] कानिचित्।
तेषामपि स्वरेणैव कुर्यादर्थविनिर्णयम्[11] ॥२॥

निर्विवक्षेद्[12] बहुव्रीहेरर्थमादौ[13] स्वरो[14] यदि।
अथ तत्पुरुषस्यार्थमन्ते तिष्ठति चेत् स्वरः ॥३॥

"जुष्टो दमूना अतिथिर्दुरोणे"[15] दमे मनः।
"इषा यातं[16] शवीरया"[17] ऽऽशु यस्याः प्रेरणं[18] तथा ॥४॥

---

१. स्तुतिरूपाणि मन्त्रजातानि Sy.
२. गौ० M. गोतमगोत्रोत्पन्ना ऋषयः Sy.
३. अक्रत् D. आक्रन् M.
४. क्रतेषु D. ५. तेषु D. स्तोतृषु Sy.
६. बहुविधरूपयुक्तं... धनम् Sy.
७. ० द्धि M. धिया लभ्यत्वाद् धीर्धनमुच्यते। यद्वा धीशब्दः कर्मवचनः। पश्वादिबहुविधरूपं धनम्, अग्निष्टोमादिकं बहुविधरूपं कर्म वा Sy.
८. आधाः। प्राणे। is missing in M.
९. RV. I. 62. 1ª. १०. ०गृह्णन्ति R.
११. ०यः M. १२. ०वं० P. निर्विपक्षे M. १३. ०मादा M.
१४. स्वयो M.
१५. ०ण P. RV. v. 4. 5ª. अतिथिर्दमे मन इतीष्यते R. In my reading one syllable is short in b.
१६. RV. i 30. 17ᵇ.
१७. ०रयं शु० P.
१८. ०अतिथिर्दमे मन इष्टायातम्।... शवीरयासु यस्याः० M शवीरयाशु यस्याः स्यादीरणं प्रेरणं तथा॥ R. A better reading is तया for तथा Ed.

"भराम्याङ्गूषमास्येन"[1][2] स्वरात् तत्पुरुषो भवेत् ।
पर्याप्तो घोष आङ्गूषो घस्थाने गश्च दृश्यते ॥५॥
"यज्ञस्य घोषदसी"[3]ति यजुः[4] केचिदधीयते[5] ।
कठा "गोषदसी"[6]त्येतद् गकारादिमधीयते ॥६॥
विशेषेण पनायन्तः[7] "तद्विप्रासो[8] विपन्यवः"[9] ।
करूळती[10] कृत्तदन्तो[11] "वामं[12] देवः करूळती"[10][13][14] ॥७॥
बहुव्रीहेः स्वरं पश्यन्नर्थं तत्पुरुषस्य च ।
अर्थे स्पष्टे स्वरं जह्याद् "वरुणं वो[15] रिशादसम्" ॥८॥ इति[16]

## I.62.

**प्र मन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत् ।**
**सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ॥१॥**

प्र मन्महे। नोधा :—
प्रब्रूमः[17]। बलाचरणशीलाय[18]। बलकरणम्[19]। स्तोमम्[20]। गीर्भिर्वननीयाय[21]।

१. भर० M. २. RV. i. 61. 3[b]. ३. TS. i. 1. 2. 1. ४. यज्ञः P. ५. केचिद्दिदीयते P. केमीदधी० M. ६. कां घोषद० P. ०षद ... गका० M. ०त्येवङ्गका० R. KS. I. 2. ७. वना० P. ८. विवन्ययः P. ९. RV. i. 22. 21[a]. १०. कुरू० D. ११. ०न्ते R. १२. वामदेवः R. १३. RV. iv. 30. 24[d]. १४. विशेषेण च नायं तस्तद्विप्रासो...। देवः कुरु इति॥M. १५. वो रिशादसम् इति is missing in M. RV. v. 64. 1[a]. १६. इति is omitted by R. १७. ०मे P. वयं स्तोतारः प्रकर्षेणावगच्छामः Sy. मन्मह इति यद्यपि याच्ञाकर्मा पठितस्तथापीह याच्ञाया असम्भवान्मन्यतेरर्चतिकर्मण इदं रूपम्। प्रमन्महे प्रकर्षेण स्तुम इत्यर्थः Sk. १८. यथा बलं शत्रून् हन्ति तथा शत्रूणां हन्तेत्यर्थः Sy. शवसानायेति शवतेर्गतिकर्मणोऽयमसानप्रत्ययः। ... षष्ठ्यर्थे चतुर्थी। शत्रून् प्रति गन्तुरिन्द्रस्य Sk. १९. शीलाय। बलकरणम् is missing in M. सुखहेतुभूतम् Sy. स्वभूतं सेनालक्षणं बलम्। अथवा शव इति बलनाम। सामर्थ्याच्चेहान्तर्णीतमत्वर्थः। बलवानिवाचरति शवस्यते। ताच्छील्ये चानश्। ... शवसानस्य शूषम्। बलवतां यदाचरणं तच्छीलस्येन्द्रस्य स्वभूतं बलमित्यर्थः Sk. २०. ०म P. तृतीयार्थे द्वितीयैषा। आङ्गूषेण स्तोमेन Sk. २१. स्तुतिलक्षणैर्वचोभिः सम्भजनीयाय Sy. इयमपि षष्ठ्यर्थ एव चतुर्थी। स्तुतिभिर्वननीयस्य Sk.

अङ्गिरोवत्[1]। स्तोत्रैः[2]। स्तुवने[3] पुरुपाय[4]। य[5] ऋगर्हः स्तुत्यो भवति तस्मै[6]। नमः[7]। स्तोत्रम्[8]। नृपु[9]। प्रसिद्धाय[10]।

**प्र वो॑ म॒हे महि॒ नमो॑ भरध्वमाङ्गू॒ष्यं॑ शवसा॒नाय॒ साम॑ ।**
**येना॑ नः॒ पूर्वे॑ पि॒तरः॑ पद॒ज्ञा अर्च॑न्तो॒ अङ्गि॑रसो॒ गा अवि॑न्दन् ॥२॥**

प्र वो महे[11]। प्रभरध्वम्[12]। यूयम्[13]। महत्[14]। नमः[15]। महत इन्द्राय[16]। आङ्गूषार्हमनुशंसनीयम्[17][18]। शवसानाय[19]। साम[20]। येनेन्द्रेण[21]। अस्माकम्। पितरः[22]। अङ्गिरसः। पणिभिरपहृतानां गवामावासस्थानज्ञाः[23]। स्तुवन्तः[24]। पशून्[25]। अविन्दन्।

---

१. ०नीयांगि० P. D. ०नीयायामगि० M. अङ्गिरसे इव ऋषये Sk.

२. ०त्रे D. सुष्ठ्वावर्जकैः स्तुत्याभिमुखीकरणसमर्थैः स्तोत्रैः Sy. दोषैर्वर्जिताभिः स्तुतिभिः Sk.

३. सर्वत्र द्वितीयार्थे चतुर्थी। . . . अन्यैरपि स्तोतृभिः स्तूयमानम् Sk.

४. ऋषये Sy.

५. Omitted by M. यद्वा कर्मणि कर्तृप्रत्ययः। ऋषिणा स्तूयमानायेत्यर्थः Sy.

६. ऋगस्व स्तु० P. ऋगस्त्र स्तु० D. ग्रस्त स्तु० M. ऋग्मियाय। ऋग्मियं स्तुत्यर्हं स्तुतिमन्तं वा Sk.

७. सोम P. पूजयाम। उच्चारयामेत्यर्थः Sy. स्तुमः Sk.

८. मन्त्ररूपं स्तोत्रम् Sy. अर्क देवम् Sk.

९. सर्वेषां नेत्रे। यद्वा। . . . यजमाने Sy. मनुष्याकारम् Sk.

१०. यष्टव्यतया विशेषेण प्रख्याताय Sy. विख्यातम्। सर्वत्राथवा स्तुवते इत्याद्यास्तादर्थ्ये स्वार्थे एव चतुर्थ्यः। अर्चतिस्तु सामर्थ्यादुच्चारणार्थः Sk.

११. पो M.

१२. प्र is omitted by P. प्रकर्षेण सम्पादयत Sy. प्रापयत। दत्तेत्यर्थः Sk.

१३. व इति प्रथमार्थे द्वितीया। पुत्रस्य पौत्रस्य चायं प्रतिनिर्देश ऋत्विजां वा। हे मदीयाः पुत्राः पौत्राश्च ऋत्विजो वा यूयम् Sk.

१४. महं M. प्रौढम् Sy.

१५. स्तोत्रम् Sy. सोमलक्षणमन्नम् Sk.

१६. आघोषयोग्यम् Sy. स्तोमार्हम् Sk.

१७. इन्द्राय। आङ्गूषार्हं is missing in M.

१८. P. reads नमो भवतांगूषार्हमनुशास०

१९. ०साना P. बलमिवाचरते। अतिबलायेत्यर्थः Sy.

२०. रथन्तरादिसाम। तन्निष्पाद्यतामित्यर्थः Sy. सामवचो मन्त्रलक्षणम् Sk.

२१. यो० M.

२२. पितृविशेषाः . . . पूर्वपुरुषाः Sy.

२३. मार्गज्ञाः Sy. पदमत्र कृत्स्नस्य जगत आश्रयत्वात् कारणात्मोच्यते। तज्ज्ञाः Sk.

२४. गाः Sy. पणिभिरपहृतास्सतीर्गाः . . . प्रतिलब्धवन्तः Sk.

२५. V. Mādhava ignores पूर्वे

इन्द्र॒स्याङ्गि॑रसां चे॒ष्टौ वि॒दत्स॒रमा॒ तन॑याय धा॒सिम्।
बृह॒स्पति॑र्भि॒नदद्रिं॑ वि॒दद्गाः समु॒स्रिया॑भिर्वावशन्त॒ नरः॑ ॥३॥

इन्द्रस्य। इन्द्रस्य। अङ्गिरसाम्। च। प्रेषणे[1] सति। अविन्दत्[2]। सरमा नाम देवमातृस्था-[3] नीया देवानाम्। पुत्रेभ्यो[4] देवेभ्यः। गवात्मकमन्नं[5] ज्ञाते चान्ने गवामावरणम्। शैलम्[6]। बृहस्पतिः[7]। भिनत्[8]। अविन्दच्च[9]। गास्ततः। संवावशन्तैच्छन्[10] कामान् भोक्तुम्। नेतारो[11] देवाः[12]।

स सु॒ष्टुभा॒ स स्तु॒भा स॒प्त विप्रैः॑ स्व॒रेणाद्रिं॑ स्व॒र्यो॒३॑ नव॑ग्वैः।
स॒र॒ण्युभिः॑ फलि॒गमि॑न्द्र शक्र व॒लं रवे॑ण द॒रयो॒ दश॑ग्वैः ॥४॥

स सुष्टुभा।[13] स इन्द्रः। स्तोत्रेण।[14] शोभनेन।[14] सप्तभिः।[15] ऋषिभिः[16] प्रयुज्यमानेनागतबलः।

---

१. सप्तमीनिर्देशाद् वर्तमानेति वाक्यशेषः। इन्द्रेण चाङ्गिरोभिश्च प्रेषिता सतीत्यर्थः Sk.

२. सति। अविन्दत् missing in M. पणिभिर्गिरिदुर्गे निहितं ज्ञातवती लब्धवती वा Sk.

३. देवशुनी Sy.; Sk. देव seems to be unnecessary.

४. स्वपुत्राय Sy. अपत्यभूतस्य सर्वजनस्यार्थाय Sk.

५. ०मेनं P. अन्ननामैतत्। इह तु पयआद्यन्नकारणत्वाद् गोष्ठप्रयुक्ताः पणिभिरपहृताः सतीर्गा इत्यर्थः Sk.

६. अत्तारमसुरम् Sy. दुर्गम् Sk.

७. ०ति P.D. बृहतां देवानामधिपतिः Sy.

८. अवधीत् Sy. V. M. explains विदत् by अविन्दत् By analogy he should have explained भिनत् by अभिनत् unless we suppose that he merely repeats the vedic word without any explanation.

९. तात् P. तेनापहृता गाः...अलभत Sy.

१०. भृशं हर्षशब्दमकुर्वन्। यद्वा गोभिः साधनभूताभिस्तदीयं क्षीरादिकमकामयन्त समगच्छन्तेत्यर्थः Sy. संशब्दनं कृतवन्तः Sk.

११. न० M. मनुष्याकारा देवाः। यथास्वं देवा गा आहुतवन्तो गावोऽपि रम्भाशब्दं कुर्वन्त्यो गृहे प्रविष्टा इत्यर्थः। इन्द्रस्येष्टौ वर्तमानानामिदं सर्वमभवदित्येवमिन्द्रप्राधान्यादैन्द्रत्वस्याविरोधः Sk.

१२. V. Mādhava ignores उस्रियाभिः

१३. य उक्तगुणोऽसि सः Sk.

१४. शोभनस्तोभयुक्तेन Sy. शोभनया स्तुत्या। स एव स्तुतिमात्रेण Sk.

१५. सप्त ह्यत्र मेधातिथिप्रभृतयोऽङ्गिरसो दृश्यन्ते Sy.

१६. कतमैः ? ये एवैते सर्वलोकप्रसिद्धाः सप्तर्षयः।...कीदृशैः ? विप्रैर्मेधाविभिः Sk.

सिंहनादेन[१]। अद्रिम्[२]। स्वरणकुशलः[३] अङ्गिरोभिः[४] सह दरयति[५] तदनुसरणमिच्छन्[६]। दशग्वैरङ्गिरोभिर्वेष्टयितारम्[७]। फलिगं[८] मेघाकारम्। बलमसुरम्[९]। इन्द्र[१०]! शक्र[११]! दारितवानसि[१२]। नवभिर्मासैरङ्गिरस्सु सत्रमासीनेषु केचन पशूनलभन्त दशभिरपरे ततो नवग्वा दशग्वाश्चोच्यन्ते[१३]। यास्कस्त्वाह ——"नवगतयो नवनीतगतयो वा[१४]" इति[१५]।

---

१. उदात्तादिश्रव्यस्वरोपेतेन। यद्वा मन्द्रमध्यमादिस्वरेण Sy.
स्वरशब्द इह स्तोतृवचनः। अन्येन च स्तोत्रा जनेन Sk.

२. ०नार्दि M. ०नाद्रं P.
आदरणीयं, वज्रेण छेत्तव्यमित्यर्थः Sy.
अद्रिं दुर्गं पर्वतं तत्स्थं च फलिगमसुरम् Sk.

३. ०णे P.
सुष्ठु प्राप्यः। यद्वा शब्दनीयः स्तुत्य इत्यर्थः Sy. स्तुत्यः Sk.

४. ०लाः गि M.
अङ्गिरसो द्विविधाः। सत्रयागमनुतिष्ठन्तो ये नवभिर्मासैः समाप्य गतास्ते नवग्वाः।... ये तु दशभिर्मासैः समाप्य जग्मुस्ते दशग्वाः Sy.
नवग्वैः। नवा सर्वदेव श्रमवर्जिता गतिर्येषां ते नवग्वाः। नवनीते वा गतिरभिलाषो येषां ते नवग्वा अङ्गिरसः... तैश्च Sk.

५. दरचति P. I propose to read दारयति Ed. विदारितवान्... व्यदारयः Sk.

६. सरणं शोभनां गतिमिच्छद्भिः Sy.
I propose to read इच्छद्भिः for इच्छन्

७. दनयैरंगि० P. ०सरण ... श्वैर M.

८. बलिन्नं P. फलगं M.
प्रतिफलं प्रतिबिम्बं, तदस्मिन्नस्तीति फलि स्वच्छमुदकम्। तद्गच्छत्याधारत्वेनेति फलिगः। यद्वा व्रीह्यादि फलम्। तदस्मिन् सति भवतीति फलि वृष्टिजलम्। तद् गच्छतीति फलिगः Sy.

९. मेघम् Sy.

१०. इन्द्रः M.　　११. शक्त! Sk.

१२. अभाययः। त्वदीयशब्दश्रवणमात्रेण मेघो बिभेतीत्यर्थः। यद्वा। अद्रिः पर्वतः। अद्यतेऽस्मिन्पटलादिकमिति। फलिगो मेघः।... वलोऽसुरः।... एते त्रयोऽपि त्वदीयशब्दश्रवणमात्रेणाबिभयुरित्यर्थः Sy.

१३. दशग्वैः। दशमासैः सिद्धिं गतत्वाद्दशग्वा भृगव उच्यन्ते। स्वर्य इत्येतेन चास्य सम्बन्धः। भृगुभिश्च स्तुत्यः। यस्त्वं सुष्टुभा स्तुत्यः स्तुतिमात्रेण च सप्तभिश्चान्येन च स्तोत्रा जनेनाङ्गिरोभिश्च भृगुभिश्च स्तुत्यः सोऽद्रिं फलिगं महता शब्देनैव व्यदारय इति समस्तार्थः। अथवा स सुष्टुभा स स्तुभेति तृतीयानिर्देशात् स्तुतः सन्निति वाक्यशेषः। सप्त विप्रैरित्याद्याश्च सहयोगलक्षणास्तृतीयाः। स्वरेण स्वर्य इत्येतावपि स्वृ शब्दोपतापयोरित्यस्योपतापयितृवचनौ। यस्त्वं स्वर्य उपतापयिता शत्रूणां सुष्टुभा स्तुतिमात्रेण च स्तुत्यः सन् सप्तर्षिभिरङ्गिरोभिर्भृगुभिश्च सह स्वरेण शत्रूणामुपतापयित्रा वज्रेण रवेण शब्देन च महताऽद्रिं व्यदा इति Sk.

१४. N. 11. 19.

१५. V. Mādhava ignores सः। रवेण

गृणानो अङ्गिरोभिर्दस्म वि वरुषसा सूर्येण गोभिरन्धः ।
वि भूम्या अप्रथय इन्द्र सानु दिवो रज उपरमस्तभायः ॥५॥

गृणानो अङ्गिरोभिः[1]। उपस्तूयमानः। अङ्गिरोभिः। उपक्षपयितः[2]! विवारितवानसि[3]। उषसा। सूर्येण च सहायाभ्याम्। पशुनिमित्तम्[4]। अन्धकारम्[5]। भूम्याश्च। उच्छ्रितं देशम्। व्यप्रथयो[6] विषमां[7] समीचकर्थ[8]। दिवः। लोकस्य। मूलम्[9] अधः स्थित्वा। अस्तभ्नाः[10][11]।

तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः ।
उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्यश्चतस्रः ॥६॥

तदु प्रयक्षतमम्। तत्। एव। पूज्यतमम्। अस्य। कर्म। दर्शनीयस्य[12]। कल्याणतमम्[13]।

१. ०नोऽङ्गि० M.
२. ०त P.
दर्शनीय शत्रूणामुपक्षपयितर्वा Sy.
शत्रूणाम् Sk.
३. वि omitted by P.
व्यनाशय इत्यर्थः Sy.
विवृतमकार्षीः Sk.
४. किरणैः Sy.
रश्मयोऽत्र गाव उच्यन्ते Sk.
५. गवामदर्शनाय यत्पणिभिः कृतं तमस्तत्। सर्वैर्ज्योतिर्भिः प्रकाशमकार्षीरित्यर्थः। अथवा वरित्युषसा सूर्येणेत्येताभ्यामेव द्वाभ्यां सम्बध्यते। गोभिरित्येतत्तु गृणान इत्येतेन सम्बध्यते। गोशब्दश्च स्तुतिवचनः। ... स्तुतिभिः स्तूयमान इत्यर्थः। अथवा गोशब्दः सास्नादिमद्वचन एव। . . . अन्ध इत्यन्ननाम। दुर्गस्थं यत्पणीनामन्नं तदपहृताभिर्गोभिः सह प्रकाशमकार्षीरित्यर्थः। एतस्मिश्चार्थे उषसा सूर्येणेति तृतीया सहयोगलक्षणापि सम्भवति। उषसा सूर्येण च सह विवृतमकार्षीरिति Sk.
६. विशेषेण विस्तीर्णमकरोः Sy.
पणीनां स्वभूताया भूमेः वि अप्रथयः विगतप्रथनमकरोः। . . . पणीनामुच्चानि गिरिदुर्गाणि पातितवानसीत्यर्थः Sk.
७. विसमा P. ०मा D. M.
The correct reading should be विषमम्
८. स्वमीचकत्थ M. समि० P.
९. उपरि भवतीत्युपरः। दिव उपरिभवो लोको महआख्यस्तपआख्यो वा। तमपि त्वमेव Sk.
१०. ०भ्नः P.
यथान्तरिक्षलोकस्य मूलं दृढं भवति तथाकार्षीरित्यर्थः Sy.
स्तभ्नातिः प्रतिबन्धार्थः। सोऽपि त्वत्प्रतिबन्ध एवेत्यर्थः Sk.
११. V. Mādhava ignores इन्द्र
१२. शत्रूणामुपक्षपयितुः Sk.
१३. ०णमम् P. एकवाक्यताप्रसिद्धर्यर्थं यद्यपि तथापीत्येतद् द्वयमप्यत्राध्याहर्तव्यम्। यद्यपि चारुतमं शोभनतममन्यदस्ति दंसः कर्मासुरवधादि तथापि त्रैलोक्यस्थितिहेतुत्वात्तदेव प्रयक्षतममस्येति Sk.

अस्ति। कर्म किं तदित्याह—उपह्वर[१] इति, चतस्रः। दिशः। मधूदकाः[२]। नदीः[३]। मनुष्यसमीपे[४]। यत्। अदुहद्[५] दिग्भ्यो[६] नदीर्मनुष्यान् प्रापयति।

**द्विता वि वव्रे सनजा सनीळे अयास्यः स्तवमानेभिरर्कैः।**
**भगो न मेने परमे व्योमन्नधारयद्रोदसी सुदंसाः ॥७॥**

**द्विता वि वव्रे**[७]। द्वैधम्[८]। विवव्रे[९]। चिरजाते[१०]। एकाधारे[११] द्यावापृथिवी। स्तूयमानैः[१२]। स्तोत्रैरिन्द्रः[१३]। गमनकुशलः[१४]। भगः। इव। अहोरात्रे[१५]। परमे। व्योम्न्यन्तरिक्षे[१६]। द्यावापृथिव्यौ। धारयति[१७]। सुकर्मा।

---

१. ह्वरो भक्षः। तस्य समीपे उपह्वरे। हविर्भक्षणानन्तरं सोमपानानन्तरं चेत्यर्थः। अथवोपह्वरोऽन्तरिक्षप्रदेशः। तत्र यदुपराः। मेघनामैतत्। जात्यपेक्षं चात्र स्त्रीलिङ्गम्। मेघजातिः Sk.
२. मधुरोदकाः Sy.
३. नद्यः प्रधानभूता गङ्गादिनदीः Sy. नद्यः शब्दकारिणीश्चतस्रश्चतुसंख्याकाः। अथवा चतस्र इति कर्मप्रवचनीययोगलक्षणा द्वितीया। तच्छ्रुतेश्च कर्मप्रवचनीयः प्रतिशब्दोऽध्याहार्यः। चतस्रो दिशः प्रति। चतसृष्वपि दिक्ष्वित्यर्थः Sk.
४. उपह्वर्तव्ये गन्तव्ये पृथिव्याः सम्बन्धिनि समीपदेशे Sy. ५. ०ह् D. अदुदह P. असिञ्चदिति यदेतत् कर्म तदन्येन कर्तुमशक्यत्वात् पूज्यमित्यर्थः Sy. अपिन्वन्। अन्तर्णीतण्यर्थोऽत्र पिन्विर्द्रष्टव्यः। अपिन्वयत्। असेचयत्। क्षारितवानित्यर्थः Sk. ६. दिद्भ्यो P.
७. द्विधा P. ८. द्विधा Sy. द्विताशब्दो द्विधाशब्दस्यार्थे Sk. ९. विवृते अकरोत्। भेदेनास्थापयदित्यर्थः Sy. विशब्दश्चात्रानेकत्वप्रतिपादनमात्रपरः। अनेकधापि वव्रे सम्भुक्तवान् Sk.
१०. प्रचिजा० M. नित्यजाते सर्वदा विद्यमानस्वभावे इत्यर्थः Sy.
११. ०रो M. समानं नीडम् ओको निवासस्थानं ययोस्ते। संलग्ने इत्यर्थः Sy.
१२. गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वद्भिः Sy. V. M. explains स्तवमानेभिः as स्तूयमानैः। The use of the passive for the active voice should be noted. His explanation is not very happy as it makes अर्कैः i.e. स्तोत्रैः the object of praise, whereas they are a means or an instrument of praise. I propose therefore to read स्तुवद्भिः for स्तूयमानैः। स्तुवद्भिः as an epithet of अर्कैः will yield better sense. १३. स्तुतिरूपैर्मन्त्रैः Sy. १४. यासः प्रयत्नः। तत्साध्यो यास्यः। न यास्योऽयास्यः। युद्धरूपैः प्रयत्नैः साधयितुमशक्य इत्यर्थः। यद्वाऽयास्यः पञ्चवृत्तिर्मुख्यप्राणः। स हि . . . मुखाद् अयते गच्छति निष्क्रामति। तदुपासकोऽप्यङ्गिरा उपचाराद् अयास्य उच्यते। अथवा। अयमास्ये मुखे वर्तते इत्ययास्यः। . . . पूर्ववदुपासकोऽप्ययास्यः Sy.
१५. मननीये। . . .यद्वा मेनेति स्त्रीनाम। . . . स्त्रीरूपमापन्ने रोदसी इन्द्रोऽपुष्यदित्यर्थः Sy. १६. विविधरक्षणे नभसि वर्तमानः Sy. १७. अपोषयत् Sy.

सनाद्दिवं परि भूमा विरूपे पुनर्भुवा युवती स्वेभिरेवैः ।
कृष्णेभिरक्तोषा रुशद्भिर्वपुर्भिरा चरतो अन्यान्या ॥८॥

सनाद्दिवम्[1] । चिरादारभ्य । दिवम् । भूमिं[2] च । लक्षीकृत्य[3] । नानारूपे[4] । पुनः पुनर्जायमाने । तरुणे[5] । स्वैः । गमनैरहोरात्रे[6] चरतः[7] । रात्रिः । कृष्णैः[8] । वर्णैश्चरति[9] । श्वेतैः[10] । अहरेवम्[11] । अन्याऽन्याचरत[12] एकस्या उपर्यन्या तस्या उपर्यन्येति ।

सनेमि सख्यं स्वपस्यमानः सूनुर्दाधार शवसा सुदंसाः ।
आमासु चिद्दधिषे पक्वमन्तः पयः कृष्णासु रुशद्रोहिणीषु ॥९॥

सनेमि सख्यम्[13] । पुराणम् । सख्यम्[14] । शोभनानि कर्माणीच्छन् । शवसा[15] । स्तूयमान इतीन्द्रं[16]

---

१. ०वः D. २. ०मीं D.
भूमशब्दोऽत्र भूतजातवचनः। . . . सर्वं भूतजातम् Sk.
३. लक्ष्यी० M. ४. विषमरूपे Sy.
५. रात्र्युषसोः सर्वदैकरूप्यात् Sy. जरावर्जिते। नित्ये इत्यर्थः Sk.
६. दमनैः D.
आत्मीयैर्नियतकालैरागमनैः Sk.
७. पर्यावर्तेते Sy.
८. अन्धकाररूपैर्वर्णैरुपलक्षिता Sy. अनुरक्ता Sk.
९. तमोलक्षणैर्ज्योतिर्लक्षणैश्च रूपैः Sk.
१०. दीप्यमानैः. . .स्वशरीरभूतैस्तेजोभिरुपलक्षिता Sy. दीप्तैः शुक्लैरनुगता Sk.
११. श्वेतैश्चैतैरह० M.
१२. अन्य अभ्या० P.
परस्परव्यतिहारेण . . . आवर्तेते Sy. रात्रिर्हि तमोलक्षणेन रूपेणोषसं प्रत्यागच्छति,उषःकालेऽपि तमसोऽनुगमनदर्शनात्। उषा अपि ज्योतिर्लक्षणेन रूपेण रात्रिं प्रत्यागच्छति। रात्रावपि कियतश्चित् प्रकाशस्यानुगमनदर्शनादिति। चिरादेव प्रभृति विरूपत्वादिगुणे रात्र्युषसौ कृष्णशुक्लाभ्यां तमोज्योतीरूपाभ्यामनुगता नियतकालैरात्मीयैरागमनैर्दिवं सर्वं च भूतजातमन्योन्यं च प्रत्यागच्छत इति समस्तार्थः। एवमियमृक् स्वरूपेणैव रात्र्युषःकर्मकीर्तनमात्ररूपत्वाद्रात्र्युषोदेवता प्राप्नोति। ऐन्द्रं चेदं सूक्तम्। अतो यत्तच्छब्दावध्याहृत्य पूर्वयर्चैकवाक्यता योज्या परया वा। ये विरूपत्वादिगुणे रात्र्युषसौ दिवं भूतजातमन्योन्यं च प्रत्यागच्छतस्तेऽप्यधारयन् न केवले रोदसी इत्येवं पूर्वयैकवाक्यता। परया तु ये विरूपत्वादिगुणे रात्र्युषसौ दिवं भूतजातमन्योन्यं च प्रत्यागच्छतस्ताभ्यां सहेति Sk.
१३. यजमानानां सखित्वम् Sy. १४. स्वपः शोभनं कर्म तदिवाचरन्।...शवसो बलस्य सूनुः पुत्रः। अतिबलवानित्यर्थः Sy. शोभनानि कर्माणि येषां ते स्वपाः। स्थिरप्रकृतयोऽत्यन्तमहात्मानः। तद्वदाचरन् स्वपस्यमानः Sk.
१५. आत्मीययोर्मातापित्रोः सूनुः पुत्रः।... शवसा स्वेन बलेन सुदंसाः सुकर्मा इन्द्रः। रात्र्युषोभ्यां सह पूर्वप्रवृत्तं सख्यं न जहामीत्येवमिह व्याख्यातव्यम् Sk.
१६. ०ना P.

बलवत्तयाह "ओजसो जातमुतमन्य एनम्" इति मन्त्रः। सुकर्मा[1] त्वम्। आर्द्रासु[2]। कृष्णासु[3]। रोहिणीषु[4]। च। गोषु[5]। पक्वम्[6]। श्वेतं च[7]। पयः[8]। अन्तः[9]। धारयसि[10]।[11][12]

**सनात्सनीळा अवनीरवाता व्रता रक्षन्ते अमृताः सहोभिः।**
**पुरू सहस्रा जनयो न पत्नीर्दुवस्यन्ति स्वसारो अह्रयाणम् ॥१०॥**

**सनात् सनीळाः**[13]। चिरादारभ्य। पाणेरेकस्मादुत्पन्नाः[14]। अङ्गुलयः[15]। सुश्लिष्टाः[16]। कर्माणि[17]। रक्षन्ते। कार्यकरणवेगैः[18]। ग्लानाः[19]। पुरूणि[20]। सहस्राणीन्द्रार्थम्। पुत्रजनयः[21]। पत्न्यः[22]। इव पुमांसम्। अह्रीतयानमिन्द्रम्[23]। अङ्गुल्यः। परिचरन्ति[24]।

---

१. ०याभ M.
२. ०तन्य एक० P. D. RV. X. 73. 10.
३. शोभनयागादिकर्मयुक्तः Sy. दीप्यमानम् Sy. ४. अपरिपक्वासु Sy. अपक्वास्वप्यभक्षयोग्यास्वपि सतीष्वित्यर्थः Sk.
५. Omitted by D.
६. लोहितवर्णासु Sy. रोहितासु च Sk.
७. P. and D. add भागेषु च before गोषु ८. भक्षयोग्यम् Sk.
९. श्वेतवर्णम् Sy. १०. क्षीरम् Sk.
११. वृष्टिद्वारेण धारयसि। . . . सर्वत्र कारणानुरूपं कार्यम्। भवतस्त्वेतन्माहात्म्यादभक्ष्यासु कृष्णरोहितासु च गोषु भक्ष्यं शुक्लं च पय इति Sk.
१२. V. Mādhava ignores दाधार
१३. ०ळा M.
१४. समाननिवासस्थानाः Sy. समानमिन्द्राख्यं स्थानं यासां ताः सनीळाः। केवलेन्द्रविषया इत्यर्थः। काः पुनरेताः? स्तुतयः Sk.
१५. अवतेः प्रीत्यर्थस्येदं रूपम्। प्रीतिजनन्यः Sk.
१६. वातं गमनं तद्रहिता एकपाण्यवस्थानात् Sy. अगतपूर्वा अन्यत्र स्तुत्ये Sk.
१७. इन्द्रसम्बन्धीनि कर्माणि Sy. वृत्रवधादीनीन्द्रस्य कर्माणि Sk.
१८. आत्मीयैर्बलैः Sy. बलैः सह Sk.
१९. पुनः पुनःकरणेऽप्यालस्यरहिताः Sy. V. M. seems to explain अमृताः as ग्लानाः। I think the correct reading should be अग्लानाः। अमृता नित्याः। . . . अकीर्त्यमानानि हीन्द्रस्य कर्माणि च बलानि च विस्मरणाद्विलयं गच्छेयुः। तानि कीर्तयन्त्यः स्तुतयो रक्षन्तीत्युच्यते Sk.
२०. पुराणि M. बहूनि Sy.; Sk.
२१. जनय इति देवानां पत्न्य उच्यन्ते। . . . ता इव Sy. जनिशब्दोऽत्र जननीवचनो द्रष्टव्यः। . . . यथा मातरो भार्या वा महता यत्नेन पुत्रं पतिं वा रक्षयेयुस्तद्वदित्यर्थः Sk.
२२. पण्यः M.
२३. अह्रि P. अप्री० M. लज्जारहितम्। प्रगल्भमित्यर्थः। यद्वा अह्रीतयानं प्रशस्तगमनमिन्द्रम् Sy.
२४. अञ्जलिबन्धनेनेन्द्रं प्रीणयन्तीत्यर्थः Sy.

सनायुवो नमसा नव्यो अर्कैर्वसूयवो मतयो दस्म दद्रुः ।
पतिं न पत्नीरुशतीरुशन्तं स्पृशन्ति त्वा शवसावन्मनीषाः ॥११॥

सनायुवः। चिरत्वमाश्रयन्तः[1]। नवतराः[2]। नमस्कारेण। अर्कैश्च[3]। धनकामा मम। मतयः[4] स्तुतयो मत्तः। निर्गच्छन्ति[5] ततः[6]। ताः। पतिम्। इव। पत्न्यः। कामयमानाः। कामयमानम्[7]। त्वाम्। स्पृशन्ति[8]। बलवन्[9]!

सनादेव तव रायो गभस्तौ न क्षीयन्ते नोप दस्यन्ति दस्म ।
द्युमाँ असि क्रतुमाँ इन्द्र धीरः शिक्षा शचीवस्तव नः शचीभिः ॥१२॥

सनादेव। चिरात्। एव। तव। धनानि। हस्ते स्थितानि। नच[10]। नश्यन्ति। नच। न्यूनी-भवन्ति[11]। दर्शनीय! दीप्तिमान्। असि। कर्मवांश्च[12]। इन्द्र! धृष्टः[13]। प्रयच्छ। कर्मवन्[14]! तव। प्रज्ञाभिः[15]। अस्मभ्यम्[16]।

सनायते गोतम इन्द्र नव्यमतक्षद्ब्रह्म हरियोजनाय ।
सुनीथाय नः शवसान नोधाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥१३॥

सनायते[17] गोतम इन्द्र[18]। चिरन्तनत्वमनुपालयते[19]। गोतमः[20]। नोधाः[21]। इन्द्र! तुभ्यम। नवतरम्[22]।

---

१. सनातनमग्निहोत्रादि नित्यं कर्म आत्मन इच्छन्तः Sy. २. स्तुत्यः Sy. अत्रैकवाक्यताप्रसिद्धचर्थं यत्तच्छब्दावध्याहर्तव्यौ। यस्त्वं नमसा नमस्कारेण नव्यः स्तुत्यः . . . तं सनायुवश्चिरकामाः Sk. ३. शस्त्ररूपैर्मन्त्रैः Sy. अर्कैर्मन्त्रैश्च Sk. ४. मेधाविनः Sy. चिरं धनमिच्छन्त्योऽस्मदीयाः स्तुतय इत्यर्थः। यश्च स्तोतॄणां कामः स स्तुतिषु पूर्यते Sk. ५. त्वां दद्रुर्बहुना प्रयासेन जग्मुः Sy. गच्छन्ति त्वा Sk.
६. तैः प्रयुक्ता मनीषाः स्तुतयः Sy.
७. यथा पतिं सम्भजन्ते तद्वत् Sy.
८. प्राप्नुवन्ति Sy. त्वया सह सम्बध्यन्त इत्यर्थः Sk. ९. V. Mādhava ignores दस्म १०. Omitted by M. स्तोतृभ्यो दत्तेऽपि त्वद्धस्तगतं धनमुपक्षयं न प्राप्नोति, अपितु वर्धते Sy.
११. क्षयस्य समीपीभवन्ति दस्म। तव यानि धनानि तानि नेदानीं क्षीयन्ते। नाप्यागामिनि काले इत्यर्थः Sk.
१२. लोकरक्षणहेतुभूतकर्मयुक्तोऽसि Sy.
१३. बुद्धिमान् . . . वा Sy. प्रज्ञावांश्च Sk.
१४. प्रज्ञावन् वा Sk. १५. प्रज्ञानाभिः P. त्वदीयैः कर्मभिः Sy. कर्मभिर्यागाख्यैर्हेतुभूतैः। यस्मात्त्वां यजामहे तस्मादित्यर्थः Sk. १६. ०भि . . . भ्यं M. ०भ्यः P.
१७. ०वते M. १८. गोतमिन्द्रः M.
१९. ०तो M. नित्य इवाचरति सर्वेषामाद्यो भवति Sy. चिरं कामयमानाय Sk.
२०. गोतमस्य ऋषेः पुत्रः Sy. सोऽयमित्यभितम्बन्धात् पितृशब्दोऽयं पुत्रे प्रयुक्तः। गोतमपुत्रः Sk. २१. ०धां M.
२२. अन्यैः स्तोतृभिरकृतपूर्वम् Sk.

स्तोत्रम्[1] । अकरोत्[2] । अश्वान्[3] यो योजयति गमनाय । शोभननयनाय[4] । अस्माकम्[5] । बलाचरणशील[6] !
अन्त्योपसंहारार्थोपान्त्यया[7] धनमाशास्ते धनार्थाः[8] स्तुतय इत्युवाच "सनायुवो[9] नमसा[10]" इति[11] ।

## I.63.

**त्वं म॒हाँ इ॑न्द्र॒ यो ह॒ शुष्मै॒र्द्यावा॑ जज्ञा॒नः पृ॑थि॒वी अमे॑ धाः ।**
**यद्ध॑ ते॒ विश्वा॑ गि॒रय॑श्चि॒दभ्वा॑ भि॒या दृ॒ळ्हासः॑ कि॒रणा॒ नैज॑न् ॥१॥**

**त्वं महान्** । त्वम् । महान्[12] । इन्द्र ! यः । खलु[13] । बलैः[14] । द्यावापृथिवी । प्रादुर्भवन्[15] । भये[16] ।
अधाः[17] । यस्मात्[18] । च । तव । गिरयः[19] । अपि[20] । व्याप्तेन[21] । महता । भयेन[22] । दृढा अपि[23] । रश्मयः । इव[24] ।
चलनस्वभावाः[25] कम्पन्ते स त्वं महानिति ।

---

१. स्तोकम् M. एतत्सूक्तरूपं स्तोत्रम् Sy.
२. व्यत्ययेन चोत्तमपुरुषस्य स्थाने प्रथमपुरुषः Sk. ३. अश्वौ M.
४. सुष्ठु नेत्रे Sy. सुनीथाय सुस्तुतये च Sk.
५. प्रथमैकवचनस्य स्थाने द्वितीयाबहुवचनमेतत् । अहम् Sk.
६. बला omitted by M.
हे शवसान शत्रून् प्रति गन्तः ! बलवतामाचारवन् वा Sk.
७. ०वान्त्य० M.
८. P. adds न before धनार्थाः । ०र्थ M. ९. ०युपो M.
१०. RV. i. 62. 11.
११. Ms. D. puts the figure ॥६२॥ here to indicate the end of the sixtysecond hymn. No such number is given in P. and M.
१२. गुणैः सर्वाधिको भवसि Sy.
१३. हशब्दः पदपूरणः Sk.
१४. शत्रूणां शोषकैरात्मीयैर्बलैः Sy. आत्मीयैः Sk. १५. प्रादुर्भ . . . M.
तदानीमेव प्रादुर्भूतः सन् Sy. जायमानः । जन्मन एव प्रभृतीत्यर्थः Sk.
१६. असुरकृते भये सति । . . . तादृशाद् भयाद् अमूमुच इत्यर्थः Sy.
१७. दधासि । जन्मन एव प्रभृति द्यावापृथिव्योर्भयमुदपीपद इत्यर्थः Sk.
१८. यस्य खलु तव Sy.
यद् यस्य । षष्ठया अत्र लुक् । हः पदपूरणश्चार्थे वा । यस्य ते । विश्वा सर्वाणि भूतानि Sk.
१९. P. adds बाह्वो स्तोता वज्रं स्तुत्या न वज्रेणावधितकर्म before गिरयः This passage properly belongs to the commentary of V. M. on the following stanza.
२०. चिच्छब्दश्चार्थे । पर्वताश्च Sk.
२१. अन्यान्यपि महान्ति यानि सन्ति Sy. अभ्व इति महन्नाम । महता भयेन Sk.
२२. तव सम्बन्धिन्या . . . भीत्या Sy.
२३. गिरीणामिदं विशेषणम् । दृढा अपि सन्तो गिरयः Sk.
२४. यथा सूर्यरश्मय इतस्ततो नभसि कम्पन्ते तद्वत् Sy. यथोदकेऽन्यत्र वाऽऽदित्यस्य रश्मयः कम्पन्ते तद्वत् कम्पन्त इत्यर्थः Sk.
२५. चन० M ०भानवाः P

**आ यद्धरी इन्द्र विव्रता वेरा ते वज्रं जरिता बाह्वोर्धात् ।**
**येनाविहर्यतक्रतो अमित्रान्पुर इष्णासि पुरुहूत पूर्वीः ॥२॥**

आ यद्धरी। यदा[1]। इन्द्र ! विविधकर्माणौ। अश्वौ[2] रथे। योजयसि[3] तदनन्तरमेव[4]। आदधाति[5]। तव। बाह्वोः[6]। स्तोता[7]। वज्रं स्तुत्या। येन वज्रेण। अबाधितकर्मन्[8] ! अमित्रान्[9]। तत्पुरश्च। बह्वीः[10]। प्रेरयसि[11]। पुरुहूत[12] !

**त्वं सत्य इन्द्र धृष्णुरेतान्त्वमृभुक्षा नर्यस्त्वं षाट् ।**
**त्वं शुष्णं वृजने पृक्ष आणौ यूने कुत्साय द्युमते सचाहन् ॥३॥**

त्वं सत्य इन्द्र[13]। त्वम्। सत्यकर्मा[14]। इन्द्र ! धर्षयसि[15]। एतानमित्रान्। त्वम्। महान्[16]।

---

१. यदिति व्यत्ययेन नपुंसकता। यश्च हरी प्रति हे इन्द्र Sk.
२. त्वदीयावश्वौ Sy.
३. रथे योक्तुमागच्छसि वेत्सि वेत्यर्थः Sk.
४. ०न्तामेव P. D. M
५. स्तोत्रेण स्थापयति। स्तोत्रा स्तुते प्रयत्नमन्तरेण वज्रं त्वद्धस्ते दृश्यत इत्यर्थः Sy.
६. बाहुसम्बन्धाद्धस्तावत्र बाहुशब्देनोच्येते। हस्तयोः Sk.
७. स्तुतिभिश्च स्तोता शत्रुवधार्थं हस्ताभ्यां ग्राहयतीत्यर्थः। अथवा भिन्नमेव वाक्यं पूर्वानपेक्षम्। यद्धरी इति तु यच्छब्दो यदाशब्दस्यार्थे। तच्छ्रुतेश्च तदेत्यध्याहर्तव्यम्। यदा रथे हरी योक्तुं प्रत्यागच्छसि तदा ते वज्रं जरिता हस्तयोराधत्त इति Sk.
८. अवधि० P. D. अयाधि० M.
प्रेप्सितकर्मन् ! Sy.
हर्यतिः कान्तिकर्मा। अविगतो हर्यतः कामो यस्य सोऽविहर्यतः कामवान्। क्रतुरिति वज्रनाम। अविहर्यतः क्रतुर्यस्य सोऽविहर्यतक्रतुः। स्तुतीर्हवींषि च प्रति कामयमानचित्त इत्यर्थः। अथवा हर्यतिः प्रेप्साकर्मा। प्राप्तुमशक्यत्वाद् अप्रेप्सनीयः क्रतुः प्रज्ञा कर्म वा यस्य सोऽविहर्यतक्रतुः। तस्य सम्बोधनं हे अविहर्यतक्रतो Sk.
९. ०र्मनमित्राः M. ०त्राः P. D.
१०. बहिः M.
चिरन्तनीः Sk.
११. असुरपुराणि भेत्तुमभिगच्छसीत्यर्थः Sy.
इषु आभीक्ष्ण्ये। हननविषयं चात्राभीक्ष्ण्यमभिप्रेतम्। अभीक्ष्णं हंसीत्यर्थः Sk.
१२. पुरुषहू० P.
पुरः हू० M
पुरुभिर्बहुभिर्यजमानैराहूत ! Sy.
१३. त्वा M
१४. सत्सु भवः सर्वोत्कृष्ट इत्यर्थः Sy.
अविसंवादी Sk.
१५. धर्षयिता तिरस्कर्ता Sy.
साधु चाभिभवितेत्यर्थः Sk.
१६. न is missing M.
ऋभूणामधिपतिस्तेषु कृतनिवासो वा। यद्वा महन्नामैतत्। महान् प्रवृद्धोऽसि Sy.

नृहितः[1]। त्वम्। सहसे सपत्नान्[2]। त्वम्। शुष्णासुरम्। शत्रूणां छेदके[3]। इतरेतरसम्पर्चने[4]। युद्धे। यूने[5]। कुत्साय[6]। दीप्तिमते। सहायभूतः[7]। हतवानसि।

**त्वं ह त्यदिन्द्र चोदीः सखा वृत्रं यद्वज्रिन्वृषकर्मन्नुभ्नाः।**
**यद्ध शूर वृषमणः पराचैर्वि दस्यूँर्योनावकृतो वृथाषाट् ॥४॥**

त्वं ह त्यदिन्द्र[8]। त्वम्। खलु[9]। एतत्[10]। अचूचुदः[11]। सखा सन्[12] सख्युः[13] कुत्सस्य। वर्तयितारं[14] शुष्णम्। यदा। वज्रिन्! वर्षणशीलकर्मन्[15]! तेजोभिर्वाधकैः। पूरितवानसि[16]। यदा। खलु[17]। शूर[18]! वर्षणपरमनस्क[19]! कुत्सस्य[20]। शत्रून्। पराचीनम्[21]। कुत्सावासे[22]। विकृत्तवानसि[23]। अनायासेन

---

१. नृमितः M. नरेषु साधुः नरेभ्यो वा। नराणां चानुग्रहपर इत्यर्थः Sk.

२. ०त्राः M. शत्रूणामभिभविता हन्तेत्यर्थः Sy. असुराभिभवनशीलः Sk.

३. ०कम् M. वर्जनयुक्ते। सङ्ग्रामे हि वीराः पुरुषाः. . . हिंस्यन्ते Sy. वृजने ऋग्भिर्वर्जनीये। बलनाम वा वृजनशब्दः। सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः Sk. ४. ०वर्चं० P. सम्पर्चनीये वीरैर्योद्धुं प्राप्तव्ये Sy. शूरैः सम्पर्चनीये Sk. ५. आने P. ०ने is missing M.

६. तादर्थ्ये एताश्चतुर्थ्यः। यूनश्च दीप्तिमतश्च कुत्सनाम्न ऋषेरर्थाय Sk.

७. सचा सह कुत्सेनैव मरुद्भिर्वाऽहन् हतवानसि Sk. ८. त्या० D.

९. हशब्दः पदपूरणःSk. १०. तत्प्रसिद्धं धनं जयलक्षणं यशो वा Sy. त्यत् तदा Sk.

११. वृत्रवधाय चोदितवानसि Sk.

१२. द्वितीयाबहुवचनस्य स्थान इदं प्रथमैकवचनम्। सखीन् मरुतः। अथवा प्रत्यक्षकृतत्वान्मन्त्रस्य सखेत्येतदव्यतिरिक्तप्रातिपदिकार्थप्रथमान्तं यत्तच्छब्दावध्याहृत्यैकवाक्यतान्नेयम्। यस्त्वं मरुतां सखा स चोदितवानसि। कम् ? सामर्थ्यान्मरुतः Sk.

१३. खलु। एतत्। अचूचुदः। सखा सन् omitted by M.

१४. सर्वस्य धनस्यावरीतारम् Sy.

१५. पर्वण० P. ०शीलं कर्म M. सर्वदैव वृष्टिकारिन्! इत्यर्थः Sk.

१६. पुरि० P. पूरयित० M. कुत्सस्य शत्रुम्. . . अहिंसीः Sy. उभ उम्भ पूरणेऽन्यत्र। इह तु सामर्थ्याद्विधार्थः। हतवानसि Sk.

१७. च Sk.

१८. यदा। खलु। शूर missing in M. शत्रूणां प्रेरक! Sy.

१९. कामाभिवर्षकमनस्केन्द्र! Sy.

२०. यदा खलु. . .वीरैर्मिश्रणीये सङ्ग्रामे . . .कुत्सस्योपक्षपयितॄन् अन्यान् शत्रून् . . .परागमनैः. . .पराङ्मुखा यथा भवन्ति तथा व्यच्छिनः। तदानीं कुत्सः सर्वं यशः प्राप्नोदित्यर्थः Sy.

२१. ०शीनं M. पराचैः। . . .परागमनैः। तदीयस्थानप्राप्तिमात्रेणैवेत्यर्थः Sk.

२२. स्वस्मिन्नेव स्थाने स्थितवान् Sk.

२३. पिक० P. विकर्त० D. वानसि is missing M. कृन्ततेर्वधकर्मण इदं रूपम्। विविधं हतवानसि Sk.

शत्रूनभिभवन्[1] तदा शुष्णं तत्सहायांश्चाचूचुद[2] इति।[3]

**त्वं ह त्यदिन्द्रारिषण्यन्दृळ्हस्य चिन्मर्तानामजुष्टौ।**
**व्य१स्मदा काष्ठा अर्वते वर्घनेव वज्रिञ्छ्नथिह्यमित्रान् ॥५॥**

त्वं ह त्यत्। त्वम्। एतत्।[4] इन्द्र! अहिंसन्।[5] दृढम्।[6] अपि पुरुषम्।[7] मनुष्याणाम्।[8] अप्रीतौ[9] न हंसि[10] मनुष्यहितमित्यर्थः स त्वमद्य। अस्माकं युद्धे प्रवेशार्थम्।[11] अश्वानाम्।[12] दिशस्त्वमेतत्। आ वि वः[13] प्रवेशयाश्वान् सङ्ग्राममध्य इत्यर्थः। स त्वम्। घनेन[14] लोहपिण्डमिव। अमित्रान्। श्नथिहि[15] कुरु नानादिक्कानि[16]ति[17]।

---

१. अव्यतिरिक्तप्रातिपदिकार्थप्रथमान्तत्वाद् यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया। यस्त्वं वृथाषाड् अयत्नेनैवाभिभविता स यदा दस्यून्योनौ व्यकृत इति Sk.

२. ०श्चापूद M.

३. V. Mādhava ignores इन्द्र

४. य उक्तगुणस्त्वं त्यत्। व्यत्ययेनात्र नपुंसकता। स त्वं हे इन्द्र Sk.

५. ०सं P. अहिस M.
अस्मान्।...अस्मद्धिंसापरिहारार्थमित्यर्थः Sk.

६. ०सनूढम् D.
दृढस्यापि मेघस्य वृष्टिनिरोधेन Sk.

७. ०ष P.

८. स्तोतॄणामस्माकं शत्रुभिः...अप्रीतौ सत्याम्।...यद्वा मर्तानां मनुष्याणां मध्ये यस्मिन् कस्मिंश्चित्तवाप्रीतौ सत्यां तस्य शत्रोर्दृढस्यापि... रेषणं हिंसनमनिच्छन् वर्तसे। यस्मिंस्तु कुत्सादौ प्रीतिरस्ति तस्य शत्रुवधं चकृषे Sy.
मर्तानामजुष्टावप्रीतौ वर्तमानस्य स्वभूताः Sk.

९. Omitted by P.

१०. हनंसि P.

११. षष्ठ्यर्थे पञ्चम्येषा। अस्माकं स्वभूताय Sk.

१२. ०ना P.
अस्मदीयाश्वाय गन्तुं ... दिशः ... समन्तात् ... विवृताः कुरु। यथा सर्वासु दिक्ष्वस्मदीया अश्वाः प्रतिरोधमन्तरेण गच्छन्ति तथा कुर्वित्यर्थः Sy.
आ मर्यादार्थोऽयम्। मर्यादया काष्ठा अर्वतेऽश्वाय। अश्वग्रहणञ्चात्र कृत्स्नस्य द्विपदश्चतुष्पदश्चोपलक्षणार्थं द्रष्टव्यम्। यावत् किञ्चिदस्माकं स्वभूतं द्विपाच्चतुष्पाच्च सर्वस्यार्थायेत्यर्थः Sk.

१३. ०व D. आपिवः P. ०नाम is missing M. विवः। विवृणु। प्रकाशीकुरु। पातयेत्यर्थः Sk.

१४. घनेन D. M.
कठिनेन पर्वतेनेव वज्रेण Sy.
यथा घनेन लोहकारो लोहं हन्ति तद्वत् Sk.

१५. अथिहि D.
शाधिहि P.
श्नथय जहीत्यर्थः Sy.
जह्यस्मदीयान् शत्रून् Sk.

१६. ०का० M.

१७. V. Mādhava ignores ह

त्वां ह त्यदिन्द्रार्णसातौ स्वर्मीळ्हे नर आजा हवन्ते ।
तव स्वधाव इयमा समर्य ऊतिर्वाजेष्वतसाय्या भूत् ॥६॥

त्वां ह त्यदिन्द्र। त्वाम्। खलु। एतत्। इन्द्र![1] उदकस्य दातरि।[2] सर्वस्य सेचके।[3] मनुष्या मेघैः सह युद्धे[4] तदर्थम्। हवन्ते।[5] तव। अन्नवन्![6] इयम्।[7] ऊतिः।[8] युद्धेषु![9] समाश्रयणीया[10] समनुष्ये प्रदेशेऽस्मद्रक्षणाय। अभूत्।[11][12]

त्वं ह त्यदिन्द्र सप्त युध्यन्पुरो वज्रिन्पुरुकुत्साय दर्दः ।
बर्हिर्न यत्सुदासे वृथा वर्गंहो राजन्वरिवः पूरवे कः ॥७॥

त्वं ह त्यदिन्द्र।[13] त्वम्। एतत्।[14] इन्द्र! पुरुकुत्साय[15] ऋषये।[16] सप्त। पुरः।[17] युध्यन्।[18]

---

१. तं प्रसिद्धम्।...अर्णानां गन्तॄणां युद्धे प्रवृत्तानां पुरुषाणां सातिर्लाभो यस्मिन् ... यद्वा अर्णस उदकस्य सातिर्लाभो यस्मिन् वृत्रादियुद्धे तस्मिन्नित्यर्थः। वृष्टिनिरोधकेन वृत्रेण सह वर्षणार्थं तव यद्युद्धं तत्र स्तोतारस्त्वां प्रोत्साहयन्तीति भावः Sy.
त्वामित्येतेन सामानाधिकरण्याद् द्वितीयास्थाने प्रथमा। व्यत्ययेन चात्र नपुंसकता। य उक्तगुणस्तं त्वाम् Sk.

२. अर्ण उदकम्। तत्सम्भजनवेलायाम्। मेघवधोत्तरकालमुदकदानवेलायामित्यर्थः Sk.	३. चेके P.
मीळ्हमिति धननाम। सुष्ठ्वरणीयं धनं यस्मिन् Sy.
स्वर्मीळ्हे उदकार्थे च मेघेन सह सङ्ग्रामे Sk.

४. आजा अन्यस्मिंश्च सङ्ग्रामे हवन्ते। उदकसम्भजनवेलायां दानार्थमुदकार्थे सङ्ग्रामे युद्धार्थमन्यस्मिंश्च साहाय्यार्थमाह्वयन्तीत्यर्थः। य ईदृशोऽसि तं ब्रूमः Sk.	५. हतवान् ते P.
त्वामेव।...योद्धुकामाः पुरुषाः सहायार्थम् ... आह्वयन्ति Sy.

६. ०पन् P.	बलवन् वा Sy.

७. इयुम् P.	८. पालनम् Sk.

९. सङ्ग्रामेषु यैषा ऊतिः... योद्धृभिः प्राप्तव्या भवति Sy.
वाजेषु। निमित्त एषा सप्तमी। प्रयोजनस्य च निमित्तत्वेन विवक्षा। समर्य इत्येतेन चास्य सम्बन्धः। अन्नेषु च यः सङ्ग्रामः। अन्नार्थो यः सङ्ग्रामस्तत्रेत्यर्थः Sk.

१०. अतसाय्या।... अनुपक्षीणा सन्ततगामिनी वा Sk.

११. भवतु Sy.
भवतु। यदेतदन्नार्थसङ्ग्रामे प्रवृत्तं पालनमेतदक्षीणं सततगामि वा भवत्वित्यर्थः। कस्य? सामर्थ्यादस्माकं स्तोतॄणां वा Sk.

१२. This stanza is missing in M.

१३. त्वां M.

१४. ताः Sy.	१५. पुरुषकु० P.

१६. ऋर्षये P.
पुरुकुत्सनाम्नो राज्ञोऽर्थाय Sk.

१७. तदीयानि सप्तसंख्यानि नगराणि Sy.
असुराणां स्वभूताः Sk.

१८. तदीयशत्रुभिः सह युद्धं कुर्वाणः Sy.
असुरैः सह Sk.

दारितवान्[1] असि किञ्च[2]। सुदासे राज्ञे[3] तदर्थम्। अंहोरसुरस्य[4]। यद्धनम्[5]। बर्हिः[6]। इव। अनायासेन। अच्छिनस्तत्[7]। धनम्। राजन्[8]! पूरवे पूरयते[9]। कृतवान्[10] असि।[11]

**त्वं त्यां न॑ इन्द्र देव चि॒त्रामिष॒मापो॒ न पी॑पयः॒ परि॑ज्मन्।**
**यया॑ शूर॒ प्रत्य॒स्मभ्यं॒ यंसि॒ त्मन॒मूर्जं॒ न वि॒श्वध॒ क्षर॑ध्यै ॥८॥**

त्वं[12] त्यां न इन्द्र। त्वम्। तत्। अन्नम्[13]। अस्माकम्। चित्रम्[14]। आपः[15]। इव। पीपयः[16]। परितो गमने[17]। ययेषा[18]। शूर! त्वम्। आत्मानम्[19]। अस्मभ्यम्। अन्नम्। इव[20]। सर्वदा कामानाम्। क्षरणाय[21]। प्रतियच्छसि[22]। इन्द्र! तव यागार्थं[23] वर्धयान्नमिति[24]।

---

१. ध्यन्। दारित is missing M. अभैत्सीरित्यर्थः Sy. नाशितवान् Sk.
२. ०ञ्चि P.
३. षष्ठ्यर्थे चात्र चतुर्थी। सुदासो राज्ञः Sk.
४. ०ह्योतर० P. अंहुशब्दस्यांहःपर्यायस्य द्वितीयार्थे षष्ठी। अंहः पापम् Sk.
५. यद् यः सुदासे Sk.
६. दर्भानिवामूलात् Sk.
७. ०न्न० D. M. भिन्नवानसि Sk.
८. राजत् D. राज M. दीप्त ईश्वर वा Sk.
९. पूरकते P. त्वां हविषा पूरयते Sy. धनं पूरवे राज्ञे Sk.
१०. कः अकार्षीः Sy. दत्तवानित्यर्थः Sk.
११. V. Mādhava ignores ह। वज्रिन्
१२. त्व P. १३. सोमलक्षणमन्नम् Sk.
१४. पूजनीयां विचित्रां वा Sk.
१५. चित्रम्। आपः। missing in M. यथा . . . वृष्ट्युदकानि भूम्यां वर्षणेन प्रवर्धयसि तद्वत्। यद्वा भूमौ वर्तमानानस्मान् यथाऽपः पाययसि तद्वच्चित्रामिषमपि पाययेति भावः Sy. यथा वसतीवर्येकधना आपो वर्धयन्ति तद्वत् Sk.
१६. पि० P. ०य D. वीचयः M. प्रावर्धयः Sy. अवर्धयः Sk.
१७. परितो व्याप्तायां भूमौ . . . यथा सर्वा भूमिरन्नेन परिपूर्णा भवति तथा कुर्वित्यर्थः Sy. सर्वतो गच्छन्। यत्र तत्र वर्तमान इत्यर्थः Sk.
१८. ययेषा M. यया निमित्तभूतया Sk.
१९. जीवम् Sy.
२०. उदकम्। . . . यथाऽस्मभ्यं बहुलमुदकं प्रयच्छसि तद्वत्प्राणधारणरूपं जीवनमपि प्रयच्छसीति भावः Sy. ऊर्जं न यथा महता यत्नेन कञ्चित् क्वचिद् व्यवस्थापयेत् तद्वत् Sk.
२१. कथं नाम सर्वदा यजत्स्वस्मासु त्वदर्थः सोमः क्षरेदित्येवमर्थमित्यर्थः Sk.
२२. प्रतिबध्नासि। . . . आत्मानम्। क्व? सामर्थ्याद् वेद्याम्। यामस्मदनुग्रहार्थं वा पातुमस्मदीयायां वेद्यामात्मानं व्यवस्थापयसीत्यर्थः Sk.
२३. ०यार्त्थमिति P.
२४. V. Mādhava ignores देव

अकारि त इन्द्र गोतमेभिर्ब्रह्माण्योक्ता नमसा हरिभ्याम् ।
सुपेशसं वाजमा भरा नः प्रातर्मक्षू धियावसुर्जगम्यात् ॥६॥

अकारि त इन्द्र। अकारि[1]। ते[2]। इन्द्र[3]! गोतमैस्तदेवाह[4]—ब्रह्माणि[5] च[6]। उक्तानि[7]। नमस्कारेण[8] तव सह। अश्वाभ्याम्[9] "आ यद्धरी इन्द्र विव्रता"[10] इत्यश्वयोः स्तुतिः[11]। सुरूपम्[12]। अन्नम्। आभर[13]। अस्मभ्यमिति[14]।

I.64.

वृष्णे शर्धाय सुमखाय वेधसे नोधः सुवृक्तिं प्र भरा मरुद्भ्यः ।
अपो न धीरो मनसा सुहस्त्यो गिरः समञ्जे विदथेष्वाभुवः ॥१॥

वृष्णे। वर्षित्रे[15]। मारुताय शर्धाय[16]। सुधनाय[17] "नञ्सुभ्याम्"[18] इति न दृष्टम् अपिवा सुष्ठु प्रयच्छते। विधात्रे[19]। स्तुतिम्[20]। प्रभर[21] तदेवाह नोधस्त्वं स्तुतिं प्रभर[22]। मरुद्भ्य[23] इत्यात्मानमित्थ-

---

१. स्तोत्रं कृतमित्यर्थः Sy. बहुवचनस्य स्थाने एकवचनम्। अकारिषत Sk.

२. त्वदर्थानि Sk. ३. Missing in M.

४. गन्तृतमैरेतत्संज्ञैर्ऋषिभिः Sy. गोतमपुत्रैरस्माभिः Sk. ५. ०हर् D.

६. ब्राह्मणि M. ब्राह्मणनि P. मन्त्रजातानि Sy. स्तुतिलक्षणानि Sk.

७. आभिमुख्येन . . . । यद्वा मर्यादायामाकारः। यथाशास्त्रं प्रयुक्तानि Sy. मर्यादया Sk. ८. हविर्लक्षणेनान्नेन सह Sy. नमस्कारेण सह हविर्लक्षणान्नेन वा। हविरपि दत्तमित्यर्थः Sk.

९. यन्ध० M. १०. विप्र० D. RV. i. 63. 2. ११. विवृतेभ्यश्चयोः M.

१२. बहुविधरूपयुक्तम् Sy. १३. आहर, देहीति यावत् Sy. १४. V. Mādhava ignores प्रातः। मक्षु। धियावसुः। जगम्यात्। Ms. D. puts the figure ॥६३॥ here to indicate the end of the sixtythird hymn. No such number is given in P. and D.

१५. कामानां वर्षित्रे Sy. वृष्ण इत्यादि गणापेक्षमेकवचनम्। वर्षित्रे गणाय Sk.

१६. ...य M. मरुतां मितराविणां...समूहाय। विभक्तिव्यत्ययः Sy. उत्साहिने Sk.

१७. शोभनयज्ञाय Sy. सुयज्ञाय Sk.

१८. सू० omitting नञ् P. Pāṇini 6. 2. 172. १९. पुष्पफलादीनां कर्त्रे वायौ सति हि पुष्पाणि फलानि चोत्पद्यन्ते Sy. वेधसे प्राज्ञाय Sk.

२०. सुष्ठ्वावर्जकं सुष्ठु प्रवृत्तं वा स्तोत्रम् Sy. सुष्ठु वर्जितां दोषैः स्तुतिम् Sk.

२१. प्रेरय स्तुहीति यावत् Sy. प्रहर। उच्चारयेत्यर्थः Sk.

२२. आत्मन एवायं शरीरात्मनः प्रैषः। हे मदीय शरीरात्मन् Sk.

२३. षष्ठ्यर्थे चतुर्थ्येषा। तच्छ्रुतेश्च गणशब्दाध्याहारः। मरुतां गणाय। अथवा शुद्धोऽपि मरुच्छब्दस्तद्धितार्थे द्रष्टव्यः। एकवचनस्य च स्थाने बहुवचनम्। मारुताय। मरुत्समूहायेत्यर्थः Sk.

मुक्त्वा[१] स्वयमेव तथा[२] करोमीति वदति। उदकानि[३]। धृष्टः[४]। शोभनाङ्गुलिकः[५] कश्चित्। यथोत्सिञ्चत्येवमहमेषाम्[६]। यज्ञे[७]। प्रयोक्तुं योग्याः[८]। गिरः[९]। मनसा। समञ्जे[१०] संश्लेषयामि रचयामीति।

**ते जज्ञिरे दिव ऋष्वास उक्षणो रुद्रस्य मर्या असुरा अरेपसः ।**
**पावकासः शुचयः सूर्याइव सत्वानो न द्रप्सिनो घोरवर्पसः ॥२॥**

**ते जज्ञिरे।** ते। प्रादुरभवन्। द्युलोकात्। दर्शनीयाः[११]। सेक्तारः[१२]। रुद्रपुत्राः[१३]। बलिनः[१४]। अपापाः[१५]। शोधकाः। निर्मलाः[१६]। सूर्या इव। भूतानि[१७]। इव[१८]। विप्रुड्भिर्युक्ताः[१९]।[२०] घोररूपाः[२१] सिंहादयः सत्त्वानीति[२२]।

---

१. ०मानमितं मु० P.
२. कथा P.
३. यथा पर्जन्यो युगपदेव बहुषु प्रदेशेषु बहुशो जलानि वर्षति तद्वत् Sy. अहमप्यन्तरात्माऽपो न यथेन्द्रो वृष्टिलक्षणा अपोऽभिव्यनक्ति तद्वत् Sk.
४. धीमान् Sy. प्रज्ञावान् Sk.
५. ०ली० D. कृताञ्जलिरित्यर्थः Sy. सुवर्णालङ्कृतहस्तवान् Sk.
६. ०थोत्सित्ये० P.
७. एवंभूतोऽहं . . . यज्ञेषु Sy. यज्ञेषु Sk.
८. ०ग्यानि M. आङ् मर्यादायाम्। यथाशास्त्रं प्रयुक्ता भवन्तीत्याभुवः। देवताभिमुखीकरणाय समर्थाः। यज्ञयोग्यैः स्तोत्रैर्मनःपूर्वकं मरुद्गणं स्तौमीति भावः Sy.
९. स्तुतिलक्षणा वाचः Sy.
१०. ०ञ्ज P. D. M. सम्यग्व्यक्ताः करोमि Sy. समभिव्यनज्मि । . . . अहमन्तरात्मा मरुद्गणस्यार्थाय मनसा सह स्तुतीरभिव्यनज्मि। त्वं तु नोधः! शरीरात्मन्! ता उच्चारयेत्यर्थः Sk.
११. ० का M. द्यौरेषां मातेत्यर्थः। यत्त्वैतिहासिकमदितौ काश्यपाज्जन्म मरुतां स्मरन्ति तन्माहाभाग्यादेव जन्मान्तरं द्रष्टव्यम् Sk.
१२. महान्तः Sk.
१३. सा० P. युवान इत्यर्थः Sy. वर्षितार इत्यर्थः Sk.
१४. शत्रूणां निरसितारः Sy. असुराः प्राणवन्तः प्रज्ञावन्तो वा Sk.
१५. ० वाः D. ०प० M.
१६. दीप्ताः Sy; Sk.
१७. यथा परमेश्वरस्य भूतगणा अतिशयितबलपराक्रमास्तत्सदृशा इत्यर्थः Sy. सत्वानः। . . . षणु दान इत्यस्यैतद्रूपम्। . . . दातारः Sk.
१८. नशब्दः . . . पदपूरणः Sk.
१९. ०ट्भि० P. ०ड्रि० D. M.
२०. ०क्त्वा M. वृष्ट्युदकबिन्दुभिर्युक्ताः Sy. वृष्ट्युदकलक्षणेन रसेन रसवन्तः। अथवा सत्वानो नेति नशब्दश्रुतिसामर्थ्याद्यथेन्द्रप्रभृतयो दातारो द्रप्सिनस्तथा द्रप्सिन इत्येवं योजयितव्यम् Sk.
२१. शत्रूणां भयङ्कररूपा इत्यर्थः। यद्वा सत्वानो न घोरवर्पसः। यथा भूतगणा भयङ्कररूपास्तद्वदेतेऽपीत्यर्थः Sy.
२२. ०यो स्स० P.

युवा॑नो रु॒द्रा अ॒जरा॑ अभो॒ग्घनो॑ वव॒क्षुरध्रि॑गावः॒ पर्व॑ताइव ।
दृ॒ळ्हा चि॒द्विश्वा॒ भुव॑नानि॒ पार्थि॑वा॒ प्र च्या॑वयन्ति दि॒व्यानि॑ म॒ज्मना॑ ॥३॥

युवानो रुद्राः । तरुणाः । रुद्रपुत्राः । अमृताः[1] । देवानामभोजयितॄणामयजमानानां हन्तारः[2] । वहन्ति[3] । असृतगमनाः[4] । शिलोच्चया इव । दृढानि[4] । अपि । विश्वानि । भुवनानि[5] । दिव्यान्यपिच[6] । बलेन[7] । प्रच्यावयन्ति[8] ।

चि॒त्रैर॒ञ्जिभि॒र्वपु॑षे॒ व्य॑ञ्जते॒ वक्ष॑स्सु रु॒क्माँ अधि॑ येतिरे शु॒भे ।
अंसे॑ष्वेषां॒ नि मि॑मृक्षुर्ऋ॒ष्टयः॑ सा॒कं ज॑ज्ञिरे स्व॒धया॑ दि॒वो नरः॑ ॥४॥

चित्रैरञ्जिभिः[9] । नानारूपैः । आभरणैः[10] । शोभार्थमङ्गानि[11] । अलङ्कुर्वन्ति[12] । वक्षःसु[13] । रौक्मान्[14] कवचान् । अधियातयन्ति[15] । शोभार्थम्[16] । अंसेषु च । एषाम् । निषक्ता भवन्ति[17] । ऋष्टय आयुधविशेषाः[18] । सह । प्रादुर्भवन्ति[19] । बलेन[20] । दिवः । नेतारः[21] ।

---

१. अम्यताः M. जरारहिताः Sy.
२. यागादिना यस्तेषामभोग्यस्तस्य हन्तारः Sk.
३. ०ति स्तोतॄणामभिमतं प्रापयितुमिच्छन्ति Sy. ववक्षतिर्महत्त्वार्थः । बहुवचनस्य स्थान एकवचनम् । ववक्षवो महान्त इत्यर्थः Sk.
४. अधृतगमनाः परैरनिवारितगतयः ।...दृढाङ्गा एवम्भूता मरुतः Sy. अध्रिगावः । गौर्द्यौः । तत्राधृता अव्यवस्थातारोऽध्रिगावः । अधार्यगमना वाऽध्रिगावः Sk.
५. M. adds पार्थिवानि before भुवनानि । सद्भावं प्राप्तानि Sy. भूतानि यानि न रोचन्ते तानि पार्थिवा पार्थिवानि च Sk.
६. दिवि भवानि च वसूनि दृळ्हा चिद् दृढान्यपि Sy.
७. शोधकेन बलेन Sy. बलेन Sk.
८. प्रचालयन्ति Sy. स्वेभ्यः स्थानेभ्यः प्रच्यावयन्ति दिव्यानि Sk.
९. ०र्जि० M.
१०. रूपाभिव्यञ्जनसमर्थैराभरणैः Sy. अञ्जिर्मरुतां रत्नप्राय आभरणविशेषः । विविधैरञ्जिभिः Sk.
११. ०भयं मंगलानि D. ०भनार्थं० P. ०र्थं मंगलानि M. रूपाय Sy.
१२. स्वशरीराणि ... व्यक्तं कुर्वन्ति Sy.
१३. भुजान्तरेषु Sy. हृदयप्रदेशानां चोपरि Sk.
१४. रौग्मान् P. D. रौमान् M. रोचमानान् हारान् Sy. रुक्म आभरणविशेषः Sk.
१५. अधिशब्द उपरिभावे Sk.
१६. उपरि चक्रिरे Sy. यततिरत्र बन्धने द्रष्टव्यः । आबध्नन्ति Sk.
१७. ०षि० P. स्थिता बभूवुः Sy. निशब्दः प्रकर्षे । मृक्षतिरपि...भ्राजनार्थः । सुष्टु भ्राजन्ते । शोभन्त इत्यर्थः Sk.
१८. तोरणाः शक्तयो वा ऋष्टय उच्यन्ते Sk.
१९. प्रादुर्बभूवुः Sy. सह च ते जाताः Sk.
२०. अन्नेन सह Sk.
२१. तैरायुधैः सहिताः ... नेतारो मरुतः Sy. मनुष्याकाराः Sk.

**ईशानकृतो धुनयो रिशादसो वातान्विद्युतस्तविषीभिरक्रत ।**
**दुहन्त्यूधर्दिव्यानि धूतयो भूमिं पिन्वन्ति पयसा परिज्रयः ॥५॥**

ईशानकृतः[1]। स्तोतॄनीशितॄन् कुर्वाणाः। कम्पयितारः[2]। रिशादसः[3]। वातान्[4]। विद्युतश्च[5] वर्षार्थम्। बलैः[6]। कुर्वन्ति। दुहन्ति[7]। मेघम्[8]। दिव्यान्युदकानि[9]। कम्पयितारः[10]। भूमिमोषधीः[11]। दुहन्ति[7]। उदकेन[12]। परितो गन्तारः।

**पिन्वन्त्यपो मरुतः सुदानवः पयो घृतवद्विदथेष्वाभुवः ।**
**अत्यं न मिहे वि नयन्ति वाजिनमुत्सं दुहन्ति स्तनयन्तमक्षितम् ॥६॥**

पिन्वन्त्यपः[13]। पिवन्ति[14]। उदकानि। मरुतः। सुदानाः[15]। उदकम्[16]। क्षरणवत्[17]। यज्ञेषु[18]। आभवन्त-आन्तरिक्षाद्भ्यो[19] दुहन्ति वर्षोदकमिति "घृतेन नो घृतप्वः[20] पुनन्तु[21]" इति मन्त्रः। अश्वम्[22]। इव।

---

१. ०तॄन् निशि० M.
स्तोतारमीशानं धनाधिपतिं कुर्वाणाः Sy.
स्तोतॄणामीश्वराणां कर्तारः Sk.
२. मेघादीनां कम्पयितारः Sy.
शत्रूणाम् Sk.
३. रिशानां हिंसकानामत्तारः। यद्वा रिशतां हिंसतामसितारो निरसितारः Sy.
हिंसितुः क्षेप्तारः प्रतिहिंसितार इत्यर्थः Sk.
४. पुरोवातादीन् Sy.
५. विद्योतमानास्तडितः Sy.
६. बलेः D. आत्मीयैर्बलैः Sy.
७. रिक्तीकुर्वन्ति। जलरहितानि कुर्वन्तीत्यर्थः ... सिञ्चन्ति Sy.
प्रक्षारयन्ति मेघम् ... सिञ्चन्ति Sk.
८. ऊधःस्थानीयान्यभ्राणि Sy.
९. दिवि भवानि Sy.
दिव्यान्यत्यन्तोत्कृष्टानि Sk.
१०. मेघस्य Sk.
११. द्विमिमो० P.
१२. मेघान्निर्गतेन Sy.
वृष्टिलक्षणेन Sk.
१३. सिञ्चन्ति Sy.
पिन्वतिरिह सामर्थ्यात् क्षरणार्थो न सेचनार्थः। क्षारयन्ति Sk.
१४. वृष्टिलक्षणा अपः Sk.
१५. क्षीरवत् सारवतीः Sy. क्षीरं च Sk.
१६. ते ... यथा घृतं सिञ्चन्त्येवं मरुतोऽपि वृष्टिं कुर्वन्तीति भावः Sy.
घृतसंयुक्तं वर्षयन्ति। वृष्टिद्वारेणैव गाः प्रभूतक्षीराः कुर्वन्तीत्यर्थः Sk.
१७. यज्ञनामैतत्। इह तत्सम्बद्धेषु देशेषु। येषु यज्ञाः क्रियन्ते तेष्वित्यर्थः Sk.
१८. अ० P. ०न्तं M.
आभवन्तीत्याभुव ऋत्विजः Sy.
महान्तः Sk.
१९. अन्तरिक्षाद्यो P. ०क्षाभ्यो D.
०क्षाद्भ्योभ्यो M.
२०. घृतच्चः D. घृतः M.
२१. पुनरस्ति M. RV. x. 17. 10.
२२. यथाऽश्वं सादिनो विनयन्ति युद्धार्थं शिक्षयन्ति Sy.
यथा कश्चिदश्वं सेचनायेतश्चेतश्च नयेत् तद्वत् Sk.

बलिनममी। सेचनाय मेघम्। शिक्षयन्ति। दुहन्ति च। स्तनयन्तम्। अक्षीणम्। उत्साख्यं मेघम्।

महिषासो मायिनश्चित्रभानवो गिरयो न स्वतवसो रघुष्यदः।
मृगाइव हस्तिनः खादथा वना यदारुणीषु तविषीरयुग्ध्वम् ॥७॥

महिषासः। महान्तः। प्राज्ञाः। चित्रदीप्तयः। पर्वताः। इव। स्वबलाः। बलमहत्तया लघुजवाः। सिंहमृगा इव। गजान्। अरण्यानि परिगृह्य यूयम्। खादथ। यदा। अरुणवर्णासु बडवासु। बलानि। अयुङ्ध्वं बलमादाय स्वाश्वा अधितिष्ठथेनि।

---

१. वेगवन्तं मेघम् Sy.
बलवन्तं वेगवन्तं वाश्वमिव। अथवा वाज इत्यन्ननाम। इह च तत्कारणत्वाद्वृष्टिलक्षणे उदके प्रवृत्तम्। वक्ष्यमाणमेघस्येदं विशेषणम्। वृष्टयुदकवन्तम् Sk.

२. वर्षणाय Sy.

३. स्वाधीनं कुर्वन्तीति भावः Sy.
विविधमितश्चेतश्च नयन्ति Sk.

४. Omitted by P. and D.
महन्ति M. रिक्तीकुर्वन्ति Sy.
मेघं विनीय दुहन्ति क्षारयन्ति Sk.

५. गर्जन्तम् Sy.; Sk.

६. प्रभूतोदकमित्यर्थः। अथवाऽक्षितमहिंसितपूर्वमन्येन केनचित् Sk.

७. उत्संख्यं P. उत्सं M.

८. मेघाख्यं M.

९. खादयेति मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः। नचैतानि सम्बोधनानि। अतो यत्तच्छब्दावध्याहृत्यैकवाक्यतां नेयानि। ये यूयम् Sk.

१०. मायाविनः Sk.

११. शोभनदीप्तयः Sy.

१२. शीघ्रगमनाः Sy.
शीघ्रगामिन इत्यर्थः Sk.

१३. ०म्य० M.

१४. हस्तवन्तः Sy.
इवशब्दो हस्तिन इत्यत्राप्यनुषक्तव्यः। ...यथा मृगास्तृणानि खादन्ति यथा च हस्तिनः Sk.

१५. वनानि वृक्षजातानि Sy.
वनशब्दश्च ... वृक्षवचनः। वृक्षान्... खादन्ति। तद्वद्यूयम् Sk.

१६. खादत D. खादयथ M.
भक्षयथ। प्रभुङ्क्थेति यावत् Sy.
किम्? सामर्थ्याच्छत्रून्। अथवा मृगा इह सिंहा व्याघ्रा वाऽभिप्रेता नान्ये। वनमित्युदकनाम। सामर्थ्याच्चेहान्तर्णीतमत्वर्थम्। यथा सिंहा व्याघ्रा वा गत्वा हस्तिनः खादन्ति तद्वद्यूयमुदकवतो मेघानित्यर्थः Sk.

१७. यस्मात् Sy. यद० P.

१८. द्वितीयार्थे सप्तमी। आरुणीर्बडवाः। यद्यपि चेदम् आरुण्यो गाव उषसाम् इत्युषसामादिष्टोपयोजनं तथापि माहाभाग्याद् देवतानां मरुतामप्यवि रुद्धम् Sk.

१९. बलनामैतत्। इह चान्तर्णीतमत्वर्थम्। बलवतीः Sk.
युद्धार्थं स्वरथे न्ययुग्ध्वम्। यथा युध्यध्वमित्यर्थः Sk.

२०. The correct reading should be अयुङ्ग्ध्वम्

२१. ०म० P. तस्माद् भवतामिव वाहनस्यापि प्रबलत्वात्तत्संयुक्ता भवन्तः सर्वं भञ्जन्तीत्यर्थः Sy.

सिंहाइंव नानदति प्रचेतसः पिशाइंव सुपिशो विश्ववेदसः ।
क्षपो जिन्वंन्तः पृषतीभिर्ऋष्टिभिः समित्सबाधः शवसाहिंमन्यवः ॥८॥

सिंहाइव । सिंहा इव । शब्दं[1] कुर्वन्ति । प्रकृष्टज्ञानाः । यथा पुरुषे मांसानि[2] । अवयवश्[3]लिष्टा-
न्येवं पदार्थैः सर्वैरेव मरुतः सुष्ठ्वाश्लिष्टा भवन्ति । सर्वज्ञाः[4] । उदकम्[5] । पूरयन्तः[6] । पृषतीभिरश्वाभिः[7] ।
ऋष्टिभिश्चायुधविशेषैः[8] । समम्[9] । एव शत्रून्[10] । बाधितारः[11] । शवसा[12] । आहननशीला[13] अभिमननाः[14] ।

रोदंसी आ वंदता गणश्रियो नृषांचः शूराः शवसाहिंमन्यवः ।
आ वन्धुरेष्वमतिर्न दंर्शता विद्युन्न तंस्थौ मरुतो रथेषु वः ॥९॥

रोदसी । रोदसी स्वनिर्गमनेन । शब्दापयत[15] । हे गणश्रियः[16] ! इतरेतरयुक्ताः । मनुष्याणां

---

१. यथा सिंहा गिरिगह्वरेषु गम्भीरं शब्दं कुर्वन्ति, एवं मरुत्स्वप्यागतेषु गम्भीरः शब्द उत्पद्यत इति भावः Sy. अत्यर्थं नदन्ति मरुतः Sk.

२. पिश इति रुरुनाम । यथा रुरवः स्वशरीरगतैः श्वेतबिन्दुभिरलङ्कृतास्तद्वत् Sy. पिशा इव सुपिशः । पिङ्गलवर्णत्वात् पिशा इहाग्नय उच्यन्ते । सुपिश इति पेशश्शब्दस्य रूपनाम्न इदमुपधाह्रस्वत्वम् । व्यत्ययेन च नपुंसकत्वैकवचने । अग्नय इव सुपेशसः सुरूपा इत्यर्थः Sk.

३. ० वः शि० D. ०यवा वावः शि . . . न्यवम M. ४. बहुधनाः Sk.

५. शत्रूणां क्षपयितारः Sy.

६. स्तोतॄन् प्रीणयन्तः Sy. जिन्वतिः प्रीतिकर्मान्यत्र । इह तु क्षरणार्थः । समित् सबाध इत्ययं च संशब्द उपसर्गोऽपकृष्य जिन्वन्त इत्यनेन सम्बन्धयितव्यः । उदकं मेघात् संक्षारयन्त इत्यर्थः Sk.

७. पृषत्य इति मरुतां वाहनस्याख्या । पृषत्यः श्वेतबिन्द्वङ्किता मृग्य इत्यैतिहासिकाः । नानावर्णा मेघमाला इति नैरुक्ताः Sy.

८. ०षि० D. शक्तिभिश्च तोरणैर्वा । सर्वैर्युद्धोपकरणैरित्यर्थः Sk.

९. समिदिति इच्छब्दः पदपूरणः Sk.

१०. शत्रुभिर्बाधितान् यजमानान् . . . युगपदेव रक्षितुमागच्छन्तीति शेषः Sy. सहभूतानामपि शत्रूणाम् Sk.

११. M. adds सह before बाधितारः । बधि० D. बाधिकारः M.

१२. स्वेन बलेन Sk.

१३. अहिमन्यवः । हि गतौ । मन्युर्मन्यतेर्दीप्तिकर्मणः । अगताऽविनष्टा दीप्तिरेतेभ्यस्तेऽहिमन्यवः । दीप्तिमन्त इत्यर्थः । अथवाऽहीनदीप्तयोऽहिमन्यव उत्कृष्टदीप्तय इत्यर्थः । अथवाऽहिर्मेघोऽसुरो वा । मन्युरित्यपि क्रोधनाम । अहिविषयः क्रोधो येषां तेऽहिमन्यवः । दीप्तिमन्त इत्यर्थः Sk.

१४. ०लाभि ० D. अभिम० missing M. आहननशीलमन्युयुक्ताः । यद्विषयः कोपो जायते तस्य हनने समर्था इत्यर्थः । यद्वा मननं ज्ञानं मन्युः । अहीनज्ञानाः । उत्कृष्टबुद्धय इत्यर्थः Sy.

१५. युष्मदागमने सति भवदीयशब्देन द्यावापृथिव्यौ पूर्णे कुरुतेति भावः Sy. उभे अपि द्यावापृथिव्यौ प्रतिवदत । गर्जतेत्यर्थः Sk.

१६. गणशः श्रयमाणाः सप्तगणरूपेणावस्थिताः Sy. गणमाश्रिताः । गणरूपा इत्यर्थः Sk.

सम्भक्तारः[1]। शूराः[2]। शवसा[3]। अहिमन्यवः[4]। रथेषु ये। बन्धुरास्तेषु[5]। अमतिः[6]। इव[7] रूपमिव[8]। दर्शनीया[9]। विद्युत्[10]। न[11]। अवतिष्ठते भूयो भूयः प्रस्फुरति यथा पदार्थानां[12] रूपं वहिःस्थितमिति[13]।

**विश्ववेदसो रयिभिः समोकसः संमिश्लासस्तविषीभिर्विरप्शिनः ।**
**अस्तार इषुं दधिरे गभस्त्योरनन्तशुष्मा वृषखादयो नरः ॥१०॥**

विश्ववेदसः। सर्वज्ञानाः[14]। धनैः। समानस्थानाः[15]। महतोऽपि[16] पर्वतादीन्। आत्मबलैः। सम्मिश्रयन्तः[17]। क्षेप्तारः[18]। इषुम्[19]। हस्तयोः। धारयन्ति। अनन्तबलाः[20]। वर्षणशीलखादिनामायुधयुक्ताः[21]। नेतारः[22]।

---

१. ०भु० P. M. नृन् यजमानान् हविःस्वीकरणाय सेवमानाः Sy. यागकाले मनुष्याणां सेवितारः Sk.

२. शौर्योपेताः Sy. ३. स्वबलेन Sk.

४. बलेन ... आहननस्वभावकोपयुक्ताः Sy. नेदं सम्बोधनम्। प्रत्यक्षकृतश्चायं मन्त्रः। अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया। ये यूयमहिमन्यवस्ते Sk.

५. बन्धककाष्ठनिर्मितं सारथेः स्थानं बन्धुरमित्युच्यते। तद्युक्तेषु ... अवस्थितं सत्सर्वैर्दृश्यते Sy. बन्धुरेषु सारथिस्थानेषु Sk.

६. अमतिरिति रूपनाम। सामर्थ्याच्चेहान्तर्णीतमत्वर्थः। यथा काचिद्रूपवती स्त्री दर्शनीया तद्वद्दर्शनीया Sk.

७. अमति। इव missing M.

८. कूपमिव M. यथा निर्मलं रूपं सर्वैर्दृश्यते Sy.

९. यथा वा दर्शनीया विद्युन्मेघस्था सर्वैर्दृश्यते, एवं रथे स्थितानां युष्माकं ज्योतिरपि सर्वैर्दृश्यत इत्यर्थः Sy.

१०. नशब्दस्तु . . . पदपूरणः। अथवा विद्युन्नेति नशब्दश्रुतिसामर्थ्यादुभे अप्येते उपमाने। यथा रूपवती काचिद्दर्शनार्हा स्त्री क्वचिद् व्यवतिष्ठते यथा विद्युद्दीप्यमाना व्यवतिष्ठते एवं बन्धुरेषु व्यवतिष्ठत इत्यर्थः। कः? सामर्थ्यात् सारथिः Sk.

११. ०ति M.

१२. ०प M.

१३. V. Mādhava ignores मरुतः। वः

१४. बहुधना वा Sk. १५. समानाः P. समवेता वा। धनाधिपतय इत्यर्थः Sy. सहैकस्थानाः। स्वसन्निधौ धनानां स्थापयितार इत्यर्थः Sk.

१६. महान्तः Sy; Sk.

१७. ०यन्तः missing M. बलैः...सम्मिश्राः। संयुक्ता इत्यर्थः Sy. बलवन्त इत्यर्थः Sk.

१८. शत्रूणां निरसितारः Sy. शत्रूणामायुधानां वा Sk.

१९. शत्रूणां निरसनाय धनुर्बाणादिकमायुधं धारयन्ति Sy.

२०. अनवच्छिन्नबलाः Sy.

२१. वृषा इन्द्रः खादिरायुधस्थानीयो येषां ते तथोक्ताः। यद्वा वृषा सोमः खादिः खाद्यः पेयो येषां ते Sy. वृषखादयो वर्षितुर्मेघस्य खादितारः। अथवा खादिशब्द इह कवचस्य वचनः। . . .आयुधविशेषवचनो वा। . . . खादयो येषां ते वृषखादयः Sk.

२२. नरो मनुष्याकाराः Sk.

हि॒र॒ण्ययेभिः प॒विभिः पयो॒वृध॒ उज्जिघ्नन्त आप॒थ्यो३॒ न पर्वतान् ।
म॒खा अ॒यासः स्व॒सृतो ध्रुव॒च्युतो दुध्र॒कृतो म॒रुतो भ्राज॑दृष्टयः ॥११॥

हिरण्ययेभिः । हिरण्मयैः[1] । पविभिः[2] । उदकस्य वर्धयितारः[3] । उद्बाधयन्ति[4] । तृणानि[5] । इव[6] । पर्वतान्[7] । दातारः[8] । उदकस्य वर्धयितारः[9] । गच्छन्तः[10] । स्वयमेव सरन्तः[11] । ध्रुवाणामपि च्यावयितारः[12] । दुर्धरस्य कर्मणः कर्तारः[13] । दीप्तायुधाः[14][15] ।

घृषुं पा॑व॒कं व॒निनं॒ विच॑र्षणिं रु॒द्रस्य॑ सू॒नुं ह॒वसा॑ गृणीमसि ।
र॒ज॒स्तुरं॑ त॒वसं॒ मारु॑तं ग॒णमृ॑जी॒षिणं॒ वृष॑णं सश्चत श्रि॒ये ॥१२॥

घृषुं पावकम्[16] । घर्षणशीलम्[17] । शोधकम्[18] । भजनवन्तम्[19] । विद्रष्टारम्[20] । रुद्रस्य । पुत्रम् ।

---

१. यद्वा हितरमणीयैः Sy.
२. M. adds चक्रस्य before पविभिः । रथानां चक्रैः Sy. पवी रथनेमिरुच्यते । हिरण्मयीभी रथचक्रधाराभिः Sk.
३. वृष्ट्युदकस्य ... । ऊर्ध्वं गमयन्ति । स्थानात् प्रच्यावयन्तीत्यर्थः । ... यद्वा पृश्नेः पयसा वर्धमानाः Sy. ४. उच्छब्द ऊर्ध्वतायाम् । प्रदर्शनार्थं चोर्ध्वतोपादानम् । ऊर्ध्वमधस्तिर्यक् च घ्नन्ति Sk.
५. उबापय० M. उत्बा० D.
६. आपथयो मरुत उच्यन्ते । तेषां स्वभूता आपथ्यः । अथवाऽविद्यमानो नियतः पन्था यस्मिन् तदपथमन्तरिक्षम् । तत्रभवा आपथ्यः । का एताः ? वृष्टिलक्षणा आपः । यथा वृष्टिलक्षणा आपो नद्यादिभावेन व्यवस्थिताः कूलादीनि घ्नन्ति तद्वदित्यर्थः Sk. ७. ०णानिव P. यथा पथि गच्छन् रथो मार्गे आस्थितं तृणवृक्षादिकं चूर्णीकृत्योर्ध्वं नयति गमयति । यद्वा यथा संयुक्ता गजा मार्गस्थितं वृक्षादिकं भग्नं कुर्वन्ति Sy.
८. मेघनामैतत् । मेघानामुपरि चङ्क्रम्यमाणाः । रथचक्रधाराभिर्मेघान् भिन्दन्तीत्यर्थः Sk. ९. मख इति यज्ञनाम । तद्वन्तः Sy. मखाः । अपठितमपि महन्नामैतद् द्रष्टव्यम् । महान्तः । अथवा मखा इति यज्ञनामैतत् ... तं कुर्वन्तीति मखाः । वृष्टिद्वारेण यज्ञस्य कर्तारः Sk.
१०. पर्वतान् । दातारः । उदकस्य वर्धयितारः । गच्छन्तः missing in M. देवयजनदेशं प्रति गन्तारः Sy.
११. शत्रून् प्रति स्वयमेव सरन्तो गच्छन्तः Sy. सर्वत्र स्वयंगामिनः Sk. १२. निश्चलानां पर्वतादीनामपि च्यावयितारः Sy.
१३. दुर्धरण्यः M. दुध्रं दुष्टानां धारयितारमात्मानं कुर्वाणाः । यद्वा दुर्धरमन्यैर्धर्तुमशक्यमात्मानं कुर्वाणाः Sy. दुध्रकृतः । कृन्ततिर्वधकर्मा । दुर्धराणां कर्तारः । अत्यन्तमपि बलवतां हन्तार इत्यर्थः । अथवा कृन्ततेरेवैतद्रूपम् । दुध्रशब्दस्तु दुर्धरतायां द्रष्टव्यः । आत्मनो दुर्धरतायाः कर्तारः Sk.
१४. दीप्तशक्तयो दीप्ततोरणा वा Sk.
१५. V. Mādhava ignores मरुतः
१६. घृष्टं D. M. घृष P.
१७. Missing in M. शत्रूणां बलस्य घर्षकं विनाशयितारम् Sy. घृ क्षरणदीप्त्योः । घृषुं दीप्तम् । अथवा घृषुरित्यपठितमपि महन्नाम । महान्तं परिमाणतः Sk. १८. पावकं शोधयितारं गन्तारं वा शत्रून् प्रति Sk.
१९. The correct reading should be सम्भजनवन्तम् । वनमित्युदकनाम । उदकवन्तम् । वृष्टिप्रदमित्यर्थः Sy. उदकवन्तं सम्भक्तारं वा यष्टॄणाम् Sk.
२०. द्रविष्टा० P.

स्तोत्रेण[1]। स्तुमः[2]। उदकस्य प्रेरयितारम्[3]। वृद्धम्[4]। मारुतम्[5]। गणम्। तृतीयसवनेऽन्वयाद्[6] ऋजीषिणम्[7]। वर्षितारम्[8]। सेवत[9]। श्र्यर्थम्[10]।

**प्र नू स मर्तः शवसा जनाँ अति तस्थौ व ऊती मरुतो यमावत।**
**अर्वद्भिर्वाजं भरते धना नृभिरापृच्छ्यं क्रतुमा क्षेति पुष्यति ॥१३॥**

**प्र नू स मर्तः।** प्रकर्षेण[11]। अभितिष्ठति[12]। क्षिप्रम्। सः[13]। मर्तोऽन्यान्[14]। जनान्। यम्[15]। यूयम्। रक्षणेन। मरुतः! रक्षथ[16]। अश्वैः[17]। अन्नं च। बिभर्त्ति[18]। धनानि च। दासैः[19]। आप्रष्टव्यम्[20]। चित्रकर्म[21]। अधितिष्ठति[22]। पुष्यति[23] च[24] प्रजादिभिः[25]।

---

१. आह्वानसाधनेन Sy. २. शब्दयामः Sy.

३. पार्थिवस्य पांसोस्त्वरयितारं प्रेरकमित्यर्थः Sy. उदकार्थं मेघानां हिंसितारम् Sk.

४. प्रेरयितारम्। वृद्धम् missing in M. महान्तं वीर्यतः Sk.

५. मरुतां P. ६. ०ने त्वयादृजिषणं P. तृतीयसवने हि मरुतः स्तूयन्ते तत्र च ऋजीषमभिषुण्वन्तीत्यृजीषसम्बन्धः श्रुतः। अतस्तद्वन्तम् Sy.

७. यत् सोमस्य पूयमानस्यातिरिच्यते तदृजीषम्। तत्तु हययोर्भागो न मरुताम्। अतोऽत्र ऋजीषेण स्वसम्बन्धिसोमो लक्ष्यते। ऋजीषसम्बन्धिसोमवन्तमित्यर्थः Sk.

८. वर्षयिता० D. कामानाम् Sy.

९. As सेव is in the ātmanepada, the correct reading should be सेवध्वम्।
प्राप्नुत Sy.
स्तुतिभिर्हविर्भिश्चोपगच्छत Sk.

१०. श्रक्ष्यं P. श्रिय० M. ऐश्वर्याय धनार्थम् Sy. यज्ञफललक्षितायाः श्रियोऽर्थाय Sk. ११. प्रसूनमर्तः P.

१२. ०न्ति M. प्रतिष्ठितो भवति Sy.

१३. P. adds स्थिरं मरुतः पुत्रयुक्तं शत्रूणां अभिभवितारं रयिं अस्मासु धत्त। before सः The additional passage in P. belongs to the commentary on stanza no. 15 of this very hymn. १४. मत्तो० M.

१५. ०र्तो न्या अन्यान् P. अतीत्य Sy. जनानिति कर्मश्रुतेरतीति चोपसर्गादयोग्यक्रियाध्याहारः। जनानतीत्य Sk.

१६. यं मनुष्यं पालयथ यूयं स युष्मत्पालनेनान्येभ्योऽधिकं बलं प्राप्नोतीत्यर्थः Sk.

१७. साधनभूतैः Sy. १८. सम्पादयति Sy. हरत्यात्मानं प्रति प्रापयति। लभत इत्यर्थः Sk. १९. स्वकीयैर्मनुष्यैः Sy.

२०. धनानि च दासैः missing M. अप्र० P. शोभनम् Sy.
सर्वार्थेषु चाप्रश्नार्हाम्। . . . अथवा नृभिरित्येतदापृच्छ्यमित्येतेन सम्बध्यते। सर्वार्थेषु सर्वमनुष्यैराप्रश्नार्हां च प्रज्ञामिति Sk.

२१. चित्रं क० M. अग्निष्टोमादिकं कर्म Sy. प्रज्ञाम् Sk. २२. आप्नोति Sy. सर्वदा च स्वस्मिन् स्थाने निवसति Sk.

२३. सर्वप्रकारां च पुष्टिं प्राप्नोति Sk.

२४. पशुभिः पुष्टो भवति Sy.

२५. V. Mādhava seems to explain शवसा by क्षिप्रम्

चर्कृत्यं मरुतः पृत्सु दुष्टरं द्युमन्तं शुष्मं मघवत्सु धत्तन ।
धनस्पृतमुक्थ्यं विश्वचर्षणिं तोकं पुष्येम तनयं शतं हिमाः ॥१४॥

चर्कृत्यम्[1] । पौनःपुन्येन कर्तव्यम्[2] । मरुतः ! सङ्ग्रामेषु । नरितुमशक्यम्[3] । दीप्तिमत् । बलम्[4] । हविष्मत्सु[5] । निधत्त[6] । धनानां स्प्रष्टारम्[7] । प्रशस्यम् । सर्वस्य द्रष्टारम्[8] । पुत्रम् । तत्पुत्रं च । पोषयेम[9] लभेमहि । शतम्[10] । हिमा जीवन्तः ।

नू ष्ठिरं मरुतो वीरवन्तमृतीषाहं रयिमस्मासु धत्त ।
सहस्रिणं शतिनं शूशुवांसं प्रातर्मक्षू धियावसुर्जगम्यात् ॥१५॥

नू ष्ठिरम् । क्षिप्रम् । स्थिरम्[11] । मरुतः ! पुत्रयुक्तम्[12] । शत्रूणामभिभवितारम् । रयिम्[13] । अस्मासु । धत्त । सहस्रशतसंख्याकम्[14] । वर्धमानमिति[15] ।

I.65.

पश्वा न तायुं गुहा चतन्तं नमो युजानं नमो वहन्तम् ।
सजोषा धीराः पदैरनु ग्मन्नुप त्वा सीदन्विश्वे यजत्राः ॥१॥२॥

पश्वा[16] न तायुम् । पराशरः शाक्त्यः[17] द्विपदा[18] विंशत्यक्षरा[19] । प्रायेण द्वयोर्द्वयोरैकार्थ्यं दृश्यते ।

---

१. चकृत्वा P. चकृ० D. M.
२. कार्येषु पुनः पुनः पुरस्कर्तव्यम् । सर्वकर्मकुशलमित्यर्थः Sy. अत्यर्थं शत्रूणां हन्तृ Sk. ३. अजेयमित्यर्थः Sy. अवतरतीति वधकर्मसु पाठात् तरतिर्वधार्थः । शत्रुभिर्दुर्हणम् Sk.
४. शत्रूणां शोषकं बलवन्तम् Sy.
५. हविर्लक्षणधनयुक्तेषु यजमानेषु Sy. धनवत्सु Sk.
६. ०त्तन. P. D. त्तौ M. स्थापयत Sy. स्थापयत । पूर्वमस्मभ्यं धनं दत्त । ततो धनवद्भ्यः सद्भ्यो बलमित्यर्थः Sk.
७. ०नामस्प्र० P. धनैः प्रीतं वा । . . . पौत्रम् Sy. धनेन प्रीयमाणं धनस्य वा पालयितारम् Sk. ८. अशेषस्य यज्ञस्य ज्ञातारमित्यर्थः Sk. ९. ०यमे P. युष्मत्प्रसादेन पुष्णीयाम तनयं पौत्रं च । अथवा पुष्येमेति दैवादिकस्य पुषे रूपम् । धनस्पृतमित्यादि द्वितीया तृतीयार्थे । धनस्पृतत्वादिगुणेन तोकेन तनयेन च वर्धिषीमहीत्यर्थः Sk.
१०. हेमन्तर्तूपलक्षितान् शतं संवत्सरान् Sy. शतवर्षम् Sk. ११. स्थास्नुम् Sy.
१२. यद्वा वीर्योपेतम् Sy. १३. पुत्रलक्षणं धनम् Sy. १४. एतत्संख्याकधनवन्तम् Sy. अत्यन्तबह्वित्यर्थः Sk.
१५. Ms. D. puts the figure ॥६४॥ here to indicate the end of the sixtyfourth hymn. No such number is given in P. and M.
१६. इण्वा M. वश्वा P. तत्र पश्वा इत्यादीनि षट् सूक्तानि द्वैपदानि । तेष्वध्ययनसमये द्विपदे द्वे द्वे ऋचौ चतुष्पदामेकैकामृचं कृत्वा समाम्नायते । अयुक्संख्यासु तु याऽन्त्याऽतिरिच्यते सा तथैवाम्नायते । प्रायेणार्थोऽपि द्वयोर्द्विपदयोरेक एव । प्रयोगे तु ताः पृथक् पृथक् शंसनीयाः Sy. १७. ०क्त्यं P.
१८. ०द M. १९. ०रं P. ०राः M.

"अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्यतीति स निलायत[१] सोऽपः प्राविशत् तं देवाः प्रैषमैच्छन्"[२] इति ब्राह्मणम्। तत्रेदमुच्यते—

पशुना[३]। इव[४]। स्तेनम्[५]। गुहायाम्[६]। गच्छन्तम्[७]। अन्नमात्मना[८]। संयुञ्जानं संयुक्तं[९] च। अन्नम्[१०]। वहन्तं[११] समादाय[१२] गच्छन्तम्। सङ्गताः[१३]। प्राज्ञाः। पदैः[१४]। अन्वगच्छन्। उपासीदंश्च[१५]। त्वाम्। विश्वे। देवाः।

ऋ॒तस्य॑ दे॒वा अनु॑ व्र॒ता गु॒र्भुव॒त्परि॑ष्टि॒र्द्यौर्न भूम॑ ।
वर्ध॑न्ती॒माप॑ः प॒न्वा सुशि॑श्विमृ॒तस्य॒ योना॒ गर्भे॒ सुजा॑तम् ॥३॥४॥

ऋतस्य[१६] देवाः। अग्नेः। देवाः[१७]। अन्वगच्छन्[१८]। कर्माणि[१९] निलीनस्य[२०] कि[२१] कृत्वा गच्छतीत्यन्वेषणं[२२]

---

१. निवाय॰ P. D. निलालय॰ M.
२. TS. 2.6.6.1. पश्वा न तायुमित्येतस्मिन् ऋग्द्वये इतिहासमाचक्षते। अग्निर्यमीं च वरुणानीं च कामयाञ्चक्रे। तं परदाराभिमर्शनाद् जराविवेश। अथ तयाविष्टो हवींषि वोढुमशक्नुवन् वज्राच्च वषट्काराच्च बिभ्यन् अनाशनमुष्ट्वा चाप्स्वौषधीषु च प्रविवेश। तमापः स्वेनामृतरसेन वर्धयाञ्चक्रुः। देवा अपि यमवरुणपुरस्सरा उपगम्य अजरमायुस्तस्य कृत्वा प्रयाजानुयाजांश्च प्रतिज्ञाय पुनरपि हविषां वोढारं च नियुयुजे Sk.
३. पशुना missing M. अपहृतेन पशुना सह वर्तमानम् Sy. पशुनेवापहृतेन सम्बद्धं स्तेनम् Sk.
४. नव M.
५. स्तनं P. D.
६. यथा स्तेनः परकीयं पश्वादिधनमपहृत्य दुष्प्रवेशे गिरिगह्वरे वर्तते तद्वत् Sy. गुहा गूढं प्रच्छन्नम् Sk.
७. नश्यन्तं त्वाम् Sk.
८. नमःकारणत्वादापोऽत्र नमःशब्देनोच्यन्ते। तृतीयार्थे चैषा द्वितीया। अन्नकारणेनाब्लक्षणेन युज्यमानम्। अप्सु प्रविशन्तमित्यर्थः Sk.
९. ॰ज्यमा॰ P.
१०. हविर्लक्षणमन्नम् Sy. अमृतरसलक्षणमन्नम् Sk.
११. देवेभ्यः प्रत्तं हविर्वहन्तम् Sy. आत्मानं प्रति प्रापयन्तम्। अमृतरसं पिबन्तमित्यर्थः Sk.
१२. समुदा॰ P.
१३. समानप्रीतयः Sy. सहप्रीतयः Sk.
१४. मार्गे पादकृतैर्लाञ्छनैः Sy. त्वदीयैरेव Sk.
१५. समीपं प्राप्नुवन्। ददृशुरित्यर्थः Sy.
१६. गतस्य पलायितस्याग्नेः Sy. गतस्याग्नेरप्सु Sk.
१७. यमप्रभृतयः Sk.
१८. अन्वेष्टुमगमन् Sy. यतो यतो निर्गतस्ततोऽनुगतवन्त इत्यर्थः Sk.
१९. कर्मणि P. D. कर्माणि गमनावस्थानशयनादिरूपाणि Sy.
२०. नीलस्य P. D.
२१. M. adds क्व before किम्
२२. नष्टस्य चाग्नेरभवत् पर्येषणा Sk.

तदा। अभवत्। परिष्टिः पर्येषणम्। द्यौः। इव चासीत्। भूमिरग्न्यन्वेषणार्थमागतैर्देवैस्तं च। एनमग्निम्। वर्धयन्ति। आपः। स्तोत्रेण। सुष्ठु वृद्धम्। उदकस्य। अन्तः। गर्भे। सुष्ठु प्रादुर्भूतमिति।

पुष्टिर्न रण्वा क्षितिर्न पृथ्वी गिरिर्न भुज्म क्षोदो न शंभु।
अत्यो नाज्मन्त्सर्गप्रतक्तः सिन्धुर्न क्षोदः क ईं वराते ॥५॥६॥

पुष्टिर्न रण्वा। हव्यवाहनाद् भीतोऽरण्यं प्राविशत् तद् द्वाभ्यां स्तौति—
पुष्टिः। इव। रमणीया। भूमिः। इव। विस्तीर्णा। गिरिः। इव। भोगसाधनम्।

---

१. ०भुव० P.
२. सर्वतोऽन्वेषणम् Sy.
३. चसी० P.
४. विस्तीर्णपर्यायोऽत्र भूमशब्दः। न बहुवचनः। भूतजातवचनो वा। द्यौरिव विस्तीर्णा। सर्वस्मिन् जगतीत्यर्थः Sk.
५. इन्द्रादयः सर्वे देवा अग्नेर्गवेषणाय भूलोकं प्राप्ता इत्यर्थः Sy.
६. उदके प्रविष्टम् Sy.
७. भूतेऽत्र लट् द्रष्टव्यः... अवर्धयंश्चैनमग्निमापः Sk.
८. पननीयेन स्तुत्येनामृतरसेन Sk.
९. अथवा शिशुशब्दस्येदं रूपम्। सुष्ठु शिशुं सन्तम्। अत्यन्तं क्षीणमित्यर्थः Sk.
१०. योनिरित्युदकनाम। ऋतस्य यज्ञस्यान्नस्य वा कारणभूते जले Sy.
११. गर्भस्थाने मध्ये।... एवमप्सु वर्तमानमग्निं देवेभ्यो मत्स्यः प्रावोचत्। तदनन्तरं देवास्तमज्ञासिषुरिति भावः Sy. गर्भस्थानमत्र गर्भशब्देनोच्यते। आत्मन एव योनौ यः प्रदेशो गर्भस्थानं तत्रेत्यर्थः Sk.
१२. पुष्टिन्न D. पुष्टिर्न्न P.
१३. रण्वाः M. रञ्वा P.
१४. ०नात् भोतो P.
१५. अभिमतफलानामभिवृद्धिरिव Sy.
१६. उपमानोपमेयसाधारणगुणवचनानां शब्दानां सर्वत्रोपमेयवृत्तित्वदर्शनाद् इह चाग्नेः पुंलिङ्गस्योपमेयत्वाद् रण्वेत्यादिषु व्यत्ययेन स्त्रीलिङ्गनपुंसकलिङ्गत्वे।... धनादिपुष्टिरिव Sk. १६. ०य P. अग्निः सर्वेषां रमणीयः। ऐहिकामुष्मिकसकलव्यवहारस्याग्न्यधीनत्वात्। यद्वा पुष्टिरिव रण्वा... शब्दनीयः, स्तुत्यो वा। यथा पुष्टिः प्राप्यते तद्वदग्निर्यज्ञे हविर्भिः प्राप्यत इति भावः Sy. रण्वेत्यपि रमे रूपम्।... रमणीयः प्रीतिकरदर्शनोऽग्निः Sk.
१७. क्षितिरिति पृथिवीनाम। दावरूपस्य वाग्नेरिदमुपमानम्। पृथिवीव च पृथुर्दावरूपः सन् Sk. १८. ०र्णं P. अग्निरपि विस्तीर्णः सर्वेषु भूतेषु जाठररूपेणावस्थानात् Sy.
१९. भोजयिता। यथा गिरौ विद्यमानं फलमूलादिकमाहृत्य सर्वे भुञ्जते, तद्वदग्नावपि पचन्तः सर्वे भुञ्जते। यद्वाऽग्नावाहुतिं हुत्वा यजमानाः स्वर्गफलं भुञ्जते। अथवा गिरिर्यथा दुर्भिक्षे सर्वान् प्राणिनो भुनक्ति स्वकीयफलमूलादिदानेन पालयति तद्वदयमपि पापादनुष्ठातॄन् प्रमुञ्चति Sy. फलादिनोपभोग्यः Sk.

उदकम्। इव। सुखभावयितृ[1] सोऽयम्। अश्वः। इव[2]। गमने[3] भवति। गमनप्रवृत्तस्तम्[4]। इमम्[5]। कः। वारयति[6]। यथा। सिन्धुः[7]। उदकं कूलाभ्यां[8] वारयति तद्वदिति[9]।

**जामिः सिन्धूनां भ्रातेव स्वस्रामिभ्यान्न राजा वनान्यत्ति ।**
**यद्वातजूतो वना व्यस्थादग्निर्ह दाति रोमा पृथिव्याः ॥७॥८॥**

जामिः सिन्धूनाम्[10]। वन्धुः[11]। सिन्धूनां[12] स्यन्दमानानां नदीनाम्। भ्रातेव। स्वसृणामित्यौ-[13]पमिकं सोऽयम्। इभस्थान्[14] शत्रून्। राजा। इव। काष्ठानि[15]। अत्ति[16]। यदा। वातप्रेरितः। वृक्षान्[17]। अभिभवनि[18] तदानीम्। अग्निः। खलु[19]। छिनत्ति। लोमस्थानीयं तृणगुल्मादिकमपि[20] दहति[21]। पृथिव्या इति।

---

१. दापयितृ P. यथोदकं सुखं करोति तद्वदग्निः सर्वेषां सुखकारीत्यर्थः Sy. त्रुट्छेदादिना Sk. २. सङ्ग्रामे... सततगमनशीलो जात्यश्व इव Sy.
३. सर्गेण विसर्जनेन प्रगमितः। यथा सादिना प्रेषितो जात्यश्वो हन्तव्यसमीपमाशु गच्छति तद्वदग्निरपि स्तोतृभिः प्रेषितः सन् शत्रून् हन्तुं शीघ्रं गच्छतीति भावः Sy.
४. ०त्तम् P. सर्गशब्दो वेगवचनः। तक्षतिर्गतिकर्मा। वेगगामिदावरूपः Sk.
५. दावरूपं सन्तम् Sk.
६. कोऽपि वारयितुं न शक्नोतीत्यर्थः Sy. न कश्चिद् वारयितुं शक्नोतीत्यर्थः Sk.
७. स्यन्दनशीलमुदकमिवायमपि शीघ्रगामी। यथा निम्नप्रदेशाभिमुखो जलप्रवाहो दुर्निवारः। तद्वद्दग्धव्याभिमुखोऽग्निरपीत्यर्थः Sy. षष्ठ्यर्थे चैषा प्रथमा। सिन्धोरिव चोदकम् Sk.
८. कुल्याभ्यां P.
९. तद्य् (द्व) दिति M.
१०. सु० P. ११. ज्ञातिर्वैद्युतोऽग्निः Sk.
१२. अपाम्।... तासामुत्पादकत्वात्।... यद्वा देवेभ्यः पलायितोऽप्सु वर्तमानः सन् तासामपां बन्धुर्बभूवेत्यर्थः। Sy. आपोऽत्र सिन्धव उच्यन्ते।... वृष्टिलक्षणानामपाम् Sk.
१३. ०सृ० M. यथा भ्राताऽतिशयेन हितकरो भवति तद्वत् Sy. यथा भ्राताऽत्यन्तसन्निकृष्टो ज्ञातिस्तद्वदित्यर्थः Sk.
१४. इ (भ ? ह) स्थान् D. भियं यन्तीति नैरुक्तव्युत्पत्त्या इभ्याः शत्रवः। तान् यथा समूलं हिनस्ति तद्वत्। यद्वा इभ्या धनिनः। तान् यथा धनमपहरन् राजा हिनस्ति तद्वदित्यर्थः Sy. इभा हस्तिनः। तेषु भवाः साधवो वा इभ्या हस्त्यारोहाः। यथेभ्यान् राजाऽऽक्रम्योपभुङ्क्ते तद्वत्। दवाग्निः Sk.
१५. महान्त्यरण्यानि Sy. वृक्षान् Sk.
१६. भक्षयति, दहतीत्यर्थः Sy. दहतीत्यर्थः Sk.
१७. वनान्यरण्यानि।...उक्तप्रकारेण विविधमातिष्ठति दग्धुं प्रवर्तते Sy. वनानि Sk.
१८. विपूर्वस्तिष्ठतिर्गत्यर्थः। विविधं गच्छतीत्यर्थः Sk.
१९. हशब्दः पदपूरणः Sk.
२०. गुन्मा० P. D. भूम्यामोषधिवनस्पतिजातं यदस्ति तत्सर्वं दहतीति भावः Sy.
२१. दाति पुनाति।... तदैव पृथिव्यास्तृणान्यपि दहतीत्यर्थः Sk.

**श्वसित्यप्सु हंसो न सीदन् क्रत्वा चेतिष्ठो विशामुषर्भुत् ।**
**सोमो न वेधा ऋतप्रजातः पशुर्न शिश्वा विभुर्दूरेभाः ॥६॥१०॥**

श्वसित्यप्सु। अनया पुनरप्सु प्रविष्टं स्तौति——

श्वासशब्दं[1] करोति। अप्सु। हंसः। इव। सीदन्[2]। प्रज्ञापितेनौपसेन[3] तेजसा। चेतयितृतमः[4]। मनुष्याणाम्[5]। उपसि प्रबुद्धः[6]। सोमः[7]। इव। विधाता[8]। उदकात्[9]। प्रजातः। पशुः[10]। इव। शिशुना[11] वत्सेन सह तेजसा प्रादुर्भवन्[12]। महान्[13]। दूरस्थः[14] प्रकाशयति[15]।

## I.66.

**रयिर्न चित्रा सूरो न संदृगायुर्न प्राणो नित्यो न सूनुः ।**
**तक्वा न भूर्णिर्वना सिषक्ति पयो न धेनुः शुचिर्विभावा ॥१॥२॥**

रयिर्न चित्रा। दवाग्निमनेन[16] सूक्तेन स्तौति। रयिः[17]। इव। चित्रेति प्रकाशादाह[18]। सूर्यः।

---

१. प्राणिति। निगूढो वर्तत इत्यर्थः Sy. तृणादीनि दहन्नग्निः श्वसनसदृशं शब्दम् Sk. २. सीद P. उदकमध्ये उपविशन् हंस इव Sy.

३. ०पिकेनौ० M. ज्ञानहेतुनाऽऽत्मीयेन प्रकाशेन Sy. प्रज्ञावतां मध्ये प्रज्ञया Sk.

४. अतिशयेन चेतयिता ज्ञापयिता। रात्रौ हि सर्वे जना अन्धकारावृतं सर्वमग्नेः प्रकाशाज्जानन्ति Sy. प्रज्ञावत्तमः Sk.

५. प्रजानाम् Sy. षष्ठीनिर्देशादर्थायेति शेषः। यष्टॄणां मनुष्याणामर्थाय Sk.

६. उषःकालेऽग्निहोत्रादौ प्रबुद्धः Sy. यदग्निहोत्रहोमार्थमुषःकालेऽग्निर्विबोध्यते तदभिप्रायमुषर्भुदित्येतद् विशेषणम् Sk. ७. सोमो यथा सकलमोषधिरूपं भोग्यजातं सृजति। ...तथा सकलं भोक्तृजातं सृजति। अग्नेरेव भोक्तृरूपेणावस्थानात् Sy. ८. मेधावी Sk.

९. ०कान् P. ऋतमित्यादित्य उदकं वा। तत उत्पन्नः। 'उदीचि हि प्रथमावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमयसंस्पर्शं धारयति तत्प्रदीप्यते'। [cf. N. 7. 23 ] तेनाग्निरादित्यादुत्पद्यते वैद्युतात्मनोदकात् Sk. १०. उदकमध्ये वर्तमानोऽग्निः शयानः पशुरिव तनूकृतः संकुचितगात्रोऽभूत् Sy. ११. शिशूनां D. प्रथमायाः स्थाने तृतीयैषा। पशुरिव शिशुः। यथा शिशुकः पशुरन्यस्मात् पशोः प्रजायते तद्वदित्यर्थः Sk.

१२. ०कान् P.

१३. प्रभूतः सम्पन्नः। यद्वा शिश्वा शिशुना गर्भस्थेन वत्सेन सहिता गौरिव विभुः प्रभूतावयवो जात इत्यर्थः Sy. ईश्वरः सर्वस्य Sk.

१४. ०शति M.

१५. Ms. D. puts the figure ॥६५॥ here to indicate the end of the sixtyfifth hymn. No such number is given in P. and M.

१६. दिवा० P. १७. ०यिम् M.

१८. चायनीयो विचित्ररूपो वा Sy. चित्रः पूजनीयो वाग्निः Sk.

इव च। सर्वैर्दृश्यमानः[1]। आयुः[2]। इव। प्राणनहेतुर्दग्धे[3] ह्यरण्य ओषधयः प्रादुर्भवन्ति। औरसः। इव। पुत्रः[4]। तस्करः[5]। इव। हरणशीलः। अरण्यानि। सेवते[6]। क्षीरम्। इव। धेनुः[7]।..........[8] दीप्तिमान्[9]।

**दाधार क्षेममोको न रण्वो यवो न पक्वो जेता जनानाम्।**
**ऋषिर्न स्तुभ्वा विक्षु प्रशस्तो वाजी न प्रीतो वयो दधाति ॥३॥४॥**

दाधार क्षेमम्[10]। करोति[11]। रक्षाम्। गृहम्[12]। इव। रमणीयम्[13]। यवः। इव। पक्वः[14]। जेता।

---

१. संद्रष्टा सर्वेषां वस्तूनां दर्शयिता Sy. संद्रष्टा संदर्शनीयो वा Sk.

२. आयुर्मुखे सञ्चरन् प्राणः प्रश्वसन्वायुरिव प्रियतमः। यद्वा यथा प्राणवायुः, आयुर्जीवनमवस्थापयति। ... एवमग्निरपि जाठररूपेणायुषोऽवस्थापयिता Sy. अन्नमिव Sk.

३. ०तु D. प्राणहेतुरत्र प्राण उच्यते।... जाठरात्मना ह्यग्निराहारविपरिणामकरत्वात्तदायत्तत्वाच्च प्राणस्य भवति प्राणहेतुः Sk.

४. यथौरसः पुत्रः पितुर्हितमेवाचरति तद्वदयमपि हितस्य स्वर्गस्य प्रापयिता Sy.
नित्यशब्दो ध्रुववचनः। कृतकाद्यपेक्षया चौरसः पुत्रो नित्य उच्यते। यथौरसः पुत्रोऽग्निरपि तद्वत्। साकाङ्क्षत्वाद्योग्यत्वाच्चेष्टानां लोकानां प्रापकः सुखो वेति वाक्यशेषः। अथवा पुरस्तादुपचारत्वेऽपि नशब्दस्य न सूनुरित्येतावन्मात्रमेवोपमानम्। नित्य इत्येतत्तूपमेयम्। नित्योऽग्निः सूनुरिव। यथा त्रैवर्णिकैः पितॄणामनृणत्वाय पुत्रोऽवश्यमुत्पाद्य एवं देवानामनृणत्वायाग्निरप्यवश्यमाधेय इत्यर्थः Sk.

५. गतिमानश्व इव ... भर्ता। यथाश्व उपर्यारूढं पुरुषं बिभर्ति धारयति पोषयति वा तद्वदयमपीयत्यर्थः Sy.

६. Omitted by P. and D.
दग्धुं समवैति सेवते वा Sy.
यथा भ्रमणशील आटविकश्चौरो वनानि सेवते तद्वद्दावरूपोऽग्निर्वनानि सिषक्ति सेवते Sk.

७. ०नुं P. प्रीणयिता Sy.
षष्ठ्यर्थे प्रथमैषा। क्षीरमिव धेनोः स्वभूतम् Sk.

८. शंसः पूर्वरूप ज्वल P.
शंसः पूर्वरूपज्वलन् D. शंसः विपूर्वरूपज्वलन् M.

९. ०प्तिम P. ०प्तिमा M.

१०. क्षेम P. क्षेमः D.

११. धारयति स्तोतृभ्यो दत्तस्य धनस्य रक्षणं कर्तुं शक्नोतीति भावः Sy.
धारयति क्षेमम्। क्षेमं करोतीत्यर्थः Sk.

१२. यद्वा गन्तव्यः। गृहवत् सर्वैः प्राप्यत इत्यर्थः Sy.

१३. द्वे अपि चैते रण्व इत्यस्योपमाने। गृहमिव च यव इव च पक्वः सर्वस्य रमणीयोऽग्निः। प्रीतिकर इत्यर्थः Sk.

१४. M. adds च before पक्वः।
यथा पक्वो यव उपभोगयोग्यो भवति तद्वदग्निरपि पाकादिकार्यहेतुतयोपभोग्य इत्यर्थः Sy.

जनानां[1] सोयमग्निरन्नं प्रयच्छति। यथा। ऋषिः[2]। स्तोता। मनुष्येषु[3]। प्रशस्तो[4]ऽभिरक्षणकुशलः[5]। अन्नम्[6]। प्रयच्छति[7]। अश्वः। इव च घासेन[8] प्रीयत इति।

**दुरोकशोचिः क्रतुर्न नित्यो जायेव योनावरं विश्वस्मै।**
**चित्रो यदभ्राट्छ्वेतो न विक्षु रथो न रुक्मी त्वेषः समत्सु ॥५॥६॥**

दुरोकशोचिः। दुःसेवतेजाः[9]। प्रज्ञा[10]। इव। अनुस्यूतः। जायेव गृहे वर्तमानः[11]। पर्याप्तो[12] भवति। विश्वस्मै[13] जनाय। मित्रः[14]। यदा[15]। भ्राजतेऽरण्ये। श्वेतवर्णः[16]। इवादित्यः। विक्षु[17]। रथः[18]। इव च। हिरण्मयः[19]। दीप्तः। सङ्ग्रामेषु।

---

१. शत्रुजनानां मध्येऽभिभविता Sy. शत्रुजनानाम् Sk.

२. यथर्षः P. यषिः M. मन्त्रद्रष्टा ऋषिरिव...देवानां स्तोता Sy. होतृत्वादग्निर्ऋषिरिव स्तोता देवानाम् Sk.

३. यजमानलक्षणेषु Sy. तृतीयार्थे सप्तमी। विद्भिर्मनुष्यैः Sk.

४. प्रख्यातः Sy. प्रकर्षेण स्तुतः Sk.

५. अभिक्ष० D.

६. अभिक्षणोन्नकुशलन्नं P.

७. अस्मभ्यं ददात्वित्यर्थः Sy. स्तोतृभ्यः Sk.

८. Omitted by P. यथाश्वो हर्षयुक्तो युद्धाभिमुखं गच्छति तद्वदयमपि देवानां हविर्वहने हर्षयुक्तो भवतीत्यर्थः Sy. अश्व इवोत्कृष्टः प्रीतश्च सन्नग्निः। . . . अथवा वाजी नेत्येतद् वयो दधातीत्यस्योपमानं न प्रशस्त इत्येतस्य। अश्व इव च वयो दधाति। यथा सङ्ग्रामाश्वः सङ्ग्रामं जित्वा तद्द्वारेणान्नं ददाति तद्वत् प्रीतस्सन्नग्निर्ददातीत्यर्थः Sk.

९. दुष्करमोको यस्याम्। यत्र व्यवस्थातुं न शक्यत इत्यर्थः। सा दुरोकाः। . . . दुरोकाः शोचिः . . . यस्य स दुरोकशोचिः दुस्सहदीप्तिकः Sk.

१०. कर्मणां कर्ता। स इव ध्रुवः। यथा स कर्मसु ध्रुवोऽप्रमत्तः सन् जागर्ति तद्वदयमप्यग्निः कर्मसु रक्षसां दहने ध्रुवो जागर्तीत्यर्थः। . . . भूषणं भवति Sy. क्रतुः कर्म प्रज्ञा वा तद्वन्नित्यः Sk.

११. वव० P. ०न M.

१२. सर्वस्मै कार्याय, एवमग्निरलं पर्याप्तः सर्वस्मै कार्याय। स्तोतृणां सर्वकार्याणि कर्तुं समर्थ इत्यर्थः Sk.

१३. सर्वस्मै यष्टृजनाय। . . . यथा जायया गृहमलङ्कृतं भवति तद्वदग्निना यज्ञगृहमप्यलङ्कृतं सद् दृश्यत इत्यर्थः Sy.

१४. चित्रः seems to be the correct reading. चायनीयो विचित्रदीप्तिर्वा Sy. विचित्रः Sk.

१५. यद P. यदिति व्यत्ययेन नपुंसकता। . . . यो भ्राजते Sk.

१६. रात्रौ ह्यहनि सूर्य इवाग्निः प्रकाशको भवति Sy. श्वेतवर्णत्वाच्छ्वेत आदित्यः। आदित्य इव Sk.

१७. वक्षु P. प्रजासु Sy. मनुष्येषु Sk.

१८. रथम् P. D. यथा रुक्मवान् रूपेण सुवर्णेन वा खचितावयवो रथः सङ्ग्रामेषु दीप्तः स्यात् तद्वत्त्वेषो दीप्तः Sk.

१९. सुवर्णवद्रोचमानदीप्तियुक्तः Sy.

सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका ।
यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥७॥८॥

सेनेव सृष्टा[1]। सेनेव। उद्युक्ता। बलम्[2]। दधाति[3]। अस्तुः[4]। इव[5]। आयुधम्[6]। दीप्तमुखम्[7]। यमः[8]। एव। जातोऽग्निरपि यम उच्यते यमनात्[9]। यमः[10]। एव। जनिष्यमाणः[11]। जरयिता[12]। कन्यकानाम्[12]। "तृतीयो अग्निष्टे पतिः"[13] इत्यपि निगमो भवति। "पालयिता[14] जायमानानाम्[15]। तत्प्रधाना हि यज्ञसंयोगेन भवन्ति"[16]।

---

१. स्वामिना सह वर्तमाना भटसंहतिरिव। ...प्रेरिता Sy. सेनेव सृष्टा भयं वा बलं वा दधाति। अस्तुरिव दिद्युत्त्वेषप्रतीका। भयप्रतीका। [बलप्रतीका यशःप्रतीका] महाप्रतीका दीप्तप्रतीका वा N.10.21.

२. यथा सेना सेनापतिना सृष्टा विसृष्टाऽभ्यनुज्ञाता सती यान् प्रति गच्छति तेषाम् Sk.

३. शत्रूणां भयम् Sy. भयम्।...एवमतिप्रज्वलितोऽग्निरमं...भयं ददाति। जनयतीत्यर्थः। कस्य? अनिर्देशात् कृत्स्नस्य जगतो रक्षसां वा Sk.

४. विदधाति। करोतीत्यर्थः। यद्वा सृष्टा सेना...बलं दधाति। सा यथा बलवती तद्वदग्निरपि बलवानित्यर्थः Sy.

५. क्षेप्तुः Sy. अस्तुर्न दिद्युत्। इदमपि भयाधानस्यैव द्वितीयमुपमानम्। दिद्युदिति वज्रनाम। वज्रनामानि चायुधमात्रवचनानि नेन्द्रायुधविशेषवचनान्येव। तेनात्र दिद्युच्छक्तिरुच्यते। यथा चास्तुः क्षेपणशीलस्य स्वभूता शक्तिर्यं प्रति क्षिप्यते तस्य भयं ददाति तद्वत् Sk.

६. अस्तु दिव D. बलम्। दधाति। अस्तुः missing M.

७. दिद्युदिति वज्रनाम। तेन चात्रेषुर्लक्ष्यते। ...सा यथा भीषयते तद्वदग्निरपि राक्षसादीन् भीषयत इत्यर्थः Sy.

८. प्रतीकं दर्शनमुच्यते। दीप्तदर्शना। उज्ज्वलेत्यर्थः Sk.

९. युगपज्जातत्वाद्यमोऽत्राग्निरुच्यते। तेन पुनः सहानीय युगपज्जात इन्द्रेण।... अथवा प्रयच्छति स्तोतृभ्यः कामानिति यमः Sk.
यम इव जातः। यमो जनिष्यमाणः। जारः कनीनाम्। जरयिता कन्यानाम्। पतिर्जनीनाम्। पालयिता जायानाम्। तत्प्रधाना हि यज्ञसंयोगेन भवन्ति। N. 10. 21.

१०. यच्छति ददाति स्तोतृभ्यः कामानिति यमोऽग्निरुच्यते। यद्वा इन्द्राग्न्योर्युगपदुत्पन्नत्वादग्नेर्यमत्वम् Sy.

११. नि० M. तदुभयमपि...अग्निरेव। सर्वेषां भावानामाहुतिद्वाराऽन्यधीनत्वात् Sy. यावत्किञ्चित् सर्वमग्न्यायत्तत्वादग्निरेवेत्यर्थः Sk.

१२. जनयि० P. जार० M.
यतो विवाहसमयेऽग्नौ लाजादिद्रव्यहोमे सति तासां कन्यात्वं निवर्तते। अतो जरयितेत्युच्यते Sy.
अग्निसन्निधौ व्यूढानां कन्यकानां कन्यात्वं व्यावर्त्यते Sk. १३. RV. X. 85. 40.

१४. भर्ता Sy. पतिः Sk.

१५. According to the text of the Nirukta, the reading should be जायानां and not जायमानानाम्। कृतविवाहानाम् Sy.
जनयन्त्यपत्यानीति जनयो भार्यास्तासां पतिः। यावती काचित् स्त्री, सर्वस्याः प्रथममग्निः पतिर्भवति पश्चान्मनुष्यः। ...अथवा कनतिः कान्तिकर्मा। कमनीयत्वात् कनय ओषधय इहोच्यन्ते। जनयोऽप्योषधय एव जायमानत्वात्। तासामृबीसात्मना फलपाककरत्वाज्जारोऽग्निः। पतिश्च स्वामित्वात् पालयितृत्वाद्वा Sk. १६. N. 10. 21.

तं वंश्चराथा वयं वंसत्यास्तं न गावो नक्षन्त इद्धम्।
सिन्धुर्न क्षोदः प्र नीचीरैनोन्नवन्त गावः स्व१र्दृशीके ॥६॥१०॥

तं[1] वश्चराथा[2]। तमिमम्। यूयम्[3]। चरन्त्या पश्वाहुत्या[4] वयम्[5]। निवसन्त्यौषधाहुत्या[6]। गृहम्[7]। यथा[8]। गावः। आप्नुवन्ति तथाऽऽप्नवाम[9]। इद्धं[10] समृद्धं भोगैः[11]। सिन्धुः[12]। इव। उदकम्। अधः स्थित[13]मग्निर्ज्वालाः[14]। उद्गमयति ते च[15]। रश्मयः[16]। संश्लिष्टा भवन्ति। सर्वस्य[17] दर्शनीयेऽग्नाविति[18]।

---

१. ता P. २. वश्वरथा P. तं वः। चराथा चरन्त्या। पश्वाहुत्या। वसत्या च। निवसन्त्या। औषधाहुत्या। अस्तं यथा गाव आप्नुवन्ति तथाप्नुयाम। इद्धं समृद्धं भोगैः N. 10. 21.

३. व इति व्यत्ययेन बहुवचनम्...त्वाम् Sy. व इति द्वितीयैकवचनस्य स्थाने बहुवचनम्। य उक्तगुणोऽसि तं त्वाम् Sk.

४. चरतीति चरथः पशुः। तत्प्रभवा या हृदयाद्यवदानाहुतिः। सापि कारणधर्मस्य कार्येषूपचारदर्शनाच्चराथोच्यते। तया Sk. ५. पश्चाहु० P. D. चरतीति चरथः पशुः। तत्प्रभवैर्हृदयादिभिः साध्याऽऽहुतिरपि चरथेत्युच्यते। उपचारात् कार्ये कारणशब्दः।...चरथया पशुप्रभवहृदयादिसाधनयाऽऽहुत्या Sy.

६. वसति निवसतीति स्थावरो व्रीह्यादिर्वसतिः। पूर्ववत्तत्साध्याहुतिर्लक्ष्यते Sy. वसतीति वसतिः स्थावररूपा व्रीहियवाद्योषधिः। तत्प्रभवा पुरोडाशाद्याहुतिरपि वसतिरिति। तया च Sk.

७. ०षडा इत्या M.

८. यथा गृहं गावो व्याप्नुवन्त्युपगच्छन्ति वा तद्वत् Sk. ९. ०वम P. ०प्नु० M. नक्षन्ते।... व्याप्त्यर्थोऽयम्। व्यत्ययेन चोत्तमस्य स्थाने प्रथमपुरुषः। नक्षामहे व्याप्नुमः। अथवा तृक्ष स्तृक्ष णक्ष गतौ।...उपगच्छामः Sk.

१०. प्रदीप्तम् Sy. आहवनीयात्मना दीप्तं सन्तम् Sk. ११. Missing in M.

१२. ०न्धुम् P. स्यन्दनशीलम् Sy. सिन्धोरिवोदकम् Sk.

१३. नितरामञ्चतीरितस्ततो नितरामुद्गच्छन्तीर्ज्वालाः Sy. प्र नीचीरैनोत्। इङो वा गत्यर्थस्य एवतेर्वा गतिकर्मण इदं रूपम्। दावरूपोऽग्निरामूलादोषधीर्दग्धुं प्रकर्षेण नीचैर्गच्छति Sk.

१४. अग्नि P. ०ग्निं M. M. adds नीची after अग्निः। १५. मयिति P. प्रेरयति। यथा जलप्रवाहो निम्नदेशे शीघ्रं गच्छति तद्वदग्नेर्ज्वाला दग्धव्यं प्रति गच्छन्तीति भावः Sy.

१६. किञ्च नवन्त गावः। स्तुतयोऽत्र गाव उच्यन्ते।... स्तोतारो वा।... अग्निं स्तुवन्ति स्तुतयः स्तोतारो वा। शाकपूणिस्तु... मरुतोऽत्र गाव उच्यन्ते इति मन्यते। अग्निं स्तुवन्तो मरुतः Sk.

१७. नभसि वर्तमाने Sy. स्वः सर्वे सर्वस्मिन् वा दृशीके दर्शनीये वेद्यादौ स्थाने। अथवा दृशीकेशब्दो द्रष्टुमित्यस्य चार्थे। स्वर्दृशीके अग्निप्रकाशितं सर्वं द्रष्टुमित्यर्थः। द्युनाम वा स्वर्शब्दः। द्युलोकं द्रष्टुम्। स्वर्गं प्राप्तुमित्यर्थः Sk.

१८. Ms. D. puts the figure ॥६६॥ here to indicate the end of the sixtysixth hymn. No such number is given in P. and M.

## I.67.

**वनेषु जायुर्मर्तेषु मित्रो वृणीते श्रुष्टिं राजेवाजुर्यम् ।**
**क्षेमो न साधुः क्रतुर्न भद्रो भुवत्स्वाधीर्होता हव्यवाट् ॥१॥२॥**

वनेषु जायुः। काष्ठेषु[1]। जायमानः[2]। मर्त्तेषु[3]। सखा। वृणीते[4]। क्षिप्रकारिणं[5] यजमानम्। राजेव। अजरं[6] मित्रम्। क्षेमः[7]। इव। साधुः[8]। कर्म[9]। इव। भजनीयः। भवति। सुकर्मा[10] होता[11]। हव्यवाट्[12]।

**हस्ते दधानो नृम्णा विश्वान्यमे देवान्धाद्गुहा निषीदन् ।**
**विदन्तीमत्र नरो धियंधा हृदा यत्तष्टान्मन्त्राँ अशंसन् ॥३॥४॥**

हस्ते दधानः। हस्ते। धारयन्। सर्वाण्येव। धनानि[13] देवैर्निहितानि। भये[14]। देवान्। धात्[14]।

---

१. अरण्येषु Sy.
वनेषु Sk.

२. दावरूपेण जननशीलोऽग्निः Sk.

३. मर्त्तेषु M.
षष्ठ्यर्थे सप्तमी। मनुष्याणां मित्रम् Sk.

४. सम्भजते Sy; Sk.

५. क्षिप्रेण कर्मणामनुष्ठातेत्यर्थः। . . . एवम्भूतम् Sy.
श्रुष्टिशब्दोऽत्र दूतवचनो न क्षिप्रनाम। दूतमात्मीयं परकीयं वा राजेव Sk.

६. जरारहितं दृढाङ्गं सर्वकार्येषु शक्तमित्यर्थः। एवम्भूतं पुरुषं यथा राजा वृणीते तद्वत् Sy.
न कदाचिज्जीर्यत इत्यर्थः Sk.

७. रक्षकः Sy.
क्षेम इति द्वितीयार्थे प्रथमा। क्षेममिव च साधुः। यो हि साधुर्न तस्य कुतश्चिदक्षेममस्ति Sk.

८. साधयिता Sy.

९. कर्मणां कर्ता। स इव . . . कल्याणो वा Sy.
क्रतुरितीयमपि द्वितीयार्थ एव प्रथमा। विज्ञानमिव च भद्रः पुरुषः। अथवा क्षेमः क्रतुरिति स्वार्थ एव प्रथमा। क्षेमकरस्तु क्षेम उच्यते। नकारस्तु पुरस्तादुपचारोऽप्युपमार्थीयः साधुरित्येतेन सम्बध्यते। साधुरिव क्षेमकरोऽग्निः। विज्ञानमिव भद्र इत्यर्थः Sk.

१०. सु is omitted by P.
शोभनाध्यानो वा Sy.
स्वाध्यानः कल्याणचित्तोऽग्निः Sk.

११. देवानामाह्वाता Sy.

१२. वाहाः P.
हव्यवाहनो नाम देवानामग्निः Sy.
सर्वयजमानानाम् Sk.

१३. हविर्लक्षणानि Sy.
हविर्लक्षणानि धनानि। . . . गृहीतसर्वहविष्कस्सन्नित्यर्थः Sk.

१४. अग्नौ हविर्भिः सह पलायिते सति सर्वे देवा अभैषुरित्यर्थः Sy.
निदधाति। अदृश्यमानत्वाद् भयं देवानामुत्पादयतीत्यर्थः Sk.

गुहायाम्[१]। निषीदन्[२]। विदन्ति[३]। एनम्। अत्र[४]। देवाः। कर्मणो धातारः[५]। हृदयेन[६]। यदा[७]। कृतान्[८]। मन्त्रान्[९]। अशंसन्[१०]।

**अजो न क्षां दाधार पृथिवीं तस्तम्भ द्यां मन्त्रेभिः सत्यैः ।**
**प्रिया पदानि पश्वो नि पाहि विश्वायुरग्ने गुहा गुहं गाः ॥५॥६॥**

**अजो न क्षाम्।** सूर्यः[११]। इव। भूमिम्। अन्तरिक्षं च। धारयति[१२]। द्यां च[१३]। तस्तम्भ[१४]। मन्त्रैः। सत्यैः[१५] स्तूयमानः स त्वमग्ने ! अस्माकम्। पशोः[१६]। प्रियाणि[१७]। पदानि[१८]। नितराम्[१९]। रक्ष[२०]। सर्वान्न[२१]स्त्वम्। अग्ने ! गुहाया अपि[२२]। गूढं प्रदेशम्[२३]। गतवानसि[२४]।

---

१. अप्सु मध्येऽश्वत्थादौ वा संवृतप्रदेशे Sy. गुहा गूढं प्रच्छन्नम् Sk.
२. ०दद् D. निषदद् P. निगूढो वर्तमानः सन् Sy. नियमेन गच्छन् Sk.
३. मनुष्यास्तु विदन्त्येनमत्राव्यवस्थया वर्तमानम् Sk.
४. निषीदन्। विदन्ति। एनम् missing M. अस्मिन् काले Sy.
५. कर्मणां बुद्धीनां वा धारयितारः Sy. धियं धा यागकर्मणा प्रज्ञया वा धारयितारः। यष्टारः प्रज्ञावन्तो वेत्यर्थः Sk.
६. हृदयावस्थितया बुद्धया Sy.
७. ये Sk.
८. निर्मितान् अग्निस्तुतिपरान् Sy. मनसा सङ्कल्पितानित्यर्थः Sk.
९. अग्निस्तुतिरूपान् Sk.
१०. अस्तुवन् अवोचन्नित्यर्थः Sy. शंसतिरत्र सामर्थ्यादुच्चारणार्थः। अथवा शंसतिः स्तुत्यर्थ एव। तष्टान् मन्त्रानिति तृतीयास्थाने द्वितीया। ये हृदयेन सङ्कल्पितैर्मन्त्रैः स्तुवन्तीत्यर्थः Sk.
११. यद्वा न जायत इत्यजः। जन्मरहित इत्यर्थः। स इव Sy. अजातत्वादजः प्रजापतिः। स यथा तद्वदग्निः Sk.
१२. अन्तरिक्षं च missing M.
१३. द्यों M.
१४. यथाधो न पतत्युपर्येव तिष्ठति तथा करोतीत्यर्थः। यद्वा सत्यैर्मन्त्रैः स्तूयमानोऽग्निर्द्यां तस्तम्भेति Sy. स्तभ्नातिः प्रतिबन्धार्थः। दिवं च प्रतिबध्नाति Sk.
१५. द्युलोकम् ... अवितथार्थैः ... मन्त्रैः... स्तभ्नाति Sy. होतृत्वादग्निः सत्यैर्मन्त्रैर्यागाख्ये धर्मे देवताः स्तुवन् धर्मायत्तस्थितीन् त्रीनपि लोकान् प्रजापतिरिव धारयतीत्यर्थः Sk.
१६. पशुसदृशस्य मम Sk.
१७. पशोः। प्रियाणि missing M. इह परत्र च लोके प्रियाणि Sk.
१८. शोभनतृणोदकोपेतानि स्थानानि Sy. स्थानानि Sk.
१९. नियमेन रक्ष। अथवा पश्व इति दृशेरिदं रूपं द्वितीयाबहुवचनान्तम्। यानि तव प्रियाणि पदानि तानि पश्यतो जानतोऽस्मान् रक्षेत्यर्थः Sk.
२०. मा धाक्षीरित्यर्थः Sy.
२१. गृहीतास्मदीयहविष्कः सन्नित्यर्थः Sk.
२२. रक्षोऽसुरपचनार्थं गूढात् Sk.
२३. गवां सञ्चारायोग्यस्थानम् Sy. गूढतरम् Sk.
२४. गच्छ तत्रैव निवसेत्यर्थः Sy. अत्यन्तगूढं गच्छन्नित्यर्थः Sk.

य ई॑ चि॒केत॒ गुहा॒ भव॑न्त॒मा यः स॒साद॒ धारा॑मृ॒तस्य॑ ।
वि ये चृ॒तन्त्यृ॒ता सप॑न्त॒ आदिद्वसू॑नि॒ प्र व॑वाचास्मै ॥७॥८॥

य ई॑ं चिकेत। यः। एनम्[1]। जानाति। गुहायाम्[2]। भवन्तम्। यश्च। आससाद[3]। सत्यभूत-[4]स्याग्नेः। मार्गम्[5]। ये च। विचृतन्ति[6] मार्गस्थितानि[7] तिरोधानानि[8]। सत्यानि[8]। स्पृशन्तः[9]। अनन्तरम्[10]। एव[10]। अस्मै[11] हस्तस्थानि[12]। वसून्यग्निः। प्रोवाचेति[13][14]।

वि यो वी॒रुत्सु॒ रोध॑न्महि॒त्वोत प्र॒जा उ॒त प्र॒सूष्व॒न्तः ।
चित्ति॒र॒पां दमे॑ वि॒श्वायुः॒ सद्मे॑व॒ धीराः॑ सं॒माय॑ चक्रुः ॥९॥१०॥

वि यो वीरुत्सु। योऽग्निः। वीरुत्सु[15]। अन्तः[16]। माहात्म्येन[17] रसम्। अरुणत्[18]। अपिच। प्रजाः[19] पुष्पफलादिरूपाः[20]। ओषधीष्वन्तः[21]। एक[22] उतशब्दः पादपूरणः सोऽयमन्तरिक्षेऽपाम्[23]। चेतयिता[24]।

---

१. एवं P. २. हविर्गृहीत्वा गूढम् Sk.

३. ०न्तं श्वो ससाद M. उपास्त इत्यर्थः Sy. आसीदति। करोतीत्यर्थः Sk.

४. सत्यस्य यज्ञस्य वा Sy. ऋतस्य गतस्य सतः परोक्षस्य सतः। परोक्षस्यापीत्यर्थः Sk.

५. धारयितारम् Sy. धारां स्तुतिलक्षणां वाचम् Sk.

६. अग्निमुद्दिश्य स्तुतीर्ग्रथ्नन्ति कुर्वन्तीत्यर्थः Sy. विविधं सूक्ताध्यायादिलक्षणान् स्तुतिग्रन्थानेव कुर्वन्ति Sk.

७. ०स्थाना P. ८. तिरोधानानि सत्यानि missing M. यज्ञान् वा Sy. ऋता ऋतं सत्यं गतवानग्निः Sk.

९. समवयन्तः . . . वा Sy. सपतिरर्चतिकर्मा। स्तुवन्तः Sk.

१०. स्तुत्यनन्तरमेव Sy. आदित्। उभावप्येतौ पदपूरणौ Sk.

११. M. adds सर्वस्मै after अस्मै। सर्वस्मै स्तोतृजनाय Sy. अस्मै। बहुवचनस्य स्थाने इदमेकवचनम्। एभ्यः सर्वेभ्यो निर्दिष्टेभ्यः Sk.

१२. ०तथा० M. १३. प्रकथयति Sy. युष्मभ्यमेतानि धनानीत्येवं प्रकर्षेण ब्रवीति। ददातीत्यर्थः Sk.

१४. M. adds हि after इति।

१५. ओषधीषु Sy. वीरुध ओषधयः। तासु Sk. १६. ०न्तं M.

१७. यानि महत्त्वानि सन्ति तानि Sy. स्वेन Sk. १८. विशेषेणावृणोति नावशेषयति Sy. विविधमारोहति Sk.

१९. प्रज्ञाः P. प्रकर्षेणोत्पन्नाः Sy. प्रजायन्त इति प्रजाः। सप्तम्यर्थे चैषा प्रथमा। प्रजायमानासु Sk.

२०. निरुपाः M. २१. उत्पादयित्रीषु मातृस्थानीयास्वोषधीषु Sy. उत प्रसूषु प्रसूतासु। क्व प्रदेशे आरोहति? उच्यते। अन्तर्मध्येऽपि न बहिरेव केवलम् Sk. २२. ष्वन्ते कृते M.

२३. ०वां M. वृष्टिलक्षणानाम्। अथवाऽप इत्यन्तरिक्षनाम। साहचर्यात् त्रयोऽपि लोका अप्शब्देनोच्यन्ते। त्रयाणामपि लोकानामित्यर्थः Sk.

२४. चत० P. ज्ञापयिता Sy. ज्ञाता Sk.

गृहे[१] च। सर्वान्निस्तमिममन्नलीनमानीय[२]। गृहमिवो[३]त्तरवे[४]दिम्[५]।... चक्रुरिति[६]।

## I.68.

**श्रीणन्नुप स्थाद्दिवं भुरण्युः स्थातुश्चरथमक्तून्व्यूर्णोत्।**
**परि यदेषामेको विश्वेषां भुवद्देवो देवानां महित्वा ॥१॥२॥**

श्रीणन्नुप स्थात्। हविर्भिर्मिश्रयन्तु[७]—[८]उपतिष्ठति[९]। द्युलोकं हविषः। भर्ता[१०]। स्थावरम्। जङ्गमं[११] च तेजसा तमसः[१२] प्रकाशयति[१३]। रात्रीश्च[१४]। परिभवति[१५][१६]। यदा[१७]। सर्वान्[१८]। इमान्। देवान् एक एव। महत्त्वेन[१९]।

---

१. जलानां मध्यभूते गृहे Sy. साकाङ्क्षत्वाद्धोतृत्वेन निषीदति स्तूयते वेति वाक्यशेषः Sk. २. ०मिमं निपीनमा० M. सम्माननं पूजनं कृत्वा। स्तुतिभिः स्तुत्वेत्यर्थः Sy.

३. ०मिवो P. यथा सदनं गृहं प्रथमतः सम्पूज्य पश्चात्तत्र कर्माण्याचरन्ति तद्वत् Sy. एकवाक्यताप्रसिद्ध्यर्थं च यत्तच्छब्दावध्याहर्तव्यौ। यल्लौकिकमिव गृहं धीराः प्रज्ञावन्तः सम्माय सम्यक् मीत्वा चक्रुः कृतवन्तस्तत्र Sk.

४. ०र्दी D. ५. सम्यत्वो P. D. M.

६. Ms. D. puts the figure ॥६७॥ here to indicate the end of the sixtyseventh hymn. No such number is given in P. and M.

७. पयःप्रभृतिना श्रयणद्रव्येण सोममिव तैर्हविर्भिः श्रीणन् मिश्रयन् Sy.

८. श्रीणन्। श्रीञ् पाकेऽन्यत्र। इह तु सामर्थ्याद्दाहार्थः। दावरूपोऽग्निस्तृणौषधिवनस्पतीन् दहतु Sk.

९. विति० P. प्राप्नोतीत्यर्थः Sy. दिवं स्पृशतीत्यर्थः Sk.

१०. भुरण्यतेर्गतिकर्मण इदं क्षिप्रनाम। क्षिप्रगामी Sk.

११. Omitted by P. १२. The word तमस् is in the neut. gender. Evidently, abl. sing. or gen. sing. cannot be here intended. Acc. sing. or pl. alone would Suit. The reading should therefore be तमः or तमांसि। Or it may be तमसो विनाशेन see VM. on RV. I. 71. 2.

१३. विशेषेणाऽऽच्छादयति। हविर्वहनं कुर्वन् सर्वमपि जगत् स्वभासा प्रकाशयति स्मेति भावः Sy.

१४. रात्रीश्च तमोरूपास्सतीः स्वेन ज्योतिषा प्रकाशरूपाः करोतीत्यर्थः। अथवाऽक्तूनिति सप्तम्यर्थे द्वितीया। स्थावरं जङ्गमं रात्रिषु प्रकाशयतीत्यर्थः Sk.

१५. परीत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः। यदिति व्यत्ययेन नपुंसकता। हविर्नयनादिना परिगृहीता य एको विश्वेषां भुवद् भवति। अथवा परीत्ययं भुवदित्येतेनैव सम्बध्यते। परिपूर्वश्च भवतिः परिग्रहे। एषामित्यादिषु तु द्वितीयार्थे षष्ठी। परिगृह्णाति य एतान् Sk.

१६. परिगृह्णाति परितो व्याप्य वर्तते Sy.

१७. यदिति व्यत्ययेन नपुंसकता Sk.

१८. विश्वेषां सर्वेषां, देवानां दानादिगुणयुक्तानामिन्द्रादीनां मध्ये देवो द्योतमान एक एवायमग्निरेषां पूर्वोक्तानां ...महित्वा माहात्म्यानि यद् यस्मात् ...परितो व्याप्य वर्तते।...यद्वा एषां विश्वेषां स्थावरादीनां मध्ये वर्तमानोऽयं देवोऽग्निर्देवानां महत्त्वानि ... यदा ... परितो व्याप्नोति। तदानीमिति पूर्वत्रान्वयः Sy.

१९. V. Mādhava ignores देवः

आदित्ते विश्वे क्रतुं जुषन्त शुष्काद्यद्देव जीवो जनिष्ठाः ।
भजन्त विश्वे देवत्वं नाम ऋतं सपन्तो अमृतमेवैः ॥३॥४॥

आदित्ते[1]। अनन्तरम्[2]। एव[2]। तुभ्यम्[3]। सर्वे[4]। कर्म[5]। अजुषन्त[6]। शुष्कात्[7] काष्ठात्। यदा। जातस्त्वम्[8]। जीवस्तदा[9]। सर्वे[10] च तेन कर्मणा। कामानां नामकम्[11]। देवत्वं च। अभजन्त[12]। ऋतं[13] सत्यम्[14]। अमृतं च त्वाम्। गमनैः[15]। स्पृशन्तः[16][17]।

ऋतस्य प्रेषा ऋतस्य धीतिर्विश्वायुर्विश्वे अपांसि चक्रुः ।
यस्तुभ्यं दाशाद्यो वा ते शिक्षात्तस्मै चिकित्वान्रयिं दयस्व ॥५॥६॥

ऋतस्य प्रेषाः[18]। अग्नेरेव। "होता[19] यक्षत्" इत्यादिकाः प्रेषाः[20]। ऋतस्यैव कर्म[21]। सर्वहविष्कः[22]।

---

१. ०दत्ते M. २. 'आत्' 'इत्' इति पदपूरणावपिचेत्यनयोर्वार्थे Sk.
३. तव Sk. ४. मनुष्या देवा वा Sk.
५. काम P. हविर्नयनादिकर्म प्रज्ञां वा Sk.
६. सेवन्ते, अनुतिष्ठन्ति Sy. सेवन्ते Sk.
७. नीरसाद् अरणिरूपात् काष्ठात् Sy.
८. प्रादुर्भवति मथनेनोत्पद्यसे Sy. सर्वत्र हि कारणधर्मानुविधायि कार्यम्। त्वं तु निर्जीवादपि काष्ठात् स्वमाहात्म्येन जीव एव जायस इत्यर्थः Sk. ९. त्वज्जीव D. प्रज्वलन् Sy.
१०. बहवो मनुष्याः Sk.
११. Both Sy. and V.M. paraphrase नाम by नामकम्। Sy. further explains नामकं as अभिभावकं 'overpowering' in RV. 1. 80. 3. see नृम्णम्। But this explanation does not give any good sense. Sk. explains it as प्रख्यातम्, 'known' which is quite appropriate. नाम may be a particle of emphasis i.e. in the sense of 'indeed'. I think V.M. takes देवत्वं in apposition to कामानां नामकं i.e. divinity—a name or goal of their desires.
१२. यदेतद् देवत्वं नाम प्रख्यातम् बहवो मनुष्या देवत्वं प्राप्ता इत्यर्थः Sk.
१३. सर्वगतं वा स्तुवन्तः Sk.
१४. अमरणम् Sy. १५. स्तोत्रैः Sy. तैस्तैर्देवत्वप्राप्त्यादिकामैर्युक्ताः Sk.
१६. समवयन्तः प्राप्नुवन्त इत्यर्थः Sy.
१७. V. Mādhava ignores देव
१८. ऋतस्य सत्यस्य सर्वगतस्य वा भवतः Sk. १९. R.V.I. 139. 10.
२०. प्रैषाः P. D. प्रकर्षेणेष्यमाणाः स्तुतयः क्रियन्ते।... ऋतस्य देवयजनं प्राप्तस्याग्नेः Sy. पाशुकाः सोमिकाश्च प्रेषाः। यावन्तः केचन प्रेषास्ते होतृत्वात् सर्वे तवेत्यर्थः Sk.
२१. धीयते सोमः पीयतेऽस्मिन्निति धीतिर्यागः। सोऽपि . . . देवयजनदेशं प्राप्तस्याग्नेरेव क्रियते Sy. कर्म वा प्रज्ञा वा स्तुतिर्वा धीतिरुच्यते। साप्यृतस्य तवैव Sk.
२२. ससर्व० M. विश्वं सर्वमायुरन्नं यस्य स तथाविधो भवति Sy. षष्ठ्यर्थे प्रथमैषा। विश्वायुषः सर्वान्नस्य Sk.

विश्वे[1] च तस्मै । कर्माणि[2] । कुर्वन्ति । यः । तुभ्यम् । प्रयच्छति[3] । यः[4] । वा । तुभ्यमात्मानम्[5] । नियच्छति[6]
तस्मै[7] । जानन्[8] । धनम्[9] । धेहि[10] ।

**होता निषत्तो मनोरपत्ये स चिन्न्वासां पती रयीणाम् ।**
**इच्छन्त रेतो मिथस्तनूषु सं जानत स्वैर्दक्षैरमूराः ॥७॥८॥**

होता निषत्तः[11] । होता[12] । निषण्णः[13] । मनुष्येषु[14] । सः । खलु[15] आसाम्[16] । रयीणाम्[17] । स्वामी तस्मिन्नेतस्मिन् अन्तःस्थिते । मिथः[18] संसर्गात् स्वेषु । अवयवेषु[19] । पुत्रम्[20] । ऐच्छन्[21] । समजानत[22] चेतरे[23] । स्वैः[24] । इन्द्रियैः[25] । अमूढाः[26] ।

---

१. सर्वे यजमानाः Sy. एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यान्यपि सर्वे मनुष्या यागादिकर्माणि कुर्वन्ति तान्यपि तवैव Sk.
२. दर्शपूर्णमासादीनि कर्माणि Sy.
३. चरुपुरोडाशादीनि हवींषि ददाति Sy. हविः Sk.
४. अन्योऽपि यो यजमानः . . .त्वदीयं कर्म कर्तुं शक्तो भूयासम् इतीच्छति Sy.
५. शिक्षात् । दानकर्मायं सन्नन्तस्य चार्थे द्रष्टव्यः Sk.
६. P. and D. repeat यः । वा । तुभ्यमात्मानम् । नियच्छति
७. उभयविधाय Sy.
८. जनन् P. तत्कृतमनुष्ठानं जानंस्त्वम् Sy.
९. धन् M.
१०. देहि Sy; Sk.
११. ०त्त M. १२. देवानामाह्वाता Sy. स चिन्न्वासामिति तच्छब्दाद्यच्छब्दोऽध्याहार्यः । योऽग्निर्होता Sk.
१३. ०ण्णा M. निषीदति वा Sk.
१४. यजमानरूपायां प्रजायाम् Sy.
१५. चिन्नु इति पदपूरणः Sk.
१६. प्रजानाम् Sy. हविर्लक्षणानाम् Sk.
१७. गवादीनां धनानामपि Sy.
१८. मिथः संसृष्टमेकीभूतं पुत्ररूपेण परिणतम् Sy. सहभूताया अपि Sk.
१९. शरीरेषु Sy. आत्मीयेषु शरीरेषु । स्वशरीरं वा रेतः Sk.
२०. वीर्यम् Sy. एकवाक्यताप्रसिद्धयर्थं यत्तच्छब्दावध्याहर्तव्यौ । य इच्छन्ति रेतः । . . . इच्छया चात्र तत्कारणकौरसप्रजेच्छा प्रतिपाद्यते । येऽग्निपरिचर्यायै समुदिता अपि सन्तः स्वशरीररेतःकारणिकामौरसीं प्रजामिच्छन्ति तेषां स्वभूतानां हविषां नान्येषामित्यर्थः Sk.
२१. त्वदनुग्रहेण पुत्रमलभन्तेति यावत् Sy.
२२. चिरकालं जीवन्तीत्यर्थः Sy. सम्यग् जानन्ति Sk.
२३. इतरेतरैः M. च is omitted in M.
२४. समर्थैः पुत्रैः सह । . . .यद्वा दक्षशब्दः प्राणवाची । . . . स्वकीयैः प्राणैः Sy. दक्षशब्दः . . . मनस्यात्मनि च प्रसिद्धः । इह तु सोऽयमित्यभिसम्बन्धात् तत्प्रभवे ज्ञाने वर्तते । आत्मीयैर्मनःप्रभवैरात्मप्रभवैर्वा ज्ञानैरित्यर्थः Sk.
२५. आ० P. D. सङ्गतास्त्वयैव सर्वं जानन्ति Sy. विविक्तप्रज्ञावन्त इत्यर्थः Sk.
२६. V. Mādhava ignores नु

पितुर्न पुत्राः क्रतुं जुषन्त श्रोषन्ये अस्य शासं तुरासः ।
वि राय और्णोद्दुरः पुरुक्षुः पिपेश नाकं स्तृभिर्दमूनाः ॥९॥१०॥

पितुर्न पुत्राः । कर्म[1] । अजुषन्त[2] । अश्रौषन्[3] । ये । अस्य । शासनम्[4] । वेदे[5] । त्वरमाणाः[6] सोयम्[7] । धनानि[8] । द्वाराणि[9] । विवृणोति यजमानेभ्यः । बहुशब्दः[10] । आश्लेषयति[11] । दिवम्[12] । आच्छादकैर्हविर्भिः[13] । दममना[14] इति याज्ञिकस्याग्नेः स्तुतिः ।[15]

## I.69.

शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची दिवो न ज्योतिः ।
परि प्रजातः क्रत्वा बभूथ भुवो देवानां पिता पुत्रः सन् ॥१॥२॥

शुक्रः शुशुक्वान् । शुक्रवर्णः[16] । शोचनशीलः[17] । उषसः । इव । जरयिताऽऽदित्यः । पूरयिता[18] ।

---

१. तेनानुशिष्टं ... कर्म Sy. यथा पितुः पुत्रा एवमग्नेः क्रतुं प्रज्ञानम् Sk.

२. ०षं चिन्त M. सेवन्ते Sy. सेवन्ते । अग्नेः स्वभूतां प्रज्ञां प्राप्नुवन्तीत्यर्थः Sk.

३. श्रोषन् P. शृण्वन्ति Sy; Sk.

४. येऽस्यानुशासने वर्तन्त इत्यर्थः Sk.

५. ०द P.

६. सादरा इत्यर्थः । अथवा तुरास इति तुर्वतेर्हिंसार्थस्य रूपम् । अग्निप्रसादादेव शत्रूणां हिंसितार इत्यर्थः Sk.

७. धनस्य च Sk.

८. यज्ञस्य द्वारभूतानि Sy. धनस्य च यानि द्वाराणि । यैर्धनं प्राप्यते तानि Sk.

९. प्रकाशयति । ददातीति यावत् Sy. व्यौर्णोत् विविधं प्रकाशयति उद्घाटयति । धनं ददातीत्यर्थः Sk.

१०. क्षु इत्यन्ननाम । बह्वन्नः Sy. क्षुशब्दोऽत्र कीर्तिवचनः । ... बहुकीर्तिरग्निः Sk.

११. अवयवीचकार, नक्षत्रैर्युक्तमकरोदित्यर्थः Sy. पिश अवयवे पठितः । इह तु सामर्थ्याद् रूपवत्करणे द्रष्टव्यः । रूपवतीं चकार नाकं दिवम् Sk.

१२. नास्मिन्नकं दुःखमस्तीति नाको द्युलोकः । ... तम् Sy.

१३. स्तृभिर्नक्षत्रैः Sy; Sk.

१४. दमे यज्ञगृहे मनो यस्य सोऽग्निः Sy. दमूना दान्तः । उपशमात्मक इत्यर्थः । धर्ममूलत्वात् सर्वस्य धर्मस्य चाग्निमूलत्वादिदमुच्यते पिपेश नाकमिति Sk.

१५. Ms. D. puts the figure ॥६८॥ here to indicate the end of the sixtyeighth hymn. No such number is given in P. and M.

१६. शुभ्रवर्णोऽयमग्निः Sy. अग्निः Sk.

१७. ०वर्णो च नीलः P. सर्वस्य प्रकाशयिता भवति । ... स्वतेजसा Sy. दीप्तश्च Sk.

१८. द्योतमानस्य सूर्यस्य Sy. पूरयति च Sk.

द्यावापृथिवी[1]। दिवि[2] भवम्। इव। ज्योतिः[3]। प्रजातस्त्वम्[4]। कर्मणा[5] सर्वम्। परिबभूथ[6]। भुवः[7]। देवानां[8] कर्मतः। पिता[9]। पुत्रोऽपि[10]। सन्[11]।

**वेधा अदृप्तो अग्निर्विजानन्नूधर्न गोनां स्वाद्मा पितूनाम्।**
**जने न शेव आहूर्यः सन्मध्ये निषत्तो रण्वो दुरोणे ॥३॥४॥**

वेधा अदृप्तः। विधाता[12]। अदृप्यन्[13]। अग्निः। विजानन्[14]। गवाम्। ऊधः[15]। इव पयसा[16]। अन्नानि[17]।...पचन्[18]। स्वादूकर्ता[19] भवति। सार्थे[20]। इव। सुखकरं[21] मित्रम्। आह्वातव्यः[22]। सन्।

---

१. समीची सङ्गते। उभे अपीत्यर्थः। के? सामर्थ्याद् द्यावापृथिव्यौ। केन? सामर्थ्याज्ज्योतिषा Sk.

२. द्योतमानस्य सूर्यस्य Sy. पूरयति च Sk.

३. Missing in M. दिव इव सम्बन्धि ज्योतिरादित्याख्यम्। आदित्य इवेत्यर्थः Sk.

४. जातमात्र एव सन् त्वम् Sk.

५. यद्वा ज्ञानहेतुना प्रकाशेनोक्तप्रकारेण सर्वं जगत् Sy. हविर्नयनादिना प्रज्ञया वा Sk.

६. परितो व्याप्नोषि Sy. परिपूर्वो भवतिः परिग्रहे। परिगृह्णासि सर्वम् Sk.

७. भवसि च Sk.

८. दीव्यन्तीति देवा ऋत्विजः। तेषां पुत्रः सन् पुन्नाम्नो नरकात् त्रायकः सन् पिता भुवः पालयिता भवसि। यद्वा देवानामिन्द्रादीनामेव पुत्रः सन् पुत्र इव दूतो भूत्वा पिता हविर्भिः पालयिता भवसि Sy. दीप्यतेः स्तुत्यर्थत्वात् स्तोतारोऽत्र देवा उच्यन्ते। स्तोतृणां यजमानानाम् Sk.

९. पितृस्थानीयः। पालयिता वा Sk.

१०. अग्निर्हि यजमानैर्जन्यते। अत एवमुच्यते पुत्रः सन्निति Sk.

११. Missing in M.

१२. मेधावी। यद्वा विधाता सर्वस्य कर्ता Sy. मेधावी Sk.

१३. अतृप्यन् P. D. दर्परहितः Sy. अमूढः Sk.

१४. कर्तव्याकर्तव्यविभागं जानन् Sy. किम्? सामर्थ्याद् भक्ततां यजमानानाम् Sk.

१५. गोसम्बन्धि पयस आश्रयभूतं स्थानमिव Sy. यथा गवामयमवयवभूतमूधः पयआदिना स्वादुतामन्नानां करोति तद्वत् पाकेन स्वाद्म स्वादुतां करोतीति वाक्यशेषः Sk.

१६. यसा D. M. यासा P. प is omitted by P. D. M.

१७. अन्नानाम् Sy. पितूनामन्नानां हविर्लक्षणानां सर्वेषां वा Sk.

१८. विजपचन् P. D. M.

१९. स्वादयिता रसयिता। यथा गोरूधः पयःप्रदानेन सर्वाण्यन्नानि स्वादूनि करोति तद्वदग्निरपि सम्यक् पाकेन सर्वाण्यन्नानि स्वादूनि करोतीत्यर्थः Sy.

२०. स्वादु० P. २१. स्वा० M. जनयितृत्वाज्जनः पिताभिप्रेतः। प्रथमार्थे चैषा सप्तमी। पितेव सुखकरोऽग्निः Sk.

२२. सर्वयजमानानामाहूर्यः सन्। ह्वृ कौटिल्ये। चञ्चलत्वाज्ज्वालानां कुटिलस्सन् Sk.

मध्ये[1]। निषण्णः। रमयिता[2]। गृहे[3]।

**पुत्रो न जातो रण्वो दुरोणे वाजी न प्रीतो विशो वि तारीत्।**
**विशो यदह्वे नृभिः सनीळा अग्निर्देवत्वा विश्वान्यश्याः ॥५॥६॥**

पुत्रो न जातः। पुत्रः। इव। जातः। रमयिता[4]। गृहे[5]। वर्तमानः। अश्वः[6]। इव। सुहितः[7]। मनुष्यान्[8]। तारयति[9]। यदाहं[10] यज्ञार्थम्। देवैः[11]। समानस्थान्[12]। ऋत्विजो मनुष्यान्[13]। आह्वयामि[14] तदानीम्। अग्निः स्वयमेव[15]। इन्द्रत्वं वरुणत्वं देवतान्तरत्वं च[16]। प्राप्नोति[17]।

**नकिष्ट एता व्रता मिनन्ति नृभ्यो यदेभ्यः श्रुष्टिं चकर्थ।**
**तत्तु ते दंसो यदहन्त्समानैर्नृभिर्यद्युक्तो विवे रपांसि ॥७॥८॥**

नकिष्ट[18] एता। न केचन। तव। एतानि। कर्माणि[19]। हिंसन्ति[20]। यस्मात्[21] त्वम्।

---

१. यज्ञेषु मध्ये Sy. वेद्या मध्ये Sk.
२. स्तुत्यो वा Sy. रमणीयोऽग्निः Sk.
३. यज्ञगृहे Sy. अथवा जनशब्दो लोकवचनः स्वार्थ एव सप्तमी। दुरोण इत्येतस्य सप्तम्यन्तस्येदमुपमानम्। यथा लोके सुखस्तद्वदाहूर्यस्सन् वेद्या मध्ये निषण्णः रमणीयोऽग्निर्गृहेऽपि सुख इत्यर्थः Sk.
४. यथा पुत्रो जातस्तद्वद् ... रमणीयः प्रीतिकरोऽग्निः Sk. ५. यज्ञगृहे Sk.
६. ०मानाश्वः P. D. M.
यथा सङ्ग्रामः सङ्ग्रामजयद्वारेण वर्धयति तद्वत् Sk.
I think Skanda's text is corrupt. One should read अश्वः for सङ्ग्रामः
७. हर्षयुक्तः Sy.
८. सङ्ग्रामे वर्तमानाः शत्रुभूताः प्रजाः Sy. स्तोतॄन् यष्टॄंश्च मनुष्यान् Sk.
९. ०तीति P. D.
विशेषेण तरत्यतिक्रामति Sy.
विपूर्वस्तरतिः सर्वत्र वृद्धयर्थः। विविधं वर्धयति Sk. १०. यद् यो यदा वा Sk.
११. ऋत्विग्लक्षणैर्मनुष्यैः सहितोऽहम् Sy. नृभिर्मनुष्यैर्ऋत्विगाख्यैः Sk.
१२. समानं नीळं स्थानं यासां देवविशां ताः सनीळाः। एकस्वर्गाख्यस्थानाः Sk.
१३. दैवीः प्रजाः।...समाननिवासस्थानाः Sy. किञ्च विशो देवविशः। देवानित्यर्थः Sk.
१४. आह्वयति Sk.
१५. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः। स तदा वा Sk. १६. देवान् सर्वान् Sk.
१७. The passage beginning with यदाहं and ending with प्राप्नोति is omitted by P. and D.
स्वयमेव तत्तद्देवतारूपो भवतीत्यर्थः Sy. अस्मदर्थमश्याः। व्यत्ययेनायं मध्यमः। अश्याद् व्याप्नुयादित्याशास्महे Sk.
१८. नक० P. नकिरिति निपातः प्रतिषेधेन समानार्थः। न केचित् Sk.
१९. परिदृश्यमानानि दर्शपूर्णमासादीनि Sy. दहनपचनादीनि Sk.
२०. राक्षसादयो बाधका न हिंसन्ति Sy. मीञ् हिंसायाम्... हिंसन्ति हिंसितुं शक्नुवन्तीत्यर्थः Sk. २१. यच्च Sk.

नेतृभ्यः[1]। मनुष्येभ्यः[2]। आशु प्राप्तिम्[3]। करोषि सन्निधानं करोषि[4]। तत्[5]। तव[6]। कर्म। समानैः[7]। मनुष्यैः। युक्तः सन् तेषाम्[8]। पापानि। हंसि[9]। यच्च। जानासि[10]। तानित्यैकमत्यं गताः[11] समानास्तैर्नियुक्त[12] इति[13]।[14]

**उषो न जारो विभावोस्रः संज्ञातरूपश्चिकेतदस्मै ।**

**त्मना वहन्तो दुरो व्यृण्वन्नवन्त विश्वे स्व१र्दृशीके ॥६॥१०॥**

**उषो न जारः**। उषसः। इव। जरयिताऽऽदित्यः[15]। दीप्तिमान्[16]। उत्सरणशीलः[17] पुरुषेण। संज्ञातरूपः[18] सन्[19]। जानाति[20] तम्। स्वयमेव[21]। अस्मै[22] हविः। वहन्तोऽभ्युदयानाम्[23]। द्वाराणि[24][25]।

---

१. कर्मसु वर्तमानेभ्यः . . . यज्ञस्य नेतृभ्यो यजमानेभ्यः Sy. एभ्यः स्तोतृभ्यो यष्टृभ्यश्च मनुष्येभ्यः Sk.

२. शु आशु अश्नुते व्याप्नोतीति श्रुष्टिर्यज्ञफलरूपं सुखम् । . . .सति हि तव व्रतानां बाधके एतन्नोपपद्यते। अतोऽवगम्यते तव व्रतानां हिंसका न सन्तीति Sy. श्रुष्टिम्। अपठितमपि सुखनामैतद्द्रष्टव्यम्। सुखं चकर्थ करोषि। तदपि न कश्चिद्धिंसितुं शक्नोति Sk.

३. सन्निपानं M.

४. त्वदीयं . . . कर्म . . . यदि राक्षसादिः . . . नाशयति तदानीं. . .सप्तगणरूपेण सदृशैः. . . नेतृभिर्मरुद्भिर्युक्तस्त्वं . . . बाधकानि राक्षसादीनि. . .यस्मात् त्वं . . . . गमयसि पलायनं प्रापयसि। तस्मात् तव व्रतानि न हिंसन्तीति योज्यम् Sy.

५. एवमतिशयवदनेककर्मयुक्तस्यापि तत्तु ते दंसस्तदेव तव कर्मात्यन्तप्रकृष्टमित्यर्थः Sk. ६. यच्च समानैरात्मनो योग्यैः Sk. ७. ऋत्विगाख्यैर्मनुष्यैर्युक्तो यागकरणद्वारेण Sk. ८. रपांसि। 'रपो रिप्रमिति पापनामनी भवतः'। N. 4. 21. पापानि यजमानानाम् Sk.

९. हिंस P. यदहन् हिंसितवान्। किम् ? सामर्थ्यात् तमो वा रक्षांसि वा Sk.

१०. विवेः। वेतेरन्तर्णीतण्यर्थस्य रूपम्। गमयसि। नाशयसीत्यर्थः Sk.

११. गता P. D. गतः M.

१२. ०नस्तै० M. १३. ०युक्त P.

१४. V. Mādhava ignores तु

१५. ०ताद्यः P. १६. विशिष्टप्रकाशयुक्तः Sy. दीप्तिमानग्निः Sk.

१७. निवासयिता Sy. उस्रेति गोनाम तत्सादृश्यादिहाग्नौ प्रयुक्तम्। वृषभसदृशश्चेत्यर्थः Sk. १८. ०ज्ञान० P. सर्वैः प्राणिभिरवगतस्वरूपः। देवतान्तरवदप्रत्यक्षो न भवतीत्यर्थः Sy. सञ्जातरूपः प्रख्यातरूपश्च Sk.

१९. स M. २०. जानातु, अभिमतफलं ददात्वित्यर्थः। यद्वा विभक्तिव्यत्ययः। अस्मै इदं सूक्तरूपं स्तोत्रं . . . जानातु Sy. चिकेतद् अस्मै . . . व्यत्ययेन चेदं बहुवचनस्य स्थान एकवचनम् . . . जानन्ति Sk. २१. तथाऽस्य रश्मयः . . . आत्मनैव स्वयमेव Sy. एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ। ये जानन्त्येतमग्निमस्य वाऽग्नेरर्थाय स्तुतिं हवींषि वा कर्तुं ते. . . आत्मना Sk. २२. अस्मै यजमानाय Sy. अस्मै इत्यपि द्वितीयार्थे चतुर्थी। तादर्थ्यचतुर्थीश्रुतेर्वा स्तुतिं हवींषि वा कर्तुमिति वाक्यशेषः Sk. २३. हर० P. हविर्वहनं कुर्वन्तः Sy. अग्निं प्रति स्तुतिं हवींषि वा प्रापयन्तः Sk.

२४. धनस्य Sk. २५. यज्ञगृहद्वाराणि Sy.

विवृण्वन्ति[1] । सर्वेऽभ्युदयार्थिनोऽस्मिन्[2] । सर्वस्य[3] । दर्शनीये । संश्लिष्टा[4] भवन्तीति[5] ।

## I.70.

**व॒नेम॑ पू॒र्वीर॒र्यो म॑नी॒षा अ॒ग्निः सु॒शोको॒ विश्वा॑न्यश्याः ।**
**आ दैव्या॑नि व्र॒ता चि॑कि॒त्वाना मानु॑षस्य॒ जन॑स्य॒ जन्म॑ ॥१॥२॥**

**वनेम** । भजेमहि[6] । बहून्यन्नानि[7]...[8]न्यग्निदग्धारण्याज्जातानि स हि । प्रज्ञायुक्तः[9] । प्रदाता भवति सोऽयम् । अग्निः । सुदीप्तिः । विश्वानि हवींषि[10] । व्याप्नोति[11] । दैव्यानि[12] । कर्माणि[13] । आभिमुख्येन[14] । जानन् । आजानंश्चैव[15] । मानुषस्य[16] । जनस्य । उत्पत्तिमिति[17] ।

---

१. विशेषेण गच्छन्ति । व्याप्नुवन्तीत्यर्थः Sy. विविधं गच्छन्तः प्राप्नुवन्ति । धनं लभन्त इत्यर्थः Sk.

२. सर्वे ते रश्मयः Sy. सर्वे मनुष्याः Sk.

३. स्वः नभसि Sy. सर्वस्मिन् दृशीके दर्शनीये वेद्यादौ स्थाने । अथवा दृशीकेशब्दोऽत्र द्रष्टुमित्यस्यार्थे । सर्वमग्निप्रकाशितं द्रष्टुम् । द्युनाम वा स्वःशब्दः । दिवं द्रष्टुम् । स्वर्गं प्राप्तुमित्यर्थः Sk.

४. नवन्त गच्छन्ति । नवतिर्गतिकर्मा । देवान् प्राप्नुवन्तीत्यर्थः Sy. नवन्त स्तुवन्ति Sk.

५. Ms. D. puts the figure ॥६९॥ here to indicate the end of the sixtyninth hymn. No such number is given in P. and M.

६. भजेम P. सम्भजेमहि । अग्निस्तादृशान्यन्नानि ददात्वित्यर्थः Sy. ताः सम्भजेमहीत्येतदाशास्महे Sk.

७. पूर्वीश्चिरन्तनीः । काः? सामर्थ्यात्समृद्धीराशिषो वा Sk.

८. ह्य० D. ०नानि ... न्य० M. Mss. P. and D. read continuously without showing gaps.

९. मनीषया बुद्ध्या, अर्यो गन्तव्यः प्राप्तव्यः । यद्वा मनीषया अर्यः स्वामी Sy. अयमर्य ईश्वरः । मनीषा स्तुतिरत्र मनीषोच्यते । ... मनीषया स्तुत्या सहाग्निः Sk.

१०. विविंषि P. कर्माणि Sy. अस्मदीयानि हवींषि Sk.

११. व्याप्नुयादित्याशास्महे Sk.

१२. देवेषु भवानि Sy. देवानां स्वभूतानि Sk.

१३. हविर्नयनादिकर्माणि Sk.

१४. मर्यादया यो ज्ञातवान् Sk.

१५. ०वं P.

१६. मनुष्यस्य P. कृत्स्नस्य जनस्य जन्म आचिकित्वान् । हविर्नयनादिकर्मणा मनुष्याणाञ्च जन्मनो ज्ञातेत्यर्थः Sk.

१७. उत्पत्तिरूपं कर्म । ... द्यावापृथिव्योः सम्बन्धीनि यानि कर्माणि तानि सर्वाण्यवगच्छन् । अवगत्य व्याप्नोतीत्यर्थः Sy.

गर्भो॒ यो अ॒पां गर्भो॒ वना॑नां॒ गर्भ॑श्च स्था॒तां गर्भ॑श्च॒रथा॑म्।
अद्रौ॑ चिदस्मा अ॒न्तर्दु॑रो॒णे वि॒शां न विश्वो॑ अ॒मृतः॑ स्वा॒धीः॥३॥४॥

गर्भो यः। पुत्रः[1]। यः। अपाम्। पुत्रः[2]। वृक्षाणाम्[3]। गर्भश्च[4]। स्थावराणाम्[5]। गर्भः[6]। जङ्गमानामग्निः[7]। तस्मै एव। अद्रौ[8]। इव[9]। अन्तः[10]। गृहे[11] च परिचरन्ति सोऽयम्। विशाम्[12]। च। निवेशको[13] भवति। अमृतः[14] सुकर्मा[15]। समुच्चये नकारः[16]।

स हि क्ष॒पावाँ॑ अ॒ग्नी र॑यी॒णां दा॒शद्यो॑ अ॒स्मा अरं॑ सू॒क्तैः।
ए॒ता चि॑कित्वो॒ भूमा॒ नि पा॑हि दे॒वानां॒ जन्म॒ मर्ता॑श्च वि॒द्वान्॥५॥६॥

स हि क्षपावान्। सः। हि[17]। रात्रिमान्[18]। अग्निः। धनानि[19]। ददातु[20]। यः। अस्मै। पर्याप्तो[21]

---

१. गर्भवदन्तर्वर्ती, अपांनपात्संज्ञः Sy. वैद्युतात्मना ह्यग्निरद्भ्य उत्पद्यते। अतोऽपां गर्भ उच्यते Sk.

२. दावाग्निरूपेण तन्मध्ये वर्तते Sy.

३. अरण्यानाम् Sy. ततोऽप्यग्नेरुत्पत्तिदर्शनात् Sk.

४. अन्तरवस्थाता Sy.

५. काष्ठादीनाम् Sy. यो गर्भस्तृणौषध्यादीनाम्। ततोऽप्यग्नेरुत्पत्तिदर्शनात् Sk.

६. जाठररूपेण देहमध्येऽवतिष्ठते Sy.

७. जङ्गमानां मनुष्यादीनाम्।...तदुदरेषु जाठरात्मना विद्यमानत्वात् Sk.

८. यस्य चाद्रौ चित्। षष्ठ्यर्थे चात्र सप्तमी। अन्तरित्येतेन चास्य सम्बन्धः। अद्रेरप्यन्तः पर्वतस्यापि मध्ये Sk.

९. ०द्रापिव P. M. अपि Sy.

१०. न्त M. हविः प्रयच्छन्तीति शेषः Sy.

११. दुस्तर्यगृहे Sy. अस्मै। इयमपि षष्ठ्यर्थे चतुर्थी। अस्याग्नेः। दुरोणे। प्रथमार्थ एषा सप्तमी। दुरोणं गृहम्। यस्याग्नेर्गृहाणामपि मध्ये स्थानमित्यर्थः Sk.

१२. यश्च विशां यष्टृणां स्तोतृणां मनुष्याणाम् Sk.

१३. विश्वः सर्वः। सर्वकार्यकरत्वाच्च सर्व इति व्यपदेशः Sk.

१४. अम्यतः M. ०त P. अमरणधर्माग्निः Sy. मरणवर्जितः Sk.

१५. शोभनाध्यानो वाऽस्माकं भवत्विति शेषः। तत्र दृष्टान्तः। विश्वो निवेशयिता सुखेनावस्थापयिता राजा विशां न। प्रजानां यथा रक्षणरूपशोभनकर्मयुक्तो भवति तद्वत् Sy. कल्याणचित्तः। य ईदृशस्तस्य किमित्युत्तरयर्चैकवाक्यता Sk.

१६. नशब्दस्तु ... पदपूरणः Sk.

१७. हिशब्दः पदपूरणः Sk.

१८. यद्वा राक्षसादीनां क्षपणेन नाशनेन युक्तः Sy. यद्यपि चोभाभ्यामहोरात्राभ्यामग्निस्सम्बद्धस्तथापि रात्रावतिशयेन दीप्तियोगादयं तद्व्यपदेशः। अथवा क्षपयन्ति निर्वीर्यतामिति क्षपाः स्तुतय इहोच्यन्ते। स्तुतयो हि वीर्यवृद्धिकरत्वाद्देवतानां निर्वीर्यतां क्षपयन्ति। तद्वानग्निः Sk.

१९. धा० M.

२०. ददाति Sk.

२१. पर्याप्तं स्तोत्रं करोति तस्मै इत्यर्थः Sy. अरं समर्थः Sk.

भवति । सूक्तैरेभिः[१] । एतानि । प्राज्ञ[२] ! भूतानि[३] । निपाहि[४] । देवानाम्[५] । मनुष्याणाम्[६] । च । उत्पत्ति-स्थानम्[७] । जानन् ।

**वर्धान्यं पूर्वीः क्षपो विरूपाः स्थातुश्च रथमृतप्रवीतम् ।**
**अराधि होता स्वर्निषत्तः कृण्वन्विश्वान्यपांसि सत्या ॥७॥८॥**

वर्धान् यम् । वर्धयन्ति[८] । यम्[९] । बह्व्यः[१०] । रात्र्यः[११] । नानारूपाः[१२] । स्थातुरोषध्यादेः[१३] । अपि । स्वर्गप्रापकम्[१४] । सत्येन[१५] परिवीतम् अपिवा यज्ञेन[१६] निषिक्तम् । ऋद्धोऽभवत्[१७] । होताग्निः[१८] । सर्वत्र[१९] । निषण्णः[२०] । कृण्वन् । सर्वाणि[२१] । कर्माणि[२२] । सत्यानि ।

**गोषु प्रशस्तिं वनेषु धिषे भरन्त विश्वे बलिं स्वर्णः ।**
**वि त्वा नरः पुरुत्रा सपर्यन्पितुर्न जिव्रेर्वि वेदो भरन्त ॥९॥१०॥**

गोषु प्रशस्तिम् । गोषु[२३] । प्रशस्तं[२४] पयः[२५] । धारयसि[२६] या गावः । वनेषु[२७] चरन्ति ।

---

१. सुष्ठूक्तैर्यथाशास्त्रं प्रयुक्तैर्मन्त्रैः Sy. ऋक्समुदायलक्षणैः ।...तृतीयानिर्देशात् स्तोतुमिति वाक्यशेषः । य एवमग्निं सूक्तैः शक्नोति स्तोतुमित्यर्थः Sk.

२. सर्वज्ञाग्ने Sy. ज्ञातः Sk.

३. प्राज्ञ ! भूतानि omitted by P. अस्मदीयानि Sk. ४. हि M.

५. इन्द्रादीनाम् ।...यतस्त्वं देवमनुष्यादीन् सर्वान् जानास्यत एवमुच्यस इत्यर्थः । Sy. ६. मनुष्याणां मनुष्याणां M.

७. यावत्किञ्चित्सर्वं जानन्नित्यर्थः Sk.

८. वर्द्धयं P. ०यति M. वर्धयन् Sk.

९. अग्निम् Sk. १०. स्तुतयो वा Sk.

११. शुक्लकृष्णतया विविधरूपाः Sy.

१२. ०रेष० P. स्थावरं वृक्षादिकम् Sy.

१३. चशब्दाज्जङ्गमस्येति वाक्यशेषः । ओषधिहविषः पशुहविषश्चेत्यर्थः Sk.

१४. ०पावकम् M. रममाणं जङ्गमं मनुष्यादिकं च Sy. रथं रयस्थानीयम् । वोढारमित्यर्थः Sk. १५. उदकेन, सत्येन यज्ञेन वा प्रकर्षेण वेष्टितं यमग्निं वर्धयन्ति Sy. ऋतो यज्ञः । तत्र प्रज्ञातं प्रगतं वा यज्ञार्थमुत्पन्नं यज्ञे वा व्यवस्थितं सन्तमित्यर्थः Sk. १६. वाञ्जन P.

१७. ०क्तम्यद्धो० M. संसिद्धोऽभूत्...यद्वा ऋत्विग्भिरराधि आराधित इत्यर्थः Sy. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । सः अराधि आराधयति देवान् Sk.

१८. देवानामाह्वाता Sy.

१९. सुष्ठुवरणीये देवयजने Sy. यज्ञे Sk.

२०. निषण्ण उपविष्टः सन् Sy.

२१. हविर्नयनादीनि स्वकर्माणि यागकर्माणि वा Sk. २२. सत्सु यजमानेषु भवानि । यद्वा सत्यफलानि Sy. अविसंवादीनि Sk. २३. अस्मदीयेषु पशुषु Sy.

२४. प्रशंसाम् Sy; Sk. २५. वयः M.

२६. स्थापयसि । अस्माकं प्रशस्ता गवादि-पशवो भवन्त्वित्यर्थः ।...वननीयेषु सम्भजनीयेषु Sy. २७. वनेषु वननीयेषु चाश्वादिषु । उदकनाम वा वनशब्दः । उदकेषु ।...गा वननीयांश्चाश्वादीनुद-कानि वा प्रशस्तानि त्वं करोषीत्यर्थः Sk.

भरन्त[1] च। विश्वे[2]। वलिम्[3]। शोभनम्[4]। अस्मभ्यम्[5]। विविधम्। त्वाम्। नरः[6]। पूरयन्ति[7]। अनेकेषु[8] गृहेषु[9]। पितुः[10]। इव। जीर्णात्[11]। धनं त्वदीयम्[12]। हरन्ति[13]।

**साधुर्न गृध्नुरस्तेव शूरो यातेव भीमस्त्वेषः समत्सु ॥११॥**

साधुर्न गृध्नुः[14]। साधयिता[15]। इव। शत्रूणामभिकाङ्क्षितायुधानाम्। क्षेप्तेव[16]। शूरः। प्रहर्तेव[17] च। भीमः[18]। दीप्तः। सङ्ग्रामेषु[19] अग्निः[20]रिति धनमाशास्ते सूक्तेनेति।[21]

I.71.

**उप प्र जिन्वन्नुशतीरुशन्तं पतिं न नित्यं जनयः सनीळाः।**
**स्वसारः श्यावीमरुषीमजुषञ्चित्रमुच्छन्तीमुषसं न गावः ॥१॥**

उप प्र जिन्वन्। उपाचरन्[22]। कामयमानाः। कामयमानम्। पतिम्। इव। असाधारणम्[23]।

---

१. भवन्त M. आहरन्तु Sy. हरन्ति त्वां प्रति प्रापयन्ति। तुभ्यं ददतीत्यर्थः Sk.

२. सर्वे जनाः Sy.

३. उपायनरूपं धनम् Sy. हविर्लक्षणम् Sk.

४. सुष्ठ्वरणीयम् Sy. स्वः सर्वम्। यावद् दातुं योग्यं तत्समस्तमित्यर्थः Sk.

५. शोभनम् missing M. नोऽस्माकं स्वभूता ऋत्विजः पुत्रादयो वा Sk.

६. त्वं न्नर P. मनुष्याः Sy.

७. पूजयन्ति Sy. विविधं परिचरन्ति Sk.

८. बहुषु देवयजनदेशेषु Sy.

९. स्थानेषु Sk.

१०. यथा च पितुर्जीर्णस्य स्वभूतं धनं निवृत्तरजसि मातरि पित्रानुज्ञाताः पुत्रा विभजन्त एवं देवास्त्वदीयं धनम् Sk.

११. जीर्णं P. वृद्धात्।... यथा पुत्रा वृद्धात् पितुः सकाशाद् धनं हरन्ति तद्वत् Sy.

१२. त्वदीयम्। हरन्ति missing M.

१३. त्वत्तो विशेषेण... गृह्णन्तीत्यर्थः Sy. आत्मानं प्रति प्रापयन्ति। विभजन्तीत्यर्थः। अथवा वेदोऽत्र हविर्लक्षणं धनमभिप्रेतम्। यथा पितुर्जीर्णस्य पुत्रा आदरेण विविधमन्नमुपहरन्त्येवं भवतो हविरित्यर्थः Sk.

१४. गृहीता। यथा साधकः साध्यफलमाशु गृह्णाति तद्वदग्निरपि सर्वं स्वीकरोतीत्यर्थः Sy. १५. साधुः।... यथा साधुः पुरुषो न्यायेनैवार्थानभिकाङ्क्षत्येवमग्निः स्तुतीर्हवींषि चेत्यर्थः Sk.

१६. निक्षे० M. यथेषूणां क्षेप्ता धानुष्कः शत्रून् प्रेरयति तद्वदग्निरपि दहन् सर्वं प्राणिजातं प्रेरयति Sy. यथायुधक्षेपणशीलः पुरुषस्तद्वदग्निः शूरः Sk.

१७. यातयिता हिंसकः Sy. हन्तेव Sk.

१८. सर्वेषां भयङ्करो भवति। तद्वदग्निरपि दृष्टिमात्रेण सर्वेषां भयमुत्पादयति Sy.

१९. सङ्ग्रामस्थानीयेषु यज्ञेषु सङ्ग्रामेष्वेव वा Sk. २०. अस्माकं सहायो भवत्वित्यर्थः Sy. २१. Ms. D. puts the figure ॥७०॥ here to indicate the end of the seventieth hymn. No such number is given in P. and M.

२२. उपेत्य हविष्प्रदानादिकर्मणा प्रीणयन्ति Sy. उपेत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः। उपगम्य... प्रीणयन्ति। प्रीणितवत्यो वाग्निम्। काः? सामर्थ्यादाहुतयः Sk. २३. ०ण P.

जाया:। एकपतिका:[1]। अङ्गुलय एकस्मात्पाणेरुत्पन्ना:[2]। अञ्जलिकरणाच्छ्यामवर्णाम्[3]। आरोचन[4]-शीलामग्नेर्दीप्तिम्[5]। चित्रम्[6]। अजुष्रन्[7] सेवन्ते[8] चित्रम्। उच्छ्वसन्तीम्[9]। उषसम्। इव। रश्मय:[10]।

**वीळु चिद्दृळ्हा पितरो न उक्थैरद्रिं रुजन्नङ्गिरसो रवेण ।**
**चक्रुर्दिवो बृहतो गातुमस्मे अहः स्वर्विविदुः केतुमुस्राः ॥२॥**

वीळु चित्। महान्तम्[11]। अपि। पितर:[12]। अस्माकम्। स्तोत्रै:[13]। शिलोच्चयम्[14]।

---

१. समाननिवासस्थाना:, एकपाण्यवस्थानात् Sy.
समानगृहा:। यथैकगृहवासिन्यो भार्या: परस्परस्पर्धया तैस्तैरुपचारविशेषै: कौमारं भर्तारं कामयमानं प्रीणयेयुस्तद्वदित्यर्थ: Sk.

२. स्वसार:। लुप्तोपममेतद्द्रष्टव्यम्। स्वसार इव। यथा च भगिन्यो भ्रातरं प्रीणयेयुस्तद्वदित्यर्थ:। अथवा सनीळा: स्वसार इत्येताभ्यामाहुतय: प्रतिनिर्दिश्यन्ते। समानमग्न्याख्यं स्थानं यासां ता: सनीळा आहुतय:। अग्नेरेवैकस्य योग्या नान्यस्य कस्यचिदित्यर्थ:। ता एवैकयजमानप्रभवत्वात् स्वसार: स्वयं सारित्वाद्वा Sk.

३. अंजलि करेणाच्छ्यावर्णां P. D.
रात्रिसम्बन्धात् कृष्णाम् Sy.
यथा श्याववर्णां गां गमनस्वभाविकां च तमांसि विवासयन्तीमुषसं सेवेरन् तद्वत् Sk.

४. आरोचमानां यद्वा शुभ्ररूपयुक्ताम्। . . . यथा रश्मय उषसा नित्यसम्बद्धा एवं सर्वेषु यज्ञेष्वग्निपरिचरणेनाङ्गुलयो नित्यसम्बद्धा इति तात्पर्यार्थ: Sy.

५. ०प्ति: M. ६. चित्राम् M.
प्रीणयित्वा च . . . चायनीयं पूजनीयं तमग्निमञ्जलिबन्धनेन. . .असेवन्त Sy.
विचित्रं पूजनीयं वाग्निम् Sk.

७. अजुषन् D. अजुष्टन् M.

८. सेवितवत्यो वा Sk.

९. सूर्यकिरणसम्बन्धात् तमो वर्जयन्तीम् Sy.
The idea is to dispel darkness. In that sense, the proper reading should be उच्छन्तीम्, for उच्छ्वसन्तीम् denotes 'breathing'. It may however convey the notion of 'rising or coming into life' by लक्षणा but उच्छन्तीम् will directly express the idea of 'dispelling darkness'.

१०. का अजुष्रन्? उच्यते। गाव:। स्तुतयोऽत्र गाव उच्यन्ते। . . . यथाऽऽहुतयोऽग्निं प्रीणयन्ति प्रीणितवत्यो वा स्तुतयोऽपि स्तुवन्ति स्तुतवत्यो वेत्यर्थ: Sk.

११. वीळु इति बलनाम। बलवन्तं दृढाङ्गमपि Sy. वीळयति: संस्तम्भनकर्मा। संस्तब्धमपि। अत्यन्तप्रणतमप्यसुरवर्गमित्यर्थ: Sk.

१२. अङ्गिरस एतत्संज्ञा ऋषय: Sy.

१३. शस्त्रैरग्निं स्तुत्वा Sy.
तृतीयानिर्देशाद् योग्यक्रियाध्याहार:। उक्थाख्यै: शस्त्रविशेषै: स्तुवन्त:। कम्? प्रकरणसामर्थ्यादग्निम् Sk.

१४. अद्रिम्, अत्तारं पणिनामानमसुरम् Sy.
दुर्गपर्वतं चासुराणां स्वभूतम् Sk.

अरुजन्[1] महता। शब्देन[2]। चक्रुः[3]। द्युलोकात्[4]। महतः। गमनम्[4]। अस्माकम्। पितरस्तमसो विनाशेन। शोभनम्[5]। अहः[6]। प्रज्ञाम्[7]। रश्मींश्च[8]। विविदुः[9 10]।

**दधन्नृतं धनयन्नस्य धीतिमादिदर्यो दिधिष्वो३ विभृत्राः।**
**अतृष्यन्तीरपसो यन्त्यच्छा देवाञ्जन्म प्रयसा वर्धयन्तीः ॥३॥**

दधन्नृतम्[11]। धारयति[12]। अग्निम्[13]। पूरयति[14] च। अस्य। कर्म[15]। अनन्तरम्[16]। एवाग्निः[16]।

१. अभञ्जन् Sy. भग्नवन्तोऽङ्गिरसः।... कथं पुनरेतत्? उच्यते। अग्निं स्तुवन्तो रुजन्निति। यावतेन्द्रेण सहाङ्गिरसोऽसुरबलादीन्यरुजन् नाग्निना। उच्यते। इन्द्रसाहित्यमङ्गिरसां सखित्वात्। इन्द्रसखित्वं च प्रकृष्टाद्धर्मात्। प्रकृष्टश्च धर्मो यागादिरग्न्यायत्तः। अत एतदुच्यते उक्थैः स्तुवन्तो रुजन्निति। एवञ्चास्या ऋच आग्नेयत्वमुपपद्यते Sk.

२. स्तुतिशब्दमात्रेणैव...तैः स्तुतोऽग्निस्तमसुरं हतवानित्यर्थः Sy. ३. अस्मानपि सम्यगनुशासनद्वारेण स्वर्गगमनयोग्यानङ्गिरसोऽग्निप्रसादेनैव चक्रुरित्यर्थः Sk.

४. द्युलोकस्य ... मार्गम् Sy.

५. शोभम् P. सुष्ठ्वरणीयमसुरराहित्येन सुखेन प्राप्यं... दिवसम् Sy.

६. अहश्शब्दोऽत्र कालमात्रोपलक्षणार्थः। कालं स्वरादित्यं च Sk. ७. अह्नां केतयितारं ज्ञापयितारमादित्यम् Sy. प्रज्ञानतत्त्वम् Sk. ८. पणिनापहृताः गाश्च Sy. कीदृशाः अङ्गिरसः? उच्यते। उस्रा उत्स्राविणः। दातार इत्यर्थः। कस्य? सामर्थ्याद् भोगानां पुष्टेर्वा। अथवा उस्रा इति गोसदृशाः। अत्यन्तजवाः सन्त इत्यर्थः। अथवैवमन्यथा उत्तरस्यार्धर्चस्यार्थयोजना। चक्रुरिति सामर्थ्याद्देवानां प्रतिनिर्देशः। कृतवन्तो देवाः। दिवो बृहतो गातुं हवींषि गृहीत्वा महान्तं द्युलोकं प्रतिगन्तारम्। कम्? सामर्थ्यादग्निम्। अस्मे अस्माकं मनुष्याणामर्थाय। किञ्चाहः स्वर्विविदुः केतुमुस्राः। विविदुरिति विन्दतेर्लाभार्थस्येदं रूपम्। उस्रा इति रश्मिनाम। अहश्चादित्यश्च रश्मयश्चाग्निप्रसादेन केतुं प्रज्ञानं प्रकाशरूपतां लब्धवन्त इत्यर्थः Sk.

९. अजानन् लब्धवन्तो वा Sy. अग्निप्रसादेनैवाङ्गिरसो ज्ञातवन्तः Sk.

१०. V. Mādhava ignores दृळ्हा

११. ०धनृ० M.

१२. गार्हपत्यादिरूपेणाधारयन् Sy. धारयन्त्यस्मदीयाः स्तुतयः Sk.

१३. देवयजनदेशं प्राप्तमग्निमङ्गिरसो महर्षयः Sy. ऋतं सर्वगतमग्निम्। गुणधारणाच्चैतदग्नेर्धारणमुच्यते। अग्नेर्गुणान् कीर्तयन्त्यस्तेषामपि स्मरणं लोके कुर्वन्तीत्यर्थः Sk. १४. धनमकुर्वन् Sy. धन धान्ये पठितः। इह तु सामर्थ्यात् प्रीणनार्थः। धिनोतेर्वा प्रीणनार्थस्येदं रूपम्। प्रीणयन्ति च तस्याग्नेः Sk.

१५. अग्निहोत्रादिलक्षणम्। ...यथा पुरुषा धनं सम्पादयन्ति तद्वदग्निदेवत्यं कर्माण्वतिष्ठन्नित्यर्थः Sy. अपठितमपि प्रज्ञानामैतत्। प्रज्ञाम्। मनश्चास्याग्नेः प्रीणयन्तीत्यर्थः Sk.

१६. अङ्गिरसामनुष्ठानानन्तरमेव Sy. आदिदिति पदपूरणौ Sk.

उदारः । धारयति । विभृत्रास्ताः प्रजा अग्निप्रसादेन । पूर्णकामाः । कर्माणि । अभिगच्छन्ति । देवान् । जायमाने । हविषा वर्द्धयन्त्यः ।

**मथी॒द्यदीं॑ वि॒भृतो॑ मात॒रिश्वा॑ गृ॒हेगृ॑हे श्ये॒तो जेन्यो॒ भूत् ।**
**आदीं॒ राज्ञे॒ न सही॑यसे॒ सचा॒ सन्ना दू॒त्यं१॒॑ भृग॑वाणो विवाय ॥४॥**

मथीद्यदीम् । बलेनाजहार । यदा । एनम् । धारकः । मातरिश्वा द्युलोकाद्यदा च श्वेतवर्णः । जेताऽग्निः । अनुगृहम् । अभवत् । अनन्तरमेव । एनम् । राज्ञे । इव बलवते । सखा । सन् ।

---

१. अर्या धनस्य स्वामिन्यः Sy.
अरिरीश्वर उच्यते। ईश्वरा अप्रतिहताग्निगुणप्रकाशनसामर्थ्या इत्यर्थः Sk.
२. तेन धनेन दिधिष्वोऽग्नीनां धारणं कुर्वत्यः। कृताग्न्याधाना इत्यर्थः Sy.
सर्वेषामग्निगुणानां धारयित्र्यः। सर्वैरग्निगुणैर्युक्ता इत्यर्थः Sk.
३. आहितानग्नीन् अग्निहोत्रादिकर्मणि विहरन्त्यः Sy.
अत्यन्तविभिन्नरूपा इत्यर्थः Sk.
४. यजमानलक्षणाः Sy.
५. विषयान्तरतृष्णारहिताः Sy.
प्रीणयित्वा चाग्नेर्मनोऽतृष्यन्तीः। तृषात्र कारणभूतः श्रमो लक्ष्यते। अश्राम्यन्त्यः इत्यर्थः Sk.
६. अपसा कर्मणा युक्ताः Sy.
कर्मनामैतत् साहचर्यात् स्तुतिषु प्रयुक्तम्। आहुत्यादिकर्मसहचरिताः। सहाहुत्यादिभिरित्यर्थः Sk.
७. प्राप्नुवन्ति परिचरन्तीति यावत् Sy.
गच्छन्त्याप्तुमन्यानपि देवान् Sk.
८. देवं P. इन्द्रादीन् Sy.
९. जातान् मनुष्यांश्च Sy.
जननाज्जन्म भूतजातमुच्यते। कृत्स्नं भूतजातम् Sk.
१०. हविर्लक्षणेनान्नेन Sy.
वृष्टिद्वारेणान्नेन Sk.
११. वद्ध० D.
१२. ०दिं M.
१३. अमथ्नात्। अग्नेर्मन्थनस्य व्यानवायुसाध्यत्वम् Sy. मथितवान् Sk.
१४. अग्निम् Sy; Sk.
१५. प्राणिषु प्राणापानादिपञ्चवृत्तिरूपेण विहृतो विभज्य स्थितः Sy.
यदेति वचनात्ततः प्रभृतीत्यध्याहार्यम्। ततः प्रभृति विभृतः। विहृतः Sk.
१६. व्यानवृत्तिरूपेणावस्थितो मुख्यप्राणः Sy.
१७. श्वेतपश्वेकवर्णः M. मन्थनेनोत्पन्नोऽयमग्निः . . . शुभ्रवर्णो भूत्वा Sy.
१८. जेता is omitted by P. and D.
प्रादुर्भूतः। . . . यद्वा रक्षसां जेन्यो जेताभिभविता भूत् Sy.
जेता तमसां शत्रूणां वा Sk.
१९. सर्वस्मिन् यज्ञगृहे Sy.
२०. अनुभवत् P.
२१. आत्, यज्ञगृहे प्रादुर्भावानन्तरम् Sy.
आत् ईम् इति पदपूरणौ Sk.
२२. अग्निम् Sy.
२३. यथा कश्चिद्राज्ञो बलवतोऽर्थाय सर्वाभिप्रेतार्थसिद्धिं कुर्वन् दौत्यं गच्छेद् एवं सचा सह। केन? स्वैर्भ्रातृभिः Sk.
२४. अभिभवित्रे Sy.
२५. सखा सखा M. यथा राज्ञे स्वपुरुषं दूतकर्म प्रापयति तद्वत् Sy.

आविवाय[1] वेतिर्गतिकर्माऽनयत्[2]। दूत्यम्। भृगवाणो[3] दीप्तवाणो[4] वायुर्दूतं चाकरोदिति।

**महे यत्पित्र ईं रसं दिवे करवं त्सरत्पृशन्यश्चिकित्वान्।**
**सृजदस्ता धृषता दिद्युमस्मै स्वायां देवो दुहितरि त्विषिं धात्॥५॥**

महे यत् पित्रे। महते। पित्रे[5]। द्युलोकाय[6] देवेभ्यः। यदा हविष्ट्वमापन्नम्[7]। रसमग्निः[8][9]। करोति[10] तदा गच्छन्तम्। एनं दृष्ट्वा हविः परिमोक्षणाय। स्पर्शने[11] साधुर्दस्युर्जानिन्[12] गच्छन्तमग्निम्। अवत्सरति[13] मार्गपार्श्वात् कुटिलमवगच्छति[14] तं दृष्ट्वा। अग्निश्च। तस्मै[15]। धृष्टेन[16] मनसा। वज्रम्[17]। सृजति[18]। असनशीलः[19] सोऽयम्। स्वायाम्[20] दुहितरि ज्वालायाम्[21]। दीप्तिम्[22]। दधाति[23]।

---

१. शास्त्रमर्यादया प्रापयामास Sy. पचतो यजमानस्य हवींष्याविवायाजगाम। तत एव प्रभृति यजमानानां दूतकर्मापि करोति स्मेत्यर्थः Sk. २. ०र्मं नयदूत्यं M.

३. भृगुर्ऋषिः। स इवाचरन् यजमानः Sy. भ्रस्ज पाक इत्यस्य रूपं प्रथमान्तं षष्ठ्यन्तं वा। हविषां पक्ता Sk.

४. ०वानो P. D. M. ५. पालयित्रे Sy. सर्वलोकस्य पितृभूताय Sk.

६. ०कायय D. द्योतमानाय देवगणाय Sy. द्युलोकेन चात्राधारेणाधेयास्तन्निवासिनो देवा लक्ष्यन्ते। मञ्चाः क्रोशन्तीति यथा। महति सर्वलोकस्य पितृभूते लोके निवसतां देवानामर्थाय यदा हविरग्निः करोतीत्यर्थः Sk.

७. हविष्मानन्नम् M. ८. पृथिव्याः सारभूतं हविः Sy. हविर्लक्षणमन्नम् Sk.

९. यजमानः Sy. १०. तदानीम् M.

११. तदानीं . . . स्पर्शनकुशलो राक्षसादिः Sy. पृशनाशब्दोऽमृतरसरूपवचनः। तत्र साधुः पृशन्योऽमृतरसरूपाणामपि हविषाम्। अमृतरूपरसकारीत्यर्थः Sk.

१२. ०र्जनान् D. दस्यु . . . र्जानिन् M. हवींषि वहन्तं हे अग्ने त्वां जानन् Sy. ज्ञातवान् स्वमधिकारं यष्टॄणां वा भक्तताम् Sk. १३. त्वद्भयात्पलायते Sy. हविर्गृहीत्वा गच्छति Sk.

१४. ०मपग० P. १५. अस्मै पलायमानाय राक्षसादये Sy. १६. धर्षकेण धनुषा Sy. प्रगल्भमनसा। निश्शङ्कः सन्नित्यर्थः Sk. १७. दीप्यमानं बाणम् Sy. वज्रमस्मै। अग्नेरयमन्वादेशः। अस्याग्नेरर्थाय। ये रक्षआदयोऽग्नेर्हविःपरिपन्थिनस्तान् हन्तुमित्यर्थः Sk.

१८. यदेतिवचनात् तदेत्यध्याहार्यम्। तदा सृजत् सृजति। क्षिपतीत्यर्थः Sk.

१९. अनशी० P. इषुक्षेपणशीलोऽग्निः। . . . स्वकीयायां . . . दुहितृवत् समनन्तरभाविन्यामुषसि Sy.
अस्ता क्षेपणशील इन्द्रः Sk.

२०. तदैव च स्वायां देव इन्द्रः Sk.

२१. वृष्ट्या सस्यरूपेण जन्यमानत्वाद्दुहिता क्षितिरत्राभिप्रेता Sk. २२. तस्यां त्विषिं सस्यसम्पत्तिलक्षणां दीप्तिम् Sk.

२३. स्थापयति। उषःकाले हि सूर्यकिरणाः प्रादुर्भवन्ति। तैः स्वकीयं प्रकाशमेकीकरोति Sy. यस्मिन् संवत्सरेऽग्निर्देवानामर्थाय हवींषि करोति तस्मिन्नेवेन्द्रोऽपि सस्यसम्पत्तिं करोति नान्यत्रेत्यर्थः। अथवा जन्यमानत्वाद्दुहिता स्तुतिरत्राभिप्रेता। स्वस्यां स्तुतौ देवोऽग्निरोजस्वित्वलक्षणां दीप्तिमाधत्ते। यया स्तुत्या होतृत्वेनावस्थितः स्वयं स्तौति तामोजस्विनीं करोतीत्यर्थः Sk.

स्व आ यस्तुभ्यं दम आ विभाति नमो वा दाशादुशतो अनु द्यून् ।
* वर्धो अग्ने वयो अस्य द्विबर्हा यासद्राया सरथं यं जुनासि ॥६॥

स्व आ यस्तुभ्यम् । स्वे । गृहे । यः[1] । त्वां काष्ठैः[2] । प्रज्वलयति यः । वा । अन्नम्[3] । उशतः[4] कामयमानस्य तव । ददाति । दिवसेषु[5] । वर्धय । अग्ने ! अन्तम्[6] । अस्य । द्वयोः स्थानयोर्मध्यमोत्तमयोः[7] परिवृढो यस्त्वमग्ने ![8] रथसहितं[9] युद्धे । प्रेरयसि[10] । धनेन सह युद्धात् । आगच्छतीति[11] ।

अग्निं विश्वा अभि पृक्षः सचन्ते समुद्रं न स्रवतः सप्त यह्वीः ।
न जामिभिर्वि चिकिते वयो नो विदा देवेषु प्रमतिं चिकित्वान् ॥७॥

अग्नि विश्वाः । अग्निम्[12] । विश्वानि । हवींषि[13] । अभिसचन्ते[14] । समुद्रम्[15] । इव । महत्यः । सप्त[16] । नद्यः । न । बन्धुभिः[17] । विज्ञायते । अन्नमल्पत्वात्[18] । अस्माकं तथा सत्यग्ने ! प्रज्ञापय[19] ।

* Sy. analyses वर्धो as वर्ध उ । Sk. explains it by वर्धय and thus seems to agree with Sy. The padapāṭha however analyses it as वर्धो इति ।

१. यजमानः Sy. २. समिदादिभिः... यो यजमानः... यथाशास्त्रम् Sy.

३. हविर्लक्षणम् Sy; Sk.

४. ०तं M. उशते कामयमानाय तुभ्यम् Sk.

५. अनुदिवसम् Sy. प्रतिदिवसमित्यर्थः Sk.

६. The correct reading should be अन्नम् । Both Sy. and Sk. explain वयः by अन्नम् । वयोऽन्नम् Sy; Sk.

७. द्वयोर्मध्यमोत्तमस्थानयोर्बृंहितो वर्धितस्त्वम् Sy. हविर्नयनद्वारेण द्वयोरपि देवमनुष्यलोकयोर्वर्धयिता । प्रत्यक्षकृतत्वाच्चास्य मन्त्रस्यानामन्त्रितमेतत् । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वं द्विबर्हा अग्ने (सः) त्वं वर्धय वयोऽस्येति Sk.

८. यः is omitted by M. The correct reading should be यम् ।

९. रथेन । कं प्रति ? उच्यते । यं स्तोतारं यष्टारं प्रति Sk.

१०. जुनातिर्गतिकर्मा । गच्छसि । तस्मै दातुम् । यस्मिन्नेव रथे त्वमारोहसि धनान्यपि तत्रैवारोप्य गच्छेरित्यर्थः Sk.

११. संगच्छते Sy. मध्यमपुरुषस्य स्थाने च प्रथमपुरुषः । यायास्त्वम् Sk.

१२. अङ्गनादिगुणयुक्तमेनम् Sy.

१३. चरुपुरोडाशादीनि सर्वाण्यन्नानि Sy. सर्वाण्यन्यदेवतान्यपि हविर्लक्षणान्यन्नानि Sk. १४. आभिमुख्येन समवयन्ति प्राप्नुवन्ति Sy. हूयमानान्यभिगच्छन्ति Sk. १५. यथा स्रवन्त्यो नद्यः समुद्रमभिगच्छन्ति तद्वत् Sy.

१६. स्रवन्त्यो नद्यः सप्त गङ्गाद्याः Sk.

१७. जमन्त्येकस्मिन्पात्रे सह भुञ्जत इति जामयो ज्ञातयस्तैः Sy. सजातीयैः Sk.

१८. अन्नकल्पकत्वात् P. D. तेभ्यो दातुमस्माकमन्नं प्रभूतं नास्तीति भावः Sy. अल्पत्वादप्रख्यातमन्नमस्माकम् । तद् बहु ददत् प्रख्यातं कुर्वित्यर्थः Sk.

१९. अस्मभ्यं लम्भय Sy. विद्धि जानीहि । शृण्वित्यर्थः Sk.

[1]देवेष्वस्माकम् । [2]बह्वर्थाभिलाषिणीं [3]बुद्धिम् । [4]जानन्निति ।

**आ यदिषे नृपतिं तेज आनट्छुचि रेतो निषिक्तं द्यौरभीके ।**
**अग्निः शर्धमनवद्यं युवानं स्वाध्यं जनयत्सूदयच्च ॥८॥**

आ यदिषे । [5]आभिमुख्येन । [6]अश्नोति । [7]यत् । [8]तेजः । [9]नृपतिम् । [10]अन्नायान्नं जेतुं तादृशम् । [11]शुचि । [12]रेतो मया स्त्रीषु । [13]निषिक्तं च निषिञ्चतश्च मम । [14]द्योतमानोऽग्निः । [15]समीप आसीद् अथ । अग्निः । [16]वेगवन्तम् । [17]अवद्यरहितम् । [18]तरुणम् । [19]सुकर्माणं पुत्रम् । [20]जनयतु । [21]सूदयतु । च शत्रून् तन्मुखेनेति ।

**मनो न योऽध्वनः सद्य एत्येकः सत्रा सूरो वस्व ईशे ।**
**राजाना मित्रावरुणा सुपाणी गोषु प्रियममृतं रक्षमाणा ॥९॥**

[22]मनो न यः । [23]शीघ्रगमनः । इव । यो दिव्यान् । मार्गान् । शीघ्रम् । गच्छति सः । [24]एकः

---

१. दीव्यन्तीति देवा धनपतयः Sy. निर्धारण एषा सप्तमी । देवानां मध्ये Sk.
२. तेषु ... प्रकर्षेण मननीयं धनम् । ... यद्वा प्रमतिं प्रकृष्टं स्तोत्रं देवेषु विदा वेदय ज्ञापय Sy. प्रकृष्टां स्तुतिम् Sk.
३. बुद्धिम् missing M. ४. अस्मत्प्रभृतीनां भक्तताम् Sk. ५. मर्यादया Sk. ६. जाठररूपेण ... समन्तात् व्याप्नोत् Sy. यो हविरर्थं मर्यादया दीप्यत इत्यर्थः Sk. ७. ययत् M. यत् तेजः Sy. यदिति व्यत्ययेन नपुंसकता । यम् Sk. ८. दीप्तिलक्षणम् Sk.
९. नृणामृत्विजां पालकं यजमानम् Sy. मनुष्याणां स्वामिनम् Sk. १०. हविर्लक्षणाय Sk. ११. नृपतिम् । अन्नायान्नं जेतुं तादृशम् । missing M. यच्छब्दात्तच्छब्दोऽध्याहार्यः । तत् शुचि Sk. १२. तेन तेजसा परिपक्वमन्नं रसरूपं ... वीर्यम् Sy. उदकम् Sk.
१३. अभ्यक्तेऽभिगतेऽभिप्राप्ते गर्भस्थाने Sy.
१४. मायान्त्रिषु निषिक्तं चतश्च P. मायां स्त्रीषु निषिक्तं चतश्च D. ०ञ्चितश्च P.D. निषिक्तं द्यौरभीके । द्यौरिति षष्ठचर्थे प्रथमा । अभीक इत्यासन्ननाम । यदादित्यरश्मिभिराहृत्य दिवः समीपे निषिक्तं स्थापितम् । आगामिवृष्टिलक्षणमित्यर्थः Sk. १५. द्यौर्दीप्तम् Sy.
१६. बलवन्तम् Sy. बलमुत्साहं वा Sk.
१७. अपत्य० M. अगर्ह्यम् Sk.
१८. जरारहितमित्यर्थः Sy.
१९. शोभनप्रज्ञं वा Sy. कल्याणचित्तम् Sk.
२०. वक्ष्यमाणगुणविशिष्टपुत्ररूपेण ... जनयतु Sy. जनयत्वस्माकम् Sk.
२१. सूदय P. D. यागादिकर्मसु प्रेरयतु च । यद्वा । रेत इत्युदकनाम । निषिक्तं मेघेन वृष्टमुदकमिषेऽन्नाय सस्यादिनिष्पत्तयेऽग्नेर्यत्तेज आनट् व्याप्नोत्, वृष्टचुदकेन भौमाग्नेः संयोगे सति हि सस्यान्युत्पद्यन्ते । कीदृशं तेजः ? नृपतिं नृणां रक्षकं शुचि दीप्तम् । तादृशेन तेजसा युक्तो द्यौर्दीप्तोऽग्निरभीक आसन्नकाल एव शर्धादिगुणविशिष्टं पुत्रं जनयतु, तञ्च प्रेरयतु यज्ञादौ Sy. सूदयतिरत्र संस्कारार्थः । संस्करोतु Sk.
२२. म यः M. २३. मन इव योऽग्निः Sk.
२४. एक D. असहायः सन् Sy.

[1]स्वयमेव। [2]सूर्यः। धनस्य [3]सत्यम्। [4]ईश्वरो भवति तथा। [5]राजानौ। मित्रावरुणौ। [6]सुपाणी। [7]गोषु।
[8]प्रियम्। [9]पयः। [10]रक्षमाणौ भवतः [11]प्रीणितावग्निनेति।

**मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठा अभि विदुष्कविः सन् ।**
**नभो न रूपं जरिमा मिनाति पुरा तस्या अभिशस्तेरधीहि ॥१०॥**

[12]मा नो अग्ने। [13]मा। अस्माकम्। अग्ने! सख्यानि। वसिष्ठ[14]मुपक्रम्यागतानि। अभिप्र-
[15]मार्जीः। [16]वेत्ता। [17]कान्तः। सन्। आदित्यः।[18] इव [19]कालात्मा। [20]रूपम्। [21]जरिमा च। [22]हिनस्ति। पुरा।
[23]तस्मात्। [23]उपद्रवाद् अस्मान् रक्षितुम्। [24]अधि[25]गच्छ।

---

१. ०मेक P.
२. सूर्यौ P. सूर्यसदृशः Sk.
३. सहैव युगपदेव Sy. सत्रा सदा Sk.
४. ईष्टे। यो हि शीघ्रं गच्छति स बहुदेशेष्ववस्थितानि धनानि प्राप्नोति Sy.
५. राजमानौ Sy. दीप्तौ Sk.
६. ०णि M.
७. अस्मदीयासु Sy.
८. सर्वलोकप्रियम् Sk.
९. अमृतवत्स्वादुभूतं पयः Sy. पयआख्यममृतम् Sk.
१०. वृष्टिद्वारेण रक्षमाणा। साकाङ्क्षत्वादस्मदर्थं यजत्विति वाक्यशेषः। प्रदर्शनार्थं चात्र मित्रावरुणयोर्ग्रहणम्। सर्वदेवता यजत्वित्यर्थः Sk.
११. प्रणीतावग्नि० M. प्रीणितवानग्नि० D. हे अग्ने तत्तद्रूपेण त्वमेवैवं वर्तस इति भावः Sy.
१२. म P. M.
१३. माशब्दः प्रमर्षिष्ठा इत्येतेन सम्बन्धयितव्यः Sk.
१४. पितुरागतानि। पितुरारभ्य प्रवृत्तानीत्यर्थः Sk.
१५. ० मार्जिः P. D. M. मा विनाशय। अत्र मृष्यतेरुपसर्गवशादर्थान्तरे वृत्तिः Sy. मृषिरत्र सामर्थ्याद् विस्मरणार्थः। अभिशब्दोऽत्र धात्वर्थानुवादी लम्बते प्रलम्बत इति यथा। मा विस्मार्षीः। अथवा मृजेरिदं रूपम्। मा प्रमार्जीः। मापनैषीरित्यर्थः Sk.
१६. सर्वं विद्वान् Sy. अस्मद्भक्ततायाः Sk.
१७. क्रान्तः M. क्रान्तदर्शी सन् Sy. मेधावी Sk.
१८. यथान्तरिक्षं रूपवन्तः सूर्यरश्मय आच्छादयन्ति तद्वदाच्छादयति Sy.
१९. तमांसि Sk.
२०. अस्माकम् Sk.
२१. जरा Sy. जरत्वम् Sk.
२२. मां सूक्तद्रष्टारं हिनस्ति Sy.
२३. हिंसाहेतोस्तस्या जरायाः। पुरा अधीहि मां बुध्यस्व। सा यथा न प्राप्नोति तथा कुरु। अमृतत्वं प्रयच्छेति यावत् Sy. एतज् ज्ञात्वा पुरा तस्या जरायाः। अभिशस्तेः हिंसातः Sk.
२४. प्राप्नुहि अस्मान्। यावत्सर्वरूपहारिण्या जरया न हिंस्यामहे तावत् प्राप्यास्माञ्जरातो रक्षेत्यर्थः Sk.
२५. Ms. D. puts the figure ॥७१॥ here to indicate the end of the seventyfirst hymn. No such number is given in P. and M.

I.72.

नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो नर्या पुरूणि ।
अग्निर्भुवद्रयिपती रयीणां सत्रा चक्राणो अमृतानि विश्वा ॥१॥

नि काव्या । अभिमुखानि[1] । करोति । स्तोतुः । . . . । स्तोत्राणि[2] । हस्ते[3] । प्रयच्छन्[4] गृहीतानि । बहूनि । धनानि[5] । अग्निः । अभवत्[6] । रयिपतिः[7] । सत्यमेव कुर्वाणः[8] । अन्नानि[9] । सर्वाणि । पृथूनि नाकुर्वन्निति[10] (?)

अस्मे वत्सं परि षन्तं न विन्दन्निच्छन्तो विश्वे अमृता अमूराः ।
श्रमयुवः पदव्यो धियंधास्तस्थुः पदे परमे चार्वग्नेः ॥२॥

अस्मे वत्सम् । अस्माकम्[11] । वत्समग्निम्[12] । परितः[13] । सन्तम् । इच्छन्तः[14] । विश्वे । देवाः[15] ।

---

१. नियमेन Sk.
०खानाक० P. D.

२. बाह्वोः P. बाह्वो D. बह्वोः M. बहोः Ed. शश्वतः । बहुनामैतत् । बहोर्यजमानस्य Sk.

३. काव्यानि मन्त्ररूपाणि स्तोत्राणि Sy. कर्माणि हविर्नयनादीनि काव्यानि Sk.

४. धारयन् Sy.
अयत्नेनैवेत्यर्थः Sk.

५. नृभ्यो हितानि नृषु साधूनि वा . . . धनानि । . . . ईदृग्भूतमग्निमवलोक्य सर्वे जनाः स्तुवन्तीति भावः Sy.
नरेषु भवानि नृभ्यो वा हितानि यज्ञफलानि Sk.

६. अवत् P. D.
भवति Sk.

७. रतिः M. धनानां मध्ये यानि धनान्युत्कृष्टानि तेषां स्वामी भवति। . . . सहैव । युगपत्प्रयच्छन्नित्यर्थः Sy.
रयीणां पतिः रयिपतिरित्येवान्वाख्यायते। तथापि प्रवीणशब्दादिवत् स्वामिमात्रवचन इह द्रष्टव्यः। स्वामी Sk.

८. सत्रेति सत्यनाम सदाशब्दपर्यायो वा । . . . यस्मात् सत्यानि सदा वा करोतीत्यर्थः Sk.

९. हिरण्यानि स्तोतृभ्यः Sy.
अमृतानि नित्यानि हविर्नयनादीनि। . . . यद्धविर्नयनादीनि सर्वाणि करोषि तस्माद्धविषां यजमानधनानां स्वामी भवसीत्यर्थः Sk.

१०. नाकुर्वन्ति M.

११. अस्मे इति तादर्थ्ये चतुर्थी। अस्मदर्थमस्माकं हविर्नयनार्थमित्यर्थः Sk.

१२. वत्सवदत्यन्तं प्रियम्। यद्वा वत्सः पुत्रः पश्चादुत्पन्नत्वात् । तद्वदग्निरप्यस्माकं पुत्रः Sy.

१३. परितः सर्वत्र वर्तमानम्। देवेभ्यो निर्गत्याश्वत्थवेण्वादिषु निलीनं सन्तमित्यर्थः Sy.

१४. सौचीकमग्निम् Sk.

१५. अमरणधर्माणो देवाः Sy.
मरणवर्जिताः Sk.

अमूढा[1] अपि। न[2]। अविन्दन्। श्रमवन्तः[3] अग्नेः। स्थानमन्वेषमाणाः[4]। कर्मणो[5] धातारः। तस्थुः[6]। पदे। परमे[7]। चारुणि[8]। यत्राग्निर्निलीनस्तत्र तस्थुर्निलीनं दृष्ट्वेति[9]।

**तिस्रो यदग्ने शरदस्त्वामिच्छुचिं घृतेन शुचयः सपर्यान् ।**
**नामानि चिद्दधिरे यज्ञियान्यसूदयन्त तन्वः सुजाताः ॥३॥**

तिस्रो यदग्ने। तिस्रः। यदा[10]। अग्ने[11]! शरदः[12]। त्वाम्। एव। शुचिम्[13]। घृतेन। शुचयः[14]। पर्यचरन्[15] अथ ते। नामानि। चित्। दधिरे[16]। यज्ञार्हाणीन्द्रो[17] विष्णुर्वरुणो मित्रोऽर्यमेति तथा। शोभन-[18]

---

१. अमूढा मरुतश्च Sy.

२. नालभन्त Sy.
नशब्दोऽयमुपमार्थीयो व्यवहितेनापि वत्समित्येतेन सम्बन्धयितव्यः। वत्समिव सर्वतो भवन्तम्। हविर्वहनभयेनेतश्चेतश्च वत्समिव नश्यन्तमित्यर्थः Sk.

३. अलभमानाश्च ते ... हव्यवाहनस्याभावेन हविषामभावात्तज्जन्येन श्रमेण क्लेशेनैकीभूताः Sy.
अन्वेषणादुपजातश्रमाः सन्त इत्यर्थः Sk.

४. ०न्वेषन् M.
पादैर्गच्छन्तः Sy.
पदव्यः। पदशब्देनात्र कृत्स्नस्य जगत आश्रयत्वात् कारणात्मोच्यते। वेतिरपि पश्यतिकर्मा। ... कारणात्मनो ज्ञातार इत्यर्थः Sk.

५. धियामग्नेः शयनासनस्थानादिलक्षणानां कर्मणां धारयितारः Sy.
स्वस्य कर्मणो धारयितारः। कर्मणामत्यक्तार इत्यर्थः Sk.

६. बहुविधेन प्रयासेनाग्निं ददृशुरित्यर्थः Sy.

७. यत्र ह्यग्निर्निलीनो वर्तते तत्रेत्यर्थः Sy.

८. शोभने Sy.
क्रियाविशेषणं वा चारुशब्दः। चारु तस्थुरिति। कस्य पदम्? उच्यते। अग्नेः। यस्माद्यतो नष्टस्याग्नेः पदानि दृश्यन्ते ततस्ततोऽन्वेषतेत्यर्थः। अथवा पदव्य इति पदज्ञत्वस्येहोपादानात् ... विश्वे अमृता अमूरा इत्यादिभिरङ्गिरस उच्यन्ते न देवाः Sk.

९. The passage beginning with कर्मणो and ending with दृष्ट्वेति is omitted by M.

१०. यदिति प्रथमाबहुवचनान्तं द्रष्टव्यम्। ये Sk.

११. यदा (मनुष्य आश्रयति स) ग्ने P.

१२. वर्षाणि Sk. संवत्सरान् Sy.

१३. दीप्यमानम् Sy.
दीप्तम् Sk.

१४. शोधयितारो दीप्ता वा मरुतः। ... तदानीं त्वमाविरभूः Sy.
शुद्धात्मानः Sk.

१५. The passage beginning with तिस्रो यदग्ने and ending with पर्यचरन् is omitted by M.
परिचरन्ति। यजन्त इत्यर्थः Sk.

१६. दिधिरे P.
दारिद्र्यादयष्टुमशक्नुवन्तो भक्त्या नामान्येव केवलानि तव कीर्तयन्तीत्यर्थः Sk.

१७. यज्ञियार्हा० P. यज्ञसम्पादीनि Sk.

१८. नामानि धारयित्वा च ... पूर्वं रूपं परित्यज्य शोभनममृतत्वं प्राप्ताः सन्तः Sy. सम्पूर्णाः Sk.

जननाः[1]। तनूश्च[2] बह्वीर्यज्ञभागार्थम्। प्रैरयन्[3]।

**आ रोदसी बृहती वेविदानाः प्र रुद्रिया जभ्रिरे यज्ञियासः।**
**विदन्मर्तो नेमधिता चिकित्वानग्निं पदे परमे तस्थिवांसम् ॥४॥**

आ रोदसी। प्राजभ्रिरे[4]। द्यावापृथिवी। महती[5]। विन्दमानाः[6]। यज्ञार्हाः[7]। देवा अस्मा अग्नये स्तोत्राणि[8] तथा। उत्तमे। स्थाने[9]। तस्थिवांसम्। अग्निं सङ्ग्रामार्थम्[10]। प्राज्ञः[11]। मनुष्यः[12]। आश्रयति[13][14]।

**संजानाना उप सीदन्नभिज्ञु पत्नीवन्तो नमस्यं नमस्यन्।**
**रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणाः ॥५॥**

संजानानाः[15]। ऐकमत्यं गताः। उपासीदन्[16]। अभिगतजानुकम्[17]। पत्नीसहिताः[18]। नमस्कार्य-

---

१. तथा रिक्ता भवन्तो भननजननाः P.
२. नन्वश्च D. ३. प्रेर० D.
स्वर्गं प्रापितवन्तः Sy.
यच्छब्दात्तच्छब्दोऽध्याहार्यः। ते सर्वे असूदयन्तः। सूदयतिः संस्कारार्थः। विदचैश्वर्यादिभिः संस्कारैः संस्कुर्वन्ति।... अव्यङ्गशरीरा विदचैश्वर्यादीनि प्राप्नुवन्तीत्यर्थः Sk.
४. ०ह्रिरे P. प्रजह्रिरे, चक्रुरित्यर्थः Sy. प्रहरन्त्यग्निं प्रति प्रापयन्ति Sk.
५. मती P.
६. अत्यर्थं ज्ञापयन्तः। कुत्राग्निर्वर्तत इति परस्परं वदन्तो द्यावापृथिव्योर्मध्ये वर्तमाना इत्यर्थः। यद्वा महत्योर्द्यावापृथिव्योर्मध्ये ... अग्निमुपलभमानाः Sy. जानन्तः। प्रदर्शनार्थं चैतद् रोदसीग्रहणं तत्स्थाशेषज्ञेयोपलक्षणार्थं वा। अशेषं ज्ञेयं जानन्त इत्यर्थः Sk.
७. यज्ञसम्पादिनो मनुष्याः। ज्ञाताशेषज्ञेया यष्टारोऽग्निं स्तुवन्ति यजन्ति चेत्यर्थः Sk.
८. रुद्रोऽग्निः। देवानामसुरैः सह युद्धसमये तैर्देवैः स्थापितं धनमपहृत्य गतवन्तमग्निं देवा आगत्याग्निसकाशाद् बलेन तद्धनमगृह्णन्। तदानीं सोऽग्निररोदीत्। तस्माद् रुद्र इत्याख्यायते ... तस्य रुद्रस्यार्हाणि स्तोत्राणि Sy.
रुद्रिया। रुद्र इति स्तोतृनाम। तस्य स्वभूता तस्मिन् वा भवा रुद्रिया स्तुतिः। सहयोगलक्षणतृतीयान्तं चेदं द्रष्टव्यम्। स्तुत्या सह हवींषि Sk.
९. अश्वत्थादौ Sy. वेदाख्ये परमात्मनि वा Sk. १०. ग्रामर्थो P.
११. ०ज्ञा M. १२. तत्त्ववेदी मनुष्यः Sk.
१३. अलभत Sy. तत्त्वतो वेत्ति Sk.
१४. V. Mādhava ignores नेमधिता १५. सज्ञाना० P. सम्यग्जानन्तो देवाः Sy. सम्यक् जानन्तः Sk.
१६. प्राप्नुवन्ति Sy. उपसीदन्ति Sk.
१७. ०मतजा० P. आभिमुख्येनावस्थितजानुयुक्तं त्वाम् Sy.
क्रियाविशेषणमेतत्। अभिगते जानुनी यस्मिन् उपसदने अभिज्ञु। भूमौ जानुनी निपात्योपसीदन्तीत्यर्थः Sk.
१८. ० तां M.

मग्निम्। [1]नमस्यन्ति तथा [2]रिक्ता [3]भवन्तोऽग्नये। स्वानि। शरीराणि [4]विधेयीकुर्वन्ति। सखायः। [5]सख्यु[6]रनुग्रहोन्मुखे। [7]निमिषेऽग्नि हविर्भिः। [8]रक्षमाणाः।

**त्रिः स॒प्त यद्गुह्या॑नि॒ त्वे इत्प॒दावि॑द॒न्निहि॑ता य॒ज्ञिया॑सः।**
**तेभी॑ रक्षन्ते अ॒मृतं॑ स॒जोषाः॑ प॒शूँश्च॑ स्था॒तॄँश्च॒रथं॑ च पाहि ॥६॥**

[9]त्रिः सप्त [10]यत्। [11]त्रिः। [11]सप्त। [12]यत्। गुहायां [13]निहितानि। त्वयि। [14]पदानि [15]निवासस्थानानि धनानि [16]विदन् (?) [17]निहितानि। [18]देवास्त्वया पुनः [19]प्रत्नानि धनानि। अलभन्त। तैर्लब्धैः। [20]अमृतमग्नि

---

१. ०ग्निमस्यति P. ०ग्निहमस्यन्ति M. ०स्यति D. अपूजयन् Sy. पूजयन्ति Sk. २. रक्ता M. अनशनादिरूपेण दीक्षादिनियमेन रिक्तीकुर्वन्तः। शोषयन्तः Sy. शुद्धोऽप्ययमतिपूर्वार्थो द्रष्टव्यः। अन्यतोऽतिरिच्यमानाः। प्रकृष्टीभवन्त इत्यर्थः Sk.

३. ०क्षये D. ४. वेधेयी० P. यागानकुर्वन् Sy. करोतिः शुद्धोऽपि संपूर्वार्थे द्रष्टव्यः। विदचैश्वर्यादिभिः संस्कारैः संस्कुर्वन्ति। विदचैश्वर्यादीनि प्राप्नुवन्तीत्यर्थः Sk. ५. अग्नेः Sk.

६. सख्युं ननु गृह्यो० P. मित्रस्य तव Sy.

७. दर्शने निमित्तभूते सति Sy. दर्शने। सप्तमीनिर्देशाद् वर्तमाना इति शेषः। अग्निनाऽनुग्राह्यदर्शनेन दृश्यमाना इत्यर्थः Sk.

८. त्वया परिरक्ष्यमाणाः ... देवाः Sy. तत्प्रसादादेव सर्वापद्भ्य आत्मानं रक्ष्यमाणाः। अथवा निमिषीति तृतीयार्थे सप्तमी। रक्ष्यमाणा इत्यपि व्यत्ययेन कर्मणि कर्तृप्रत्ययः। अग्नेरनुग्राह्यदर्शनेन सर्वापद्भ्यो रक्ष्यमाणा इत्यर्थः Sk. ९. त्रिस्स० D.

१०. त्रिः सप्त यत् is omitted by M.

११. एकविंशतिसंख्याकानि। ... रहस्यानि वेदैकसमधिगम्यानि Sy. ...गायत्र्यादीनां सप्तानामेकैकस्यास्त्रिधा भेदेन तदन्येषां छन्दसामपरिसंख्यानात्। तदस्ति छन्दसामेकविंशतित्वम्। तच्चैतदुच्यते त्रिस्सप्तेति Sk.

१२. यः M. यद् यानि Sk.

१३. गुह्यानि गूहनार्हाणि Sk.

१४. पद्यते गम्यते स्वर्ग एभिरिति व्युत्पत्त्या पदशब्देनात्र यज्ञा उच्यन्ते। ते चैकविंशतिसंख्याकाः। औपासनहोमवैश्वदेवादयः सप्त पाकयज्ञाः। अग्न्याधेयदर्शपूर्णमासादयः सप्त हविर्यज्ञाः। अग्निष्टोमात्यग्निष्टोमादयः सप्त सोमयज्ञाः Sy.
पदा पदेन। स्वेन ज्ञानेनेत्यर्थः Sk.

१५. वासः स्था० M.

१६. The reading विदन् is faulty. I suggest अविदन् Ed. त्वामाराध्य ज्ञातवन्तः Sk. १७. तेषां सर्वेषां त्वत्प्रधानत्वात्। न ह्यग्निमन्तरेण यागा अनुष्ठातुं शक्यन्ते Sy. देवैः Sk.

१८. यज्ञार्हा अर्थित्वसामर्थ्यवैदुष्यादिभिरधिकारहेतुभिर्युक्ताः। ... एवंविधलक्षणोपेता यजमानास्तानि पदानि... अलभन्त Sy.
यज्ञसम्पादिनोऽङ्गिरसः Sk.

१९. प्रज्ञनानि M.

२०. अम्यत० M. अमरणधर्माणम् Sy.

त्वामेव । रक्षन्ते । सङ्गताः । स त्वं पशून् । स्थावराणि । जङ्गमम् । च । पाहीति ।

**वि॒द्वाँ अ॑ग्ने व॒युना॑नि क्षिती॒नां व्या॑नु॒षक्छु॒रुधो॑ जी॒वसे॑ धाः ।**
**अ॒न्त॒र्वि॒द्वाँ अध्व॑नो देव॒याना॒नत॑न्द्रो दू॒तो अ॑भवो हवि॒र्वाट् ॥७॥**

विद्वाँ अग्ने । प्रज्ञानानि । मनुष्याणाम् । विधेहि तथा । शुचो रोधयित्रीरपश्च । जीवनाय । अनुषक्तं कुरु । देवयानान् मार्गान् । अन्तर्जानन् यत्र यत्र रक्षांसि चरन्ति तं तं देशं जानन् । अनलसः । दूतः । अभवः । हविषां वोढा ।

**स्वा॒ध्यो॑ दि॒व आ स॒प्त य॒ह्वी रा॒यो दुरो॒ व्यृ॑त॒ज्ञा अ॑जानन् ।**
**वि॒दद्गव्यं॑ स॒रमा॑ दृ॒ळ्हमू॒र्वं येना॒ नु कं॒ मानु॑षी॒ भोज॑ते॒ विट् ॥८॥**

स्वाध्यो दिवः । सुकर्माणः । दिवः सकाशादसुरपुरं प्रत्यागताः । सप्त ।

---

१. यजन्तीत्यर्थः Sy. तेभी रक्षन्ते अमृतं भवन्तम् । अग्निगुणरक्षणाच्चायं तद्वत्यग्नावेव रक्षणव्यपदेशः । अकीर्त्यमाना हि छन्दोभिरग्नेर्गुणा विस्मरणात् प्रलयं गच्छेयुः । तान् छन्दोभी रक्षन्तोऽग्निमेव रक्षन्तीत्युच्यते Sk.
२. तैर्यजमानैः समानप्रीतिस्त्वम् Sy. सम्प्रीयमाणाः । अङ्गिरस एव वा प्रकृतत्वात् सर्वे वा स्तोतारः Sk.
३. गवाश्वादिपशून् Sy.
४. व्रीह्यादिस्थावराणि Sy. ५. जागं P. पशुव्यतिरिक्तमन्यद्यत्प्राणिजातमस्ति । ...तेषु हि रक्षितेषु त्वदीया यागाः कर्तुं शक्यन्ते नान्यथा । अतस्त्वमेवमुच्यस इत्यर्थः Sy. पशुव्यतिरिक्तमपि Sk.
६. V. Mādhava ignores इत् । च
७. विद्व P. विद्वँ D. विद्वान् M.
८. सर्वाणि ज्ञातव्यानि ... जानंस्त्वम् Sy. त्वद्भक्तिरूपाणि Sk.
९. यजमानलक्षणानां प्रजानाम् Sy.
१०. क्षुद्रूपस्य शोकस्य Sy. ११. राघ० P.
१२. ०रा० P. ०पश्व M. अन्नानि Sy. वृष्टिलक्षणा आपः Sk.
१३. अनुषक्तं संततं यथा भवति तथा ... कुर्वित्यर्थः Sy. आनुषक् आनुपूर्व्येण । यथायोग्यमित्यर्थः Sk.
१४. विधाः हविर्नयनद्वारेण विविधं देहि Sk.
१५. देवा यैर्मार्गैर्यान्ति गच्छन्ति ताञ्जानन्नित्यर्थः Sy. यैर्देवाः प्रतिगम्यन्ते तानस्मान् Sk. १६. द्यावापृथिव्योर्मध्ये जानन् Sy. अन्तरिति वेदिमध्यमभिप्रेतम् । . . . वेदिमध्यव्यवस्थितज्ञानेन हेतुना । यस्माद् वेदिमध्य एव व्यवस्थितोऽसीत्यर्थः Sk. १७. अलसः P. D. पुनः पुनर्हविर्वहनेऽप्यनलसः Sy. उत्साहीत्यर्थः Sk. १८. देवताह्वानार्थं सर्वयजमानानां दूतोऽभवोऽभूर्भवसि वा Sk. १९. Omitted by M.
२०. V. Mādhava ignores अग्ने
२१. साध्वो M. २२. शोभनमाध्यानं येषां ते स्वाध्याः कल्याणचित्ताः । के ते ? अङ्गिरसः Sk. २३. द्युशब्दोऽत्र तत्प्रभृत्युपलक्षणार्थो द्रष्टव्यः । ...द्युप्रभृतीन् सप्तलोकान् Sk. २४. ०वोस्त० P.
२५. द्युलोकादागत्य भूम्यां प्रवहन्तीति शेषः Sy. २६. गङ्गाद्याः सप्त नद्यः Sy.

महतीः । गोधनस्य । दुरोऽङ्गिरसः । व्यजानन् पणिभिरपहृतानां गवामानयनाय सप्त मार्गान्-जानन् तथा । लब्धवती । सरमा नाम देवशुनी । दृढम् । महान्तम् । गोसङ्घम् । येन सङ्घेन । मानुषी । विट् । उपभुङ्क्तेऽग्नेः कर्मणा तथाकुर्वन्निति ।

**आ ये विश्वा॑ स्वप॒त्यानि॑ त॒स्थुः कृ॑ण्वा॒नासो॑ अमृत॒त्वाय॑ गा॒तुम् ।**
**म॒ह्ना म॒हद्भिः॑ पृथि॒वी वि त॑स्थे मा॒ता पु॒त्रैरदि॑ति॒र्धाय॑से॒ वेः ॥९॥**

आ ये विश्वा । आतस्थुः । ये । विश्वानि स्वपतननिमित्तानि कर्माणि । कुर्वन्तः । अमृतत्व-

---

१. मतीः P. महत्यः ।...हे अग्ने ! ईदृग्विधा नद्यस्त्वया स्थापिताः । अग्नौ होमे सति हि तेन तृप्तः सूर्यो वृष्टिं करोति । ...अतो वृष्टिद्वाराग्निरेव नदीः करोतीत्युच्यते Sy.

२. वलनाम्नासुरेणापहृतस्य गोरूपस्य धनस्य Sy. धनस्य Sk.

३. दूरो० P. दूतो० M. द्वाराणि गमनमार्गान् Sy. द्वाराणि । यैर्धनं लभ्यते तानि Sk.

४. ०य० D. M. य्या P. त्वत्साध्येन यागेन प्रीत इन्द्रो गवामन्वेषणाय सरमां नाम देवशुनीं प्रेषितवान् । सा च सरमा गवां स्थानमवगत्येन्द्रस्य न्यवेदयत् । इन्द्रश्च तानङ्गिरसो गाः प्रापयत् । अत एतत्सर्वं त्वमेव कृतवान् Sy. अग्निप्रसादादेव विज्ञातवन्तः । प्राप्तवन्त इत्यर्थः । मरणोत्तरकालं द्युप्रभृतीन् सप्तलोकान् प्राप्तवन्तः । जीवन्तोऽपि धनं लब्धवन्त इत्यर्थः Sk.

५. ०पा० M. ६. ०ना० P.

७. M. adds च after तथा

८. ०वति P. अत्रैकवाक्यताप्रसिद्ध्यर्थं यैः प्रेषितेत्यध्याहार्यः । यैः प्रेषिता पणिभिरपहृतं विदद् ज्ञातवती लब्धवती वा Sk.

९. बहुलमित्यर्थः Sy.

१०. एवंविधं पयोलक्षणम् ... अन्नम् Sy. ऊर्वशब्दः समूहवचनः । समूहम् । बहु विस्तीर्णं वेत्यर्थः Sk.

११. ०संखं M. अङ्गिरोभ्यः सकाशात् ... गवि भवम् Sy.

१२. हेतुना Sk.

१३. संखेन M. गव्येन Sy.

१४. मनोः सम्बन्धिनी Sy.

१५. प्रजा । ...तद्गव्यमपि परम्परयाऽग्निरेव करोति Sy. मनुष्यजातिः । देवगवीनां हि प्रसादेन मनुष्यजातिः सुखमनुभुङ्क्ते । मनुष्यगवीनां देवगवीप्रभवत्वात् कामदुघत्वाद् वा देवगवीनां सर्वसुखानां तत्प्रभवत्वात् Sk.

१६. विद्युप० M. ०ळुव० P.

१७. V. Mādhava ignores ऋतज्ञाः । नु । कम्

१८. कृतवन्त इत्यर्थः Sy. सम्प्राप्तवन्त इत्यर्थः Sk.

१९. अङ्गिरसः Sk.

२०. ये (स्वपतननिमित्तं) विश्वानि P. बहूनि धनानि Sk.

२१. शोभनैरपत्यैः सहितानि Sk.

२२. Omitted by P. चतुर्दशरात्रषट्त्रिंशद्रात्रादित्यानामयनादीनि कर्माणि Sy. २३. अम्यत० M. अमरणत्वसिद्धये Sy. अविद्यमानं मृतत्वं यस्य सोऽमृतत्वोऽग्निः । तदर्थम् Sk.

सिद्धयर्थम्। मार्गम्[1]। अत्यन्तम्[2]। महद्भिस्तैरियम्[3]। पृथिवी ध्रियमाणा[4]। वितिष्ठते[5]। माता[6]। पुत्रैर्मनुष्यैः[7]। अदीना[8]। गमनशीलस्याग्नेः[9]। पानाय तं सोमं पाययितुमिति[10]।

**अधि श्रियं नि दधुश्चारुमस्मिन्दिवो यदक्षी अमृता अकृण्वन् ।**
**अध क्षरन्ति सिन्धवो न सृष्टाः प्र नीचीरग्ने अरुषीरजानन् ॥१०॥**

अधि श्रियम्। अधिनिदधुः[11] प्रज्वलनेन[12]। शोभाम्[13]। कल्याणीम्[14]। अग्नौ[15]। दिवः[16]। यदा[17]। चक्षुषी[18] हविर्जिघृक्षया। देवाः। अकृण्वन्[19]। प्रज्वलितेऽग्नौ[20] पृथिव्याम्। क्षरन्ति[21]। सिन्धवः[22]। इव।

---

१. उपायम् Sy.
गायतिरर्चतिकर्मा। गानं गातुः स्तुतिः। ताम्। येऽङ्गिरसोऽग्निमास्तुवन्तो बहूनि धनानि शोभनानि चापत्यानि लब्धवन्त इत्यर्थः Sk.

२. स्वकीयेन महत्त्वेन Sy.
तेषां मह्ना माहात्म्येन। तत्प्रसादेनेत्यर्थः Sk.

३. अनुष्ठानेन महानुभावैः Sy. सस्यजननादिभिरुपकारैर्मनुष्याणाम् Sk.

४. सर्वस्य जगतो धारणाय Sy.

५. विविधं स्थिता। अङ्गिरसां प्रसादेन पृथिवी मनुष्याणां महद्भिः सस्यजननादिभिरुपकारैरुपकरोतीत्यर्थः। अङ्गिरसो हीन्द्रसखत्वाद् वृष्टेः कर्तारः। तदायत्ताश्च सस्यजननादयः Sk.

६. जनयित्री Sy. देवमाता चादितिः Sk.

७. सर्वैर्देवैः सह। देवा अपि हि यन्मनुष्याणामुपकुर्वन्ति तदङ्गिरसामेव प्रसादेन। देवोपकारस्य धर्मायत्तत्वाद् धर्मस्य च वृष्ट्यायत्तत्वाद् वृष्टेश्चाङ्गिरसः कर्तृत्वात् Sk. ८. इदानीना P.

९. ०ग्ने M. देवान् प्रति गन्तुर्ज्ञातुर्वा Sk.

१०. आज्यपयआद्याहुतिपानाय।...यागाभावे च नाग्निराहुतीः पिबेत्। अत एवमुच्यते धायसे वेरिति Sk.

११. स्थापितवन्तः Sy.

१२. ०लने P.

१३. परिस्तरणपरिषेचनादिरूपां यज्ञसम्पदम् Sy. दीप्तिलक्षणाम् Sk.

१४. चारुं शोभनम् Sk. १५. त्वय्यग्नौ Sk.

१६. तदानीं ... द्युलोकात् ... अमरणधर्माणो देवा यागसमयो जात इत्यवगम्यागच्छन्तीति शेषः Sy.

१७. यथा M. यद P.

१८. यज्ञस्याऽऽज्यभागलक्षणे Sy.
द्वित्वसामान्यात् सूर्याचन्द्रमसावत्राक्षी उच्येते। अक्षिस्थानीयौ सूर्याचन्द्रमसौ Sk. १९. अकुर्वन् P.
अहोरात्रविभागार्थं यदैव सूर्याचन्द्रमसौ देवावुदपीपदन् तदैव त्वामग्निं दीप्तिमन्तमकार्षुरित्यर्थः Sk.

२०. ०लिग्नौ D. आज्यभागानन्तरम् ... अग्नेरुत्पन्नाः ... शीघ्रं गच्छन्त्यो नद्य इव ... नितरां सर्वासु दिक्षु गच्छन्तीः ... आरोचमानाः, यद्वा निर्मलरूपाः, हे अग्ने! एवम्भूतास्त्वदीया ज्वालाः क्षरन्ति सञ्चलन्ति। सर्वासु दिक्षु गच्छन्तीत्यर्थः। आगता देवाश्च प्राजानन् अस्माकं होमायेदृश्यो ज्वाला उत्पन्ना इति हृष्टाः सन्तः प्रकर्षेण जानन्ति Sy. २१. रक्षन्ति M.
काः? सामर्थ्यादाहुतयः Sk.

२२. नद्यः Sk.

उद्युक्ता देवास्ततो ज्वलित्वोपशान्तस्य । अग्ने ! तव । न्यग्भूता लेलायमानाः । ज्वालाः । जानन्ति निरूपणीयं सूक्तं प्राज्ञैः ।

I.73.

रयिर्न यः पितृवित्तो वयोधाः सुप्रणीतिश्चिकितुषो न शासुः ।
स्योनशीरतिथिर्न प्रीणानो होतेव सद्म विधतो वि तारीत् ॥१॥

रयिर्न यः । धनम् । इव । यः । पितृतो लब्धम् । अन्नस्य दाता । सुप्रणयश्च भवति । विदुषः । इव । शासनं सः । सुखेषु शाययति । अतिथिः । इव । तृप्यन् । होतेव । यजमानस्य । यज्ञगृहम् । वितरति हविर्वहनेन ।

देवो न यः सविता सत्यमन्मा क्रत्वा निपाति वृजनानि विश्वा ।
पुरुप्रशस्तो अमतिर्न सत्य आत्मेव शेवो दिधिषाय्यो भूत् ॥२॥

देवो न यः । देवः । इव । सविता । सत्यमनाः । कर्मणा । निरक्षति । विश्वानि ।

---

१. सिद्धबहुवोद्यु० M. ०क्ताः P. यष्टृभिर्विसृष्टाः सत्यः Sk.
२. न्यभू० P. न्य अता M. नीचीरधोमुखाः । सृष्टा ह्याहुतयः क्षरन्त्योऽधोमुखाः क्षरन्ति Sk.
३. लोमायमानाः P. D. अरुषीः... त्वां प्रति गमनशीलाः । नित्यमेव यास्त्वयि हूयन्त इत्यर्थः Sk.
४. जनन्ति P. प्रशब्दः प्रारम्भे । तत एव प्रभृति ज्ञानिनोऽपि त्वां ज्ञातुं प्रारब्धवन्त इत्यर्थः Sk. ५. नि is omitted by P. and M. रूपाणीयं P.
६. Ms. D. puts the figure ॥७२॥ here to indicate the end of the seventysecond hymn. No such number is given in P. and M. V. Mādhava ignores अथ । प्र ७. रयि नियः M.
८. यथा पैतृकं धनं विश्रम्भेण व्यवह्रियमाणं सद् अन्नप्रदं भवति तद्वदग्निरपि सर्वेषु यज्ञेषु विश्रम्भेण व्यवहृतः सन् अन्नप्रदो भवतीत्यर्थः Sy. यथा पित्र्यं धनं क्रमेण नियमेन प्रभूतस्यान्नस्य दायकं तद्वन्नियमेन प्रभूतदायक इत्यर्थः Sk.
९. सुखेन प्रणेतव्यः Sy. प्रणीतिः कार्येषूपदेशः सा शोभना यस्य स सुप्रणीतिः Sk.
१०. धर्मशास्त्राभिज्ञस्य ।...यथा विद्वच्छासनं सर्वेष्वनुष्ठेयेषु तत्तत्संशयनिर्णयाय नीयते तद्वदग्निरपि सर्वेषु यज्ञेषु प्रणीयते Sy.
११. सुखप्रदे गार्हपत्यायतनादौ शयानः Sy. सुखस्य स्थापयिता । सुखकर इत्यर्थः Sk.
१२. अहिः P. सुखासने उपवेशितोऽर्घपाद्यादिभिः सत्कृतोऽतिथिरिव Sy.
१३. हविर्भिस्तर्पणीयः Sy.
१४. होमकर्ताऽध्वर्युस्तत्तत्कर्मकरणेन फलैर्यजमानस्य गृहं यथा वर्धयति तद्वत् Sy.
१५. यज्ञसाधनद्वारेण ... परिचरतः Sk.
१६. वर्धयति Sk.
१७. द्योतमानः Sy. १८. सर्वस्य प्रेरकः सूर्यः Sy. १९. ०मननः M. सत्यज्ञानो यथार्थदर्शी Sy. सत्यज्ञानः Sk. २०. यागादिना प्रज्ञया वा Sk.

उपद्रवाणि।[1] बहुभिः प्रशस्तः। रूपम्।[2] इव। सत्यं तद्धि चक्षुर्ग्राह्यं श्रद्धेयं सत्यं भवति। शरीरमिव।[3] भरणीयः।[4] भवति। सुखकरं[5] हि।

**दे॒वो न यः पृ॑थि॒वीं वि॒श्वधा॑या उप॒क्षेति॑ हि॒तमि॑त्रो॒ न राजा॑।**
**पु॒रः॒सदः॑ शर्म॒सदो॒ न वी॒रा अ॑नव॒द्या पति॑जुष्टेव॒ नारी॑ ॥३॥**

**देवो न यः।** देवः।[6] इव। सविता। पृथिवीम्। विश्वस्य धर्ता।[7] उपेत्य[8] वसति।[9] अनुकूलः।[10] इव। राजा स यदा[11] सर्वां पृथिवीमधितिष्ठति यस्य चाग्नेः। पुरः सीदन्तः।[12]

---

१. वर्ज्यन्ते हिंस्यन्तेऽस्मिन्निति वृजनं सङ्ग्रामः।...विभक्तिव्यत्ययः। सर्वेभ्यः सङ्ग्रामेभ्यः। पुरुभिर्यजमानैः स्तुतोऽग्निः Sy. वृजनमिति बलनामान्यत्र। इह तु वर्जनीयत्वाद् वृजनं पापमुच्यते। सर्वाणि पापानि Sk.

२. यथा पृथिव्यादेः स्वरूपमागमापायिषु विशेषेषु सत्स्वपि स्वयमैकरूप्येण नित्यं भवति तद्वदग्निरप्युच्चावचेषु सर्वेषु कर्मसु स्वयमेक एव व्याप्य वर्तते Sy. आत्ममतिरमतिरुच्यते। तद्वत् सत्यः। अथवा अम गत्यादिष्वित्यस्यायं तिप्रत्ययः कर्तरि। गमनशीलोऽमतिरादित्यः। तद्वत् सत्यः Sk.

३. परमप्रेमास्पदतया निरतिशयानन्दस्वरूप आत्मा यथा सर्वान् सुखयति.. ...तद्वदग्निरपि स्वर्गादिफलहेतुतया सुखयति Sy.
यश्चात्मेव शेवः सुखः सर्वस्य Sk.

४. सर्वैर्यजमानैर्धारणीयः....परित्यागे हि वीरहत्यालक्षणो दोषो भवति Sy.
धारयिता च Sk.

५. ०करा P.
As an epithet of सविता, the reading should be सुखकरः

६. द्योतमानः सूर्य इव Sy.
देव इति पूर्वस्यामृचि सम्बन्धदर्शनाद् दीप्तत्वाच्च सवितैवाभिप्रेतः Sk.

७. यथा सूर्यो वृष्ट्यादिप्रदानेन सर्वं जगद् धत्ते, एवमग्निरपि यज्ञादिसाधनेन कृत्स्नस्य जगतो धारयिता Sy.
सर्वाहुतिलक्षणमाज्यादिपेयं यस्य स विश्वधायाः। सर्वासामाहुतीनां पातेत्यर्थः Sk.

८. धत्तोवोत्य M. सर्वेषां प्रियः सन् यज्ञगृहादौ निवसति Sy.

९. यथा देवः सविता पृथिवीं रश्मिभिर्व्याप्य निवसति तद्वद् व्याप्य निवसतीत्यर्थः Sk.

१०. हितान्यनुकूलानि मित्राणि यस्य तादृशो राजा यथा सुखेन निवसति तद्वत्। यथा सर्वजनमित्रो राजा एवमग्निरपि सर्वजनमित्र इत्यर्थः। नह्यग्निं कश्चन द्विष्टे Sy.
हितमित्रो न राजा। पूर्वस्यैवेयं द्वितीयोपमा। हितानि मित्राणि यस्य भवन्ति स हितमित्रः। यथा च हितैर्मित्रैरुपेतो राजा पृथिवीं सम्यक् पालयन्नुपभुञ्जानश्च निवसति तद्वत्सम्यक् पालयन्नुपभुञ्जानश्च निवसतीत्यर्थः Sk.

११. यथा M.

१२. पुरस्तात् सीदन्त उपविशन्तः पुरुषाः Sy.
पुरस्सीदन्तीति पुरस्सदः। सेनाया अग्रतो व्यवस्थातारः Sk.

दुर्गगृहस्थिताः[१]। वीराः[२]। इव अप्रधृष्या[३] भवन्ति। अवद्यरहिता रूपिणी[४]। पत्या सेविता[५]। स्त्रीवेति[६]।

**तं त्वा नरो दम आ नित्यमिद्धमग्ने सचन्त क्षितिषु ध्रुवासु ।**
**अधि द्युम्नं नि दधुर्भूर्यस्मिन्भवा विश्वायुर्धरुणो रयीणाम् ॥४॥**

तं त्वा नरः। तम्। त्वाम्[७]। नरः[८]। गृहे[९]। नित्यम्। समिद्धम्[१०]। अग्ने! सेवन्ते[११]। अग्निनिधानयोग्यासु[१२]। दृढासु[१३] भूमिषु[१४] तथा। अस्मिन्[१५]। अधिनिदधुश्च[१६]। अन्नम्[१७]। बहु[१८] स त्वम्। भव। सर्वान्नः[१९]। धनानाम्[२०]। धारकः[२१]।[२२]

---

१. दुर्ग्रह० D.
पितृगृहे वर्तमानाः पुत्रा इव वर्तन्ते। पिता पुत्रानिवाग्निः स्वस्य परिचारकान् रक्षतीति भावः Sy. शर्म सङ्ग्रामयज्ञ (जय) सुखम्। तदर्थं सीदन्तीति शर्मसदः। उपमानश्रुतेश्च साकाङ्क्षत्वादत्र योग्योपमेयकर्माध्याहारः। यथा च पुरःसदः शर्मसदो न वीराः शत्रूणामभिभवितारस्तद्वदभिभवितेत्यर्थः Sk.

२. D. adds इव before वीराः

३. प्र० P.

४. रूपाणि P. अनिन्दिता ... योषिदिव Sy.

५. सतेव P. D. M. स्वपतिना सेविता स्वीकृता Sy.

६. सा यथा पातिव्रत्येन शुद्धा सती सर्वकर्मयोग्या भवत्येवमग्निरपि Sy.
अत्रापि पूर्ववदुपमेयकर्माध्याहारः। यथानवद्या रूपवती पतिजुष्टा भर्तृसेविता नारी शोभते नित्यप्रीतियुक्ता वा तद्वच्छोभते नित्यप्रीतियुक्तो वेत्यर्थः Sk.

७. त्वा P.
पूर्वोक्तगुणविशिष्टम् Sy.

८. तम्। त्वाम्। नरः is omitted by M. यज्ञस्य नेतारो यजमानाः Sy.

९. स्वकीये यज्ञगृहे Sy.
यज्ञगृहे Sk.

१०. अनवरतं समिद्भिः प्रज्वलितं कृत्वा Sy.

११. स्तुतिभिर्हविर्भिश्च Sk.

१२. ०ग्यंसु P. योग्यासु missing M.

१३. ०ढंसु P.
निश्चलासु चलनरहितासु भूमिषु। निरुपद्रवेषु ग्रामेष्वित्यर्थः Sy.

१४. भूरिमिषु P.
क्षितिरिति पृथिवीनाम। इह च ... तदवयवेषु प्रयुक्तम्। पृथिव्यवयवेषु वेद्याख्येषु ध्रुवेषु Sk.

१५. अस्मिन् त्वय्यग्नौ Sk.

१६. स्थापितवन्तः Sy.
उपरि निदधति। जुह्वतीत्यर्थः Sk.

१७. हविर्लक्षणमन्नम् Sy; Sk.

१८. चरुपुरोडाशादिरूपेण बहुविधम् Sy.

१९. सर्वास्मः P. D. M.
सर्वान्नसम्बद्धः सर्वेषामन्नानां दाता। हविर्भोक्तेत्यर्थः Sk.

२०. नाना० M.

२१. धृ धारणेऽन्यत्र। इह तु सामर्थ्याद् दानवचनः। दाता Sk.

२२. V. Mādhava ignores आ

वि पृक्षो अग्ने मघवानो अश्युर्वि सूरयो ददतो विश्वमायुः ।
सनेम वाजं समिथेष्वर्यो भागं देवेषु श्रवसे दधानाः ॥५॥

वि [१] पृक्षो [२] अग्ने। [३] व्यश्युः। अग्ने! [४] अन्नं [५] धनवन्तः। [६] व्यश्युः। [७] प्राज्ञाः। [८] ददतः। विश्वम्। [५] अन्नं दरिद्रेभ्यो वयं च। [९] लभेमहि। [१०] अन्नम्। सङ्ग्रामेषु शत्रोः। [११] भागम्। [१२] देवेषु। [१३] अन्नार्थम्। [१४] निदधानाः।

ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीपयन्त द्युभक्ताः ।
परावतः सुमतिं भिक्षमाणा वि सिन्धवः समया सस्रुरद्रिम् ॥६॥

ऋतस्य हि। [१५] अग्नेः। [१६] हि। [१७] धेनवः। [१८] कामयमानाः। [१९] प्रशस्तोध्न्यः। [२०] अवृद्धवयस्का आसन्। [२१] सम्भक्तस्वर्गास्तदेवाह। दूरात्। [२२] सुमतिमग्निमवेक्षितम्। [२३] भिक्षमाणाः। [२४] विसस्रुः

---

१. वृक्षो D. वृक्षे P. २. वृक्षोऽग्ने M.
३. ०यत्युः M. त्वयानुगृहीताः सर्वाण्यन्नानि लभन्ताम् Sy. विविधं प्राप्नुयुः। त्वत्प्रसादेन लभेरन्नित्यर्थः Sk.
४. ०न्नेन् P. D.
५. हविर्लक्षणेन धनेन युक्ता यजमानाः Sy. प्रभूतहविष्करणयोग्या इत्यर्थः Sk.
६. व्यश्वः M. ७. स्तोतारश्च Sk.
८. हवींषि ... प्रयच्छन्तो वर्तन्ते। ... सर्वं जीवितं ... व्याप्नुवन्तु Sy. तुभ्यं हवींषि। ये च धनवन्तः प्रभूतानि हवींषि कुर्वन्ति ये च दारिद्र्यात् प्रायेण स्तुवन्त्येव न प्रभूतानि हवींषि कर्तुं शक्नुवन्ति त उभये अपि तुभ्यं हविर्ददतोऽन्नानि प्राप्नुयुरित्यर्थः Sk.
९. त्वदनुग्रहात् सम्भजेमहि Sy.
१०. सर्वमायुश्च वर्षशतलक्षणम् Sk.
११. हविर्भागम् Sy. हविर्लक्षणम् Sk.
१२. त्वत्प्रमुखेष्विन्द्रादिषु Sy. सम्प्रदानस्येयमधिकरणत्वेन विवक्षा।...देवेभ्यः Sk.
१३. यशसे Sy. १४. वयं च etc. up to the end missing M. स्थापयन्तो भूयास्मेति शेषः Sy. ददतः। देवान्यजन्त इत्यर्थः Sk.
१५. देवयजनदेशं प्राप्तमग्निमेव Sy.
१६. ऋतस्य हि। अग्नेः। हि missing M. हिशब्दः पदपूरणः Sk.
१७. अग्निहोत्रादिहविषां दोग्ध्र्यः Sy.
१८. अग्निं पुनः पुनः कामयमानाः Sy. पुनः पुनर्वाश्यमानाः Sk.
१९. स्मच्छब्दो नित्यशब्दसमानार्थः। नित्यमूधसा युक्ताः। सर्वदा पयसः प्रदात्र्य इत्यर्थः Sy. स्मच्छब्दः प्रशस्तवचनः। अमृतपचनत्वात् प्रशस्तमूधो यासां ताः स्मदूध्न्यः Sk.
२०. ध्न्योवृद्धवयर्ताः प्रस्तोभ्योवृद्धवयर्ताः P. ०तोग्न्योवृ० M. क्षीरादिलक्षणं गव्यमपाययन् Sy. पीपयन्त अमृतेनाप्याययन्त्यग्निम् Sk. २१. दिवा प्रकाशेन, सम्भक्ताः संश्लिष्टास्तेजस्विन्य इत्यर्थः Sy. दिवं या भजन्ते ता द्युभक्ताः। द्युनिवासिन्य इत्यर्थः Sk.
२२. शोभनामनुग्रहात्मिकां बुद्धिम् Sy. कल्याणचित्तमग्निम् Sk.
२३. ०णं P. अन्वेषमाणा इत्यर्थः Sk.
२४. क्षितम् भिक्षमाणाः वि missing M. विसुस्रुः P. विशेषेण गच्छन्ति प्रवहन्ति। अग्नये दातव्यानां हविषां निष्पत्तये प्रवहन्तीत्यर्थः Sy. विविधमभिगच्छन्त्यग्निम् Sk.

सिन्धवः[1]। अद्रिमग्निम्[2]। समयाऽग्निसमीपेऽद्रिरादृणात्यमित्रानिति[3] स्वर्गस्था आपोऽग्नि प्रत्यागच्छन्ति।

**त्वे अ॒ग्ने सु॑म॒तिं भिक्ष॑माणा दि॒वि श्रवो॑ दधिरे य॒ज्ञिया॑सः।**
**नक्ता॑ च च॒क्रुरु॒षसा॒ विरू॑पे कृ॒ष्णं च॒ वर्ण॑मरु॒णं च॒ सं धुः॥७॥**

त्वे अग्ने। त्वयि[4]। अग्ने! सुमतिं[5] त्वदीयाम्। भिक्षमाणाः . . .[6] हविः[7]। निदधिरे[8] यजमानाय यथा . . .[9] न्नं कुर्वन्ति तथा यज्ञकरणात्। अहोरात्रे[10]। विरूपे[11]। चक्रुः। कृष्णम्[12]। अरुणम्[13]। च। वर्णमहोरात्रयोः[10]। सन्दधुः[14]।[15]

---

१. स्यन्दनशीला नद्यः Sy. स्यन्दना अमृतत्वाविष्यः Sk.

२. पर्वतस्य समीपे Sy. अद्रिर्मेरुनामा पर्वतः। मेरोः समीपे-नेत्यर्थः। अग्नेः स्वभूता गावो गव्यूतितो मेरुबुध्नेन प्रत्यागत्य विविधमग्निमभि-गच्छन्ति। अभिगम्य च स्वेनामृतरूपेण पयसाग्निमाप्याययन्तीति समस्तार्थः। अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना। धेनव इति धिनोतेः प्रीणनार्थस्य रूपम्। ऋतस्याग्नेः प्रीणयित्र्य आहुतयः। वावशाना अत्यर्थं कामयमानाः। स्मदूध्नीः। यद्रसस्थानमाहुतीनां तदूधरुच्यते। पृथिवीत इत्यर्थः। शिष्टपदयोजना तु सदृशी Sk.

३. समपे द्रीरा० M.

४. त्वे इति द्वितीयैकवचनस्य शेआदेशः। त्वाम् Sk.

५. शोभनामनुग्रहात्मिकां बुद्धिम् Sy. धनानि Sk.

६. दीस्ते M.

७. हविर्लक्षणमन्नम् Sy; Sk.

८. अस्थापयन् Sy. स्थापयन्ति। देवेभ्यो हवींषि ददतीत्यर्थः। अथवा दिवीति सप्तमीनिर्देशाद् व्यवस्थि-तायेति वाक्यशेषः। दिवि व्यवस्थिताय तुभ्यं श्रवो दधिरे ददति Sk.

९. A few words are missing in M. Mss. P. and D. begin from तथा यज्ञकरणात् and omit the passage beginning with त्वे अग्ने and ending with कुर्वन्ति

१०. V. M. uses अहोरात्र in the dual and in the neut. It is used however in the sing. and in the masculine.

११. विविधरूपे Sy. सप्तमीद्विवचनस्यायं शेआदेशः। विभिन्नरूपयोः Sk.

१२. रात्र्यां श्यामलवर्णमन्धकारम् Sy.

१३. आरोचनं श्वेतवर्णं तेजः Sy.

१४. सम्यक् स्थापितवन्तः Sy. तथा त्वां यष्टारः समिन्धते यथा तव कृष्णारुणौ वर्णावपि भिन्नौ भवत इत्यर्थः। अथवैवमन्यथोत्तरस्यार्धर्चस्यार्थयोजना। नक्ता च चक्रुरुषसा विरूपे इति द्वितीयान्तान्येतानि न च सप्तम्यन्तानि। दिवि श्रवो दधिरे यज्ञियासो नक्तोषसौ विभिन्नरूपे कुर्वन्तीत्यर्थः। नक्तोषसोरेव कृष्णं च वर्णमरुणं च सन्धुः। कथं पुन-र्यष्टार एतत् कुर्वन्ति? उच्यते? याग-कारित्वाद्यागस्य च धर्मत्वात् कृत्स्नस्य जगतो धर्ममूलत्वात् Sk.

१५. V. Mādhava ignores यज्ञियासः or it may be in the missing part.

यात्राये मर्तान्त्सुषूदो अग्ने ते स्याम मघवानो वयं च ।
छायेव विश्वं भुवनं सिसक्ष्यापप्रिवान्रोदसी अन्तरिक्षम् ॥८॥

यात्राये[1]। यांस्त्वम्। अग्ने! धनाय। मनुष्यान्। प्रैरयः[2]। ते वयम्। स्याम तदेवाह--धनवन्तः[3]। वयम्[4]। चेति[5]। छायेव[6]। विश्वम्। भूतजातम्। सेवसे[7]। पूरयन्[8]। त्रीन् लोकान्[9]।

अर्वद्भिरग्ने अर्वतो नृभिर्नृन्वीरैर्वीरान्वनुयामा त्वोताः ।
ईशानासः पितृवित्तस्य रायो वि सूरयः शतहिमा नो अश्युः ॥९॥

अर्वद्भिरग्ने[10]। अग्ने! त्वया रक्षितास्सन्तो वयम्[11]। अश्वादिभिः सहानुस्यूतान्। अश्वादीन्[12]। भजेमहि[13]। ईश्वराः[14]। पितृलब्धस्य। धनस्य। अस्माकम्। पुत्राः[15]। शतं संवत्सरान्[16] व्यश्नुवीरन्[17] पितृलब्धं धनमिति।

एता ते अग्न उचथानि वेधो जुष्टानि सन्तु मनसे हृदे च ।
शकेम रायः सुधुरो यमं तेऽधि श्रवो देवभक्तं दधानाः ॥१०॥

एता ते अग्ने। एतानि। ते। अग्ने! वचनानि[18] सूक्तानि। विधातः[19]! पर्याप्तानि[20]।

---

१. यान्त्राये M. P. याश्राये D.
२. प्रे० M. अग्निहोत्रादिकर्मसु प्रेरयसि Sy. संस्करोषि।...यान् धनप्राप्तियोग्यान् करोषीत्यर्थः Sk.
३. धनेन हविर्लक्षणेन धनवन्तः Sk.
४. चशब्द एवार्थे। वयमेव। अस्मानेव धनप्राप्तियोग्यान् कुर्वित्यर्थः। चशब्दसामर्थ्याद्वा मघवानश्च वयं च स्यामेत्येवं व्याख्यातव्यम्। ये चान्ये हविर्लक्षणेन धनेन धनवन्तो वयं चेत्यर्थः Sk.
५. यथा छत्रादेः छायाऽऽतपादिजनितं क्लेशं निवार्य रक्षति तद्वत् Sy. यथा छाया नित्यसन्निहितैवं त्वम् Sk.
६. विवि० M. ७. अनुगृह्य सर्वं रक्षसीत्यर्थः Sy. दहनपचनादिना Sk.
८. द्यावापृथिव्यावन्तरिक्षञ्च ... स्वतेजसा वृष्ट्युदकेन वाऽऽपूरितवांस्त्वम् Sy. स्वेन ज्योतिषा Sk. ९. त्रिलो० P.
१०. अर्वभि० M. ११. ०दिभ्योः P. अस्मदीयैः Sy. आत्मीयैः Sk.
१२. शत्रुसम्बन्धिनोऽश्वान् Sy. शत्रूणां स्वभूतानर्वतोऽश्वान् Sk. १३. हन्याम Sy. वनुष्यतिर्हन्तिकर्मा। हन्यामेत्येतदाशास्महे Sk. १४. ०रः P.
१५. सूरयस्तव स्तोतारः सन्तः... अत्र षष्ठीनिर्देशात् पितृवित्तस्येति वचनात् पुत्रा इति वाक्यशेषः। नोऽस्माकं पुत्राः Sk.
१६. व० P. जीवन्तः Sy.
१७. विशेषेण भुञ्जताम्। अस्मदीयानां पुत्राणामारोग्यं दीर्घमायुश्च भवत्वित्यर्थः Sy. विविधं प्राप्नुयुरित्याशास्महे। त्वत्प्रसादेनास्मत्पुत्राः पित्र्येण धनेनोपेता वर्षशतं जीव्यासुरित्यर्थः Sk.
१८. इदानीमस्माभिः प्रयुक्तानि स्तोत्राणि Sy. अस्मदीयानि स्तुतिवचनानि Sk.
१९. मेधाविनामैतत्। मेधाविन् Sy. मेधाविन् Sk. २०. प्रियाणि Sy.; Sk.

भवन्तु[१]। मनसे[२]। हृदयाय[३]। च तव[४]। धनस्य[५]। यमनं कर्तुम्[६]। सुधुरो वयम्[७]। शकेम त्वया दत्तां[८] लक्ष्मीं नियन्तुं[९] समर्था भवेम। देवैर्भक्तम्[१०]। अन्नं[११] हविरग्नौ[१२][१३]। अधिदधानाः[१४]।[१५]

## I.74.

**उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये। आरे अस्मे च शृण्वते ॥१॥**

उपप्रयन्तः। गोतमो राहूगणः[१६]।

उपप्रगच्छन्तः[१७]। यज्ञम्[१८]। मन्त्रम्[१९]। वोचेमान्वहम्[२०]। अग्नये[२१]। दूरेऽपि स्थित्वा[२२]। अस्माकं वचनम्[२३]। शृण्वते[२४]ऽपेक्षिते धने दूरे स्थितेऽपि[२५] स्तोतुर्वचनं[२६] शृणोतीति वाजसनेयक[२७] उक्तमिति[२८]।

---

१. ०न्ति M. २. मनोवृत्तये Sy. मनोऽन्तःकरणम्। हृदयं तदधिष्ठानम्। तयोरुभयोरपि Sk.

३. तद्वृत्तिमतेऽन्तःकरणाय च Sy.

४. धनस्यार्थाय Sk.

५. यमं बन्धनम्। स्ववेद्यां धारणमित्यर्थः Sk.

६. सुष्ठु निर्वाहिकस्य। यद्वा शोभनं धूर्वति दारिद्रयं हिनस्तीति सुधूः। तादृशस्य ... धनस्य Sy. शोभना धूर्यस्य स सुधुरो रथः। तस्य Sk.

७. शङ्केम M. शक्नोतेः कर्मभूतधात्वन्तरसापेक्षत्वात्कर्तुमिति वाक्यशेषः। शक्नुयाम कर्तुमित्येतदाशास्महे Sk.

८. दन्नां M.

९. Omitted by P. १०. देवैः सम्भजनीयम् Sy. देवैः सेवितं देवानां वाऽऽहारभूतम् Sk. ११. ०न्न M. हविर्लक्षणमन्नम् Sy.

१२. हेवि० M.

१३. ०रग्नवधि० P. अग्नेरुपरि धारयन्तः। अग्नौ हविर्भिर्होमं कुर्वन्त इत्यर्थः Sy.

१४. अधिनिद० P. ०ना D. अधिशब्दः...पदपूरणः ... दधाना ददत। यजतेत्यर्थः Sk.

१५. Ms. D. puts the figure ॥७३॥ here to indicate the end of the seventythird hymn. No such number is given in P. and M. १६. रूहू० P. D. राहु० M. १७. ०यच्छ० P. प्राप्त्यविच्छेदेन सम्यगनुतिष्ठन्त इत्यर्थः Sy.

१८. ०ज्ञ M. हिंसाप्रत्यवायरहितमग्निष्टोमादियज्ञम् Sy. १९. स्तुतिलक्षणम् Sk. मननसाधनमेतत्सूक्तरूपं स्तोत्रम् Sy.

२०. वक्तारो भूयास्मेत्याशास्यते Sy. अग्नये इत्येतन्नित्यमाशास्महे Sk.

२१. अङ्गनादिगुणयुक्ताय देवाय Sy.

२२. सन्निकृष्टे व्यवस्थितायेति वाक्यशेषः Sk.

२३. अस्मदीयस्तुतिश्रवणं प्रति सादराय न निरादरायेत्यर्थः Sk. २४. P. and D. add अपि after अपेक्षिते

२५. ०वि D. स्थितो is suggested for स्थिते २६. स्तोतृव० M.

२७. ०यिक० P. D. From the words used by V. M., the passage seems to be a quotation from any of the texts, attributed to Vājasaneya, a patronymic of Yājñavalkya. The texts include the Yv, ŚB, Bṛh. U. Śr. Sū, etc. It is however untraced. The linguistic evidence is against its being a quotation from the texts mentioned above.

२८. V. Mādhava ignores च

**यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु । अरक्षद्दाशुषे गयम् ॥२॥**

यः स्नीहितीषु[1] । यः । हन्त्रीषु[2] । संगच्छमानासु शत्रुभूतासु । प्रजासु । पुराणः[3] । रक्षन्[4] । यजमानाय[5] । गृहं[6] मह्यं तस्मै मन्त्रं वोचेम[7] ।

**उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनंजयो रणेरणे ॥३॥**

उत ब्रुवन्तु । कामम[8]एनम् । स्तुवन्तु[9] । मनुष्याः[10] । उदजन्यरण्योः[11] [12] [13] । अग्निः । वृत्रहा[14] । युद्धे युद्धे । धनस्य[15] जेता[16] ।

**यस्य दूतो असि क्षये वेषि हव्यानि वीतये । दस्मत्कृणोष्यध्वरम् ॥४॥**

यस्य दूतः । यस्य[17] । दूतः । भवसि । गृहे[18] । कामयसे[19] च । हव्यानि[20] । अशनाय[21] । यस्य च यज्ञम् । दर्शनीयम् । करोषि ।

**तमित्सुहव्यमङ्गिरः सुदेवं सहसो यहो । जना आहुः सुबर्हिषम् ॥५॥**

तमित्सुहव्यम् । तम्[22] । एव[22] । शोभनहविष्कम् । अङ्गिरः[23] ! जनाः । आहुः । सुदेवं[24] च ।

---

१. यस्निहितेषु P. य स्नीहीतिष्ठ D. यः सीहित्रीषु M.
२. हंत्रिषु P. हस्त्रीषु M.
३. पुर० P. सर्वत उत्कृष्ट इत्यर्थः Sk.
४. अरक्षत् is suggested for रक्षन्
५. षष्ठ्यर्थे चतुर्थी। हवींषि दत्तवतो यजमानस्य Sk. ६. धनम् Sy.
७. ०मः M. यच्छब्दश्रुतेः पूर्वयैकवाक्यता Sk. ८. अनन्तरम् Sy. उतशब्दोऽप्यर्थे Sk. ९. ब्रुवन्तु मन्त्रमग्नये Sk. १०. जाताः सर्वे ऋत्विजः Sy. जायमानत्वाज्जन्तवः पुत्रा इहाभिप्रेताः। अस्मदीयाः पुत्रा अपि ब्रुवन्त्वित्येतदाशास्महे इत्यर्थः Sk. ११. ऊर्ध्वो जायताम् । अस्मद्यज्ञेषु दीप्यतामित्यर्थः Sk.
१२. सकाशादुत्पन्नः Sy.
१३. ०जन्नरण्योग्नि P.
१४. वृत्राणामावरकाणां शत्रूणां हन्ता Sy. अस्मच्छत्रूणां हन्ता Sk.
१५. धनानाम् Sk. १६. जातं P. तेजाः M. शत्रुधनानां जेता Sy.
१७. यजमानस्य Sk.
१८. देवयजनलक्षणे Sy. १९. गमयसि Sy.
२०. चरुपुरोडाशादीनि Sy.
२१. ०से म हव्यन्यश० M. हव्यं न्यशना P. देवानां भक्षणाय Sy. भक्षयितुम् Sk.
२२. यजमानम् Sy.
२३. अङ्गनादिगुणयुक्ताग्ने ! Sy. अङ्गिरःशब्दोऽपि कार्यशब्दः सोऽयमित्यभिसम्बन्धात् कारणे प्रयुक्तः। अग्निर्ह्यङ्गिरसः कारणभूतः। . . . अथवाऽङ्गानि शरीरावयवाः। तद्वदङ्गि शरीरम्। तस्य स्थितिहेतुरशितपीतरसोऽङ्गिरसः। तस्य कर्ता अङ्गिराः। जाठरात्मना ह्यग्निरशितपीतं शरीरस्थितिहेतुभूतं रसतामापादयति। तस्याग्नेः सम्बोधनमिदमङ्गिर इति Sk.
२४. शोभनदैवतम् Sy. शोभना देवा यस्य स सुदेवः। तं सुदेवम्। देवानां चानुग्राह्यमित्यर्थः Sk.

सहसः[1] । पुत्र[2] ! शोभनयज्ञं[3] च ।

**आ च वहासि ताँ इह देवाँ उप प्रशस्तये । हव्या सुश्चन्द्र वीतये ॥६॥**

आ च वहासि[4] । उपावहसि[5] । च[6] । तान्[7] । इह[8] । देवान् । प्रशंसनायेमानि । हव्यानि[9] । सुकान्त[10] ! देवानाम् । अशनाय । भवेयुः[11] ।

**न योरुपब्दिरश्व्यः शृण्वे रथस्य कच्चन । यदग्ने यासि दूत्यम् ॥७॥**

न योरुपब्दिः[12] । न । गच्छतः[13] । शब्दः[14] । अश्वेषु भवः[15] । श्रूयते[16] । कदा[17] । चिदपि । रथस्य । यदा[18] । अग्ने ! गच्छसि । दूत्यं[19] रक्षसामनन्वचाराय[20] निः शब्दं गच्छसीति ।

**त्वोतो वाज्यह्रयोऽभि पूर्वस्मादपरः । प्र दाश्वाँ अग्ने अस्थात् ॥८॥**

त्वोतो वाजी[21] । त्वया रक्षितः । अन्नवान्[22] । अलज्जन्[23] । पूर्वस्मात्[24] । अपरो[25] यादृगाकारः पूर्वमतादृशाकारः[26] । अभिप्रतिष्ठत्युच्छ्रिते[27] पदे । यजमानः[28] ।

---

१. बलस्य Sk.
२. बलेन मथ्यमानोऽग्निर्जायते। तेन बलस्य पुत्र उच्यते Sk. ३. यज्ञशोभन० P.
४. वाहा० P. ५. अस्मत्समीपं . . . प्रापय Sy. उपावह च Sk.
६. चेत् M. चशब्दश्रुतेर्यज चेति वाक्यशेषः। पदपूरणो वा चशब्दः Sk.
७. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। ये आवोढुं योग्यास्तान् Sk.
८. अस्मिन् कर्मणि Sy. अस्मदीये यज्ञे Sk.
९. चरुपुरोडाशादीनि हवींषि Sy. षष्ठ्यर्थे तृतीयैषा। हविषां च Sk.
१०. शोभनाह्लादनाग्ने ! Sy.
११. ०यु M. प्रापयेत्यर्थः Sy.
१२. ०रुवब्द्धिः P. पुनयोरुपब्धि M.
१३. देवलोकं गच्छत इत्यर्थः Sk.
१४. श्रवणार्हः Sy. १५. भव P. M. ह्रेषितशब्दः शफशब्दो वेत्यर्थः Sk.
१६. M. adds च after श्रूयते। रथस्य शीघ्रगमनेनास्माभिः शब्दो नोपलभ्यत इत्यर्थः Sy. १७. कदाचन, तदानीं सर्वदापि Sy. १८. Omitted by P. and D. १९. दूत्या P. यजमानानां दूततां प्रतिपद्य देवलोकं गच्छसीत्यर्थः Sk.
२०. ०न्वपचा० P. D. ०चरा० M.
२१. पजिह्र P. २२. उपकल्पितहविष्क इत्यर्थः Sk. २३. शोभनत्वाद्धविषामलज्जितः Sk. २४. स्वस्मादधिकारात् Sy. २५. अर्वाग्देशवर्ती। नातिदूरचर इत्यर्थः Sk. २६. निकृष्टो भवति Sy.
२७. ऐश्वर्यमभिप्राप्य प्रतितिष्ठति सर्वोत्कृष्टो भवतीत्यर्थः Sy. हर्विभिः स्तुतिभिर्भवन्तमभिगच्छतीत्यर्थः। अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना। त्वद्रक्षितो हविष्मानलज्जितः पूर्वस्मादपरः। पूर्वप्रस्थितादनन्तर एवेत्यर्थः। दाश्वान् हे अग्ने अभिप्रास्थात् स्वर्गलोकमभिगच्छति। मरणोत्तरकालं स्वर्गलोकं प्राप्नोतीत्यर्थः Sk.
२८. V. Mādhava ignores अग्ने

उत द्युमत्सुवीर्यं बृहदग्ने विवाससि । देवेभ्यो देव दाशुषे ॥६॥

उत द्युमत्[1]। अपिच। दीप्तिमत्[2]। शोभनवीर्यम्[3]। बृहदन्नम्[4]। गमय प्रयच्छ[5]। देवेभ्यः। देव[6]। दाशुषे[7]।

I.75.

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् । हव्या जुह्वान आसनि ॥१॥

जुषस्व सप्रथस्तमम्। सेवस्व। सर्वतः पृथुतमम्[8]। वचः[9]। अतिशयेन दीप्तरूपम्[10], प्स इति रूपनाम, रो मत्वर्थीयः[11]। हव्यानि[12]। आस्ये[13]। प्रक्षिपः[14]।

अथा ते अङ्गिरस्तमाग्ने वेधस्तम प्रियम् । वोचेम ब्रह्म सानसि ॥२॥

अथा ते[15]। अथ। ते। अङ्गिरसां वरिष्ठ[16]! अग्ने! प्राज्ञतम[17]! प्रियम्। वोचेम[18]। स्तोत्रम्[19]। भजनीयम्।

---

१. पूर्वस्यामृचि यद्यग्निरभिगम्यमानस्ततोऽत्रोतशब्दः पदपूरणः। अथ स्वर्गस्ततः फलसमुच्चयादुतशब्दोऽप्यर्थे। अपि मरणोत्तरकालं स्वर्गं प्राप्नोति अस्मै जीवते Sk २. द्युमद् दीप्तिमदन्नं धनं वा Sk.
३. छेदनवीर्यं M. ४. प्रौढं धनम् Sy.
५. गमयितुमिच्छसि प्रापयसीति यावत् Sy. विवासतिः परिचर्यायामन्यत्र। इह तु दाशुष इति सम्प्रदानचतुर्थीश्रुतेर्दानार्थः। ददासि Sk. ६. चरुपुरोडाशादीनि हवींषि दत्तवते तस्मै यजमानाय Sy. हवींषि दत्तवते। यष्ट्रे इत्यर्थः Sk.
७. V. Mādhava ignores अग्ने। Ms. D. puts the figure ॥७४॥ here to indicate the end of the seventyfourth hymn. No such number is given in P. and M. ८. ०मः M. अत्यन्तविस्तीर्णम् Sk. ९. वोच P. स्तोत्रलक्षणमस्मदीयं वचनम् Sy. अस्मदीयं स्तुतिलक्षणं वचः Sk.
१०. तिश० P. देवानां प्रीणयितृतमम् Sy. देवस्याग्नेः रूपैरतिशयेन युक्तम्। अशेषाग्निरूपप्रकाशनमित्यर्थः Sk.
११. रा P. १२. स्तोकलक्षणानि हवींषि Sy.
१३. अ० M. आत्मीये Sk.
१४. ०प M. प्रक्षिपन् is suggested for प्रक्षिपः। इमानि स्तोकलक्षणानि हवींषि वृथा मा भूवन्, तत्सर्वं त्वदीयेन मुखेन स्वीकुर्वित्यर्थः Sy. हवींषि भक्षयन्नित्यर्थः Sk. १५. अथा P. अथशब्द आनन्तर्ये। अतोऽप्यनन्तरम्। अतः परमित्यर्थः Sk.
१६. अतिशयेनाङ्गनादिगुणयुक्त! यद्वा अङ्गिरसां वरिष्ठ! Sy. हे अङ्गिरस ऋषेरतिशयेन कारणभूतशरीरस्थितिहेतोर्वाऽशितपीतस्य रसस्यातिशयेन कर्तः Sk.
१७. प्रज्ञातम M. १८. ०मः M.
१९. स्तुतिलक्षणं ब्रह्मेत्याशास्महे। चिरं सम्भजनीयं वा Sk.

कस्ते जामिर्जनानामग्ने को दाश्वध्वरः । को ह कस्मिन्नसि श्रितः ॥३॥

कस्ते जामिः । कः । ते । बन्धुः[1] । जनेषु[2] । कीदृशो वा तव[3] । दत्तयज्ञः[4] । कीदृशशीलस्त्वम्[5] । असि । कीदृशशीले[6] । वा । आश्रितो[7] भवसि[8] ।

त्वं जामिर्जनानामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यः ॥४॥

त्वं जामिः[9] । त्वम्[10] । बन्धुः[11] । जनानाम्[12] । अग्ने ! प्रियम्[13] । मित्रं[14] च । भवसि[15] । सखा[16] । सखिभ्यः[17] । स्तोतव्यः ।

यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत् । अग्ने यक्षि स्वं दमम् ॥५॥

यजा नः । यज[18] । अस्माकम्[19] । मित्रादीन् । बृहत्[20] । ऋतमादित्यम्[21] । स्वो[22] दमः स्वशरीरं[23] तं च[24] । यज[25] । "अग्निमग्न आवह"[26] इति मन्त्रः[27] सूक्ते मित्रादीनां[28] यागमाशास्ते[29][30] ।[31]

---

१. त्वं सर्वैर्गुणैरधिकोऽसि । तवानुरूपो बन्धुर्नास्तीति भावः Sy.

२. यजमानानां मध्ये Sk. ३. रव P.

४. दृत्त० P. त्वां यष्टुमपि समर्थः कोऽपि नास्तीत्यर्थः Sy. पूर्वमपि कृतयाग इत्यर्थः Sk.

५. ईदृग्रूप इति सर्वैर्न ज्ञायस इत्यर्थः Sy. को ह? हशब्दोऽत्र वार्थे। को वा? साकाङ्क्षत्वात् प्रिय इति वाक्यशेषः Sk.

६. कस्मिन् स्थाने ... । तत्स्थानमपि न केनचिद् ज्ञायते । अतस्त्वमस्माभिर्मांसदृष्टिभिः कथमुपलब्धव्य इत्यग्निः प्रशस्यते Sy. यजमाने Sk.

७. कस्तव ज्ञातिः कृतोपकारः प्रियो वा। कस्मिन्नाश्रितोऽसि येन निरुद्धोऽस्मद्यज्ञं नाधिगच्छसीत्यागमनविलम्बनादुपालम्भोऽयम् Sk. ८. V. Mādhava ignores अग्ने। ९. ०मि M.

१०. उक्तप्रकारेणाचिन्त्यरूपः Sy.

११. अनुग्रहीतृतया सर्वेषां जनानां ... बन्धुः Sy. १२. सर्वयजमानानाम् Sk.

१३. ०य M. प्रीणयिता त्वं यजमानानाम् Sy. १४. प्रमीतेस्त्रायकोऽसि Sy.

१५. ०ति M. १६. सखिवदत्यन्तं प्रियः Sy.

१७. समानख्यानेभ्य ऋत्विग्भ्यः Sy. षष्ठ्यर्थे चतुर्थ्येषा। सखीनां चेड्यः स्तुत्यः Sk. १८. हविषा पूजय Sy.

१९. अस्माकमर्थाय Sk. २०. प्रौढम् Sy. महत्। सुष्ठ्वित्यर्थः Sk. २१. बृहेदृत० M. सत्यं यथार्थफलं यज्ञञ्च यजेत्येव Sy. सत्यम् Sk. २२. ०त्य P. D.

२३. ०म P. D. M. स्वकीयं...यज्ञगृहम् Sy. स्वं दममुपशमं गृहं वा। दमशब्देन तद्वतोऽग्नेरेव याग उच्यते। उपशमवन्तमात्मानं यज्ञगृहादिगृहवन्तं वा यजेत्यर्थः Sk.

२४. तच्च M. २५. यजाग्निम् M. संगच्छस्व। त्वय्यन्तर्विद्यमाने सति हि यज्ञगृहं पूज्यते Sy. २६. TS. 2. 5. 9. 4. २७. तनूः M. २८. ०ना P.

२९. ०गा० P. ३०. ०शासन्त M.

३१. V. Mādhava ignores अग्ने। Ms. D. puts the figure ॥७५॥ here to indicate the end of the seventyfifth hymn. No such number is given in P. and M.

## I.76.

का त उपे॑तिर्मन॑सो॒ वरा॑य॒ भुव॑दग्ने॒ शंत॑मा॒ का म॑नी॒षा ।
को वा॑ य॒ज्ञैः परि॒ दक्षं॑ त आप॒ केन॑ वा ते॒ मन॑सा दाशेम ॥१॥

का त उपेतिः । कीदृशम् । तव । उपगमनम्[1] । मनसः । वरणाय[2] । का वा । भवति । सुखतमा । तव । स्तुतिः[3] । कः[4] । वा । यज्ञैः[5] । त्वत्तः । वृद्धिम्[6] । आप[7] । कीदृशेन[8] । वा । मनसा युक्ताः[8] । तुभ्यम्[9] । ददामः[10] ।

एह्य॑ग्न इ॒ह होता॒ नि षी॒दाद॑ब्धः॒ सु पु॑रए॒ता भ॑वा नः ।
अव॑तां त्वा॒ रोद॑सी विश्वमि॒न्वे यजा॑ म॒हे सौ॑मन॒साय॑ दे॒वान् ॥२॥

एह्यग्ने । आगच्छ । अग्ने ! अत्र[11] । होता सन्[12] । निषीद[13] । अहिंसितस्त्वम्[14] । सुष्ठु । अस्माकम्[15] । अग्रतो गन्ता[16] । भव हौत्रं[17] कुर्वाणम् । त्वाम् । सर्वव्यापिन्यौ[18] । द्यावापृथिव्यौ । रक्षतामथ[19] । महते[20] । सौमनसाय[21] । यज[22] । देवानिति[23] ।

---

१. का उपेतिर्भुवत् । कीदृशमुपगमनं भवेत् । न काप्यस्ति । तवोचितमुपगमनं वयं कर्तुं न शक्नुम इति भावः Sy.
२. निवारणाय अस्मास्ववस्थापनाय Sy. वरशब्दः श्रेष्ठवचनः । षष्ठचर्थे चैषा चतुर्थी । श्रेष्ठस्य Sk.
३. तवोचिता स्तुतिरपि नास्तीत्यर्थः Sy. कयोपगत्योपगम्यमानः स्तुत्या वा स्तूयमानस्त्वं मनसा प्रीयस इत्यर्थः Sk.
४. को वा यजमानः Sk.
५. तव सम्बन्धिभिर्यागैः Sy.
६. बलं वा Sy. दक्षशब्दोऽत्रात्मवचनः । . . . मनोवचनो वा । . . . तवात्मानं मनो वा Sk.
७. न कोऽपीत्यर्थः । तवोचितान् यागाननुष्ठाय तैः फलं प्राप्यते इत्येतदपि दुर्घटमेवेति भावः Sy. सर्वतो व्याप्नोति Sk.
८. उपगमनादिकं तावदास्तां, तस्य सर्वस्य साधनभूतं मन एवास्माकं दुर्लभमित्याह- केनेति . . . केन मनसा कीदृश्या बुद्धचा Sy.
९. हवींषि प्रयच्छाम । तवोपगमनाद्यनुरूपं मनोऽस्माकं नोत्पद्यत इत्यर्थः Sy. हवींषि . . . । एतत्सर्वं कथय । सुखं वयं ज्ञात्वा कुर्म इत्यर्थः Sk.
१०. V. Mādhava ignores अग्ने । परि
११. अस्मिन् यज्ञे Sy.
१२. ०त P. देवानामाह्वाता सन् Sy.
१३. उपविश Sy.
१४. राक्षसादिभिः Sy.
१५. सर्वकर्मस्वग्रतोगामी Sk.
१६. गन्ता (भवति सुखतमा तव स्तुतिः) भव P.
१७. हो० D. नौत्रं M. १८. ससर्व० P.
१९. ०थाम० M. २०. ते P. D.
२१. सौमनस्याय Sy. सौमनस्यायास्माकम् Sk.
२२. हविर्भिः पूजय Sy.
२३. दानादिगुणयुक्तान् इन्द्रादीन् Sy.

**प्र सु विश्वा॑न्र॒क्षसो॒ धक्ष्य॑ग्ने॒ भवा॑ य॒ज्ञाना॑मभिशस्ति॒पावा॑ ।**
**अथा॑ व॑ह॒ सोम॑पतिं॒ हरि॑भ्यामाति॒थ्यम॑स्मै चकृमा सु॒दाव्ने॑ ॥३॥**

प्र सु विश्वान् । प्रदह । सुष्ठु । विश्वान्[1] । राक्षसान्[1] । अग्ने ! भव त्वम् । यज्ञानाम्[2] । उपद्रवस्य[3] रक्षकः[4] । ततः । इन्द्रं[5] तदीयाभ्याम् । अश्वाभ्यां सह । आवह[6] । आतिथ्यम्[7] । अस्मा इन्द्राय वयम् । कुर्मः[8] । शोभनदानाय ।

**प्र॒जाव॑ता॒ वच॑सा॒ वह्नि॑रा॒सा च॑ हु॒वे नि च॑ सत्सी॒ह दे॒वैः ।**
**वेषि॑ हो॒त्रमु॒त पो॒त्रं य॑जत्र बो॒धि प्र॑यन्तर्जनित॒र्वसू॑नाम् ॥४॥**

प्रजावता[9] । प्रजननवता[10] प्रादुर्भवता । वचसा[11] । वोढाहम्[12] । आस्येन[13] । आहुवे[14] त्वां त्वं च । निषीद[15] । यज्ञे[16] । देवैः सह । कामयसे[17] । होतृकर्म[18] । पोतृकर्म[19] । च[20] । यष्टव्य[21] ! बुध्यस्व[22] । प्रदातः[23] ! जनयितः[24] ! धनानां दाता भवामीति[25][26] ।

---

१. ०श्वान्त्रक्षान् P.
२. अस्माभिरनुष्ठेयानाम् Sy.
३. हिंसायाः Sy. हिंसितुर्हिंसातो वा Sk.
४. ०क P.
५. सर्वेषां सोमानां पालकम् Sy.
६. अस्मद्यज्ञं प्रापय Sy.
७. अतिथ्यर्हं सत्कारम् Sy.
८. ०नदायः M. शोभनस्य फलस्य दात्रे Sy.
९. प्रजानता M.
१०. ०जनभवता M. यजमानेभ्यो दातव्यापत्यादिफलोपेतेन Sy. प्रजननं प्रजाः । तद्वता । अतिशयवद्देवतागुणोत्पादनशक्तियुक्तेनेत्यर्थः Sk.
११. स्तोत्रेण स्तुतः Sy. आह्वानवाक्येन Sk.
१२. देवेभ्यो हविषां वोढा Sy. प्रत्यक्षकृतोऽयं मन्त्रः । नचेदमामन्त्रणम् । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वं वह्निर्वोढा हविषां बलवान् वा सः Sk.
१३. अस्ये० P. आस्यस्थानीयया ज्वालया Sy. तात्स्थ्यात् ताच्छब्द्यम् । मञ्चाः क्रोशन्तीति यथा । आस्यस्थेन । स्वयमेवोच्चारितेनेत्यर्थः Sk.
१४. हुवे P. M. इवे D. तमग्निम् . . . आह्वयामि Sy. आ च हुवे । व्यत्ययेनायं मध्यमस्य स्थाने उत्तमपुरुषः । आह्वय च देवान् Sk.
१५. इहास्मदीयायां वेद्याम् Sk.
१६. आहूतः Sk.
१७. वेतिर्गत्यर्थः । शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । उपगच्छ Sk.
१८. हौत्रं कुर्वित्यर्थः Sk.
१९. उत पोत्रं पोत्रकर्माणि वा । सर्वकर्माणीत्यर्थः Sk.
२०. Omitted by P. and D.
२१. यष्टर्यष्टव्य वा Sk.
२२. ०स्य P. D. अस्मान् बोधय Sy. चास्मदीयाः स्तुतीरित्यर्थः Sk.
२३. धनानां . . . प्रकर्षेण नियन्तः ! वसून्यस्मदायत्तानि कुर्वन् ! Sy.
२४. आहुतिद्वारा सर्वस्य जनयितरग्ने Sy. उपायान्तरैश्चोत्पादयितः ! Sk.
२५. ०मिति P. ति missing M.
२६. V. Mādhava ignores च

यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः कविभिः कविः सन् ।
एवा होतः सत्यतर त्वमद्याग्ने मन्द्रया जुह्वा यजस्व ॥५॥

यथा विप्रस्य । यथा । मेधाविनः । मनोः प्रजापतेः । हविर्भिः[1] । देवान्[2] । अयजः[3] । कविभ्योऽपि[4] । कविः[5] । सन् । एवम् । होतः![6] अतिशयेन सत्य![7] अद्य[8] । त्वम् । अग्ने! मन्द्रया[9] । ज्वालया[10] देवान्[11] । यजस्वेति[12] ।

## I.77.

कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने गीः ।
यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ इत्कृणोति देवान् ॥१॥

कथा दाशेम । कथम् । अग्नये हविः । दाशेम[13] । का वा । अस्मै । देवैर्जुष्टा[14] कल्याणी । उच्यते[15] शत्रुषु[16] । क्रोधवते । स्तुतिः[17] । यः । अमृतः[18] । मनुष्येषु[19] । देवान् । कृणोति[20] । सत्यवान्[21] । ह्वाता[22] । यष्टृतमः[23] ।

---

१. यज्ञे Sy. मनुष्यस्य Sk.
२. चरुपुरोडाशादिभिः Sy.
३. ०जं M. देवान् । अयजः is omitted by D.
४. मेधाविभिर्ऋत्विभिः सह Sy; Sk.
५. क्रान्तदर्शी सन् Sy.
६. होमनिष्पादक Sy.
७. सत्सु साधो Sy.
८. द्य P.
९. हर्षयित्र्या Sy. मोदयित्र्या Sk.
१०. होमसाधनभूतया स्रुचा Sy. हूयमानत्वाद् जुहूराहुतिरभिप्रेता । तया Sk. ११. हविर्भिः पूजय Sy.
१२. Ms. D. puts the figure ॥७६॥ here to indicate the end of the seventysixth hymn. No such number is given in P. and M.
१३. कथम् । अग्नये । हविः missing M. अग्नेरनुरूपं यज्ञं कर्तुमशक्ता वयमित्यर्थः Sy. ददाम Sk.
१४. देवैः सेवितव्या Sy. अस्य देवस्य प्रिया Sk.
१५. ०न्ते P. तादृशीं स्तुतिमपि कर्तुं न शक्ता इत्यर्थः Sy. अन्यैः स्तोतृभिः Sk.
१६. शत्रुषु । क्रोधवते is omitted by P. and D. तेजस्विनेऽग्नये Sy. स्तोतॄणामुपरि क्रोधवते दीप्तिमते वा Sk. १७. ०ति P. गीः स्तुतिः कथयत भोः स्तोतारः ऋषयो वा । सुखं ज्ञात्वा वयमपि तथा कुर्म इत्यर्थः Sk.
१८. योमृतः P. मरणरहितः Sy.
१९. मरणधर्मस्वस्मासु वर्तमानः सन् देवान्... हविर्भिर्युक्तान्करोत्येव । तादृशायाग्नये कथा दाशेमेति पूर्वेणान्वयः Sy.
२०. यो मनुष्यलोके देवानाह्वयतीत्यर्थः Sk.
२१. यज्ञवान् वा Sy.; Sk.
२२. वा P. देवानामाह्वाता होमनिष्पादको वा Sy.
२३. V. Mādhava ignores इत्

**यो अ॒ध्व॒रेषु॒ शंत॑म ऋ॒तावा॒ होता॒ तमू॒ नमो॑भि॒रा कृ॑णुध्वम् ।**
**अ॒ग्निर्यद्वेर्मर्ता॑य दे॒वान्त्स चा॒ बोधा॑ति॒ मन॑सा यजाति ॥२॥**

यो अध्वरेषु । यः । यज्ञेषु । सुखतमः । ऋतावा[1] । होता भवति[2] । तं यूयम्[3] । नमस्कारैः[4] । आत्माभिमुखं कुरुत । अग्निः[5] । यस्मात्[6] । मनुष्यार्थ[7] देवान्[8] ।.........[9] । सः । चेद् बुध्यते[10] यक्ष्यामीति ततः । बुद्धिपूर्वमेव[11] । यजति[11][12] ।

**स हि क्रतु॒ः स मर्य॒ः स सा॒धुर्मि॒त्रो न भू॒दद्भु॑तस्य र॒थीः ।**
**तं मेधे॑षु प्रथ॒मं दे॑व॒यन्ती॒र्विश॒ उप॑ ब्रुवते दस्ममारीः ॥३॥**

स हि क्रतुः । मः । हि[13] । कर्ता[14] । सः । मारकः[15] । सः । साधयिना[16] । सखा[17] । इव[18] । अभूत्[19] । महतः[20] । नेता[21] । तम्[22] । यज्ञेपु प्रथमम्[23] । देवयन्त्यः[24] । प्रजाः[25] । उपस्तुवन्ति[26] । दर्शनीयम्[27] । गत्यः[28] (?)

---

१. ०तमं मतावा D. सुखतमः। ऋतावा is missing in M. सत्यवान्, यथार्थदर्शीत्यर्थः Sy.
२. देवानामाह्वाता Sy. यज्ञेषु हौत्रं करोतीत्यर्थः Sk.
३. हे मत्पुत्रा ऋत्विजो वा Sk.
४. स्तोत्रैः Sy. अन्नैर्हविर्लक्षणैर्वा Sk.
५. ०ग्निं D. ६. युष्मान् D. यदा Sy.
७. यजमानार्थम् Sy. ८. देवार्थं P.
९. जति P. जाति D. The passage beginning with तं यूयम् and ending with जाति is missing in M. १०. तदानीं सोऽग्निर्यष्टव्यान् सर्वान् देवान् . . . जानाति Sy. यस्माच्च सोऽग्निर्बोधयति च देवान्। किम्? सामर्थ्यात् स्तुतीः। देवान् स्तौतीत्यर्थः Sk.
११. ज्ञात्वा च मनसा नमसा तान् . . . हविर्भिः पूजयति Sy. चित्तेन च यजति। सादरश्च देवान् यजतीत्यर्थः Sk.
१२. V. Mādhava ignores उ
१३. हिशब्दः पदपूरणः Sk.
१४. कर्मणां कर्ता। . . . विश्वस्योपसंहर्ता Sy. प्रज्ञानरूपो वा Sk. १५. मनुष्याकारः Sk.
१६. उत्पादयिता Sy. सानुग्रहचित्तः Sk.
१७. मित्र इव देवताविशेषः। अथवा मित्र इति व्यत्ययेन पुँल्लिङ्गता। मित्रमिव। यथा यद्यस्य मित्रं तत्तस्योपरि साधु। एवं सर्वस्योपरीत्यर्थः Sk. १८. एव D. यथा सखा धनानि प्रापयति तद्वत् Sy.
१९. भ्र P. सखा। इव। अभूत् is missing in M.
२०. अभूतस्यालब्धस्य धनस्य Sy. अद्भुतस्य महतो यज्ञस्य Sk.
२१. रंहयिता प्रापयिता Sy. २२. नेतारं M.
२३. उत्कृष्टम् Sk. २४. देवानात्मन इच्छन्त्यः Sy. देवान् कामयमानाः Sk.
२५. विशो ब्राह्मणादिमनुष्यजातयः Sk.
२६. प्रथममुपब्रुवते स्तुतिभिरुपेत्य प्रधानभूत इति कथयन्ति Sy. उपगत्य ब्रुवते यद् यद् विवक्षितम् Sk. २७. ०य M. उपक्षपयितारं वा तमसां शत्रूणां वा Sk.
२८. गत्यं D. तमग्नि . . . गच्छन्त्यो भजन्त्यः Sy. अर्तेर्वा गत्यर्थस्य आङ्पूर्वस्य वा रातेर्दानार्थस्येदं रूपम्। अभिगन्त्र्यो दात्र्यो वा हविषामित्यर्थः Sk.

**स नो॑ नृ॒णां नृत॑मो रि॒शादा॑ अ॒ग्निर्गिरोऽव॑सा वेतु धी॒तिम् ।**
**तना॑ च॒ ये म॒घवा॑नः॒ शवि॑ष्ठा॒ वाज॑प्रसूता इ॒षय॑न्त॒ मन्म॑ ॥४॥**

**स नो नृणाम्।** सः। अस्माकम्। नेतॄणाम्[1]। वरिष्ठः[2]। रिशतामसिता[3]। अग्निः[4]। स्तुतीः[5]। रक्षणार्थम्[6]। कामयताम्। कर्म[7]। च। धनेन[8]। ये[9] धनवन्तः। अतिशयेन बलिनः[10]। प्रेरितहविष्काः[11]। ऐच्छन्[12] अग्नेः। स्तोत्रं[13] तेषामस्माकमिति।

**ए॒वाग्निर्गोत॑मेभिर्ऋ॒तावा॒ विप्रे॑भिरस्तोष्ट जा॒तवे॑दाः ।**
**स ए॑षु द्यु॒म्नं पी॑पय॒त्स वाजं॒ स पु॒ष्टिं या॑ति॒ जोष॒मा चि॑कि॒त्वान् ॥५॥**

**एवाग्निः।** एव[14]। अग्निः। गोतमैः[15]। सत्यवान्[16]। ब्राह्मणैः[17]। अस्तोष्ट[18]। जातप्रज्ञः[19]। सः[20]। गोतमेषु[21]। अन्नम्[22]। बलं[23] च। वर्धयतु[24]। सः। पोषम्। गमयति[25]। अभिलषितम्[26]। जानन्[27]निति[28]।

---

१. मनुष्याणां मध्ये प्रकृष्टो मनुष्यः। देवा अपि हि मनुष्याकारत्वान्मनुष्या उच्यन्ते Sk. २. अतिशयेन नेता Sy.
३. शत्रूणां ... भक्षयिता Sy. रिशतामसि क्षेप्ता। हिंसतां प्रतिहिंसितेत्यर्थः Sk. ४. ०शि M.
५. ०ति D. अस्माकम् Sy.
६. हविर्लक्षणेनान्नेन Sy. हविर्लक्षणेनान्नेन सह Sk. ७. यागाख्यम् Sk.
८. हविर्लक्षणेन धनेन Sk.
९. यजमानाः Sy. १०. शवतिर्गतिकर्मा। अतिशयेनोपगन्तारः Sk.
११. ०तः ह० M. प्रसूतं प्रेरितं वाजो हविर्लक्षणमन्नं यैस्तादृशा भूत्वा Sy. लिप्सितेनान्नेन प्रेरिताः। अन्नलाभार्थमित्यर्थः Sk. १२. एषयन्ति ऋत्विग्भिः कारयितुमिच्छन्ति। तेषामपि स्तुतिमग्निः कामयतामिति भावः Sy. इषु गतौ। गमयति। उच्चारयतीत्यर्थः Sk.
१३. मननरूपम् Sy. मननं स्तुतिं ये इषयन्ते तेषामपि गिरोऽवसा वेतु धीतिं चेत्येवं तच्छब्दमध्याहृत्य यच्छब्दो निराकाङ्क्षीकर्तव्यः Sk.
१४. एवमस्माभिः Sk.
१५. गौ० M. ऋषिभिः Sy.
१६. यज्ञवान् Sy. १७. मेधाविभिः Sy. १८. ०षु P. स्तुतोऽभूत् Sy.
१९. जातधनः . . . वा Sy. २०. सन् M.
२१. एष्विति षष्ठ्यर्थे सप्तमी Sk.
२२. द्योतमानं सोमम् Sy. द्युम्नमिति धननाम। सोऽग्निरेषामस्माकं धनं वर्धयतु Sk. २३. हविर्लक्षणमन्नम् Sy. स एव वाजमन्नम् Sk. २४. ०यितु P. अपिबत्। यद्वा तानृषीन् अपाययत् Sy.
२५. गमति M. प्राप्नोतु। यद्वाऽस्माकं धनानि पोषं प्रापयतु Sy. ददात्वित्यर्थः Sk. २६. एवं सोमलक्षणं चरुपुरोडाशादिलक्षणं हविश्च स्वीकृत्य सोऽग्निर्जोषमस्माभिः कृतं सेवनम् Sy.
२७. प्रार्थनां जानन्नित्यर्थः Sk.
२८. V. Mādhava ignores आ। Ms. D. puts the figure ॥७७॥ here to indicate the end of the seventyseventh hymn. No such number is given in P. and M.

## I.78.

**अभि त्वा गोतमा गिरा जातवेदो विचर्षणे । द्युम्नैरभि प्र णोनुमः ॥१॥**

अभि त्वा । आभिमुख्येन[1] । प्रकर्षेण[2] । स्तुमः । त्वाम् । गोतमा[3] वयम् । गिरा[4] । जातवेदः[5] ! विद्रष्टः[6] ! अन्नानि[7] । अभिः[8] द्वितीयास्मारकः[9] ।

**तमु त्वा गोतमो गिरा रायस्कामो दुवस्यति । द्युम्नैरभि प्र णोनुमः ॥२॥**

तमु त्वा । तम्[10] । त्वाम्[11] । गोतमः[12] । स्तुत्या । धनकामः । परिचरति[13] । वचनयोरुक्ता[14] संगतिः[15] ।

**तमु त्वा वाजसातममङ्गिरस्वद्धवामहे । द्युम्नैरभि प्र णोनुमः ॥३॥**

तमु त्वा वाजसातमम्[16] । तम् । त्वाम् । अतिशयेनान्नानां[17] दातारम् । अङ्गिरस्वत्[18] । हवामहे[19] ।

**तमु त्वा वृत्रहन्तमं यो दस्यूँरवधूनुषे । द्युम्नैरभि प्र णोनुमः ॥४॥**

तमु त्वा वृत्रहन्तमम् । तम् । एव । त्वाम् । अतिशयेनोपद्रवाणां[20] हन्तारम् । यस्त्वम्[21] । राक्षसान्[22] । अव[23]धूनोषि[24] ।

---

१. अभि० M. अस्तौदिति शेषः Sy.
२. आभिमुख्येन पुनः पुनः स्तुमः Sy. यत्र पौनःपुन्येनोपसर्गाभ्यासस्तत्र तत्सम्बन्धिनः क्रियापदस्याप्यभ्यासो द्रष्टव्यः। अभिप्रणोनुमोऽभिप्रणोनुम इति। . . . सुष्ठु पुनः पुनरभिष्टुम इत्यर्थः Sk.
३. गो० M. अस्य सूक्तस्य द्रष्टा गोतम ऋषिः। ऋषेरेकत्वेऽपि पूजार्थं बहुवचनम् Sy. ४. स्तोत्रलक्षणया वाचा Sy.
५. जातानां वेदितः ! Sy
६. ०दोऽपिद्र० M. विशेषेण सर्वस्य द्रष्टः ! Sy. ७. अन्नार्थम् M. त्वदीयगुणप्रकाशकैर्मन्त्रैः Sy. द्युम्नैर्धनैर्यशोभिरन्नैर्वा हेतुभूतैः । धनादिलाभार्थमित्यर्थः Sk.
८. ०भि M. Omitted by P. and D.
९. ०यस्मा० P. D. ०यमस्मा० M.
१०. य उक्तगुणोऽसि तम् Sk.
११. त्वा P. १२. गौ० M.
१३. स्तौतीत्यर्थः। परस्तु पाद आध्यात्मिकत्वाद् बहुवचनयोगाच्च भिन्नं वाक्यम्। तेन तुल्यार्थत्वेऽप्यपुनरुक्तता Sk.
१४. न च नयो० M
१५. V. Mādhava ignores उ। द्युम्नैः। अभि। प्र। नोनुमः
१६. ०तम P. १७. दातृतमं सुभर्तृतमं वा हविर्लक्षणानामन्नानाम् Sk.
१८. अङ्गिरस्य. . .वत् M. अङ्गिरस इव Sy.
१९. V. Mādhava ignores उ। द्युम्नैः। अभि। प्र। नोनुमः
२०. पाप्मनामतिशयेन हन्तारम् Sy. शत्रूणां हन्तृतमम् Sk.
२१. ०यस्त्वां P.
२२. उपक्षपयितॄन् राक्षसादीन् Sy. अनार्यान् Sk. २३. ०धु० P. अवचालयसि, स्थानात्प्रच्यावयसि Sy.
२४. V. Mādhava ignores द्युम्नैः। अभिः। प्र। नोनुमः

अवो॑चाम॒ रहू॑गणा अ॒ग्नये॒ मधु॑मद्वचः॑ । द्यु॒म्नैर॒भि प्र णो॑नुमः ॥५॥

अवोचाम । उक्तवन्तः । राहूगणपुत्राः[1] । अग्नये[2] । रसवत्[3] । स्तोत्रम्[4] । द्युम्नैश्च[5] । अभि-प्रणोनुमः[6] ।[7]

## I.79.

हिर॑ण्यकेशो॒ रज॑सो वि॒सा॒रेऽहि॒र्धुनि॒र्वात॑इव॒ ध्रजी॑मान् ।
शुचि॑भ्राजा उ॒षसो॒ नवे॑दा॒ यश॑स्वतीरप॒स्युवो॒ न स॒त्याः ॥१॥

हिरण्यकेशः । हिरण्यसदृशरश्मिः[8] । उदकस्य[9] । विसारेऽन्तरिक्षे[10] । आहन्ता[11] । कम्पयिता[12] । वात इव । गमनवान्[13] । निर्मलदीप्तिः[14] । उषसः । अजानन्[15] । अन्नवतीः[16] । कर्मेच्छवः[17] । इव । सत्यभूता[18] यथा कर्मणः कर्तारः फलेन युज्यन्ते ।

---

१. रहू P. D. रहूगणस्य पुत्रा वयं गोतमाः Sy. २. अङ्गनादिगुणयुक्ताय Sy.
३. माधुर्योपेतम् Sy. प्रीतिकरम् Sk.
४. वचनम् Sy. ५. द्योतमानैः स्तोत्रैः Sy.
६. आभिमुख्येन प्रकर्षेण स्तुमः Sy.
७. Ms. D. puts the figure ॥७८॥ here to indicate the end of the seventyeighth hymn. No such number is given in P. and M.
८. हितरमणीयाः केशस्थानीया ज्वाला यस्य स तथोक्तः। सुवर्णवद्रोचमानज्वालो वा Sy. उज्ज्वलवर्णतया हिरण्यसदृशी दीप्तिर्यस्य स हिरण्यकेशोऽग्निः Sk.
९. उदतस्य M. १०. विवासरे D. विसरणे मेघान्निर्गमने निमित्तभूते सति Sy. विगमनकाले। वृष्टिकाले इत्यर्थः Sk.
११. आगत्य हन्ता मेघानाम् Sy. अहिरिति मेघनाम। षष्ठ्यर्थे चैषा प्रथमा। मेघस्य Sk. १२. रंप० P. वृष्टिकाले वैद्युतोऽग्निर्वर्षितेत्यर्थः Sk.
१३. ०वन् P. शीघ्रगतियुक्तः Sy. अत्यन्तशीघ्रगतिरित्यर्थः Sk.
१४. शोभनदीप्तिःसन् मेघाज्जलानि निर्गमयितुं जानाति Sy. १५. ०सो जा० P. D. M. मेघादुदकस्य निःसारणमग्निरेव जानाति, उषसस्तु न जानन्तीत्यर्थः Sy. नवेदाः। मेधाविनामैतत्। व्यत्ययेन चात्रैकवचनम्। मेधाविन्यः Sk.
१६. ०ती D. यशस्वतीः कीर्तिमत्यो हविर्लक्षणेन (धनेन) धनवत्यो वा Sk.
१७. यागकर्मकामाः Sk.
१८. ०तं P. अवितथारम्भा न। एवम्भूताः प्रजा इव। अत्रोषसामज्ञानेनाग्निः प्रशस्यते नतु ता निन्द्यन्ते Sy. अविसंवादिन्यः। . . . अथवा नवेदा इत्येकवचननिर्देशादुपमेयस्याग्नेर्विशेषणं यशस्वतीरित्यादिगुणाः। यथोषसः शुचिभ्राजसस्तद्वन्मेधावी अग्निः शुचिभ्राजाः। इत्येवं मध्यमेऽग्नौ योजना। पार्थिवे तूदकं विसार्यते येन स रजसो विसारो यज्ञः। अहिरित्याङ्पूर्वस्य हि गताविल्यस्य रूपम्। वृष्टिहेतौ यज्ञे पार्थिवोऽग्निराहवनीयात्मनाङ्गभावं गन्तेत्यर्थः। धुनिः कम्पयिता स्वयं भयेन वा कम्पयिता शत्रूणाम् Sk.

आ ते॑ सुप॒र्णा अ॑मिनन्तँ॒ एवैः॑ कृ॒ष्णो नो॑नाव वृष॒भो यदी॒दम् ।
शि॒वाभि॒र्न स्मय॑मानाभि॒राग॒त्पत॑न्ति॒ मिहः॑ स्त॒नय॑न्त्य॒भ्रा ॥२॥

आ ते सुपर्णाः[1]। अग्ने ! तव[2]। रश्मयः[3]। मरुद्भिः सह[4]। प्रक्षिपन्ति[5]। कृष्णवर्णः[6]। मेघश्च। शब्दं[7] करोति। यदि[8] भवत्युदकम्[9] इदमित्युदकनाम[10]। कल्याणीभिः[11]। स्मयमानाभिः। इव स्त्रीभिर्नदीभिः[12] सहाग्निरस्मान् इह। आगच्छति[13]। पतन्ति[14] च। सेक्तारो[15] मरुतः[16]। स्तनयन्ति च। अभ्राणि[17]।

यदी॑मृ॒तस्य॒ पय॑सा॒ पिया॑नो॒ नय॑न्नृ॒तस्य॑ प॒थिभी॒ रजि॑ष्ठैः ।
अ॒र्य॒मा मि॒त्रो वरु॑णः॒ परि॑ज्मा॒ त्वचं॑ पृञ्च॒न्त्युप॑रस्य॒ योनौ॑ ॥३॥

यदीमृतस्य[18]। यदि[19]। एनम्[20]। उदकस्य सारेण[21]। प्रत्यक्षोदकेन[22]। प्यायमानः[23]। नयन्[24]। उदकस्य[25]। [26]

---

१. आस्ते M.

२. ते इति तादर्थ्ये चतुर्थी षष्ठी वा। तवार्थाय तव वा स्वभूतान् रसान् Sk.

३. शोभनपतनाः Sy.

४. गन्तृभिः Sy.
एवैः, अवनैः। गत्वा भुवं ततो रसानाददत इत्यर्थः Sk.

५. समन्तान्मेघं हिंसन्ति। वर्षणार्थं ताडयन्ति Sy.
मर्यादया हिंसन्ति। आददत इत्यर्थः Sk.

६. वर्षिता Sy.

७. भृशम् Sy. गर्जितलक्षणेन शब्देनात्यर्थं पुनः पुनर्वा शब्दयति Sk.

८. यदा Sy. यदिशब्दस्तु पदपूरणो वा। यदिशब्दश्रुतिसामर्थ्याद्वा पूर्वस्मिन् पादे तत इत्यध्याहार्यम्। कृष्णो नोनाव वृषभो यदि ततः सुपर्णा अमिनन्तेति। यदि मेघो वर्षति गर्जति च ततो रसान् रश्मय आददत इत्यर्थः Sk.

९. ईदृशं कर्म तदानीम् Sy.

१०. इति is omitted by P.

११. सुखाभिः Sk.

१२. Omitted by M.
शुभ्रवर्णाभिः फेनयुक्ताभिरद्भिर्विद्युद्भिर्वा Sy. अद्भिस्सह क्रीडमानः Sk.

१३. वैद्युताग्निप्रेरितः पर्जन्य आगच्छति Sy.

१४. दिवः सकाशात् प्रवृष्टा भवन्ति Sy.
अन्तरिक्षे ऽस्मान् वा प्रति Sk.

१५. वृष्टिलक्षणा आपः Sk.

१६. आपः Sy.

१७. अद्भिः पूर्णा मेघाः Sy.

१८. यदायमग्निः Sy.

१९. यद् यदा यस्माद्वा Sk.

२०. ईंशब्दोऽत्रायमित्यस्यार्थे। अयं मध्यमोऽग्निः Sk.

२१. ऋतस्यादित्यस्य Sk.

२२. Omitted by P.
पयोवत्सारभूतेन रसेन Sy.

२३. पयसोदकेन। रश्म्याहृतेनोदकेनेत्यर्थः Sk.

२४. ०प्या० M.
जगदाप्यायनं कुर्वन् Sy.
वर्धमानः Sk.

२५. हेतावयं शतृप्रत्ययः। प्रयोजनस्य च हेतुत्वेन विवक्षा। भुवं प्रति नेतुमित्यर्थः Sk.

२६. द्वितीयार्थे च षष्ठी। वृष्टिलक्षणमुदकम् Sk.

पथिभिः[1]। ऋजुतमैः। अर्यमा। मित्रः। वरुणः। वायुश्च[2]। मेघस्य[3]। योनावुदकनिर्गमनमार्गे[4] स्थिता-
मुदकनिरोध्रीम्। त्वचं[5] रश्मिभिः। संपृञ्चन्त्यग्निना[5][6] सहिता वर्षस्येशत[7] एते देवा इति।

**अग्ने॒ वाज॑स्य॒ गोम॑त॒ ईशा॑नः सहसो यहो।**
**अ॒स्मे धे॑हि जातवेदो॒ महि॒ श्रवः॑ ॥४॥**

अग्ने वाजस्य। अग्ने! अन्नस्य। पशुमतः[8]। ईश्वरः। सहसः[9]। पुत्र! अस्मासु[10]।

---

१. स्नानपानादिभिः Sy. २. परितो गन्ता मरुद्गणश्च Sy. सर्वतोगामी Sk.

३. अन्तरिक्षैकदेशभूते स्थाने। अथवा योनिरित्युदकनाम। ...उदके निमित्ते। उदकार्थमित्यर्थः। यदा यस्माद्वाऽयं मध्यमोऽग्निर्मित्रादयश्च त्वचं पृञ्चन्त्युपरस्य तदा तस्माद्वा शिवाभिर्न स्मयमानाभिरागादित्येवमस्या ऋचः पूर्वस्या उत्तरार्धर्चेनैकवाक्यता। एवमनयोर्ऋचोर्मध्यमेऽग्नौ योजनम्। पार्थिवे तु आ ते सुपर्णा इति सुपर्णशब्दो रश्मिसादृश्यात् सुपतनाद्वा ज्वाला उच्यन्ते। आमिनन्तेत्यपि भक्षणं हिंसाभिप्रेता। कृष्णो नोनाव वृषभो यदीदमिति च यदिशब्दात् पूर्ववत्तत इत्यध्याहार्यम्। यदि कृष्णवर्णो वर्षिता मेघो नोनावेदं जगद् यदि च शिवाभिर्न स्मयमानाभिरागान्मध्यमः यदि च पतन्ति मिहः स्तनयन्त्यभ्राणि ततस्ते तव स्वभूताः सुपर्णाः आ अमिनन्त मर्यादया हिंसन्ति भक्षयन्ति। किम्? सामर्थ्याद् हवींषि। एवैर्हवींषि प्रतिगमनैः। यदि देवो वर्षति ततो मनुष्येषु यजत्सु तव ज्वालाः सर्वतो व्याप्य हवींषि निःसंशयं दहन्तीति समस्तार्थः। योऽहं किं करोमि? उच्यते। यदीमृतस्येत्यादि। यदिति व्यत्ययेन नपुंसकता। यो भवानृतस्य पयसा। ऋतशब्दोऽत्र यज्ञवचनः। यज्ञसम्बन्धिना हविर्लक्षणेनान्नेन पियानो वर्धमानः। नयंश्च हविर्देवान् प्रति। ऋतस्य यज्ञस्य पथिभी रजिष्ठैः। अर्यमा मित्रो वरुणश्च परिज्मा। प्रदर्शनार्थञ्चात्रार्यमादिग्रहणम्। सर्वे च देवा इत्यर्थः। त्वचः पृञ्चन्ति शरीराणि सम्पर्चयन्ति। भवांश्च गृहीतहविष्को देवाश्च परस्परतः सम्पृच्यन्त इत्यर्थः। क्व? उच्यते। उपरस्य योनौ Sk.

४. वृष्ट्युदकोत्पत्तिस्थाने Sy. उपरि वर्तित्वादुपरो देवलोक इहाभिप्रेतः। तस्यैकदेशभूते स्थाने। स्वर्ग इत्यर्थः। यो भवानर्यमादयश्च त्वचं पृञ्चन्त्युपरस्य योनौ तस्य ते सुपर्णा अमिनन्तेत्येवं यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्य पूर्वयर्चैकवाक्यता योज्या Sk.

५. वृष्ट्युदकस्याच्छादकं प्रदेशं स्वकीयैरायुधैः संयोजयन्ति, उद्घाटयन्तीति यावत् Sy. त्वचात्रैकदेशेन कृत्स्नशरीरं लक्ष्यते। पृचिरत्र सामर्थ्याद्वधार्थः। शरीरं घ्नन्तीत्यर्थः Sk. ६. संवृञ्च० P. ०त्य० M. ७. ०स्येवशत P.

८. बहुभिर्गोभिर्युक्तस्य Sy. गोभिः सहितस्य Sk. ९. बलस्य Sy. बलस्य। ...बलेन मथ्यमानोऽग्निर्जायते इति बलस्य पुत्र उच्यते Sk.

१०. अस्मभ्यम् Sk.

धेहि[1]। जातवेदः[2]! महत्। अन्नम्[3]।

**स इधानो वसुष्कविरग्निरीळेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि ॥५॥**

स इधानः। सः[4]। दीप्यमानः। वासयिता[5]। कविः[6]। अग्निः। स्तुत्यः[7]। स्तोत्रेण[8]। धनयुक्तम्[9]। अस्मभ्यम्। दीप्यस्व। बहुज्वालः[10]।

**क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रति ॥६॥**

क्षपो राजन्। क्षपय[11]। राजन्[12]! अग्ने! त्वम्। आत्मनैव[13] रक्षसः। अह्नः[14]। रात्रेः[15][14]। च। स[16] त्वमग्ने। तीक्ष्णदंष्ट्र[17]! रक्षांसि[18]। प्रतिदह[19] यद्वा क्षपाया[20] उपसोऽह्नश्च[21] रक्षांसि प्रतिदहेति[22][23]।

---

१. स्थापय Sy. देहि Sk.

२. ०वेद P.
जातधन! जातानां वेदितर्वाग्ने! Sy.
जातप्रज्ञान! Sk.

३. धनमन्नं वा Sk.

४. य उक्तगुणोऽसि Sk.

५. प्रशस्यो धनवान् वा Sk.

६. सर्वेषां . . . क्रान्तदर्शनो मेधावी वा Sy.
मेधावी Sk.

७. सर्वैः स्तोतृभिः Sk.

८. स्तोत्ररूपया वाचा Sy.

९. धनयुक्तमन्नं यथा भवति तथा। . . अनीकं मुखम्। पुरुभिर्बह्वीभिरनीकस्थानीयाभिर्ज्वालाभिर्युक्ताग्ने! Sy.
धनं च ददात्वित्यर्थः Sk.

१०. As पूर्वणीक is in the vocative so बहुज्वालः should be in the vocative case. I suggest therefore to read बहुज्वाल! पुरु इति बहुनाम। अनीकमिति च लोके खड्गस्य मुखमुच्यते। इह तीक्ष्णाग्रत्वादेस्तत्सादृश्याद् ज्वालोच्यते। बहुखड्गमुखसदृशबहुज्वालसमूह! Sk.

११. ०या P. D.
राक्षसादीन् स्वकीयैः पुरुषैर्बाधस्व Sy.
क्षपेति रात्रिनाम। क्षपायाः Sk.

१२. राजनशील! Sy.
ईश्वर! दीपयितर्वा Sk.

१३. अपिच . . . न केवलमन्यैरेवात्मना च तान् बाधस्व Sy.

१४. कदेति चेदुच्यते। . . . सर्वाण्यहानि . . . अपिच. . . उषःकालोपलक्षिता रात्रीः। अत्यन्तसंयोगे द्वितीया। सर्वेष्वहःसु सर्वासु रात्रिषु चेत्यर्थः Sy.

१५. अहोरा० P. M. १६. सश्च स० P.

१७. तीक्ष्णमुखाग्ने! Sy.
तीक्ष्णदंष्ट्रास्थानीयज्वाल! Sk.

१८. राक्षसानुक्तप्रकारेण क्षपयित्वा Sy.

१९. प्रत्येकं दह। न किञ्चिदृग्धव्यमित्युदास्वेत्यर्थः Sy. प्रतिशब्दस्तूपसर्गो धात्वर्थानुवादी . . . अथवा प्रतिशब्दो लक्षणे कर्मप्रवचनीयः क्षपः वस्तोः उषसः इत्येतैः सम्बन्धयितव्यः। सर्वत्र च द्वितीयार्थे विभक्तिः। क्षपः रात्रीः प्रति। उत वस्तोः अहः प्रति। उतोषसः प्रति। रात्रिषु चाहनि चोषउदयवेलासु च रक्षसो दहेत्यर्थः Sk.

२०. क्षपया D. २१. ०न्नश्च M.

२२. ०हति P.

२३. V. Mādhava ignores उत

**अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासु धीषु वन्द्य ॥७॥**

अवा[1] नो अग्ने। रक्ष। अस्मान्। अग्ने! ऊतिभिः[2]। गायत्रसाम्नः[3]। प्रभर्मणि[4]। सर्वेषु। कर्मसु[5]। स्तुत्यः[6]।

**आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् । विश्वासु पृत्सु दुष्टरम् ॥८॥**

आ नो अग्ने। आभर[7]। अस्मभ्यम्। अग्ने! रयिम्[8]। बहुसहम्[9]। वरणीयम्[10]। सर्वेषु। सङ्ग्रामेषु। तरितुमशक्यम्[11]।

**आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसे ॥९॥**

आ नो अग्ने सुचेतुना। आधेहि[12]। अस्मभ्यम्[13]। अग्ने[14]! शोभनज्ञानेन[15] मनसा[16]। धनम्। सर्वमनुष्याणां पोषकम्[17]। सुखयितृ[18]। जीवनाय[19]।

**प्र पूतास्तिग्मशोचिषे वाचो गोतमाग्नये । भरस्व सुम्नयुर्गिरः ॥१०॥**

प्र पूताः। प्रभरस्व[20]। उग्रतेजसे[21]। शुद्धाः[22]। वाचः[23]। गोतम[24]! अग्नये। सुम्नमिच्छन्[25]।

---

१. अपा M. अवो P.
२. ऊती: M. त्वदीयैः पालनैः Sy.
३. गायत्रीच्छन्दस्कस्य सूक्तस्य वा Sy. गायत्रं नाम सामविशेषः साममात्रं वा गीयमानत्वात् Sk.
४. प्रभरणे सम्पादने निमित्तभूते सति Sy. बिभर्तिर्धारणार्थः। गायत्रं यत्र धार्यते न त्यज्यते। क्रियत इत्यर्थः। स गायत्रस्य प्रभर्मा सोमयागः। तत्र च Sk.
५. दर्शपूर्णमासादिषु Sk.
६. As वन्द्य is in the vocative case, so स्तुत्यः should also be in the vocative. The proper reading should therefore be स्तुत्य !
हे वन्द्य ! Sk. ७. प्रयच्छ Sy. अस्मभ्यं देहीत्यर्थः Sk. ८. धनम् Sy.
९. युगपदेव दारिद्र्यस्य नाशकम् Sy. सदा शत्रूणामभिभवितारम् Sk.
१०. उत्कृष्टम् Sk. ११. ०क्यः P. शत्रुभिः Sy. तरतिर्वधार्थः। दुर्हिंसम्। शत्रुभिर्दुरपहरमित्यर्थः Sk.
१२. आस्थापय Sy. आभिमुख्येन देहि Sk.
१३. अस्माकं जीवसे जीवनाय... युक्तम् Sy.
१४. ०भ्य... मग्ने M.
१५. शोभनेनानुग्रहपरेण Sk. १६. महसा P.
१७. सर्वस्मिन्नायुषि देहादेः पोषकम्। यावज्जीवमस्मदुपभोगपर्याप्तमित्यर्थः Sy. सर्वस्मिन्नायुषि पोषकम्। यावज्जीवं पुष्टिकरमित्यर्थः Sk. १८. मृडीकं सुखम्। तद्धेतुभूतम् Sy. १९. अस्माकम् Sk. २०. प्रकर्षेण सम्पादय Sy. प्रापय। उच्चारयेत्यर्थः Sk.
२१. तीक्ष्णज्वालाय Sy.
२२. निर्दोषाः Sk. २३. ०चौ M.
२४. सूक्तद्रष्टः ! Sy. आत्मन एवेदमन्तरात्मन आमन्त्रणं प्रैषश्च। हे मदीयान्तरात्मन्नित्यर्थः Sk २५. धनम् Sy.

मरणीया[1] वचनीयाः[2]।

**यो नो अग्नेऽभिदासत्यन्ति दूरे पदीष्ट सः। अस्माकमिद्वृधे भव ॥११॥**

यो नो अग्ने[3]। यः। अस्मान्। अग्ने! अभिहिनस्ति[4]। अन्तिके। दूरे वा[5]। नश्यतु[6]। सः। अस्माकम्। एव। भव। वर्धनाय[7]।

**सहस्राक्षो विचर्षणिरग्नी रक्षांसि सेधति। होता गृणीत उक्थ्यः ॥१२॥**

सहस्राक्षः। अनेकज्वालः[8]। विद्रष्टा[9]। अग्निः[10]। रक्षांसि। निरुणद्धि[11]। होता[12]। स्तौति च देवान्[13]। प्रशस्यः[14]।

## I.80.

**इत्था हि सोम इन्मदे ब्रह्मा चकार वर्धनम्।**
**शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम् ॥१॥**

इत्था हि सोमे[15]। इत्थम्[16]। हि[17]। सोमे[18]। मदकरे[19] त्वया पीते सति। ब्राह्मणस्तव[20]। वर्धनं[21]

---

१. ०य M. अग्नेर्गुणान् सम्यगभिदधतीः ... स्तुतीः Sy. स्तुतिरूपाः Sk.
२. पच० M. वमनी० P.
३. M. adds योऽग्ने after अग्ने
४. ०हन० P. उपक्षपयति Sy; Sk.
५. अवस्थितः सन् Sy.
६. नश्विती P. विपद्यतां सः Sk.
७. वृद्धिं कुर्वित्यर्थः Sk.
८. ०लौ P. सहस्राक्षिस्थानीयज्वालः Sk.
९. ०लोऽपि द्र० M. विशेषेण सर्वस्य द्रष्टा Sy.
१०. अग्ने P.
११. यज्ञान्निर्गमयति Sy. सेधतिरत्र सामर्थ्याद्धिंसार्थः। हिनस्ति Sk.
१२. देवानामाह्वाता भूत्वा Sy.
१३. ०स्य M. शस्त्रैरस्माभिः स्तूयमानः Sy.
१४. Ms. D. puts the figure ॥७६॥ here to indicate the end of the seventyninth hymn. No such number is given in P. and M.
१५. हि व सो० M.
१६. इत्थमेवानेन शास्त्रोक्तप्रकारेणैव Sy. अमुना वक्ष्यमाणेन प्रकारेण सत्यो वा Sk.
१७. हिर्यस्मादर्थे Sk.
१८. इत्यम्। हि। सोमे omitted by P.
१९. हर्षकरे Sy. तच्छब्दश्रुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः। सोमे मदकरे उपकल्पिते Sk.
२०. स्तोता Sy. आत्मन एवायमपरोक्षरूपेण प्रथमपुरुषेण निर्देशः। अयं गोतमो नाम ब्राह्मणो होता वा Sk.
२१. वृद्धिकरम् Sy; Sk.

स्तोत्रम्[1]। चकार[2]। बलवत्तम[3]! वज्रिन्! बलेन स्तुतिजनितेन। पृथिव्याः[4]। निःशंसितवानसि[5]। अहिम्[6]—अत्र[7] यास्कः—"अर्चन्यो[8]ऽनूपास्ते[9] स्वा[10]राज्यम्[11]"[12] इति।

**स त्वामदद्वृषा मदः सोमः श्येनाभृतः सुतः।**
**येना वृत्रं निरद्भ्यो जघन्थ वज्रिन्नोजसार्चन्ननु स्वराज्यम् ॥२॥**

स त्वामदत्। सः। त्वा। अमदत्[13]। वृषा[14]। सोमः। मदकरः[15]। श्येनेनाहृतः[16]। येन[17]। वृत्रम्[18]। अन्तरिक्षादपि[19] बलेन। निर्जघन्थ[20]। वज्रिन्! बलेन[21]।

**प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते।**
**इन्द्र नृम्णं हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥३॥**

प्रेह्यभीहि। 'समुच्चयेऽन्यतरस्याम्'[22] इति लोट्[23]। तव। वज्रः। प्रैति[24]। अभ्येति[25]। धर्षयति[26] च।

---

१. P. adds भवति before स्तोत्रम्

२. अनेन सूक्तेन कृतवान् Sy.

३. ०त्तं M. यस्मादिति वचनात्तच्छब्दोऽध्याहार्यः। तस्मात् Sk.

४. ०व्यो P. सकाशात् Sy. पृथिवीत्यन्तरिक्षनाम। अन्तरिक्षात् Sk.

५. ०शाति० P. मा बाधस्वेति शासनं कृत्वा पृथिव्याः सकाशान्निरगमय इत्यर्थः Sy. निर्गमय। भूमौ पातयेत्यर्थः Sk.

६. आगत्य हन्तारं वृत्रम् Sy. मेघम्। वृष्टिमित्यर्थः Sk.

७. अहिमन्त्र M.

८. ०चान्यो M. ०र्मन्यो P.

९. ०पान्ते P. D.

१०. स्वारा० M. स्वा० N. स्वस्य राज्यं राजत्वम् . . . अनुलक्ष्य . . . पूजयन्, स्वस्य स्वामित्वं प्रकटयन्नित्यर्थः Sy.

११. N. 12. 34.

१२. V. Mādhava ignores इत्

१३. अमद P. अमद् M. हर्षं प्रापयत् Sy.

१४. सेचनस्वभावः Sy. वर्षिता Sk.

१५. ०र M. हर्षकारी Sy.

१६. ०नेऽन्नाहृ० M. श्येनरूपमापन्नया पक्ष्याकारया गायत्र्या दिवः सकाशादाहृतः Sy. श्येनरूपया गायत्र्याऽऽभृतः श्येनाभृतः Sk.

१७. हेतावियं तृतीया। येन हेतुना। यं पीत्वा पातुं वेत्यर्थः Sk.

१८. मेघम् Sk.

१९. अद्भ्योऽपामर्थाय Sk.

२०. निज० M. निश्चयेन हंसि हतवान् वा Sk.

२१. V. Mādhava ignores सुतः। अर्चन् etc.

२२. Pāṇ. 3.4.3.

२३. रोट् P.

२४. प्रकर्षेण गच्छ Sy. प्रगच्छ Sk.

२५. एभ्ये० P. अह्ये० M. हन्तव्यान् शत्रूनाभिमुख्येन प्राप्नुहि Sy. प्रगम्य चाभीहि अभिगच्छ Sk.

२६. हर्ष० P. प्राप्य च . . . तान् शत्रूनभिभव Sy. अभिगम्य च धृष्णुहि धर्षय, अभिभव शत्रून् Sk.

न क्वचित्। नियम्यते[1]। तव। वज्र इन्द्रस्यैवानुशासनम्। इन्द्र! नृम्णम्[2]। हि[3]। तव। बलम्[4]—
नून्[5] नमयति। जहि[6]। वृत्रम्। उदकानि[7] च[8]। जय[9]।

निरिन्द्र भूम्या अधि वृत्रं जघन्थ निर्दिवः।
सृजा मरुत्वतीरव जीवधन्या इमा अपोऽर्चन्ननु स्वराज्यम् ॥४॥

निरिन्द्र भूम्याः। द्यावापृथिव्योः[10]। वृत्रम्। निर्जघन्थ[11] स त्वम्। मरुत्वतीः[12]। अपः[13]। अव-
सृज[14]। याभिर्जीवा[15] धन्या[16] भवन्ति[17]।

इन्द्रो वृत्रस्य दोधतः सानुं वज्रेण हीळितः।
अभिक्रम्याव जिघ्नतेऽपः समीय चोदयन्नर्चन्ननु स्वराज्यम् ॥५॥

इन्द्रो वृत्रस्य[18]। इन्द्रः। वृत्रस्य। धून्वतः[19]। समुच्छ्रितं प्रदेशम्[20]। वज्रेण। क्रुद्धः सन्।

---

१. शत्रुभिर्न नियम्यते। अप्रतिहतगतिरित्यर्थः Sy.
केनचिन्निरोद्धुं न शक्यत इत्यर्थः Sk.

२. नृणां पुरुषाणां नामकमभिभावकम् Sy.
यस्मान्नृम्णं शत्रुभूतानामपि मनुष्याणां नमनकरम् Sk. Also see footnote no. 11 on p. 340.

३. ०सन नृम्णमिन्द्रं हि P.
यस्मादेवं तस्मात् Sy.

४. वन् P.

५. नृ० P. M.

६. असुरं मेघं वा Sy.

७. त P. वृत्रं हत्वा तेनावृतमुदकं लभस्वेत्यर्थः Sy.

८. हत्वा च तदन्तर्भूता जया अपः Sk.

९. V. Mādhava ignores अर्चन् etc.

१०. उभयोरपि देवमनुष्ययोरर्थायेत्यर्थः। अथवा भूम्या अधीत्यधिशब्द उपरिभावे। योऽयं भूम्या दिवश्चोपर्यत्यन्तोच्चो मेघस्तं निर्जघन्थेति Sk.

११. निज० M. निःशेषेण हतवानसि Sy.

१२. मरुद्भिः संयुक्ताः Sy. दातृत्वेन मरुतो यासां सन्ति ता मरुत्वत्यः। त्वत्सखायो मरुतो ये दातुं समर्था नान्यः कश्चिदित्यर्थः Sk.

१३. वृष्ट्युदकानि Sy.
वृष्टिलक्षणाः Sk.

१४. अधः पातय Sy.
देहि Sk.

१५. यादिज्जीवा M.

१६. तृप्ताः Sy.
धनमेव धन्यम्। ...सर्वजीवानां धनभूताः। अथवा धन्या इति धिनोतेः प्रीणनार्थस्येदं रूपम्। सर्वजीवानां प्रीणयित्रीः Sk.

१७. V. Mādhava ignores अर्चन् etc.

१८. वृत्रमन्ये M.

१९. धु० M.
भृशं कम्पमानस्य Sy.
क्रुध्यतिकर्मायम्। क्रुध्यतः Sk.

२०. हनुप्रदेशम् Sy.

अभिक्रम्य[1]। आवहति[2]। उदकानि[3]। सरणार्थम्[4]। चोदयन्[5] ........[6]।

अधि सानौ नि जिघ्नते वज्रेण शतपर्वणा ।
मन्दान इन्द्रो अन्धसः सखिभ्यो गातुमिच्छत्यर्चन्ननु स्वराज्यम् ॥६॥

अधि सानौ[7]। समुच्छ्रिते[8] देशे। निहन्ति[9]। वज्रेण। पर्वशतोपेतेन[10]। मोदमानः[11]। इन्द्रः। सोमेन[12]। सखिभ्यः[13]। गमनम्[14]। इच्छत्यात्मानं प्रति[15]।

इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम् ।
यद्ध त्यं मायिनं मृगं तमु त्वं माययावधीरर्चन्ननु स्वराज्यम् ॥७॥

इन्द्र तुभ्यम्। इन्द्र! तव। एव। केनचिदहिंसितम्[16]। वीर्यम्[17]। वज्रिन्! अद्रिराद्[18]-

---

१. आभिमुख्येन गत्वा Sy.

२. ०हन्ति D. M. ०हन् P.
प्रहरति Sy.
हन्ति Sk.

३. वृष्ट्युदकानि Sy.
वृष्टिलक्षणा अपः Sk.

४. निर्गमनाय Sy.
भूमिं प्रति गमनाय चोदयन्। वृष्टिपातार्थमित्यर्थः Sk.

५. समुस्तोता तस्मा इति P. D.
संमस्तोता तस्मा इति M.

६. V. Mādhava ignores अर्चन् etc.

७. सासौ P.

८. समुच्छ्रिते वृत्रस्य कपोलादौ स्थाने नितरां हिनस्ति Sy.
समुच्छ्रितस्य प्रदेशस्य Sk.

९. नियमेन मेघमत्यर्थं हन्ति Sk.

१०. ०शते० P.
शतोपेतेन missing M.
शतसंख्याकधाराभिर्युक्तेन Sy.
अत्यन्तं हतेत्यर्थः Sk.

११. मन्दमानः स्तूयमानः सन् Sy.
तृप्यन्नित्यर्थः Sk.

१२. अन्नस्य Sy.

१३. समानख्यानेभ्यः स्तोतृभ्यः Sy.

१४. मार्गमुपायम् Sy.
भूमिं प्रति गमनमिच्छति। कस्य? सामर्थ्याद् वृष्टिलक्षणानामपाम् Sk.

१५. V. Mādhava ignores अधि। अर्चन् etc.

१६. ०दभिहिं० P. ० त M.
शत्रुभिरतिरस्कृतम् Sy.
अनुत्तमप्रेरितम्। अनभिभूतपूर्वं केनचिदित्यर्थः Sk.

१७. Omitted by P.
सामर्थ्यम् Sy; Sk.

१८. अदि० M.
वाहनरूपमेघयुक्त! Sy.
अद्रयः सोमाभिषवग्रावाणः। तद्वन्! अथवाऽद्रिर्मेघः। तेन हन्तव्येन तद्वन्! मेघानां हन्तरित्यर्थः Sk.

णात्यमित्रानिति वज्र एवोक्तः[1]। यत्[2]। खलु[3]। तम्[4]। मायाविनम्। मृगासुरमपश्यन्[5] (?) तम्[6]।[7] त्वम्। माययैव। हतवान्[8]।[9]

**वि ते वज्रासो अस्थिरन्नवतिं नाव्या३ अनु।**
**महत्त इन्द्र वीर्यं बाह्वोस्ते बलं हितमर्चन्ननु स्वराज्यम् ॥८॥**

वि ते वज्रासः[10]। तव। आयुधानि[11]। व्यतिष्ठन्त[12]। नवतिसंख्याः[13]। नदीः[14]। अनु[15]। महत्[16]। ते। इन्द्र! वीर्यम्। बाह्वोश्च। तव। बलम्[17]। निहितम्[18][19]।

**सहस्रं साकमर्चत परि ष्टोभत विंशतिः।**
**शतैनमन्वनोनवुरिन्द्राय ब्रह्मोद्यतमर्चन्ननु स्वराज्यम् ॥९॥**

सहस्रं साकम्। इन्द्रं सहस्रसंख्याकाः[20]। सह[21]। स्तुत[21]। परिगायत[22]। विंशतिसंख्याकाः[23]।

---

१. वज्रमेवोक्तं P.
२. यतु M. यस्मात् Sy. यद् त्यमिति विलिङ्गावपि समानाधिकरणौ। उभयत्र च तृतीयार्थे द्वितीया। येन तेन Sk. ३. हशब्दश्च पदपूरणः Sk.
४. तं प्रसिद्धं वञ्चयितारम्। लोकोपद्रवकारिणमित्यर्थः Sy.
५. मृगरूपमापन्नम् Sy. मार्गणीयं वा मेघम् Sk.
६. अपश्यन् is not clear.
७. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यमन्ये नाशक्नुवन् हन्तुं तं त्वं स्वया माययावधीः Sk.
८. The passage beginning with तम् मायाविनम् and ending with हतवान् is missing in M.
९. V. Mādhava ignores उ। अर्चन् etc. १०. वि P. D.
११. त्वत्सकाशान्निर्गतान्यायुधानि Sy.
१२. सर्वत्र व्याप्य वर्तमानं वृत्रं हन्तुं तव वज्र एकोऽप्यनेक इवासीदित्यर्थः Sy. विपूर्वस्तिष्ठतिर्गत्यर्थः। अगच्छन् Sk.
१३. ०वत० P. नवतिमसुरपुरः प्रति Sk.
१४. वृत्रेण निरुद्धाः Sy.
१५. नदीनारनु P. उपलक्ष्य Sy. अनुशब्दः...प्रतिशब्देन समानार्थः Sk.
१६. अन्यैरजेयमित्यर्थः Sy. १७. फलं M.
१८. ०तः P. त्वदीयौ बाहू अप्यतिशयेन बलिनावित्यर्थः Sy. स्वबाहुबलेनैव चासि बलवान् न सहायबलेनेत्यर्थः Sk.
१९. V. Mādhava ignores अर्चन् etc.
२०. मनुष्याः Sy.
२१. एनमिन्द्रं युगपदेवापूजयन् Sy. हे मदीयाः पुत्रपौत्रा ऋत्विजो वा Sk.
२२. P. adds च after परिगायत परितः सर्वतोऽस्तौत् Sy. परिष्टुत Sk.
२३. विंशति missing M. षोडशर्त्विजो यजमानः पत्नी च सदस्यः शमिता चेति विंशतिसंख्याकाः। तेषां या विंशतिसंख्या सा Sy. सहस्रविंशतिसंख्याभ्यां चात्र सम्भवी संख्या लक्ष्यते। यावन्तः सम्भवथ तावन्तः स्तुतेत्यर्थः Sk.

शतानि[1] स्तोतॄणाम्। एनमिन्द्रम्[2]। अतिशयेनान्वस्तुवन्। इन्द्राय[3] सर्वम्। स्तोत्रं[4] स्तोतृभिः। उद्यतम्[5][6]।

इन्द्रो॑ वृ॒त्रस्य॒ तवि॑षीं॒ निर॑ह॒न्त्सह॑सा॒ सहः॑।
म॒हत्तद॑स्य॒ पौंस्यं॑ वृ॒त्रं ज॑घ॒न्वाँ अ॑सृज॒दर्च॒न्ननु॑ स्व॒राज्य॑म् ॥१०॥

इन्द्रो वृत्रस्य तविषीम्[7]। इन्द्रः[8]। वृत्रस्य। बलम्[9]। निरहन्[10]। सहसा[11] च। सहो[12] येन सहते[13] परं तत्[14] सहः। महत्। तत्[15]। अस्य। पुंस्त्वम्[16]। वृत्रम्[17]। घ्नन्[18]। प्रकाशितवानिन्द्र[19] इति[20]।

इ॒मे चि॑त्तव॒ म॒न्यवे॒ वेपे॑ते भि॒यसा॑ म॒ही।
यदि॑न्द्र वज्रि॒न्नोज॑सा वृ॒त्रं म॒रुत्वाँ॒ अव॑धी॒रर्च॒न्ननु॑ स्व॒राज्य॑म् ॥११॥

इमे चित्तव। द्यावापृथिव्यौ। तव। क्रोधाय[21]। भयेन। कम्पेते[22]। यत्[23] त्वम्। इन्द्र!

---

१. शतसंख्याका ऋषयः Sy.
२. ०णामिवेन० P.
३. इन्द्रो यः P. D.
यस्माच्च मयापीन्द्राय Sk.
४. हविर्लक्षणमन्नम् Sy.
५. दातुमूर्ध्वं धृतम्। अत एवंविध इन्द्रो वृत्रमहन्नित्यर्थः Sy.
उपकल्पितम्। . . . अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना। सहस्रमिति वसुरोचिषो नाम ऋषय इहाभिप्रेताः। . . . इन्द्रस्तुतिकरत्वाच्च। अर्चत परिष्टोभतेत्येतदपि लङर्थे लोट्। व्यत्ययेन मध्यमपुरुषः। विंशतिरित्यङ्गिरसोऽभिप्रेताः। यद्यपि दशाङ्गिरस इत्यैतिहासिकाः स्मरन्ति तथापि बृहस्पत्यादिभ्रात्रपेक्षया विंशतिसंख्यावचनम्। सहस्रसंख्याका वसुरोचिषः विंशतिसंख्याकाश्चाङ्गिरसः सहेन्द्रमस्तुवन्नित्यर्थः। शतैनमित्यपि वैखानसा नाम ऋषयोऽभिप्रेताः। ते हि प्रसिद्धशतत्वाः। . . . शतसंख्याकाश्च वैखानसा एनमस्तुवन्नित्यर्थः। अन्यैरपि स्तोतृभिरिन्द्राय ब्रह्मोद्यतम् Sk.
६. V. Mādhava ignores अर्चन् etc.
७. तपि० P. ०षी M.
८. महत्तदस्येति तच्छब्दाद्यच्छब्दोऽध्याहार्यः। येनेन्द्रः Sk.
९. सेनालक्षणम् Sk.
१०. स्वकीयेन बलेन Sy.
११. सहनेनाभिभवसाधनेनायुधेन Sy.
बलेन Sk.
१२. सहा P.
अभिभवसाधनं वृत्रायुधं निरहन् Sy.
शरीरबलं च Sk.
१३. ०न्ते D.
१४. Missing in M.
१५. P. adds तु after अस्य
१६. बलम् Sy.
१७. वृत्र M.
१८. हत्वा च तन्निरुद्धा अपोऽसृजत् तस्माद् वृत्रान्निरगमयत् Sy.
१९. सृजति विसृष्टवान् वा। किम्? सामर्थ्याद् वृष्टिलक्षणा अपः Sk.
२०. V. Mādhava ignores अर्चन् etc.
२१. क्रुद्धाय M. त्वदीयकोपात् Sy.
पञ्चम्यर्थे चतुर्थ्येषा। क्रोधाद् भयेनैव कम्पेते। . . . इमे अपि द्यावापृथिव्यौ भवतः क्रुद्धाद् बिभ्यत्यौ कम्पेते। किं पुनरन्ये प्राणिन इत्यर्थः Sk.
२२. कम्प० D.
२३. य P. D. M. यदा Sy; Sk.

वज्रिन् ! बलेन । वृत्रमसुरम्[1] । मरुद्भिः सह । अवधीः[2] ।

**न वेपसा न तन्यतेन्द्रं वृत्रो वि बीभयत् ।**
**अभ्येनं वज्र आयसः सहस्रभृष्टिरायतार्चन्ननु स्वराज्यम् ॥१२॥**

न वेपसा । न । वेपेन[3] । नच । गर्जितशब्देन[4] । इन्द्रम् । वृत्रः । विभीतमकरोत् । वृत्रं तु । वज्रः । इन्द्रविसृष्टः[5] । सहस्रधारः[6] । अभ्यगच्छत्[7] । अयोमयः[8][9] ।

**यद्वृत्रं तव चाशनिं वज्रेण समयोधयः ।**
**अहिमिन्द्र जिघांसतो दिवि ते बद्बधे शवोऽर्चन्ननु स्वराज्यम् ॥१३॥**

यद् वृत्रम्[10] । यत्[11] । वृत्रं वृत्रेण त्वदर्थं[12] विसृष्टाम् । अशनिम् । च । तव । वज्रेण[13] । सहायो-[14]धयस्तदा[15] । अहिम्[16] । हन्तुमिच्छतः । तव[17] । अन्तरिक्षे । बद्धमासीत्[18] । बलं[19] प्रसिद्धमभूदिति[20] ।

**अभिष्टने ते अद्रिवो यत्स्था जगच्च रेजते ।**
**त्वष्टा चित्तव मन्यव इन्द्र वेविज्यते भियार्चन्ननु स्वराज्यम् ॥१४॥**

अभिष्टने[21] ते । सिंहनादे[22] । ते । वज्रिन् ! यत् । स्थावरं तत् । रेजते । जङ्गमम् । च

---

१. पुत्र० M.
२. V. Mādhava ignores अर्चन् etc. तदानीं द्यावापृथिव्यावपि भयेनाकम्पिषातामित्यर्थः Sy.
३. वेपनेह M. स्वकीयेन Sy. वेप इति कर्मनाम। प्रत्युद्गरणादिना Sk.
४. ०ब्दे M. ५. इववि० M.
६. सहस्राश्रिः Sk.
७. हन्तुमाभिमुख्येनागच्छत् Sy. आयतोऽभिगतः प्राप्तः। अभीत इन्द्रो वज्रं क्षिप्तवानेवेत्यर्थः Sk.
८. लोहमयो गमनशीलो वा Sk.
९. V. Mādhava ignores अर्चन् etc. १०. यदा Sy; Sk.
११. यत्। वृत्रं is omitted by P. and D. १२. तव हननार्थम् Sy.
१३. वज्रेणाशनिशक्तिरिहोच्यते। तवेत्येतेन च व्यवहितोऽपि च वज्रो विशेष्यते नाशनिः Sk.
१४. सम्यग्योधितवान्। हतवानित्यर्थः। अथवा तवेत्येतेनाशनिरेव विशेष्यते। अशनिमिति तु तृतीयार्थे द्वितीया। यदा वृत्रं स्वभूतयाशन्या वज्रेण च त्वमेव समयोधय इति Sk.
१५. ०धयन्तस्तदा D. ०यस्तदानीम् M. सम्यक् प्राहार्षीः Sy. १६. अहीं D. आगत्य हन्तारं वृत्रम् Sy. यदेति वचनात्ततः प्रभृति Sk. १७. तेव M.
१८. अनुस्यूतं व्याप्तमासीत् Sy. दिवं यावत्प्रख्याततां गतमित्यर्थः Sk.
१९. नेबलं M. Omitted by P.
२०. V. Mādhava ignores अर्चन् etc.
२१. ०ष्टते P.
२२. स्तनयित्नुशब्दे प्रवृत्ते Sk.

कम्पते[1] । त्वष्टा[2] । च । तव । क्रोधाय[3] । कम्पते । भयेन । अनिन्द्रं सोमम् । आहरन्निति[4][5] ।

नहि नु यादधीमसीन्द्रं को वीर्या परः ।
तस्मिन्नृम्णमुत क्रतुं देवा ओजांसि सं दधुरर्चन्ननु स्वराज्यम् ॥१५॥

नहि नु यात् । नहि वयमितस्ततः[6] । यान्तः[7] । अधिगच्छामो[8] जानीमः । इन्द्रम्[9][10] । कः । वीर्येण[11] । तरतीति[12] । तस्मिन्निन्द्रे । धनम् । अपिच । प्रज्ञानम्[13] । देवाः । बलानि[14] च । सह निहितवन्तः[15] ।

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ।
तस्मिन्ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् ॥१६॥

यामथर्वा[16] । याम्[17] । अथर्वा[18] । मनुश्च । पिता मानवानाम् । दध्यङ्[19] च । धियम्[20] । अतनिपत[21] ।

---

१. भयेन Sk.

२. वज्रनिर्माता Sy. त्वष्टृग्रहणं चात्र सर्वेषां देवानां प्रदर्शनार्थं द्रष्टव्यम् Sk.

३. क्रोधात् ... देवा अपि तव क्रोधाद् भयेनात्यर्थं कम्पन्त इत्यर्थः Sk.

४. ०हरति D.

५. V. Mādhava ignores अर्चन् etc.

६. नहीति निपातो नेत्यनेन समानार्थः Sk.

७. ०तस्तदिता P.

८. यान्तं सर्वत्र व्याप्य वर्तमानमिन्द्रम् Sy. व्यत्ययेनात्र नपुंसकता द्वितीयायाश्च स्थाने प्रथमा। यान्तमिन्द्रं कञ्चिच्छत्रुम् Sk.

९. यतो वयमल्पाः Sy. सर्वशत्रूणामुपरीन्द्रो याता न कश्चिदिन्द्रस्योपरि गन्तुं समर्थ इत्यर्थः। वधार्थो वात्र यातिः। . . . न कञ्चिदिन्द्रस्य हन्तारमधिगच्छाम इत्यर्थः Sk.

१०. जानीन्द्रं P. यस्मादिन्द्रम्। पञ्चम्यर्थे द्वितीयैषा। इन्द्रात् Sk.

११. सामर्थ्येन वर्तमानमिन्द्रं को मनुष्यो जानीयात्। न कोऽपीत्यर्थः Sy.

१२. परस्तादतिदूरे मनुष्यैरनवगाह्ये स्थाने Sy. उत्कृष्टः Sk.

१३. वीर्यकर्म Sy.

१४. मरुदादिसेनालक्षणानि Sk.

१५. V. Mādhava ignores अर्चन् etc.

१६. दध्यङ् प्रत्यक्तो ध्यानमिति वा। प्रत्यक्तमस्मिन्ध्यानमिति वा। अथर्वा व्याख्यातः। मनुर्मननात्। तेषामेष निपातो भवत्यैन्द्र्चामृचि . . . यामथर्वा च। मनुश्च पिता मानवानाम्। दध्यङ् च। धियमतनिषत। तस्मिन् ब्रह्माणि कर्माणि पूर्वेन्द्र उक्थानि च सङ्गच्छन्ताम्। अर्चन्योऽनूपास्ते स्वाराज्यम् N. 12. 34.

१७. यत् Sy.

१८. याम्। अथर्वा is omitted by M. एतत्संज्ञक ऋषिः Sy.

१९. अथर्वणः पुत्र एतत्संज्ञक ऋषिश्च Sy.

२०. यम् P. कर्म Sy. यागाख्यं कर्म Sk.

२१. अकुर्वन् Sy. कृतवन्तः Sk.

तस्मिन्[1] सर्वस्मिन् कर्मणि। पूर्वेषामिव[2] यज्ञेषु। इन्द्रे[3]। स्तोत्रशस्त्राणि[4]। समगच्छन्त[5]। "अर्चन्[6]योऽनूपास्ते[7] स्वराज्यम्[8]"। इति[9]।

इति पञ्चममध्यायं व्याकरोत् प्रथमेऽष्टके।

लोहितस्य कुले जातो माधवो वेङ्कटात्मजः॥[9]

# [ अथ षष्ठोऽध्यायः ]

'इन्द्रो मदाय वावृधे' माधवो व्याचिकीर्षति।
सर्वानुदात्तशब्दानामादावर्थं[10] प्रदर्शयन्॥१॥

भवन्ति सर्वानुदात्ता आदेशा युष्मदस्मदोः।
भवन्ति चेद्वाक्यमध्ये वाम्नौ[11] वो[12] नश्च तेमयौ[13]॥२॥

ऋचां त्वः पोष[14]मित्यादौ त्वशब्दश्च निहन्यते।
चादीनां वाक्यमध्यस्थाश्चवाहस्मादय[15]स्तथा॥३॥

१. तस्मिन्। स्त्रीलिङ्गधीप्रतिनिर्देशार्थत्वाद् व्यत्ययेनात्र पुंल्लिङ्गता। तस्याम् Sk.

२. सर्वेषा० P. D. पूर्वेषामन्येषां वसिष्ठादीनां यज्ञेषु यथा हवींषि स्तोत्राणि चेन्द्रेण संगच्छन्ते तद्वत् Sy. पूर्वकर्मस्विव Sk.

३. ०न्द्र P. D.

४. हविर्लक्षणान्यन्नानि . . . शस्त्ररूपाणि स्तोत्राणि च यानि सन्ति तानि सर्वाणि Sy. हविर्लक्षणान्यन्नानि . . . उक्था स्तोत्राणि च Sk.

५. सङ्गतान्यब्रुवन् Sk.

६. न्ताच्चन्योनूपान्ते P. ०पान्ते D. ०न्ता-च्चान्यो M.

७. स्वा० N. ८. N. 12. 34.

९. Ms. D. puts the figure ॥८०॥ here to indicate the end of the eightieth hymn. No such number is given in P. and M.

१०. ०वर्त्थं D. P. ११. वम्नौ M. The proper reading should be वान्नौ for वाम्नौ।

१२. वानश्च D. P. १३. ते मया M.

१४. RV. X. 71. 11ᵃ. Rāja's reference is incorrect. पोष इत्या० M.

१५. ०श्चवाहाहादय. . . D.P.; ०श्चवाहा-मादयः M.

उदाहरणमेतेषां बाहुल्यान्न प्रदर्श्यते[1] ।
हिरण्यकर्णमित्यस्मान्मणिग्रीवं[2] निहन्यते ॥४॥
लौकिकाः[3] कथयन्त्यर्थान्[4]म्लेच्छैः[5] शब्दैश्च साधुभिः ।
उच्चैः प्रयुञ्जते कांश्चित्पदार्थान्[6]न्यथापरान् ॥५॥
यथा घटश्च रज्जुश्च चार्थौ[7] नीचैः प्रयुज्यते ।
स्थाणुर्वा पुरुषो वेति वार्थश्चैव[8] तथाविधः ॥६॥
अर्थस्वभावात्[9]सर्वेषां शब्दानामुच्चनीचता ।
स्वभावं तं विजानन्ति[10] लौकिका न त्वलौकिकाः ॥७॥

य उदात्ता निपातेषु नूनंह्येवकिलादयः ।
उच्चैः प्रदर्शनीयोऽर्थ[9]स्तेषामिति विनिश्चयः[11] ॥८॥
उदात्तेषूपसर्गेषु तदर्थः[12] प्रस्फुटो भवेत् ।
समस्तेष्वनुदात्तानां नीचैरर्थं[13] प्रदर्शयेत् ॥९॥
विस्पष्टमुक्तमेतच्च प्रागाख्यातार्थनिर्णये[14] ।
हिरण्यकर्णमित्यत्र[15] कारणं तत्र वक्ष्यते[16] ॥१०॥ इति

---

१. प्रदश्यते D. P. M.
२. RV. I. 122. 14[a].
३. लोकिकाः D.
४. ०न्त्यत्थान् D. ०न्त्यत्थीं P.
५. म्लेच्छैरशब्दैः D. म्लेच्छै शब्दैः P.

I should have liked to suggest चासाधुभिः for च साधुभिः but it will make the fifth syllable long. The emendation will therefore be objectionable from the metrical point of view. I therefore propose to read शब्दैरसाधुभिः for शब्दैश्च साधुभिः

६. पदात्र्थान् D. P.
७. चात्र्थौ D. P.
८. वात्र्थ० D. P.
९. अत्र्थ० D. P.
१०. विजानाति P. M.
११. निवश्चयः P.
१२. तदत्र्थः D. P. १३. ०रत्र्थं D. P.
१४. ०तात्र्थ० D.P. प्रख्यातार्थविनिर्णये M.
१५. ०कर्तमि० M. RV. I. 122. 14[a].
१६. तक्ष्यते M.

I.81.

**इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।**
**तमिन्महत्स्वाजिषूतेमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥१॥**

इन्द्रो मदाय[1] । गोतमः—

इन्द्रः[2] । सोमाय[3] । ववृधे[4] । बलाय च । शत्रुहा[5] । मरुद्भिः[6] । तम्[7] । एव । महत्सु । सङ्ग्रामेषु । अपिच । अल्पे सङ्ग्रामे । हवामहे[8] । सः[9] । अस्मान् । युद्धेषु[10] । प्ररक्षतु[11] ।

**असि हि वीर सेन्योऽसि भूरि परादुदिः ।**
**असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥२॥**

असि[12] हि । असि । हि[13] । वीर[14]! सेनार्हः[15] । असि च । भूरेर्धनस्य[16] । परादाता[17] । असि[18] । क्षुद्रस्य[19] । वर्धयिता । यजमानाय[20] । वसु[21] । प्रयच्छसि । सुन्वते[22] । भूरि[23] । च । ते । धनमिति[24] ।

---

१. मादायः M.
२. तमिन्महत्स्विति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । य इन्द्रः Sk.
३. हर्षार्थम् Sy.
४. स्तोत्रशस्त्ररूपाभिः स्तुतिभिः प्रवर्धितो बभूव । स्तुत्या हि देवता प्राप्तबला सती प्रवर्धते Sy.
स्तोमेन स्तुतिभिश्च वर्धते Sk.
५. वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्यासुरस्य वा हन्ता । यद्वाऽऽवरकाणां शत्रूणां हन्ता Sy.
६. यज्ञस्य नेतृभिर्ऋत्विग्भिः Sy.
यष्टृभिर्मनुष्यैः Sk.
७. ताम् P. ८. महाहवे P.
अस्माकं रक्षणायाह्वयामहे Sy.
९. अस्माभिराहूतः Sy. आहूतश्च सन् Sk.
१०. ०क्ष P. D.
११. V. Mādhava ignores ईम्
१२. M. adds तव before असि
१३. यस्मादेवं तस्मात् Sy.
हिशब्दः पदपूरणः Sk.
१४. शत्रुक्षेपणकुशलेन्द्र ! Sy.
१५. सेनारुहः P.
त्वमेकोऽपि सेनासदृशो भवसीत्यर्थः Sy.
स्वामिन्ययमितीदमर्थे यप्रत्ययो द्रष्टव्यः । मरुदादिसेनानां पतिः । अथवा सेन्यशब्दोऽत्र सेव्यवचनः । . . . सेव्यः सर्वस्यासि । न कस्यचित्सेवक इत्यर्थः Sk.
१६. भूमे० M. भूरि प्रभूतं शत्रूणां धनं. . . परादाता, शत्रूणां पराङ्मुखं यथा भवति तथाऽऽदाता Sy. बहुधनस्य Sk.
१७. पराशब्दोऽत्र सु इत्येतस्य स्थाने । . . . सुष्ठु शोभनं वा दातासि । अथवा . . . परादद‍ातिर्विनाशार्थः । बहुनोऽपि शत्रुबलस्य विनाशयितासीत्यर्थः Sk.
१८. ०त्ता P.
१९. अल्पस्यापि तव स्तोतुः Sy.
अल्पस्यापि स्वाश्रितस्य Sk.
२०. यागं कुर्वते Sy.
२१. ०सुं D.
२२. सोमाभिषवं कुर्वते Sy; Sk.
२३. बहुलमक्षयं धनं विद्यते, तस्माद् ददासीति भावः Sy.
२४. प्रभूतधनश्चासीत्यर्थः Sk.

यदुदीरत आजयो धृष्णवे धीयते धना।
युक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥३॥

यदुदीरते। यदा। उत्तिष्ठन्ति[1]। सङ्ग्रामास्तदानीम्[2]। धृष्णवे[3] योद्धे। धनानि[4]। दीयन्ते तुभ्यं हवींषि स त्वम्। योजय[5]। सोमं प्रतिगन्तारौ[6]। स्वाश्वौ योजयित्वा च। कं चन[7]। जहि[8]। कं चन[9]। अर्थे। स्थापय[9] तत्र। अस्मान्[10]। इन्द्र ! धने। स्थापयेति।

क्रत्वा महाँ अनुष्वधं भीम आ वावृधे शवः।
श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसम् ॥४॥

क्रत्वा महान्। कर्मणा[11]। महान्[12]। सोमपानानन्तरम्[12]। भीमः[13]। वर्धयति[14]। बलम्[15]। श्र्यर्थम्[16]। दर्शनीयः[17]। अन्तिकयोरुभयोः[18] पार्श्वस्थयोः[19]। हस्तयोः। आयसम्[20]। आयुधम्।

---

१. ०ति P. D. उद्गच्छन्ति, उत्पद्यन्ते Sy. प्रेरयन्ति उच्चारयन्ति तव स्तुतीरित्यर्थः Sk. २. ०मस्त० P.
आजिशब्दः सङ्ग्रामवचनः। तात्स्थ्याच्चात्र ताच्छब्द्यं द्रष्टव्यम्। मञ्चाः क्रोशन्तीति यथा। सङ्ग्रामस्था योद्धारः Sk.

३. ०वो D. यो धृष्णुर्धर्षयिता शत्रूणां जेता भवति तस्मै।...जयतो धनं भवतीत्यर्थः Sy. अभिभवित्रे च Sk.

४. द्वितीयैकवचनस्यायमाकारादेशः। धनम्। अथवैवमन्यथास्यार्धर्चस्यार्थयोजना। यदोदीरते उदीर्यन्ते उच्चा रयन्त्वित्यर्थः। आजयः। अजेर्गत्यर्थस्येदं रूपम्। त्वां प्रति गन्त्र्यः स्तुतयः। धृष्णवे च तुभ्यं धीयते धना। धिनोतेः प्रीणनार्थस्य रूपम्। धनाऽऽहुतिरिहाभिप्रेता। प्रीणयित्री सोमाहुतिरित्यर्थः Sk.

५. यदेति वचनात्तदेत्यध्याहार्यम्। तदा युक्ष्व स्वरथे नियुङ्क्ष्व Sk.

६. शत्रूणां मदस्य गर्वस्य च्यावयितारौ Sy.

७. कञ्चिद् राजानं तव परिचरणमकुर्वन्तम्।...त्वां परिचरन्तम् Sy.

८. कं चन। जहि omitted by P.

९. अतो जयपराजययोस्त्वमेव कारयितासि Sy. यो हन्तव्यस्तं जहि यस्मै धनं दातव्यं तस्मै धनं देहीत्यर्थः Sk.

१०. अस्मदीयान् राज्ञः Sy.

११. प्रज्ञया वा।...सर्वाधिकः Sy.

१२. स्वधेत्यन्ननाम। स्वधायाम्। विभक्त्यर्थेऽव्ययीभावः। सोमलक्षणस्यान्नस्य पाने सतीत्यर्थः Sy.

१३. शत्रूणां भयङ्करः Sy. १४. आभिमुख्येन प्रावर्धयत् Sy. १५. आत्मीयम् Sy. सोमं पीत्वा बलवान् भवतीत्यर्थः Sk.

१६. श्र्यर्थं P. श्रियं M.

१७. ऋष्वा वीर्येण शरीरेण वा महान् Sk.

१८. उपाक इत्यन्तिकनाम। अत्र तु तात्स्थ्याद् द्यावापृथिव्योर्वर्तते। अन्तिकस्थयोर्द्यावापृथिव्योः। कस्य पुनः द्यावापृथिव्यावन्तिकस्थे। इन्द्रस्य। तथाह्यसौ ते उभे अपि क्षणेनैकेन सञ्चरते। अथवा परस्परस्यान्तिकस्थे द्यावापृथिव्यौ। यावद्धि मक्षिकायाः पत्रं तावद् द्यावापृथिव्योरन्तरमित्युपनिषद्विदः पौराणिकाश्चाचक्षते। तेनोपपन्नमनयोः परस्परान्तिकस्थानत्वम् Sk.

१९. इन्द्रो हि वृष्टचर्थं हस्ताभ्यां वज्रं गृह्णाति। वृष्टचुत्तरकालं हि द्यौर्विमला संपन्नसस्या च पृथिवी श्रीमत्यौ भवतः। अत एतदुच्यते श्रिय ऋष्व उपाकयोरिति Sk.

२०. आया० D. अयोमयम् Sy.

निदधे[1]। हरिवान्[2]। हनूमान्[3]।

**आ प॒प्रौ पार्थि॑वं॒ रजो॑ बद्ब॒धे रो॑च॒ना दि॒वि ।**
**न त्वावाँ॑ इन्द्र॒ कश्च॒न न जा॒तो न ज॑निष्य॒तेऽति॒ विश्वं॑ ववक्षिथ ॥५॥**

आ पप्रौ। आपूरयामास[4]। पार्थिवम्[5]। लोकं[6] कामैः[7]। बबन्ध। दिवि। नक्षत्राणि[8]। न। त्वत्सदृशः। इन्द्र! न। कः। चिदपि[9]। जातः। नापि। जनिष्यते। अतिवहसि[10] स त्वम्[11]। सर्वम्।

**यो अ॒र्यो म॑र्त॒भोज॑नं परा॒ददा॑ति दा॒शुषे॑ ।**
**इन्द्रो॑ अ॒स्मभ्यं॑ शिक्षतु॒ वि भ॑जा॒ भूरि॑ ते॒ वसु॑ भक्षी॒य तव॒ राध॑सः ॥६॥**

यो अर्यो[12] मर्त०[13]। यः। उदारः[14]। मनुष्याणां भोजनमन्नम्[15]। प्रयच्छति। यजमानाय[16] सः[17]। इन्द्रः। अस्मभ्यम्[18]। ददातु[19]। विभजेन्द्र[20]! बहु हि। ते। धनमहम्[21]। तव। धनम्[22] भजेय।

---

१. स्थापयति Sk. २. ०न D. हरिनामकाश्वोपेतः Sy. ३. ०न D. 'शिप्रे हनू नासिके वा' (N. 6. 17.) तद्युक्तः Sy. अथवा ... शिप्राशब्दः शिरस्त्राणवचनः। तद्वान् शिप्री Sk.
४. आपूरयति Sk.
५. पृथिव्याः सम्बन्धि वस्तुजातम् Sy.
६. अन्तरिक्षलोकञ्च Sy. केन? सामर्थ्याद् वृष्टिद्वारेण Sk. ७. काम ... बं० P. स्थापितवान् Sy. बध्नाति Sk.
८. रोचमानानि दीप्तानि नक्षत्राणि Sy. नक्षत्रादीनां हि दिवि व्यवस्थितानां धर्मो मूलम्। स च वृष्टिमूलम्। ... अथवा बद्बधे रोचनेत्यादित्योऽत्र रोचनोऽभिप्रेतः। द्वितीयैकवचनस्यायमाकारादेशः। महत्तमस्तन्वन्तं वृत्रं हत्वा दर्शनार्थं दिवि सूर्यमारोपितवानित्यर्थः Sk. ९. Omitted by D.
१०. अतिशयेन वोढुमिच्छसि। सर्वस्य जगतो निर्वाहको भवसीत्यर्थः Sy. ववक्षियेत्यपि च यद्यपि वक्तेर्वा वहतेर्वा साभ्यासस्य रूपं तथापि ववक्षिथ ववक्षस इति महन्नामसु पाठाद्वचनवहनयोश्चासम्भवाद् अनेकार्थतायाश्च धात्वन्तराणामपि प्रसिद्धत्वाद् ववक्षतिर्महद्भावार्थः। अतीत्य सर्वांस्त्वं महान् भवसीत्यर्थः Sk.
११. स त्वम् is omitted by P.
१२. आर्यो M. १३. मत्तः M.
१४. स्वामी पालयिता Sy. ईश्वरः Sk.
१५. सर्वैर्मनुष्यैरुपभोज्यम् Sy. भोजनमिति धननाम। उपभोग्यशब्दपर्यायो वा। मनुष्योपभोग्यं धनं मनुष्योपभोग्यं वान्नादि Sk.
१६. चरुपुरोडाशादीनि दत्तवते Sy.
१७. Omitted by M.
१८. तादृशमन्नम् Sy. वयमपि दाश्वांस एवेत्यर्थः Sk. १९. दातु M.
२०. अस्मभ्यं दातुं धनम् Sy. स्तोतृभ्यो यष्टृभ्यश्च Sk.
२१. अतस्तव ... धनस्यैकदेशं ... प्राप्नुयाम् Sy. तस्मिंश्च विभागेऽहमपि...भजेय। लभेयेत्यर्थः Sk. २२. तव स्वभूतस्य राधसः। षष्ठीनिर्देशादेकदेशमिति शेषः। विभजमानो मह्यमपि भागं देहीत्यर्थः Sk.

**मदेमदे हि नो ददिर्यूथा गवामृजुक्रतुः ।**
**सं गृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आ भर ॥७॥**

मदेमदे । सोमस्य[1] मदे मदे । हि[2] । अस्मभ्यम् । दाता । गोयूथानाम्[3] । ऋजुकर्मा[4] स त्वम् । पुरूणि[5] । शतानि[6] धनानि[7] । सङ्गृहाण[8] सङ्गृह्य च । उभाभ्यां हस्ताभ्याम् । आभर[9] । वसूनि[10] । धनेन[11] चास्मान्[12] । तीक्ष्णीकुरु[13] ।

**मादयस्व सुते सचा शवसे शूर राधसे ।**
**विद्मा हि त्वा पुरूवसुमुप कामान्त्ससृज्महेऽथा नोऽविता भव ॥८॥**

मादयस्व । मादयस्वास्मान्[14] । सुते[15] सोमे । सहायभूतः[16] । बलेन[17] च । धनेन[18] च । विद्म[19] । हि[20] । त्वाम् । बहुधनमतस्त्वयि[21] । कामानभिलषितान् । उपसृजामः[22] । अथ[23] । अस्माकम् । अविता[24] । भव[25][26] ।

---

१. सोमपानेन हर्षेहर्षे सति Sy. सोमेन मत्तो मत्तस्सन्नित्यर्थः Sk.

२. हिशब्दस्तु पदपूरणः Sk.

३. बह्वीर्गा इत्यर्थः Sk.

४. ०र्म P. ऋजुप्रज्ञो वेन्द्रः Sk.

५. बहूनि Sk.

६. अपरिमितानीत्यर्थः Sy.

७. Omitted by P.

८. ०णां P. अस्मभ्यं दातुम् Sy. परोऽर्धर्चो भिन्नं वाक्यम् । अतो यच्छब्दतच्छब्दावध्याहृत्यैकवाक्यता योज्या । यस्त्वं ददिर्यूथा गवां ससङ्गृभाय सम्यग् गृहाण Sk.

९. प्रयच्छ Sy. देह्यस्मभ्यमित्यर्थः Sk.

१०. हस्तयोः स्थितानि Sy. षष्ठ्यर्थे प्रथमैषा । वसूनां धनानाम् Sk.

११. संस्कृत्य च रायो धनान्याभर Sk.

१२. धनेन चास्मान् missing in M.

१३. The passage beginning with वसूनि and ending with कुरु is omitted by P. निशितबुद्धियुक्तान् कुर्वित्यर्थः Sy. श्यतिः संस्कारार्थः । संस्कुरु । दानयोग्यानि कुर्वित्यर्थः Sk.

१४. तेन सोमेन तृप्तो भव Sy. तृप्यस्व Sk.

१५. सर्वैर्ऋत्विग्भिरभिषुतेऽस्मिन् सोमे । अथवा सचेत्येतन्मादयस्वेत्येतेन सम्बध्यते । सह तृप्यस्व । केन ? सामर्थ्यात् स्वसखैर्मरुद्भिः Sk.

१६. अस्माकम् Sy. १७. बलार्थम् Sy. आत्मनो बलं प्राप्तुमस्मभ्यं च धनं दातुमित्यर्थः Sk.

१८. धनार्थम् Sy. आत्मनो बलं प्राप्तुमस्मभ्यं च धनं दातुमित्यर्थः Sk. १९. विध्म M.

२०. हिशब्दो यस्मादर्थे । यस्मात् Sk.

२१. ०मन्त० M.

२२. ०ताननुप० D. त्वया खल्वेकीकुर्मः Sy. निक्षिपामः । यावत्किञ्चिद्याच्यं तत्सर्वं त्वां याचामह इत्यर्थः Sk.

२३. यतश्चैतदेवमथैतस्मात्कारणात् Sk.

२४. अपिता D. अविना M. अभिलषितफलप्रदानेन रक्षिता Sy.

२५. तैस्तैर्धनैस्तर्पयिता भव । तानि धनानि देहीत्यर्थः Sk.

२६. This stanza is omitted by P.

एते तं इन्द्र जन्तवो विश्वं पुष्यन्ति वार्यम् ।
अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर ॥९॥

एते ते। अमी। तव[१] स्वभूताः। मनुष्याः[२]। विश्वम्। धनम्[३]। पुष्यन्ति[४] त्वम्। हि[५]। अयजमानानाम्[६]। धनम्। ईश्वरः। अन्तः[७] ख्यः[८] अन्तःपूर्वः[९] ख्यातिस्तिरोधानार्थः। तेषाम्[१०]। धनम्। अस्मभ्यम्[११]। आभर[१२]।

I.82.

उपो षु शृणुही गिरो मघवन्मातथाइव ।
यदा नः सूनृतावतः कर आदर्थयास इद्योजा न्विन्द्र ते हरी ॥१॥

उपो षु। उपैव[१३]। शृणुहि। स्तुतीः[१४]। मघवन्[१५]! । मा भूस्त्वम्[१६]। असत्य[१७] इव[१७]। यदा त्वम्।

---

१. साकाङ्क्षत्वात् प्रसादेनेति वाक्यशेषः। तव वा स्वभूताः Sk.

२. यजमानलक्षणाः Sy.

३. सर्वैः सम्भजनीयं हविः Sy. वारीत्युदकनाम। तत्र भवम्। यावत्किञ्चिदुदकभवं तत्सर्वं त्वत्प्रभवया वृष्ट्या पुष्णन्तीत्यर्थः Sk.

४. वर्धयन्ति Sy. ५. हिशब्दो यस्मादर्थे Sk. ६. हविषामदातॄणाम् Sy.

७. मध्ये विद्यमानम् Sy. किञ्चान्तःशब्दोऽत्र तात्स्थ्याद् अन्तस्थे मनसि वर्तते।...ख्य इति चष्टेः पश्यतिकर्मणः ख्यादेशः। यस्मादत्यन्तभक्तं मनोऽन्तःस्थं पश्यसि। भक्ततां जानासीत्यर्थः Sk. ८. पश्यसि हि जानासीत्यर्थः।... अयजमानानाम् Sy.

९. The passage beginning with ते। अमी and ending with अन्तः is missing in M.

१०. यस्मादिति वचनात्तस्मादित्यध्याहार्यम्। तस्मात्तेषामदाशुषां स्वभूतं नोऽस्माकमर्थाय वेदो धनमाभर। अभक्तानां धनमाहृत्य भक्तेभ्योऽस्मभ्यं देहीत्यर्थः Sk.

११. प्रयच्छेति यावत्। अयजमानेषु विद्यमानं धनं यागानुपयुक्तत्वाद् व्यर्थमेव भवेत्। अतस्तस्य धनस्य सार्थकत्वाय तदीयं धनमपहृत्य यजमानेभ्यः प्रयच्छेति तात्पर्यार्थः Sy.

१२. This stanza is omitted by P. V. Mādhava ignores इन्द्र। Ms. D. puts the figure ॥८१॥ here to indicate the end of the eightyfirst hymn. No such number is given in M.

१३. उपगत्य सम्यक् Sy. उपेत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः। उपगम्य Sk.

१४. अस्मदीयाः Sk.

१५. धनवन् Sy.

१६. पूर्वं यथाविधस्त्वं तद्विपरीतो मा भूः। अस्मासु पूर्वं यथानुग्रहबुद्धियुक्तस्तथाविध एव भवेत्यर्थः Sy. तनु विस्तारे। आगमनविषयश्चात्र विस्तारोऽभिप्रेतो नान्यः। मागमनविस्तारं कार्षीः। शीघ्रमागच्छ मा विळम्बिष्ठा इत्यर्थः Sk.

१७. असत्य इव is missing in M. इवशब्दस्तु... पदपूरणः Sk.

अस्मान् । स्तुतिमतः[1] । करोषि । अनन्तरमेव[2] एव त्वं स्तुतीः । प्रार्थयसे[3] । एव[4] तत् तव व्रतं[5] नेदानी-
मतथा इव भूः । योजय[6] । शीघ्रम्[7] । अश्वाविहागमनाय[8] ।

अक्ष॒न्नमी॑मदन्त॒ ह्यव॑ प्रि॒या अ॑धूषत ।
अस्तो॑षत॒ स्वभा॑नवो॒ विप्रा॒ नवि॑ष्ठया म॒ती योजा॒ न्वि॑न्द्र ते॒ हरी॑ ॥२॥

अक्षन्नमीमदन्त । भुक्तवन्तः[9] । तृप्ताश्चासन्[10] भुक्तशिष्टाश्च[11][12] । इषः[13] । अवधूतवन्तः[14] ।
अस्तोषत[15] त्वां च । स्वदीप्तयः[16] । मेधाविनः । नवतरया[17] । स्तुत्या तव स्तोतार[18] इति[19] ।

---

१. स्तुतिमदः P.
स्तुकिमतः M.
प्रियसत्यात्मिका वाक् सूनृता । तया स्तुतिरूपया वाचा युक्तान् Sy.
सूनृतेत्यन्ननाम । अन्नवतः ।... यदास्मभ्यमन्नं दास्यसीत्यर्थः Sk.

२. तदा Sk.

३. ०र्थया P
अस्माभिः प्रयुक्ताः स्तुतीस्त्वमपि स्वीकरोषीत्यर्थः Sy.
इदानीं तु निर्धनानामस्माकं स्तुतीरेव केवलाः शृण्वित्यर्थः Sk.

४. इच्छब्दस्तु पदपूरणः Sk.

५. व्रं P.

६. रथे Sy; Sk.

७. त्वदीयौ Sy.

८. V. Mādhava ignores सु

९. त्वया दत्तान्यन्नानि . . . यजमानाः Sy. वृद्धिश्राद्धान्नम् Sk.

१०. भुक्त्वा च Sy.

११. के ? सामर्थ्यात् पितरः Sk.

१२. भुक्त is omitted by P.

१३. ०श्चैषः M.
स्वकीयास्तनूः ।...अतिशयितरसास्वादनेन वक्तुमशक्नुवन्तः शरीराण्यकम्पयन् Sy.
प्रियाः इष्टाः । कस्य ? सामर्थ्यादस्माकं भवतो वेन्द्रस्य वा Sk.

१४. किम् ? अतितृप्त्या वा स्वगात्रमस्मान् वा । परिचर्यावैगुण्यभयेन सुष्ठ्वाध्माता यत्नेन वास्माभिः परिचरिता इत्यर्थः Sk.

१५. अस्तुवन् Sy. स्तुताश्चास्माभिः Sk.

१६. स्वायत्तदीप्तयः ।. . .अन्यत्पूर्ववद् योज्यम् Sy. अपराश्रयविभूतय इत्यर्थः Sk.

१७. ०रतया D. ०रताया P.

१८. कृतवृद्धिश्राद्धा यागयोग्या इति समस्तार्थः । एतद् ज्ञात्वास्मद्यज्ञमागन्तुं योज । अथवैवमन्यथास्या ऋचोऽर्थयोजना । अक्षन्नमीमदन्त च प्रियास्तव । के ? सामर्थ्यात्त्वदनुचरा मरुदादयः । मादयित्वा अवाधूषत भयेन कम्पितवन्तः शत्रून् । अस्तोषत स्तुताश्चास्माभिः स्वभानवो विप्राश्च । अथवायमात्मन एव परोक्षरूपेण प्रथमपुरुषेण निर्देशः । स्तुवन्तश्च वयं भवन्तमित्यर्थः । स्वभानवो भवत्प्रसादादपराश्रयविभूतयः । विप्राश्च । सानुचरस्य भवतो वयं यागं स्तुतीश्च कृतवन्त इति समस्तार्थः । एतद् ज्ञात्वा स्वगृहं गन्तुं योज Sk.

१९. V. Mādhava ignores हि । योज etc.

सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि ।
प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी ॥३॥

सुसंदृशं त्वा[१]। सुष्ठु स्तोतॄन् संपश्यन्तम्[२]। त्वा । वयम् । मघवन्[३]। स्तुमः[४]। प्रयाहि[५]। क्षिप्रम्[६]।
पूर्णबन्धुरः[७]। स्तुतः स्तोतृभिः[८]। मनुष्यान्[९]। प्रति रथः[१०] पूर्णबन्धुरो भवति स्थित[११] इन्द्र इति[१२]।

स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।
यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥४॥

स घा तम् । सः[१३]। खलु[१४]। तं त्वदीयम्[१५]। रथम् । कामानां वर्षितारम् । पशूनां[१६] लम्भयितारम्[१७]।
अधितिष्ठति[१८]। यः । पात्रम् । हारियोजनाख्यम्[१९]। सोमपूर्णं[२०] तव हरिवतः । प्रज्ञापयति[२१]।[२२]

---

१. सुसंदृशं त्वा is omitted by P.

२. ०श्यन् P.
सुष्ठ्वनुग्रहदृष्ट्या सर्वस्य द्रष्टारम् Sy.
सुखं शोभनो वा यः संदृश्यते स सुसंदृक् । तं सुसंदृशं त्वाम् Sk.

३. ०व P. त्वा । मघवन् । वयम् M.

४. ०मह P.
स्तुतिकर्तारो भूयास्मेत्याशास्यते Sy.

५. अवश्यं प्रतिष्ठस्व Sy.

६. एतद् ज्ञात्वा नूनं निश्चयेन । पदपूरणो वा नूनंशब्दः Sk.

७. स्तोतृभ्यो देयैर्धनैः पूरितेन रथेन युक्तः सन् Sy.
रथस्य सारथिस्थानं बन्धुर उच्यते। तत्पूर्णं यस्य स पूर्णबन्धुरः। मातलिना स्वसारथिनाधिष्ठितरथ इत्यर्थः Sk.

८. अस्माभिर्वन्दिभिः Sy.
अस्माभिः Sk.

९. कामयमानानन्यान्यजमानान् । . . . योजेत्यादि पूर्ववत् Sy.
कान्तान् देशान् प्रति। यत्रेष्टं तत्रेत्यर्थः Sk.

१०. ०थ P.

११. ०ति M

१२. V. Mādhava ignores योज etc.

१३. इन्द्रः Sy.

१४. घेति पदपूरणः। एवार्थे वा Sk.

१५. त्वं M.
तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यस्तवात्मन आरोहणस्तम् Sk.

१६. ०ना M. गवाम् Sy.

१७. लभ० M. सास्नादिमतीनां गवामुदकानां वा लब्धारम् Sk.

१८. ईदृशे रथेऽधितिष्ठतु, आरूढो भवतु Sy.
त्वत्प्रसादात्त्वनुचरभूतः सन् आरोहति Sk.

१९. हरी योजनौ यस्य स हरियोजन इन्द्रः। तद्देवत्यं हारियोजनम् Sk.

२०. धानामिश्रितम् Sy.

२१. ज्ञानेन चात्र तत्पूर्वकं करणं लक्ष्यते ज्ञात्वा करोतीत्यर्थः। त्वमपि च तस्यैव यागेषु गन्तुं योज Sk.

२२. V. Mādhava ignores इन्द्र। योज etc.
तं रथमधितिष्ठेति पूर्वेणान्वयः। अधिष्ठाय च त्वदीयावश्वौ क्षिप्रं योजय Sy.

युक्तस्ते॑ अस्तु॒ दक्षि॑ण उ॒त स॒व्यः श॑तक्रतो ।
तेन॑ जा॒याम॑प॑ प्रि॒यां मन्दा॒नो या॒ह्यन्ध॑सो॒ योजा॒ न्वि॑न्द्र ते॒ हरी॑ ॥५॥

युक्तस्ते[1]। युक्तः। ते। अस्तु। दक्षिणपार्श्वस्थोऽश्वः[2]। अपिच। सव्यपार्श्वस्थः[3]। तेन रथेनेहागतः पीतसोमः सन्[4]। अभिमताम्[5]। इन्द्राणीम्। सोमेन[6]। तृप्यन्[6]। उपगच्छ[7][8]।

यु॒नज्मि॑ ते॒ ब्रह्म॑णा के॒शिना॒ हरी॒ उप॒ प्र या॑हि दधि॒षे गभ॑स्त्योः ।
उत्त्वा॑ सु॒तासो॑ र॒भसा॑ अमन्दिषुः पूष॒ण्वान्व॑ज्रि॒न्त्सम॒ पत्न्या॑मदः ॥६॥

युनज्मि ते। 'उपो षु शृणुहि' इत्यादिना मन्त्रेण[9]। तव। अश्वौ। रथे योजयामि।
प्रशस्तकेशौ[10]। ताभ्यां[11] त्वम् उपप्रयाहि[12]। त्वं हि स हस्तयोः। धारयति[13] धनम्[14]। त्वाम्। सुताः[15]
सोमाः[16]। तीव्राः[17]। उदमन्दिषुः। स त्वं पूष्णा[18]। पत्न्या[19] सह। माद्येति[20][21]।

---

१. Omitted by M.

२. ०स्थोऽश्वापि M.

३. सव्येन दक्षिणेन च हरिणा तद्युक्तेन वा रथेन Sk. ४. तृप्तः Sk.

५. सन्नमभि अभि० P. प्रीणयित्रीम् Sy.

६. सोमलक्षणस्यान्नस्य पानेन ... मत्तस्त्वम् Sy. सोमलक्षणेनान्नेन। मा चिद्विलम्बिष्ठाः Sk.

७. सा यत्र वर्तते तत्र गच्छेत्यर्थः। तदर्थं हे इन्द्र त्वदीयावश्वौ रथे क्षिप्रं योजय Sy.

८. V. Mādhava ignores शतक्रतो। योज etc.

९. स्तुतिलक्षणेन। ... तृतीयानिर्देशात् स्तुवन्निति वाक्यशेषः Sk. RV.I.82.I.[a]

१०. शिखावन्तौ Sy. केशवन्तौ Sk.

११. तता० M. तेन रथेन Sy.

१२. त्वद्गृहम् Sy. स्वगृहम् Sk.

१३. ०सि M. धारयस्व Sy.

१४. ०नः P. अश्वबन्धकान् रश्मीन् Sy. वज्रम्। ... यस्माद्वज्रहस्तोऽसि। वज्रहस्तत्वाच्च न ते कश्चिद् गमनप्रतिबन्धे वर्तितुं शक्नोतीत्यर्थः Sk.

१५. यज्ञे Sy.

१६. वेगवन्तः। ... क्षिप्रं मदकारिण इत्यर्थः Sy. महान्तः Sk.

१७. उत्कृष्टमदयुक्तमकार्षुः Sy. स्त्रीसम्भोगाभिलाषिणं कृतवन्त इत्यर्थः Sk. १८. पूर्णा M. स्वगृहं गत्वा पूषण्वान्। अत्र पूषञ्शब्दः पुष्टौ वर्तते। ... सोमपानजनितया पुष्ट्या युक्तः सन् Sy. पूषन्शब्दोऽत्र पुष्टिवचनः। अस्मदीयैः सोमैरुत्पादितबलः सन्नित्यर्थः Sk.

१९. पत्न्यो M. पत्नीशब्दोऽपि भार्यावचनः। स्वभार्यया Sk. २०. सम्यगेव तृप्तो भव Sy. क्रीडेत्यर्थः Sk.

२१. V. Mādhava ignores वज्रिन्। सम।

Ms. D. puts the figure ॥८२॥ here to indicate the end of the eightysecond hymn. No such number is given in P. and M.

I.83.

**अश्वा॑वति प्रथ॒मो गोषु॑ गच्छति सुप्रा॒वीरि॑न्द्र॒ मर्त्य॒स्तवो॒तिभिः॑ ।**
**तमित्पृ॑णक्षि॒ वसु॑ना॒ भवी॑यसा॒ सिन्धु॒मापो॒ यथा॒भितो॒ विचे॑तसः ॥१॥**

अश्वावति । अश्ववति[1] गृहे[2] । प्रथममेव[3] । गोषु[4] । गच्छति[5] । सुष्ठु प्ररक्ष्यमाणः[6] । इन्द्र ! मर्त्यः । तव । रक्षणैः[7] । तम् । एव त्वम् । पूरयसि । धनेन । बहुतरेण[8] । सिन्धुम् । आपः । यथा । विविधं ज्ञायमाना[9] नानादिभ्यः[10] समागताः । अभितः पूरयन्ति ।

**आपो॒ न दे॒वीरुप॑ यन्ति हो॒त्रिय॑म॒वः प॑श्यन्ति॒ वित॑तं॒ यथा॒ रजः॑ ।**
**प्रा॒चैर्दे॒वासः॒ प्र ण॑यन्ति देव॒युं ब्र॑ह्म॒प्रियं॒ जोषयन्ते व॒राइ॑व ॥२॥**

आपो न । आपः[11] । इव । देव्यः[12] । प्रवणं होत्रियं[13] धिष्ण्यं देवाः[14] स्तोत्रश्रवणार्थम् । उपगच्छन्ति[15] । अधस्तात्[16] । पश्यन्ति[17] । विततम् । यथा । तेजोऽधोमुखं[18] भवति ।

---

१. ०श्वा० M. बहुभिरश्वैर्युक्ते Sy.
२. अन्ने Sk. ३. अग्रयः Sk.
४. प्राप्तव्येषु Sy. ५. सर्वेभ्यो यजमानेभ्यः पूर्वमेव गोमान् भवतीत्यर्थः Sy. प्राप्नोति । अश्वसहितमन्नं गाश्च सर्वं प्रथमं लभत इत्यर्थः Sk.
६. प्रकक्ष्य० P. ०णं M. सुष्ठु प्ररक्षितो भवति Sy. शोभनप्राविता रक्षिता त्वं यस्य स सुप्रावीः Sk.
७. तृतीयानिर्देशात् पाल्यमान इति वाक्यशेषः । यस्त्वयात्मीयैः पालनैः पाल्यत इत्यर्थः Sk. ८. भवितृतमेन वा । शतसहस्रादिसंख्यायुक्तेन Sy.
९. विशिष्टज्ञानहेतुभूताः Sy. विविधप्रज्ञानाः Sk.
१०. नादि० P. नानादिभ्यः is suggested for नानादिभ्यः
११. यथा आपः . . . उपगच्छन्ति Sy. तमित् पृणक्षीति तच्छब्दः पूर्वस्या ऋच इहानुषक्तव्यः । तमेवापो न देवीः यथा एकधानालक्षणा आपः Sk.
१२. द्योतमानाः Sy.
१३. ०त्रि० P. होतुः स्वभूतं चमसम् Sy. होतुः स्वभूतं चमसमुपगच्छन्ति तद्वदुपयन्ति Sk.
१४. देवः P. तद्वदुपरि वर्तमाना देवा एतमेव चमसम् Sy.
१५. सेवार्थमुपगच्छन्ति । के ? सामर्थ्यात्सर्वमनुष्याः । अथवा तमित् पृणक्षीत्यनुषक्तव्यम् । तंशब्द इहार्थात् षष्ठ्यन्तो विपरिणमयितव्यः । आपो नेति नशब्दः . . . पदपूरणः । तस्यैवैकधानालक्षणा आपो होतृचमसमुपगच्छन्ति । स एव सोमेन यजत इत्यर्थः Sk.
१६. अधस्यान् P. अवस्तात् Sy. स्थिताः सर्वमनुष्याः Sk.
१७. होतृचमसेऽस्माकं सोमाभिषवायापः पूरिता इति तेषां दृष्टिरप्यस्मिन् संलग्नाऽभूत् Sy. उपरि वर्तमानम् Sk.
१८. ज्योतिः सूर्यसम्बन्धि यथा निरन्तरमवस्तात् पतति तद्वत् Sy. यथेदमादित्याख्यं विततं ज्योतिः पश्यन्ति तद्वत् । तमेवादित्यसदृशं सर्वमनुष्याः पश्यन्तीत्यर्थः Sk.

प्राचीनं[१] च। प्रणयन्ति[२][३]। देवकामम्। देवाः। स्तोत्रप्रियं[४] मनुष्यं[५] तम्। सेवन्ते[६]।
वरा[७] इव कन्याः।

**अधि द्वयोरदधा उक्थ्यं१ वचो यतस्रुचा मिथुना या सपर्यतः।**
**असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वते ॥३॥**

अधि द्वयोरदधाः[८]। द्यावापृथिव्योः[९]। प्रशस्यम्[१०]। वचः[११]। अध्यदधाः[१२]। यतस्रुचौ[१३]। ये। मिथुन-[१४]

---

१. यद्वा प्राञ्चनैः प्रगमनैरुत्तरवेद्यभिमुखम् Sy. प्रगमनैः Sk.

२. होमकाले Sy.

३. क्व? स्वर्गे वा इष्टेषु वा धनादिषु। स्वर्गं धनानि वा प्रापयन्तीत्यर्थः Sk.

४. ०न्ति कोमन्नेवा स्तो० M. ०त्रप्यप्रि० P. होमार्थे प्रणीतं ब्रह्मप्रियं ब्रह्मणा सोमलक्षणेनान्नेन प्रीतं संतृप्तं पूरितमित्यर्थः Sy.
नित्यं स्तोतारमित्यर्थः Sk.

५. वरं P.

६. सर्वे देवास्तं चमसम् Sy.

७. पुरा D. परा M.
यथा वरा ममेयं भविष्यति, ममेयं भविष्यतीति कन्यकां सेवन्ते, एवं देवा अपि ममायं सोमो ममायं सोम इत्यस्य पार्श्वे वर्तन्त इत्यर्थः . . . यदा तु रात्रिपर्यायेऽस्या विनियोगस्तदा त्वेवं व्याख्येयम्। हे इन्द्र देवा आपो यथा निम्नदेशमुपगच्छन्ति एवं देवास्त्वदीयं स्तोत्रं शुश्रूषमाणा होत्रियं होतृसम्बन्धि धिष्ण्यस्थानमुपगच्छन्ति। उपगत्य चावस्तात्पश्यन्ति विततं ज्योतिरिव। देवयुं देवानात्मन इच्छन्तमेतं शंसितारमागताः सर्वे देवाः प्राचीनं प्रणयन्ति अग्रतो धारयन्ति। ब्रह्मप्रियं स्तोत्रप्रियं त्वां शंसन्तं वराः कन्यका इव सेवन्ते Sy.

८. ०योरूधाः M.

९. हविर्धानयोः Sy.

१०. ०स्यम M. शस्त्रम् Sy.

११. तद्योग्यम् Sy.
तृतीयार्थे चोभयत्र द्वितीया। प्रशस्येन 'विष्णोस्त्रपृस्थे' इत्यादिना मन्त्रेण Sk.

१२. अधिरुपरिभावे। द्वयोरदधाः। शुद्धोऽप्ययं दधातिर्निपूर्वार्थे द्रष्टव्यः। व्यत्ययेन च मध्यमः प्रथमपुरुषस्य। न्यदधात्। कः? सामर्थ्याद् अध्वर्युः। कयोः पुनरुपरि किं वा न्यदधात्? हविर्धानाच्छादनार्थयोश्छदिषोरुपरि तृतीयं छदिः। कुत एतत्? हविर्धानप्रवहणानुवचनस्योपान्ते अस्या ऋचो विनियोगात्। तत्र च हविर्धानाच्छादनार्थानां त्रयाणां छदिषां क्रमेण निधानात्। ...अथवा द्वयोरिति द्वे अत्र हविर्धानस्य ये द्वार्ये स्थूणे ते उच्येते। तयोर्ह्युपरि रराटी निधीयते। ब्राह्मणे च सैव तृतीयाच्छादकत्वात्तृतीयं छदिरुच्यते। ...अथवा अदधा इति इन्द्र एवोच्यते नाध्वर्युः। एवं चार्थयोजना कार्या। अधिशब्दः... पदपूरणः। द्वयोः स्वभूतमदधा आत्मीये च मनसि दधासि। ये वा शृणोषि शृणु चेत्यर्थः। उक्थ्यं प्रशस्यं स्तुतिलक्षणं वचः Sk.

१३. ०तः स्रु० D. ते स्रु० P. ०तध्रुवौ M.
यताः सम्बद्धाः स्रुचो ग्रहचमसादिलक्षणानि पात्राणि ययोस्ते Sy.
यागार्थमुद्यतस्रुचौ Sk.

१४. ०धुन P.
स्त्रीपुंसौ। दम्पती इत्यर्थः Sk.

भूते त्वाम्। पूजयतो[1] यज्ञप्रवर्तनात्[2]। तव[3]। व्रते[4]। शत्रुभिरसंयत्तः[5] सुखमेव। निवसति। पुष्यति[6] च प्रजया पशुभिः। कल्याणं[7] भवति[8]। बलम्। सुन्वते[9]। यजमानाय।

**आदङ्गिराः प्रथमं दधिरे वय इद्धाग्नयः शम्या ये सुकृत्यया।**
**सर्वं पणेः समविन्दन्त भोजनमश्वावन्तं गोमन्तमा पशुं नरः ॥४॥**

आदङ्गिराः। आदधिरे[10]। अङ्गिरसः[11]। प्रथमम्[12]। हविः[13]। समिद्धाग्नयः[14]। कर्मणा[15]। ये। शोभनकरणेन[16] ते। सर्वमेव। असुरात्[17]। भोजनम्[18]। त्वया सहायेन। अविन्दन्त। अश्ववन्तम्[19]। गोमन्तम्। च। पशुसङ्घम्। नेतारोऽङ्गिरसः[20]।

**यज्ञैरथर्वा प्रथमः पथस्तते ततः सूर्यो व्रतपा वेन आजनि।**
**आ गा आजदुशना काव्यः सचा यमस्य जातममृतं यजामहे ॥५॥**

**यज्ञैरथर्वा।** पणिभिरपहृतासु[21] गोषु यज्ञैः[22] कृतैः। अथर्वा[23]। पूर्वम्[24]। मार्गान्[25]। कृतवान्।

---

१. ०वतो M. २. ०र्तमानात् P.
३. स्वभूते। त्वां यजन्नित्यर्थः Sk.
४. त्वदीये कर्मणि Sy. यागाख्ये कर्मणि। सप्तमीनिर्देशाद् वर्तमाना इति शेषः Sk.
५. शत्रुभिः सह युद्धार्थमनभिगतः Sy. विनैव क्लेशेनेत्यर्थः Sk.
६. यस्तव यागं करोति सोऽक्लिश्यन् स्वस्थाने निवसति सर्वपुष्टिभिश्च पुष्यतीत्यर्थः Sk.
७. एतत्सर्वं हविर्धानयोरुक्थ्यस्य वचसोऽधिनिधानेन त्वया कृतमित्यर्थः Sy.
८. शक्तिर्याच्ञाकर्मा। याच्ञाया चात्र तत्पूर्वकं दानं लक्ष्यते। त्वदीयं दानमित्यर्थः Sk. ९. सोमाभिषवं कुर्वते Sk. १०. इन्द्रार्थं सम्पादितवन्तः Sy. दत्तवन्तस्तुभ्यम् Sk.
११. ०सं M. यदा पणिभिर्गावोऽपहृतास्तदानीम्... अङ्गिरसः Sy.
१२. पूर्वमग्रतः Sy.
१३. हविर्लक्षणमन्नम् Sy; Sk.
१४. ०द्धानयः P. समिन्धा अग्नयः M. प्रज्वलिताग्नियुक्ताः सन्तः Sy. प्रज्वलिताहवनीयादिकाः। अङ्गिरसोऽपि त्वां प्रथममिष्टवन्तः किं पुनरन्य ऋषय इत्यर्थः Sk.
१५. शोभनेन यागेनेन्द्रमयजन्निति शेषः Sy. त्वद्यागकर्मणा Sk.
१६. शोभना क्रियाऽनुष्ठानं यस्यास्सा सुकृत्या। ये त्वद्यागकर्मणा शोभनानुष्ठानेन Sk.
१७. ०रान् P. M. एतन्नाम्नोऽसुरस्य सम्बन्धि Sy. १८. भोजयन् P. धनम्।... गवाश्वव्यतिरिक्तमन्यत्पशुजातं च समविन्दन्त Sy. धनम् Sk.
१९. ०र्येन त्वां श्व० M.
२०. मनुष्याः सन्तः Sk. २१. पा० M.
२२. इन्द्रदेवत्यैरनुष्ठितैर्यागैः Sy. इन्द्रदेवत्यैः Sk.
२३. एतत्संज्ञ ऋषिः Sy.
२४. सर्वत उत्कृष्टोऽग्र्यो वा Sk.
२५. गोसम्बन्धिनः।... सर्वेभ्य ऋषिभ्यः पूर्वमेव कृतवान् Sy. प्रज्ञागमनमार्गान् इन्द्रस्यात्मनो वा स्वर्गगमनमार्गान्। ततो विस्तीर्णान् चकार Sk.

ततोऽन्धकारविनाशार्थम् । कर्मणां पालयिता । कान्तः । सूर्यः । प्रादुरभूत् । ततोऽन्धकारे विनष्टे कविपुत्रः । उशनाः । सह सर्वा एव । गाः । आजत् । असुरनियमनार्थम् । प्रादुर्भूतम् । इन्द्रम् । यजामहे ।

**ब॒र्हिर्वा॒ यत्स्व॑प॒त्याय॑ वृ॒ज्यते॒ऽर्को॑ वा॒ श्लोक॑मा॒घोष॑ते दि॒वि ।**
**ग्रावा॒ यत्र॒ वद॑ति का॒रुरु॒क्थ्य॑१॒॑स्तस्येदिन्द्रो॑ अभिपि॒त्वेषु॑ रण्यति ॥६॥**

**बर्हिर्वा यत् ।** यस्मिन् मनुष्ये । शोभनाय कर्मणे । बर्हिः । वा । वृज्यते । होता । वा । स्तुतिशब्दैः । उच्चैर्घोषयति । अन्तरिक्षे तत्र हि वाचमुच्चारयति । यत्र वा । सोमाभिषवकृत् । ग्रावा । प्रशास्यः । शब्दं करोति । तस्य । एव । अभिगमनेषु । इन्द्रः । रमते ।

---

१. ततस्तेभ्य एव यज्ञेभ्यः Sk.
२. प्रकाशकरणद्वारेण Sk.
३. मेधावी कान्तो वा Sk.
४. सूर्यरूप इन्द्रः Sy.
५. गवां प्रदर्शनाय Sy. धर्मायत्तत्वात् कृत्स्नस्य जगत उत्पत्तेर्यज्ञानां च धर्मत्वादिदमुच्यते ततः सूर्यो व्रतपा वेन आजनीति Sk. ६. भृगुः Sy.
७. असुरनिरसनाय सहायोऽभूत् Sy. केन ? सामर्थ्यात् पुत्रैः पौत्रैश्च Sk.
८. आभिमुख्येन प्राप्नोत् Sy. आगतवान् प्राप्तवान् । लब्धवानित्यर्थः Sk.
९. यम इति यज्ञनाम शाकपूणिना पठितम् । षष्ठी चात्र . . . तृतीयार्थे द्रष्टव्या । यज्ञेन यजामह इत्यर्थः Sk.
१०. जन्मवन्तं मरणवर्जितमित्यर्थः । अथवा यमोऽत्रादित्य एव । षष्ठीनिर्देशाच्च सकाशादिति वाक्यशेषः । आदित्यसकाशाज्जातममृतं यजामह इति । इन्द्रो हि वर्षासु रसादानेनानुगृह्यमाणः कर्मात्मनाऽऽदित्याज्जायते Sk.
११. मरणरहितं तमिन्द्रम् Sy.
१२. जयामहे P. १३. V. Mādhava ignores आ । आ १४. यदा Sy.
१५. शोभनापतनहेतुभूताय Sy. यत्स्वपत्यायेति षष्ठ्यर्थे एते प्रथमाचतुर्थ्यौ । बर्हिर्वा यस्य यजमानस्य स्वपत्यस्य Sk. १६. छिद्यते अध्वर्युणा यागार्थमाह्रियते Sy. वृजिरत्र सामर्थ्यात् स्तरणार्थः । स्तीर्यते नित्यम् Sk.
१७. स्तोत्रनिष्पादकः . . . द्योतमाने यज्ञे Sy. स्तोता Sk. १८. ०षाया० P. श्लोकं स्तुतिशब्दं . . श्रावयतीत्यर्थः Sk.
१९. वारमु० M. अत्यन्तमुच्चैः स्तौतीत्यर्थः Sk. २०. ०मो ऽभि० M.
२१. तत्र दृष्टान्तः । कारुरुक्थ्यः । लुप्तोपममेतत् । उक्थ्यस्य शस्त्रस्य शंसिता कारुः स्तोता यथाभिमतशब्दं करोति तद्वत् Sy.
२२. पूर्वोक्तस्य सर्वस्य Sy.
२३. अभिप्राप्तिषु Sy.
२४. यद्वा पूर्वोक्तानां बर्हिरादीनामभिप्राप्तिषु सतीष्विन्द्रो रण्यति, अस्मदीयो यागो भविष्यतीति हर्षशब्दं करोति Sy. तमेवाभिगच्छन्निन्द्रः प्रतीयते नान्यमित्यर्थः Sk.
२५. Ms. D. puts the figure ॥८३॥ here to indicate the end of the eightythird hymn. No such number is given in P. and M.

I.84.

**असावि सोमं इन्द्र ते शविष्ठ धृष्णवा गहि ।**
**आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥१॥**

असावि सोमः। सुतः। सोमः। इन्द्र! तुभ्यम्। बलवत्तम! अभिभवितः![1] आगच्छ।[2] आपूरयतु। त्वाम्। बलम्।[3] अन्तरिक्षम्।[4] इव। सूर्यः। रश्मिभिः।

**इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ।**
**ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ॥२॥**

इन्द्रमित्। इन्द्रम्। अश्वौ। वहतः।[5] अप्रत्यभिभूतबलम्।[6] ऋषीणाम्।[7] च। स्तुतीः।[5] मनुष्याणाम्। च। यज्ञम्।[8] प्रति[9]।

**आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी ।**
**अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ॥३॥**

आ तिष्ठ वृत्रहन्। आतिष्ठ।[10] वृत्रहन्![11] रथम्। युक्तौ।[12] ते। ब्रह्मणा।[13] अश्वौ।[14] तव। मनः। अभिषवग्रावा। घोषशब्देन।[15] अस्मदभिमुखम्। सुष्ठु। करोतु।

---

१. अभवितः M. धृष्णो इति P P. शत्रूणां धर्षयितः! Sy. अभिभवितः शत्रूणाम् Sk.

२. देवयजनदेशम् Sy.

३. सोमपानेनोत्पन्नं प्रभूतं सामर्थ्यम् Sy. इन्द्र एवेन्द्रियः। आपूरयतु त्वामिन्द्रमस्मदीयः सोम इत्यर्थः। अथवा इन्द्रियं वीर्यमुच्यते। सामर्थ्याच्चात्रान्तर्णीतमत्वर्थ इन्द्रियशब्दः। आपूरयतु त्वां वीर्यवदस्मदीयं सोमादिहविरित्यर्थः Sk.

४. बलवन्त० P. पार्थिवलोकमन्तरिक्षम् Sk.

५. न्तः M. समीपं प्रापयतः Sy.

६. केनाप्यप्रतिधर्षितबलम्। अहिंसितबलमित्यर्थः Sy.

७. वसिष्ठादीनाम्। . . . यत्र यत्र स्तुवन्ति यत्र यत्र यजन्ते तत्र सर्वत्रेन्द्रमश्वौ प्रापयत इत्यर्थः Sy.

८. ०तिः P.

९. V. Mādhava ignores इत्

१०. आरोह Sy; Sk.

११. आतिष्ठ। वृत्रहन् is omitted by M. शत्रूणां हन्तः! Sy.

१२. ०क्ता P. रथेऽस्माभिर्योजितौ तस्मात्त्वं रथमातिष्ठ Sy. युक्तेन Sk.

१३. स्तोत्रलक्षणेन मन्त्रेण Sy. तृतीयानिर्देशात् स्तुवद्भिरिति वाक्यशेषः Sk.

१४. णावश्वौ P.

१५. वचनीयेनाभिषवशब्देन Sy. स्वेनाभिषवशब्देन Sk.

इमामिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥४॥

इममिन्द्र। इमम्। इन्द्र! सुतम्[1]। पिब। प्रशस्यम्। अमरणसाधनम्[2]। सोमम्[3]। सोमस्य[4]। धाराः। त्वाम्। अभ्यक्षरन्[5]। यज्ञगृहे[6]।

इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन ।
सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः ॥५॥

इन्द्राय नूनम्। इन्द्राय। क्षिप्रम्[7]। स्तुत[8]। शस्त्राणि[9]। च। ब्रूत[10]। सुताः। सोमा एनम्। अमत्सुः[11]। तमिमं[12] मत्तो[13] ज्येष्ठम्[14]। सहस्वन्तम्[15]। स्तोत्रशस्त्रैर्नमस्यतेति[16][17]।

नकिष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे ।
नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे ॥६॥

नकिष्ट्वत्। न[18] कश्चित्[18]। त्वत्तः। रथीतरो भवति[19]। यदि[20] त्वम्। इन्द्र! अश्वौ। नियच्छसि[21]। न कश्चित्। त्वाम्। अनु[22]। बलेनाभिभवति[23]। न कश्चन।

---

१. सोमम् Sk.
२. सोमपानजन्यो मदो मदान्तरवन्मारको न भवतीत्यर्थः Sy. नित्यमित्यर्थः Sk.
३. मदकरम् Sy; Sk.
४. दीप्तस्यास्य Sy. शुक्राख्यग्रहस्य शुक्लवर्णस्य वा सोमस्य Sk.
५. आभिमुख्येन सञ्चलन्ति त्वां प्राप्नुवन्ति स्वयमेवागच्छन्तीत्यर्थः Sy.
६. गृहे is omitted by P. वेद्याख्ये Sk.
७. नूनम् Sy. नूनमिति पदपूरणः क्षिप्रार्थो वा सामर्थ्यात् Sk. ८. उच्चारयत। याज्यानुवाक्यादिलक्षणाः स्तुतीः Sk.
९. अप्रगीतमन्त्रसाध्यानि स्तोत्राणि Sy.
१०. हे मदीयाः पुत्राः पौत्राश्च ऋत्विजो वा। उक्थानि च ब्रवीतन Sk.
११. आगतमेनमिन्द्रं मत्तं कुर्वन्तु Sy. तर्पितवन्तः Sk. १२. ०मु त० M.
१३. मत्तं D. मत्त M.
१४. प्रशस्यतमम् Sy; Sk.
१५. बलवन्तम् Sk. १६. नमस्कुरुत Sy. नमस्कारैश्च पूजयत Sk.
१७. This stanza is omitted by P.
१८. Sy. explains the first नकिः as नास्ति, second as न ह्यस्ति and the third as simply न
१९. अन्येषामीदृगश्वयुक्तरथाभावात् Sy.
२०. यस्मात् Sy; Sk.
२१. रथे योजयसि Sy. अत्यन्तप्रवृद्धवेगावपि नियच्छसि। निरोद्धुं शक्नोषीत्यर्थः Sk.
२२. अनुलक्ष्य Sy. अनुशब्दोऽत्र ... आधिक्यवचनः Sk.
२३. बलेन सदृशोऽपि . . . न ह्यस्ति Sy. न कश्चित्त्वत्तोऽधिको बलेनेत्यर्थः Sk.

स्वश्वो[1] गच्छन्तम्[1]। व्याप्नोति[2]।

**य एक इद्विदयते वसु मर्ताय दाशुषे। ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥७॥**

य एक इत्[3]। यः। एकः। एव। विविधं[4] प्रयच्छति। धनम्। मर्ताय[5]। दाशुषे[6]। ईश्वरः[7]। शत्रुभिरप्रतिशब्दितः[8]। स इन्द्रः। 'अङ्ग'[9] इति कञ्चन सम्बोधयति[10]।

**कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत्। कदा नः शुश्रवद्गिर इन्द्रो अङ्ग ॥८॥**

कदा मर्तम्[11]। कदा। मनुष्यम्। अनाराधयन्तम्[12]। पादेन। अहिच्छत्रमिवानायासेन[13]। अवस्फु-[14]

---

१. P. D. add न after स्वश्वः
न प्राप। इन्द्रस्य बलाश्वयोरसाधारणत्वादिन्द्रसदृशो बलवानश्ववान् लोके कश्चिदपि नास्तीत्यर्थः Sy.
भवन्तं बलेन व्याप्नोति। सदृशोऽपि न कश्चिद् बलेनास्तीत्यर्थः Sk.

२. This Stanza is omitted by P.

३. दयतिरनेककर्मा... इति दानकर्मा वा विभागकर्मा वा N. 4. 17.

४. The passage beginning with य एक इत् and ending with विविधं is omitted by P.
विशेषेण Sy.

५. ०र्तय P. D.
मनुष्याय यजमानाय Sy.

६. हविर्दत्तवते Sy.

७. सर्वस्य जगतः स्वामी भवति Sy.

८. प्रतिकूलशब्दरहित इत्यर्थः Sy.
स्कु आप्रवणे। आप्रवणमागमनं प्रवतेर्गत्यर्थत्वात्। अन्येनाप्रतिगतोऽप्रतिष्कुतः। युद्धेऽभियुञ्जानोऽन्येनाप्रत्यभियुक्तपूर्व इत्यर्थः Sk.

९. अङ्गेति क्षिप्रनाम Sy.
अङ्गेति तु निपातनात् पदपूरणो वा। क्षिप्रार्थो वा सामर्थ्याद् विदयते इत्येतेन सम्बन्धयितव्यः। क्षिप्रं विदयत इति। यच्छब्दश्रुतेश्चास्या ऋचस्तच्छब्दमध्याहृत्योत्तरयर्चैकवाक्यता योज्या। य इन्द्रो विदयते वसु सः Sk.

१०. This Stanza is missing in M.

११. क्षुम्पमहिच्छत्रकं भवति। यत् क्षुभ्यते... कदा मर्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति। कदा नः श्रोष्यति च गिर इन्द्रो अङ्ग। अङ्गेति क्षिप्रनाम। अञ्चितमेवाञ्चितं भवति N. 5. 16-17.

१२. The passage beginning with कदा मर्तम् and ending with अनाराधयन्तम् is missing in M.
हविर्लक्षणेन राधसा धनेन रहितम्। अयष्टारमित्यर्थः Sy. अधनम्। दारिद्रचात् यष्टुमसमर्थमित्यर्थः Sk.

१३. ०वाराया० M.

१४. वधिष्यति। यथाऽहिच्छत्रं मण्डलाकारेण शयानं कश्चिदनायासेन हन्ति, एवमिन्द्रोऽपि कदाऽस्मच्छत्रून् हनिष्यतीत्यर्थः Sy.
यथा वायुरन्यो वा कश्चित् सर्पच्छत्रकं चालयति तद्वच्चालयति। न कदाचिदपीत्यर्थः। निरादरत्वाद्वैतदनेन प्रकारेणाख्यायते। अधनस्योपर्यत्यन्तनिरादर इन्द्र इत्यर्थः। यत एवमतः सधनत्वात् कृतयागा वयं ब्रूमः Sk.

रति वधकर्मा स्फुरतिः । कदा । नः । शृणोति । गिरः ।

यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति ।
उग्रं तत्पत्यते शव इन्द्रो अङ्ग ॥९॥

यच्चिद्धि त्वा । यत् । चित् । हि । त्वा । बहुभ्यो मनुष्येभ्यः । एकः सुतसोमः । परिचरति ।
तस्य । उद्गूर्णम् । बलं सर्वेषाम् । ईष्टे । स इन्द्र इति । अवगच्छेति ।

स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः ।
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ॥१०॥

स्वादोरित्था । स्वादुरसस्य । इत्थम् । व्याप्तिमतः । सोमस्य । पिबन्ति । गौरवर्णा गावः ।

---

१. अस्माकं यष्टृणाम् Sy. २. श्रोष्यति स्तुतिलक्षणा गिरः।... अथवैवमन्यथास्या ऋचोऽर्थयोजना। कदा मर्तमराधसं हविर्लक्षणेन धनेन रहितमयष्टारमित्यर्थः। पदा क्षुम्पमिव स्फुरत्।... स्फुरतिरिह वधार्थः। यथा कश्चित् क्षुम्पं पादेनाक्रम्य हन्ति तद्वद्धनिष्यति। चूर्णयिष्यतीत्यर्थः। कदा वास्माकं यष्टृणां श्रोष्यति गिर इन्द्रो अङ्गेति। अयष्टॄन् कदा निग्रहीष्यति यष्टॄंश्चास्मान् स्तुतिश्रवणेनानुग्रहीष्यतीत्यर्थः Sk.

३. शृणोति। गिरः is missing in M. स्तुतिलक्षणा वाचः Sy.

४. V. Mādhava ignores इन्द्र। अङ्ग। P. adds (पर्वतेषूपगूढं तदविन्दत्) after गिरः

५. य एव खलु यजमानः Sy. चित् हि इति पदपूरणौ। यो यजमानः Sk.

६. बहुभ्योऽन्येभ्यो यजमानेभ्य आकृष्य। आत्मीयसकाशमानीयेत्यर्थः Sk.

७. मनुष्येभ्य एकः is missing in M.

८. ०तः सो० M. अभिषुतसोमयुक्तः Sy.

९. तस्मै यजमानाय Sy. उग्रं तत्। चतुर्थ्यर्थे प्रथमैषा। तस्मै Sk. १०. बलमिन्द्रः... क्षिप्रं पत्यते पातयति प्रापयति। Sy.

११. इ० M. ऐश्वर्यकर्मायं पठितः। इह तु दानैश्वर्ययोः परस्परेण सम्बन्धादैश्वर्येण दानं प्रतिपद्यते। दानार्थ एव वा सामर्थ्यात् पत्यतिः। ददातीत्यर्थः ।... अथवैवमन्यथा उत्तरस्यार्धर्चस्यार्थयोजना। तदिति षष्ठ्यर्थे प्रथमा। पत्यत इत्यप्यैश्वर्यार्थ एवेदम्। उग्रं तस्य स्वभूतं शवः पत्यते यावतः कस्यचिदीशितव्यं तस्य सर्वस्येष्ट इन्द्रः। व्यत्ययेनेयं सम्बोधनप्रथमास्थानेऽव्यतिरिक्तप्रातिपदिकार्थे प्रथमा। हे इन्द्रेत्यर्थः Sk.

१२. अपगच्छति P. १३. V. Mādhava ignores आ। अङ्ग which is explained as क्षिप्रं by Sy.

१४. मृष्टस्य Sk.

१५. अनेन प्रकारेण सर्वयज्ञेषु Sy. अमुत्र देवलोके Sk. १६. प्रभूतस्येत्यर्थः। अथवा विषुशब्दो वैषम्यपर्यायः। वैषम्यवतः Sk. १७. मधुररसस्य Sy. मध्वो मधुसदृशस्वादुकस्य। सामर्थ्यादुदकस्य। षष्ठीनिर्देशाच्चैकदेशमिति शेषः। द्वितीयार्थे वा सर्वत्र षष्ठी। स्वादु विषुवत् मधुसदृशस्वादु चोदकम् Sk.

१८. पिबन्ति missing M.

१ २ ३ ४ ५ ६ ७ ८
याः । इन्द्रेण । वृष्णा । सहागच्छन्त्यः पीत्वा सोमम् । मदन्ति । शोभार्थ ताः । वसुमत्यः । अन्वासते ।
९
स्वराज्यम् ।

ता अ॒स्य पृश॑ना॒युव॒: सोमं॑ श्रीणन्ति॒ पृश्न॑यः ।
प्रि॒या इन्द्र॑स्य धे॒नवो॒ वज्रं॑ हिन्वन्ति॒ साय॑कं॒ वस्वी॒रनु॑ स्व॒राज्य॑म् ॥११॥

१० ११ १२ १३
**ता अस्य** । ता धेनवः । इन्द्रस्य । स्पर्शनकामाः स्वपयसा । सोमम् । श्रीणन्ति । गावः ।
१४ १५ १६
प्रियाः । इन्द्रस्य । धेनवः । शत्रूणामन्तकरम् । आयुधं च । प्रेरयन्ति ।

ता अ॒स्य॒ नम॑सा॒ सह॑: सप॒र्यन्ति॒ प्रचे॑तसः ।
व्र॒तान्य॑स्य सश्चिरे पु॒रूणि॑ पू॒र्वचि॑त्तये॒ वस्वी॒रनु॑ स्व॒राज्य॑म् ॥१२॥

१७ १८ १९ २० २१ २२
**ता अस्य नमसा** । ताः । अस्य । अन्नेन । बलम् । परिचरन्ति । प्रचेतसः । व्रतानि च । अस्य ।

---

१. या इत्येतत् पिबन्तीत्येतेन सम्बध्यते। कुत एतत्? उत्तरस्यामृचि धेनुशब्देन प्रत्यवमर्शनात्। या गावः पिबन्ति Sk.

२. इन्द्रे P. ३. कामाभिवर्षकेण Sy. वर्षित्रा Sk. ४. सह ग० P. यत्र यत्रेन्द्रो गच्छति तत्र तत्र तस्य पश्चाद् गन्त्र्यः Sk. ५. हृष्टा भवन्ति। ता इन्द्रपीतस्य सोमस्य शेषं पिबन्तीत्यर्थः Sy.

६. ०मनार्थं P. ७. ०त्र्यः D. पयः-प्रदानेन निवासकारिण्यस्ता गावः Sy.

८. तदनुलक्ष्यावस्थिता इति शेषः Sy. अनु स्वराज्यं स्वराज्यं प्रति। यत्र यत्र देश इन्द्रस्याधिपत्यं तत्र सर्वत्रेत्यर्थः। यच्छब्दश्रुतेरस्या ऋच उत्तरयर्चैक-वाक्यता। या गौरवर्णा गावोऽमुत्र देवलोके यत्र चेन्द्रस्याधिपत्यं तत्र सर्वत्र पिबन्ति मदन्ति च Sk.

९. स्वा० M. स्वस्य स्वकीयस्येन्द्रस्य यद्राज्यं राजत्वम् Sy.

१०. अमृतरूपरसवचनः। युवशब्दोऽपि तद्व-दर्थे। अमृतरूपपयोलक्षणरसवत्यः Sk.

११. इन्द्रेण पातव्यम् Sy.

१२. मिश्रीकुर्वन्ति।...नानावर्णाः Sy.

१३. पृश्निशब्दो वर्णविशेषवचनः। पुर-स्ताच्च गौर्य इति वर्णोपादानाद् इहा-न्तर्णीतण्यर्थो द्रष्टव्यः। गौरवर्णाः Sk.

१४. दुह्यन्ते या गावस्ता धेनव उच्यन्ते Sk.

१५. प्रेक्ष्यन्ति M. शत्रुषु।... इन्द्रो यथा शत्रुषु वज्रं प्रेरयति तथेन्द्रस्य मदमुत्पा-दयन्तीत्यर्थः Sy. हिन्वतिर्वृद्ध्यर्थः।... वर्धयन्ति Sk. १६. This stanza is omitted by P. and D. V. Mādhava ignores वस्वीः etc. १७. इन्द्रस्य Sy; Sk.

१८. स्वकीयेन पयोरूपेणान्नेन Sy. पयोलक्षणेनान्नेन Sk.

१९. सेनालक्षणम् Sk.

२०. सेनामप्यस्य पयः पाययन्तीत्यर्थः Sk.

२१. प्रकृष्टज्ञानास्ता गावः Sy. इन्द्रस्य गवां वेदं विशेषणम्। प्रवृद्धप्रज्ञानस्येन्द्रस्य प्रवृद्धप्रज्ञाना वा गावः Sk.

२२. शत्रुवधादिरूपाणि वीर्यकर्माणि Sy.

वृत्रवधादीनि बहूनि । अभ्यगच्छन्[1] । पूर्वमेव[2] ज्ञातुम्[3] ।

**इन्द्रो॑ द॒धी॒चो अ॒स्थभि॑र्वृ॒त्राण्यप्र॑तिष्कुतः । ज॒घान॑ नव॒तीर्नव॑ ॥१३॥**

**इन्द्रो दधीचः ।** इन्द्रः । दधीच ऋषेः । अस्थिभिः[4] । जघान । नवतीः[5] । नव[5] च । असुरान्[6] । अप्रतिकुतः[7] ।

**इ॒च्छन्नश्व॑स्य॒ यच्छिरः॒ पर्व॑ते॒ष्वप॑श्रितम् । तद्वि॑दच्छर्य॒णाव॑ति ॥१४॥**

**इच्छन्नश्वस्य ।** अन्विच्छन्नभवत् । यत्[8] । अश्वस्य । शिरः[8] । पर्वतेषु[9] । अवगूढम्[10] । तत्[11] । अविन्दत्[12] । शर्यणावति[13] सरसि[14] ।

---

१. सिषेविरे ज्ञायन्ते इत्यर्थः Sy. गच्छन्ति प्राप्नुवन्ति । कुर्वन्तीत्यर्थः Sk.

२. ०त M. युयुत्सूनां शत्रूणां पूर्वमेव प्रज्ञापनाय । अनेन युध्यमाना वृत्रादयः सर्वे मरणं प्राप्ताः किमर्थं भवद्भिः प्राणास्त्यज्यन्त इति तेषां बोधनायेत्यर्थः । अन्यत्पूर्ववत् Sy.
पूर्वा प्रथमात्यन्तोत्कृष्टा चित्तिर्ज्ञानं यस्य स पूर्वचित्तिः । षष्ठ्यर्थे चात्र चतुर्थी । अत्यन्तोत्कृष्टज्ञानस्येन्द्रस्येत्यर्थः । कर्माणि वृत्रवधादीनि यानीन्द्रस्य तान्यपि तस्य सहायभूता गावः कुर्वन्तीत्यर्थः Sk.

३. V. Mādhava ignores वस्वीः etc.

४. अश्वशिरःसम्बन्धिभिः Sy.

५. नवसंख्याका नवतीर्दशोत्तराष्टशतसंख्याकाः । तथा हि । लोकत्रयवर्तिनो देवाञ्जेतुमादावासुरी माया त्रिधा सम्पद्यते । त्रिविधा अतीतानागतवर्तमानकालभेदेन तत्कालवर्तिनो देवाञ्जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति । एवं नव सम्पद्यते । पुनरप्युत्साहादिशक्तित्रयरूपेण त्रैगुण्ये सति सप्तविंशतिः सम्पद्यते । पुनः सात्त्विकादिगुणत्रयभेदेन त्रैगुण्ये सत्येकोत्तराशीतिः सम्पद्यते । एवं चतुर्भिस्त्रिकैर्गुणिताया मायाया दशसु दिक्षु प्रत्येकमवस्थाने सति नव नवतयः सम्पद्यन्ते Sy.
दशोत्तराण्यष्टौ शतानीत्यर्थः Sk.

६. एवंविधमायारूपाणि वृत्राण्यावरकाण्यसुरजातानि Sy.
शत्रूनसुरान् Sk.

७. परैरप्रतिशब्दितः । प्रतिकूलशब्दरहितः Sy. अप्रतिगतः । केनचिदप्रतियोध्यमान इत्यर्थः Sk.

८. अश्वसम्बन्धि दधीचो यच्छिरः Sy.

९. पर्ववत्सु गिरिषु Sy.

१०. ०षूपगू० P.
अपगत्य स्थितम् Sy.
इन्द्रभयादश्विभ्यां स्थापितमित्यर्थः Sk.

११. शिरः Sy.

१२. अज्ञासीत् । ज्ञात्वा तदाहृत्य तदीयैरस्थिभिर्वृत्राणि जघानेति पूर्वस्यामृचि सम्बन्धः Sy.
पदरूपं ज्ञातवान् । लब्धवान् Sk.

१३. शर्वणा० P.

१४. पर्वते Sk.

अत्र शाट्यायनकम्[1]—दध्यङ् ह वा आथर्वणस्तेजस्वी ब्रह्मवर्चस्यास। तं ह स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदैव विशीर्षाणः शेरते। स ह स्वर्गं लोकमुच्चक्राम। स हेन्द्रोऽसुरैरभिबाढ उवाच—क्व नु स दध्यङ्भवदिति। तस्मै होचुः—स्वर्गं वै भगवः स लोकमुदक्रामदिति। स होवाच नह्यस्येह किञ्चित् परिशिष्टमस्तीति। तस्मै होचुरासीदेतदाश्वं शीर्षं येनाश्विभ्यां देववेदं प्राब्रवीत्। तत्तु न विद्म यत्राभवदिति। तद्वा अन्विच्छतेति। तद्वान्वैषिषुः। इच्छन्नश्वस्येत्यादिकमुक्त्वाह। शर्यणावद्ध नाम कुरुक्षेत्रस्य जघनार्धे सरः स्कन्दते। तदनुविद्याजह्रुः। तदस्मै प्रायच्छन्। तद्ध स्मासुराणां प्रकाशेऽधारयन्। तद्ध स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदैव विशीर्षाणः शेरते। स ह तैरेवास्थिभिर्नव नवतीर्जघानासुराणामिति[2]।

**अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे ॥१५॥**

**अत्राह।** अत्र यास्कः—

"अथाप्यस्यैको[3] रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यम्। आदित्यतोऽस्य दीप्तिर्भवतीति। '**सुषुम्णः[4] सूर्यरश्मिश्चन्द्रमा गन्धर्वः**[5]' इत्यपि निगमो भवति। सोऽपि गौरुच्यते[6]। '**अत्राह गोरमन्वत**[7]' इति।

"अत्र[8] ह गोः[9] सममंसतादित्यरश्मयः[10] स्वं[11] नाम[12]। अपीच्यमपचितमपगतमपिहितमन्तर्हितं[13][14][15] वा। अमुत्र चन्द्रमसो गृहे[16]" इति।

अत्र[17]। चन्द्रमसः[18]। गृहे मण्डले[19]। गोः सुषुम्णाख्यादित्यरश्मेः सकाशात्[20] तदेकदेशभूता रश्मयः।

---

१. **अटचायाकम्** M.
२. B. Ghosh, op. cit. pp. 14,15.
३. **०करोश्मि०** M.
४. **०म्नः** D. M. **०म्न** P.
५. **०गमनो** P. VS. 18. 40.
६. **नौरु०** M.
७. **०रमयत** M. N. 2. 6.
८. **अत्रा** P. M.
९. **शोः** P.
१०. **सममन्वमंसता०** P. D. M.
११. **०श्मः** P.
१२. **सन्नाम** P. D. M.
१३. **०पि०** P.
१४. **०मवसितमवगत०** M.
१५. **०मपहृत०** P. D. M.
१६. N. 4. 25.
१७. **अस्मिन्नेव** Sy.
१८. **ग्रहे** M.
**अन्तरिक्षे द्युलोके वेत्यर्थः। सप्तमीनिर्देशात् स्थित इति वाक्यशेषः** Sk.
१९. **गन्तुः** Sy. **वाङ्नामात्र गोशब्दः। स्तुतिवचनो वा। . . . स्तुतिलक्षणा वाचः स्तुतेर्वा** Sk.
२०. **०म्ना०** P. D. M.

अन्तर्हितम्[1]। नमनं[2] कर्तुम्। अमन्वत[3] गूढं तत्र वसति। त्वष्टा[4] त्विषेर्दीप्तिकर्मण[5] इति। तच्चैतदिन्द्रकृत[6] इत्यैन्द्रत्वम्[7] ।

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्।
आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥१६॥

को अद्य[8]। कः[9]। इदानीम्[10]। युङ्क्ते[11]। इन्द्रस्य। रथधुरि[12]। अश्वान्[13]। कर्मवतः[14]।

---

१. अन्तर्हितं P. रात्रावन्तर्हितं. . .यन्नाम तेजस्तदादित्यस्य रश्मयः Sy. तत्सम्बन्धिहरिरथवज्रमरुदादिस्तुतिद्वारेणेत्यर्थः Sk. २. नाम स्थानम्। यावती काचित् स्तुतिः सर्वत्रैवेन्द्रे व्यवस्थितेत्येवमृषयो मन्यन्त इत्यर्थः Sk.

३. अनेन प्रकारेण. . .अजानन्। उदकमये स्वच्छे चन्द्रबिम्बे सूर्यकिरणाः प्रतिफलन्ति। तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं संज्ञां लभन्ते तादृशीं चन्द्रेऽपि वर्तमाना लभन्ते इत्यर्थः। एतदुक्तं भवति। यद्रात्रावन्तर्हितं सौरं तेजस्तच्चन्द्रमण्डलं प्रविश्याहनीव नैशं तमो निवार्य सर्वं प्रकाशयति। ईदृग्भूततेजसा युक्तः सूर्यश्च इन्द्र एव द्वादशस्वादित्येष्विन्द्रस्यापि परिगणितत्वात्। अतोऽहोरात्रयोः प्रकाशक इन्द्र एवेतीन्द्रस्तुतेः प्रतीयमानत्वादिन्द्रो देवतेत्येतदुपपन्नं भवति Sy. अवबुध्यन्ते। के? सामर्थ्यादृषयः Sk.

४. ०न्ति P. D.

५. पञ्चमीनिर्देशादपेत्येति वाक्यशेषः। देवमात्रोपलक्षणार्थं चात्र त्वष्टृग्रहणं द्रष्टव्यम्। सर्वेभ्यो देवेभ्योऽपेत्येत्यर्थः। . . . यास्कस्तु मन्यते। अत्राहेत्यत्रशब्देन ऋगन्त्यं चन्द्रमसो गृहं प्रतिनिर्दिश्यते। चन्द्रमसश्च गृहं चन्द्रमण्डलम्। गौरित्यपि सुषुम्णो नाम। सूर्यरश्मिश्चन्द्रमसं गतः, अम्मयत्वाच्चन्द्रमण्डलस्य ततः प्रतिहतः सन् परावृत्य ज्योत्स्नारूपेण पृथिव्यां दीप्यते। स उच्यत इत्येवमेकवाक्यता। अत्र चन्द्रमसो गृहे चन्द्रमण्डले गोः सुषुम्णाख्यस्य सूर्यरश्मेरमन्वत ज्ञातवन्त इत्यर्थः। के? सामर्थ्याद्रश्मयः। नमनं नाम व्यवस्थानम्। त्वष्टुरादित्यादपेत्यापीच्यमन्तर्हितं परित्यज्यादित्यरश्मिकाश्चन्द्ररश्मिरूपेणावस्थितस्येत्यर्थः। एतदयोग्यम्। न तावदत्रशब्देन चन्द्रमसो गृहं प्रतिनिर्देष्टुं शक्यम्, इत्थाशब्देन तस्य प्रतिनिर्देशादित्थाशब्दस्य चात्रशब्दपर्यायत्वात्। अत्रामुत्रेत्येतयोश्च सन्निकृष्टविप्रकृष्टप्रतिनिर्देशार्थयोरेकत्रार्थे विरुद्धत्वात्। नापि गोशब्देन सुषुम्णो वक्तुं शक्यम्। अनैन्द्रत्वप्रसङ्गात्। गोशब्देन हि सुषुम्णः प्रतिनिर्देशे सुषुम्णदेवतोयं मन्त्रः स्यात्। गुणप्रधानभावविपर्ययाद्वा चन्द्रदेवतः। न कथञ्चिदप्यैन्द्रः। ऐन्द्राणि चैतानि सूक्तानि। तत्र प्रकरणं बाध्येत। तस्मात्पूर्व एवार्थः Sk. ६. ०च्चै० P.

७. ०न्द्रत्व M. ८. ऽद्य M.

९. पुण्यवान् Sk. १०. अस्मिन् कर्मणिSy.

११. ०क्त P. M. न कोऽपीत्यर्थः Sy. कस्य पुण्यवतो हरीन् रथे नियुज्येन्द्रो यज्ञमागच्छति। उपालम्भो वा Sk.

१२. अश्ववहनप्रदेशे Sy. धुरम् Sk.

१३. गतिमतः Sy. १४. वीर्यकर्मोपेतान् Sy.

क्रोधवतः[1]। हिंसामिच्छतः[2]। निरस्यमानेषून्[3]। हृदयेषु च विध्यतः[4]। सुखस्य भावयितॄन्[5]। यः[6]। एषामश्वानां यवसैः। भरणम्[7]। समर्धयति[8]। सः। जीवति लब्धान्नः[9]।

**क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति।**
**कस्तोकाय क इभायोत रायेऽधि ब्रवत्तन्वे को जनाय ॥१७॥**

**क ईषते।** क इह भीतः[10]। पलायते[10]। को वा। हिंस्यते[11]। कः। बिभेति[12]। को वा। अन्तिके। तिष्ठन्तम्[13]। इन्द्रं भीतः। जानाति[14]। पूरण एकः किंशब्दः। कः।

---

१. तेजसा युक्तान् Sy. शत्रूणामुपरि क्रोधवतः। अथवा शिमीवतो भामिन इत्येते षष्ठ्येकवचनान्ते इन्द्रस्य विशेषणे। पराणि तु हरीणाम् Sk.

२. परैर्दुःसहेन क्रोधेन युक्तान् Sy. पापक्रोधान्। निर्मूलशत्रूच्छेदकरक्रोधानित्यर्थः Sk.

३. ०षूद् M. येषामासनि आस्ये मुखप्रदेशे शत्रूणां प्रहरणार्थमिषवो बाणा बद्धास्तान् Sy. आस्ये इषवो येषां ते आसन्निषवः। हरयो हि सङ्ग्रामकाले शत्रूणामुपरि वेगवत इषून् वमन्ति। ते आसन्निषव उच्यन्ते। तानासन्निषून् Sk.

४. हृत्सु शत्रूणां हृदयेष्वस्यन्ति स्वकीयं पादं क्षिपन्तीति हृत्स्वसः Sy.

५. स्तोतॄणाम् Sk. ६. ०यिता अन् M. स्वकीयानां सुखप्रदानित्यर्थः Sy.

७. रथवाहनक्रियाम् Sy. भृत्यामृजीषलक्षणां धानालक्षणां च Sk.

८. स्तौतीति यावत्। ... यद्वा। क इति प्रजापतिरुच्यते। ... ऋतस्य यज्ञस्य धुरि निर्वाहे गा वेदरूपान् वाग्विशेषान् अद्येदानीं युङ्क्ते संयोजयति। कीदृशान्? शिमीवतः प्रतिपाद्यैः कर्मभिर्युक्तान्। भामिन उज्ज्वलान्। दुर्हृणायून् हृणीयतिर्हानिकर्मा, हातुमशक्यान् वेदाध्ययनस्य नित्यत्वात्। आसन्निषून् आसनि आस्ये इषुरेषणं गमनमुच्चारणं येषां तान्। हृत्स्वसो हृत्सु हृदयेषु दीप्यमानान्। प्रकाशमानानित्यर्थः। मयोभून् मयसोऽध्ययनप्रभवस्य सुखसाधनस्यादृष्टस्य भावयितॄन्। यो यजमान एषां वचसां भृत्यां भरणक्रियाम् ऋणधत् ऋद्धिमतीं करोति, स जीवात् स एव जीवति। अन्ये जीवन्मृता इत्यर्थः Sy.

९. स एव पुण्यकर्मेत्यर्थः Sk.

१०. शत्रोर्भीतः सन् को निर्गच्छति न कोऽपीत्यर्थः Sy. कोऽत्रेन्द्राद् भीतस्तच्छत्रुः पलायते Sk.

११. शत्रुभिर्हिंस्योऽपि कश्चिन्नास्तीत्यर्थः Sy. इन्द्रेण Sk.

१२. इन्द्रे रक्षके सति भयमपि नोत्पद्यते दूरे तस्य शत्रुकृता हिंसा Sy. इन्द्रात्। न किञ्चिदागतस्येन्द्रस्य लिङ्गं दृश्यते येनात्रेन्द्र आगत इत्यनुमीयेतेत्यर्थः Sk.

१३. अस्माकं रक्षकत्वेन Sy. सन्तम्। तिरः सत इति प्राप्तस्य (N. 3. 20.) नामनी। तेनात्र सच्छब्दः प्राप्तवचनः। प्राप्तमिन्द्रं को वा ... अन्तिके। सन्निकृष्टमित्यर्थः। प्रत्यक्षेणाप्यागत इन्द्रो नैवात्रोपलभ्यते इत्यर्थः Sk.

१४. वयमेव जानीमो नान्य इत्यर्थः Sy. मन्यते पश्यत्येवेत्यर्थः Sk.

पुत्रार्थम्[1]। कः। गजार्थम्। को वा। धनार्थम्[2]। अधिब्रवीति[3] पुत्रादिकं मदीयं रक्षेति वचनमधिवचनम्। को वा। शरीरार्थम्[4]। भटार्थं[4][5] च। आगते सतीन्द्र एतानि चिह्नानि भवन्ति, आगतः किमिहेन्द्र इति प्रश्नः।

**को अ॒ग्निमी॑ट्टे ह॒विषा॑ घृ॒तेन॑ स्रु॒चा य॑जाता ऋ॒तुभि॑र्ध्रु॒वेभि॑ः ।**
**कस्मै॑ दे॒वा आ व॑हाना॒शु होम॒ को मं॑सते वी॒तिहो॑त्रः सुदे॒वः ॥१८॥**

को[6] अग्निम्। हविः संभृत्येन्द्रयागार्थं[7] कः। अग्निं सामिधेनीभिः। स्तौति[8] को वा। घृतेन। हविषा। स्रुचा[9] करणभूतया। ध्रुवैः[10]। ऋतुभिः[10] सह प्रयाजदेवताभिरग्निम्। यजते। कस्मै[11]। देवाः[12]। शीघ्रम्। आवहन्ति[13]। हूयमानं[14] हविः। को वा। प्रियमन्त्रः[15]। कल्याणदेवः। देवेभ्यः कामान् वाञ्छति[16]।

---

१. हे इन्द्र! अस्मदीयं पुत्रं रक्षेत्येवंरूपमधिवचनं पक्षपातेन वचनम्।... एवंरूपमधिवचनं को यजमानः कुर्यात्। स्वयमेवेन्द्रो रक्षतीति भावः Sy. अपत्यार्थम् Sk.

२. शत्रुभिरपह्रियमाणाय धनाय।...अपह्रियमाणमस्मदीयं धनं रक्षेत्यधिवचनमपि को यजमानः कुर्यात्। न कोऽपीत्यर्थः Sy. ३. अपि ब्र० M. अधिशब्दः . . . पदपूरणः Sk.

४. स्वशरीररक्षार्थं परिजनरक्षार्थं चेन्द्रस्याधिवचनं नापेक्षितम्। स्तुत्या प्रीत इन्द्रः स्वयमेव रक्षतीत्यर्थः Sy. आरोग्यादियुक्तशरीरार्थम्। को वा विज्ञापयति परिचारकजनार्थं वा। आगत इन्द्रे योऽनुरूपो व्यवहारोऽपत्यप्रार्थनादिस्तं कुर्वन्नन्योऽपि न दृश्यते येनागत इन्द्र इत्येतदर्थात् परिकल्प्येतेत्यर्थः। एवमियमप्यागमनविलम्बनात् परिदेवना वोपालम्भो वा Sk.

५. भटानां M ६. P. adds वा after को

७. ०भू० P. इन्द्राय हविर्निर्वापोऽपि सम्यक्कर्तुं न शक्यते। इन्द्रस्य दुर्विज्ञानत्वात् Sy. ८. पूजयति Sk. ९. जुह्वा Sy. चरुपुरोडाशादिहविःपूर्णया स्रुचा Sk.

१०. नित्यैः ... वसन्तादिकालैरुपलक्षितेन घृतेन।...यद्वा। ऋतवः प्रयाजदेवताः। ... ताभिर्ध्रुवैः प्रकृतौ विकृतौ चानुष्ठेयतया निश्चलैर्ऋतुभिः सहाग्निमाज्यभागदेवतां घृतेन हविषा को यजेत्। न कोऽपीत्यर्थः Sy. सप्तम्यर्थे तृतीया। ऋतुषु ध्रुवेषु। नियतेषु यागकालेष्वित्यर्थः Sk. ११. तस्मै M. यजमानाय Sy. १२. इन्द्रादयः Sk.

१३. आगच्छन्ति M. प्रयच्छन्ति Sy. प्रापयन्ति। आत्मानमागच्छन्तीत्यर्थः Sk.

१४. ह्वातव्यं प्रशस्यं धनम्।...न कस्मा अपीत्यर्थः। इन्द्र एव धनस्य दाता नान्ये देवा इतीन्द्रः स्तूयते Sy. यस्मिंस्तद्धोमं यागस्थानमित्यर्थः। अथवा होमेति तादर्थ्यचतुर्थ्या लुक्। होमाय। होमार्थमित्यर्थः Sk. १५. ०यन्त्रः P. D. M. प्राप्तयज्ञः Sy. वीतिहोत्रः।...वेतिरिह कान्त्यर्थः Sk. १६. वांझति D. वांच्छ० P. को यजमानः..इन्द्रं सम्यग् जानाति। न कोऽपीत्यर्थः Sy. शोभना देवा यस्य स सुदेवः। अविलम्बितयज्ञत्वादेव प्रिययज्ञं देवानां चानुग्राह्यं लोकोऽवगच्छतीत्यर्थः। एवमियमप्यागमनविलम्बनात् परिदेवनैषा उपालम्भो वा Sk.

त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥१९॥

त्वमङ्ग। त्वम्। अङ्ग[1]। प्रशंसिषः[2] सुष्ठुतममिति[3]। देवः[4]। बलवत्तम ! मनुष्यम्[5]। न। त्वत्तः। अन्यः। सुखयिता[6]। मघवन्[7]। अस्ति ततः। तुभ्यमहम्[8]। ब्रवीमि। स्तोत्रमिति[9]।

मा ते राधांसि मा त ऊतयो वसोऽस्मान्कदा चना दभन्[10] ।
विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥२०॥

मा ते राधांसि। वासयितरिन्द्र ! तव। धनानि[11]। पालनानि[12] च। कदा। चिदपि। मा। अस्मान्। दभन्[13]। विश्वानि। उपमिमीहि[14]। अस्मभ्यम्[15]। मनुष्यहित ! वसूनि। द्रष्टृभ्यः[16][17]।

## I. 85.

प्र ये शुम्भन्ते जनयो न सप्तयो यामन्रुद्रस्य सूनवः सुदंससः ।
रोदसी हि मरुतश्चक्रिरे वृधे मदन्ति वीरा विदथेषु घृष्वयः ॥१॥

प्र ये शुम्भन्ते। प्रकर्षेण। अलङ्कुर्वते[18]। ये। जायाः। इव। अश्वाः[19]। इव[20]। च। गमने। रुद्रस्य[21]।

---

१. अङ्गेत्यभिमुखीकरणे Sy.
अङ्गेति क्षिप्रनाम Sk.
२. ०ष P. सम्यगनेन स्तुतमिति प्रशंस Sy.
३. सुष्ठमिति P. ४. द्योतमानः Sy.
५. मरणधर्माणं त्वां स्तुतवन्तं पुरुषम् Sy.
स्तोतारं मनुष्यम् Sk.
६. स्तोतॄणाम् Sk. ७. धनवन् ! Sy.
८. स्तौमि त्वामित्यर्थः Sk.
९. V. M. ignores इन्द्र
१०. वसो इति PP.
११. राध्नोत्येभिरिति राधांसि भूतानि Sy.
१२. गन्तारः। यद्वा धूतय इत्यत्र वर्णलोपः। धूतयः कम्पयितारस्ते त्वदीया मरुतश्च Sy.
१३. मा विनाशयन्तु Sy.
१४. सर्वत आहृत्यास्मत्समीपे कुरु। सर्वत्र वर्तमानं धनमस्मभ्यं प्रयच्छेत्यर्थः Sy.
१५. ०मीड्यस्म० M.
१६. न्द्रष्टुभ्यम् M.
मन्त्रद्रष्टृभ्यः ... अस्मभ्यम् Sy.
१७. V. Mādhava ignores च। आ। Ms. D. puts the figure ॥८४॥ here to indicate the end of the eightyfourth hymn. No such number is given in P. and M.
१८. स्वकीयान्यङ्गानि। ... यथा योषितः स्वकीयान्यङ्गान्यलङ्कुर्वन्ति तद्वत् Sy.
१९. सर्पणशीलाः Sy.
२०. अश्वा इव is omitted by P.
२१. रोदयति सर्वमन्तकाले इति रुद्रः परमेश्वरः। तस्य पुत्राः Sy.

पुत्राः। सुकर्माणः। द्यावापृथिव्योः[१]। हि[२]। मरुतः। चक्रिरे। वर्धनाय[३]। मदन्ति च। वीराः[४]। यज्ञेषु[५]।
घर्षणशीला[६] वृक्षाणामिति।

**त उ॒क्षि॒तासो॑ महि॒मान॑माशत दि॒वि रु॒द्रासो॒ अधि॑ चक्रिरे॒ सदः॑।**
**अर्च॑न्तो अ॒र्कं ज॒नय॑न्त इन्द्रि॒यमधि॒ श्रियो॑ दधिरे॒ पृश्नि॑मातरः ॥२॥**

**त उक्षितासः।** ते वर्षबिन्दुभिः[७]। सिक्ताः[८]। महत्त्वम्। प्रापन्। दिवि[९] च। अधि। सदनम्[१०]।
अकुर्वन्[११]। अर्चन्तः। अर्चनीयमिन्द्रम्। जनयन्तश्च। बलम्[१२]। श्रियः[१३]। अधि[१४]दधिरे।[१५]

**गोमा॑तरो॒ यच्छु॒भय॑न्ते अ॒ञ्जिभि॑स्त॒नूषु॑ शु॒भ्रा द॑धिरे वि॒रुक्म॑तः।**
**बाध॑न्ते॒ विश्व॑मभिमा॒तिन॒मप॒ वर्त्मा॑न्येषा॒मनु॑ रीयते घृ॒तम् ॥३॥**

**गोमातरः।** "**पृश्नियै[१६] वै पयसो मरुतो जाताः**" इति ब्राह्मणम्। यदा त[१७] आत्मानम्।
मरुतः[१८]। आभरणैः[१९]। अलङ्कुर्वते[२०] तदा। अङ्गेषु। कल्याणा[२१] मरुतः। विशिष्टदीप्तिमतः सुवर्ण-
मयान्[२२] कवचान्। दधिरे[२३]। सर्वम्। शत्रुम्। अपबाधन्ते[२४] तथा। एषाम्। मार्गान्[२५]। उदकम्[२६]।
अनु। गच्छति[२७] यत्र गच्छति भवति तत्रो[२८]दकमिति।

---

१. ०व्यो P. D. **द्यावापृथिव्यौ** Sy.
२. **यस्मात्** Sy. ३. **वृष्टिप्रदानादिना वर्धनाय। ... अतः सुदंसस इत्यर्थः** Sy.
४. **विशेषेण शत्रुक्षेपणशीलाः** Sy.
५. **विदन्त्येषु यष्टव्यतया देवानिति विदथा यज्ञास्तेषु ... सोमपानेन हृष्यन्ति** Sy.
६. **महीरुहशिलोच्चयादेर्भञ्जका इत्यर्थः** Sy.
७. **देवैरभिषिक्ताः** Sy. ८. ०क्तः M.
९. **द्योतमाने नभसि** Sy. १०. **स्थानम्** Sy.
११. **अधिकं सर्वोत्कृष्टं कृतवन्तः** Sy.
१२. **इन्द्रस्य लिङ्गं वीर्यम्** Sy.
१३. **ऐश्वर्याणि** Sy.
१४. **विद०** D. ०**अधि** is omitted by M. **आधिक्येनाधारयन्** Sy.
१५. V. Mādhava ignores **रुद्रासः। पृश्निमातरः** Sy. explains **रुद्रासः** as **रुद्रस्य पुत्राः ... मरुतः** and **पृश्निमातरः** as **पृश्नेर्नानारूपाया भूमेः पुत्रा मरुतः ... प्राश्नुते सर्वाणि रूपाणीति पृश्निर्भूमिः। ... पृश्निर्माता येषां ते तथोक्ताः**
१६. ०**तरः ... पृ०** M. ०**यै** P. **पृश्नेः** is suggested for **पृश्नियै।**
१७. **ता** P. १८. **गोरूपा भूमिर्माता येषां ते मरुतः** Sy. १९. **रूपाभिव्यञ्जकैः** Sy.
२०. **स्वकीयान्यङ्गानि** Sy.
२१. **दीप्ताः** Sy.
२२. **विशेषेण रोचमानानलङ्कारान्** Sy.
२३. After **दधिरे** M. remarks :– **अत्र पुटद्वयपरिमितो ग्रन्थपातः**
२४. **हिंसन्ति** Sy. २५. **अनुसृत्य** Sy.
२६. **क्षरणशीलम्** Sy.
२७. **स्रवति। यत्र मरुतो गच्छन्ति वृष्ट्युदकमपि तदनुसारेण तत्र गच्छतीत्यर्थः** Sy.
२८. **अनु। गच्छति यत्र गच्छति भवति तत्र** missing M.

वि ये भ्राजन्ते सुमखास ऋष्टिभिः प्रच्यावयन्तो अच्युता चिदोजसा ।
मनोजुवो यन्मरुतो रथेष्वा वृषव्रातासः पृषतीरयुग्ध्वम् ॥४॥

वि ये भ्राजन्ते। विभ्राजन्ते। ये। सुयज्ञाः[1]। आयुधैः। प्रच्यावयन्तः[2]। अच्युतानि[3]। अपि पर्वतादीनि। बलेन[4]। मनोवेगाः। यदा। यूयं पृषद्वर्णा[5] अश्वाः। रथेषु। आयुङ्ध्वम्[6]। वर्षिता गणो येषां ते वृषव्राताः[7]। तदा तेषां मार्गमनु[8]गच्छतीति[9]।

प्र यद्रथेषु पृषतीरयुग्ध्वं वाजे अद्रिं मरुतो रंहयन्तः ।
उतारुषस्य वि ष्यन्ति धाराश्चर्मेवोदभिर्व्युन्दन्ति भूम ॥५॥

प्र यद्रथेषु। प्रायुङ्ध्वम्[10]। यदा। रथेषु। अश्वाः। बले सति[11]। अद्रिमपि[12]। मरुतः। उत्क्षिपन्तः[13]। तदानीम्। दीप्तस्य मारुतस्य[14] गणस्य सकाशात्। धाराः[15]। पतन्ति[16] तेऽमी[17] सर्वाम्। भूमिं खल्वल्पपरिमाणम्। चर्मेव[18]। उदकैः। विविधम्। क्लेदयन्ति।

आ वो वहन्तु सप्तयो रघुष्यदो रघुपत्वानः प्र जिगात बाहुभिः ।
सीदता बर्हिरुरु वः सदस्कृतं मादयध्वं मरुतो मध्वो अन्धसः ॥६॥

आ वो वहन्तु। आवहन्तु[19]। युष्मान्। अश्वाः[20]। लघुगामिनः[21]। लघुपातिनः[22]। प्रजिगात[23] च[24]

---

१. सु is omitted by P. and D.
२. प्रकर्षेण च्यावयितारः प्रेरयितारो भवन्ति Sy. ३. च्यावयितुमशक्यानि Sy. ४. ०लन M.
५. पृषत्य इति मरुद्वाहनानां संज्ञा।... पृषद्भिः श्वेतबिन्दुभिर्युक्ता मृगीः Sy.
६. अश्वाः। रथेषु। आ missing M. आयुधंङ्ध्वं P. The correct reading should be आयुङ्ग्ध्वम्। आभिमुख्येन नियुक्ता अकृढ्वम्। तदानीं पर्वतादिकं प्रच्यवत इत्यर्थः Sy.
७. ०षप्रा० M. वृष्ट्युदकसेचनसमर्थसप्तसङ्घात्मका यूयम् Sy.
८. ०गच्छन्तीति is suggested for ०गच्छतीति
९. V. Mādhava ignores मरुतः
१०. The correct reading should be प्रायुङ्ग्ध्वम्।
११. अन्ने निमित्तभूते सति Sy.
१२. मेघम् Sy. १३. वर्षणार्थं प्रेरयन्तः Sy. १४. आरोचमानस्य सूर्यस्य वैद्युताग्नेर्वा सकाशात् Sy.
१५. वृष्ट्युदकधाराः Sy. १६. विमुञ्चन्ति Sy. १७. विमुक्तास्ताश्च Sy.
१८. ०र्मै० P. परिमितमल्पं चर्म यथाऽप्रयत्नेन क्लेद्यते एवम् Sy.
१९. आवोव० P. अस्मद्यज्ञं प्रापयन्तु Sy.
२०. सर्पणशीला अश्वाः Sy.
२१. वेगेन गच्छन्त इत्यर्थः Sy.
२२. शीघ्रं... गच्छन्तो यूयम् Sy.
२३. प्रकर्षेण गच्छत Sy.
२४. Omitted by P.

शत्रून्[1] बाहुभिः[2]। आसीदत[3] च। बर्हिः। विस्तीर्णम्। स्थानम्[4]। युष्माकम्[5]। कृतम्। मधुसदृशेन[6]। सोमेन[7]। मादयध्वम्[8]।

**तेऽवर्धन्त स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः ।**
**विष्णुर्यद्धावद्वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये ॥७॥**

तेऽवर्धन्त। ते। अवर्धन्त[9]। स्वबलाः[10]। माहात्म्येन। दिवं च। आस्थिताः। विस्तीर्णम्। आसनम्[11]। चक्रिरे। यज्ञः[12]। यदा[13]। रक्षति[14]। वर्षितारम्[15]। शत्रुमदस्य च्यावकं[16] मरुद्गणं तदा सोमं पातुं मरुतः। प्रिये[17]। बर्हिषि[18]। पक्षिणः[19]। इव। शीघ्रमागत्य। सीदन्ति[20]।

**शूराइवेद्युयुधयो न जग्मयः श्रवस्यवो न पृतनासु येतिरे ।**
**भयन्ते विश्वा भुवना मरुद्भ्यो राजानइव त्वेषसंदृशो नरः ॥८॥**

शूराइव। शूरा[21] इव[22]। योद्धारः[23]। गच्छन्तः[24] शत्रुभ्यः। अन्नमिच्छमानाः[25]। इव। युद्धेषु।

---

१. ०त्रू P.
२. स्वकीयैर्हस्तैरस्मभ्यं दातव्यं धनमाहृत्य Sy. ३. बाहुरा० P.
४. वेदिलक्षणं स्थानम्।...तत्र यदास्तीर्णं बर्हिः ... तस्मिन्बर्हिष्युपविशत Sy.
५. अस्माभिः Sk. ६. मधुरस्य Sy.
७. सोमलक्षणस्यान्नस्य पानेन...तृप्ता भवत Sy. सोमलक्षणेनान्नेन। मधुस्वादस्य वा सोमलक्षणस्यान्नस्यैकदेशेनेत्यर्थः Sk.
८. V. Mādhava ignores मरुतः
९. सर्वप्रकारां वृद्धिं प्राप्ताः Sk.
१०. नान्यस्य कस्यचिद् बलमपेक्षन्ते Sy.
११. सदनं नभोलक्षणं स्थानञ्च स्वकीयनिवासाय Sy. स्थानमात्मनः Sk.
१२. विष्णुरेवागत्य Sy. सप्तम्यर्थे चात्र प्रथमा। अन्तर्णीतमत्वर्थो वा विष्णुशब्दः। यज्ञे यज्ञवान् वा यजमानः Sk.
१३. यथा M. १४. तर्पयति Sk.
१५. कामाभिवर्षकम् Sy.
१६. ०मदच्या० M. मदस्य हर्षस्यासेक्तारं यज्ञम् Sy. बहुवचनस्य स्थान उभयत्रैकवचनम्। गणापेक्षं वा। मदच्युतमिति च्यवतिर्गतिकर्मा। वर्षितॄन् सोमलक्षणं च मदं प्रति गन्तॄन् मरुतो मरुद्गणं वेत्यर्थः Sk. १७. ०य M. अधिबर्हिषि प्रिये प्रियस्य वेद्यां विस्तीर्णस्य बर्हिष उपरि। यज्ञे यदा यजमानो मरुतस्तर्पयिष्यति तदा पक्षिण इव शीघ्रमागत्य मरुतो वेद्यां बर्हिषि निषीदन्तीत्यर्थः Sk.
१८. अस्मदीये यज्ञे Sy. १९. पक्षिणो यथा शीघ्रमागच्छन्त्येवं शीघ्रमागत्य Sy.
२०. V. Mādhava ignores ह। अधि
२१. शौर्योपेता युयुत्सवः पुरुषा इव च।...शत्रुभिर्युध्यमानाः पुरुषा इव च Sy.
२२. इवशब्दः...पदपूरणः। शूरा मरुतः। अथवा शूरा इत्युपमानश्रुतेरुपमानोपमेयसाधारणधर्माध्याहारः। शूरा इव जेतारः। यथा शूरा मनुष्या नियमेन शत्रूणां जेतार एवं मरुत इत्यर्थः Sk.
२३. यथा च युद्धशीला मनुष्याः शत्रून् प्रति गमनशीला एवं मरुतः Sk.
२४. ० न्त P न्तःश् D.
मरुतः।...अन्नमात्मन इच्छन्तः पुरुषा इव Sy.
२५. इच्छन्तः is suggested for इच्छमानाः।
श्रवोऽन्नं धनं कीर्तिर्वा। तत्कामाः श्रवस्यवः। यथा च श्रवस्यवो मनुष्या एवं मरुतः Sk.

गच्छन्ति[1]। द्वितीयो नकारः पूरणः। बिभ्यति। च। विश्वानि। भुवनानि[2]। मरुद्भ्यः। राजान[3]
इवालङ्कृताः। दीप्तसन्दर्शनाः[4]। नेतारः[5] ।[6]

**त्वष्टा यद्वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत् ।**
**धत्त इन्द्रो नर्यपांसि कर्तवेऽहन्वृत्रं निरपामौब्जदर्णवम् ॥९॥**

**त्वष्टा यद्वज्रम्**[7]। त्वष्टा[8]। यत्[9]। आयुधम्[10]। सुकृतम्[11]। हिरण्यालङ्कृतम्[12]। सहस्रधारम्[13]। सुकर्मेन्द्राय। समर्पयामास[14]। तं वज्रमधारयत्। इन्द्रः[15]। नेतरि[16] मरुद्गणे[17] सहायभूते सति। कर्माणि[18]। कर्तुमथ। वृत्रम्[19]। अहन् हत्वा च। अपाम्[20]। अर्णवं[21] मेघम्। निर्जघान।

**ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृहाणं चिद्बिभिदुर्वि पर्वतम् ।**
**धमन्तो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि चक्रिरे ॥१०॥**

**ऊर्ध्वं**[22] **नुनुद्रे**[23]। गोतमो[24] मरुभूमिष्ठस्तुष्टाव[25] मरुतस्तृषा तस्मा उच्चिक्षिपुः[26],

---

१. प्रयतन्ते, वृत्रादिभिर्युद्धे व्याप्रियन्ते Sy. प्रयत्नं कुर्वन्ति Sk.
२. सर्वाणि भूतानि Sk. ३. राजा M.
४. उग्ररूपतया द्रष्टुमशक्या भवन्ति तेभ्य इत्यर्थः Sy. उज्ज्वलरूपा इत्यर्थः Sk.
५. वृष्ट्यादेर्नेतारः Sy. मनुष्याकाराः Sk.
६. V. Mādhava ignores इव।
७. यद् वज्रं is omitted by M.
८. विश्वनिर्माता Sy. देवशिल्पी Sk.
९. व्यत्ययेनात्र नपुंसकता। यम् Sk.
१०. वज्रम् Sk.
११. सम्यङ् निष्पादितम् Sy. सुकरणम् Sk.
१२. ०त D. सुवर्णमयम् Sy.
१३. भृष्टयोऽत्राश्रय उच्यन्ते। सहस्राश्रिम् Sk.
१४. कृतवानित्यर्थः Sk.
१५. ०न्द्रा M.
१६. अत्र नृसम्बन्धाभ्रृशब्देन सङ्ग्रामोऽभिधीयते। सङ्ग्रामे Sy. नराकारे।... मनुष्याकाराणां मरुतां गणस्य वज्रमिन्द्रोऽर्पयतीत्यर्थः Sk.
१७. ०ण P.
१८. शत्रुहननादिलक्षणानि Sy. वृत्रवधादीनि Sk.
१९. वृष्ट्युदकस्यावरकम् Sy.
२०. तेन निरुद्धा अपश्च . . . निःशेषेणाधोमुखमपातयत् Sy. अथवाऽपामिति द्वितीयार्थे षष्ठी। उब्ज आर्जवे। वृत्रोदरान्तर्गता अपो भुवं प्रति गमनाय नियमेन ऋजूकरोतीत्यर्थः Sk.
२१. ०व M. अर्णसोदकेन युक्तं मेघम् Sy. उदकवन्तम् Sk.
२२. ऊर्ध D. उपरि यथा भवति तथा Sy.
२३. ननु० P. प्रेरितवन्तः, उत्खातवन्त इत्यर्थः Sy.
२४. गौ० M.
२५. ०ष्ठु तु० M.
२६. ऊर्ध्वं सन्तं मेघं . . . प्रेरयन्ति Sk.

कूपम्[१]। दूरस्थम्[२]। मरुतः। वलात्[३]। कः शिलोच्चयम्[४]। च। बिभिदुः[५]। यो मार्गस्य निरोधक[६] आत्मीयम्[७]। वाणवाद्यं च। धमन्तः[८]। मरुतस्त्वमी। सुदानाः। सोममत्ताश्च। रमणीयानि[९]। चक्रिर[१०] एवंविधानि कर्माणि शेषमुत्तरया वद।[११]

**जि॒ह्मं नु॑नुद्रेऽव॒तं तया॑ दि॒शासि॑ञ्च॒न्नुत्सं॒ गोत॑माय तृ॒ष्णजे॑ ।**
**आ ग॑च्छन्ती॒मव॑सा चि॒त्रभा॑नव॒: काम॒ं विप्र॑स्य तर्पयन्त॒ धाम॑भिः ॥११॥**

जिह्मं नुनुद्रे ।

जिह्मं[१२] तिर्यञ्चमित्यर्थो नोदनं प्रेरणं स्मृतम् ।
कूपं[१३] तया दिशा यस्यां स्तोता वसति गोतमः ॥
स्थापयित्वाथ तं कूपं कृत्वाऽऽह्वावं समीपतः ।
उदसिञ्चंश्च[१४] तं कूपं[१५] गोतमाय पिपासवे ॥
आगच्छ[१६] न्त्येनमवसा[१७] मरुतश्चित्रदीप्तयः ।
पुरस्तात् प्रादुरभवन् रक्षणार्थमथ स्वयम् ॥
अथ मेधाविनस्तस्य[१८] कामं[१९] तैर्धारकैर्जलैः[२०] ।
अतर्पयन्[२१] नृचोरर्थैः[२२] श्लोकैरित्थमुदीरितः[२३] ॥

---

१. अवतम् अवपतितम् अधोगतम्। अधोमुखमित्यर्थः। अथवा अवत इति कूपनाम। तत्सादृश्याच्चात्र तद्व्यपदेशः। बहूदकत्वादिना सादृश्येन कूपसदृशं मेघमूर्ध्वं प्रेरयन्ति क्षिपन्तीत्यर्थः Sk.
२. दादृहाणं चिदत्यन्तदृढीभवन्तमपि। अत्यन्तं दृढमपीत्यर्थः Sk. ३. बला M.
४. कशि० M. कश्छि० D. एवं कूपमुत्खाय ऋषेराश्रमं प्रति नयन्तो मरुतः Sy. मेघं शिलोच्चयं वा Sk.
५. विभिन्दन्ति Sk.
६. मार्गमध्ये ... प्रवृद्धं गतिनिरोधकम् Sy.
७. शतसंख्याभिस्तन्त्रीभिर्युक्तं वीणाविशेषम् Sy. शब्दम्। महान्तं शब्दं कुर्वन्त इत्यर्थः Sk. ८. ०न्ते D शब्दवन्तः। उच्चारयन्त इत्यर्थः Sk.
९. रणी० M. रमणीयानि धनानि Sy.
१०. स्तोतृभ्यः कुर्वन्ति Sy.
११. V. Mādhava ignores नुनुद्रे। वि नुनुद्रे प्रेरितवन्तः, उत्खातवन्त इत्यर्थः Sy.
१२. कुटिलं मेघम्। अन्यस्यां दिशि व्यवस्थितं सन्तमित्यर्थः Sk. १३. ०पः M.
१४. क्षारितवन्तः Sk. १५. जलप्रवाहं कूपादुद्धृत्य Sy. कूपसदृशं मेघम् Sk.
१६. ०गन्ति M. तत्समीपं प्राप्नुवन्ति Sy.
१७. ०वता M. ईदृशेन रक्षणेन सह Sy. एतेऽवसा तर्पणेन पालनेन वा निमित्तेन। आत्मानं तर्पयितुं यष्टॄन् पालयितुं वेत्यर्थः Sk. १८. गोतमस्य Sy. यष्टुः स्तोतुश्च Sk. १९. कामयं P. अभिलाषम् Sy. २०. आयुषो धारकैः Sy. धीयन्ते तानीति धामानि धनान्यत्राभिप्रेतानि। तैः। अथवा धामानि स्थानानि। इह च परत्र च लोकेऽभिप्रेतैः स्थानैरित्यर्थः Sk. २१. अतल्पय० M. आहावेऽवानयन् Sy. तर्पयन्तीत्यर्थः Sk.
२२. ०र्थ M. २३. ०कैरर्थ M.

या वः शर्म शशमानाय सन्ति त्रिधातूंनि दाशुषे यच्छताधि ।
अस्मभ्यं तानि मरुतो वि यन्त रयिं नो धत्त वृषणः सुवीरम् ॥१२॥

या वः शर्म[1]। यानि। युष्माकम्। गृहाणि[2]। स्तुवते[3]। सन्ति। तानि त्रिच्छदिष्काणि[4]। यजमानाय अधि[5]गच्छत[6]। अस्मभ्यम्। तानि। मरुतः! विविधम्। गच्छत[8]। रयिं च। नः। धत्त[9]। वृषणः[10]। सुपुत्रम्[11][12]।

I. 86.

मरुतो यस्य हि क्षये पाथा दिवो विमहसः। स सुगोपातमो जनः ॥१॥

मरुतो यस्य। मरुतः। यस्य[13]। गृहे। पिबथ[14] सोमम्। दिव आगत्य। विशिष्टदीप्तयः[15]। सः। अत्यन्तं शोभनगोपूकः[16]। जनः[17][18]।

यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम्। मरुतः शृणुता हवम् ॥२॥

यज्ञैर्वा[19]। यज्ञैः। वा[20] हेतुभिः। यज्ञस्य वोढारः[21]! अथवा। विप्रस्य[22]। स्तुतिभिस्तच्छुश्रूषया[23]।

---

१. शम P. २. सुखानि . . . वा . . . पूर्वोक्तलक्षणानि शर्माणि यानि सन्ति यानि च. . .हविर्दत्तवते यजमानाय Sy. शर्माणि सुखानि गृहाणि वा Sk.
३. युष्मान् स्तुतिभिर्भजमानाय Sy.
४. स्त्रीहृदिष्काणि M. पृथिव्यादिषु त्रिषु स्थानेष्ववस्थितानि Sy. धीयन्ते प्राणिनां देहेष्विति धातवोऽन्नरसाः। तैर्देवमनुष्योपभोग्यैः। त्रिभिरप्युपेतानि त्रिधातूनि Sk.
५. अधिशब्दः . . . पदपूरणः Sk.
६. यच्छत is suggested for गच्छत। अधिकं प्रयच्छत Sy यच्छत दत्त Sk.
७. अभ्यां P. ८. यच्छत is suggested for गच्छत। विशेषेण प्रयच्छत Sy. दत्त Sk. ९. दत्त Sy.
१०. कामानां वर्षितारः Sy. वर्षितारः Sk.
११. शोभनैर्वीरैः पुत्रैः पौत्रैश्चोपेतम् Sk.
१२. Ms. D. puts the figure ॥८५॥ here to indicate the end of the eightyfifth hymn. No such number is given in P. and M. १३. यजमानस्य Sy.
१४. ब P. १५. विविधं महान्तः Sk.
१६. ०गोपकः is suggested for ०गोपूकः। शोभनैः पालकैरत्यन्तं युक्तो भवति Sy. अतिशयेन शोभना गोप्तारो यस्य स सुगोपातमः। मरुदादिभिर्देवैर्वा शोभनैर्गोप्तृभिरतिशयेन रक्ष्यन्ते Sk.
१७. जातो यजमानः Sy.
१८. V. Mādhava ignores हि
१९. जज्ञै० M. २०. वाशब्दः समुच्चये Sy. वाशब्दोऽत्र चार्थे। यज्ञैश्च निमित्तभूतैः Sk. २१. यज्ञ ऊह्यते यान् प्रति ते यज्ञवाहसः। यष्टव्या इत्यर्थः Sk.
२२. अयजमानस्य मेधाविनश्च Sy. मेधाविनश्च मम Sk. २३. यागाननुभवितुं स्तुतीश्च श्रोतुमित्यर्थः Sk.

मरुतः ! शृणुत[1]। ह्वानम्।

**उत वा यस्य वाजिनोऽनु विप्रमतक्षत । स गन्ता गोमति व्रजे ॥३॥**

उत वा। अपिच। यस्य। हविष्मन्त ऋत्विजः। मेधाविनं मरुद्गणम्[2]। अन्वतक्षत[3] संस्कुर्वन्ति[4]। संपदं[5] निधत्ते[6]। गोमति[7]। व्रजे[8] सर्वदेति।

**अस्य वीरस्य बर्हिषि सुतः सोमो दिविष्टिषु । उक्थं मदश्च शस्यते ॥४॥**

अस्य वीरस्य। अस्य[9]। वीरस्य[10] मम। यज्ञे। सुतः[11]। सोमः। दिवसागमनेषु[12]। शस्त्रम्[13]। च। मदकरम्[14]। शस्यसे[15]।

**अस्य श्रोषन्त्वा भुवो विश्वा यश्चर्षणीरभि । सूरं चित्सस्रुषीरिषः ॥५॥**

अस्य[16] श्रोषन्तु। मम। शृण्वन्तु। भावयितारः[17]। सर्वे[18]। मनुष्यान्[19]। यः[20]। अभिभवति। सुवीर्यं[21]

---

१. यज्ञवतो यजमानस्य यागरहितस्य स्तोतुश्चाह्वानमवश्यं भवद्भिः श्रोतव्यं, यतो भवन्तो यज्ञस्य वोढारः स्तुतिप्रियाश्चेति भावः Sy.

२. ऋत्विजं प्रति Sk.

३. तक्षतिः करोतिकर्मान्यत्र। इह तु गमनार्थः। . . . गच्छथ Sk.

४. तीक्ष्णीकुर्वन्ति Sy.

५. The correct reading would be स पदं

६. प्राप्नोति Sk.

७. बहुभिर्गोभिर्युक्ते Sy.
गोभिः पूर्णं गोष्ठमित्यर्थः Sk.

८. प्रजे D. गोष्ठे Sy.

९. अस्य मम गोतमस्य यजमानस्य वा Sk.

१०. शत्रुक्षेपणकुशलस्य Sy.
स्तुतिकरणशूरस्य Sk.

११. ऋत्विग्भिरभिषुतो भवति Sy.

१२. यजनीयदिवसेषु Sy. द्यौरिष्यते गम्यते प्राप्यते याभिस्ता दिविष्टयः। स्वर्गफला इज्याः। तासु Sk.

१३. मरुद्देवताकम् Sy.

१४. मदिधातुना युक्ता 'मरुतो देवा सोमस्य मत्सन्' इत्यादिका मारुती निवित् च अस्य मरुद्गणस्य हर्षाय Sy.
हर्षकरम् Sk.

१५. शं M. The correct reading Should be शस्यते
होत्रा पठचते Sy.

१६. यजमानस्य स्तुतिम् Sy.
अस्येति . . . चतुर्थ्यर्थे षष्ठी। अस्मै मह्यं गोतमाय यजमानाय वा Sk.

१७. भुवो भूमेः। इह चामुत्र च स्थानानीत्यर्थः Sk. १८. सर्वान् शत्रुभूतान् . . .। अभिभुवः अभिभवति, तादृग्गणाकारा मरुतः शृण्वन्त्वित्यर्थः Sy.

१९. ०ष्याश्यः M.

२०. प्राप्तानि भवन्तु Sy. केन ? सामर्थ्यात् स्तुतिभिः। अन्येभ्यो मनुष्येभ्योऽतिशयेन यो मरुतः स्तौतीत्यर्थः Sk.

२१. स्तुतेः प्रेरयितारं यजमानमपि Sy.
सूर्यं च Sk.

पुरुषम् । सस्त्रुपीः[1] । इषोऽन्नानि[1] युद्धेऽभिगच्छति यो[2] गणः[3] ।

**पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयम् । अवोभिश्चर्षणीनाम् ॥६॥**

पूर्वीभिर्हि । बह्वीभिः[4] । हि[5] । दत्तवन्तः[6] । शरद्भिः[7] । मरुतः ! वयं भवद्भ्यो हवींषि । मनुष्याणाम्[8] । रक्षणार्थमिति ।

**सुभगः स प्रयज्यवो मरुतो अस्तु मर्त्यः । यस्य प्रयांसि पर्षथ ॥७॥**

सुभगः सः । सुभगः[9] । सः । प्रकर्षेण यष्टव्याः ! मरुतः ! भवतु । मर्त्यः[10] । यस्य । हवींषि[11] । आत्मानं[12] नयथ ।

**शशमानस्य वा नरः स्वेदस्य सत्यशवसः । विदा कामस्य वेनतः ॥८॥**

शशमानस्य । भजमानस्य[13] । वा[14] । नेतारः[15] । स्विन्नगात्रस्य[16] वा श्रमेण[17] । सत्यबलाः । जानीत[18] । कामम् । कामयमानस्य[19] ।

---

१. ०यच्छति is suggested for ०गच्छति ।
मरुद्भिः प्रत्तान्यन्नानि Sy.
अन्नकारणत्वाद् आपोऽत्र इष उच्यन्ते । याश्चेमा रश्मिभिराह्रियमाणा सूर्यं प्रति गता आगामिवृष्टिलक्षणा अन्नकारणभूता आपस्ताश्चेत्यर्थः Sk.

२. ०ण M.

३. V. Mādhava ignores चित् ।

४. ०भि P.

५. पूर्वीभिः शरद्भिरित्युभयत्र सप्तम्यर्थे तृतीया । शरच्छब्दश्च संवत्सरवचनः । हिशब्दोऽप्यर्थे । पूर्वेष्वपि संवत्सरेषु Sk.

६. युष्मभ्यं हवींषि Sy.

७. संवत्सरैः Sy.

८. सर्वस्य द्रष्टृणां सर्वज्ञानां भवतां सम्बन्धिभिः . . . रक्षणैर्युक्ताः सन्तो वयम् Sy. पुत्रपौत्रादिमनुष्याणाम् Sk.

९. शोभनधनः Sy.
भग इति धननाम । सुधनः Sk.

१०. मनुष्यो यजमानः Sy.

११. हविर्लक्षणान्यन्नानि Sy.

१२. आत्मनि सिञ्चथ स्वीकुरुथेत्यर्थः Sy.
पारयथ प्राप्नुथ । भक्षयथेत्यर्थः Sk.

१३. युष्मान् स्तुतिभिः Sy.
शशमानः स्तुतिकरणशीलः । तस्य Sk.

१४. वाशब्दः समुच्चये Sy.

१५. ०र P. M. ०रं D.
मनुष्याकाराः Sk.

१६. स्विगा० M. स्तावकमन्त्रोच्चारणजनितेन श्रमेण स्विद्यमानगात्रस्य Sy.

१७. युष्मत्परिचर्याश्रमेण । महता यत्नेन युष्मान् परिचरतेत्यर्थः Sk.

१८. लम्भयत, प्रयच्छतेत्यर्थः Sy.
ज्ञानेनात्र तत्पूर्वकं पूरणं लक्ष्यते । . . . पूरयत कामयमानस्येत्यर्थः Sk.

१९. ०यमास्य P.
वेनतिः कान्तिकर्मा Sy.

यूयं तत्सत्यशवस आविष्कर्त महित्वना । विध्यता विद्युता रक्षः ॥९॥

यूयं तत् । यूयम् । तत्[1] । सत्यबलाः![2] आविष्कुरुत[3] बलम्[4] । माहात्म्येन[5] । विध्यत च[6] । अशन्या[7] युद्धे[8] । रक्षः[9] ।

गूहता गुह्यं तमो वि यात विश्वमत्रिणम् । ज्योतिष्कर्ता यदुश्मसि ॥१०॥

गूहता[10] गुह्यम्[11] । नाशयत[12] । नाशयितव्यम्[12] । तमः । रक्षः । विविधम् । हत[13] । सर्वम्[14] । रक्षः[15] । ज्योतिः[16] । कुरुत । यदा[17] । वयं कामयामहे । भवतः[18] ।

## I.87.

प्रत्वक्षसः प्रतवसो विरप्शिनोऽनानता अविथुरा ऋजीषिणः ।
जुष्टतमासो नृतमासो अञ्जिभिर्व्यानज्रे के चिदुस्रा इव स्तृभिः ॥१॥

प्रत्वक्षसः । प्रकर्षेण शत्रूणां तनूकर्तारः[19] । प्रकृष्टबलाः । महान्तः[20] । अप्रणताः[21] । अनेकाकिन-

१. वृत्रवधादिषु प्रसिद्धं युष्मदीयं माहात्म्यम् Sy.

२. अन्यैरप्रधृष्यबलाः! Sy.

३. प्रकाशयत Sy. सर्वलोकप्रकाशं कुरुत Sk.

४. ०ल P. D.

५. माहाद्म्येन P.

६. ताडयत, नाशयतेत्यर्थः Sy. तापयत Sk.

७. विद्योतमानेन. . . तेन महत्त्वेन Sy. विद्युत्प्रजननेन रक्षांसि हतेत्यर्थः Sk.

८. युयुद्धे M.

९. अस्माकमुपद्रवकारिणं राक्षसादिकम् Sy.

१०. त M.

११. संवृतं कुरुत। यथाऽस्माभिर्न दृश्यते तथाऽदर्शनं प्रापयत। विनाशयतेत्यर्थः Sy. संवृणुत। अपनयतेत्यर्थः Sk.

१२. गुहायां स्थितं सर्वत्र व्याप्य वर्तमानम् Sy. संवरणयोग्यम् Sk.

१३. यापयत, अस्मत्सकाशान्निर्गमयत Sy.

१४. र्वं P.

१५. अत्तारं राक्षसादिकम् Sy. सर्वं भक्षयितारं रक्षःपिशाचादिकम् Sk.

१६. सूर्यादिकम् Sy. विद्युदाख्यम् Sk.

१७. यत् Sy. यद्वा। गुह्यं गुहायां शरीरान्तर्गतगुहारूपे हृदये भवं तमो भावरूपाज्ञानं तद् गूहत विनाशयत। अत्रिणं पुरुषार्थस्यात्तारं कामक्रोधादिकं सर्वं विनिर्गमयत। यज्ज्योतिः परतत्त्वसाक्षात्काररूपं ज्ञानं कामयामहे, प्राणापानादिपञ्चवृत्तिरूपा हे मरुतस्तत्कर्त कुरुत Sy.

१८. The words रक्षः, used immediately after तमः, and भवतः, at the end, seem to be unnecessary.
After प्रत्वक्षसः I. 87. 1., Ms. D. puts the figure ॥८६॥ to indicate the end of the eightysixth hymn. No such number is given in P. and M.

१९. शत्रुघातिन इत्यर्थः Sy.

२०. विविधेन जयघोषेणोपेताः Sy.

२१. ०व्रणकाः M. सर्वोत्कृष्टा इत्यर्थः Sy.

स्तृतीयसवनेऽन्वयात्[1]। ऋजीषिणः[2]। पर्याप्ततमाः[3]। नेतृतमाः[4]। आभरणैः[5]। व्यक्ता अभवन्[6]। के। चित्। रश्मय इव[7]। प्रभाभिरिति[8] मरुतो वदति।

**उपह्वरेषु यदचिध्वं ययिं वयइव मरुतः केन चित्पथा।**
**श्चोतन्ति कोशा उप वो रथेष्वा घृतमुंक्षता मधुवर्णमर्चते ॥२॥**

उपह्वरेषु[9]। यदा। अचिध्वं[10] सञ्चितमकुरुत[11]। मेघम्। पक्षिण इव। मरुतः। केन। चित्। पथा[12] शीघ्रं गच्छन्तस्तदानीम्[13]। उपक्षरन्ति[14]। मेघाः[15]। युष्माकम्। रथेषु[16] स्थितास्तथा सति[17]। उदकम्[17]। सिञ्चत[18]। मधुसदृशवर्णम्[19]। परिचरते[20]।

---

१. अवियुक्ताः। सप्तगणरूपेण सङ्घीभूता इत्यर्थः Sy. अभीरवः Sk.

२. तृतीयसवने ऋजीषस्याभिषवात् तत्र च मरुतः स्तूयन्ते इति तेषामृजीषित्वम्। यद्वा ऋजीषिणः प्रार्जयितारो रसानाम् Sy.

३. ०मताः M. ०मनाः P. अतिशयेन यष्टृभिः सेविताः Sy. प्रियतमा अवितृततमा वा Sk.

४. अतिशयेन मेघादेर्नेतारः Sy. नृशब्देन तदाकारस्तद्विषयं वा प्राशस्त्यं लक्ष्यते। अतिशयेन मनुष्याकाराः प्रशस्ता वेत्यर्थः Sk. ५. रूपाभिव्यञ्जकैः Sy. रत्नप्रायैः Sk. ६. वक्ता M. नभसि व्यक्ता दृश्यन्ते Sy. व्यज्यते Sk.

७. ये केचन सूर्यरश्मयो यथा नभसि दीप्यन्ते तद्वत् Sy. उस्राश्चन्द्ररश्मयः Sk.

८. स्वशरीरस्याच्छादकैः Sy. स्तृभिरित्यपि नक्षत्रनाम। यथा केचिदुस्राश्चन्द्ररश्मयो नक्षत्रैः सम्बद्धाः सौम्यरूपा व्यज्यन्ते तद्वदित्यर्थः Sk. ९. उपह्वर्तव्येषु गन्तव्येष्वस्माकं सन्निकृष्टेषु नभसः प्रदेशेषु Sy. गह्वरेषु पर्वतप्रदेशेष्वन्तरिक्षप्रदेशेषु वा व्यवस्थितम् Sk.

१०. यथा विध्वं M. वर्षणसामर्थ्येनोपचितं कुरुथ Sy. अथवा यदचिध्वमित्येतदेव चनतेर्गतिकर्मण उपधाया इत्वम्। चितिरेव वा सामर्थ्याद् गत्यर्थो द्रष्टव्यः। यदा गच्छथ ययिं मेघसमूहं प्रति Sk. ११. ०तमरुत P.

१२. केनचिदाकाशमार्गेण Sy. येनान्यः कश्चिदपि गन्तुं न शक्नोति तेन केनापीत्यर्थः Sk.

१३. ०न्तं त० M. ययिं गन्तारम्। नष्टारमित्यर्थः Sk. १४. जलं मुञ्चन्ति Sy.

१५. अथवा (येन) चर्ममयेन रज्ज्वा बद्धेन कूपादुदकमुत्तार्यते स कोश इत्युच्यते। इह तु तत्सदृशत्वान्मेघाः कोशा अभिप्रेताः। उदकपूर्णा मेघा इत्यर्थः Sk.

१६. रथे M. उप वो रथेषु। उपशब्दः सामीप्ये। समीपे वो युष्माकं स्वभूतानाम्। यत्र प्रदेशे युष्मदीया रथा व्यवतिष्ठन्ते तत्र रथचक्रधाराभिश्छिद्यमाना मेघाः प्रक्षरन्तीत्यर्थः Sk. १७. तथात्यु० P सभ्यु० M. वृष्ट्युदकम् Sy. वृष्टिलक्षणम् Sk. १८. अस्मदभिलषितां वृष्टिं कुरुतेत्यर्थः Sy. पातयतेत्यर्थः Sk.

१९. ०तेः M. युष्मान् हविर्भिः Sy. स्तोतुरर्थाय Sk.

२०. V. M. ignores उपह्वरेषु। It is explained as उपह्वर्तव्येषु गन्तव्येष्वस्माकं सन्निकृष्टेषु नभसः प्रदेशेषु by Sy. गह्वरेषु पर्वतप्रदेशेषु अन्तरिक्षप्रदेशेषु वा Sk.

प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे ।
ते क्रीळयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः ॥३॥

प्रैजामज्मेषु[1]। प्रकर्षेण चलति[2]। मरुताम्। उत्क्षेपकेषु[3]। गमनेषु[4]। एकाकिनीव[5]। भूमिः। यदि[6]। खलु[7]। अमी युक्ता[8] भवन्ति। उदकार्थम्[9]। ते। क्रीडनशीलाः। कम्पयितारः[10]। दीप्तायुधाः[11]। स्वयमेव। माहात्म्यम्[12]। कथयन्ति[13]। धून्वन्तः[14]।

स हि स्वसृत्पृषदश्वो युवा गणो३या ईशानस्तविषीभिरावृतः ।
असि सत्य ऋणयावानेद्योऽस्या धियः प्राविताथा वृषा गणः ॥४॥

स हि स्वसृत[15]। सः। हि[16]। स्वयमेव सर्ता[17]। पृषदश्वः[18]। तरुणः[19]। मरुद्गणः। अनया[20]। ईशितव्य

१. ०ज्ये० D. The correct reading would be प्रैषामज्मेषु
२. कम्पते Sy. कम्पते भूमिः Sk.
३. मेघानाम् Sy. गमनकालेषु Sk.
४. मरुतां सम्बन्धिषु ... मेघानां नियमनेषु सत्सु Sy.
यदा च यामेषु स्वरथेषु Sk.
५. ०कीनिव P.
गमनेषु missing M.
यथा भर्त्रा वियुक्ता जाया राजोपद्रवादिषु सत्सु निरालम्बा सती कम्पते तद्वत्। ... यद्वा। यदा खलु मरुतः स्वकीयान् रथान् युञ्जते अश्वैर्योजयन्ति तदानीमेषां रथानां सम्बन्धिषु पर्वतादेरुत्क्षेपकेषु यामेषु गमनेषु भूमिर्भीत्या कम्पते Sy.
६. यदा Sk.
७. हशब्दोऽत्र चार्थे Sk.
८. मेघान् सज्जीकुर्वन्ति Sy.
पृषतीरश्वान् ? (अश्वाः) युञ्जते Sk.
९. शोभनाय वृष्ट्युदकाय Sy.
उदकार्थं यदा गच्छन्ति मरुतः सन्नह्यन्ति च मेघान् हन्तुं तदा भयेन कम्पत इत्यर्थः Sk.
१०. चलनस्वभावाः Sy. शत्रूणाम् Sk.
११. दीप्ततोरणा वा Sk.
१२. ०द्म्यं P. स्वकीयम् Sy.
१३. व्यवहरन्ति प्रकटयन्तीत्यर्थः Sy.
पनतिः स्तुत्यर्थः। स्तावयन्ति। तथा तथा स्वयमेवोपकुर्वन्ति यथा यथा परितुष्टाः स्तोतारो मरुतां माहात्म्यं स्तुवन्तीत्यर्थः Sk. १४. धुन्वन्तः P.
पर्वतादीन् धुन्वन्तः सन्तः Sy.
धवतेर्गतिकर्मण इदं रूपम्। गन्तारो मेघान् यज्ञान् शत्रून् वा प्रति Sk.
१५. The correct reading would be स हि स्वसृत्
१६. हिशब्दः पदपूरणः Sk.
१७. नह्यन्यः कश्चिदस्य मरुद्गणस्य प्रेरकोऽस्ति Sy. स्वयंगामी Sk.
१८. पृषत्यः श्वेतबिन्द्वङ्किता मृग्योऽश्वस्थानीया यस्य स तथोक्तः Sy.
पृषद्वर्णो वडवः Sk.
१९. नित्यतरुणः Sy.
२०. मरुद्गणः। अनया missing in M.
अस्य Sy. अयेति बहुवचनस्य स्थाने व्यत्ययेनैकवचनम्। आभिस्तविषीभिः Sk.

पृथिव्येशितव्ये[1] (?)। ईशानः[2]। बलैः[3]। आवृतः। असि। सत्यकर्मा स्तोतॄणाम्। ऋणं प्रतिगन्ता[4](?)। प्रशस्यः। अस्य[5]। कर्मणः[6]। प्रकर्षेण रक्षिताऽसौ। वर्षिता[7] च। गणः[8]।

**पितुः प्रत्नस्य जन्मना वदामसि सोमस्य जिह्वा प्र जिगाति चक्षसा।**
**यदीमिन्द्रं शम्यृक्वाण आशतादिन्नामानि यज्ञियानि दधिरे ॥५॥**

पितुः प्रत्नस्य। पितुः[9]। पुराणस्य[10] स्तोत्रकुशलस्य सकाशात्। जननेन[11] वयमपि स्तुतिकुशलाः। स्तुमः[12]। सोमस्य सुतस्य[13]। दर्शनेन[14]। मम जिह्वा[15] स्तोतृकामा। निर्गच्छति[16]। यदा[17]। एनम्। इन्द्रम्। कर्मणि[18]। स्तोत्रवन्तो[19] मरुतः। व्याप्नुवन्[20]। अनन्तरम्[21]। एव[22]। यज्ञियानि[23]। नामान्युदकानि।

---

१. ०थिव्यो० M.
२. ०तव्ययोशा० P.
०तव्ययेशा० D.
सर्वस्य जगतः ... ईशनशीलः Sy.
३. अन्येषामसाधारणैः Sy.
एतैरात्मीयैः सेनालक्षणैर्बलैः Sk.
४. ०गतं P. ०गता D.
स्तोतॄणामृणस्यापगमयिता। बहुलस्य धनस्य दातेत्यर्थः Sy. यानि स्तोतॄणामृणानि तेषां यापयिता। अपगमयितेत्यर्थः Sk.
५. अस्मदीयस्य Sy.
६. प्रज्ञाया वा Sk.
७. जलानाम् Sy.
८. V. Mādhava ignores अथ।
९. Omitted by P. अस्माकं जनकस्य रहूगणस्य Sy.
पिता मरुतां रुद्रः Sk.
१०. रुद्राख्यस्य पितुः पुराणस्य सकाशात् Sk.
११. मरुतां जन्म तेन हेतुना Sk.
१२. ब्रूमः। वक्ष्यमाणं वृत्तान्तमस्माकं पितोपदिष्टवान्, अतो वयं ब्रूम इत्यर्थः। Sy. यस्माद्रुद्रात् पुराणाज्जातत्वादभिजनोपेता मरुतस्तस्मादेतान् स्तुम इत्यर्थः Sk.
१३. यज्ञेषु Sy.
द्वितीयार्थे षष्ठी। सोमं प्रति Sk.
१४. प्रकाशमानयाऽऽहुत्या सहिता Sy.
यस्माच्च सर्वज्ञेयानां ज्ञातार इत्यर्थः Sk.
१५. स्तुतिरूपा वाक् Sy.
मरुतां जिह्वा Sk.
१६. मरुद्गणं प्रकर्षेण गच्छति। यज्ञेषु सोमाहुतिः स्तुतिश्च मरुद्भ्यः क्रियते Sy.
प्रकर्षेण गच्छति। सोममपि यज्ञेषु तस्मादेव पिबन्तीत्यर्थः Sk.
१७. यस्मात् Sy; Sk.
१८. वृत्रवधादिरूपे Sy.
वृत्रवधादौ Sk.
१९. 'प्रहर भगवो जहि वीरयस्व' इत्येवंरूपया स्तुत्या युक्ताः सन्तः Sy.
सर्वस्तोतॄणां स्तुत्या इत्यर्थः Sk.
२०. न पर्यत्याक्षुः Sy.
व्याप्नुवन्ति। यस्माच्च वृत्रवधादौ कर्मणीन्द्रेण सदृशाः। नेन्द्राण्यूना इत्यर्थः Sk.
२१. ०वननन्त० M.
एवमिन्द्रप्राप्त्यनन्तरमेव Sy.
आदस्मात् Sk.
२२. इच्छब्दस्तु पदपूरणः Sk.
२३. यज्ञार्हाणि 'ईदृङ् चान्यादृङ् च' इत्येवमादीनि नामानीन्द्रसकाशाल्लब्ध्वा Sy.

प्रयच्छन्ति[१]।

**श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः।**
**ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ॥६॥**

श्रियसे कम्। श्रयणाय[२]। उदकम्[३]। तेजोभिः[४]। संमिमिक्षिरे समाददुः[५]। ते। रश्मिभिर्बन्धकैः[६]। ते। रसाहरणशीलैर्भानुभिः (?)[७] शोभनखादियुक्तास्तथा[८]। वाशीमन्तो[९] वाशी चायुधम्। गन्तारः[१०]। अभीरवः। लभेयाहम्[११]। प्रियम्। मारुतम्। धामेति[१२] वर्षकामस्य सूक्तम्[१३]।

---

१. धृतवन्तः। तस्मादेषां यज्ञे सोमाहुतिः स्तुतिश्च क्रियते Sy. तैस्तैर्नामभिर्यज्ञेषु यष्टृभिरिज्यन्त इत्यर्थः Sk.

२. सस्यसम्पत्तिलक्षणायै श्रियै Sk. श्रयितुं प्राणिभिः सेवितुम् Sy.

३. वृष्ट्युदकम् Sy.

४. दीप्यमानैः सूर्यरश्मिभिः Sy.

५. सम्यग्मेढुमिच्छन्ति। पृथिवीं वृष्ट्युदकेन सम्यक् सेक्तुमिच्छन्ति Sy. सम्यक् सेक्तुमिच्छन्ति। विद्युद्भिर्वर्षन्तीत्यर्थः Sk.

६. M. repeats ते रश्मिभिः।

७. स्तुतिमद्भिर्ऋत्विग्भिस्सह Sy. स्तुतिमद्भिः...अश्वै रथैर्वा। सर्वैश्चोपकरणैर्वहन्तीत्यर्थः Sk.

८. ०ननखा० D. शोभनस्य हविषो भक्षयितारो भवन्ति Sy. खादिरत्र कट्टारिकाकारो मरुतामायुधविशेषः कवष्या (?) वा। उभयत्र हि खादिशब्दस्य दृष्टः प्रयोगः। . . . शोभनाः खादयो येषां ते सुखादयः Sk.

९. वाशी इति वाङ्नाम। शोभनया स्तुतिलक्षणया वाचोपेताः Sy. वाङ्नाम वा वाशीशब्दः तद्वन्तः Sk.

१०. गन्तारः शत्रून् प्रति इषितारो वा स्तुतीनाम्। अथवा इडित्यन्ननाम। तद्वन्त इषिणः Sk. ईषणिन इति वैषणिन इति वार्षणिन इति वा। वाशीति वाङ्नाम। वाश्यते इति सत्याः N. 4. 16.

११. लब्धवन्तः Sy. वेद्म्यहम् Sk.

१२. मारुतं धाम स्थानं वा नाम वा जन्म वा तेजो वा सामर्थ्यलक्षणम् Sk.

१३. अथवान्यथास्यार्धर्चस्यार्थयोजना। श्रियसे कमिति कंशब्दः पदपूरणः सुखनाम वा। सस्यसम्पत्तिलक्षणायै श्रियै सुखाय च सर्वप्राणिनां भानुभिः संमिमिक्षिरे ते रश्मिभिः। भानुशब्दोऽत्रान्तर्णीतमत्वर्थः। संमिमिक्षिरे इति म्यक्षतेर्गतिकर्मणो रूपम्। रसानुप्रदानकाले दीप्तिमद्भिरादित्यरश्मिभिः सह संगच्छन्ते ते मरुतः। त एव ऋक्वभिः स्तुतिमद्भिः स्तोतृभिः सह यागकाले संगच्छन्ते सुखादयः Sk.
V. Mādhava ignores ते.
Ms. D. puts the figure ॥८७॥ here to indicate the end of the eightyseventh hymn. No such number is given in P. and M.
This stanza is omitted by P.

I.88.

आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः ।
आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः ॥१॥

आ विद्युन्मद्भिः[1]। आयात[2]। दीप्तिमद्भिः[3]। मरुतः। स्वञ्चनैः[4]। रथैः। ऋष्टिमद्भिः[5]। अश्वपक्षैः[6]। आपतत[7]। वृद्धतमेन[8]। अन्नेन[9]। अस्मान्[10]। पक्षिणः। इव। सुकर्माणः[11][12]।

तेऽरुणेभिर्वरमा पिशङ्गैः शुभे कं यान्ति रथतूर्भिरश्वैः ।
रुक्मो न चित्रः स्वधितीवान्पव्या रथस्य जङ्घनन्त भूम ॥२॥

तेऽरुणेभिः[13]। ते। अरुणैः[14]। पिशङ्गैः[15]। रथस्य तारकैः[16]। अश्वैः[17]। वर्षिष्ठम्[18]। कञ्चन देशम्[19]।

---

१. अथातो मध्यमस्थाना देवगणाः। तेषां मरुतः प्रथमागामिनो भवन्ति। मरुतो मितराविणो वा। मितरोचिनो वा। महद् द्रवन्तीति वा। तेषामेषा भवति । . . . विद्युन्मद्भिर्मरुतः । स्वर्कैः स्वञ्चनैरिति वा। स्वर्चनैरिति वा। स्वर्चिभिरिति वा। रथैरायात। ऋष्टिमद्भिः। अश्वपर्णैरश्वपतनैः। वर्षिष्ठेन च नोऽन्नेन वय इवापतत। सुमायाः कल्याणकर्माणो वा। कल्याणप्रज्ञा वा N. 11. 14.

२. अस्मदीयं यज्ञम् Sy. ३. विद्युता संयुक्तैः Sk. ४. स्वञ्च० M. शोभनगमनयुक्तैः। यद्वा शोभनमर्कोऽर्चनं स्तुतिर्येषामस्ति तादृशैः। अथवा शोभनदीप्तियुक्तैः Sy. अर्चनमर्कः स्तुतिः। शोभनोऽर्को येषां ते स्वर्काः। तैः स्वर्कैः। सुष्ठु स्तुत्यैरित्यर्थः Sk.

५. ऋष्टयः शक्तिरूपाण्यायुधानि। स्थूणा इत्यन्ये। तद्वद्भिः Sy. शक्तिमद्भिस्तोरणवद्भिर्वा Sk.

६. अश्वानां पतनं गमनं येषामस्ति तादृशैः। यद्वा। रंहणशीला मेघा रथाः। तैः सहान्तरिक्षे वर्षणार्थमागच्छत। कीदृशैः ? विद्युन्मद्भिः-विद्युत् तडित् तद्वद्भिः। स्वर्कैः. . . शोभनगमनैः। ऋष्टिमद्भिः। अर्षणं गमनं तत्स्वभावनीरयुक्तैः। अश्वपर्णैः अश्वं व्याप्तं, पर्णं पतनं गमनं येषाम्। अन्तरिक्षं व्याप्य वर्तमानैरित्यर्थः Sy. अश्वपतनैः Sk.

७. आगच्छतेत्यर्थः Sy.

८. वर्षिष्ठया इषेति हेतौ तृतीया। प्रयोजनस्य च हेतुत्वेन विवक्षा। न इत्यपि तादर्थ्ये चतुर्थी। वृद्धतमेनास्मदर्थेनान्नेन Sk. ९. अस्मभ्यं दातव्येन Sy.

१०. वृद्धतममन्नमस्मभ्यं दातुमित्यर्थः Sk.

११. शोभनप्रज्ञा वा Sy. सुप्रज्ञानाः Sk.

१२. This stanza is omitted by P. P. reads सुकर्माणः only.

१३. पूर्वोक्ता मरुतः Sy.

१४. तरुणैः D. १५. पिङ्गलवर्णैः Sy. कपिलैश्च Sk. १६. रतस्य P.

१७. प्रेरयितृभिः Sy. रथे व्यवस्थिता ये त्वरन्ति तुर्वन्ति वा मेघान्। हिंसन्तीत्यर्थः। ते रथतुरः। तै रथतूर्भिरश्वैः Sk.

१८. देवानां वरीतारम् Sy. उत्कृष्टम् Sk.

१९. शब्दयितारं स्तुवन्तं यजमानम् Sy.

आयान्ति। उदकार्थम्[1]। मणिः[2]। इव[3]। चित्रः[4]। आयुधवान्[5] मरुद्गणस्ते[6]। रथचक्रस्य। धारया। भूमिम्[7]। घ्नन्ति[8] मरुतः।

**श्रिये कं वो अधि तनूषु वाशीर्मेधा वना न कृणवन्त ऊर्ध्वा।**
**युष्मभ्यं कं मरुतः सुजातास्तुविद्युम्नासो धनयन्ते अद्रिम् ॥३॥**

**श्रिये कम्।** शोभनायै[9] भवति। वः[10]। अङ्गेषु[11]। वाशीः[12]। यज्ञान्। वनानि[13]। इव मरुतः। ऊर्ध्वान्[14]। कृण्वन्ति[15]। युष्मभ्यम्। मरुतः। सुजाताः[16]। बहुधनाः[17]। कम्[18]। ग्रावाणमभिषवाय। सञ्चिन्वन्ति[19][20]।

---

१. तस्य शोभां कर्तुम्। अथवा शुभे उदकाय। वृष्ट्यर्थमित्यर्थः Sy.
मेघं प्रति Sk.

२. स्वधितिरिति वज्रनाम। यथायं रोचनः पूजनीय आयुधवांश्च भगवानादित्यः भ्राजमान आगच्छति तद्वत् Sk.

३. अपि P. रोचमानं सुवर्णमिव Sy.

४. अतिशयेन दर्शनीयः।...शत्रूणां खण्डकेनायुधेनोपेतः Sy.

५. स्वधितिरिति वज्रनाम। यथायं रोचनः पूजनीय आयुधवांश्च भगवानादित्यः भ्राजमान आगच्छति तद्वत् Sk.

६. ०णस्थे P.

७. बहुपर्यायोऽयं भूमशब्दः। बह्वपि मेघजातम् Sk.

८. स्तोतृरक्षणार्थमागतानां तेषां मरुतां भारमसहमाना भूमिरतिपीडिता बभूवेत्यर्थः Sy.

९. ऐश्वर्यार्थम् Sy.
सुखाय च सर्वप्राणिनाम् Sk.

१०. युष्माकं स्वभूताः Sk.

११. शरीरेष्वंसप्रदेशेषु Sy.
मेघशरीराणामुपरि। साकाङ्क्षत्वाद्वर्तमाना इति वाक्यशेषः। मेघं छिन्दन्त इत्यर्थः Sk.

१२. व० P. शत्रूणामाक्रोशकमाराख्यमायुधम् Sy. वाशीरायुधविशेषः। अथवा व इत्येतन्नूष्वित्येतेन सम्बध्यते न वाशीरित्यनेन। युष्माकं शरीराणामुपरि वर्तमाना वाश्या युष्माभिर्गृहीता इत्यर्थः Sk.

१३. ०नान् P.
उच्छ्रितान् वृक्षसमूहानिव Sy.
यथा वृष्टिद्वारेण वनानि जनयन्त्येवं यज्ञानपीत्यर्थः Sk.

१४. एकाहाहीनसत्ररूपेणोच्छ्रितान् Sy.

१५. यजमानैः कारयन्ति Sy.

१६. शोभनजननयुक्ताः Sy.

१७. द्युम्नं द्योततेरन्नमिहाभिप्रेतम्। बहुहविर्लक्षणान्ना यजमानाः Sk.

१८. सुखकरम् Sy.
कं सुखम् Sk.

१९. धनं कुर्वन्ति। युष्माकं यागाय ग्रावभिरभिषुण्वन्तीत्यर्थः Sy.
धनीकुर्वन्ति। अभिषवार्थं परिगृह्णन्तीत्यर्थः।...अथवा धन धान्ये इत्येतस्य सामर्थ्याद् वृद्धचर्थस्य संस्कारार्थस्य वा रूपम्। अद्रिमित्यभिषवग्राव्णः सम्बन्धादादरणाद्वा सोमोऽभिप्रेतः। वसतीवर्यैकधानाभिर्वर्धयन्ति संस्कुर्वन्ति वेत्यर्थः Sk.

२०. V. Mādhava ignores कम्। अधि

अहा॑नि॒ गृध्राः॒ पर्या॑ व॒ आगु॑रि॒मां धियं॑ वार्का॒र्यां च॑ दे॒वीम् ।
ब्रह्म॑ कृ॒ण्वन्तो॒ गोत॑मासो अ॒र्कैरू॒र्ध्वं नु॑नुद्र उत्स॒धिं पिब॑ध्यै ॥४॥

अहानि । अहा[1]नि । तृषिता[2]ः सर्वाण्येव गोतमाः । युष्मान्[3] । पर्यागुः[4] । इदम् । कर्म[5] । च । दैवम्[6] । वृतैर्ऋत्विग्भिः[7] कर्तव्यम् अकुर्वन् । कर्म[8] । कुर्वन्तः[9] । गोतमाः । ऊर्ध्वम् । उत्क्षिप्तवन्तः[10] । स्तोत्रैः[11] । उत्सनिधानं[12] कूपम् । पानाय[13][14] ।

ए॒तत्त्यन्न योज॑नमचेति स॒स्वर्ह॒ यन्म॑रुतो॒ गोत॑मो वः ।
पश्य॒न्हिर॑ण्यचक्रा॒नयो॑दंष्ट्रान्वि॒धाव॑तो व॒राहू॑न् ॥५॥

एतत्[15] त्यत्[16] । एतत् । स्तोत्रसंघटनं[17] मया कृतम् । एतत् । इव । ज्ञायते[18] नान्यदस्त्यस्योपमानम्[19] । प्रकाशितवान्[20] । गोतमः[21] । युष्माकम्[22] । यत्[23] । मरुतः । पश्यन्[24] । हिरण्यचक्रान्[25] ।

---

१. शोभनोदकोपेतानि दिनानि Sy. यागानामहःकालत्वादहानीत्यनेन यागो लक्ष्यते। सप्तम्यर्थे चैषा प्रथमा। अहस्सु। यागकाल इत्यर्थः Sk.
२. जलाभिकाङ्क्षायुक्तान् Sy. अभिकाङ्क्षितारः फलानाम् Sk.
३. वो युष्माकं स्वभूतानाम् Sk.
४. आभिमुख्येन प्राप्तानि Sy. प्राप्ताः कुर्वन्तीत्यर्थः Sk.
५. ज्योतिष्टोमादिलक्षणम् Sy. यागाख्यम् Sk. ६. दे० M. द्योतमानम् Sy. देवीं देवयोग्यां दीप्तां वा। स्वगुणैरत्यन्तोत्कृष्टामित्यर्थः Sk.
७. उदकैर्निष्पाद्याम् Sy. वृतैर्ऋत्विग्भिर्वाचा वा क्रियमाणत्वाद् वार्कार्या स्तुतिरिहाभिप्रेता। तां च Sk.
८. हविर्लक्षणमन्नम् Sy. स्तुतिलक्षणम् Sk. ९. मरुद्भ्यः Sy.
१०. देशान्तरे वर्तमानं कूपमुत्खातवन्तः Sy. आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्देशः। वयं गोतमप्रभृतय उत्क्षिप्तवन्त इत्यर्थः Sk. ११. मन्त्रसाध्यैः Sy. मन्त्रैः Sk. १२. ०सन्नि० P. D. उत्सो जलप्रवाहोऽस्मिन् धीयत इत्युत्सधिः कूपस्तम् Sy. कूप इव यः पीयते स उत्सधिरत्यन्तप्रभूतः सोमः। तमुत्सधिम् Sk.
१३. यूयं पास्यथेत्येवमित्यर्थः Sk.
१४. V. Mādhava ignores आ
१५. एत P. D. M.
१६. त्यत् प्रसिद्धमन्यदुष्कृष्टं स्तोत्रमिव Sy.
१७. युज्यतेऽनेन देवतेति योजनम् एतत्सूक्तसाध्यं स्तोत्रम् Sy. युज्यन्ते प्राणवियोगादिनाऽनेन शत्रव इति योजनं सेनालक्षणं बलमिहाभिप्रेतम्। एतद्युष्मदीयं बलम् Sk. १८. सर्वैः Sy.
१९. ०स्त्यस्य सोमपानं M. सस्वरन्तर्हितम् ।... देवतामाहात्म्याद् दर्शितं युष्मदीयं सेनालक्षणं बलं केनचिदपि न दृश्यत इत्यर्थः Sk.
२०. ०शिवा० P. उच्चारितवान् खलु Sy.
२१. कर्मकर्तृश्रुतेः साकाङ्क्षत्वात् स्तुतवानिति वाक्यशेषः Sk. २२. युष्मदर्थम् Sy. वो युष्मान् Sk. २३. यम् P. यदेतत्सूक्तरूपं स्तोत्रम् Sy.
२४. सम्यग्जानन् Sy.
२५. हिरण्मयचक्ररथारूढान्, हितरमणीयकर्मयुक्तान् वा Sy. हिरण्यशब्दोऽत्र... हिरण्मये वर्तते। हिरण्मयानि रथचक्राणि येषां ते हिरण्यचक्राः। तान् हिरण्यचक्रान्। हिरण्मयरथस्थानित्यर्थः Sk.

अयोदंष्ट्रान्[1]। विधावतः[2]। वराहूदारान्[3] (?) भवतां रथान्[4] धनं रथेषु तिष्ठति[5]।

**एषा स्या वो॑ मरुतोऽनुभ॒र्त्री प्रति॑ ष्टोभति वा॒घतो॒ न वाणी॑ ।**
**अस्तो॑भयद्वृ॒थासा॒मनु॑ स्व॒धां गभ॑स्त्योः ॥६॥**

एषा स्या वः[6]। सा। एषा मदीया। वाणी। मरुतः! भवद्भ्यो हविषाम्। अनुभर्त्री[7]। युष्मान् प्रतिष्टोभति[8]। यथा[9]। ऋत्विजः[10]। हस्तयोः[11]। अन्नं दत्त्वा[12]। तदनन्तरमेव। अनायासेन[13]। आभिः स्तुतिभिः। मरुद्गणो गोतमम्[14] अस्तोभयत्[15] तेनान्नेनेत्यन्नकामस्य स्तुतिः[16]।

---

१. दशतीति द्रंष्ट्रा चक्रधारा। अयोमयीभिश्चक्रधाराभिर्युक्तान्। यद्वा दंशनसाधना ऋष्टयो दंष्ट्राः। अयोमया ऋष्टयो येषाम् Sy. दंष्ट्रास्थानीयत्वाद्रथोन्धीरत्र दंष्ट्रे उच्यते। अयोमयान् रथोन्धीन्। लोहमयोन्धीकरथस्थानित्यर्थः Sk.

२. विविधमितस्ततः प्रवर्तमानान् Sy. इतश्चेतश्च विविधं धावतः Sk.

३. पराहूदारान् P. पराह्दारान् M. वरस्योत्कृष्टस्य शत्रोर्हन्तॄन्। यद्वा उत्कृष्टस्य वृष्ट्युदकस्याहर्तॄन्। अथवा उत्कृष्टानां देवतानामाह्वातॄन्। वरस्य हविषो भक्षयितॄन् वा। एवंभूतान् मरुतः पश्यन् . . . गोतमो यत्स्तोत्रं कृतवान् तदेतत्सर्वोत्कृष्टं सद् अस्माभिः सर्वैरुपलभ्यत इत्यर्थः Sy. वरमुत्कृष्टं श्रेष्ठमिति पर्यायाः। हुशब्दोऽपि हन्तेर्वा ह्वयतेर्वा हरतेर्वा जुहोतेर्वा दानार्थस्य। उत्कृष्टस्य शत्रोर्हन्तॄन् आह्वातॄन् वोदकस्य वाहर्तॄन् हविषो वा भक्षयितॄन् Sk. अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते N. 5. 4. ४. ०थं P.

५. V. Mādhava ignores ह

६. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। या पुरापि स्तुतवती Sk.

७. ०भक्त्री M. युष्माननुहरन्ती युष्मद्गुणसदृशी Sy. युष्मद्गुणानां धारयित्री। सकलयुष्मद्गुणसङ्कीर्तनयुक्तेत्यर्थः Sk.

८. प्रतीत्येषोऽभीत्येतस्य स्थाने Sk.

९. प्रत्येकं स्तौति स्तोभतिः स्तुतिकर्मा। . . . नशब्दः सम्प्रत्यर्थे। तदुक्तं यास्केन —'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' (N. 7. 31.) Sy. १०. वत्तिजः P. इदानीम् ऋत्विक्सम्बन्धिनी वागपि Sy.

११. अस्मदीययोर्बाह्वोः Sy. सप्तमीनिर्देशाच्च स्थितामिति वाक्यशेषः। एषां पश्चाद्धविर्लक्षणानां हस्तयोः स्थितानाम्। हस्तस्थस्य हविषः प्रदानोत्तरकालमित्यर्थः Sk.

१२. दत्वा P. D. M. स्वधाम्, अन्ननामैतत्। यदा बहुविधमन्नं मरुतः स्थापयन्ति। तामनुलक्ष्येत्यर्थः Sy.

१३. वृथाऽनायासेनासामाभिर्ऋग्भिरस्तोभयत् Sy. १४. मोमम् M.

१५. अन्यैरपि स्वपुत्रैः पौत्रैश्च ऋत्विग्भिर्वा स्तावयति Sk.

१६. V. Mādhava ignores अनु Ms. D. puts the figure ॥८८॥ here to indicate the end of the eightyeighth hymn. No such number is given in P. and M.

I.89.

आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिदः॑ ।
दे॒वा नो॒ यथा॒ सद॒मिद्वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वेदि॑वे ॥१॥

आ नो भद्राः। आयन्तु[1]। अस्मान्। सर्वतः। भजनीयानि[2]। कर्माणि[3]। असुरैरहिंसितानि[4]। अपरिवृतानि[5] च। फलोद्भेदनानि[6]। देवाः[7]। यथा। अस्माकम्। सदा। एव। वर्धनाय। स्युः[8]। अप्रगच्छन्तः[9]। रक्षितारश्च। अहन्यहनि।

दे॒वानां॑ भ॒द्रा सु॑म॒तिर्ऋ॑जूय॒तां दे॒वानां॑ रा॒तिर॒भि नो॒ नि व॑र्तताम् ।
दे॒वानां॑ स॒ख्यमुप॑ सेदिमा व॒यं दे॒वा न॒ आयुः॒ प्र ति॑रन्तु जी॒वसे॑ ॥२॥

देवानां[10] भद्रा। देवानाम्। भजनीया[11]। सुमतिः[12]। ऋजुमिच्छताम्[13]। देवानाम्। दानम्।

१. ०या० P. आगच्छन्तु Sy; Sk.
२. समीचीनफलसाधनत्वेन कल्याणाः Sy. कल्याणाः Sk.
३. अग्निष्टोमादयो महायज्ञाः Sy. क्रतवो यज्ञाः। ... स्वतस्सम्बन्धिनश्चात्मनः सम्बन्धिनां च पुत्रादीनामस्माकं यज्ञा उपनयन्त्वित्यर्थः Sk.
४. यज्ञविध्वंसिभी रक्षआदिभिरविगुणा इत्यर्थः Sk.
५. शत्रुभिरपरिगताः, अप्रतिरुद्धा इत्यर्थः Sy. अन्यैरप्राप्तपूर्वा इत्यर्थः Sk.
६. शत्रूणामुद्भेत्तारः Sy. उद्भिन्नामैकाहः। तत्प्रभृतयः। अथवा उद्भिन्दन्ति फलानीत्युद्भिदः। जनयितारः फलानामित्यर्थः Sk.
७. देवा नो यथा सदा वर्धनाय स्युः। अप्रायुवोऽप्रमाद्यन्तः। रक्षितारश्च। अहन्यहनि N. 4. 19.
८. तथाऽऽगच्छन्त्विति सम्बन्धः Sy.
९. स्वकीयं रक्षितव्यमपरित्यजन्तः Sy. अप्रमोषितार आयुषः। जीवितस्य चानपहर्तार इत्यर्थः। अथवा प्रायुव इति अयतेर्गतिकर्मण इदं रूपम्। अप्रगन्तारः। नित्यसन्निहिता इत्यर्थः। अथवा प्रायुव इति यौते रूपम्। अन्यैरर्थैरप्रश्रिता बुद्धिर्येषां तेऽप्रायुवः। अनाक्षिप्तचेतस्का इत्यर्थः Sk.
१०. देवानां वयं [सुमतौ] कल्याण्यां मतौ। ऋजुगामिनाम्। ऋतुगामिनामिति वा। देवानां दानमभि नो निवर्तताम्। देवानां सख्यमुपसीदेम वयम्। देवा न आयुः प्रवर्धयन्तु चिरं जीवनाय N. 12. 39.
११. ०नीय P. ०जनी D. सुखयित्री Sy. कल्याणी Sk.
१२. ०ति M. अनुग्रहात्मिका बुद्धिरस्माकमस्त्विति शेषः Sy. शोभना परानुग्रहात्मिका बुद्धिः Sk.
१३. आर्जवयुक्तं सम्यगनुष्ठातारं यजमानमात्मन इच्छताम्। ... तदभिमतफलप्रदानमप्यस्माकं भवत्वित्यर्थः Sy. ऋजवः सदाचारा मनुष्याः। तत्कामिनाम् Sk.

अस्मान् । अभिनिवर्ततताम्[1] । देवानाम् । सख्यम्[2] । उपगच्छेम[3] । वयम् । देवाः । नः । आयुः[4] । वर्धयन्तु[5] । जीवनाय ।

**तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।**
**अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥३॥**

तान् पूर्वया । तान्[6] । पूर्वया[7] । वाचा[8] । ह्वयामः । वयम् । भगादीन्[9] । दक्षं[10] च । अक्षयम्[11] । सरस्वती[12] च[13] । अस्माकम् । सुभगा[14] । सुखम् । करोतु[15] ।

**तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः ।**
**तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥४॥**

तन्नो वातः[16] । तत्[17] । नः[18] । वातः[19] । सुखस्य भावयितृ । आत्मीयं भेषजम् । वातु[20] ।

---

१. देवा अस्मभ्यं ददत्वित्यर्थः Sk.
२. सखित्वं, सख्युः कर्म वा Sy.
३. प्राप्नुवाम Sy.
४. आयुध M. ५. वर्धन्तु D. M.
६. विश्वान् देवान् Sy.
७. पूर्वकालीनया नित्यया Sy. पूर्वसङ्कल्पितया पूर्वप्रयुक्तया वा Sk.
८. वेदात्मिकया ...। यद्वा निविदा 'विश्वे देवाः सोमस्य मत्सन्' इत्यादिकया वैश्वदेव्या निविदा Sy. स्तुतिलक्षणया Sk. ९. ०दिं P. भजनीयं द्वादशानामादित्यानामन्यतमम् । मित्रम् प्रमितेस्त्रायकमहरभिमानिनं देवम् । ... अदितिम् अखण्डनीयामदीनां वा देवमातरम् Sy. १०. ०क्षां D. सर्वस्य जगतो निर्माणे समर्थं प्रजापतिम् । यद्वा । प्राणरूपेण सर्वेषु प्राणिषु व्याप्य वर्तमानं हिरण्यगर्भम् Sy.
११. क्ष० M. शोषणरहितं, सर्वदैकरूपेण वर्तमानं मरुद्गणम् । अर्यमणम् अरीन् मन्देहादीनसुरान् यच्छति नियच्छतीत्यर्यमा सूर्यः । ... तम् । वरुणम्, वृणोति पापकृतः स्वकीयैः पाशैरावृणोतीति राज्यभिमानिदेवो वरुणः । ... सोमम् द्वेधात्मानं विभज्य पृथिव्यां लतारूपेण दिवि च चन्द्रात्मना देवतारूपेण वर्तमानम् । अश्विना अश्ववन्तौ । यद्वा सर्वं व्याप्नुवन्तौ । ... एवंभूतान् सर्वान् देवान् अस्मद्रक्षणार्थमाह्वयामः Sy. अशोषयितारं वा Sk.
१२. अस्माभिराहूता Sy.
१३. M. and P. add वा after च
१४. शोभनधनोपेता Sy.
१५. V. Mādhava ignores मित्रम् । अदितिम् । अर्यमणम् । वरुणम् । सोमम् । अश्विना
१६. तनो वतेः P.
१७. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यद्वयमिच्छामस्तत् Sk.
१८. अस्मान् Sy; Sk.
१९. तत् । नः । वातः is omitted by M.
२०. वा M. पातु P. D. प्रापयतु Sy. गमयतु । ददात्वित्यर्थः Sk.

तत्[1]। माता। पृथिवी[2]। तत्[1]। पिता। द्यौः[2]। तत्[1]। ग्रावाणः[3]। सोमस्य[4] सोतारः। सुखस्य[5]
भावयितारः। तत्[1]। अश्विनौ। युवामपि। धिषणाहौं[6] स्तुत्यहौं। शृणुतम्[7]।

**त॒मीशा॑नं॒ जग॑तस्त॒स्थुष॒स्पतिं॑ धियंजि॒न्वमव॑से हूमहे व॒यम् ।**
**पू॒षा नो॒ यथा॒ वेद॑सा॒मस॑द्वृ॒धे र॑क्षि॒ता पा॒युरद॑ब्धः स्व॒स्तये॑ ॥५॥**

**तमीशानम्**। तम्[8]। ईश्वरम्[9]। जङ्गमस्य। स्थावरस्य[10] च। पालयितारम्[11]। कर्मणः प्रीणयि-[12]तारम्। रक्षणाय। ह्वयामः। वयम्। पूषा। अस्माकम्। धनानाम्[13]। भवति[14]। यथा। वर्धनाय[15] रक्षोभ्य रक्षिता। पालकः[16]। अहिंसितः। अविनाशाय[17]।

**स्व॒स्ति न॒ इन्द्रो॑ वृ॒द्धश्र॑वाः स्व॒स्ति नः॑ पू॒षा वि॒श्ववे॑दाः ।**
**स्व॒स्ति न॒स्तार्क्ष्यो॒ अरि॑ष्टनेमिः स्व॒स्ति नो॒ बृह॒स्पति॑र्दधातु ॥६॥**

**स्वस्ति नः**। स्वस्ति[18]। अस्माकम्। इन्द्रः। वृद्धान्नः[19]। स्वस्ति। नः। पूषा। विश्वधनः[20]।

---

१. भेषजम् Sk.
२. विवाहकाले द्यौरहं पृथिवी त्वमिति वरे वध्वां च द्युत्वपृथिवीत्वाध्यारोपात् सर्वमनुष्याणां च वधूवरमातापितृकत्वात् तद्धर्मेण मातृत्वेन पितृत्वेन च व्यपदेशः पृथिव्या दिवश्चायं तन्माता पृथिवी तत्पिता द्यौरिति Sk.
३. यागद्वारेण Sk. ४. अभिषवसाधनाः Sy. सोमाभिषवकारिणः Sk.
५. यागफलभूतस्य...। यद् भेषजमस्माभिर्वाय्वादिषु प्रार्थ्यते तद् भेषजं देवानां भिषजौ युवामस्माकमनुकूलं यथा भवति तथा जानीतमित्यर्थः Sy.
६. धिषणा वाक्। तस्याः पुत्रौ। अथवा धीरिति प्रज्ञानाम। ष्णौ वेष्टने। धीर्वेष्टयित्री सर्वार्थग्रहणसमर्था ययोस्तौ धिष्णौ।... अत्यन्तप्रज्ञावित्यर्थः Sk.
७. श्रवणेनात्र तत्पूर्वकं करणं लक्ष्यते Sk.
८. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यमन्येऽपि सर्वे आह्वयन्ति तम् Sk. ९. ऐश्वर्यवन्तम् Sy.
१०. D. repeats स्थावरस्य
११. स्वामिनम् Sy; Sk.
१२. कर्मभिः प्रीणयितव्यम् Sy. सर्वप्रज्ञानां प्रीणयितारम् Sk.
१३. धनान् M. ज्ञानानां वा Sk.
१४. प्रति M. भवेत् Sk.
१५. यथा नो धनवृद्धिकरो ज्ञानवृद्धिकरो वा स्यादित्यर्थः Sk.
१६. सोमानाम् Sk. १७. ०शय P. D. अविनाशकरश्च स्यादित्यर्थः Sk.
१८. अविनाशम् Sy.
१९. वृद्धं प्रभूतं श्रवः श्रवणं स्तोत्रं हविर्लक्षणमन्नं वा यस्य तादृशः Sy. प्रवृद्धकीर्तिः प्रवृद्धधनः प्रवृद्धान्नो वा Sk.
२०. ०धन P. M. विश्वानि वेत्तीति विश्ववेदाः। यद्वा विश्वानि सर्वाणि वेदांसि ज्ञानानि धनानि वा यस्य तादृशः Sy. सर्वज्ञः सर्वधनो वा Sk.

स्वस्ति । नः । ताक्ष्यॅश्च[1] । अहिंसितायुधः[2] । स्वस्ति । अस्माकम् । बृहस्पतिश्च[3] । दधातु[4] ।

**पृषंदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ।**
**अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥७॥**

पृषदश्वा मरुतः । पृषद्वर्णाश्वाः[5] । मरुतः । गोमातरः[6] । उदकं प्रति गन्तारः[7] । यज्ञेषु । गमनशीलाः । अग्न्यास्याः[8] । मन्तारः[9] । सुवीर्यदर्शनाः[10] । विश्वे[11] । अस्मान् । देवाः । रक्षणेन सह[12] । आगच्छन्तु । इह[13] ।

**भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥८॥**

भद्रं कर्णेभिः । भद्रम्[14] । कर्णैः[15] । शृणुयाम[16] । देवाः[17] । भद्रमेव[18] । पश्येम[19] । अक्षिभिः[20] । यष्टव्याः[21] ।

---

१. तृक्षस्य पुत्रो गरुत्मान् Sy.

२. ०युद्ध P. ०युध P. यद्वा रथचक्रस्य धारा नेमिः। यत्सम्बन्धिनो रथस्य नेमिर्न हिंस्यते सोऽरिष्टनेमिः Sy. ३. बृहतां देवानां पालयिता Sy. ४. ०धतु C. दधात्वित्यन्त्यमाख्यातपदं . सर्वत्रैवानुषक्तव्यम् । . . . करोत्वित्यर्थः Sk.

५. पृषद्भिः श्वेतबिन्दुभिर्युक्ता अश्वा येषां ते तथोक्ताः Sy.

६. पृश्निर्नानावर्णा गौर्माता येषाम् Sy. पृश्निर्द्यौः। सा माता येषां ते पृश्निमातरः Sk.

७. शुभं शोभनं यान्ति गच्छन्तीति शुभंयावानः। शोभनगतय इत्यर्थः Sy. शुभमित्युदकम्। तदर्थं मेघान् प्रति गन्तारः Sk. ८. ०न्य० P. अग्नेर्जिह्वायां वर्तमानाः। सर्वे हि देवा हविःस्वीकरणायाग्नेर्जिह्वायां वर्तन्ते Sy. अग्निजिह्वाः। वक्ष्यमाणानां विश्वेषां देवानामेतद्विशेषणं न मरुताम् . . . अग्निजिह्वास्थानीयो येषां तेऽग्निजिह्वाः। अग्नौ प्रक्षिप्तं हविर्देवा अश्नन्ति । तेनैषामग्निर्जिह्वास्थानीयः Sk.

९. ०र P. ज्ञातारः Sk.

१०. सूवी० P. सूर्यप्रकाश इव चक्षः प्रकाशो येषां ते Sy. सूर्यस्येव चक्षुर्दर्शनं येषां ते सूरचक्षसः Sk.

११. मरुत्संज्ञकाः . . . सर्वे देवाः Sy.

१२. अस्माकं पालनेन हेतुना। वयं पालयितव्या इत्येवमर्थमित्यर्थः Sk.

१३. अस्मिन्काले Sy. यज्ञे। पृषदश्वादिगुणा मरुतः। अग्निजिह्वादिगुणाश्च विश्वे देवाः। अस्मत्पालनार्थमिह यज्ञ आगच्छन्त्विति समस्तार्थः Sk.

१४. भजनीयं कल्याणं वचनम् Sy. युष्मत्प्रसादादेव Sk. १५. कर्णे P. D.

१६. युष्मत्प्रसादाच्छ्रोतुं समर्थाः स्याम। अस्माकं बाधिर्यं कदाचिदपि माभूत् Sy.

१७. दोव D. दोवभव P.

१८. शोभनम् Sy. १९. पश्याम D. द्रष्टुं समर्थाः स्याम। अस्माकं दृष्टिप्रतिघातोऽपि मा भूत् Sy. २०. ०क्ष० P.

२१. यागेषु चरुपुरोडाशादिभिर्यष्टव्याः Sy.

स्थिरैः[1]। अङ्गैः[2]। तुष्टुवांसः[3]। तनूभिश्च युक्ताः। व्यश्याम[4]। देवैर्निहितम्[5]। शतसंख्याकम्[6]। आयुः।

**शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्।**
**पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥९॥**

शतमिन्नु[7]। शतम्[8]। एव[9]। शरदः[10]। अन्ततो भवति। देवा मनुष्याणामायुः। यत्र[11]। अस्माकम्। कृतवन्तो यूयम्। अङ्गानाम्[12]। जरां कल्पितवन्तः। पुत्रा एव। रक्षितारः[13]। यत्र। भवन्ति[14]। तद् आयुः[15]। गन्तोः[15]। मध्ये[16]। मा[17]। अस्मान्[18]। हिंसिध्वमित्यायुष आशासनम्[19]।

**अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।**
**विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥१०॥**

अदितिर्द्यौः। अदितिरेव सर्वमित्यदितेर्विभूतिमाचष्टे[20]—[21]

---

१. दृढैः Sk.
२. हस्तपादादिभिरवयवैः Sy. आत्मावयवैस्तनूभिः।...जरयाऽनुपहतशरीरतदवयवाः सन्त इत्यर्थः Sk.
३. ०ष्टुंवांसन् D. ०ष्ट० M. युष्मान् स्तुवन्तः Sy. शत्रर्थोऽयं वसुर्द्रष्टव्यः। स्तुवन्तो युष्मान् Sk.
४. पश्या० M. प्राप्नुयाम Sy.
५. ०वैर्नि० P. देवेन प्रजापतिना स्थापितम् Sy. मनुष्याणां च देवहितं देवैर्दत्तं देवैर्वा निहितं स्थापितमुपकल्पितम् Sk.
६. ०श्यमा० M. षोडशाधिकशतप्रमाणं विंशत्यधिकशतप्रमाणं वा Sy. तद्वर्षशतपरिमाणमायुर्देवैर्मनुष्याणामुपकल्पितं कृत्स्नं प्राप्नुयाम। मान्तरा मृषीमहीत्यर्थः Sk.
७. ०न्नुः M.
८. खलु Sy. इत् नु इति पदपूरणे। एकवाक्यताप्रसिद्ध्यर्थं च प्रथमे पादे यच्छब्दोऽन्त्ये च षष्ठ्यन्तस्तच्छब्दोऽध्याहर्तव्यः। यदेतच्छतम् Sk.
९. आयुष्ट्वेन भवद्भिः कल्पिताः...संवत्सराः Sy. वर्षशतम् Sk.
१०. ०रदेवान्त० P. मनुष्याणां समीपे।...यस्मात् सृष्टिकाले मनुष्याणां शतं संवत्सरा आयुरिति युष्माभिः परिकल्पितम् Sy. अन्तिकं सन्निकृष्टम्। अल्पमित्यर्थः Sk.
११. यस्यामवस्थायाम् Sy.
१२. शरीराणाम् Sy. शरीराणाम्। यत्स्वरूपेणैवाल्पकं जरया चोपहतमित्यर्थः Sk.
१३. पितरो भवन्ति स्वेषामपत्यानाम्। यत्रैकमेव शरीरमत्यन्तविरुद्धे पितापुत्रावस्थे शीघ्रमेव प्रतिपद्यत इत्यर्थः। अथवा पितृशब्दोऽत्र क्रियाशब्दः पालयितृवचनः। ये पुत्राः पाल्या आसंस्त एव वार्धक्ये जराभिभूतस्य पालयितारो भवन्तीत्यर्थः Sk.
१४. ईदृग्दशापन्नानित्यर्थः Sy.
१५. क्लृप्तस्यायुषो गमनात्पूर्वम् Sy. आयुर्जीवितम्। गन्तोर्गमनशीलस्य Sk.
१६. अस्माकम् Sk.
१७. ०सितध्व० P.
१८. ०षा P.
१९. ०शानं P.
२०. ०मित्यत्रादि० M.
२१. ०ष्टो P.

अदितिरेव[1]। जातम्[2]। अदितिरेव[3]। जनिष्यमाणं[4] सा च प्रयच्छतायुरिति[5] (?)[6]।

I.90.

ऋजुनीती नो वरुणो मित्रो नयतु विद्वान्। अर्यमा देवैः सजोषाः ॥१॥

ऋजुनीती। ऋजुनयनेन[7]। अस्मान्। नयनप्रकारज्ञाः[8]। वरुणादयः। नयन्तु[9]। अर्यमा[10] च। देवैः। सहिताः[11]।

ते हि वस्वो वसवानास्ते अप्रमूरा महोभिः। व्रता रक्षन्ते विश्वाहा ॥२॥

ते हि वस्वः। ते[12]। हि[13]। वसूनि[14]। आच्छादयन्तः[15]। ते। अप्रमूढाः। तेजोभिः[16]। स्वानि

---

१. अदीनाऽखण्डनीया वा पृथिवी देवमाता वा। सैव . . . द्योतनशीलो नाकः। सैवान्तरिक्षम् अन्तरा द्यावापृथिव्योर्मध्य ईक्ष्यमाणं व्योम। सैव माता निर्मात्री जगतो जननी। सैव पितोत्पादकः। ततश्च सः पुत्रः मातापित्रोर्जातः पुत्रोऽपि सैव: . . . सर्वेऽपि देवा अदितिरेव। पञ्च जना निषादपञ्चमाश्चत्वारो वर्णाः। यद्वा गन्धर्वाः पितरो देवा असुरा रक्षांसि। . . . एवंविधाः पञ्च जना अप्यदितिरेव Sy. देवमाता। तत्प्रभवाः सर्वे द्युवादयः। अत इदं कारणशब्देन कार्यस्य गौण्या वृत्त्याभिधानम्। अदितेः कार्यभूतेत्यदितिरेवान्तरिक्षम् Sk.

२. अदितिरेव। जातम्। omitted by P. जननं प्रजानामुत्पत्तिः साऽप्यदितिरेव Sy. ३. ०रव P.

४. जन्माधिकरणं तदप्यदितिरेव। एवं सकलजगदात्मनादितिः स्तूयते Sy. एवमशेषजगत्कारणत्वेनादितेर्विभूतिमाचष्टे। अथवादितिशब्दोऽत्र क्रियाशब्दोऽदीनपर्यायः। द्युवादीनि वस्तून्यदीनान्यनुपक्षीणानि। नित्यानीत्यर्थः Sk. अथाप्याहादितिः सर्वमिति N. I. 15. ५. ०च्छथायु० M.

६. V. Mādhava ignores अदितिः। द्यौः। अदितिः। अन्तरिक्षम्। अदितिः। माता। सः। पिता। सः। पुत्रः। विश्वे। देवाः। अदितिः। पञ्च। जनाः। Ms. D. puts the figure ॥८९॥ here to indicate the end of the eightyninth hymn. No such number is given in P. and M.

७. कौटिल्यरहितेन गमनेन Sy. ऋजु नयतीत्यृजुनीती Sk.

८. नेतव्यमुत्तमं स्थानं जानन् Sy. विद्वान् विजानन्। किम्? सामर्थ्यात् कर्मविपाकफलं भक्ततां वाऽस्माकम् Sk.

९. नयतु अभिमतं फलं प्रापयतु Sy. मित्रो वरुणश्च। यत्र स्वर्गे ब्रह्मलोके वाऽस्माभिः स्वकृतेन कर्मणा गन्तव्यं तत्र तत्र नयतु Sk. १०. अहोरात्रविभागस्य कर्ता सूर्यश्चास्मानृजुगमनेनाभिमतं स्थानं प्रापयतु Sy. ११. ०तं P. समानप्रीतिः Sy. देवैस्सह सम्प्रीयमाणः Sk. १२. पूर्वोक्ता मित्रादयः Sy. त इति प्रकृतानां वरुणादीनां प्रतिनिर्देशः Sk.

१३. हिशब्दः पदपूरणः Sk. १४. वस्वः। तृतीयार्थे षष्ठ्येषा। वसुना धनेन Sk.

१५. ०न्त M. सर्वं जगद्धनेनाच्छादयन्तीत्यर्थः Sy. धनवन्तः। अथवा वसवाना इति वस आच्छादने इत्यस्य क्रियाशब्दः। धनेनाच्छादयितारः। प्रभूतस्य धनस्याच्छादयितार इत्यर्थः Sk.

१६. महद्भिः प्रकाशकरणवृष्टिप्रदानादिभिरुपकारैः Sk.

स्वानि[1] यमनादीनि[2] कर्माणि । सर्वदा । रक्षन्ते ।

**ते अस्मभ्यं शर्म यंसन्नमृता मर्त्येभ्यः । बाधमाना अप द्विषः ॥३॥**

ते[3] अस्मभ्यम्[4] । ते[5] । अस्मभ्यम् । सुखम्[6] । प्रयच्छन्तु[7] । अमृताः[8] । मर्त्येभ्यः[9] । द्वेष्टृन्[10] । अपवाधमानाः[11] ।

**वि नः पथः सुविताय चियन्त्विन्द्रो मरुतः । पूषा भगो वन्द्यासः ॥४॥**

वि नः पथः । विचिन्वन्तु[12] । मार्गान्[13] । अस्माकम् । अभ्युदयाय[14] । इन्द्रादयः । वन्दितव्याः[15] ।

**उत नो धियो गोअग्राः पूषन्विष्णवेवयावः । कर्ता नः स्वस्तिमतः ॥५॥**

उत नो धियः । अपिच । अस्माकम् । कर्माणि[16] । पश्वग्राणि[17] कुरुत । पूषादयः[18] । . . . । कुरुत[19] । च । अस्मान् । अविनाशवतः ।

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥६॥**

मधु वाताः[20] ।

---

१. Omitted by M.
२. यमादी० M. जगन्निर्वाहरूपाणि स्वकीयानि Sy..
३. Omitted by P.
४. ०भ्यं स्मा P. ५. वरुणादयः Sk.
६. गृहं वा Sk. ७. प्रेच्छ० M.
८. अमरणधर्माणः Sy. मरणवर्जिताः Sk.
९. मरणधर्मभ्यः Sy.
१०. अस्मदीयान् पापलक्षणान् शत्रून् Sy. अस्मदीयद्विषः Sk.
११. विनाशं प्रापयन्तः Sy.
१२. अशोभनेभ्यो मार्गेभ्यः सकाशात् पृथक्कुर्वन्तु Sy.
१३. स्वर्गगमनमार्गान् Sk.
१४. सुष्ठु प्राप्तव्याय स्वर्गादिफलाय Sy. सुविताय सुगमनाय । . . . स्वर्गगमनमार्गप्रतिबन्धकारिणो रक्षोऽसुरप्रभृतीन् मार्गादपनयन्त्वित्यर्थः Sk.
१५. ०व्यः P. स्तोतव्या नमस्कर्तव्या वा Sy.
१६. अप्तोर्यामलक्षणानि Sy. यागाख्यानि Sk.
१७. पश्चग्रा० P. पशुप्रमुखान्यस्मत्सकाशाद् भ्रष्टैः पशुभिर्युक्तानि Sy. गावोऽग्रे यासां ता गोअग्राः । गोलाभफलाः । . . . कर्माणि गोलाभफलानि Sk.
१८. विष्णो इति PP. हे पूषन् पोषक देव विष्णो व्यापनशील देव हे एवयावः । एवैर्गन्तृभिरश्वैर्याति गच्छतीति, एवयावो मरुद्गणः Sy.
१९. वायुरेव यावैवं गच्छतीति P.D. यायुरेव यावैयं गच्छतीति M.
२०. M. adds इलो after वाताः

वाता मधु[1] क्षरन्त्य[2]स्मै[3] सत्यमिच्छति[4] यो नरः ।
तद्धि सूर्य[5]समं ज्योतिस्तदिच्छन्नि[6]ह सिध्यति ॥
यत् सम्भरन्ति सरघाः पुष्पेभ्य[7]स्तन्मधु स्मृतम् ।
अस्मै सत्यविदे सर्वं तत् क्षरन्तीति कीर्त्य[8]ते ॥

मधुमत्यः[9] । ओषधयश्च । अस्माकम् । भवन्तु ।

**मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता ॥७॥**

मधु नक्तम्[10] । रात्रौ[10] । मधु भवत्वस्माकम्[11] । अपिवा[12] । उषसश्च[13] । मधुवान्[14] भवतु । पार्थिवः । लोकः । मधुमती[15] । द्यौः । अस्तु[16] । अस्माकम् । पितेति[17] ।

**मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥८॥**

मधुमान्नः । मधुमान्[18] । अस्माकम् । वनस्पतिर्वृक्षाधिपतिः[19] । सूर्यश्च[20] । मधुमत्यः[21] ।

---

१. माधुर्योपेतं कर्मफलम् Sy. मधुशब्दो रसविशेषवचनोऽन्तर्णीतमत्वर्थश्च । सामर्थ्याच्चेहोदके वर्त्तते । उदकनाम वा मधुशब्दः । साकाङ्क्षत्वाच्च क्षरन्तीत्याख्यातं पूर्वत्राप्यनुषक्तव्यम् । मधुमन्मधुरसं वृष्टिलक्षणमुदकम् Sk.
२. रक्षन्त्य०D. वर्षन्ति प्रयच्छन्तीत्यर्थः Sy. लोडर्थे लट् । क्षरन्तु । वर्षन्त्वित्यर्थः Sk.
३. ऋतं यज्ञमात्मन इच्छते यजमानाय Sy.
४. यज्ञं कामयमानस्य ममार्थाय Sk.
५. ०म M. ६. ०न्निहित P.
७. ०ष्पेयस्त० M. ८. ०त्य० P.
९. मध्वेव माध्वम् . . . तद्वत्यो माध्व्यः । . . . मधुरसा इत्यर्थः Sk.
१०. नक्तमिति नेदमव्ययमधिकरणभूताया रात्रेर्वाचकम् । रात्रेरिहाधिकरणसम्भवान्नक्तेतिरात्रिनाम्नः प्रथमान्तस्येदं छान्दसं ह्रस्वत्वं नपुंसकत्वं च । सामर्थ्याच्चास्तु न इत्येतत्पदं सर्वत्रानुषक्तव्यम् । मधु नक्तमस्तु नः । मधुत्वेन चात्र सर्वत्र तद्गतप्रीतिकरत्वं लक्ष्यते । प्रीतिकरी रात्रिरस्माकं भवत्वित्यर्थः Sk.
११. ०न्त्व० P. रात्रिः . . . अस्माकं . . . मधुमती माधुर्योपेतफलप्रदा Sy.
१२. च M. १३. उषःकालोपलक्षितान्यहानि च मधुमन्ति भवन्तु Sy.
१४. मधुमान् should be the proper reading for मधुवान् माधुर्यविशिष्टफलयुक्तः । . . . वृष्टिप्रदानेन सर्वेषां पालयिता Sy.
१५. ०तीं M. १६. Omitted by P.
१७. विवाहकाले द्यौरहं पृथिवी त्वमिति वरे द्युत्वाध्यारोपात् सर्वमनुष्याणां वरपितृकत्वात् तद्धर्मेणैव दिवो व्यपदेशः द्यौः पितेति Sk. १८. माधुर्योपेतफलवान् Sy.
१९. वनानां पालयिता यूपाभिमानी देवः Sy. वनानां पालयितृत्वात् स्वामित्वाद्वा वनस्पतिः सूर्यसाहचर्याच्च चन्द्रमा इहाभिप्रेतः । मधुमान्नो वनस्पतिश्चन्द्रमा अस्तु Sk. २०. सर्वस्य प्रेरकः Sy.
२१. माधुर्योपेतेन पयसा युक्ताः Sy.

गावश्च[1]। भवन्तु[2]।

**शं नो॑ मि॒त्रः शं वरु॑णः॒ शं नो॑ भवत्वर्य॒मा ।**
**शं न॒ इन्द्रो॒ बृह॒स्पतिः॒ शं नो॒ विष्णु॑रुरुक्र॒मः ॥९॥**

**शं नो मित्रः**[3]। अस्माकम्। एते शंकराः। भवन्तु। विष्णुश्च। उरुक्रमणः[4]। ऋतमिच्छतो-[5]ऽभ्युदं ? (ऽभ्युदयं) तृचेनोपदिदिक्षुरुभयतः शान्तिं[6] चकारेति[7][8]।

I. 91.

**त्वं सो॑म॒ प्र चि॑कितो मनी॒षा त्वं रजि॑ष्ठ॒मनु॑ नेषि॒ पन्था॑म् ।**
**तव॒ प्रणी॑ती पि॒तरो॑ न इन्दो दे॒वेषु॒ रत्न॑मभजन्त॒ धीराः॑ ॥१॥**

**त्वं सोम प्र चिकितः**। त्वम्। सोम ! प्रकर्षेण। जानासि[9]। प्रज्ञाय[10]। त्वम्। ऋजुतमम्[11]। पन्थानम्[12]। अनुनयसि[13]। तव। प्रणयनेन[14]। पितरः। अस्माकम्। इन्दो[15] ! देवेषु[16]। रत्नम्[17]। अभजन्त[18]

---

१. अग्निहोत्राद्यर्थाः Sy.

२. V. Mādhava ignores अस्तु। नः

३. अहरभिमानी मित्रो देवः . . . सुखकरो भवतु। यद्वा अस्मदीयानामुपद्रवाणां शमयिता भवतु। रात्र्यभिमानी वरुणश्च। . . . अर्यमा अहोरात्रयोः स्थापयिता सूर्यश्च। . . . बृहस्पतिः बृहतां देवानां पालयिता इन्द्रश्च Sy. ४. ०मेण D. उरु विस्तीर्णं क्रामति पादौ विक्षिपतीत्युरुक्रमः। विष्णुर्हि वामनावतारे पृथिव्यादीन् लोकान् पदत्रयरूपेणाक्रान्तवान्। . . . शं सुखकरः उपद्रवाणां शमयिता वा भवतु Sy.
विस्तीर्णगतिर्विस्तीर्णप्रक्रमो वा। बलिबन्धनकाले त्रिभिः पदैस्त्रैलोक्यप्रक्रमणम्। तदभिप्रायमिदमुरुक्रमवचनम् Sk.

५. ऋचमि० P. तमिच्छन्तः M.

६. शोभन्ति P. ७. चकरोतु M.

८. Ms. D. puts the figure ॥९०॥ here to indicate the end of the ninetieth hymn. No such number is given in P and M.

९. ज्ञातोऽसि। वयं त्वां स्तुतिभिरज्ञासिष्मेत्यर्थः Sy. यावज् ज्ञातव्यम् Sk.

१०. ०या P.
मनीषया त्वदीयया प्रज्ञया Sk.

११. तृतीयार्थे द्वितीया। ऋजुतमेन Sk.

१२. कर्मफलावाप्तिहेतुभूतम् Sy.
इदमपि तृतीयार्थे द्वितीया। पथा Sk.

१३. अस्माननुक्रमेण प्रापयसि Sy.
अनुशब्दोऽत्र धात्वर्थानुवादी लम्बते प्रलम्बत इति यथा। सर्वयजमानान् स्वर्गं नयसि Sk.

१४. उपदेशेनेत्यर्थः Sk.

१५. इ॒न्दो॒ इति॑ PP. अस्माकमिन्द्रोऽस्माकमिन्द्रः M. उन्दनशील सर्वं जगदमृतेन क्लेदयितः ! Sy. १६. भेवेषु P.
षष्ठ्यर्थे सप्तमी। देवानां स्वभूतम् Sk.

१७. रमणीयं धनम् Sy.

१८. देवानां सकाशाल्लब्धवन्त इत्यर्थः Sk.

पितृयज्ञे।[1] प्राज्ञा अङ्गिरसः।

**त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदाः।**
**त्वं वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः ॥२॥**

त्वं सोम क्रतुभिः। त्वम्। सोम! कर्मभिः।[2] सुकर्मा।[3] अभवः।[4] त्वम्। बलैः।[5] सुबलः। विश्वधनः।[6] त्वम्। वर्षिता।[7] वर्षितृत्वैः।[8] माहात्म्येन।[9] यशोभिः।[10] यशस्वी।[11] अभवः। मनुष्याणां[12] द्रष्टा।

**राज्ञो नु ते वरुणस्य व्रतानि बृहद्गभीरं तव सोम धाम।**
**शुचिष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ॥३॥**

राज्ञो नु ते। राज्ञः।[13] इव। ते। वरुणस्य।[14] कर्माणि[15] तवापि तद्वदहिंसितानि। बृहच्च। ते। गम्भीरम्। शरीरम्।[16] शुचिः।[17] त्वम्। असि।[18] प्रियम्।[19] इव च। मित्रम्।[20] वर्धयिताऽसि।[21]

---

१. धीमन्तः कर्मवन्तः प्रज्ञावन्तो वा Sy.
२. त्वत्सम्बन्धिभिरग्निष्टोमादिकर्मभिः आत्मीयैर्ज्ञानैर्वा Sy. प्रज्ञाभिर्वा Sk.
३. शोभनप्रज्ञो वा Sy. सुप्रज्ञो वा Sk.
४. भव M. भवसि Sk.
५. बलेः P. आत्मीयैः Sy. अथवा दक्षशब्दो दक्ष वृद्धावित्यस्य क्रियाशब्दो वृद्धिपर्यायः। वृद्धिभिः सुवृद्ध इत्यर्थः Sk.
६. सर्वज्ञश्च। अथवा ... बहुधन इत्यर्थः Sk. ७. कामानाम् Sy.
८. कामाभिवर्षणैः Sy.
९. ०द्म्येन P. महित्वेति बहुवचनस्य स्थान एकवचनम्। ... त्वं वर्षिता महद्भिर्वर्षणैरित्यर्थः Sk.
१०. दत्तैर्हविर्लक्षणैरन्नैः Sy. द्युम्नं द्योततेर्यशो वा धनं वान्नं वा। यशोभिरन्नैर्धनैर्वा यशस्वी अन्नवान् धनवान् वा भवसीत्यर्थः Sk.
११. ०सी P. D. M. प्रभूतान्नः Sy.
१२. यज्ञस्य नेतॄणां यजमानानामभिमतफलस्य दर्शयिता Sy.
१३. ब्राह्मणानां स्वामिनः Sy.
१४. यागार्थमाहृतः क्रीतो वस्त्रेणावृतः सोमो वरुणः Sy.
१५. क्रीतस्य ... सम्बन्धीनि ... सर्वाण्यग्निष्टोमादीनि ...। अतः सर्वेषु यागेषु त्वमेव करणभूतो भवसीत्यर्थः Sy. अत्यन्तोत्कृष्टानि Sk.
१६. तेजः।...यद्वा नु इत्येतदुपमार्थे।...राज्ञो राजमानस्य वरुणस्य नु वरुणस्येव हे सोम ते तव व्रतानि कर्माणि लोकहितकारीणि। शिष्टं समानम् Sy. धाम तेजः स्थानं वा Sk.
१७. सर्वेषां शोधकः Sy.
१८. ०चिश्चम० P. ०चिष्ट्वम० D. ०चिष्वम० M.
१९. प्रियश्च सर्वस्य Sk.
२०. यथा सर्वेषामनुकूलोऽहरभिमानी मित्रो देवः शोधयिता भवति तद्वत् Sy. मित्र इव देवताविशेषः Sk.
२१. यजमानानाम् Sk.

अर्यमेव[१]। सोम ! अपिवा[२] पूजनीय इति[३]।

**या ते धामा॑नि दि॒वि या पृ॑थि॒व्यां या पर्व॑ते॒ष्वोष॑धीष्व॒प्सु ।**
**तेभि॑र्नो॒ विश्वैः॑ सु॒मना॒ अहे॑ळन्राज॒न्त्सोम॒ प्रति॑ ह॒व्या गृ॑भाय ॥४॥**

**या ते धामानि** । यानि । ते । शरीराणि[४] । दिवि । यानि । पृथिव्याम्[५] । यानि च । पर्वतादिषु । तैः । अस्माकम् । सर्वैः[६] । सुमनाः[७] । अक्रुध्यन्[८] । राजन् ! सोम ! प्रतिगृहाण । हव्यानि[९] । बहूनि धामानि देवानां भवन्ति यैस्तत्र तत्र हविर्गृह्णन्तीति[१०]।

**त्वं सो॑मासि॒ सत्प॑ति॒स्त्वं राजो॒त वृ॑त्र॒हा । त्वं भ॒द्रो अ॑सि॒ क्रतुः॑ ॥५॥**

**त्वं सोमासि** । त्वम् । सोम । असि । ब्राह्मणानां पतिः[११] । त्वम् । राजा । अपिच । शत्रुहा[१२] । त्वम् । भजनीयश्च[१३] । असि । कर्ता[१४] ।

**त्वं च॑ सोम नो॒ वशो॑ जी॒वातुं॒ न म॑रामहे । प्रि॒यस्तो॑त्रो॒ वन॒स्पतिः॑ ॥६॥**

**त्वं च सोम** । त्वम् । चेत्[१५] । सोम ! अस्मान्[१६] । कामयेथाः[१७] । जीवयितुम्[१८] । न ।

---

१. ०तास्य स्वयमेव P. ०तास्य स्वर्यमेव D. ०तास्वर्यमेव M. अस्माभिर्दृश्यमानः सूर्य इव । . . . यथाऽहनि सूर्यः प्रकाशेन सर्वं वर्धयत्येवं निशि अमृतमयैः सोमकिरणैराप्यायमानं सत् स्थावरजङ्गमात्मकं सर्वं जगद् वर्धते Sy. २. व P.

३. V. Mādhava ignores **सोम**

४. तेजांसि वर्तन्ते Sy. स्थानानि जन्मानि वा Sk.

५. यानि पृथिव्याम् omitted by P.

६. तृतीयानिर्देशाद्युक्त इति वाक्यशेषः । सर्वेषु स्थानेषु जन्मसु वा वर्तमान इत्यर्थः Sk. ७. प्रीतचित्तः Sk.

८. ०ध्यत्व M. ९. अस्माभिः प्रत्तानि Sy.

१०. V. M. does not explain or repeat **ओषधीषु । अप्सु**

११. पततिः M. यद्वा सन्तः स्वानादयः पतयः पालका यस्य सोमस्य तादृशो भवसि Sy. सतां पालयिता Sk.

१२. वृत्रासुरस्य शत्रोर्वा हन्ता Sy.

१३. ०यं च M. कल्याणोऽसि Sk.

१४. योऽयमग्निष्टोमादियागस्त्वमेव तद्रूपो भवसि Sy. सर्वार्थानाम् । अथवा क्रतुशब्दः कर्मनाम प्रज्ञानाम वाऽ न्तर्णीतमत्वर्थश्च । कर्मवान् प्रज्ञावान् वेत्यर्थः Sk. १५. चशब्दोऽत्र पदपूरणः Sk.

१६. अस्माकम् P. D. अस्मभ्यम् Sk.

१७. काम्यः प्रार्थयितव्यः । सर्वस्तोतॄणां याच्य इत्यर्थः Sk. १८. अस्माकं स्तोतॄणां . . . जीवनौषधम् Sy. जीविकाम् । कर्मसम्प्रदानश्रुत्योः साकाङ्क्षत्वाद् देहीति वाक्यशेषः । अथवा त्वं चेति चशब्दश्रुतिसामर्थ्यात्त्वदनुचराश्चेति वाक्यशेषः । त्वं च सर्वस्तोतॄणां याच्यस्त्वदनुचराश्चास्मभ्यं जीविकां दत्तेति वाक्यशेषः । अनुचराणां चात्र गुणता सोमस्यैव प्राधान्यमिति सौम्यत्वस्याविरोधः Sk.

मरामहे[1]। प्रियस्तोत्रः[2]। वनानां[3] पालयितानुदकानाम्[4]।

**त्वं सोम महे भगं त्वं यून ऋतायते । दक्षं दधासि जीवसे ॥७॥**

**त्वं सोम महे[5]।** त्वम्। सोम! वृद्धाय[6]। धनं दधासि[7]। त्वम्। यूने च। यज्ञमिच्छते। बलं[8] च। यच्छसि। जीवनाय।

**त्वं नः सोम विश्वतो रक्षा राजन्नघायतः । न रिष्येत्त्वावतः सखा ॥८॥**

**त्वं नः सोम।** त्वम्। अस्मान्। सोम! सर्वतः। पापमिच्छतः[9]। रक्ष। न[10]। विनष्टो भवति। त्वत्सदृशस्य[11]। सखा[12]।

**सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविता भव ॥९॥**

**सोम यास्ते।** सोम! यानि। तव। सुखस्य भावयितॄणि। पालनानि। भवन्ति। यजमानाय[13]। तैः। भव। अस्माकम्। रक्षिता।

**इमं यज्ञमिदं वचो जुजुषाण उपागहि । सोम त्वं नो वृधे भव ॥१०॥**

**इमं यज्ञम्।** इमम्[14]। यज्ञम्। इदं[15] च। स्तोत्रम्। प्रीयमाणः[16]। आगच्छ[17]। सोम! त्वम्। अस्माकम्। वर्धनाय[18] भव।

**सोमं गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृळीको न आ विश ॥११॥**

**सोम गीर्भिः।** सोम! स्तुतिभिः। त्वाम्। वयम्[19]। वर्धयामः। स्तोत्रविदः[20]। सुष्ठु सुखयिता सन्। अस्मान्। आविश[21]।

---

१. न वयं मारा० M. म्रियामहे Sy. म्रियतिरत्र सामर्थ्यादन्तर्णीतसन्नर्थः। न शीघ्रं मुमूर्षाम इत्यर्थः Sk.
२. बहुभिः स्तोतव्यः Sy.
३. वनानामोषधिवनस्पतिरूपाणां पतिः पालयितासि Sy. ४. स्वामी वा Sk.
५. ०हे P. ६. स्थविरायेत्यर्थः Sk.
७. ददासि Sk. ८. उपभोगसमर्थम् Sy. वृद्धिं वा Sk. ९. अघं पापम्। तद्धेतुकं दुःखम्...अस्माकं कर्तुमिच्छतः Sy.
१०. र M. ११. वयं च तव सखायः Sk.
१२. V. Mādhava ignores राजन्
१३. चरुपुरोडाशादीनि दत्तवते Sy.
१४. अस्माभिः क्रियमाणम् Sy.
१५. इदानीं क्रियमाणं स्तुतिलक्षणं वचनम् Sy.
१६. सेवमानः सन् Sy. सेवितुमित्यर्थः Sk.
१७. प्राचीनवंशलक्षणं गृहं प्राप्नुहि Sy.
१८. यज्ञस्य Sy.
१९. अनुष्ठातारः Sy.
२०. सम्यक् स्तोतुं ज्ञातार इत्यर्थः Sk.
२१. आगच्छ Sy. प्रविशोपविश याज्यलक्षणं हविः प्रतिग्रहीतुम् Sk.

**गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः । सुमित्रः सोम नो भव ॥१२॥**

गयस्फानः[1] । धनस्य[2] वर्धयिता । रक्षसां[3] हन्ता । धनानां[4] लम्भयिता । पुष्टेर्[5]वर्धयिता[6] । कल्याणं मित्रम्[7] । भव । सोम ! अस्माकम् । 'गयस्फानोऽमीवहेति[8] गवां न स्फावयिता'[9]इति तु ब्राह्मणम् ।

**सोम रारन्धि नो हृदि गावो न यवसेष्वा । मर्य इव स्व ओक्ये ॥१३॥**

सोम रारन्धि । सोम ! रमस्व[10] । अस्माकम् । हृदये । गावः[11] । इव । तृणेषु[12] । मनुष्य इव[13] च । स्वे[14] । गृहे[15] ।

**यः सोम सख्ये तव रारणद्देव मर्त्यः । तं दक्षः सचते कविः ॥१४॥**

यः सोम सख्ये[16] । यः । सोम ! तव । सख्ये[17] । रमते[18] । देव ! मनुष्यः । तम् । समर्थः[19] । स्तोता[20] । सेवते[21] स्तोतुम् ।

**उरुष्या णो अभिशस्तेः सोम नि पाह्यंहसः । सखा सुशेव एधि नः ॥१५॥**

उरुष्या[22] णः । रक्ष । अस्मान् । अभिशंसनात्[23] । सोम ! निरक्षास्मान्[24] । आहन्तुः[25] । सखा । सुसुखः । भव । अस्माकम् ।

---

१. ०यप्सानः P.
२. अपत्यस्य धनस्य गृहस्य वा Sk.
३. अमीवानां रोगाणां हन्ता Sy. हिंसितॄणाम् Sk. ४. दातेत्यर्थः Sk.
५. सम्पदः Sy. ६. Omitted by M.
७. ०णमि० P. D. शोभनानि मित्राणि सुमित्राणि तानि करोतीति सुमित्रयति । ...शोभनानां मित्राणां कर्ता Sk.
८. ०यप्सानो P. ९. ०वा P.
१०. अत्यर्थम् Sk. ११. यथा गावः... शोभनतृणेषु...आभिमुख्येन रमन्ते Sy.
१२. यवसवत्सु देशेषु Sk.
१३. यथा वा...मरणधर्मा मनुष्यः...स्वकीये ...गृहे पुत्रादिभिः सह रमते तद्वदस्माभिर्दत्तेन हविषा तृप्तः...सन् अस्मास्वेवावतिष्ठस्व । नान्यत्र गच्छेति निदर्शनद्वयस्य तात्पर्यार्थः Sy.
१४. च । स्वे । गृहे missing M.
१५. V. Mādhava ignores आ
१६. ०मः M. १७. त्वदीये सखित्वे निमित्तभूते सति Sy. देवानां मनुष्याणां च किं सख्यम् ? यष्टव्या देवा यष्टारो मनुष्या इति । तस्मिन् सख्ये तव त्वदीये । यागे इत्यर्थः Sk. १८. रमयते P. अत्यन्तम् Sk. १९. सर्वकार्यसमर्थः Sy. दक्षो बलं वृद्धिं वा Sk.
२०. क्रान्तदर्शी Sy. मेधावी Sk.
२१. सर्वकार्यसमर्थस्त्वं सचते सेवसे । अनुगृह्णासीत्यर्थः Sy. बलं वृद्धिं वा प्राप्नोतीत्यर्थः Sk. २२. ०ष्य M.
२३. अभिशापरूपान्निन्दनात् Sy. अभिहिंसितुः Sk. २४. रेक्षा० M. उरुष्यती रक्षाकर्मा N. 5. 23.
२५. ०स्मा हान्तु P. अस्मत्कृतात् पापात् Sy. पापादपि Sk.

**आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥१६॥**

आप्यायस्व । पूर्णो[1] भव रसेन । सङ्गच्छताम्[2] । ते[3] । सर्वतः । सोम ! वर्षणनिमित्तमन्धो[4] द्रोणकलशं प्रति । भव[5] । अन्नस्य । सङ्गमनाय[6] ।

**आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः ।**
**भवा नः सुश्रवस्तमः सखा वृधे ॥१७॥**

आप्यायस्व मदिन्तम । आप्यायय[7] रसम् । सोम ! मादयितः[8] ! विश्वाभिः । लताभिः[9] । भव । अस्माकम् । स्वन्नतमः[10] । सखा । वर्धनाय ।

**सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।**
**आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥१८॥**

सं ते पयांसि । संयन्तु[11] । त्वत्तः[12] । रसाः[13] । सम् । एव[14] । यन्तु । अन्नानि[15] । संयन्तु । वर्षणनिमित्तानि[16] । शत्रूणामभिभवितः[17] ! आप्यायमानः[18] । अमृतत्वाय[19] । सोम ! दिवि च ।

---

१. ०र्णा M. वर्धस्व Sy; Sk.
२. त्वया संयुक्तं भवतु Sy. ३. तेव P.
४. वृषत्वं, वीर्यं सामर्थ्यम् Sy. अपठितमपि बलनामैतत् । रसवचनो वा सामर्थ्यादत्र वृष्ण्यशब्दः । बलं रसो वा Sk. ५. भाव P. अस्माकमन्नप्रदो भवेत्यर्थः Sy. ६. लाभायेत्यर्थः Sk.
७. आ समन्ताद् वृद्धो भव Sy.
८. सुष्ठु मदकरेत्यर्थः Sk.
९. सोमस्यावयवा अंशव उच्यन्ते Sk.
१०. ०न्नमतः P. D. M. सुधनतमः सुकीर्तितमो वा Sk.
११. संयच्छन्तामस्माभिस्सह Sk.
१२. क्रियाग्रहणं कर्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी .. तव Sy. V. M. takes 'ते' (genitive) in the sense of त्वत्तः ('ablative.') It can also be taken in the sense of instrumental. See note १७ of this stanza तव स्वभूतानि । त्वदीयानीत्यर्थः Sk.
१३. श्रयणार्थानि क्षीराणि Sy. वृष्टिलक्षणान्युदकानि Sk.
१४. उकारः पदपूरणः Sk.
१५. हविर्लक्षणान्यन्नानि Sy. १६. ०र्षनि० M. वीर्याणि Sy. अभिमातीनां शत्रूणां हन्तुः Sy. बलानि रसा वा Sk.
१७. Sy. and Sk. treat 'अभिमातिषाहः' as a genitive sing. qualifying 'ते'. As the text stands at present, V. M. seems to construe it in the voc. sing. qualifying सोम against the rules of accent. This irregularity can be avoided if we read शत्रूणामभिभवितुः in the ablative case qualifying त्वत्तः. हिंसितॄणामभिभवितुः । अथवा ते अभिमातिषाहः । उभयत्र तृतीयार्थे षष्ठी । सङ्गच्छता त्वया हिंसितॄणामभिभवित्रा पयांसि वसतीवर्यकधानालक्षणान्युदकानि । समुयन्तु वाजाः सवनीयपुरोडाशहविर्लक्षणान्यन्नानि बलानि रसा वा Sk.
१८. समन्ताद् वर्धमानः सन् Sy.
१९. अस्माकम् ... अमरणत्वाय Sy. अथवाऽमृतशब्दो देवतावचनः । अमृतेभ्यो देवतार्थमित्यर्थः Sk.

अन्नान्यस्माकम्[1]। उत्तमानि। कृणुष्व[2]। पीतसोमो हि न परत्र क्षुध्यति।

**या ते धामा॑नि ह॒विषा॒ यज॑न्ति॒ ता ते॒ विश्वा॑ परि॒भूर॑स्तु य॒ज्ञम्।**
**ग॒य॒स्फान॑ः प्र॒तर॑णः सु॒वीरोऽवी॑रहा॒ प्र च॑रा सोम॒ दुर्यान्॥१९॥**

या ते धामानि। यानि। तव। तेजांसि[3]। हविषा[4]। यजन्ति[5]। तानि। तव। विश्वानि भवन्तु सहानितैः(?) परिभूः[6]। अस्तु[7]। यज्ञम्[8]। सोम इति परोक्षम्। गवां वर्धयिता[9]। प्रकर्षेण तारकः[10]। शोभनवीरः[11]। पुत्राणामहन्ता सन्[12]। प्रगच्छ। गृहान्[13]।

**सोमो॑ धे॒नुं सोमो॒ अर्व॑न्तमा॒शुं सोमो॑ वी॒रं क॑र्म॒ण्यं॑ ददाति।**
**सा॒द॒न्यं॑ वि॒द॒थ्यं॑ स॒भेयं॑ पि॒तृ॒श्रव॑णं॒ यो ददा॑शदस्मै॥२०॥**

सोमो धेनुम्। सोमः। धेनुम्[14]। सोमः। अश्वम्। आशु गन्तारम्। सोमः। पुत्रम्। कर्मणि[15]

१. ०वि चिन्नान्य० P. अस्माभिर्भोक्तव्यानि हविर्लक्षणानि वा Sy. कीर्तिमन्नानि धनानि वा Sk.
२. धारय Sy.
३. द्युप्रभृतिष्ववस्थितानि Sy. स्थानानि नामानि जन्मानि वा तेजांसि वा Sk.
४. चरुपुरोडाशादिना Sy.
५. ०ति M. यजमानाः पूजयन्ति Sy.
६. परितो भावयितॄणि परितः प्राप्तानि सन्तु। यद्वा त्वदीयानां तेषां सर्वेषां धाम्नामस्मदीयो यजमानः परिभूर्यज्ञं प्रति परिग्रहीता यागेन स्वीकर्ता . . . भवतु Sy.
७. परिपूर्वो भवतिः सर्वत्र परिग्रहार्थे। उभयत्र बहुवचनस्य स्थाने एकवचनम्। परिगृहीतॄणि सन्तु Sk.
८. अस्मदीयमध्वरम् Sy. इमं मदीयं यज्ञम्। यानि तव यष्टव्यानि धामानि तैः सर्वैरिमं यज्ञं परिगृहाणेत्यर्थः Sk.
९. गयस्य गृहस्य धनस्य वा वर्धयिता ... गय इति गृहस्य धनस्य च नामधेयम्। तेषां स्फायिता वर्धयिता Sy. अपत्यस्य धनस्य गृहस्य वा वर्धयिता Sk.
१०. दुरितात् तारयिता Sy. तरतिरत्र वृद्ध्यर्थः। वर्धयिता च सर्वार्थानाम् Sk.
११. शोभनैर्वीरैरुपेतः Sy. शोभना वीरा देया यस्य स सुवीरः। शोभनानां च पुत्राणां दातेत्यर्थः Sk.
१२. वीर्याज्जायन्त इति वीराः पुत्राः। तेषामहन्ता Sy. अहन्ता च वीराणाम् Sk.
१३. प्राचीनवंशादिलक्षणानस्मदीयान् गृहान् 'गृहा वै दुर्याः' (TS. ६.२.९.१.) इति श्रुतेः Sy.
१४. सवत्सां दोग्ध्रीं गां ददाति Sy.
१५. लौकिककर्मसु कुशलम् Sy. कर्मसु साधुम्। सर्वकर्मसु योग्यम् Sk.

समर्थम्। ददाति। गृहे[1] शूरम्। यज्ञसभयोश्च[2] यः[3] स्वकीर्त्यात्मीयं पितरमस्य पितायमिति श्रावयति[4] तं ददाति। यः। हविः सोमाय ददाति। अस्मै यजमानाय।

**अषाळ्हं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम्।**
**भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥२१॥**

अषाळ्हं[5] युत्सु। शत्रुभिरसोढम्[6]। युद्धेषु। पृतनासु। पालयितारम्[7]। दिवः सम्भक्तारम्[8]। अपां[9] दातारम्[10]। बलस्य[11]। गोपायितारम्। सङ्ग्रामेषु प्रादुर्भवन्तम्[12]। सुनिवासम्। सुकीर्तिम्[13]। जयन्तम्[14]। त्वाम्। अनुमदेम[15] स्तोत्रैः[16]। सोम[17] !

**त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः।**
**त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥२२॥**

त्वमिमाः[18]। त्वम्। इमाः[19]। ओषधीः। सोम ! विश्वाः। अजनयः[20]। त्वम्। उदकानि[21]।

---

१. सदनं गृहम्। तदर्हम्। गृहकार्यकुशलमित्यर्थः Sy.
सदनं गृहम्। तत्र च साधुम् Sk.

२. विदन्त्येषु देवानिति विदथा यज्ञाः। तदर्हम्। दर्शपूर्णमासादियागानुष्ठानपरमित्यर्थः।...सभायां साधुम्। सकलशास्त्राभिज्ञमित्यर्थः Sy.

३. विदथ्यं सभेयम्। विद्वत्समाजः सभा। तत्र च साधुम् Sk.

४. पिता श्रूयते प्रख्यायते येन पुत्रेण तादृशम् Sy. पितृणां च श्रोतारम्। विनीतमित्यर्थः Sk.

५. ०ह्ळे P.

६. अनभिभवनीयम् Sy.
अनभिभूतपूर्वम् Sk.

७. जयस्य पूरयितारम् Sy.
यष्टृणां च स्तोतृणां च Sk.

८. ०वा M.
स्वर्गस्य सनितारं दातारम् Sy.

९. अपां वृष्टिलक्षणानामुदकानाम् ...। यद्वा अप्साम् अप्सातृकं भक्षकरहितम्। सर्वेषामनुग्राहकमित्यर्थः Sy.

१०. सेवितारम् Sk.

११. वृज्यतेऽनेनेति वृजनं बलम्। तस्य गोपां गोपयितारं रक्षितारम् Sy.

१२. भ्रियन्ते एषु हवींषीति भरा यागास्तेषु प्रादुर्भवन्तम् Sy.
जनिरत्र सामर्थ्याज्जयतेरर्थे। जेतारम् Sk.

१३. स्वन्नं सुधनं वा Sk.

१४. शत्रूनभिभवन्तम् Sy.

१५. त्वामनुनिशम्य। श्रुत्वेत्यर्थः Sk.

१६. त्वामनुलक्ष्य ... हर्षयुक्ता भवेम Sy.
प्रहृष्टाः स्यामेत्यर्थः Sk.

१७. ०मः M.

१८. ०मा D.

१९. भूम्यां वर्तमानाः Sy.

२०. जनयसि Sk.

२१. तासामोषधीनां कारणभूतानि वृष्ट्युदकानि Sy.
वृष्टिलक्षणान्युदकानि Sk.

त्वम्। पशून्। त्वम्। विस्तारितवानसि तेजसा। विस्तीर्णम्। अन्तरिक्षम्[1]। त्वम्। ज्योतिषा[2]।
नैशं तमः[3]। विनिवारितवानसि[4]।[5]

**देवेन नो मनसा देव सोम रायो भागं सहसावन्नभि युध्य।**
**मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्र चिकित्सा गविष्टौ ॥२३॥**

देवेन नः। दीप्तेन[6]। अस्माकम्[7]। मनसा[8]। देव! सोम! धनस्य। भागम्। बलवन्[9]!
अभियुध्य[10][7]। मा। त्वा। पर्येति कश्चित्[11]। त्वं हि[12] बलस्य। ईशिषे[13]। उभयेभ्यः[14] परेभ्योऽस्मदीयेभ्यश्च।
गवामन्वेषणे[15]ऽस्मान्[16]। प्रकर्षेण जानीहि[17]। जेतव्यमस्मदर्थमिति[18] ।[19]

---

१. अन्त्वं M. २. आत्मीयेन प्रकाशेन Sy. आदित्याख्येन Sk.

३. अस्मद्दृष्टिनिरोधकमन्धकारम् Sy.

४. विवृतं विश्लिष्टं विनष्टं कृतवानसि Sy.

५. ओषधिजननादि हि सर्वं धर्मायत्तम्। धर्मश्च यागादिः सोमायत्तः। अतः सोमसाध्ययागादिद्वारकर्मत्वादोषध्यादीनामिदमुच्यते त्वमिमा ओषधीरित्यादि Sk.

६. देवेनेत्यत्र सामर्थ्याद्दीव्यतिर्दानार्थः। देवेन दानाभिमुखेन Sk.

७. अस्मानभिलक्ष्य ... प्रेरय। यद्वा। नोऽस्माकं . . . धनस्य भागं भक्तारमपहर्तारं शत्रुम् ... आभिमुख्येन सम्यक् प्रहर Sy. अस्मान् प्रति Sk.

८. त्वदीयया बुद्ध्या Sy.

९. बलन् P.

१०. अभियुध्यतिर्गतिकर्मा। सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। अभिगमय। देह्यस्मभ्यमित्यर्थः Sk.

११. त्वां कश्चिदपि शत्रुः . . . क्लेशेनाततं मा कार्षीत्। मा हिंसीदित्यर्थः Sy. मा च त्वां ददतमातनत्। आतनिरत्र सामर्थ्यात्प्रतिबन्धार्थः। प्रतिभान्त्सीत्। भवतो ददतः प्रतिबन्धं मा कश्चित् कार्षीदित्यर्थः Sk.

१२. Omitted by P.

१३. ईश्वरो भवसि Sy. वीर्यस्य स्वाम्यसि। यस्मादत्यन्तशूरोऽसि। अत्यन्तशूरत्वाच्च प्रतिबन्धकारिणो हन्तुं समर्थ इत्यर्थः Sk.

१४. उभयेषां युध्यमानानां सम्बन्धिनः Sy. उभयशब्दः शत्रुविषयः। अपादानपञ्चमीश्रुतेश्च योग्यक्रियाध्याहारः। आत्मीयेभ्योऽस्मदीयेभ्यश्चोभयेभ्योऽपि शत्रुभ्यो धनान्यपहृत्य। अथवा उभयशब्दः प्रयोजनवचनः। सामर्थ्याच्चतुर्थी चैषा द्वितीयार्थे। यानि चास्माकमिह लोके प्रयोजनानि यानि च परत्र तेभ्य उभयेभ्यः। ऐहलौकिकपारलौकिककार्यमित्यर्थः Sk.

१५. सङ्ग्रामे Sy. गाव इष्यन्ते यत्र प्राप्तुं सा गविष्टिरिष्टिस्तत्र। यज्ञ इत्यर्थः Sk.

१६. ०णास्मान् M.

१७. अस्मदीयमुपद्रवं परिहर Sy. ज्ञानेन चात्र तत्पूर्वकं दानं लक्ष्यते। प्रकर्षेण देहीत्यर्थः Sk.

१८. ०व्यास्म० M.

१९. Ms. D. puts the figure ॥९१॥ here to indicate the end of the ninetyfirst hymn. No such number is given in P. and M.

## I.92.

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥१॥

एता उ त्याः[1]। ताः[2]। एताः। उषसः[3]। प्रज्ञानम्[4]। अकृण्वन्[5]। पूर्वे[6]। अर्धे[6]। अन्तरिक्षलोकस्य[7] प्राच्यां रुध्ये मृदमिव (?)[8]। दीप्तिम्[9]। अञ्जते[10]। कोशाद् आयुधानि[11]। निष्कृण्वानाः[12]। वीरा इव[13]। प्रतियन्ति[14]। गन्त्र्यः[15]। आरोचमाना उषसः[16]। मातृस्थानीयाः[17]। निरुक्तं[18] च द्रष्टव्यम्[19]।

१. एतास्ता उषसः केतुमकृषत प्रज्ञानम्। एकस्या एव पूजनार्थे बहुवचनं स्यात्। पूर्वेऽर्धेऽन्तरिक्षलोकस्य समञ्जते भानुना। निष्कृण्वाना आयुधानीव धृष्णवः। निरित्येष समित्येतस्य स्थाने N. 12. 7.

२. Omitted by P. and D. तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। याः पूर्वेष्वप्यहःस्वकार्षुरेतास्ता उषसः। एकस्या एवोषसः पूजनार्थमेतद् बहुवचनम्। भवन्तो मे गुरव इति यथा। अवयवभेदापेक्षं वा। भिन्नेष्वहस्सूषोभेदात् बह्व्य एवोषसः Sk.

३. प्रभातकालाभिमानिन्यो देवताः Sy.

४. अन्धकारावृतस्य सर्वस्य जगतः प्रज्ञापकं प्रकाशम् Sy.

५. कुर्वन्ति Sk.

६. प्राचीनदिग्भागे Sy. सप्तमीनिर्देशात् स्थिता इति वाक्यशेषः Sk.

७. द्युलोकस्यान्तरिक्षस्य वा Sk.

८. The words प्राच्यां रुध्ये मृदमिव seem to be doubtful. They are quite irrelevant.

९. भानुमिति तृतीयार्थे द्वितीया। अञ्जिर्व्यक्त्यर्थः। भानुना व्यञ्जन्ति। स्वया भासा सर्वं व्यक्तीकुर्वन्तीत्यर्थः Sk.

१०. अज्जते D. व्यक्तीकुर्वन्ति Sy.

११. यथाऽसिप्रभृतीन्यायुधानि संस्कुर्वन्ति Sy.

१२. एवं . . . स्वभासा जगत्संस्कुर्वाणाः Sy. कृणोतिरत्र सामर्थ्यात्कृषेरर्थे द्रष्टव्यः। निष्कर्षन्तः Sk.

१३. धर्षणशीला योद्धारः Sy. आयुधानीव धृष्णवः। धर्षयितारो यथा कोशेभ्यः खड्गान्निष्कर्षन्तो व्यक्तीकुर्वन्ति तद्वदित्यर्थः। अथवा . . . पूर्वे अर्धे अन्तरिक्षस्य द्युलोकस्य वा दीप्तिं गमयन्ति। प्राणिनां च प्रकाशद्वारेण प्रज्ञानं कुर्वन्ति। पूर्वार्धं च द्युलोकस्यान्तरिक्षस्य वा दीप्तं कुर्वन्तीत्यर्थः। कथम्? निष्कृण्वाना आयुधानीव। निरित्येष समित्येतस्य स्थाने। संस्कुर्वन्त आयुधानीव धृष्णवः। यथा परिमार्जनादिभिः संस्कारैः संस्कुर्वन्त आयुधानि योद्धारो दीप्तानि कुर्वन्ति तद्वदित्यर्थः Sk.

१४. प्रतिदिवसं गच्छन्ति Sy. यत आगतास्तत्रैव प्रतिगच्छन्ति। यत आदित्यादुत्पन्नास्तत्रैव प्रलीयन्त इत्यर्थः Sk.

१५. गावः। उषसोऽत्र गाव उच्यन्ते Sk.

१६. अरुषतिर्गतिकर्मा। गमनस्वभाविकाः Sk.

१७. सूर्यप्रकाशस्य निर्मात्र्यो जगज्जनन्यो वा। . . . एवंविधा उषसोऽस्मान् रक्षन्त्वित्यर्थः Sy. सर्वस्य निर्मात्र्यो वा Sk.

१८. N. 12. 7.

१९. V. Mādhava ignores उ

**उद॑पप्तन्नरु॒णा भा॒नवो॒ वृथा॑ स्वा॒युजो॒ अरु॑षी॒र्गा अ॑युक्षत ।**
**अक्र॑न्नु॒षासो॑ व॒युना॑नि पू॒र्वथा॒ रुश॑न्तं भा॒नुमरु॑षीरशिश्रयुः ॥२॥**

उदपप्तन्। उदपप्तन्[1]। अरुणाः[2]। दीप्तयः। अनायासेन। स्वयमेव युज्यमानाः[3]। आरोचमाना[4] आत्मीयाः[5]। गाश्चाश्वभूताः[6]। अयुक्षत[7] रथेऽयोजयन्। पूर्वेष्विवाहःसु[8]। प्रज्ञानानि[9]। अक्रण्वन्[10]। दीप्यमानम्। आदित्यम्। उषसः। श्रयन्ति[11]। आरोचमानाः[12]।

**अर्च॑न्ति॒ नारी॑र॒पसो॒ न वि॒ष्टिभिः॑ समा॒नेन॒ योज॑ने॒ना प॑रा॒वतः॑ ।**
**इषं॒ वह॑न्तीः सु॒कृते॑ सु॒दान॑वे॒ विश्वेदह॒ यज॑मानाय सुन्व॒ते ॥३॥**

अर्चन्ति नारीः[13]। अर्चन्ति[14]। उषसः[15]। आपः[16]। इव। प्रवेशनैः[17]। एकेन[18]। उद्योगेन[19]। अपश्चि-

---

१. ०दप्त० M. उदगमन् Sy.
उत्पतन्ति उद्गच्छन्ति Sk.

२. आरोचमानाः Sy.

३. सुखेन रथ आयोक्तुं शक्याः Sy.
सुखमायुज्यन्ते या रथेषु ताः स्वायुजः Sk.

४. शुभ्रवर्णाः Sy.
गमनस्वभाविकाः Sk.

५. उषसामुपयोजनानि गाव इहोच्यन्ते Sk.

६. ०श्चश्वाभू० P. ०श्वाश्चभू० M.
पूर्वमुत्थितान् रश्मीन् ईदृशीः स्ववाहनभूताश्चतुष्पदीर्गाः Sy.

७. आत्मीया बडवाः।..युञ्जन्ति Sk.

८. कालेषु Sk.

९. सर्वेषां प्राणिनाम् ... उषःकाले जाते हि सर्वे प्राणिनो ज्ञानयुक्ता भवन्ति Sy.
प्रकाशद्वारेण Sk.

१०. ०नान्न्यक्र० P.

११. स श्रपय० P.
तेन सहैकीभवन्तीत्यर्थः Sy.
आदित्य एव प्रलीयन्ते इत्यर्थः Sk.

१२. गमनस्वाभाविकाः Sk.

१३. ०री M.

१४. नभःप्रदेशम् Sy.
प्रकाशत्वापादनेनाभिपूजितं कुर्वन्तीत्यर्थः। किम्? सामर्थ्यात् त्रैलोक्यं दिवं वा Sk.

१५. नेत्र्यः Sy.

१६. युद्धकर्मणोपेताः पुरुषा यथा स्वकीयैरायुधैर्घाटीमुखेन सर्वं देशं व्याप्नुवन्ति तद्वत् Sy.

१७. निवेशकैः स्वकीयैस्तेजोभिः Sy.
नार्यः कर्मवत्य इव कर्मभिः। उपलेपनादिकर्मभिर्गृहाद्यभिपूजितं कुर्वन्ति तद्वदित्यर्थः Sk.

१८. समानेन योजनेन। सर्वैः प्रकाशैः। प्रकाशकत्वेन युज्यमानत्वादद्योजन इहादित्य उच्यते। सहयोगलक्षणे चैषा तृतीया। आत्मनः समानेन सर्वप्रकाश्यानां वा साधारणेन प्रकाशयित्राऽऽदित्येन सहेत्यर्थः। अथवा प्रकाश्यैर्युज्यमानत्वादद्योजन इह प्रकाश एवोच्यते। करणे एवैषा तृतीया। सर्वप्रकाश्यसाधारणेन प्रकाशेनार्चन्तीत्यर्थः Sk.

१९. ०द्योकेन P. ०केनोनेन M.

माय(?)[1]। अन्नम्। वहन्त्यः[2]। सुकर्मणे। सुदानाय[3]। विश्वानि[4]। एव[5]। अपेक्षितानि च[6]। यजमानाय। सुन्वते[7]। वहन्त्यः।

**अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहम्।**
**ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्यु१षा आवर्*तमः ॥४॥**

अधि पेशांसि[8]। अधिवपते[9][10]। आश्लिष्टानि तमांसि[11]। नापित[12] इव केशान् तमोभिराच्छादितं वक्षश्च[13]। अपोर्णुते[14]। गौरिव[12]। ऊधो[15] दोहाय। ज्योतिः[16]। विश्वस्मै। भुवनाय[17]। कृण्वती[16]। यथा। गावः[18]।

---

१. आ पश्चिमायाः is suggested for अपश्चिमाय। आ दूरदेशाद् आ पश्चिमदिग्भागात्। ...कृत्स्नं जगदयुगपदेव व्याप्नुवन्तीत्यर्थः Sy. आ परावतो दूराद् अन्तात्। समस्तं त्रैलोक्यं दिवञ्चेत्यर्थः Sk.

२. प्रयच्छन्त्य इत्यर्थः Sy. प्रापयन्त्यः। अन्नं ददत्य इत्यर्थः Sk.

३. कल्याणीर्दक्षिणा ऋत्विग्भ्यो ददते यजमानाय Sy. शोभनहविर्दायिने Sk.

४. सर्वमेव Sy. विश्वा इति चतुर्थ्येकवचनस्याकारः। सर्वस्मै यजमानाय Sk.

५. इदहेति निपातौ पदपूरणौ Sk.

६. च is irrelavent and unnecessary. V. M. seems to ignore अह unless it may be supposed that अह is paraphrased by च

७. सोमाभिषवं कुर्वते Sy; Sk.

* आवरित्यावः। PP.

८. वेशांसि P.

९. अधि उपरि Sk.

१०. ०धिपवते M. आधिक्येन ... छिनत्ति। ... नॄन् तूर्वति केशेन रिक्तीकरोतीति नृतूर्नापितः। स यथा केशान्निःशेषेण छिनत्ति, एवमुषा अप्यन्धकारं समूलं हिनस्तीत्यर्थः। यद्वा नृतूरिव नृत्यन्ती योषिदिव। पेशांसि। रूपनामैतत्। सर्वैर्दर्शनीयानि रूपाण्युषा अधिवपते स्वात्मन्यधिकं धारयति Sy. वपिः केशश्मश्रुवपन इत्यादि मुण्डने प्रसिद्धः। मुण्डयत्युषाः केशस्थानीयं तमः प्रकाश्यानामर्थानामपनयतीत्यर्थः Sk.

११. अधिवपते। आश्लिष्टानि तमांसि omitted by P. पेशांसि प्रकाश्यानि रूपाणि Sk.

१२. बर्जहं पयस उत्पत्तिस्थानं दोहनसमये उस्रा गौर्यथाऽऽविष्करोति तद्वत्... बर्जहम्। वृङ् सम्भक्तौ। वृणीते सम्भजति गामिति बः पयः... तज्जहातीति Sy.

१३. पक्ष० M. स्वकीयमुरःप्रदेशम् Sy.

१४. ०र्ण० P. अपोण्ठते तमसानाच्छादितं करोति। स्वयमाविर्भवतीत्यर्थः Sy. प्रकाशयति Sk.

१५. ब्रुभ्रू ? (भृ) भरणे। प्राणिनां भरणसमर्थत्वाद् बस् ? (र्) इति क्षीरमुच्यते। तज्जहातीति बर्जहम् ऊधः। गौरिव क्षीरपूर्णमूध इत्यर्थः Sk.

१६. प्रकाशं कुर्वती Sy.

१७. सर्वस्य भूतजातस्यार्थाय Sk.

१८. यथा गावः स्वकीयं गोष्ठं स्वयमेव शीघ्रं व्याप्नुवन्ति, एवं स्वयमेव प्राचीं दिशं प्राप्य...। विवृतमपश्लिष्टमकरोत् Sy.

व्रजं व्यावृण्वन्ति। एवं तमः[1] स्वेन ज्योतिषा व्यावृणोति[2]।

**प्रत्यर्ची रुशदस्या अदर्शि वि तिष्ठते बाधते कृष्णमभ्वम्।**
**स्वरुं न पेशो विदथेष्वञ्जञ्चित्रं दिवो दुहिता भानुमश्रेत्॥५॥**

प्रत्यर्चिः। उषसः। दीप्तिः[3]। प्रतिदृश्यते। श्वेता[4]। विविधं च[5]। गच्छत्यर्चिः। बाधते[6] च। तमः[7]। महत्। स्वरूम्[8]। इव। रूपम्[9]। गृहेषु[10]। अञ्जन्तीति। चित्रम्[11]। दिवः। दुहिता[12]। भानुम्[13]। उदश्रेद् यूपमिवोत्थापयति[14]। स्वरूमान्यूपः[15] स्वरूरिति।

**अतारिष्म तमसस्पारमस्योषा उच्छन्ती वयुना कृणोति।**
**श्रिये छन्दो न स्मयते विभाती सुप्रतीका सौमनसायाजीगः॥६॥**

अतारिष्म। नैशस्य। तमसः[16]। पारम्। वयं तीर्णवन्तः[17]। उषाः[18]। व्युच्छन्ती[19]। प्रज्ञानानि च।

---

१. तमस्तेन P. तमस्थेन D.
२. स्वेन ज्योतिषा व्याप्नोतीत्यर्थः। किम्? उच्यते तमः शार्वरम् Sk.
३. तेजः Sy.
४. दीप्यमानम् Sy.
ज्योतिः रुशद्दीप्यमानम् Sk.
५. ०न्त्य० P. M.
सर्वासु दिक्षु विविधमवतिष्ठते व्याप्नोतीत्यर्थः Sy.
त्रीनपि लोकान् प्रति Sk.
६. अपसारयति Sy.
अपनयति Sk.
७. कृष्णवर्णं शार्वरं तमः Sk.
८. स्वरूपम् M. स्वरुम् is suggested for स्वरूम्।
स्वरुनाम्ना शकलेन युक्तं यूपं यथाऽऽज्येनाध्वर्यवः अञ्जन् अञ्जन्ति Sy.
यूपस्य यः प्रथमशकलः पश्वञ्जनार्थमुपादीयते स स्वरुरित्युच्यते। प्रथमार्थे चैषा द्वितीया। यथा स्वरुः पेश आज्यसम्बन्धादुज्ज्वलरूपं विदथेष्वञ्जन् श्रयत्येवम् Sk.
९. द्रूपम् P. रुप M.
तद्वन्नभसि स्वकीयं ... रूपमुषाऽनक्ति संश्लिष्टं करोति Sy.
१०. यज्ञेषु Sy.
११. चायनीयम् Sy. विचित्रं पूज्यं वा Sk.
१२. द्युलोकादुत्पन्नोषाः Sy.
द्युप्रभवत्वादुषा दिवो दुहितेत्याख्यायते Sk.
१३. भ्या० M. दीप्तिम् Sk.
१४. युवमि० P. श्रयति। प्रतिक्षणं दीप्ता रूपान्तरीभवतीत्यर्थः Sk.
१५. ०न्युव P. ०न्यूप D. M.
स्वरुमान् and स्वरुरिति are suggested for स्वरूमान् and स्वरूरिति
१६. समाप्तिप्रदेशम् Sy.
१७. निस्संशयं प्राप्ता वयम् Sk.
१८. ०षः P. D. M.
१९. ०न्ति P. नैशं तमो वर्जयन्ती Sy.
तमांसि विवासयन्ती Sk.

कृणोति[1]। धनाश्रयणाय[2] दरिद्रो[3] यथाऽऽढ्याय। आत्मच्छन्दं[4] प्रकाशयति। एवमियं हसति[5]। शोभना-[6]
वयवा। सर्वेषां[7] सौमनसाय तेजश्च (?)। गिरतीति[8][7][9]।

**भास्वती नेत्री सूनृतानां दिवः स्तवे दुहिता गोतमेभिः।**
**प्रजावतो नृवतो अश्वबुध्यानुषो गोअग्राँ उप मासि वाजान् ॥७॥**

भास्वती नेत्री। उषाः[10]। वचसाम्[11]। प्रणेत्री[12]। दिवः। दुहिता[13]। स्तुता[14]। गोतमैः[15]। प्रजायुक्तान्[16]।
दासयुक्तान्[17]। अश्वैर्बोद्धव्यान्[18]। उषः! गोमुखान्। उपकुरु[19]। वाजानन्नानि[20]।

---

१. निर्मिमीते Sy. करोति Sk.
२. यस्माच्च श्रिये प्रकाशलक्षणायै Sk.
३. यथोपच्छन्दयिता वशीकरणे समर्थः पुरुष आढ्यसमीपं प्राप्य तत्प्रीत्यर्थं स्मयते हसति Sy. छन्दः। ... छन्दश्शब्दोऽत्र कामिवचनः। कामीव Sk.
४. ०त्मछ० P. ५. स्मयते। ... ईषद्धसन्तीव। ... विविधं दीप्यमाना। यथा कामिनी ईषद्धसन्ती स्वदन्तकिरणान् प्रकाशयति एवमुषाः स्वकिरणानाविष्करोतीत्यर्थः। अथवा छन्द इति स्तोतृनाम। स्तोतेव स्मयते। यथा स्तोता स्तुत्यमतिशयवद्भिर्गुणैः स्तुवन् प्रकर्षाद्विकसितवदनो भवति तद्वदित्यर्थः Sk.
६. विशिष्टप्रकाशरूपत्वेन शोभनाङ्गी Sy. प्रतीकशब्दो मुखवचनः दर्शनपर्यायो वा। सुमुखा सुदर्शना वा Sk. ७. सर्वेषां सौमनस्याय...अन्धकारं भक्षितवती Sy.
८. रती० D. जिगर्तिर्ग ? (गि-) रतिकर्मा वा गृह्णातिकर्मा वान्यत्र। इह तु सामर्थ्याद् गत्यर्थः। जिगातेर्वा गिरति ? (गति-) कर्मण इदं रूपम्। त्रीनपि लोकान् प्रतिगच्छतीत्यर्थः Sk.
९. V. Mādhava ignores विभाती
१०. तेजस्विनी Sy.
११. सूनृता इति वाङ्नाम। सूनृतानां प्रियसत्यात्मिकानाम्।...उषसि हि जातायां मनुष्यप्रमुखाः प्राणिनः स्वस्वव्यापारार्थे-तस्ततः शब्दं कुर्वन्ति Sy.
१२. ०ती M. सूनृतानां वाचाम्। उषउदयोत्तरकालं हि प्राणिनां वाचः प्रवर्तन्ते। अतः सैव तासां प्रवर्तयिते ? (-त्री-)त्युच्यते नेत्री सूनृतानामिति Sk.
१३. द्युप्रभवत्वादुषा दिवो दुहितेत्युच्यते Sk.
१४. स्तूयते Sy; Sk.
१५. अस्मदो द्वयोश्च इत्येवमेतदेकस्मिन्नेव बहुवचनम्। मया गोतमेनेत्यर्थः। तत्प्रभृत्यपेक्षं वा बहुवचनम्। अस्माभिर्गोतमेभिः। गोतमप्रभृतिभिरित्यर्थः Sk.
१६. व्रजयुक्तां M. प्रजाभिः पुत्रपौत्रादिभिर्युक्तान् Sy. १७. संयुक्तान् M.
१८. ०श्वै बो० D. अश्वा बुध्या विद्यमानत्वेन बोद्धव्या येषु वाजेषु तान्। यद्वा अश्वबुध्नान्। वर्णव्यापत्त्या यकारः। अश्वमूलान्। अश्वैर्हि राजानो धनान्यन्नानि च लभन्ते। अतोऽन्नानां तन्मूलत्वम् Sy. अश्वैर्ये बोध्यन्ते तेऽश्वबुध्याः। तानश्वबुध्यान्। उत्कृष्टैरश्वैरुद्भासितानित्यर्थः Sk.
१९. प्रयच्छ Sy. निर्मिमीहि। कुरु। देहीत्यर्थः Sk. गावोऽग्रभूता येषां ते गोअग्राः। तान् गोअग्रान्। उत्कृष्टाभिर्गोभिस्सहितानित्यर्थः Sk.
२०. प्रजादिसहितान्यन्नानि देहीत्यर्थः Sk.

उषस्तमश्यां यशसं सुवीरं दासप्रवर्गं रयिमश्वबुध्यम् ।
सुदंससा श्रवसा या विभासि वाजप्रसूता सुभगे बृहन्तम् ॥८॥

उषस्तम्। उषः! तमहम्[1]। प्राप्नुयाम्। यशस्विनम्[2]। सुवीरम्[3]। प्रकृष्टदासगणम्[4]। रयिम्। अश्वबुध्यम्[5]। सुकर्मणा[6]। अन्नेन[7]। या। विभासि। प्रसूतान्ना[8]। सुधने! महान्तं यजमानं प्रति[9]।

विश्वानि देवी भुवनाभिचक्ष्या प्रतीची चक्षुरुर्विया वि भाति ।
विश्वं जीवं चरसे बोधयन्ती विश्वस्य वाचमविदन्मनायोः ॥९॥

विश्वानि देवी[10]। विश्वानि। भुवनानि[11]। उषाः। चक्षुषो दर्शयित्वा[12]। प्राणिनामभिमुखमागच्छन्ती[13]। बृहत्[14]। तेजः[15]। प्रकाशयति[16]। विश्वम्। प्राणिनम्[17]। चरणाय[18]। बोधयन्ती[19]। विश्वस्य[20]।

---

१. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यं त्वमेव दातुं समर्थः ? (र्था) नान्यः कश्चित् तं त्वया दीयमानम् Sk.

२. यस्विनम् D. सर्वैः प्रशस्यमित्यर्थः Sy. अन्नेन सहितमित्यर्थः Sk.

३. शोभनैर्वीरैः पुत्रादिभिर्युक्तम् Sy. शोभनैर्वीरैः पुत्रैः सहितम् Sk.

४. अनेकैर्भृत्यैरुपेतमित्यर्थः Sy.

५. ०द्धम् M. अश्वा बुध्या बोधव्या येन धनेन तादृशम् Sy. अश्वैरुद्भासितम् Sk.

६. शोभनप्रकाशकरणादिकर्मसम्बन्धया कीर्त्या हेतुभूतया। अतिशयवत्कर्मनिमित्तकीर्त्यर्थमित्यर्थः। . . . अथवा . . . दंसशब्दो दर्शनवचनः। श्रवःशब्दोऽपि सामर्थ्याज्ज्योतिर्वचनः। सुदर्शनेन ज्योतिषा या विभासीत्यर्थः Sk.

७. श्रवणीयेन स्तोत्रेण प्रीता त्वम् Sy.

८. दत्तान्ना सती Sy. कर्तव्येनाग्निहोत्रादिहविर्लक्षणेनान्नेन प्रेरिता Sk.

९. हन्तं P. बृहन्तं प्रौढं, या यं रयिं . . . विशेषेण प्रकाशयसि तमश्यामिति पूर्वेण सम्बन्धः Sy. क्रियाविशेषणमिदम्। व्यत्ययेन तु पुँल्लिङ्गता। महद्विभासि। अथवा पुँल्लिङ्गत्वसामर्थ्याद् व्यवहितस्यापि रयिमित्येतस्यैव विशेषणम्। महान्तं रयिमश्यामी? (मि) ति Sk.

१०. ०वीः M.

११. भूतजातानि Sy; Sk.

१२. अभिप्रकाश्य प्रकाशवन्ति कृत्वा Sy. प्रकाश्येत्यर्थः Sk.

१३. ०खाग० P. M. प्रत्यङ्मुखी सती Sy. सर्वव्यापी ? (पिनी-) त्यर्थः Sk.

१४. विस्तीर्णा सती Sy.

१५. प्रकाशकेन तेजसा Sy.

१६. प्रकाशते Sy. चक्षुः चक्षुःस्थानीया प्राणिनाम्। उर्विया। प्रथमैकवचनस्यायमियादेशः। उर्वीविस्तीर्णा। विभाति विविधं दीप्यते Sk.

१७. प्राणिजातम् Sy.

१८. स्वस्वव्यापारेषु प्रवर्तनाय Sy. सर्वप्राणिनां . . . तत्र तत्र गमनाय Sk.

१९. बा० M. निद्रातः सकाशाद् उद्बोधयन्त्युषाः Sy. सुप्तानुत्थापयन्ती Sk.

२०. सर्वस्य ऋषेर्यजमानस्य वा Sk.

मननशीलस्य[1] प्राणिनः। वाचम्। अलम्भयत्[2]।

**पुनःपुनर्जायमाना पुराणी समानं वर्णमभि शुम्भमाना।**
**श्वघ्नीव कृत्नुर्विज आमिनाना मर्तस्य देवी जरयन्त्यायुः ॥१०॥**

पुनःपुनः। अन्वहम्। जायमाना[3]। प्रत्ना[4]। समानमेव[5]। वर्णम्[6]। अभ्येति। शोभमाना[7]। लुब्धकस्त्रीव[8]। कर्तनशीला[9]। चलतः पक्षिणः[10]। हिंसन्ती[11]। मनुष्यस्य[12]। देवी। जरयन्ती[13]। जीवितमुत्तरत्र[14] सम्बन्धः।

**व्यूर्ण्वती दिवो अन्ताँ अबोध्यप स्वसारं सनुतर्युयोति।**
**प्रमिनती मनुष्या युगानि योषा जारस्य चक्षसा वि भाति ॥११॥**

व्यूर्ण्वती[15]। विविधं छादयन्ती[16]। द्युलोकस्य। पर्यन्तान्[17]। प्रादुरासीत्[18]। स्वसारं च रात्रिम्[19]।

---

१. मनसा युक्तस्य वाग्व्यवहारसमर्थस्य प्राणिजातस्य Sy. मन्यतेरर्चतिकर्मणो मना स्तुतिरुच्यते। तत्कामस्य मनायोः। सर्वेण ऋषिणा यजमानेन वा स्तुतिकामेन स्तूयते स्तुता वेत्यर्थः Sk.

२. अत एवोषसः सूनृतावतीति संज्ञोपपन्ना भवति Sy.

३. सूर्योदयात्पूर्वं प्रादुर्भवन्ती Sy. जन्मनात्रोदयोऽभिप्रेतः। उद्यती Sk.

४. प्रह्ना M. नित्येत्यर्थः Sy. जगत्सृष्टिकाल एवोत्पन्नत्वादुषा पुराणीत्युच्यते Sk. ५. एकमेव Sy.

६. ववर्ण० M. उषोत्तरैः समानेन शुक्लेन शोभमानेत्यर्थः Sk.

७. विभिन्नेष्वपि दिवसेष्वस्या ऐकरूप्येणावस्थानान्नित्यत्वमित्यर्थः Sy.

८. श्वभिर्हन्तीति श्वघ्निर्लुब्धक इहोच्यते। स यथा कृत्नुः पापस्य कर्मणः कर्ता Sk.

९. लुब्धकर्त० P. ०कस्तीवकर्त० M. ०स्त्रीविकर्त० D. १०. सा यथा... चलतः पक्षिणः... पक्षादिच्छेदनेन हिंसन्ती तेषामायुर्जरयति तद्वत् Sy. विः पक्षी। ततो जात इति विजः। येऽनुपजातपक्षा बालाः पक्षिणस्तानवष्टभ्य बलाद्धिंस्यात् Sk.

११. बलात्...। किम्? सामर्थ्यात्तमांसि। सर्वप्राणिनो वा पूर्वं निर्दिष्टत्वात् पक्षिणः Sk.

१२. मरणधर्मणः सर्वस्य प्राणिजातस्य Sy. मनुष्याणाम् Sk.

१३. ऊनयन्ती वर्तते। बह्वीषूषःस्वतीतासु हि सर्वेषामायुर्हीयते। उषाश्च पुनः पुनर्जायमानेत्युक्तं, अतः सैवायुर्जरयति Sy. जराम्नयन्ती। क्षपयन्तीत्यर्थः Sk.

१४. जीवमु० M. १५. ०ण्व० M.

१६. विवृतांस्तमसा वियुक्तान् कुर्वती Sy. स्वेन ज्योतिषा तमांसि Sk.

१७. ०न्तात् P. D. ०न्ता M.

१८. सर्वैः प्राणिभिरज्ञायि, ज्ञाताभूत् Sy. बोधयति। प्रकाशयतीत्यर्थः Sk.

१९. उषसः प्रादुर्भावे सति स्वयमेव सरन्तीं निशाम् Sy. उषसमुदयेनादित्यो जनयति, अस्तमयेन रात्रिम्। अतो रात्रिरुषसः स्वसोच्यते। तां च Sk.

[१]अन्तर्हिताम् । [२]अपयुयोत्यपगमयति । [३]प्रहिंसन्ती । मनुष्याणां [४]परिच्छेदकानि । अहोरात्राणि । [५]योषा ।
[६]जरयितुरादित्यस्य । [७]तेजसा । संप्रकाशयति ।

**पशून्न चित्रा सुभगा प्रथाना सिन्धुर्न क्षोद उर्विया व्यश्वैत् ।**
**अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिभिर्दृशाना ॥१२॥**

**पशून्न चित्रा** । [८]पशून् । इव । [९]चित्रा । सुधना । विस्तारयन्ती तेजांसि । [१०]नदी । इव । उदकम् ।
[११]उरुत्वेन भासम् । [१२]वर्धयति । दैव्यानि । [१३]कर्माणि । [१४]अहिंसन्ती [१५]रात्रिर्हि यज्ञान् हिनस्ति नैवमहः ।
सूर्यस्य । [१६]रश्मिभिः सह । [१७]विज्ञायते । [१८]दृश्यमाना ।

---

१. सनुतः, अन्तर्हितनामैतत् । अन्तर्हितप्रदेशे ... अपगमय्य पृथक्करोति Sy.

२. ०युजोत्य० M.
अपमिश्रयति । अपनयतीत्यर्थः Sk.

३. स्वगमनागमनाभ्याम् Sy.
क्षपयन्तीत्यर्थः Sk.

४. मनुष्याणां सम्बन्धीनि ... कृतत्रेतादीनि Sy.
युगशब्दः कालवचनः । मनुष्याणां जीवितादिकालान् Sk.

५. येषां D. M.
जाया Sy.

६. रात्रेर्जरयितुः Sy.
रात्रे रसानां जरयितृत्वाद् जार आदित्य उच्यते Sk.

७. आत्मीयेन प्रकाशेन ... विशेषेण प्रकाशते Sy.
दर्शनेन प्रकाशाख्येन Sk.

८. यथा पशून् गोपालकोऽरण्ये विस्तारयति तथा Sy.
यथा कश्चिच्छीघ्रगमनाय विस्तीर्णे पथि गा अन्यान् वा पशून् पृथक्करोत्येवम् Sk.

९. चायनीया पूजनीयोषाः Sy.
विचित्रा पूजनीया वा Sk.

१०. यथा स्यन्दनशीलमुदकं निम्नदेशेऽचिरादेव व्याप्नोति तद्वत् Sy.
प्रथनस्य चेयं द्वितीयोपमा । यथा सिन्धुर्नदी आत्मीयमुदकं प्रथयति एवं प्रथाना Sk.

११. उरुत्वेन M.
उर्वी महती एवंभूता सा Sy.
उर्वीविस्तीर्णा Sk.

१२. सर्वं जगद् व्याप्नोत् Sy.
श्वयतिर्गत्यर्थः । विविधं गच्छति त्रीनपि लोकान् प्रति Sk.

१३. देवसम्बन्धीनि ... दर्शपूर्णमासादीनि कर्माणि Sy.
यागकर्माणि । यागकर्मणां ह्यकरणं हिंसा । उषआयत्ता च तेषां क्रिया तदुत्तरकालभावित्वात् । अत इदमुच्यते अमिनती दैव्यानि व्रतानीति । यागार्थमुद्यतीत्यर्थः Sk.

१४. ०न्ति M.
अनुष्ठाने यजमानान् प्रवर्तयन्तीत्यर्थः Sy.

१५. रात्री हि P. M.

१६. तृतीयानिर्देशात् सदृशीति वाक्यशेषः Sk.

१७. चेति PP. चेति प्रज्ञाता आसीत् Sy.
चेति ज्ञायते लक्ष्यते Sk.

१८. ०ना: M.
सदा सूर्यरश्मिसदृशी लक्ष्यत इत्यर्थः Sk.

**उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।**
**येन तोकं च तनयं च धामहे ॥१३॥**

उषस्तत्[1] । उषः ! तत्[2] । चायनीयमन्नम्[3] । अस्मभ्यम्[4] । आभर[5] । अन्नवति[6] ! येन । पुत्रम् । च । तत्पुत्रम्[7] । च । धारयेम[8] ।

**उषो अद्येह गोमत्यश्वावति विभावरि । रेवदस्मे[*] व्युच्छ सूनृतावति ॥१४॥**

उषो अद्य[9] । उषः[10] ! अद्य[11] । अस्मिन् प्रदेशे । गोमति ! अश्ववति ! दीप्तिमति[12] ! धनयुक्तम्[13] । अस्मभ्यम्[14] । व्युच्छ[15] । शब्दवति[16][17] !

**युक्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः ।**
**अथा नो विश्वा सौभगान्या वह ॥१५॥**

युक्ष्वा हि[18] । योजय । हि[19] । अन्नवति[20] ! अरुणान् । अश्वान्[21] । अद्य । उषः ! अथ[22] । अस्मभ्यम्[23] । विश्वान्येव । सौभाग्यानि । आवह[24] ।

---

१. उषा वष्टेः कान्तिकर्मणः। उच्छतेरितरा माध्यमिका। तस्या एषा भवति . . . उषस्तत् (चित्रं) चायनीयं (मंहनीयं) धनमाहर। अस्मभ्यमन्नवति ! येन पुत्रांश्च पौत्रांश्च दधीमहि N. 12.5-6.
२. ०षन् P. ३. विचित्रं पूजनीयं वा Sk.
४. धनम् Sy. ५. प्रयच्छ Sy. आहर। देहीत्यर्थः Sk. ६. न्नव० D. वाजो हविर्लक्षणमन्नम्। तद्युक्ता क्रिया वाजिनी। तया क्रियया युक्ते ! Sy. अन्नसमूहवतीत्यर्थः। स्वार्थको वा मत्वर्थीयः। अन्नवतीत्यर्थः Sk.
७. चा D. ८. ०मः M. सम्यक् पुष्णीम इत्यर्थः Sk.
* अस्मे इति। PP.
९. ०षोऽद्य M. १०. ०षा D.
११. इदानीं प्रभातसमये Sy. इह। सप्तमीनिर्देशात् स्थितेभ्य इति वाक्यशेषः Sk.
१२. अस्मभ्यं दातव्यैर्गोभिर्युक्ते ! Sy.
१३. विशिष्टप्रकाशोपेते Sy.
१४. धनयुक्तं कर्म यथा भवति तथा Sy. धनसंयुक्ते ! Sk.
१५. इहैव स्थितेभ्योऽस्मभ्यं धनं देहीत्यर्थः Sk.
१६. गच्छ P. D. M. नैशं तमो निवारय Sy. विविधं तमांसि विवासय Sk.
१७. यब्द ० P. प्रियसत्यात्मिका वाक् सूनृता। तादृश्या वाचा युक्ते ! Sy. सूनृताः प्रिया वाचः स्तुतिलक्षणाः। तद्वति ! Sk.
१८. युष्मा D. जष्वा P.
१९. एव। हिरवधारणे Sy. हिशब्दः पदपूरणः Sk.
२०. हविर्लक्षणान्नवति ! Sy.
२१. अश्वस्थानीयान् गोविशेषान् Sy.
२२. अनन्तरं रथमारुह्य Sy.
२३. ०षोवास्म० P. ०षोधास्म० D. M. अस्मान् प्रति Sk. २४. आनय Sy. प्रापय। आनीयास्मभ्यं देहीत्यर्थः Sk.

अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत् ।
अर्वाग्रथं समनसा नि यच्छतम् ॥१६॥

अश्विना वर्तिः[1]। अश्विनौ[2]! अस्मदर्थम्[3]। मार्गं[4] प्रति। गोमन्तम्[5]। हिरण्यवन्तम्[6]। रथम्। अभिमुखम्[7]। आनियच्छतम्[8]। समानमनसौ[9]। दर्शनीयौ[10]।

यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः ।
आ न ऊर्जं वहतमश्विना युवम् ॥१७॥

यावित्था। यौ। इत्थम्[11]। स्तोतव्यम्[12]। ज्योतिः[13]। दिवो[14] भूमिं प्रति। आचक्रथुः[15]। जनार्थं[16] तौ। युवाम्। अश्विनौ। अस्मभ्यम्[17]। अन्नम्[18]। आवहतम्[19]।

एह देवा मयोभुवा दस्रा हि*रण्यवर्तनी । उषर्बुधो वहन्तु सोमपीतये ॥१८॥

एह[20] देवा[21]। आवहन्तु[22]। अत्र[23]। देवौ[24]। सुखस्य भावयितारौ[25]। दस्रौ[26]। हिरण्ययुक्तमार्गा-[27]

---

१. ०र्ति D.
२. अश्ववन्तौ व्यापनशीलौ वा देवौ Sy.
३. ०नादस्म० M. अस्माकम् Sy.
४. वर्तनहेतुभूतं गृहम् Sy. वर्तिः। तृतीयार्थे प्रथमैषा। वर्तन्या। प्रसिद्धेन पथा Sk.
५. बहुभिर्गोभिर्युक्तम् Sy.
६. गोमत्। हिरण्यवत्। रथस्यैते विशेषणे। व्यत्ययेन तु नपुंसकता। अस्मभ्यं देयाभिर्गोभिर्हिरण्येन च संयुक्तम् Sk.
७. अस्मदीयगृहमभिमुखम् Sy.
८. ०खं मानि० M. आनिनय० D. आवर्तयतम् Sy. गोमता हिरण्यवता च रथेन सम्प्रीयमाणावभिमुखमागच्छतमित्यर्थः Sk.
९. सम्प्रीतचेतस्कौ Sk.
१०. शत्रूणामुपक्षपयितारौ Sy. हे दस्रा शत्रूपक्षयकरौ दस्रनामानौ वा। यद्यपि चाश्विनोरेको दस्रनामा नासत्यनामाऽपरस्तथापीदं साहचर्यादुभयोरभिधानम् Sk. ११. ०त्थ M. इत्थमस्माभिरनुभूयमानेन प्रकारेण ... केषाञ्चिन्मतेन सूर्याचन्द्रमसावश्विनावुच्येते Sy. इत्था अमुत्रान्तरिक्षे सत्यं वा Sk. १२. श्लोकलक्षणं वचः Sk.
१३. विद्युदाख्यम् Sk. १४. द्युलोकात् Sk.
१५. ०क्र M. १६. मर्जनार्थं M. लोकोपकारार्थम् Sk. १७. अस्मान् प्रति Sk.
१८. बलप्रदम् Sy. १९. ०न्नवाह० P. प्रापयतम्। दत्तमस्मभ्यमित्यर्थः Sk.
* हिरण्यवर्तनी इति हिरण्यऽवर्तनी। PP.
२०. येह M. २१. ०वाः M.
२२. ०न्ति M. २३. अस्मिन्यागे Sy. अस्मदीये यज्ञे Sk. २४. ०वो M.
२५. यष्टॄणां च स्तोतॄणां च सुखस्य भावयितारौ जनयितारौ Sk.
२६. शत्रूणामुपक्षपयितारौ। ... वर्ततेऽनेनेति व्युत्पत्त्या वर्तनिशब्देन रथ उच्यते। सुवर्णमयो वर्तनिर्ययोस्तौ Sy.
२७. वर्तनी रथचक्रधारा। सा हिरण्मयी ययोस्तौ हिरण्यवर्तनी Sk.

वश्विनौ। उषसि प्रबुद्धा[1] देवाः[2]। सोमपानाय।[3]

I.93.

**अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम्।**
**प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥१॥**

**अग्नीषोमौ।** अग्नीषोमौ! इमम्[4]। मदीयम्। आह्वानम्। वर्षितारौ[5]। सुष्ठु[6]। शृणुतम्[7]। सूक्तानि[8] च। कामयेथाम्। भावयतं[9] च। यजमानाय[10]। सुखम्[11] ।[12]

**अग्नीषोमा यो अद्य वामिदं वचः सपर्यति।**
**तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यम् ॥२॥**

**अग्नीषोमा यः।** अग्नीषोमौ! यः। अद्य[13]। इदम्[14]। वचः[15]। उच्चारयति[16]। तस्मै। धत्तम्[17]। सुवीर्यम्[18]। गवाम्[19]। पोषम्[20]। अश्वसङ्घं[21] च शोभनम्।[22]

**अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिम्।**
**स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत् ॥३॥**

**अग्नीषोमा यः।** अग्नीषोमौ! यः[23]। युवाभ्याम्। आज्याहुतिम्[24]। प्रयच्छति। यो वा।

---

१. सुप्ताः सन्तो यज्ञं प्रति गन्तुमुषःकाले ये प्रतिबुध्यन्ते ते उषर्बुधोऽश्वाः Sk.
२. अश्वाः Sy.
३. Ms. D. puts the figure ॥९२॥ here to indicate the end of the ninetysecond hymn. No such number is given in P. and M. ४. इदानीं प्रयुज्यमानम् Sy.
५. वञ्चिता० M. कामानाम् Sy.
६. शोभनं सुष्ठु वा Sk.
७. सम्यगवगच्छतम् Sy.
८. शोभनानि स्तुतिलक्षणानि, अस्माभिः कृतानि वचांसि Sy. स्तुतिरूपाणि Sk.
९. भवतम् Sy.
१०. चरुपुरोडाशादीनि दत्तवते Sy.
११. सुखस्य दातारौ Sy.
१२. V. Mādhava ignores प्रति
१३. अस्मिन् कर्मणि Sy.
१४. स्तुतिलक्षणम् Sy.
१५. युवयोरनुवाक्यालक्षणमिदम् Sk.
१६. पूजितं करोति Sy. परिचरणकर्मायमन्यत्र। इह तु सामर्थ्या-दुच्चारणार्थः। अथवा परिचरणकर्मैवे-दम्। वच इति तृतीयार्थे द्वितीया। युवामनुवाक्यालक्षणेन वचसा सपर्यति परिचरति। स्तौतीत्यर्थः Sk.
१७. प्रयच्छतम् Sy.
१८. शोभनेन वीर्येण सामर्थ्येनोपेतम् Sy.
१९. गवयां M. २०. अभिवृद्धिम् Sy.
२१. शोभनैरश्वैर्युक्तम् Sy.
२२. V. M. ignores वाम्
२३. यजमानः Sk. २४. ०र्ती D.

पुरोडाशम्[1]। सः। प्रजया[2] च। सुवीर्यम्[3]। विश्वम्। आयुश्च[4]। व्याप्नोतु[5]।

**अग्नीषोमा चेति तद्वीर्यं वां यदमुष्णीतमवसं पणिं गाः।**
**अवातिरतं बृसयस्य शेषोऽविन्दतं ज्योतिरेकं बहुभ्यः ॥४॥**

अग्नीषोमा चेति। अग्नीषोमौ[6]! तत्। युवयोः। वीर्यम्। चेतयति[7]। यत्[8]। अमुष्णीतम्[9]।
अन्नम्[10]। पशूंश्च[11][10]। पणेस्तथा[12]। बृसयस्य[13]। अपत्यं वृत्रम्। अवातिरतम्[14]अभ्यभवतम्[15]। अविन्दतं च[16]।
ज्योतिः[17]। एकम्[18]। बहुभ्यः[18]। साधारणमादित्यं वृत्रहननेन लम्भितवन्तौ[19]विति।

**युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू* अधत्तम्।**
**युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान् ॥५॥**

युवमेतानि। युवम्[20]। एतानि[21]। दिवि। नक्षत्राणि। अग्नीषोमौ[22]! समानकर्माणौ।

---

१. चरुपुरोडाशादिना कृतामाहुतिम् Sy.
यथोक्तसंस्कारादिसंस्कृतम् Sk.
२. पुत्रपौत्रादिना युक्तम् Sy.
३. ०र्यं P.　　४. जीवितमन्नं वा Sk.
५. लभेत युष्मत्प्रसादेनेत्यर्थः Sk.
६. अत्रेतिहासमाचक्षते। पणिर्नामासुरो देवेभ्यो बिभ्यन् स्वा गा आदाय ननाश। तमग्नीषोमावनुगम्य ता अस्य गा अनुजह्रतुरिति Sk.
७. अस्माभिर्ज्ञातमभूत् Sy.
चेत्यते ज्ञायते। सर्वलोकप्रकाशमित्यर्थः Sk.　　८. येन वीर्येण Sy.
तृतीयार्थे प्रथमैषा। येन Sk.
९. ०ष्णि० P.　　अपाहार्ष्टम् Sy.
१०. गोरूपमन्नम् Sy.
अवतेर्गत्यर्थस्य। अवितारं गन्तारम्। नष्टारमित्यर्थः Sk.
११. गाः सास्नादिमतीः। सर्वलोकप्रकाशं तद्युवयोर्वीर्यं येन पणेर्गा अपहृतवन्तौ स्थः Sk.　　१२. ०णे० M.
विभक्तिव्यत्ययः Sy.
१३. घृ . . . यस्य M.
बृसयति सर्वं वेष्टयतीति बृसयोऽसुरस्त्वष्टा। तस्यासुरस्य Sy.
१४. अवतिरतिर्वधकर्मा। हतवन्तौ स्थः Sk.
१५. ०भवम् P. D. M.
अवधिष्टम्। . . . प्राणापानरूपयोर्युवयोर्वृत्रेऽनवस्थानात् स मरणं प्राप्तः Sy.
१६. ०न्दत त P.
१७. द्योतमानं सूर्यम् Sy.
सर्वसाधारणमादित्याख्यम् Sk.
१८. एकं नभसि गच्छन्तं . . . बहुभ्यो जनेभ्यो बहूनामर्थाय Sy.　　१९. वर्द्धितव० P.
* सक्रतू इति सऽक्रतू। PP.
२०. युवाम् Sy.
२१. अस्माभिर्निशि दृश्यमानानि ताराग्रहादीनि ज्योतींषि। ...उत्तरार्धस्येयमाख्यायिका। इन्द्रो वृत्रं हत्वा ब्रह्महत्याया भीतः सन् पृथिव्यां वृक्षेषु स्त्रीष्वप्सु च तां ब्रह्महत्यां न्यमार्क्षीत्। तासामपां शुद्धिरग्नीषोमाभ्यां जातेति Sy.
२२. आग्नी० M.

[1]अधत्तम् । [2]युवम् । [3]नदीः । [4]ब्रह्महत्यागृहीताः । [5]अवद्याभि[6]शस्तेश्च । [7]अमुञ्चतम्[8] ।

**आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः ।**
**अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ॥६॥**

[9]**आन्यं दिवः** । युवयोरन्यतरमग्निम् । [10]स्वर्गात् । वायुः । आहृतवान् भृगवे । अन्यं च सोमम् ।
[11]मरोः । [12]श्येनो भूत्वा गरुडः । [13]पर्यमथ्नात् । अग्नीषोमौ । [14]स्तोत्रेण । [15]वर्धमानौ । विस्तीर्णम् । अव-
[16]काशम् । [17]यज्ञाय । [18]चक्रथुः । एतयोर्हि मध्ये सर्वेषामेव देवानां [19]यागः ।

**अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथाम् ।**
**सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः ॥७॥**

**अग्नीषोमा हविषः** । अग्नीषोमौ ! हविः । [20]प्रस्थितम् । [21]भक्षयतम् । [22]कामयेथाम् ।

---

१. वृत्रहननद्वारेण स्वसाध्ययज्ञहेतुकवृष्टयादिद्वारेण चा? (च) स्थापितवन्तौ Sk.

२. युवाम् Sy. ३. स्यन्दनात् सिन्धवो रश्मय इहोच्यन्ते । ... रश्मीन् Sk.

४. ०दी M. ५. ०गृभीता P. ०त्याशभीताः M. ब्रह्महत्यांशेन पापेन ... गृहीतानाक्रान्तान् Sy. वृत्रेण गृहीतान् सतः Sk. ६. अवत्याभि० P. अवद्यादभि० is suggested for अवद्याभि० पापात् Sy.
अभिशस्तेर्हिंसितुर्वृत्राख्यात् । कीदृशात् ? अवदचात् । अत्यन्तपापात् Sk.

७. ०श्व M. अभिशस्यमानादभितः प्रकटितात् । ...यद्वा । वृत्र इन्द्रेण हतः सन् नदीषु पपात । ततो मृतेन वृत्रशरीरेण नदचः सर्वा दुष्टा बभूवुः । ...तेन दोषेण गृहीता नदीस्तस्माद्दोषादग्नीषोमौ मुक्तवन्तौ Sy.

८. V. Mādhava ignores either अग्नीषोमौ or अग्निश्च सोम

९. अन्यं P. १०. दचुलोकात् Sk.

११. ०रो P. D. M. मेरोरुपर्यवस्थितात् स्वर्गात् Sy. पर्वतस्योपरि । पर्वतेषु हि भूयान् सोमो जायते Sk.

१२. शंसनीयगतिमान्पक्षी पक्ष्याकारा गायत्री Sy. श्येनरूपा गायत्री Sk.

१३. बलादाहृतवती Sy. मथ्नातिरत्र मथनकर्मक आहरणे वर्तते । अन्यं तु सोमाख्यं गायत्री सुपर्णरूपिणी सोमपालान् भीषयित्वा प्रमथ्याहरत् Sk. १४. त्वष्ट्रा मन्त्ररूपेण स्तोत्रेण हविर्लक्षणेनान्नेन वा Sy. अस्मदीयेन याज्यलक्षणेन Sk.

१५. स्तूयमाना हि देवता वीर्येण वर्धन्ते । ... अथवा ब्रह्मेत्यन्ननाम । उपांशुयाज्यलक्षणेनान्नेन वर्धमानौ Sk. १६. यत्र विस्तीर्णे स्थाने स्थिता वयं यज्ञान् कुर्मः । ततो दत्तमित्यर्थः Sk. १७. अन्येषां देवानां यागाय Sy. १८. ०क्रतुरे० M.

१९. V. Mādhava ignores उ

२०. ०स्थिकं M. होमार्थमाहवनीयसमीपं प्राप्तम् Sy. हविषः प्रस्थितस्य युवां प्रतिगतस्य प्रस्थितयज्ञस्य वा । षष्ठीनिर्देशस्य साकाङ्क्षत्वादेकदेशं स्वांशलक्षणमिति शेषः । द्वितीयार्थे वा षष्ठी । हविः प्रस्थितम् Sk. २१. भयतं P.

२२. अभिप्रेतं सम्भक्षयतमित्यर्थः Sk.

सेवेथाञ्च[1]। वर्षितारौ[2]। सुसुखौ[3]। सुरक्षौ च। हि[4]। भवतम्[5]। तथा सति। यजमानाय। उत्पन्नानामनिष्टानां[6] शमनमनागतानाम्[7]। पृथक्करणम्[8]। धत्तम्[9]।

**यो अ॒ग्नीषोमा॑ ह॒विषा॑ सप॒र्याद्दे॑व॒द्रीचा॒ मन॑सा॒ यो घृ॒तेन॑। तस्य॑ व्र॒तं र॑क्षतं पा॒तमंह॑सो वि॒शे जना॑य॒ महि॒ शर्म॑ यच्छतम् ॥८॥**

**यो अग्निषोमा।** यः। अग्नीषोमौ[10]। हविषा[11]। परिचरति। देवानञ्चता[12]। मनसा। यो वा। घृतेन[13]। तस्य। यज्ञम्। रक्षतम्। रक्षसश्च तम्। पातम्[14]। निवसते[15]। जनाय[16]। महत्। सुखम्। यच्छतम्[17]।

**अ॒ग्नीषो॑मा॒ सवे॑दसा॒ सहू॑ती* वनत॒ं गिरः॑। सं दे॑व॒त्रा ब॑भूवथुः ॥९॥**

**अग्नीषोमा।** अग्नीषोमौ! समानपुरोडाशौ। समानाह्वानौ। भजेथाम्[18]। स्तुतीः[19]। युवां हि सर्वानिव[20] देवान्[21]। महत्तया संबभूवथुः[21]। स्थालीव तण्डुलानिति[22]।

---

१. अस्मदीयं परिचरणम् Sy.
प्रीयेथाम् Sk.
२. कामानाम् Sy.
३. सुखौ M.
४. हिशब्दः पदपूरणः Sk.
५. ०तः M.
६. ०ना M.
उद्भूतानां रोगादीनामनभीष्टानाम् Sk.
७. शं शमनीयानां रोगाणां शमनम् Sy.
८. पृथकमुरणम् P. पृथक्कर्तव्यानां भयानां यावनं पृथक्करणं च Sy.
९. कुरुतम् Sy.
असम्बन्धं चेत्यर्थः। सामर्थ्यादुच्चित्सुभिरनिष्टैः Sk.
१०. अग्नीषोमाविति च नेदमामन्त्रणम्। अननुदात्तत्वात्। अतोऽत्र युष्मच्छब्देन समानार्थो भवच्छब्द उपपदभूतोऽध्याहर्तव्यः। हे भवन्तावग्नीषोमौ Sk.
११. चरुपुरोडाशादिना Sy; Sk.
१२. देवानां च ता M.
देवतापरायणेन श्रद्धायुक्तेन Sy.
युवामेव देवौ प्रतिगतेन। अत्यन्तयुष्मद्भक्तेन चेतसेत्यर्थः Sk.
१३. आज्याहुतिलक्षणेन Sk.
१४. पापात् Sy; Sk.
१५. यागेषु प्रविशते Sy.
१६. जातापेक्षयैकवचनम्। पुत्रादिमनुष्यजातस्वभूताय यजमानाय परिचारकजनाय च Sk.
१७. ०त P.
* सहू॑ती॒ इति॒ सऽहू॑ती। PP.
१८. ०ताम् M.
१९. सुती० M.
अस्मदीययाज्यानुवाक्यास्तुतिलक्षणा गिरः Sk.
२०. सर्वदानेव M.
२१. देवेषु सर्वेषु . . . युवां . . . सम्भूतौ सम्भावितौ प्रशस्तौ स्थः Sy.
सम्यग्वास्य पुरोडाशस्य हविषो देवौ भवतमित्यर्थः Sk.
२२. ०नीति M.

अग्नीषोमावनेन वां यो वां घृतेन दाशति । तस्मै दीदयतं बृहत् ॥१०॥

अग्नीषोमौ[1] । अग्नीषोमौ ! अनेन[2] । वाम्[3] । यः[4] । वाम्[5] । घृतेन[6] । परिचरति[7] । तस्मै । वर्धयतम्[8] । महद्धनम् । वामिति पूरणम् ।

अग्नीषोमाविमानि नो युवं हव्या जुजोषतम् । आ यातमुप नः सचा ॥११॥

अग्नीषोमाविमानि[9] । अग्नीषोमौ ! इमानि । अस्माकम् । हवींषि । युवाम्[10] । जुषेथाम् । उपयातं[11] च[12] । अस्मान्[13] । सह[14] ।

अग्नीषोमा पिपृतमर्वतो न आ प्यायन्तामुस्रिया हव्यसूदः ।
अस्मे* बलानि मघवत्सु धत्तं कृणुतं नो अध्वरं श्रुष्टिमन्तम् ॥१२॥

अग्नीषोमा पिपृतम्[15] । अग्नीषोमौ ! पालयतम्[16] । अस्माकम्[17] । अश्वान् । आप्यायन्तां[18] चास्माकम्[19] । गावः । हविषः प्रेरयित्र्यः[20] । अस्मासु । बलानि । धनवत्सु । स्थापयतम्[21] । कुरुतं च । अस्माकम् । यज्ञम् । प्राप्तियुक्तमाश्वात्मनि[22] प्राप्तमिति[23][24][25] ।

---

१. ०मा P. D. M. २. पणेन P.
३. युवयोः सम्बन्धी यो यजमानः Sy. युवयोःस्वभूतेन Sk. ४. यजमानः Sk.
५. युवां M. युवाभ्याम् Sy; Sk.
६. उत्पवनादिभिः संस्कृतेनाज्येन युक्तं हविः Sy. तृतीयानिर्देशात् संयुक्तं हविरिति शेषः। अथवाऽनेन घृतेनेति द्वितीयार्थे तृतीया। इदं घृतम् Sk.
७. प्रयच्छति Sy. ददाति Sk.
८. प्रकाशयतं प्रयच्छतमित्यर्थः Sy. दत्तम्। . . . अथवा तस्मै इति तादर्थ्ये चतुर्थी। तदर्थं दीदयतं दीव्येथाम् Sk.
९. ०विवामानि P. १०. युवं P.
११. जुषथोमपयातं P. ०यान्तं M.
१२. Omitted by D.
१३. Omitted by M.
१४. V. Mādhava ignores आ
* अस्मे इति। PP.
१५. विवृतम् M. १६. दत्तं वा Sk.
१७. अस्मभ्यमस्माकं वा Sk.
१८. प्रवृद्धाः सन्तु Sy. १९. ०यन्तामं P.
२०. क्षीरादिहविषामुत्पादयित्र्यः Sy. पयआख्यस्य हविषः क्षरित्र्यः। दोग्ध्र्य इत्यर्थः Sk. २१. धनवतोऽस्मान् कृत्वा ततो बलानि दत्तमित्यर्थः Sk.
२२. धनयुक्तम् Sy. श्रुष्टिमन्तम्। अपठितमपि सुखनामैतद् द्रष्टव्यम्। फलभूतेन सुखेन सुखवन्तम्। सुखफलमित्यर्थः। अथवा श्रुष्टीति क्षिप्रनाम। क्षिप्रवन्तम्। शीघ्रफलमित्यर्थः Sk.
२३. ०त्मिनि P. २४. ०प्ति० P.
२५. Ms. D. puts the figure ॥६३॥ here to indicate the end of the ninetythird hymn. No such number is given in P. and M.

I.94.

इ॒मं स्तोम॒मर्ह॑ते जा॒तवे॑दसे॒ रथ॑मिव॒ सं म॑हेमा मनी॒षया॑ ।
भ॒द्रा हि नः॒ प्रम॑तिरस्य सं॒सद्यग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥१॥

**इमं स्तोमम्** । कुत्स आङ्गिरसः

इमम् । स्तोमम्[1] । स्तोमार्हाय[2] । जातप्रज्ञाय[3] । रथमिव[4] । संस्कुर्मः[5] । प्रज्ञया[6] । भजनीया[7] । हि[8] ।
अस्य[9] । अस्माकम्[10] । प्रमतिर्भवति[11] । सह वसाने[12] । अग्ने[13] ! तव[14] । सख्ये[15] वर्तमानाः । वयम् । मा ।
विनश्येम[16] ।

यस्मै॒ त्वमा॒यज॑से॒ स सा॑धत्यन॒र्वा क्षे॑ति॒ दध॑ते सु॒वीर्य॑म् ।
स तू॑ताव॒ नैन॑मश्नोत्यंह॒तिरग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥२॥

**यस्मै त्वम्** । यस्मै[17] । त्वम् । देवान् आयजसे हविरादाय देवेभ्यः[18] प्रयच्छसि । सः ।
साधयत्यभिलषितम्[19] । अप्रत्यृतश्च[20] । निवसति । धारयति[21] च । सुवीर्यम्[22] । सः[23] । वर्धते[24] । न ।

---

१. एतत्सूक्तरूपं ... स्तोत्रम् Sy.
२. पूज्याय Sy. ३. जातानामुत्पन्नानां वेदित्रे ... जातधनाय वाग्नये Sy. स्तोमार्हस्य जातप्रज्ञानस्य वाग्नेरर्थाय Sk.
४. यथा तक्षा रथं संस्करोति तथा Sy.
५. सम्यक् पूजितं कुर्मः Sy. यथा कश्चिद् रथं सम्यगगमयत् तद्वत् सम्यगगमय Sk. ६. निशितया Sy. अस्माकं प्रज्ञयैव स्तोममुच्चारयेमेत्येतदाशास्महे इत्यर्थः Sk.
७. कल्याणी Sy. ८. हिशब्दो यस्मादर्थे । यस्मात् Sk. ९. अग्नेः Sy.
१०. ०नीयाह्यस्यस्मा० D. ०नीयाप्यस्मा० M. षष्ठीनिर्देशादुपरीति वाक्यशेषः । सप्तम्यर्थे वा षष्ठी । अस्माकमुपरि अस्मासु वा Sk.
११. प्रकृष्टा बुद्धिः Sy. प्रकृष्टानुग्रहात्मिका मतिः Sk.
१२. सहाव० P. D. M. सम्भजने ।... अतस्तया बुद्ध्या स्तुम इत्यर्थः Sy. अस्याग्नेः संसदि सभायाम् । यस्मादयं यज्ञादिसभास्वस्माकमनुग्राहक इत्यर्थः Sk. १३. न M. १४. भव D. व P.
१५. देवानां मनुष्याणां च स्तुत्यस्तोतृसम्बन्धः सख्यम् । तस्मिन् Sk. १६. ०श्यनः M. अस्मान् रक्षेत्यर्थः Sy. हिंसिष्महि Sk.
१७. यजमानाय Sy. १८. ०भ्य P.
१९. प्राप्नोतीत्यर्थः स्वाभिलषितं साधयति Sy. २०. शत्रुभिः Sy. अन्यं प्रत्याश्रित(त)या न गच्छत्यनर्वा अन्यं वानाश्रिततया न गच्छतीत्यनर्वा । अन्यं चानाश्रित्य स्वस्थाने निवसतीत्यर्थः Sk.
२१. प्राप्नोतीत्यर्थः Sy.
२२. शोभनवीर्योपेतं धनम् Sy. सुवीर्यं च प्राप्नोतीत्यर्थः Sk.
२३. स तूताव नैनमंहतिरश्नोति । अंहतिश्चांहश्चांहुश्च हन्तेः । निरूढोपधात् । विपरीतात् N. 4. 25.
२४. सर्वाभिर्वृद्धिभिः Sk.

एनम् । अश्नोति[1] । अवर्तिः[2][3] ।[4]

**शकेम त्वा समिधं साधया धियस्त्वे[5] देवा हविरदन्त्याहुतम् ।**
**त्वमादित्याँ आ वह तान्ह्यु१श्मस्यग्ने सख्ये मा रिषामा वयं तव ॥३॥**

शकेम[6] त्वा । शक्नुयाम[7] । त्वां वयम्[8] । समेधितुम्[9] । साधय[10] । कर्माणि[11] । त्वयि । देवाः । हविः[12] । भक्षयन्ति । आहुतम्[13] । त्वमिह । आदित्यान्[14] । आवह[15] । तान् । हि वयं कामयामहे[16] ।

**भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणापर्वणा वयम् ।**
**जीवातवे प्रतरं साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥४॥**

भरामेध्मम् । भराम[17] । इध्मम्[18] । कृणवाम[19] च । हवींषि[20] । तुभ्यम् । बुध्यमानाः[21] । पर्वणापर्वणा[22], अहोरात्रयोः पर्वणि[23] सायं च प्रातश्च ताभ्यामग्निहोत्रं कृणवाम मासपर्वभ्यां[24] दर्शपूर्णमासावृतुसन्धिभिश्चातुर्मास्यानि । जीवितुम्[25] । प्रकृष्टतरमस्माकम्[26] । कर्माणि[27] । साधय[28][29] ।

---

१. प्राप्नोति । अन्यत्पूर्ववत् Sy. आप्नोति Sk. २. आर्तिर्दारिद्र्यम् Sy. पापं वधो वा Sk. ३. नैसग्नोत्यवर्त्तिः P. अंहतिः is suggested for अवर्तिः

४. V. Mādhava ignores अग्ने etc.

५. त्वे इति । PP. ६. शक्केम M.

७. ०यामः D. ८. Omitted by D.

९. सदेवितुं P. समिन्धितुम् Sk.

१०. निष्पादय Sy. ११. करणि P. अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि । ...त्वया हि सर्वे यागा निष्पादयन्ते Sy. प्रज्ञा वा Sk.

१२. चरुपुरोडाशादिकम् Sy.

१३. ऋत्विग्भिः प्रक्षिप्तम् । ... तस्मात्त्वं साधयेत्यर्थः Sy.

१४. अदितेः पुत्रान् सर्वान् देवान् Sy; Sk.

१५. अस्मद्यज्ञार्थमानय Sy.

१६. V. Mādhava ignores अग्ने etc.

१७. सम्पादयाम Sy. शुद्धोऽप्ययं भरतिराङ् पूर्वार्थे द्रष्टव्यः । आहराम Sk.

१८. भरामेधं M. इन्धनसाधनमेकविंशतिदार्वात्मकं समित्समूहम् Sy.

१९. करवाम Sy.

२०. चरुपुरोडाशादिलक्षणान्यन्नानि Sy.

२१. त्वां प्रज्ञापयन्तः... चितयन्तः । चिती संज्ञाने Sy. ज्ञातवन्तः । किम् ? सामर्थ्याद् यज्ञकर्म त्वन्माहात्म्यं वा Sk.

२२. Omitted by P. प्रतिपक्षमावृत्ताभ्यां दर्शपूर्णमासाभ्याम् . . . पर्वणापर्वणा । 'नित्यवीप्सयोः' इति वीप्सायां द्विर्भावः Sy. सप्तम्यर्थे तृतीयैषा । पर्वणि पर्वणि । पौर्णमास्याममावास्यायां चेत्यर्थः Sk.

२३. ०णी D. २४. माससपर्वभ्या P.

२५. जितुं M. अस्माकं जीवनौषधाय चिरकालावस्थानाय Sy. जीवातुर्जीविका । तदर्थम् Sk.

२६. प्रवृद्धतरं वा Sk. २७. र्माणि P. अग्निहोत्रादीनि Sy. २८. निष्पादय Sy.

२९. V. Mādhava ignores वयम् अग्ने etc.

विशां गोपा अस्य चरन्ति जन्तवो द्विपच्च यदुत चतुष्पदक्तुभिः ।
चित्रः प्रकेत उषसो महाँ अस्यग्ने सख्ये मा रिषामा वयं तव ॥५॥

विशां गोपाः[1] । विशाम्[2] । गोपायिता[3] भवत्यग्निः । तम्[4] । परिचरन्ति[5] । जन्तवो[6] यत्[7] । द्विपात्[8] ।
यत्[9] । च । चतुष्पाद् । अञ्जनसाधनैराज्यैः[10] । आश्चर्यः[11] । उषसः[12] । प्रज्ञापयिता[13] । महान्[14] । भवसि[15] ।

त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः ।
विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव ॥६॥

त्वमध्वर्युः । त्वम् । अध्वर्युः[16] । अपिच । होता[17] । भवसि । प्रत्नः[18] । मैत्रावरुणः[19] । पोता[20] च ।

---

१. Missing in D. २. सर्वेषां प्राणिनाम् Sy. पुत्रपौत्रादिमनुष्याणाम् Sk.

३. गोपायितारो रक्षकाः Sy. गोपा गोप्तारः Sk. ४. अस्याग्नेः । षष्ठीनिर्देशात् स्वभूताः प्रसादेन वेति वाक्यशेषः Sk.

५. उद्गच्छन्ति Sy.

६. अस्याग्नेः . . . जाता रश्मयः Sy. मनुष्याः । अविनश्यद्भिः पुत्रपौत्रादिमनुष्यैरुपेतास्ते तत्र तत्र विचरन्ति अग्नेः स्वभूताः प्रसादेन वेत्यर्थः Sk.

७. य P. ८. द्विपाद् मनुष्यादिकमस्ति . . . द्विपत् । द्वौ पादावस्येति Sy. अन्यदपि यद् द्विपात् तत्सर्वम् Sk.

९. चतुष्पाद् गवादिकं यदस्ति तदुभयम् Sy. गवादिः Sk. १०. अञ्जकैरस्य रश्मिभिरक्तमाश्लिष्टमभूत् Sy. रात्रिनामैतत् । इह तु साहचर्यान्नक्तञ्चरेषु रक्षःपिशाचादिषु वर्तते । . . . रात्रिचरैः सहेत्यर्थः Sk.

११. विचित्रदीप्तियुक्तः Sy. १२. ०सं P. उषसः । लुप्तोपममेतद् द्रष्टव्यम् । उषस इव Sk. १३. रात्रावन्धकारावृतानां सर्वेषां प्रज्ञापयिता प्रदर्शयिता Sy. प्रकाश इत्यर्थः Sk. १४. उषोदेवताया अपि . . .गुणैरधिकोऽसि भवसि । उषास्तु रात्रेश्चरमभागे प्रकाशयति, अग्निस्तु सर्वस्यां रात्रौ प्रकाशयतीति तस्य गुणाधिक्यम् Sy. महांस्त्वमसि प्रभावतः Sk.

१५. V. Mādhava ignores च अग्ने etc.

१६. ०र्ध्वर्युः D. अध्वरस्य यागस्य नेता देवान्प्रति प्रेरयिता । यद्वा यागे आध्वर्यवस्य कर्ता भवसि । अध्वर्यौ मनुष्ये जाठररूपेण वागिन्द्रियाधिष्ठातृत्वेन वावस्थाय यागनिष्पादकोऽसि Sy. अध्वर्य्वादिकर्मकारित्वादग्नेरयमध्वर्य्वादिव्यपदेशः । अग्न्यायत्तत्वादध्वर्य्वादिकर्मणामग्निरेव कर्तेत्युच्यते । त्वमध्वर्युः । अध्वर्युकर्मकारीत्यर्थः Sk.

१७. देवानामाह्वाता, पूर्ववद्धोतर्यवस्थाय हौत्रस्य कर्मणः कर्ता वा असि Sy.

१८. मुख्यः । . . . मानुषो होता अमुख्यः । तदपेक्षयास्य मुख्यत्वम् Sy.

१९. ०ण M. प्रकर्षेण शास्ता, सर्वेषां शिक्षकोऽसि । यद्वा 'होतर्यज पोतर्यज' इत्यादिना प्रैषेण शास्तीति मैत्रावरुणः प्रशास्ता । पूर्ववत् तस्मिन्नवस्थाय यागनिष्पादकोऽसि Sy. २०. वोता P. यज्ञस्य पावयिता शोधयितासि । यद्वा पोतृनामकस्य ऋत्विजः पूर्ववदधिष्ठाय यागनिष्पादकोऽसि Sy.

जातेन[1] सर्वेण ब्रह्मत्वेन। पुरोनिहितः[2]। सर्वाण्येव। जानन्। आर्त्विज्यानि[3]। पोषयसि[4]। प्राज्ञः[5][6]।

**यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित्सन्तळिदिवाति रोचसे।**
**रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥७॥**

**यो विश्वतः**[7]। यः[8]। समन्तात् प्रज्वलन्[9]। सर्वत एवान्यूनः सदृशः। भवसि। सः शोभनावयवः[10] सन्[11]। दूरे[12]। अपि। सन्। अन्तिक[13] इवास्थितः[14]। अतिरोचसेऽपिवा विद्युदिव रोचसे[15]। रात्र्याः। अपि। अन्धः[16]। विनाशयसि[17]।

---

१. जन्मना स्वाभाव्येन Sy.
जनुषा जन्मना। जन्मन एव प्रभृतीत्यर्थः Sk.

२. ०त P.
पुरस्तादागामिनि स्वर्गादौ हितोऽनूकूलाचरणोऽसि। यद्वा। सर्वेषु कर्मसु पूर्वस्यां दिश्याहवनीये स्थापितोऽसि। अथवा पुरोहितो ब्रह्मा देवपुरोहितस्य बृहस्पतेः प्रतिनिधित्वात्... अतस्तस्मिन्ब्रह्मणि पूर्ववदवस्थाय तद्रूपः सन् Sy.
पूर्वस्यां दिश्याहवनीयात्मना स्थापितः सन् Sk.

३. ऋत्विजः कर्माणि अ ? (आ-)ध्वर्यवादीनि Sy.
ऋत्विक्कर्माणि Sk.

४. न्यूनाधिकभावराहित्येन सम्पूर्णानि करोषि Sy.
स्वयं पुष्णासि वा यज्ञसम्पादनद्वारेण यजमानत्वात् Sk.

५. प्राज्ञः as explaining धीर should be in the vocative case. I propose therefore to read प्राज्ञ ! for प्राज्ञः।

६. V. Mādhava ignores अग्ने etc.

७. विश्वः M.

८. यस्त्वं M. यः। समन्तात् omitted by P. सर्वस्मादपि Sy.

९. संप्र० P.

१०. शोभनाङ्गः सन्...सुप्रतीकः। शोभनं प्रतीकोऽङ्गं यस्य Sy.
सुप्रतीकः सुमुखः सुदर्शनो वा Sk.

११. सः D.P.

१२. विद्युत्तळिद् भवतीति शाकपूणिः। सा ह्यवताळयति। दूराच्च दृश्यते। अपि त्विदमन्तिकनामैवाभिप्रेतं स्यात् ...दूरेऽपि सन्नन्तिक इव संदृश्यस इति N. 3. 11.

१३. विद्युत्तळिदित्युच्यते। विद्युदिव। ...अथवा तलिदित्यन्तिकनाम। दूरेऽपि सन् अन्तिक एव दीप्यसे Sk.

१४. इव स्थितः is suggested for इवास्थितः।

१५. अतिशयेन दीप्यसे Sy.

१६. बहुलमन्धकारमपि... अतीत्य प्रकाशसे Sy.
तमोऽत्रान्ध उच्यते।...तमोऽतीत्य Sk.

१७. V. Mādhava ignores देव अग्ने etc.

पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः ।
तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥८॥

पूर्वो देवाः । मुख्यः[1] । भवतु । देवाः[2] । यजमानस्य[3] । रथः[4] । अस्माकं सुन्वताम् । शंसनम्[5] । अभिभवतु[6] । पापबुद्धीन्[7] । तदिदं मदीयम् । वचनं यूयम् । अभ्यनुजानत[8] । अपिच । तत् पोषयतेति[9] देवदेवत्यास्त्रयः[10] पादाः[11] ।

वधैर्दुःशंसाँ अप दूढ्यो जहि दूरे वा ये अन्ति वा के चिदत्रिणः ।
अथा यज्ञाय गृणते सुगं कृध्यग्ने सख्ये मा रिषामा वयं तव ॥९॥

वधैर्दुःशंसान्[12] । आयुधैः[13] । दुर्वचनान्[14] । दुर्बुद्धींश्च[15] । अपजहि[16] । दूरे[17] । वा । ये । के[18] । चित् । अन्तिके[19] वा । भवन्ति । अदनशीला[20] राक्षसाः[21] । अथ[22] । यज्ञार्थम्[23] । स्तुवते[24] । शोभनगमनमार्गम्[25] । कुरु[26] ।

---

१. अन्येषामयजमानानां रथेभ्यो मुख्यः Sy. समानजातानां मध्ये पूर्वोऽग्रिमः Sk.
२. देवाय M. अग्न्यवयवभूताः सर्वे देवाः Sy. ३. सोमाभिषवं कुर्वतो यजमानस्य Sy. मत्प्रभृतेः Sk.
४. रथे P.
५. शंसनीयमभिशापरूपं पापम्... शंसोऽभिशापः Sy. आशंसनमभिलाषः Sk.
६. M. adds वा after अभिभवतु । तान् बाधताम् Sy.
७. अस्मदनिष्टाचरणपराञ्छत्रून्...दूढ्यः। दुष्टं ध्यायन्तीति दुर्धियः Sy.
८. अभ्यनुजानीत is suggested for अभ्यनुजानत । आभिमुख्येनावगच्छत Sy.
९. पाष० M. तदर्थाचरणेन... प्रवर्धयत Sy. संवर्धयत Sk. १०. ०त्य स्त्रियः
११. V. Mādhava ignores अग्ने etc.
१२. ०र्दुशं० M.
१३. ०धै D. हननसाधनैः Sy.
१४. दुःखेन कीर्तनीयान् Sy. पापाभिलाषान् । अस्मद्विनाशनकामानित्यर्थः Sk.
१५. दुर्धियः पापबुद्धीन् Sy. पापबुद्धीन् Sk.
१६. वधं प्रापय... तान् दुर्धियोऽपजहीत्यर्थः Sy.
१७. विप्रकृष्टदेशे Sy.
१८. Omitted by P.
१९. समीपदेशे Sy.
२०. विनाशयितारोऽस्माकमित्यर्थः Sk.
२१. अत्रिणः, अत्तारो राक्षसादयो विद्यन्ते Sy.
२२. Omitted by M. अनन्तरम् Sy.
२३. यज्ञपतये Sy.
२४. त्वां स्तुवते यजमानाय Sy.
२५. ०नं मा० P. D. सुगम् । अपठितमपि सुखनामैतद् इह द्रष्टव्यम् । . . . सुखम् । . . . अथवा यज्ञायेति हेतुतृतीयार्थे चतुर्थी । सुगशब्दोऽपि । सुगमदेशवचनः । यज्ञेन हेतुना स्तुतो ममार्थाय सुगमं स्वर्गादिदेशं कुर्वित्यर्थः Sk.
२६. V. Mādhava ignores अग्ने etc.

यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः ।
आदिन्वसि वनिनो धूमकेतुनाग्ने सख्ये मा रिषामा वयं तव ॥१०॥

यदयुक्थाः[1]। यदा। त्वं युनक्षि[2]। गन्तारौ[3]। रोहितवर्णाविश्वौ[4]। वातवेगौ[5] गमनाय। स्वरथे तदानीं गच्छतः[6]। तव। शब्दः। ऋषभस्येव[7] श्रूयते। अथ त्वम्। व्याप्नोषि[8]। वृक्षान्[9]। धूमकेतुना[10] ज्वालासङ्घेन[11]।

अध स्वनादुत बिभ्युः पतत्रिणो द्रप्सा यत्ते यवसादो व्यस्थिरन् ।
सुगं तत्ते तावकेभ्यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव ॥११॥

अध स्वनात्। यदा। दवाग्नेः[12] शकलानि[13]। तृणस्य भक्षकाणि[14]। अरण्ये वितिष्ठन्ते[15]। अनन्तरम्[16]। एव। दवाग्निशब्दात्। पक्षिणः। बिभ्यति[17]। शोभनगमनम्[18]। तदरण्यम्। अग्नेः। रथेभ्यो[19]

---

१. ०युत्थाः M.
२. अनक्षि P. D. M. अयोजयस्तदानीं वनानि दहतः Sy. दावात्मत्वाच्छीघ्रं गन्तुं युनक्षि Sk.
३. आरोचमानौ Sy.
४. लोहितवर्णौ। रोहित इत्यग्नेरश्वस्याख्या Sy.
५. वातस्य वायोर्जूतं जवो वेग इव वेगो ययोस्तौ। ईदृशावश्वौ Sy.
६. वनानि दहतः Sy.
७. दृप्तस्य महोक्षस्य शब्द इव गम्भीरो भवति Sy. वृषभस्येव . . . साकाङ्क्षत्वाद् भवतीति वाक्यशेषः Sk.
८. ह्याप्नो० P.
९. वनसम्बद्धान् Sy.
१०. धूमः केतुः प्रज्ञापको यस्य तादृशेन रश्मिना Sy. केतुः पताकोच्यते। धूमः केतुस्थानीयो यस्य तेन धूमकेतुना। सामर्थ्याज्ज्वालासहितेन ज्योतिषा वा Sk.
११. V. Mādhava ignores अग्ने etc.
१२. ०ग्ने P. द्रप्साः, ज्वालैकदेशाः Sy. द्रप्सशब्दः कठिनवचनः। कठिनाः बहुलरूपा इत्यर्थः। यद् यदा ते तव दावात्मकस्य स्वभूता यवसादः। यवसं तृणम्। तस्यात्तारो ज्वालासमूहाः Sk.
१३. शकानि M.
१४. यवसादः, यवसानामरण्ये वर्तमानानां तृणानामत्तारः सन्तः Sy.
१५. ऽपितिष्ठ० M. विविधमवतिष्ठन्ते Sy. सर्वं व्याप्नुवन्तीत्यर्थः Sk.
१६. दग्धुं वनप्रवेशानन्तरम् Sy. अधशब्दोऽत्र तदेत्यस्यार्थे। तदा Sk.
१७. भयं प्राप्नुवन्ति। उत्पतनेन देशान्तरं गन्तुं समर्थाः पक्षिणोऽपि यदा भयं प्राप्नुवन्ति किमु वक्तव्यमन्येषां तत्रत्यानां वृकादीनां भीतिर्जायत इति। अतस्त्वयि वनं प्रविशति सर्वे प्राणिनो भयं प्राप्नुवन्तीत्यर्थः Sy.
१८. किञ्च सुगं तत्। तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यत् पर्वतपृष्ठादि अन्यः कश्चिद् गन्तुं न शक्नोति सुगं तत् ते तव Sk.
१९. षष्ठ्यर्थे चतुर्थी पञ्चमी वा। एषां रथानां च त्वदीयानाम् Sk.

भवति[1]। न इति पूरणम्[2]। तत् त्वं[3] यथात्मीयैर्यथाकामं सञ्चरसीत्यर्थः।[4]

**अयं मित्रस्य वरुणस्य धायसेऽवयातां मरुतां हेळो अद्भुतः।**
**मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव ॥१२॥**

अयं मित्रस्य। अयम्[5]। मित्रावरुणयोः[6]। सोमपानाय[7]। स्वर्गादधस्तादागच्छताम्[8]। मरुतां[9] च[10]। क्रोधः[11]। महान् भवति[12] यदि प्रमादोऽस्माकं[13] भवति क्रुध्यतीत्यर्थ एवं स्थिते[14] तान् यजन्। अस्मान्। सुष्ठु[15]। सुखय। भवतु च[16]। एषां त्वत्प्रसादेनास्मासु[17]। मनः[18]। पुनरपि[19]।

**देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे।**
**शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥१३॥**

देवो देवानाम्। देवः। देवानाम्। असि। सखा[20]। महान्। वसुः। वसूनामिति[21] वसवो देवास्तेषामपि वासयिता[22] भवसि। कल्याणस्त्वम्[23]। यज्ञे[24]। सुखे। स्याम[25]। तव[26]।

---

१. सुखेन गन्तुं शक्यमतस्तावकेभ्यस्त्वदीयेभ्यो रथेभ्यश्च तदरण्यं सुगं भवति। पूर्वं प्रवृत्तैर्ज्वालाग्रैस्तृणादिषु दग्धेषु सत्सु त्वदीया रथाः प्रतिबन्धमन्तरेण पश्चाद् गच्छन्तीति भावः Sy.

२. तत्वं P. D. ३. ०त्मियैथाका० M.

४. V. Mādhava ignores अग्ने etc.

५. अग्नेः स्तोता Sy.

६. मित्रस्य अहरभिमानिनो देवस्य। वरुणस्य राञ्यभिमानिनश्च सम्बन्धिने Sy.

७. ०त्रस्य वरु० P. ८. धारणायावस्थापनाय भवतु। मित्रावरुणाविममग्नेः स्तोतारं धारयतामित्यर्थः Sy.

९. ०स्तादद्ाग० M. ०च्छतं P. अवस्ताद् गच्छतां स्वर्गलोकस्याधस्तादन्तरिक्षे वर्तमानानाम् Sy. अवशब्दोऽपेत्यस्य स्थाने। अस्मदयज्ञादपगच्छताम् Sk.

१०. Omitted by P.

११. साकाङ्क्षत्वात्प्रसादेन व्यावर्ततामिति वाक्यशेषः Sk.

१२. महान् भवति। अद्भुत इत्येतन्महन्नाम। तस्मात् क्रोधाद् इममग्नेः स्तोतारं मित्रावरुणौ रक्षतामिति शेषः Sy.

१३. यदिर्यप्र० M. १४. स्थि P.

१५. सुखाय P. D. सुष्ठु मृडय Sy.

१६. चैष चैषन् P. चैष M. मरुताम् Sy. १७. त्वां प्रादेना० P.

१८. मनसः M. प्रसन्नं भवतु Sy. पुनरप्यस्मासु सानुग्रहचेतसो भवन्त्वित्यर्थः Sk.

१९. V. Mādhava ignores अग्ने etc.

२०. हविर्वहनादयुपकारकरणान्महन्मित्रमसि Sk. २१. सर्वेषां धनानाम् Sy. धनानां च त्वं धनमसि धनकार्यकरत्वात् Sk. २२. सयिता P. निवासयिता भवसि। अतोऽस्माकं वसूनि देहीत्यर्थः Sy. २३. शोभनोऽसि Sk. २४. यज्ञगृहे Sy. शरणस्थाने Sk. २५. प्राप्नुयामेत्यर्थः Sk.

२६. त्वत्सम्बन्धिनि शर्मणि यज्ञगृहे Sy.

सर्वतः[1] पृथुतमे[2]।

तत्ते भद्रं यत्समिद्धः स्वे दमे सोमाहुतो जरसे मृळयत्तमः ।
दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मा रिषामा वयं तव ॥१४॥

तत्ते भद्रम्। तत्[3]। तव। कल्याणम्[4]। यत् त्वम्[5]। प्रज्वलितः[6]। स्वे[7]। यज्ञगृहे। सोमेनाहुतः[8] सन् देवान्[9]। स्तौषि[10]। सुखयितृतमः[11]। यच्च त्वं धनम्[12]। च[13]। यजमानाय। प्रयच्छसि। अग्ने सख्य इति[14]।

यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता ।
यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ॥१५॥

यस्मै। यस्मै[15]। त्वमग्ने! शोभनधन[16]! प्रयच्छसि[17]। अपापवादम्[18]। अखण्डित[19]!

---

१. सप्रथस्तमे सर्वतः पृथुतमेऽतिशयेन विस्तीर्णे Sy. तव स्वभूतेऽग्निलोकाख्ये ...। अथवा शर्मेति गृहनाम। गृहे स्याम तव सम्बन्धिनि सर्वपृथुतमे। त्वया दीयमानमत्यन्तविस्तीर्णं गृहं वयं प्राप्नुयामेत्यर्थः Sk.

२. V. Mādhava ignores अग्ने etc.

३. तच्चेष्टितं कर्म वा Sk.

४. भजनीयं, प्रशस्तमित्यर्थः Sy.

५. यत्वं P. ६. ०त M.

७. स्वकीय उत्तरवेद्दिलक्षणे निवासस्थाने Sy. ८. ०सोमना० M. हुतेन सोमरसेन सन्तर्पितः सन् Sy.

९. सुदेवाः M. १०. ऋत्विग्भिः स्तूयस इति यदस्ति तद् भद्रमित्यर्थः Sy. होतृत्वात् ... देवताः। स्तूयसे वा ऋत्विग्भिः Sk. ११. अतिशयेनास्माकं सुखयिता भूत्वा Sy. यष्ट्णां च स्तोतृणां च Sk. १२. त्वद् D.

१३. रत्नं रमणीयं कर्मफलं द्रविणं धनम् Sy.

१४. V. Mādhava ignores रत्नम् मा रिषाम etc.

१५. Omitted by P. यजमानाय Sy. अग्निरप्यदितिरुच्यते। तस्यैषा भवति ... यस्मै त्वं सुद्रविणो ददासि। अनागास्त्वम्। अनपराधत्वम्। अदिते। सर्वासु कर्मततिषु। आग आङ्पूर्वाद् गमेः। एन एतेः। किल्बिषं किल्भिदम्। सुकृतकर्मणो भयम्। कीर्तिमस्य भिनत्तीति वा। यं भद्रेण। शवसा बलेन। चोदयसि। प्रजावता च राधसा (धनेन) ते वयमिह स्यामेति N. II. 23-24.

१६. ०नं D. सुद्रविणः। शोभनानि द्रविणानि धनानि यस्य Sy. सुबलो वा Sk.

१७. प्रयच्छसि स यजमानः समृद्धो भवति Sy.

१८. अपापत्वं पापराहित्येन कर्मार्हताम् Sy.

१९. अखण्डनीयाग्ने Sy. अदितिर्देवमाता। तच्छब्देनेदं सोऽयमित्यभिसम्बन्धात् पुत्रस्याग्नेरभिधानम्। अदितेः पुत्रेत्यर्थः। अथवा अदितिशब्दोऽदीनपर्यायः। अदीन। क्षयवर्जितेत्यर्थः Sk.

यज्ञे[1] कृते। यं च त्वम्। कल्याणेन। बलेन संयोज्य। युद्धे प्रेरयसि[2]। यं वा प्रजावता[3]। धनेन संयोजयसि। वयं च ते। भवाम[4]। "ते वयमिह स्याम[5]" इति यास्कः।

**स त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्र तिरेह देव।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥१६॥**

**स त्वमग्ने।** सः[6]। त्वम्। अग्ने! सौभाग्यं[7] कर्तुम्। जानन्[8]। अस्माकम्। आयुः[9]। वर्धय[10]। अस्मिन्[11] स्तोत्रे सति। देव! तदिदमग्नेः[12] स्तोत्रम्। मित्रादयोऽपि। पूजयन्त्विति[13][14]।

इत्येवं[15] षष्ठमध्यायं व्याकरोत् प्रथमेऽष्टके।
भरतस्य कुले जातो माधवो वेङ्कटात्मजः[16]॥

---

१. सर्वासु कर्मततिषु यद्वा सर्वेषु यज्ञेषु Sy. सर्वताता। . . . सर्वत्रेत्यर्थः अथवा अनागास्त्वमित्यागश्शब्दोऽपराधवचनः। सर्वतातेत्यपि सर्वा एवैष्टिकपाशुकसौमिकरूपा कर्मसन्ततिर्यज्ञ उच्यते। यस्मै वैगुण्यलक्षणापराधवर्जितत्वं यज्ञेषु ददासि तस्य विगुणमपि यज्ञं सगुणं करोषीत्यर्थः Sk.

२. संयोजयसि सोऽपि समृद्धो भवति Sy. यं भद्रेण बलेन संयोज्य तत्र तत्र विनियोजयसीत्यर्थः Sk.

३. ०तां D. वयं च स्तोतारः...प्रजाभिः पुत्रपौत्रैर्युक्तेन ... त्वया दत्तेन धनेन युक्ताः . . . भवेम Sy.

४. अस्माकमेव सर्वमिदं कुर्वित्यर्थः Sk.

५. N. 11. 24.

६. पूर्वोक्तगुणविशिष्टः Sy. य उक्तगुणोऽसि Sk.

७. सौभ्यं M. सुभगत्वं सौभाग्यम् ... सौभगत्वस्य। सुभगस्य भावः सौभगम् Sy. भग इति धननाम। शोभनं धनं हविर्लक्षणं यस्य स सुभगः। सुभग एव सौभगः।...तस्य भावः सौभगत्वम्। तस्य सौभगत्वस्य Sk.

८. सहविष्कतामस्माकं जानन्नित्यर्थः Sk.

९. आयुध M.

१०. ०या M. प्रवर्धय। प्रपूर्वस्तिरतिर्वर्धनार्थः Sy.

११. कर्मणि Sy. इह जन्मनि लोके वा Sk.

१२. अग्नेः missing M.

१३. रक्षन्त्वित्यर्थः। मित्रः प्रमीतेस्त्राता वरुणोऽनिष्टानां निवारयिता। अदितिरदीनाखण्डनीया वा देवमाता। सिन्धुः स्यन्दनशीलोदकात्मा देवता। पृथिवी प्रथिता भूदेवता।... ...द्यौः प्रकाशमाना द्युलोकात्मा देवता। एताश्च सर्वा अग्निना प्रवर्धितमायुर्मम हन्तामिति पूर्वत्रान्वयः Sy.

१४. V. Mādhava ignores नः Ms. D. puts the figure ॥९४॥ here to indicate the end of the ninetyfourth hymn. No such number is given in P. and M.

१५. एवं missing M.

१६. वंक० P. D.

अध्यायं 'द्वे[1] विरूपे' च माधवो व्याचिकीर्षति ।
अन्वादेशस्य[2] विषये वक्तव्यं संप्रदर्शयन् ॥ १ ॥

अस्येति[3] प्रथमादेश उदात्तं स्मर्यते पदम् ।
अन्वादेशे चानुदात्तमस्य[3] वामस्य दृश्यते ॥ २ ॥

अस्येदु मातुः सवने[4] ननूदात्तोऽत्र दृश्यते ।
अस्मा[5] अस्येति सूक्तेऽस्मिन्[6]निन्द्र एवापदिश्यते ॥ ३ ॥

ऋच्येतस्यामन्वादेश[7] इति वक्तुं न युज्यते[8] ।
युञ्जन्त्यस्य[9] काम्या[10] भिन्नायामपि दर्शनात् ॥ ४ ॥

'नास्मै' विद्युन्न तन्यतुः[11]' 'नकिरस्य[12] सहन्त्य' च ।
एवा ह्यस्य सूनृता[13] ऋचश्चात्र निदर्शनम् ॥ ५ ॥

दिवश्चिदस्य वरिमा[14] सूक्तादौ च प्रदृश्यते[15] ।
अन्वादेशः पूर्वसूक्ते[16] स्तुतस्यैव पुनः[17] स्तुतौ ॥ ६ ॥

---

१. द्वि M. RV. I. 95.
२. अन्वादशस्य M.
३. RV. I. 164. 1ª.
४. RV. I. 61. 7ª. The complete word is सवनेषु
५. अस्मादस्येति P.
६. RV. I. 61.
७. ०येकस्या० D. P. M.
८. शक्यते D. P.
९. RV. I. 6. 2ª. The third pāda is short by two syllables. I propose to add therefore हरी after काम्या
१०. युञ्जन्त्यस्मामभिन्नाया...मपि etc. M.
११. RV. I. 32. 13ª.
१२. RV. I. 27. 8ª; न्निकि० P.
१३. RV. I. 8. 8ª.
१४. RV. I. 55. 1ª. All The mss. read महिमा although the correct reading of the text of the RV. is वरिमा। As it is a quotation, I have made the correction.
१५. प्रदर्शते D. प्रदश्यते P.
१६. पूर्वं is omitted by P.
१७. पुसस्तुतौ P.

अन्वादेशः पादमध्ये सर्वत्रेति[1] न युज्यते ।
यस्मादुदात्ता दृश्यन्ते पादमध्येऽपि तद्यथा ॥७॥

'माकिर्नो[2] अस्य परिष्कृतिः[3]'[4] 'अग्ने[5] चिकिद्धच[6]स्य नः'[7] ।
पादो 'ज्यायांसमस्येति[8] सर्वे[9] तत्र निदर्शनम् ॥८॥

पादादिष्वनुदात्तोऽस्य न कदाचन दृश्यते ।
उदात्ताः[10] पादमध्येऽपि दृश्यन्ते बहवस्तथा ॥९॥

वाक्यादावपदिष्टोऽपि लौकिकैरपदिश्यते[11] ।
उच्चैर्धर्मी[12] ततस्तत्र नान्वादेशस्य[13] सम्भवः ॥१०॥

पूर्वस्मिन्प्रकृतो[14] वाक्ये वाक्यमध्येऽपदिश्यते[15] ।
नीचैरर्थ[16]स्वभावेन सोऽन्वादेशः स्मृतो बुधैः ॥११॥

I.95.

**द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।**
**हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥१॥**

द्वे विरूपे । कुत्सः ।

---

१. नि D.
२. कीन्नो P.
३. परितिष्ठति P.
४. RV. IX. 85. 8c.
५. ०रग्ने D.
६. चिकिध्यास्य M.
७. RV. V. 22. 4a.
८. RV. V. 44. 8a. ज्यायांसमभ्येति M.
९. सर्व P.
१०. उदात्ता D.
११. ०दृश्यते M.
१२. ०र्द्धर्मी D. ०र्ध is omitted by M. The proper reading should be उच्चैर्धर्मा
१३. न is omitted by M.
१४. ०प्रकृते D.
१५. च दृश्यते M.
१६. ०रर्त्थ० D. P.

१ द्वे। २ भिन्नरूपे। ३ चरतः। ४ शोभनकार्ये। ५ अन्यान्या च। ६ वत्सम्। ७ उपधापयतस्तत्र। ८ आदित्यः। ९ अन्यस्याम् १० अह्नि। ११ बलवान् भवति। १२ शुक्रवर्णोऽग्निः। १३ रात्रौ। ददृशे। सुदीप्तिः।

**दशेमं त्वष्टुर्जनयन्त गर्भमतन्द्रासो युवतयो विभृत्रम्।**
**तिग्मानीकं स्वयशसं जनेषु विरोचमानं परि षीं नयन्ति ॥२॥**

१४ दशेमम्। १५ दश दिशः। एनमग्निम्। १६ त्वष्ट्रा १७ दिक्षु निषिक्तम्। १८ गर्भभूतम्। जनितवत्यः।

---

१. अहोरात्रे Sy. रात्र्युषसौ Sk.
२. शुक्लकृष्णतया नानारूपे Sy.
३. पुनः पुनः पर्यावर्तेते। ते चाहोरात्रे अग्नेः सूर्यस्य च जनन्यौ। तत्र रात्रेः पुत्रः सूर्यः। स हि गर्भवद् रात्रावन्तर्हितः सन् तस्याश्चरमभागादुत्पद्यते। अह्नः पुत्रोऽग्निः। स हि तत्र विद्यमानोऽपि प्रकाशराहित्येनासत्कल्पः सन् तस्मादह्नः सकाशान्निर्मुक्तः प्रकाशमानं स्वात्मानं लभते Sy.
रात्रिर्गता, उषा आगता। उषा गता, रात्रिरागता। एवं गच्छतः Sk.
४. शोभनगमनागमने। यद्वा—अर्थः प्रयोजनम्। शोभनप्रयोजनोपेते Sy.
अर्थशब्दः, अर्तेर्गत्यर्थस्य गमनवचनः प्रयोजनवचनो वा। शोभनप्रयोजने Sk.
५. अन्योन्या D. अन्या M.
परस्परव्यतिहारेण Sy.
६. पुत्रम् Sy. अन्योन्यस्याश्च वत्सस्थानीयमग्निम्। अग्निर्हि रात्र्युषसोरुभयोरपि वत्सस्थानीयः। तत्र जायमानत्वात् Sk.
७. ०धावय० P. स्वकीयं रसं पाययतः। यद्रात्र्या कर्तव्यं स्वपुत्रस्यादित्यस्य रसस्य पायनं तदहस्करोति। यदह्ना कर्तव्यं स्वपुत्रस्याग्नेः रसस्य पायनं तद्रात्रिः करोति Sy. पाययतः। किम्? सामर्थ्यादाहुतीः। रात्रिर्ह्युपगम्य सायमाहुतीरग्निं पाययति। प्रातराहुतीरुषाः Sk.
८. रसहरणशीलः Sy.
९. स्वजनन्या अन्यस्यामहरात्मिकायामग्नेर्जनन्याम् Sy.
पूर्वोत्तरयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ। ये द्वे रात्र्युषसौ चरतः, अन्योन्यस्याश्च वत्सस्थानीयमग्निमुपधापयेते तयोर्हरिरन्यस्यां भवति हरितवर्ण एकस्यां रात्रौ Sk.
१०. ०मग्नि D. ०महि M.
११. हविर्लक्षणान्नवान् Sy. अन्नवानग्निः Sk.
१२. निर्मलदीप्तिः Sy.
शुक्रवर्णोऽन्यस्यां दृश्यत उषसि। उषसा चात्र तत्समनन्तरभाव्यहर्लक्ष्यते। अहन्यादित्यात्मना व्यवस्थितः सन् शुक्ररूपोऽग्निर्दृश्यत इत्यर्थः Sk.
१३. स्वजनन्या अन्यस्यां रात्र्यामादित्यस्य जनन्याम् Sy. रात्र्युषसौ Sk.
१४. देशमम् M. १५. दि P. D. दिः M.
प्राच्याद्या दशसंख्याकाः Sy.
चतस्रो दिशः। चतस्रश्चावान्तरदिशः, ऊर्ध्वमध इत्येता दश दिशः Sk.
१६. वैद्युतम् Sy. १७. ०ष्टा M.
दीप्तान्मध्यमाद् वायोः सकाशात्. . . यद्वा दशसङ्ख्याका अङ्गुलयस्त्वष्टुर्दीप्तस्य वायोर्गर्भं स्वकारणभूते वायौ गर्भरूपेण वर्तमानम्। अग्नेर्हि वायुः कारणम् Sy. त्वष्टुः सकाशात् Sk.
१८. अपत्यभूतम् Sk.

अनलसाः[1]। युवतयः[2]। धारकं यद्वेतस्ततो[3] विहृतम्[3]। तीक्ष्णज्वालम्[4]। स्वभूतकीर्तिम्[5]। मनुष्येषु[6]। परिणयन्ति[7]। विरोचमानम्[8]। परितः।

**त्रीणि जाना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु ।**
**पूर्वामनु प्र दिशं पार्थिवानामृतून्प्रशासद्वि दधावनुष्ठु ॥३॥**

**त्रीणि जाना**[9]। स्तोतारोऽस्य। त्रीणि। जन्मानि[10]। अलङ्कुर्वन्ति[11]। अन्तरिक्षस्थम्[12]। एकम्। दिव्यम्[13]। अपरम्। अप्स्वपरं[14] सोऽयम्। प्राचीम्। दिशम्[15]। प्रति स्थित्वा। मनुष्याणां[16] व्युच्छनेन। कालान्[17]। प्रशासन्[18]। कल्याणम्[19]। प्रकर्षेण।

---

१. अतन्द्रासः स्वकार्ये जगतः पोषणेऽनलसा आलस्यरहिता जागरूका इत्यर्थः। (दिशः); ... पुनः पुनः कर्मकरणे आलस्यरहिताः (अङ्गुलयः) Sy.

२. युवतयो नित्यतरुण्यो जरामरणरहिता इत्यर्थः (दिशः); ... अपृथक्कृत्य वर्तमानाः (अङ्गुलयः) एकस्मिन् पाणौ संहत्यावस्थिता इत्यर्थः Sy.

३. यद्येवस्ततोपिहृत P. यद्येतस्ततो विहृत D. ०हृत M. सर्वेषु भूतेषु विहृतम्। जाठररूपेण विभज्य वर्तमानमित्यर्थः Sy. तत्र तत्र विह्रियतेऽसाविति विभृत्रः। तं विभृत्रम् Sk.

४. अत एव हि वैद्युताग्निदर्शने दृष्टिः प्रतिहन्यते Sy.

५. अतिशयेन यशस्विनमित्यर्थः Sy.

६. जनपदेषु सर्वदेशेषु Sy.

७. स्वस्वोपकाराय सर्वे जनाः स्वकीयं देशं प्रापयन्ति Sy. सर्वतो नीतवत्य इत्यर्थः Sk.

८. बहूनामुपकारकमित्यर्थः Sy. अथवा ... अनीकशब्दः समूहवचनः। सामर्थ्याच्चेह ज्वालासमूहमाह नान्यम्। तीक्ष्णज्वालासमूहमित्यर्थः Sk.

९. ०नाः M. १०. जन्मनि P. M.

११. यद्वा परीत्येष समित्येतस्य स्थाने। अस्याग्नेस्त्रीणि जन्मानि सम्भवन्ति Sy. परिपूर्वो भवतिः सर्वत्र परिग्रहे। परिगृह्णन्ति। अस्याग्नेः सत्स्वप्यन्येषु जन्मसु सारभूतत्वात् त्रीण्येव जन्मान्यस्याग्नेः परिगृह्णन्तीत्यर्थः Sk.

१२. समुद्रे अब्धौ बडवानलरूपेणैकं जन्म Sy. समुद्र एकं बाडवात्मना Sk.

१३. दिवि द्युलोक आदित्यात्मनैकम् Sy. दिव्येकमादित्यात्मना Sk.

१४. आप इत्यन्तरिक्षनाम। अन्तरिक्षे वैद्युताग्निरूपेणैकम्। एवमग्निस्त्रेधात्मानं विभज्य त्रिषु स्थानेषु वर्तत इत्यर्थः Sy. अप्शब्दोऽत्रोदकवचनोऽन्तरिक्षनाम वा। वृष्टिलक्षणास्वप्सु, अन्तरिक्षे वा अपरं वैद्युतात्मना Sk.

१५. पूर्वस्यां दिश्याहवनीयात्मना व्यवस्थापितः सन्नित्यर्थः Sk.

१६. पृथिव्याः सम्बन्धिनां सर्वेषां प्राणिनाम् Sy. पृथिव्यां सम्भवानां यजमानानाम् Sk.

१७. यागकालान् Sk.

१८. प्रकर्षेण विभक्ततया ज्ञापयन् Sy. प्रकर्षेण कथयन्निव Sk.

१९. सम्यगनुक्रमेण Sy. अनुष्ठु यागकर्म। यागं करोतीत्यर्थः Sk.

विदधातीत्यौषमग्निमाह[1,2], औषसाग्निप्रधानं[3] वेदं सूक्तम्[4]। अत्र कात्यायनः—"औषसाय वाग्नये"[5] इति[6]।

**क इमं वो निण्यमा चिकेत वत्सो मातृर्जनयत स्वधाभिः।**
**बह्वीनां गर्भो अपसामुपस्थान्महान्कविर्निश्चरति स्वधावान् ॥४॥**

**क इमं वः**[7]। युष्माकं मध्ये[8]। कः। एनम्। अन्तर्हितम्[9]। वत्सः[10] सन्नोषधीनाम्[11]। मातृः[12]। जनयन्ति[13]। उदकैर्वैद्युतः[14]। बह्वीनां[15] दिशाम्[16]। गर्भभूतोऽसौ[17]। अपाम्[18]। उदधास्थानान्मध्यात् (?) महान्[19]। क्रान्तदर्शनः। निश्चरति[20]। बलवान्[21,22]।

---

१. स्वतो भेदरहितयोरखण्डयोर्दिक्कालयोः प्राच्यादिभेदो वसन्तादिभेदश्च सूर्यगत्या निष्पाद्यते। अतः सूर्य एव तयोः कर्तेत्यर्थः Sy.

२. ०ति द्यौषमग्निमाह्लौषसानिमाह P. The correct reading should be ०त्यौषसम० for ०त्यौषम०

३. ०सानि० P.

४. सूक्तमन्त्र M.

५. KSA. 7.

६. V. Mādhava ignores प्र

७. इं D.

८. ऋषीणां ब्राह्मणानां मध्ये Sk.

९. अन्तर्हितताति P. D. अन्तर्हताति M.

१०. मेघस्थानामपां वैद्युताग्निरूपेण पुत्रस्थानीयः सन् Sy. अपत्यभूतः सन्नित्यर्थः Sk.

११. वत्स सनो० P.

१२. तस्य मातृस्थानीयानि वृष्ट्युदकानि Sy. ओषधिवनस्पतयोऽत्र मातर उच्यन्ते, अग्नेर्जनकत्वात् Sk.

१३. The proper reading should be जनयति। वैद्युतात्मना व्यवस्थितः सन् जनयति Sk.

१४. हविर्लक्षणैरन्नैः Sy. वृष्टिलक्षणैरुदकैः Sk.

१५. मेघस्थानामपाम् Sy.

१६. ओषधीनां दिशां वा Sk.

१७. वैद्युतरूपेण गर्भस्थानीयः Sy.

१८. ०तो सवयाम् P. I propose to read अपामुपस्थात्, उदकस्थाना० for अपाम्। उदधास्थाना० समुद्रात् Sy. अपांसि कर्माणि। तान्युपगम्य यत्र तिष्ठन्ति सोऽपसामुपस्थो यज्ञ आहवनीयो वा। तस्मात् Sk.

१९. का० P. मेधावी Sk.

२०. औषसाग्निरूपेणादित्यः सन्निर्गच्छति Sy. देवान् प्रति गन्तुं निर्गच्छति Sk.

२१. The passage beginning with उदकैः and ending with बलवान् is omitted by M. हविर्लक्षणान्नवान्। एक एवाग्निर्होमनिष्पादकलक्षणेन पार्थिवरूपेण वैद्युतात्मना, औषसरूपेणादित्यात्मना च विभज्य वर्तत इत्यर्थः Sy. हविर्लक्षणेनान्नेनान्नवान्। हवींष्यादायेत्यर्थः Sk.

२२. V. Mādhava ignores आ। चिकेत

**आविष्ट्यो॑ वर्धते॒ चारु॑रासु जि॒ह्माना॑मू॒र्ध्वः स्वय॑शा उ॒पस्थे॑ ।**
**उ॒भे त्वष्टु॑र्बिभ्यतु॒र्जाय॑मानात्प्रती॒ची सिं॒हं प्रति॑ जोषयेते ॥५॥**

आविष्ट्यः। आविष्ट्यः[1]। वर्धते[2]। चारुरग्निः[3]। आस्वप्सु[4]। तिर्यग् गच्छन्तीनामपाम्[5]। उपस्थे[6]। ...........[7]। त्वष्टुः[8]। जायमानादौर्वादग्नेर्द्यावापृथिवी[9]। उभे अपि। बिभ्यतुरपि[10] चैनम्। सिंहमिव[11] बलिनम्। अभिमुखे[12]। सेवेते[13]। अत्र[14] निरुक्तं[15] द्रष्टव्यमिति[16]।

---

१. आविर्भूतः प्रकाशमानः Sy.
आविःशब्दः प्रकाशवचनः। आविरेवाविष्ट्यः। ... सर्वलोकप्रकाशोऽग्निः Sk.
माध्यमिकस्त्वष्टेत्याहुः। मध्यमे च स्थाने समाम्नातः। अग्निरिति शाकपूणिः। तस्यैषापरा भवति ... आविरावेदनात्। तत्त्यो वर्धते चारुरासु। चारु चरतेः। जिह्मं जिहीतेः। ऊर्ध्वमुद्धतं भवति। स्वयशा आत्मयशाः। उपस्थ उपस्थाने। उभे त्वष्टुर्बिभ्यतुर्जायमानात्। (प्रतीची सिंहं प्रति जोषयेते।) द्यावापृथिव्याविति वा। अहोरात्रे इति वा। अरणी इति वा। प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते N. 8. 14, 15.

२. आविष्ट्यः। आविष्ट्यः। वर्धते। is omitted by M.
वर्धत इति भूतकाले व्यत्ययेन लट् द्रष्टव्यः Sk.

३. उरग्नि M.
शोभनदीप्तिः सन् Sy.

४. आस्वस्वु P.
मेघस्थास्वप्सु वैद्युतात्मना वर्तमानोऽग्निः Sy.
बह्वीनां गर्भ इति पूर्वस्यामृचि, आदिष्टानामोषधीनामयमन्वादेशः। आस्वोषधिषु। अथवा बह्वीनां गर्भ इति बह्वीशब्देन दिश उच्यन्ते। तत आस्विति तासामन्वादेशः। ... त्वष्टुः सकाशाज्जनयित्वाऽसु दिक्षु सर्वलोकप्रकाशोऽग्निर्वर्धत इत्यर्थः Sk.

५. ०च्छती० D. मेघेषु तिर्यगवस्थितानां तासामपाम् Sy.
सप्तम्यर्थे षष्ठी। जिह्मासु। तिर्यग्व्यवस्थितास्वित्यर्थः Sk.

६. उत्सङ्गे Sy.
उपस्थो यज्ञ आहवनीयो वान्तरिक्षं वा। तत्र च। अथवा उपस्थ इत्येतदास्वित्येतेन विशेष्यते न समुच्चीयते। उपस्थशब्दश्च स्थानवचनः। आस्वोषधीषु दिक्षु वा यदग्नेः स्थानं तत्रेत्यर्थः Sk.

७. स्वयमूर्धनोत्रः P. स्वयमुर्धनोत्रः D.
स्वयमूर्ध्वे गों नः M.

८. त्वसूः P. दीप्तात् Sy.

९. ०ग्ने द्या० M.

१०. वभ्य० M.

११. सहनशीलमभिभवनशीलम् Sy.

१२. प्रत्यञ्चन्त्यौ प्रतिगच्छन्त्यौ, आभिमुख्येन प्राप्नुवन्त्यौ Sy.
अग्निमेव प्रतिगते। अग्निपरिचर्यापरे सत्यावित्यर्थः Sk.

१३. सेवते P. D. M.
जुषिरत्र प्रीत्यर्थः। प्रतिशब्दश्च धात्वर्थानुवादी। भूते लट्। प्रीणयतम्। दशभिरपि दिग्भिः सहामृतेन तर्पयतमित्यर्थः Sk.

१४. तत्र P. १५. N. 8. 14, 15.
See note No. १ on this page.

१६. V. Mādhava ignores प्रति

**उभे भद्रे जोषयेते न मेने गावो न वाश्रा उप तस्थुरेवैः ।**
**स दक्षाणां दक्षपतिर्बभूवाञ्जन्ति यं दक्षिणतो हविर्भिः ॥६॥**

उभे भद्रे। उभे[1]। स्त्रियौ[2] द्यावापृथिव्यौ। कल्याण्यावग्निम्[3]। सेवेते[4]। नेति[5] पूरणम्। गावः[6]। इव। शब्दकारिण्यो वत्समेनम्। गमनैर्ऋत्विजः[7]। उपतिष्ठन्ति[8] सोऽयम्। बले[9]। पतिर[10]भवत्[10]। यमेनं[11] यज्ञस्थमध्वर्यवः परेणाहवनीयम्। दक्षिणातिक्रम्य[12] (?) तत्र स्थिताः। हविर्भिः[13]। सिञ्चन्ति[14][15]।

---

१. अहश्च रात्रिश्च। यद्वोभे द्यावापृथिव्यौ। अरणी वा Sy.

२. मेने स्त्रियौ जोषयेते न सेवेते इव। यथा शोभने स्त्रियौ चामरहस्ते राजानमुभयतः सेवेते, एवं द्यावापृथिव्यौ, एनमग्निमुभयतः सेवेते इत्यर्थः Sy.
स्त्रियाविव केचिद् भर्तारम् Sk.

३. ०णाव० P. D. M.
भजनीये शोभनाङ्ग्यौ Sy.

४. सेवते D.
त्वाष्ट्रमग्निमतिप्रवर्धमानं परिचरितवत्यावित्यर्थः Sk.

५. नशब्दः . . . उपमार्थीयः Sk.

६. यथा . . . स्वकीयैश्चरित्रैरादरातिशयेन स्वकीयान् वत्सान् . . . सङ्गच्छन्ते तथेममग्निं द्यावापृथिव्यावुपस्थिते भवतः। पूर्वं सेवनमात्रमुक्तम्, इदानीं पुनर्गोनिदर्शनेन तत्रैवादरातिशयो द्योत्यते Sy.
यथा वा वाशनस्वभाविका अचिरप्रसूता गावः स्वान् वत्सान् पयस्तर्पणेनोपतिष्ठन्त्येवं त्वाष्ट्रमग्निमतिप्रवर्धमानमुपस्थितवत्यः। ता दश दिशो द्यावापृथिव्यौ च Sk.

७. एवैरमृततर्पणैः Sk.

८. ०न्ती P.

९. दक्षाणां सर्वबलानां दक्षपतिर्बभूव। यथैव प्रवीणशब्दः प्रकृष्टो वीणायां प्रवीण इत्येवमपि व्युत्पाद्यमानः प्रवीणो व्याकरणे प्रवीणो मीमांसायामित्यादिप्रयोगदर्शनात् प्रकर्षमात्रवचनो विज्ञायते। न वीणाविषयप्रकर्षवचनमेवमयमपि दक्षपतिशब्दो दक्षस्य पतिर्दक्षपतिरित्येवमपि व्युत्पाद्यमानोऽधिपतिमात्रवचनो द्रष्टव्यः। अधिपतिर्भवतीत्यर्थः Sk.

१०. बलानां मध्ये यदतिशयितं बलं तस्याधिपतिर्बभूवेत्यर्थः Sy.

११. यमग्निं दक्षिणत आहवनीयस्य दक्षिणभागेऽवस्थिता ऋत्विजश्चरुपुरोडाशादिभिरञ्जन्ति, आर्द्रीकुर्वन्ति तर्पयन्ति सोऽग्निरिति पूर्वेणान्वयः Sy.

१२. Following the text of the Vedic stanza, the reading should be दक्षिणतोऽति० for दक्षिणाति०
दक्षिणस्यां दिशि Sk.

१३. इत्थम्भूतलक्षणे . . . इत्येवमेषा तृतीया . . . गृहीतहविष्का इत्यर्थः Sk.

१४. अञ्जतिर्गत्यर्थः। शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः। होमार्थमुपगच्छति Sk.

१५. The passage beginning with बले। पतिः। and ending with सिञ्चन्ति is omitted by P.

**उद्यंयमीति सवि॒तेव॑ बा॒हू उ॒भे सिचौ॑ यतते भी॒म ऋ॒ञ्जन् ।**
**उच्छु॒क्रमत्क॑मजते सि॒मस्मा॒न्नवा॑ मा॒तृभ्यो॒ वस॑ना जहाति ॥७॥**

उद्यंयमीति । उद्वाहुः[1] । सवितोदेति[2] तद्वदयमात्मीयं तेजः[3] । उदयच्छति सोऽयम्[4] । उभे । सिचौ[5] सिक्[6] सिञ्चतेर्द्यौरुदकैः[7] पृथिवीं सिञ्चति पृथिवी हविर्भिर्दिवं ते उभे अपि । अभिगच्छति[8] तेजसा । प्रकाशयति[8] । भयङ्करोऽग्निः[9] । शुक्रम्[10] । रूपम्[11] । आदत्ते[12] । सर्वस्मात्[13] । नवानि च । वसनानि[14] । ज्वालाख्यानि । अद्भ्यः[15] । विसृजत्यासां मध्यादुत्तिष्ठन्[16] ।

---

१. देवपरिवेषणवेलायां यदुद्यमनं तदिहाभिप्रेतम् । देवान् परिवेष्टुं हवींष्यादाय पुनः पुनरुद्यच्छति Sk.

२. सर्वस्य प्रेरक आदित्यो यथा ... बाहुस्थानीयान् रश्मीनुद्गमयति तथायमौषसोऽग्निः स्वकीयानि तेजांसि ... भृशमुद्यतान्यूर्ध्वाभिमुखानि करोति Sy. यजमाननामैतच्छाकपूणिना पठितम् । यजमान इव Sk. ३. ० यमायं M. बाहू । बाहुसम्बन्धाद्धस्तावेवात्र बाहुशब्देन लक्ष्येते । आत्मीयौ हस्तौ । देवान् परिवेष्टुं हस्ताभ्यां हवींष्यादाय यजमानवत् पुनः पुनरग्निरुत्क्षिपतीत्यर्थः । सवितात्रादित्य एव वाभिप्रेतः । ... ऐतिहासिकाश्च प्रतिमासु चित्रकर्मसूर्ध्वहस्तमेव सवितारं स्मरन्ति । हवींष्युत्क्षेप्तुमादित्य इव हस्तावुद्यच्छतीत्यर्थः Sk.

४. The passage beginning with उद्यंयमीति and ending with सोऽयम् is omitted by P.

५. सिचछब्दोऽत्र वस्त्राञ्चलवचनः।...यततिरपि सामर्थ्यात् सन्नहनार्थः। उभे अपि वस्त्राञ्चले गाढं सन्नह? (ह्य)ति । परिकरबन्धं च करोतीत्यर्थः । अथवा उद्यंयमीति होमवेलायां यदुद्यमनं तदिहाभिप्रेतम् । होमवेलायामग्निरात्मीयौ हस्तावाहुतीः प्रतिग्रहीतुं प्रसारयतीत्यर्थः । उभे सिचौ यतत इत्यप्याज्यसेचनाद् जुहूपहृतावुच्येते । यततिरपि सामर्थ्याच्चुम्बनार्थः । उभेऽपि ? (उभे अपि) जुहूपहृतौ चुम्बतीत्यर्थः Sk.

६. सिक्र D. सिक P.

७. ०ते द्यौ० M.

८. स्वतेजसालङ्कुर्वन् यतते स्वव्यापारे प्रयतते Sy. ९. अतिप्रज्वलितत्वात् Sk.

१०. ०ग्नि P.

११. सारभूतं रसम् Sy. आत्मीयज्वालाख्यं रूपमुत्क्षिपति । ऊर्ध्वं ज्वलतीत्यर्थः Sk.

१२. रश्मिभिरूर्ध्वमादत्ते Sy.

१३. भूतजातात् Sy. सर्वस्मादाहवनीयागाराद् अन्यतो वा स्थानात् Sk.

१४. सर्वस्य जगत आच्छादकानि तेजांसि ... उद्गमयति Sy. वसनानि तमांस्यत्राभिप्रेतानि, अचिरोत्पन्नत्वाद् आच्छादकत्वाच्च दिशाम् Sk.

१५. अभ्यः P. M. स्वमातृस्थानीयेभ्यो वृष्ट्युदकेभ्यः सकाशात् Sy. मातरोऽपि दिशः, त्वाष्ट्रात्मनोऽग्नेर्जनकत्वात् । जहातीत्यपि लट् भूते काले । अचिरोत्पन्नानि तमांसि दिग्भ्यस्त्वाष्ट्रोऽग्निरजहात् । अपनीतवानित्यर्थः । अथवा ओषधिवनस्पतयोऽत्र मातर उच्यन्ते । तासां नवानि वसनान्यजीर्णास्त्वचः । मातृभ्य इति षष्ठ्यर्थे पञ्चमी । ओषधिवनस्पतीनामजीर्णास्त्वचोऽग्निर्दग्ध्वा जहातीत्यर्थः Sk. १६. ०त्यसा P.

त्वेषं रूपं कृणुत उत्तरं यत्संपृञ्चानः सदने गोभिरद्भिः ।
कविर्बुध्नं परि मर्मृज्यते धीः सा देवताता समितिर्बभूव ॥८॥

त्वेषं रूपम्। दीप्तम्[1]। रूपम्। कृणुते[2]। यद्रूपम्[3]। उद्धततरं[4] भवति। संसृजन्[5]। समुद्रे[6]। तेजोभिः[7]। अद्भिश्च[8]। क्रान्तः[9]। ध्यानात्मनः[10]। मूलमुदकं[11] ज्वालाभिः[12]। परिमार्ष्टि[13]। सोऽयम्[14]। देवैस्ततः[15]। सङ्घः[16]। भवति प्रकाशते पूर्वस्यां दिशि।

उरु ते ज्रयः पर्येति बुध्नं विरोचमानं महिषस्य धाम ।
विश्वेभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः पायुभिः पाह्यस्मान् ॥९॥

उरु ते ज्रयः[17]। विस्तीर्णम्। गच्छत्[18]। तव। तेजः[19]। परिगच्छति[20]। मूलम्[21]। विरोचमानम्[22]। महतः[23]। सर्वैः। अग्ने! स्वकीर्तिभिः[24]। समिद्धः[25]। अनुपहिंसितैः[26]। पालनैः। अस्मान्। रक्ष[27]।

---

१. सर्वैर्द्रष्टुमशक्यम् Sy.
२. वैद्युतं प्रकाशम् Sy.
३. यदा Sy. यत्। सप्तम्या अत्र लुग्द्रष्टव्यः। यत्र Sk.
४. उत्कृष्टतरम् Sy; Sk.
५. वैद्युतरूपेण संयुक्तः Sy. सम्पृच्यमानः Sk.
६. अन्तरिक्षे Sy. यज्ञगृहे Sk.
७. गन्त्रीभिः Sy. गोशब्दोऽत्र स्तुतिवचनः। ...स्तुतिभिः Sk.
८. अद्भ्यश्च P. आभिश्च M. मेघस्थाभिः Sy. सोमरसलक्षणाभिश्चाद्भिः स्तूयमानः सोमेन च हूयमान इत्यर्थः Sk.
९. कान्तः P. मेधावी Sk.
१०. सर्वेषां धारकः Sy.
११. सर्वस्योदकस्य मूलभूतमन्तरिक्षम् Sy. बुध्नमन्तरिक्षम्। तच्च तमोऽपनयनेन सर्वतः शोधयति Sk.
१२. ०क ज्वा० M.
१३. स्वतेजसाऽऽच्छादयति Sy.
१४. सेयं P. D. M.
१५. ०त P. देवेन देवनशीलेनाग्निना तता विस्तारिता दीप्तिरस्माभिः स्तुता सती Sy.
१६. तेजसां संहतिः Sy. सङ्गच्छन्ते यस्मिन् देवाः सा समितिः। ...यत्र यज्ञकर्मणि दीप्तमात्मनो रूपमग्निः करोति, अन्तरिक्षाच्च तमोऽपनयति। तत्रैव देवाः सङ्गच्छन्ते नान्यत्रेत्यर्थः Sk.
१७. तेजः M. १८. ०च्छन् M.
१९. राक्षसादीनामभिभावकम् Sy.
२०. परितो व्याप्नोति Sy. सर्वतो व्याप्नोतीत्यर्थः Sk.
२१. अपां मूलभूतमन्तरिक्षम् Sy. अन्तरिक्षम् Sk.
२२. ०माना P. २३. महः M.
२४. आत्मनिमित्तं यशो येषु पालनेषु तानि स्वयशांसि। तैः Sk.
२५. अस्माभिः प्रज्वलितः सन् Sy.
२६. राक्षसादिभिः Sy.
२७. रक्षम् M.

धन्वन्त्स्रोतः कृणुते गातुमूर्मिं शुक्रैरूर्मिभिरभि नक्षति क्षाम् ।
विश्वा सनानि जठरेषु धत्तेऽन्तर्नवासु चरति प्रसूषु ॥१०॥

धन्वन्त्स्रोतः । अन्तरिक्षे । सन्ततम् । गमनशीलम् । तेजःसङ्घातम्[1] । करोति । शुक्रैः[2] । तेजोभिः[3] । अभिव्याप्नोति । क्षाम्[4] । विश्वानि च । अन्नानि । स्वोदरेषु । धारयति[5] । अन्तः[6] । चरति । नवासु[7] । मातृष्वप्सु[8] ।

एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥११॥

एवा नो अग्ने । एवम् । अग्ने ! निधीयमानया[9] समिधा[10] । वर्धमानः[11] । अस्माकम्[12] । धनयुक्तम्[13] । अन्नार्थं[13] च । दीप्यस्व[14] । सूक्तं प्राज्ञैर्निरूपणीयमिति[15] ।

---

१. ऊर्मिमुदकसङ्घमयमग्निः, स्रोतः कृणुते स्रोतसा प्रवाहरूपेण युक्तं करोति Sy.
स्रोत इत्यप्युदकनाम । हविर्नयनद्वारेणान्तरिक्षे वृष्टिलक्षणमुदकं करोत्यग्निः । . . . ऊर्मिमत्यन्तप्रभूतम् Sk.
२. निर्मलैः Sy.
३. तैर्जलसङ्घैः Sy.
४. भूमिम् ।. . .स्वतेजोभिरन्तरिक्षे जलसङ्घमुत्पाद्य तेन सर्वां भूमिमभिवर्षतीत्यर्थः Sy. पृथिवीम् Sk.
५. ०यन्ति M.
अवस्थापयति Sy.
धारणेन चात्र पाकरहितस्यान्नस्योदरेषु धारयितुमशक्यत्वाद् हेतुभूतौदनत्वाद्यापत्तिरूपः कार्यभूतो वा रसलोहितमांसत्वाद्युत्पत्तिरूपः पाको लक्ष्यते । अन्नानि चौदनादिरूपेण रसादिरूपेण वा जाठरात्मनाग्निः पचतीत्यर्थः Sk.
६. ०यन्तः M.
७. वृष्ट्यनन्तरमुत्पन्नासु Sy.
८. सर्वेषामन्नानां प्रसवित्रीष्वोषधीषु पाकार्थम् । . . . अन्तरवस्थितेन भौमाग्निना सर्वा ओषधयः पच्यन्ते Sy.
प्रसूतानामोषधीनामन्तर्गतः । अग्न्यायत्तो हि प्रसूतानामोषधीनां फलपाकः । अत एतदुच्यते—अन्तर्नवासु चरति प्रसूष्विति Sk.
९. अस्माभिर्दत्तेन समिदादिद्रव्येण Sy.
१०. ०नय P. ०नाया D.
११. समिन्धति ? (न्ध इति) समित् । स्तुतिरत्राभिप्रेता न काष्ठमयी । तया Sk.
१२. ०ना M.
१३. धनयुक्ताय. . .अस्माकम्. . .अन्नाय । . . . अस्माकं तादृशमन्नं प्रयच्छेत्यर्थः Sy.
धनायास्माकमित्यर्थः Sk.
१४. ०प्यसु M.
१५. V. Mādhava ignores पावक । वि । तत् etc.
Ms. D. puts the figure ॥६५॥ here to indicate the end of the ninetyfifth hymn. No such number is given in P. and M.

I.96.

**स प्र॒त्नथा॒ सह॑सा॒ जाय॑मानः स॒द्यः काव्या॑नि॒ बळ॑धत्त॒ विश्वा॑ ।**
**आप॑श्च मि॒त्रं धि॒षणा॑ च साधन्दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम् ॥१॥**

**स प्रत्नथा।** सः। प्रत्न इव[1]। बलेन। जायमानः[3]। तदानीमेव हविर्वहनादीनि। कविकर्माणि[4]। सर्वाण्येव। सत्यमेव[5]। आपः[6]। चान्तरिक्ष्या माध्यमिका[7]। वाक्[8]। च। मित्रमेनम्[9]। साधयन्ति[10] वैद्युतम्। अग्निं[6,11] तमिमम्। धनस्य दातारम्[12]। देवाः[13]। अधारयन्निति[14]।

**स पूर्व्या॑ नि॒विदा॑ क॒व्यता॒योरि॒माः प्र॒जा अ॑जनय॒न्मनू॑नाम् ।**
**वि॒वस्व॑ता॒ चक्ष॑सा॒ द्याम॒पश्च॑ दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम् ॥२॥**

**स पूर्वया।** सः। प्रथमया। वाचा[15]। कवित्वेन[16] चोर्वशीपुत्रस्य। आयोः[17] प्रजापतेः। इमाः।

---

१. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यः पूर्वेषामप्यङ्गिरःप्रभृतीनामृषीणां न्यधत्त स इदानीन्तनानामपि यजमानानाम् Sk.

२. पुराणानामिव Sk.

३. निर्मथनेनोत्पद्यमानः Sy.
मथ्यमानादरणिद्वयात् Sk.

४. कविर्मेधाव्यग्निः। तस्य यानि कर्माणि हविर्वहनादीनि तानि काव्यानि Sk.

५. पूर्वं विद्यमान इवाग्निरुत्पत्तिसमकालमेव स्वकीयं हविर्वहनादिकं सर्वं कार्यमकरोदित्यर्थः Sy.

६. मेघेष्ववस्थिताः Sy. अप्शब्दोऽत्राप्नोतेर्व्याप्तिवचनो नोदकवचनः Sk.

७. व्याप्त्र्यश्चाहुतयः स्तुतिलक्षणा च वाक् Sk.

८. वान्त्व P. वा क्व M.

९. अग्निम् Sk.

१०. कुर्वन्तीत्यर्थः। कस्य? सामर्थ्याद्यजमानानाम् Sk.

११. तम् is omitted by P.

१२. हविराख्यस्य धनस्य दातारम्। हविषां वोढारमूर्ध्वं चार्पयितारमित्यर्थः Sk.
अयमेवाग्निर्द्रविणोदा इति शाकपूणिः। आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादा भवन्ति N. 8. 2.

१३. देवानां ह P.
ऋत्विजः।...गार्हपत्यादिरूपेण धारयन्ति। यद्वा देवा एवेन्द्रादय इममग्निं द्रविणोदां हविर्लक्षणस्य धनस्य दातारं कृत्वा दूत्ये . . . धारयन्ति Sy.

१४. निहितवन्त इत्यर्थः Sk.

१५. 'अग्निर्देवेद्धः' इत्यादिकया निविदा Sy.
'अग्निर्देवेद्धः' . . . इत्येषा निवित्। वाङ्नाम वा निविच्छब्दः। तृतीयानिर्देशाच्च स्तूयमान इति शेषः। प्रकृतोऽग्निः पूर्वया निविदा पूर्वर्षिप्रयुक्तया वाचा स्तूयमानः Sk.

१६. कव्यता गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वता Sy.

१७. मनोः सम्बन्धिनोक्थेन च स्तूयमानः सोऽग्निः Sy.
राज्ञः। षष्ठीनिर्देशाद् भोग्या इति वाक्यशेषः Sk.

प्रजाः। अजनयत्। मनुष्याणां[1] दृश्यमानास्तमसः। विवासनेन[2]। तेजसा। द्याम्। अन्तरिक्षम्। च प्रकाशयति[3][4]।

**तमीळत प्रथमं यज्ञसाधं विश आरीराहुतमृञ्जसानम्।**
**ऊर्जः पुत्रं भरतं सृप्रदानुं देवा अग्निं धारयन्द्रविणोदाम् ॥३॥**

तमीळत[5]। तम्[6]। स्तुत। प्रथमम्[7]। यज्ञस्य साधयितारम्[8]। विशः[9]। अभिमन्त्र्य[10]। आहुतम्[11]। प्रसाधयन्तम्[12]। अन्नस्य[13]। पुत्रम्[14]। देवानां हविषश्च। भर्तारम्[15]। विस्तृतदानम्[16]।

**स मातरिश्वा पुरुवारपुष्टिर्विदद्गातुं तनयाय स्वर्वित्।**
**विशां गोपा जनिता रोदस्योर्देवा अग्निं धारयन्द्रविणोदाम् ॥४॥**

स मातरिश्वा। सः। अन्तरिक्षे श्वसन्[18]। बहुभिर्वरणीयपोषः। ताय[19] (?) मनुष्यजाताय।

---

१. मनूनां सम्बन्धिनीः Sy.
२. विशेषेणाऽऽच्छादयता Sy.
विवासनमपनयनम्। तद्वता च दर्शनेन। अशेषाज्ञाननिवृत्तिसमर्थेन च ज्ञानेनेत्यर्थः Sk.
३. ०शति M.
व्याप्नोतीति शेषः Sy.
४. V. Mādhava ignores देवाः etc.
५. ०तः M. तमिळते P.
६. प्रकृतमग्निम् Sk.
७. सर्वेषु देवेषु मुख्यम् Sy.
८. दर्शपूर्णमासादेः Sy.
९. सर्वे मनुष्याः Sy.
मनुष्यजातयः Sk.
१०. अर्तेर्वा गत्यर्थस्य रातेर्वा दानार्थस्येदं रूपम्। गन्त्र्यो दात्र्यो वा हविषाम् Sk.
११. हविर्भिस्तर्पितम् Sy.
१२. स्तोत्रैः प्रसाध्यमानम् Sy.
किम्? सामर्थ्याद्यज्ञं सर्वान् अभिप्रेतान् वा Sk.
१३. ऊर्जःशब्देनात्रान्नकारणत्वाद् वृष्टिलक्षणमुदकमुच्यते। बीजावस्थं वान्नम्। तस्य हि पुत्रोऽग्निः पारम्पर्येण तत उत्पद्यमानत्वात्। ततो ह्योषधिवनस्पतयो जायन्त ओषधिवनस्पतिभ्य एष जायत इति Sk.
१४. भुक्तेनान्नेन जाठराग्नेर्वर्धनादग्नेरन्नपुत्रत्वम्। . . . यद्वा प्राणरूपेण सर्वासां प्रजानां भर्तारम् Sy.
१५. भरतमृत्विजम्। . . . कर्तृवचनो वा। भर्तारं वा सर्वयजमानानाम् Sk.
१६. सर्पणशीलदानयुक्तम्। अविच्छेदेन धनानि प्रयच्छन्तमित्यर्थः Sy.
तत्र तत्र गन्तृ सृप्रम्। सृप्रं दानं यस्य स सृप्रदानुः। तं सृप्रदानुम्। तस्मै तस्मै स्तोत्रे यजमानाय च दातारमित्यर्थः Sk.
१७. V. Mādhava ignores देवाः etc.
१८. मातरिश्वसम्बन्धादग्निरेव मातरिश्वेत्युच्यते Sk.
१९. A part of the commentary seems to be missing.

विशाम्। गोपायिता। जनयिता। द्यावापृथिव्योः[१]।

नक्तोषासा वर्णमामेम्याने धापयेते शिशुमेकं समीची।
द्यावाक्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन्द्रविणोदाम् ॥५॥

नक्तोषासा। नक्तोषासावात्मीयम्। वर्णम्[२]। अन्योन्यस्याध्यात्मं कुर्वाणे[३]। पाययतम्[४]। उभयोः साधारणम्[५]। सङ्गते स्वसारं हविरग्निहोत्रं स चासौ। द्यावापृथिव्योः। मध्ये। मणिरिव[६]। दीप्यते[७]।

रायो बुध्नः संगमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वेः।
अमृतत्वं रक्षमाणास एनं देवा अग्निं धारयन्द्रविणोदाम् ॥६॥

रायो बुध्नः। धनस्य। मूलम्[८]। विविधानि च धनानि सङ्गच्छन्तेऽस्मिन्[९][१०]। यज्ञस्य[११]। प्रज्ञापकः[१२]। अभिलषितस्य साधयिता तम्[१३]। इमम्। आत्मनः। अमृतत्वम्[१४]। रक्षमाणाः[१५]। देवाः। अधारयन्[१६]।

---

१. V. Mādhava ignores विदत्। गातुम्। स्वर्वित्। and देवाः etc.
२. कृष्णं शुक्लं च रात्र्युषसोर्वर्णनम् Sk.
३. परस्परं पुनः पुनर्हिंसन्त्यौ Sy. परस्परमीषद्धिंसन्त्यौ। रात्रिर्ह्युषसो रूपं स्वेन तेजसा, ईषद्धिनस्ति, उषा अपि स्वेन ज्योतिषा Sk.
४. हवींषि पाययेते Sy. सायमाहुतिः प्रातराहुतिश्चाग्निं पाययतः Sk.
५. अह्नः पुत्रमग्निम् Sy. शिशुमेकम्। शिशुर्बालः। लुप्तोपमं चैतत्। बाल इवैकं कञ्चित् केचित् स्त्रियौ Sk.
६. रोचमानः Sy. रोचनोऽग्निः Sk.
७. V. Mādhava ignores देवाः etc.
८. आहुतिद्वारा सर्वेषां धनानां कारणत्वात् Sy. आश्रयभूत इत्यर्थः Sk.
९. सह ग० D. निवासहेतूनां धनानां . . . सङ्गमयिता स्तोतॄणां प्रापयिता Sy. यजमानैस्सह। दाता च धनानां यजमानेभ्य इत्यर्थः Sk.
१०. ०च्छन्त्यस्मिन् M.
११. दर्शपूर्णमासादेः Sy.
१२. अथवा केतुशब्दः पताकावचनः कर्तृवचनो वा। यज्ञस्य पताकाभूतः कर्ता वेत्यर्थः Sk.
१३. मन्म मननं स्तुतिः। तस्याः साधयिता Sk.
१४. स्वकीयामरणत्वम् Sy. हविर्भक्षणलक्षणं देवत्वम् Sk.
१५. ०ण P. आत्मनो हविर्भक्षणपरिपालनार्थमित्यर्थः Sk.
१६. V. Mādhava ignores अग्निम्। द्रविणोदाम्।

नू च॑ पु॒रा च॒ सद॑नं र॒यी॒णां जा॒तस्य॑ च॒ जाय॑मानस्य च॒ क्षाम् ।
स॒तश्च॑ गो॒पां भव॑तश्च॒ भूरे॑र्दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम् ॥७॥

नू च पुरा च[1]। अद्य[2]। च। पुरा। च। आवासस्थानम्। रयीणाम्। जातस्य। च। जायमानस्य। च। आवासस्थानम्[3]। विद्यमानस्य[4]। च। गोपायितारम्। भवतः[5]। च। बहोः[6][7]।

द्र॒वि॒णो॒दा द्रवि॑णसस्तु॒रस्य॑ द्रविणो॒दाः सन॑रस्य॒ प्र यं॑सत् ।
द्र॒वि॒णो॒दा वी॒रव॑ती॒मिषं॑ नो द्रविणो॒दा रा॑सते दी॒र्घमायुः॑ ॥८॥

द्रविणोदाः। तुरस्त्वरतेरश्वादिधनम्[8]। त्वरणस्वभावकम्। प्रयच्छतु[9]। समनुष्यं[10] च। द्रविणोदाः। वीरवत्[11]। अन्नम्। द्रविणोदाः। दीर्घम्। आयुश्च। प्रयच्छतु[12]।

ए॒वा नो॑ अग्ने स॒मिधा॑ वृधा॒नो रे॒वत्पा॑वक॒ श्रव॑से॒ वि भा॑हि ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥९॥[13]

I.97

अप॑ नः॒ शोशु॑चद॒घमग्ने॑ शुशु॒ग्ध्या र॒यिम् । अप॑ नः॒ शोशु॑चद॒घम् ॥१॥

अप नः[14]। 'सर्वमित्रं सत् कुत्स इन्द्रवचनाद् दीर्घजिह्वीं नाम राक्षसीं बाधितवान्। अथ तं

---

१. अद्य M. अद्य च पुरा च सदनं रयीणाम्। रयिरिति धननाम। रातेर्दानकर्मणः N. 4. 17.

२. इदानीम् Sk.

३. वास P. पृथिवीस्थानीयम्। आश्रयभूतमित्यर्थः। अथवा क्षि निवासगत्योरित्यस्य क्षशब्दो निवासवचनः। निवासभूतमित्यर्थः Sk.

४. यच्च पूर्वोत्पन्नमस्त्येव यच्चेदानीं भवति तस्योभयस्यापि Sk.

५. सद्भावं प्राप्नुवतः Sy.

६. असङ्ख्यातस्यान्यस्य च भूतजातस्य Sy.

७. V. Mādhava ignores देवाः etc.

८. त्वरमाणस्य चलतो जङ्गमस्य . . . धनस्य बलस्य वैकदेशम् Sy.

९. प्रयच्छ M.

१०. सननीयस्य सम्भजनीयस्य स्थावररूपस्य धनस्यैकदेशं प्रयच्छतु Sy. परिचारकमनुष्यसहितं हिरण्यादि Sk.

११. पुत्रसंयुक्तामिषम् Sk.

१२. V. Mādhava ignores द्रविणोदाः। द्रविणोदाः। नः।

१३. This stanza is the same as I. 95. 11. V. Mādhava does not repeat the commentary on this stanza, in this place.

१४. अव P.

कुत्सम् 'सुमित्रः सन् क्रूरमकः' इत्येवं वागभ्यवदत्। तं शुगार्च्छत्[1] तदपनोदायाग्निं[2] स्तौति सो (?) मित्रं भवति दीर्घजिह्वी वा' इत्यादि ताण्ड्यकम्।[3]

अस्माकम्। पापम्[4]। अपगच्छतु[5]। अस्मान् अत्यन्तं दहत्। अग्ने! प्रज्वलय[6]। धनम्[7]। अर्धर्च उत्तरपूरक आदरार्थो वा।

**सुक्षेत्रिया सुगातुया वसूया च यजामहे। अप नः शोशुचदघम् ॥२॥**

सुक्षेत्रिया[8]। शोभनक्षेत्रेच्छया[9]। शोभनमार्गेच्छया[10]। धनेच्छया[11]। च वयमग्निम्। यजामहे[12]। अप[13]। नः। शोशुचत्[14]। अघम्[15]।

---

१. गाच्छत् P.
शुगाच्छत् M.

२. तवनो० P. तपनो० D.

३. The text as found in the Tāṇḍya Mahābrāhmaṇa (13. 6.) reads as follows :—
सौमित्रं भवति ॥८॥
दीर्घजिह्वी वा इद ँ रक्षो यज्ञहा यज्ञानवलिहत्यचरत्तामिन्द्रः कयाचन मायया हन्तुन्नाश ँ सताथ ह सुमित्रः कुत्सः कल्याण आस तमब्रवीदिमामच्छा ब्रूष्वेति तामच्छा ब्रूत सैनमब्रवीन्नाहैव तन्न शुश्रुव प्रियमिव तु मे हृदयस्येति तामज्ञपयत्ता ँ स ँ स्कृतेऽहतां तद्वाव तौ तर्ह्यकामयेतां कामसनि साम सौमित्रं काममेवैतेनावरुन्धे ॥९॥
सुमित्रः सन् क्रूरमकरित्येनं वागभ्यवदत्त ँ शुगार्छत्स तपोऽतप्यत स एतत्सौमित्रमपश्यत्तेन शुचमपाहतापशुच ँ हते सौमित्रेण तुष्टुवानः ॥१०॥

४. इन्द्रातिक्रमजम् Sk.

५. अस्मत्तो निर्गत्यास्मदीयं शत्रुं शोचयतु। यद्वा, अस्मदीयं पापं शोशुचत्, शोकग्रस्तं सद्विनश्यतु Sy.
अपपूर्वः शुचिरत्र सामर्थ्यादपनयने। व्यत्ययेन च प्रथमपुरुषः। अपनय Sk.

६. अपि चास्माकं...धनम्...समन्तात्...प्रकाशय। ...उक्तार्थमपि वाक्यमादरातिशयद्योतनाय पुनः पठ्यते। अवश्यमस्माकमघं विनश्यत्विति Sy.
हे अग्ने शुशुग्धि आ। शग्धीति याच्ञाकर्मा पठितः। ...याच्ञया चात्र तत्पूर्वकं दानं लक्ष्यते। आकारश्चात्र मर्यादायाम्। मर्यादया देहीत्यर्थः। ...अथवा शुशुग्धीति शुचेरेव दीप्त्यर्थस्येदं रूपम्।...दीप्यस्व आहर च धनमित्यर्थः Sk.

७. सनम् P. D. M.

८. ०त्रीया M.

९. इह तावल्लोके Sk.

१०. परलोके Sk.

११. ०मार्गे च छादनेच्छया M.

१२. यद्वा सुक्षेत्रिया देवयजनलक्षणशोभनदेशसम्बन्धिना हविषाऽग्निं यजामहे Sy.
एतानि सर्वाण्यस्मभ्यं देहीत्यर्थः Sk.

१३. अव P.

१४. विनश्यतु Sy. १५. अघः P.

**प्र यद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः शोशुचदघम् ॥३॥**

प्र यद् भन्दिष्ठः[१] । यस्मादहम्[२] । एषां[३] स्तोतॄणाम्[४] । अतिशयेन स्तोता यस्मात् । च । आस्मा-[५]कीनाः । स्तोतारः[६] । प्रस्तुवन्ति[७] ।

**प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयम् । अप नः शोशुचदघम् ॥४॥**

प्र यत् ते । यस्मात्[८] । अग्ने ! तव । स्तोतारः । प्रजायन्ते[९] । वयं च तथा । स्तोतारः सन्तः । प्रजायेमहि[१०][११] ।

**प्र यदग्नेः सहस्वतो विश्वतो यन्ति भानवः । अप नः शोशुचदघम् ॥५॥**

प्रयदग्नेः[१२] । यस्मात्[१३] । अग्नेः[१४] । भानवः । सर्वतः[१५] । प्रयन्ति[१६] । बलवन्तः[१७][१८] ।

**त्वं हि विश्वतोमुख विश्वतः परिभूरसि । अप नः शोशुचदघम् ॥६॥**

त्वं हि । त्वम् । हि[१९] । सर्वतोमुखः[२०] । सर्वतः[२१] । परिभवसि[२२][२३] ।

---

१. भन्दिषुः P. भन्निष्ठः D. २. यथा Sy. यदिति व्यत्ययेन नपुंसकता । योऽयम् Sk.

३. एषाम् । अनुदात्तत्वादादेशोऽयं प्रकृतस्याग्नेः । व्यत्ययेन चैकवचनस्य स्थाने बहुवचनम् । अस्याग्नेः Sk.

४. मध्येऽयं कुत्सः . . .प्रकर्षेण स्तोतृतमः Sy.

५. माकीनाः P. एवम् Sy. अस्मदीयाश्च पुत्राः पौत्राश्च पितृपितामहप्रपितामहा वा । येऽस्याग्नेर्भन्दिष्ठाः Sk.

६. प्रकर्षेण स्तोतृतमा भवन्ति Sy.

७. V. Mādhava ignores अप etc.

८. यदिति व्यत्ययेन नपुंसकता, एकवचनं च । प्रकर्षेण ये Sk.

९. पुत्रपौत्रादिरूपेण बहुविधा भवन्ति Sy. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । ते जायेमहि । प्रजां प्राप्नुयामेत्यर्थः । ते । षष्ठीनिर्देशादत्र प्रसादेन स्वभूता वेति वाक्यशेषः । तव प्रसादेन स्वभूता वा वयम् Sk.

१०. पुत्रपौत्रादिभिरुपेता भवेम Sy.

११. V. Mādhava ignores अप etc.

१२. ०ग्ने D. M. १३. यदिति षष्ठ्या लुग्द्रष्टव्यः । यस्याग्नेः Sk.

१४. ०ग्ने M. १५. सर्वस्मादपि प्रदेशात् Sy.

१६. ०या० M. प्रकर्षेणोद्गच्छन्ति Sy. प्रकर्षेण गच्छन्ति Sk.

१७. The proper reading should be बलवतः । शत्रूनभिभवतः Sy. बलवतः Sk.

१८. V. Mādhava ignores अप etc.

१९. त्वम् । हि । omitted by P. हिशब्दो यस्मादर्थे । यस्मात्त्वम् Sk.

२०. ०ख P. सर्वतोज्वालः । तव मुखस्थानीयानां ज्वालानां न कुत्रापि प्रतिहतिरस्ति Sy. २१. सर्वस्मादप्युपद्रवजातात् Sy.

२२. अस्माकं परिग्रहीता भव । रक्षको भवेत्यर्थः Sy. स्तोतॄणां . . . परिग्रहीतासि । यस्मादिति वचनात्तस्मादित्यध्याहार्यम् । तस्मात् Sk.

२३. V. Mādhava ignores अप etc.

द्विषो नो विश्वतोमुखाति नावेव पारय । अप नः शोशुचदघम् ॥७॥

द्विषो नः। शत्रून्। अस्मान्[1]। सर्वतोमुख[2]! नावेव[3]। अतिपारय[4][5]।

स नः सिन्धुमिव नावयाति पर्षा स्वस्तये । अप नः शोशुचदघम् ॥८॥

स[6] नः सिन्धुम्। सः[7]। अस्मान्। नदीमिव[8]। नावा। अतिपारय[9] शत्रून्। अविनाशाय[10][11]।

I.98.

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥१॥

वैश्वानरस्य। वैश्वानरस्य[12]। कल्याण्यां मतौ[13]। वयं स्याम[14]। राजा[15]। हि[16]। असौ भूतानाम्[17]।

---

१. अस्माकम् Sk.

२. ०खा M.

३. नावा ... नदीमिव Sy.

४. ०यः M. अतिक्रम्य ... शत्रुरहितं प्रदेशं ... प्रापय Sy.
द्विष इति कर्मश्रुतेरतीति चोपसर्गा-द्योग्यक्रियापदाध्याहारः। अतीत्य नावेव पारय। यथा कश्चित् कञ्चिन्नावा पारयेदेवमस्मांस्त्वं पारय। सर्वाभि-प्रेतानां पारं नयेत्यर्थः Sk.

५. V. Mādhava ignores अप etc.

६. न P.

७. यं त्वामस्तोष्म सः Sk.

८. यथा कश्चित् कञ्चित् सिन्धुं नावा पारयेद् एवम् Sk.

९. शत्रुरहितं प्रदेशमस्मान् प्रापयेत्यर्थः Sy.

१०. ०शय P. अपि नाशय M.

११. V. Mādhava ignores अप etc.
Ms. D. puts the figure ॥९७॥ here to indicate the end of the nintyseventh hymn. No such number is given in P. and M.

१२. विश्वेषां नराणां लोकान्तरनेतृत्वेन स्वा-मित्वेन वा सम्बन्धिनोऽग्नेः Sy.
विश्वानरौ मध्यमोत्तमावुच्येते। ताभ्यां प्रभवतीति वैश्वानरोऽयमग्निः। अश-निनाभिहन्यमानाद् वृक्षाद् योऽग्नि-र्गृह्यते स वैद्युतात्प्रभवति। यस्तु आदित्याभिमुख आदर्शे मणौ वा स आदित्यात्प्रभवति। तेन विश्वानर-प्रभवत्वादग्नेरिदं गुणाभिधानं वैश्वा-नरस्येति Sk.

१३. शोभनायामनुग्रहात्मिकायां बुद्धौ Sy.
शोभनायामनुग्राह्यबुद्धौ Sk.

१४. अनुग्राह्यत्वेन वर्तमाना भवेम Sy.
स्यामेत्याशास्महे Sk.

१५. स्वामी Sy. ईश्वरः Sk.

१६. हिशब्दो यस्मादर्थे Sk.

१७. भुवनानां लोकानाम् Sk.

अभिश्रयणीयः[1]। इतः[2]। जातः। सर्वम्। अभिविपश्यति[3]। वैश्वानरः। संयतते[4]। सूर्येण। प्रातरादित्यात्मना जायमानः[5]। सर्वं पश्यति। ततः। 'अमुष्य रश्मयः प्रादुर्भवन्ति। अतोऽस्यार्चींषि[6]। तयोर्भासोस्सङ्गमं दृष्ट्वा वदति संयतते' इति[7]।

**पृ॒ष्टो दि॒वि पृ॒ष्टो अ॒ग्निः पृ॑थि॒व्यां पृ॒ष्टो विश्वा॒ ओष॑धी॒रा वि॑वेश ।**
**वै॒श्वा॒न॒रः सह॑सा पृ॒ष्टो अ॒ग्निः स नो॒ दिवा॒ स रि॒षः पा॑तु॒ नक्त॑म् ॥२॥**

पृष्टो[8] दिवि। द्युलोके[9]। संस्पृष्टः। भूम्यां च। पृष्ट[10] एव। विश्वाः। ओषधीः। आविवेश[11]। वैश्वानरः। बलेन[12]। सम्पृक्तः। अस्मात्। अग्निः[13]। अहनि[14]। रात्रौ च। हिंसकात्[15]। रक्षतु[16]।

---

१. ०णीयेतो P. ०णीयेस्तो M.
आभिमुख्येन सेवितव्यः Sy.

२. इतोऽस्मादरणिद्वयाज्जातमात्र एव Sy.
इत ओषधिवनस्पतिभ्योऽरणिभ्यां वा जातः Sk.
इतो जातः सर्वमिदमभिविपश्यति। वैश्वानरः संयतते सूर्येण। राजा यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्यामेति। N. 7. 22.

३. ०पश्यन्ति D.
पश्यति। प्राणिनां कृताकृतप्रत्यवेक्षकत्वात्। अन्तर्णयर्थो वा सामर्थ्याच्चक्षिः ? (दृशिः)। दर्शयति। प्रकाशयतीत्यर्थः Sk.

४. संगच्छते Sy; Sk.

५. जायमानं M.

६. पार्थिवस्याग्नेस्तेजांस्युद्गच्छन्ति सूर्यकिरणाश्चाधोमुखं प्रसरन्ति Sy.

७. इत इममादधात्यमुतोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसङ्गं दृष्ट्वैवमवक्ष्यत् N.7.23.

८. वष्टो D.
अयं वैश्वानरोऽग्निः . . . आदित्यात्मना पृष्टः . . . यद्वा निषिक्तो निहितो वर्तते Sy. पृष्टः स्तुतोऽग्निः . . . देवैः Sk.

९. वि लोके D.

१०. वृष्ट D.
तथा पृथिव्यां भूमौ गार्हपत्यादिरूपेण पृष्टः संस्पृष्टो निहितो वा Sy.
पृष्टोऽग्निः पृथिव्यां . . . मनुष्यैः Sk.

११. पाकार्थमन्तः प्रविष्टवान्। अन्तःप्रविष्टेन पार्थिवेनाग्निना हि सर्वा ओषधयः पच्यन्ते Sy.
सर्वस्तोतृभिश्च पृष्टः सन्. . .सर्वास्वोषधीष्वन्तर्लीन इत्यर्थः Sk.

१२. सहसा परेषामसाधारणेन बलेन Sy.
स्तोतृगतेन स्तुतिकरणसामर्थ्येन। स्वगतया बलवत्तया स्तुत इत्यर्थः Sk.

१३. अग्नीरात्र्यौ P. अग्नीरहनि D. अग्निरात्रौ M.

१४. Omitted by P. and M.

१५. हिंसातः . . . वा Sk.

१६. V. Mādhava ignores अग्निः। सः। नः and सः

वैश्वानर तव तत्सत्यमस्त्वस्मान्रायो मघवानः सचन्ताम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥३॥

वैश्वानर । तव[1] । तत्[2] । सत्यम् । कर्म स्तोतृषु भवतु[3] । अस्मान् । धनानि[4] । धनवन्तः[5] । च । सेवन्ताम्[6] ।

I.99.

जातवेदसे सुनवाम सोममरातीयतो[*] नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥१॥

जातवेदसे[7] । कश्यपो[8] मारीचः । जातधनाय । सुनवाम । सोमम्[9] । स[10] अरातित्वमि-[11]च्छतः । भस्मीकरोति । धनम्[12] । सः । अस्मान् । विश्वानि । दुर्गाणि स्थानानि[13] । नावा । नदीम्[14] । इव । कर्णधारोऽतितरतु[15] । दुःखानि[16] चेति ।

---

१. वैश्वानर तव is added after तव by D.
२. तदस्माभिः क्रियमाणं कर्म Sy. यद् वयं ब्रूमस्तत् Sk.
३. त्वं तत्सत्यतया प्रतिपद्यस्व । प्रतिपद्य च सम्पादयेत्यर्थः Sk.
४. धनवदतिप्रियाः पुत्राः Sy.
५. धनान्यस्माकं भवन्तु । राजानश्च परिचारकभूता भवन्त्वित्यर्थः Sk.
६. V. M. ignores तत् । नः । मित्रः etc.
* अरातिऽयतः । PP.
७. जातवेदसः M.
जातवेदसे जातानामुत्पत्तिमतां सर्वेषां वेदित्रे । यद्वा जातैः सर्वैः प्राणिभिर्ज्ञायमानाय . . . जातप्रज्ञाय वाग्नये Sy.
उत्पन्नप्रज्ञाय वा अग्नये Sk.
जातवेदस इति जातवेदस्यां वैवं जातवेदसेऽर्चाय सुनवाम सोममिति । प्रसवायाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थमिति स्मो (०मनिस्मो) निदहाति निश्चयेन दहति भस्मीकरोति । सोमो ददादित्यर्थः । स नः पर्षदति दुर्गाणि विश्वानि दुर्गमानि स्थानानि नावेव सिन्धुं नावा सिन्धुं सिन्धुं नावा नदीं जलदुर्गां महाकूलां तारयति । दुरितात्यग्निरिति दुरितानि तारयति N. 7. 20.
८. कश्चवो M.
९. न्वोमं D.
१०. सोरौतित्वम् D.
११. अरातिरदानं हविषः । तां कामयमानस्य । सोममददत इत्यर्थः Sk.
१२. वेदं . . . ज्ञानं वा Sk.
१३. दुर्गमनानि भोक्तुमशक्यानि दुःखानि Sy.
१४. यथा कश्चित्कर्णधारो ग्राहादिभिर्दुष्टसत्त्वैराकुलितां नदीं नावा तारयति तद्वत् Sy.
१५. अतिपारयतु Sy; Sk.
१६. दुःखहेतुभूतानि पापानि Sy. पापानि Sk.

I.100.

**स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट् ।**
**सतीनसत्वा हव्यो भरेषु मरुत्वान्नो भवत्विन्द्र ऊती ॥१॥**

स यो वृषा[१]। ऋषयस्तेषां गोत्रं च सूक्ते भविष्यन्ति[२]।

स:[३]। य:। वर्षिता[४]। वर्षणकुशलैर्मरुद्भि:[५]। सहितः[६]। महतः। दिवः। पृथिव्याः। च। ईशानः[७]। सन्धितबलः[८]। ह्वातव्यः[९]। सङ्ग्रामेषु। मरुत्वान्[१०]। नः[११]। भवतु। इन्द्रोऽस्मिन्[१२] युद्धे। रक्षणाय[१३]।

**यस्यानाप्तः सूर्यस्येव यामो भरेभरे वृत्रहा शुष्मो अस्ति ।**
**वृषन्तमः सखिभिः स्वेभिरेवैर्मरुत्वान्नो भवत्विन्द्र ऊती ॥२॥**

यस्यानाप्तः[१४]। यम्। गच्छन्तम्। सूर्यमिव[१५]। अन्ये न व्याप्नुवन्ति[१६] यस्य वा। सङ्ग्रामे[१७] सङ्ग्रामे[१८]। शत्रुहन्तृ[१९]। बलम्[२०]। अस्ति। वर्षितृतमः[२१]। स्वैः। सखिभिः[२२]। गन्तृभिः[२३]। मरुद्भिः सहितः[२४]।

---

१. योर्व० M. स यो वृषा omitted by P. and D.

२. ०ति P. M.

३. स इति तच्छब्दश्चतुर्थे पादे सम्बन्धयितव्यः Sk.

४. कामानाम् Sy. य इन्द्रः।... वर्षिता कामानाम्। स्तोतृभ्यो दातेत्यर्थः Sk.

५. वृष्णिभवैर्वीर्यैः Sy.
वृष्ण्यमित्यपठितमपि बलनाम। बलैः समवेतः। अत्यन्तबलवानित्यर्थः Sk.

६. सम्यक् समवेतः सङ्गतः Sy.

७. शनः P. ईशनः D.

८. सतीनमित्युदकनाम। उदकस्य सत्वा सादयिता गमयिता Sy.
सतीनमित्युदकनाम।... वृष्टिलक्षणस्योदकस्य दाता Sk.

९. सर्वैः स्तोतृभिः Sy. जयार्थम् Sk.

१०. मरुत्वा मरुत्वान् P.
मरुद्भिः सहितः Sk.

११. अस्माकम् Sk.

१२. इन्द्रः omitted by P.

१३. अविता रक्षिता Sk.

१४. ०ना व् (प) तः P.
यस्येन्द्रस्य ... गतिः.. .परैरप्राप्ता Sy.

१५. यथा सूर्यस्य गतिरन्यैर्न प्राप्तुं शक्यते तद्वत् Sy.

१४–१६. यस्येन्द्रस्य अनाप्तोऽप्राप्तपूर्वः केनचिच्छत्रुणा। सूर्यस्येव यामो रथः Sk.

१७. सश्रमे M.

१८. Omitted by P.

१९. शत्रूणां हन्ता Sy.

२०. सर्वेषामसुराणां शोषकः Sy.

२१. ०म D. M.
अतिशयेन कामानां वर्षिता Sy.
यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। सः Sk.

२२. मित्रभूतैः Sy. मरुदाख्यैः सह Sk.

२३. एवशब्दोऽत्र काम्यवचनः पालयितृवचनो वा। कामयितव्यैः पालयितृभिर्वा Sk.

२४. V. Mādhava ignores नो etc.

दि॒वो न यस्य॒ रेत॑सो॒ दुघा॑ना॒: पन्था॑सो॒ यन्ति॑ श॒वसाप॑रीताः ।
त॒रद्द्वे॑षाः सास॒हिः पौंस्ये॑भिर्म॒रुत्वा॑न्नो भव॒त्विन्द्र॑ ऊ॒ती ॥३॥

दिवो न यस्य । द्युलोकस्य[1] । इव[2] । यस्य[3] । उदकानि[4] । क्षरन्तः[5] । रश्मयः[6] । यन्ति[7] । बलेन[8] शत्रुभिरपरिवृताः[9] । स तीर्णशत्रुः[10] । सहनशीलः[11] । बलैः[12] ।

सो अङ्गि॑रोभि॒रङ्गि॑रस्तमो भू॒द्वृषा॒ वृष॑भि॒: सखि॑भि॒: सखा॒ सन् ।
ऋ॒ग्मिभि॑र्ऋ॒ग्मी गा॒तुभि॒र्ज्येष्ठो॑ म॒रुत्वा॑न्नो भव॒त्विन्द्र॑ ऊ॒ती ॥४॥

सो अङ्गिरोभिः[13] । अग्निरप्सु जातोऽङ्गिरोभ्यः[14] । वरिष्ठः । अभवत्[15] । इन्द्रः[16] पुमांश्च[17] । पुम्भ्यः[18] । अतिशयेन सखा[19] । स्तोतव्येभ्यः[20] । स्तोतव्यः[21] गातव्येभ्यः[22] । अतिशयेन गेयः[23] [24] ।

---

* शर्वसा । अपरिऽइताः । PP.

१. यथा द्योतमानस्य सूर्यस्य किरणा वृष्टिं कुर्वन्तो नभःस्थलान्निर्गच्छन्ति तद्वत् Sy. दिव इति पञ्चमी Sk.

२. नशब्दः . . . पदपूरणः Sk.

३. यस्येत्येतत् शवसेत्येतेन सम्बध्यते । द्युलोकाद् यस्येन्द्रस्य बलेन Sk.

४. उदन्तानि P. वृष्ट्युदकानि Sy. वृष्टिलक्षणान्युदकानि Sk.

५. रक्षन्तः P. D. M.

६. पन्थासो वृष्टिपतनमार्गाः Sk.

७. निर्गच्छन्ति द्युलोकादितस्ततः प्रसरन्ति Sy. पृथिवीं प्रति गच्छन्ति Sk.

८. सहिताः Sy.

९. परैरनभिगताः । दुष्प्रापा इत्यर्थः Sy. शवसा अपरीता अपगता वृष्टिप्रतिबन्धकरैरसुरादिभिरप्राप्ताः । द्युलोकाद्यस्य प्रसादेन स्वैः पथिभिरप्रतिबन्धा वृष्टिः पततीत्यर्थः Sk.

१०. जितशत्रुक इत्यर्थः Sy. द्वेष्टॄणां शत्रूणां वधार्थमभिगन्ता हन्ता वेत्यर्थः Sk.

११. शत्रूणामभिभविता Sy. अत्यर्थमभिभविता शत्रूणाम् Sk.

१२. V. Mādhava ignores मरुत्वान् etc.

१३. सोऽङ्गि॰ M.

१४. अङ्गिरःसु P. D. अङ्गन्ति गच्छन्तीत्यङ्गिरसो गन्तारः । तेभ्योऽपि. . .अतिशयेन गन्ता भवति Sy. अतिशयेनाङ्गिरसां स्तुत्यतया सम्बन्धी Sk.

१५. भवति Sk.

१६. वर्षितृभ्योऽप्यतिशयेन वर्षिता Sy. वर्षिता Sk.

१७. पुरांश्च P.

१८. कीदृशैरङ्गिरोभिः । वृषभिर्वर्षणस्वभावकैः Sk.

१९. समानख्यानेभ्यो मित्रभूतेभ्योऽपि सखा अतिशयेन हितकारी Sy. कस्य ? सामर्थ्यादङ्गिरसामेव । सर्वस्तोतॄणां वा Sk.

२०. ॰भ्या D. अर्चनीयेभ्योऽपि Sy.

२१. अर्चनीयः Sy. ऋच स्तुतौ । अर्चनमृक् स्तुतिः । तद्वद्भिः स्तुतिमान् Sk.

२२. स्तोतव्येभ्योऽपि Sy. गातुभिर्गन्तृभिर्मेघानसुरान् वा प्रति Sk.

२३. भे . . . यः M. स्तोतव्यः Sy. ज्येष्ठ ऋद्धतमः प्रशस्यो वातिशयेन Sk.

२४. V. Mādhava ignores सखिभिः and मरुत्वान् etc.

स सूनुभिर्न रुद्रेभिर्ऋभ्वा नृषाह्ये सासह्वाँ अमित्रान् ।
सनीळेभिः श्रवस्यानि तूर्वन्मरुत्वान्नो भवत्विन्द्र ऊती ॥५॥

स सूनुभिः । सः । पुत्रैः । इव । मरुद्भिः[1] । भासमानः[2] । अभिभवन्[3] । शत्रून्[4] । युद्धे[5] । समानस्थानैर्मरुद्भिः[6] । अन्ननिमित्तान्युदकानि । प्रेरयन्[7][8] ।

स मन्युमीः समदनस्य कर्तास्माकेभिर्नृभिः सूर्यं सनत् ।
अस्मिन्नहन्त्सत्पतिः पुरुहूतो मरुत्वान्नो भवत्विन्द्र ऊती ॥६॥

स मन्युमीः । सः[9] । शत्रूणामभिमातिहा[10] । सङ्ग्रामस्य[10][11] । कर्ता । अस्मदीयैः । भटैः[12] । सूर्यम्[13] । संयोजयतु[13] । अस्मिन् । युद्धदिवसे[14] । सत्पतिः[15] । पुरुहूतः[16][17] ।

---

१. रुद्रपुत्रैः Sk.

२. महान् Sy. ऋभुरिति मेधाविनाम। व्यत्ययेन चात्रैकवचनम्। ऋभुभिः मेधाविभिः Sk.

३. अभिभूतवान् Sy.
अत्यर्थमभिभवन् Sk.

४. असुरादीन् Sk.

५. नृभिः पुरुषैः सोढव्ये सङ्ग्रामे Sy.
नरो यत्राभिभूयन्ते स नृषाह्यः सङ्ग्रामस्तत्र Sk.

६. श्रवोऽन्नम्। तत्र साधूनि श्रवस्यानि मेघवृन्दानि Sk.

७. मेघात् प्रच्यावयन् Sy.
समानस्थानैर्मरुद्भिः सह मेघवृन्दानि च घ्नन्नित्यर्थः Sk.

८. V. Mādhava ignores मरुत्वान् etc.

९. Omitted by M.

१०. मन्योः कोपस्य निर्माता। यद्वा अभिमन्यमानस्य शत्रोर्हिंसकः Sy.
प्रजापतेः पुत्रो मन्युर्नाम। तं प्रजापतिः सैनापत्ये नियुक्तवान्। तेन सहेन्द्रो निजघानेति। तदेतदुच्यते। मीङ् हिंसायाम्। मन्युना सह मिनातीति मन्युमीः। क्रोधनाम वा मन्युशब्दः। क्रोधेन शत्रूणां हिंसिता Sk.

११. समदिति सङ्ग्रामस्य नामसु पठितम्। समच्छब्दस्य समदनशब्दः पर्यायो द्रष्टव्यः Sk.

१२. मनुष्यैर्ऋत्विगाख्यैः सह Sk.

१३. सूर्यप्रकाशं ... सम्भक्तं करोतु। शत्रुपुरुषैस्तु दृष्टिनिरोधकमन्धकारं संयोजयतु Sy.
सम्भजताम्। सूर्यस्य हि यागादिकर्मनिर्वृत्तिः फलम्। तदर्थं ह्यसावुदेति। सर्वः सूर्य उदिते यागं निर्वर्तयति। तेनासौ सम्भक्तो भवति नान्येन। अतोऽत्र सूर्यं सनदिति सम्भजनेन तदुदयफलभूतयागनिर्वृत्तिः प्रतिपाद्यते। अस्मदीयैर्ऋत्विग्भिस्सह देवतात्वमापन्न इन्द्रः सूर्योदयफलभूतमस्मदीयं यागं निर्वर्तयत्वित्यर्थः Sk.

१४. यागदिवसे Sk.

१५. सत्वतिः D. त्पतिः M.
सतां पालयिता Sy; Sk.

१६. बहुभिर्यजमानैराहूतः Sy.

१७. V. Mādhava ignores मरुत्वान् etc.

तमूतयो रणयञ्छूरसातौ तं क्षेमस्य क्षितयः कृण्वत त्राम् ।
स विश्वस्य करुणस्येश* एको मरुत्वान्नो भवत्विन्द्र ऊती ॥७॥

तमूतयः । तम्[1] । मरुतः[2] । रमयन्ति[3] । युद्धे[4] । तमेव । क्षेमस्य[5] । त्रातारम्[6] । मनुष्याः । अकृण्वत[7] । सः । विश्वस्य । कर्मणः[8] । एक एव । ईष्टे[9] ।[10]

तमप्सन्त शवस उत्सवेषु नरो नरमवसे तं धनाय ।
सो अन्धे चित्तमसि ज्योतिर्विदन्मरुत्वान्नो भवत्विन्द्र ऊती ॥८॥

तमप्सन्त[11] । तम् । व्याप्नुवन्[12] । बलस्य[13] । उद्योगेषु[14] । मनुष्याः[15] । नेतारम्[16] । रक्षणार्थम्[17] । तमेव । धनार्थम् । स युद्धे । अन्धे[18] । तमसि[19] सञ्जाते । प्रकाशम्[20] । लम्भयति[21][22] ।

---

* करुणस्य । ईशे । PP.

१. इन्द्रम् Sy; Sk.

२. मरुदादिसेना ऊतय इहोच्यन्ते । ताः Sk.

३. यद्वा 'प्रहर भगवो जहि वीरयस्व' इत्येवंरूपं शब्दमिन्द्रमुद्दिश्य कुर्वन्ति Sy. शब्दयन्ति वा Sk.

४. शूरैर्वीरपुरुषैः सम्भजनीये सङ्ग्रामे Sy.

५. रक्षणीयस्य सर्वस्य धनस्य Sy.

६. सर्वदाऽपरित्यक्तारम् Sk.

७. कुर्वन्ति Sy.
यागैः स्तुतिभिश्च कुर्वन्ति । . . . यागैश्च स्तुतिभिश्च सर्वदा मनुष्याः क्षेमस्य कर्तारं कुर्वन्तीत्यर्थः Sk.

८. अभिमतफलनिष्पादनरूपस्य Sy.

९. ०ष्टैः M. सर्वकर्मणां वृष्टिनिबन्धनत्वाद् वृष्टेश्च केवलेन्द्रायत्तत्वात् Sk.

१०. V. Mādhava ignores मरुत्वान् etc.

११. ०मफ्स० P. ०न्तः M.

१२. भस भक्षणदीप्त्योः । स्तुतिभिर्दीपयन्ति । उत्तेजयन्तीत्यर्थः Sk.

१३. शव इति बलनाम । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः । षष्ठीबहुवचनान्तश्च । बलवतामुत्सवभूतेषु सङ्ग्रामेषु । बलवतां सङ्ग्राम उत्सव एव । अथवा उत्सवेष्वित्युच्छब्दोऽभीत्येतस्य स्थाने । बलस्य सम्बन्धिष्वभिषवेषु । बलेन येषु यज्ञेष्वभिषूयते सोमस्तत्रेत्यर्थः Sk.

१४. सङ्ग्रामेषु Sy. १५. स्तोतारः Sy.

१६. जयस्य Sy. मनुष्याकारम् Sk.

१७. अन्नार्थं रक्षणार्थं वा Sy.

१८. आध्यानरहिते चित्तव्यामोहकरेऽपि सङ्ग्रामे Sy.

१९. दृष्टिप्रतिबन्धके Sy.

२०. विजयलक्षणं प्रकाशम् । . . . तस्मात्तमेव प्राप्नुवन्तीत्यर्थः Sy. सूर्याख्यम् Sk.

२१. लभ० M.
ज्ञातवान् लब्धवान् वा । . . . अथवैवमन्यथास्या ऋचोऽर्थयोजना । अप्सन्तेति भसेः प्सातेर्वा भक्षणार्थस्येदं रूपम् । शवस इत्यप्यन्तर्णीतमत्वर्थं प्रथमाबहुवचनान्तं द्रष्टव्यम् । बलवन्तो भक्षयन्त्युत्सवेषु । बलवन्तो मनुष्या उत्सवेष्वपि तमेवेन्द्रमुपजीवन्तीत्यर्थः । किमर्थम् ? अवसे तर्पणायात्मनः । तमेव धनाय Sk.

२२. V. Mādhava ignores चित् । and मरुत्वान् etc.

स सव्येन यमति व्राधतश्चित्स दक्षिणे संगृभीता कृतानि ।
स कीरिणा चित्सनिता धनानि मरुत्वान्नो भवत्विन्द्र ऊती ॥९॥

स सव्येन । सः । वामेन[1] हस्तेन । वर्धमानान्[2] शत्रून् । नियच्छति[3] । सः । दक्षिणे[4] हस्ते यजमानैः[5] कृतानि हवींषि । संगृह्णाति[6] । सः । स्तोतारमुद्दिश्य[7] । भजते[8] । शत्रुधनानि[9] ।

स ग्रामेभिः सनिता स रथेभिर्विदे विश्वाभिः कृष्टिभिर्न्वद्य ।
स पौंस्येभिरभिभूरशस्तीर्मरुत्वान्नो भवत्विन्द्र ऊती ॥१०॥

स ग्रामेभिः[10] । सः । सैनिकैः[11] । भजते[12] शत्रून् । सः । रथैः[13] । ज्ञायते[14] च । विश्वैः । मनुष्यैः । अस्मिन्नहनि । क्षिप्रम् । सः[15] । बलैः । अभिभवति[16] । शत्रून्[17] ।

स जामिभिर्यत्समजाति मीळ्हेऽजामिभिर्वा पुरुहूत एवैः ।
अपां तोकस्य तनयस्य जेषे मरुत्वान्नो भवत्विन्द्र ऊती ॥११॥

स जामिभिः[18] । सः । बन्धुभिः[19] । यदि[20] । सङ्गच्छते । सङ्ग्रामे[21] । अजामिभिः[22] । वा । पुरुहूतः[23] ।

---

१. वामह० P.
२. हिंसतो महतः Sy. महतोऽपि Sk.
३. ०च्छसीति M. गृह्णातीत्यर्थः Sk.
४. ०णेन M. दक्षिणेन हस्तेन Sk.
५. करोतिरत्र सामर्थ्यात् स्वीकरणे द्रष्टव्यः । सङ्ग्रहणशीलः स्वीकृतानां, महतोऽपि शत्रूनयत्नेन निगृह्णातीत्यर्थः Sk.
६. Omitted by D.
कीरिणा चित् कीर्तयित्रा स्तोत्रा च स्तुतः सन्, धनानि सनिता प्रदानशीलो भवति । हविष्प्रदातॄणामिव स्तोतॄणामपि धनं प्रयच्छतीत्यर्थः Sy.
७. चतुर्थ्यर्थे चात्र तृतीया । स्तोत्रे Sk.
८. सम्भजते will be a better reading. षणु दाने । दानशीलो धनानाम् । नित्यं धनानि ददातीत्यर्थः Sk.
९. V. Mādhava ignores मरुत्वान् etc.
१०. संग्रा० M. P. ११. मरुत्सङ्घैः सह Sy. १२. फलानां प्रदाता भवति Sy.
१३. इन्द्रसम्बन्धिभिः . . . करणभूतैः Sy.
ग्रामेभी रथेभिरिति द्वितीयार्थे तृतीया । स ग्रामान् सनिता दाता । स एव रथान् Sk.
१४. जायते M. इत्येवमहं विदे जानामि Sk.
१५. सं P. सम् M. १६. अशंसनीयान् Sy. अभिभविता . . . अशंसितॄणाम् Sk.
१७. V. Mādhava ignores मरुत्वान् etc.
१८. जाजामभिः M. १९. समानजातीयैः सह Sk. २०. यदा Sy. यस्मात् Sk.
२१. सङ्गच्छते सङ्ग्रामे missing M.
२२. असमानजातीयैर्वा सह । अतिबलत्वात् समानजातीयैरसमानजातीयैश्च सह युध्यत इत्यर्थः Sk.
२३. बहुभिर्यजमानैराहूतः Sy.
एवाः कामाः । तैर्निमित्तभूतैर्बहुभिराहूतः । अभिलषितकामप्राप्त्यर्थं बहुभिर्यजमानैराहूत इत्यर्थः Sk.

मरुद्भिः। अपाम्। पुत्रस्य। पौत्रस्य च। जयाय भवति लम्भयति वृष्टिं पुत्रपौत्रौ च रक्षति।

स वज्रभृद्दस्युहा भीम उग्रः सहस्रचेताः शतनीथ ऋभ्वा।
चम्रीषो न शवसा पाञ्चजन्यो मरुत्वान्नो भवत्विन्द्र ऊती ॥१२॥

स वज्रभृत्। सः। वज्रभृत्। असुराणां हन्ता। भयङ्करः। उद्गूर्णः। सहस्रप्रज्ञः। शतनयनः। दीप्तः। सोमः। इव। बलेन। पञ्चजनहितः।

तस्य वज्रः क्रन्दति स्मत्स्वर्षा दिवो न त्वेषो रवथः शिमीवान्।
तं सचन्ते सनयस्तं धनानि मरुत्वान्नो भवत्विन्द्र ऊती ॥१३॥

तस्य वज्रः। तस्य। वज्रः। शब्दं करोति। शोभनः। इव। दीप्तः। शब्दः।

---

१. एवाः कामाः। तैर्निमित्तभूतैः Sk.
२. तेषामुभयविधानामपाम्—इन्द्रं प्राप्नुवतां पुरुषाणाम् Sy.
यस्मादिति वचनात्तस्मादित्यध्याहार्यम्। तस्मादतिबलवत्त्वाद् अपाम् Sk.
३. जया M.
जयश्चात्र प्राप्तिरभिप्रेतः। अपः पुत्रान् पौत्रांश्च जेतुम्। प्राप्तुमित्यर्थः Sk.
४. किमु वक्तव्यमस्माकं स्तोतृतमानां जयो भवतीति Sy.
५. V. Mādhava ignores मरुत्वान् etc.
६. अन्यैर्धर्तुमशक्यस्य वज्रस्य भर्ता Sy.
७. उपक्षपयितॄणाम् Sy.
८. ०स्रवज्रः P. D. सर्वज्ञ इत्यर्थः Sy.
सहस्रमिति बहुनाम। बहुप्रज्ञः Sk.
९. बहुस्तुतिर्बहुविधप्रापणो वा Sy.
शतमिति बहुनाम। नीथशब्दोऽपि स्तुतिवचनः। बहुस्तुतिः Sk.
१०. उरु भासमानो महान् वा Sy.
ऋभ्वा। अपठितमपि महन्नामैतद् द्रष्टव्यम्। महांश्च Sk.
११. चमसे रसात्मनावस्थितः सोम इव Sy.
चमेः, रातेश्च चम्रीषो राजा अग्निर्वा इहोच्यते। स हि सर्वमत्ति ददाति च Sk.
१२. गन्धर्वा अप्सरसो देवा असुरा रक्षांसि पञ्च जनाः। निषादपञ्चमाश्चत्वारो वर्णा वा। तेषु रक्षकत्वेन भवः Sy.
पञ्चजना निषादपञ्चमाश्चत्वारो वर्णाः। तेभ्यो हितः पाञ्चजन्यः।...यथा राजाग्निर्वा स्वेन बलेन पञ्चभ्योऽपि जनेभ्यो हितस्तद्वदिन्द्र इत्यर्थः Sk.
१३. V. Mādhava ignores मरुत्वान् etc.
* स्वःऽसाः। PP.
१४. स्मत्, भृशं क्रन्दति, शत्रूनाक्रन्दयति रोदयतीत्यर्थः Sy. असुरान् घ्नन् Sk.
१५. शोभनस्योदकस्य दाता दिवो न दिवः सम्बन्धी सूर्य इव Sy. प्रशस्तः Sk.
१६. दिवो न द्युलोकस्येव च तस्येन्द्रस्य त्वेषो दीप्तिः Sk.
१७. ०प्तश० P. D. M.
शब्दस्य गर्जनलक्षणस्य कर्ता Sy.
गर्जितलक्षणः Sk.

कर्मवानिन्द्रः[1] । तम्[2] । सेवन्ते[3] । दानानि[4][5] । तम्[6] । धनानि[7] ।

**यस्याजस्रं शवसा मानमुक्थं परिभुजद्रोदसी[*] विश्वतः सीम् ।**
**स पारिषत्क्रतुभिर्मन्दसानो मरुत्वान्नो भवत्विन्द्र ऊती ॥१४॥**

**यस्याजस्रम्** । यस्य । अनवरतम्[8] । शवसा[9] । मानम्[10] । अतिप्रशस्यम्[11] । परिभुज ?[12] । द्यावापृथिव्यौ । सर्वत एव परिगृह्य स्वयमेव द्यावापृथिव्योरीश्वरो[13] भवति । सः । पारयतु[14] । कर्मभिः[15] । मोदमानोऽस्मान्[16][17] ।

**न यस्य देवा देवता न मर्ता आपश्चन शवसो अन्तमापुः ।**
**स प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विन्द्र ऊती ॥१५॥**

**न यस्य देवाः**[18] । न । यस्य[19] । देवा ईश्वरा भवन्ति[20] । देवत्वस्य । नापि । मर्त्याः । आपः ।

---

१. ०न्द्र M.
शिमी इति कर्मनाम । लोकानुग्राहकेण कर्मणा युक्तः Sy.
वृष्टिलक्षणेन कर्मणा तद्वान् Sk.

२. त्वं M.

३. ०न्त P.

४. धनस्य Sy.

५. सनयो लाभा दानानि वा Sk.

६. तद् D. M.
धनानि स एव लभते ददाति वा। धनानि च तस्यैव सन्तीत्यर्थः Sk.

७. V. Mādhava ignores स्मत् । दिवः and मरुत्वान् etc.

* रोदसी इति। PP.

८. अवरतम् P.

९. बलेन Sy. स्वेन बलेन Sk.

१०. सर्वस्य परिच्छेदकं, सर्वेषां बलस्योपमानभूतं वा Sy.
निर्माणं जन्म वा Sk.

११. मानमातिप्र० P. D. ममानमातिः प्र० M.

१२. परिभुजत् is suggested. सर्वतो भुनक्ति पालयति स इन्द्रः Sy.
परिपालयति Sk.

१३. ०व्यो ई० P.
यः स्वेन बलेन प्रशस्यो जन्मन एव प्रभृति सर्वतः कृत्स्नेन द्यावापृथिवी ? (व्यौ) परिपालयतीत्यर्थः Sk.

१४. अस्मान् दुरितात् Sy. पूरयतु Sk.

१५. अस्माभिः कृतैर्यागैः Sy.
प्रज्ञाभिः। अत्यन्तप्रज्ञान् अस्मान् करोत्वित्यर्थः Sk.

१६. स्तूयमानोऽस्माभिः Sk.

१७. V. Mādhava ignores सीम् and मरुत्वान् etc.

१८. ०वा M.

१९. इन्द्रस्य . . . बलस्य . . . अवसानं देवा वस्वाद्या देवगणा न आपुः, न आनशिरे तथा . . . मनुष्याः . . . आपोऽपि न प्रापुः Sy. इन्द्रस्य Sk.

२०. कृत्स्नदेवा नान्यापि काचिद्देवता . . . बलस्यान्तमापुः Sk.

अपि। बलस्य। अन्तं न। आपुः। सः। प्ररेचकः। बलेन। द्यावापृथिव्योः।

**रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य।**
**वृषण्वन्तं बिभ्रती धूर्षु रथं मन्द्रा चिकेत नाहुषीषु विक्षु ॥१६॥**

**रोहिच्छ्यावा।** पञ्चानां भ्रातॄणामश्वावतो (?) निर्दिश्यन्ते। रोहित्। श्यावा। कल्याणदीप्तिः। पुण्ड्रवती। ऋज्राश्वस्य ज्येष्ठस्य। धनाय भवन्तु। वर्षवन्तमृज्राश्वेनाधिष्ठितम्। रथम्। धूर्षु। बिभ्रती। मदयन्ती। नहुषकुलजातासु। प्रजासु। ऋज्राश्वस्य

---

१. चनेति निपातो वाशब्दार्थे द्रष्टव्यः। ...यस्येन्द्रस्य न कश्चिदपि बलस्यान्तं जानाति बलस्य वा सदृशो नास्तीत्यर्थः Sk.

२. अन्तः M.

३. नावस्सु P.

४. प्रेरकः M.
अतिरिक्तः Sk.

५. शत्रूणां तनूकर्त्रा आत्मीयेन बलेन Sy.
शत्रुतनूकरेण बलेन Sk.

६. लोकद्वयादप्यस्य बलमतिरिच्यत इत्यर्थः Sy. सकाशात् Sk.

७. V. Mādhava ignores मरुत्वान् etc.

८. रोहितवर्णका। सामर्थ्यादिन्द्रस्य स्वभूता बडवा Sk.

९. रोहित्, रोहितवर्णा श्यावा श्यामवर्णा। उभयोः पार्श्वयोरुभयविधवर्णयुक्तेत्यर्थः Sy. १०. अतिदीर्घावयवा Sy.
प्रशस्तरश्मिः Sk.

११. अश्वभूषणयुक्ता वा Sy.
ललामशब्दः श्रेष्ठवचनः पुण्ड्रवचनो वा। अत्यन्तश्रेष्ठा सपुण्ड्रा वा Sk.

१२. न्मज्ञाश्वस्य M.
एतत्संज्ञस्य राजर्षेः। ...वृष्णा सेक्त्रा इन्द्रेण युक्तम् Sy.
ऋज्राश्वग्रहणेन तत्प्रभृतयः पञ्चापि वार्षागिरा लक्ष्यन्ते। अस्माकमृज्राश्वप्रभृतीनां वार्षागिराणां धनार्थमित्यर्थः Sk.

१३. श्रेष्ठस्य P.

१४. तु P.

१५. वृष्टिकारिणमिन्द्रं तत्रारूढं जानातीत्यर्थः Sk. १६. ०तर० P. D. M.

१७. धूषु M.
युगसम्बन्धिषु वहनप्रदेशेषु Sy.
रथधुरासु। ...अस्माकमृज्राश्वप्रभृतीनां धनार्थमिन्द्रेण स्वरथधुरासु नियुक्ता सतीत्यर्थः Sk.

१८. हर्षवती Sk.

१९. नहुषा मनुष्याः। तत्सम्बन्धिनीषु...सेनालक्षणासु प्रजासु...ज्ञायते। ईदृश्याश्वपङ्क्त्या युक्त इन्द्रः सङ्ग्रामेष्वनुग्राहकतया प्रादुर्भवतीत्यर्थः Sy.
नहुष इति मनुष्यनाम। तेषु भवासु नाहुषीषु नहुषनाम्नो वा राज्ञः स्वभूतासु विक्षु मनुष्यजातिषु ब्राह्मणादिकासु। सप्तमीनिर्देशाद् वर्तमानमिति शेषः। मनुष्यलोकमायातं ब्राह्मणानां मध्ये वर्तमानमित्यर्थः। अथवा रोहिच्छ्यावेत्याहुतिरभिधीयते न बडवा। सोमाज्यपुरोडाशहविर्लक्षणा लोहितवर्णा श्याववर्णा चात्यन्तश्रेष्ठाहुतिरुज्ज्वलरूपत्वात् प्रशस्तरश्मिर्धनार्थमस्माकमृज्राश्वप्रभृतीनां वृषण्वन्तमिन्द्रम् Sk.

बडवा[1] प्रादुरभूत्[2]।

एतत्त्यत्त इन्द्र वृष्ण उक्थं वार्षागिरा अभि गृणन्ति राधः ।
ऋज्राश्वः प्रष्टिभिरम्बरीषः सहदेवो भयमानः सुराधाः ॥१७॥

एतत्त्यत्ते[3]। तत्[4]। इदम्। तव[4]। वर्षितुः[5]। इन्द्रस्य। स्तोत्रम्। वृषागिरः[6] पुत्राः[7]। उच्चारयन्ति[8]। प्रीणनम्[9]। ऋज्राश्वः[10]। पार्श्वयोः स्थितैः स्तोत्रमुच्चारयति[11]। पार्श्वस्थानां[12] नामानि, अम्बरीष[13] इति[14]।

---

१. बन्धबा P.

२. अन्तर्णीतण्यर्थोऽत्र केततिर्द्रष्टव्यः। लोडर्थे लिट्। केतयतु ज्ञापयतु। धनमृज्राश्वप्रभृतिभ्यो देहीत्येवमिन्द्रं ब्रवीत्वित्यर्थः। बिभ्रती धूर्षु रथं, गच्छत इन्द्रस्य धुरि गृहीत्वा रथम्। निरुन्धानेत्यर्थः। शिष्टपदयोजना तु सदृशी। अथवा रोहिच्छ्यावेत्यादि·? (दीनि) मन्द्रा इत्यस्य विशेषणानि। मन्द्रशब्दः स्तुतिवचनः। ... इन्द्रं प्रत्यारोहतीति रोहित्। श्यैङ् वृद्धौ। श्यायत इति श्यावा। इन्द्रारोहिणी परिवृद्धा मन्द्रा स्तुतिर्धनार्थमस्माकं ऋज्राश्वप्रभृतीनामिन्द्रं ज्ञापयतु Sk.

३. ०तत्य० P. D.

४. त्यत् ते, इति समानार्थौ। तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यं जन्मन एव प्रभृति करिष्याम इति सङ्कल्पितवन्त एतत्त्यत् ते इन्द्र Sk.

५. कामानां वर्षितुः Sy. वृष्णे इति तादर्थ्ये चतुर्थी। तव वर्षयितुरर्थाय। त्वां वर्षयितारं स्तोतुमित्यर्थः Sk.

६. पृषा० M.
वृषागिरो राज्ञः पुत्रा ऋज्राश्वादयः Sy.

७. ०त्रः M.

८. ०ति M. आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः Sk.

९. संराधकम्, त्वत्प्रीतिहेतु ... राध साध संसिद्धौ। राध्नोति समृद्धो भवत्यनेनेति राधः Sy.
राधः। धननामैतत्। अन्तर्णीतमत्वर्थं चैतद् द्रष्टव्यम्। हविर्लक्षणेन धनेन धनवत्। हविस्संयुक्तमित्यर्थः Sk.

१०. एतत्संज्ञो राजर्षिः ... ऋज्रा गतिमन्तोऽश्वा यस्य स तथोक्तः Sy.

११. अन्यैर्ऋषिभिः सह Sy.
प्रष्टिशब्दोऽन्यत्र एकस्यामेव धुरि यो द्वितीयो बलीवर्दोऽश्वो वा नियुज्यते तस्य वाचकः। इह तु पृच्छ्यतेऽसाविति प्रष्टिः प्रख्यात उच्यते। प्रथमार्थे चैषा तृतीया। अत्यन्तप्रख्यात इत्यर्थः। ... अथवा प्रष्टिरिति नेदमृज्राश्वस्य विशेषणम्। किं तर्हि? तृतीयाश्रुतेः प्रसिद्धिबलाद्राध इति च कर्मश्रुतेर्योग्यार्थमत्र क्रियापदमध्याहार्यम्। वार्षागिरास्त्वदर्थं स्तोत्रमुच्चारयन्ति। तच्चोच्चारयन्तो धनं प्रष्टिभिर्वहेयुः। तावद्धनं देहि यावच्छकटैनैकैकस्यां धुरि द्वौ बलीवर्दौ नियुज्य वोढुं शक्यते नैकैकमित्यर्थः Sk.

१२. ०श्व० D.

१३. नामांब० D. अबि शब्दे Sy.

१४. देवैः सह वर्तत इति सहदेवः ... भयमानः। ञिभी भये ... राध इति धननाम। शोभनं राधो यस्य Sy.

दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हीत् ।
सनत्क्षेत्रं सखिभिः श्वित्न्येभिः सनत्सूर्यं सनदपः सुवज्रः ॥१८॥

दस्यून्छिम्यून्[1] । उपक्षपयितॄन्[2] । भेत्तॄन्[3] । च । पुरुहूतः[4] । मरुद्भिः[5] सह । हत्वा[6] । पृथिव्याम्[7] । हिंसकः[8] । निबर्हयतु[9] । हन्तिर्गमनार्थः । प्रयच्छतु[10] । मरुद्भिः[11] । प्रवृद्धैः[12] । सनत्[13] । सूर्यम्[14] । सनत्[15] । उदकानि[16] च । इन्द्रः[17] ।

विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥१९॥

विश्वाहेन्द्रः । सर्वदा । इन्द्रः । अस्माकम् । अधिवक्ता[18] । अस्तु । अहिंसिताः[19] शत्रुभिः ।

---

१. दस्यून् शिम्यून् P. D.
दस्यून् छि . . . न् M.

२. दस्युशब्दोऽत्र उपक्षपणार्हवचनः, दस्यतेः क्षयार्थत्वात् । ये च योद्धुमुपस्थितास्त उपक्षपणमर्हन्ति नेतरे । योद्धुमुपस्थितानुपक्षपयितव्यान् वृत्रादीनसुरान् Sk.

३. शमयितॄन् वधकारिणो राक्षसादींश्च Sy. शिमीति कर्मनाम । युशब्दोऽप्यत्र तद्वदर्थे । कर्मवतश्च । स्वव्यापारनित ? (रतां) श्च । युद्धपराङ्मुखानित्यर्थः Sk.

४. बहुभिर्यजमानैराहूतः Sy.
बह्वाहूतः Sk.

५. गमनशीलैः Sy.
एवैस्तैस्तैः कामैर्गमनैर्वा Sk.

६. हन्तिरत्र गत्यर्थः । . . . गत्वा Sk.

७. ०म P.
भूमौ वर्तमानान् Sy.
पृथिवीशब्दोऽपि . . . पृथिव्येकदेशभूतेष्वसुरपुरेषु द्रष्टव्यः । . . . असुरपुरेष्वित्यर्थः Sk.

८. हिंसकेन वज्रेण Sy.
शरुशब्दः शरपर्यायः । शरेण Sk.

९. नबर्हं० P.
अवधीत् Sy.
हतवान् Sk.

१०. समभाक्षीत् Sy.
सम्भक्तवानित्यर्थः Sk.

११. मित्रभूतैः Sy.

१२. श्वेतवर्णैरलङ्कारेण दीप्ताङ्गैः Sy.
श्वेतैरित्यर्थः । अथवा शु इति आशु इति च क्षिप्रनामनी । एतिरपि गत्यर्थः । शु य एति स श्वित्न्यः । तैः । क्षिप्रगामिभिरित्यर्थः Sk.

१३. तस्य वृत्रस्य हननेन . . . अभजत, प्राप्तवानित्यर्थः Sy.
सम्भक्तवान् Sk.

१४. वृत्रेण तिरोहितम् Sy.

१५. समभजत Sy.

१६. वृत्रेण निरुद्धा अपः Sy.
वृष्टिलक्षणाश्चापः सम्भक्तवान् Sk.

१७. V. M. ignores क्षेत्रम्

१८. अधिवचनं पक्षपातेन वचनम् । . . . सर्वदास्माकमिन्द्रः पक्षपातवचनयुक्तो भवतु Sy.
आज्ञापयिता Sk.

१९. ०क्ता त्वं हिं० P. D.
अकुटिलगतयः सन्तः Sy.

भजेमहि[1]। अन्नम्[2][3]।

I.101.

**प्र म॒न्दिने॑ पितु॒मद॑र्चता॒ वचो॒ यः कृ॒ष्णग॑र्भा नि॒रह॑न्नृ॒जिश्व॑ना ।**
**अ॒व॒स्यवो॒ वृष॑णं॒ वज्र॑दक्षिणं म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥१॥**

**प्र मन्दिने**[4]। कुत्सः। प्रोच्चारयत[5]। माद्यत इन्द्राय[6]। सोमयुक्तम्[7]। स्तोत्रम्। यः। ऋजिश्वानं राजानमुद्दिश्य[8]। कृष्णासुरगर्भास्तद्भार्याश्च[9]। निरहन्[10] कृष्णो[11] गर्भो यासां ताः कृष्णगर्भास्ता[12] हत्वा तेन भार्यासु निषिक्तान् गर्भानप्यहन्[13]। पालनेच्छवः। वर्षितारम्[14]। वज्रयुक्तदक्षिणहस्तम्[15]। मरुत्वन्तम्[16]। सख्यसिद्ध्यर्थम्[17]। हवामहे। कुत्सस्येन्द्रः सखाऽभवदिति। "**आ दस्यु॒घ्ना मन॑सा या॒ह्यस्तं॑म्**"[18] इत्यत्रोक्तम्।

---

१. षणु दाने। दानेन चात्र तत्पूर्वको लाभो लक्ष्यते। लभेमहीत्यर्थः Sk.

२. हविर्लक्षणमन्नम् Sy.

३. V. Mādhava ignores तत्। नः etc.
Ms. D. puts the figure ॥१००॥ here to indicate the end of the hundredth hymn. No such number is given by P. and M.

४. मन्दी मन्दतेः स्तुतिकर्मणः . . . प्रार्चत मन्दिने पितुमद्वचः N. 4. 24.

५. ऋत्विजां चायं प्रैषः पुत्रपौत्रप्रभृतीनां वा। प्रोच्चारयत हे ऋत्विजो मत्पुत्रपौत्रप्रभृतयो वा Sk.

६. स्तुतिमते स्तोतव्यायेन्द्राय Sy.
मन्दः स्तुतिः। तद्वान् मन्दी। तादर्थ्ये चैषा चतुर्थी। स्तुतिमत इन्द्रस्यार्थाय। स्तुत्यमिन्द्रं स्तोतुमित्यर्थः Sk.

७. हविर्लक्षणेनान्नेनोपेतम् Sy.

८. ऋजिश्वना एतत्संज्ञकेन राज्ञा सख्या सहितः सन् Sy. ऋजिश्वना। ऋजिश्वा नाम विदथिनः पुत्रः। तेन सह। अथवा ऋजु शवति गच्छतीति ऋजिश्वा वज्रः। तेन। अथवा वृष्टिलक्षणा आपः कृष्णगर्भाः कृष्णवर्णस्य मेघस्य गर्भभूतत्वात्। ता निरहन्। हन्तिर्गत्यर्थः सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। मेघात्, निर्गमितवान्। ऋजिश्वना ऋजुगामिना वज्रेण Sk.

९. कृष्णो नाम कश्चिदसुरः। तेन निषिक्तगर्भास्तदीया भार्या अवधीत्। कृष्णमसुरं हत्वा पुत्राणामप्यनुत्पत्त्यर्थं गर्भिणीस्तस्य भार्या अप्यवधीदित्यर्थः Sy. कृष्णो नामासुरः। स गर्भभूतोऽन्तर्गतो यासां सेनानां ताः कृष्णगर्भाः। कृष्णसहिता इत्यर्थः Sk.

१०. कृष्णासुरगर्भास्तद्भार्याश्च। निरहन्। omitted by D. ०स्तत्कार्या० P.

११. कृष्णासुर D. १२. ०र्भाः तं P. D.

१३. ०प्यवहः M. १४. कामानाम् Sy.

१५. यज्ञयु० P. D. M. १६. ०ध्य० P. D. मनुष्याणां देवैः सह स्तुत्यस्तोतृलक्षणः सम्बन्धः सख्यम्। तदर्थम् Sk. १७. स्तोतुमाह्वयाम इत्यर्थः Sk.

१८. RV. IV. 16. 10[a]

**यो व्यंसं जाहृषाणेन मन्युना यः शम्बरं यो अहन्पिप्रुमव्रतम् ।**
**इन्द्रो यः शुष्णमशुषं न्यावृणङ्मरुत्वन्तं सख्याय हवामहे ॥२॥**

**यो व्यंसम्**[1]। यः। व्यंसमसुरम्[2][3]। विकसता[4]। क्रोधेन[5]। अहन्[6]। यः। शम्बरम्[7]। यो वा। पिप्रुम्[8]। अयजमानम्[9]। इन्द्रः। यः। शुष्णम्[10]। अन्यैरशोष्यम्[11]। निहतवानिति[12][13]।

**यस्य द्यावापृथिवी* पौंस्यं महद्यस्य व्रते वरुणो यस्य सूर्यः ।**
**यस्येन्द्रस्य सिन्धवः सश्चति व्रतं मरुत्वन्तं सख्याय हवामहे ॥३॥**

**यस्य द्यावापृथिवी।** यस्य। द्यावापृथिव्यौ[14]। महत्। वीर्यमनु[15]वर्तेते[16]। यस्य। व्रते[17]। सूर्यः। वरुणश्च व्यापृतौ[18] भवतः। यस्य। इन्द्रस्य। नद्योऽपि[19]। कर्म[20]। सश्चन्त्यभि[21]गच्छन्ति[22]। छान्दसो[23] नकारलोपः[24]।

---

१. योऽप्यं सम M.

२. विगतभुजम् Sy.

३. योऽप्यं समधुरं M. ०मन्नुरं P.

४. विकरस्यता P.
अत्यर्थं हृष्यता Sk.

५. मन्युनाम्ना प्रजापतिपुत्रेण सह। अथवा ... अत्यर्थं हृष्यता क्रोधेन। प्रविकसता क्रोधेनेत्यर्थः Sk.

६. अर्हन् M.

७. एतत्संज्ञमसुरम् Sy.

८. पिप्रूम् D. चीप्रम् M.
एतत्संज्ञमसुरम् Sy.

९. अव्रतमकर्माणम्। भयान्निश्चेष्टमित्यर्थः Sk. १०. कृष्णम् P. D. सर्वस्य जगतः शोषकमेतत्सञ्ज्ञमसुरम् Sy.

११. शोषकरहितम् Sy.
अन्येन केनचिद् हन्तुमशक्यमित्यर्थः Sk.

१२. ०तस्यवा० P.
न्यवर्जयत्। समूलं हतवानित्यर्थः Sy.

१३. V. Mādhava ignores मरुत्वन्तं etc.

* द्यावापृथिवी इति। PP.

१४. दिवं पृथिवीं च प्रति Sk.

१५. सेनालक्षणं बलम् Sk.

१६. ०र्तंते P. M.
साकाङ्क्षत्वात्। सश्चतीत्येतत् तृतीयपादस्थमाख्यातं सर्वत्रानुषक्तव्यम्। सश्चतीत्ययं गच्छतिकर्मा। अप्रतिहतं गच्छतीत्यर्थः Sk.

१७. प्रते M. नियमरूपे कर्मणि Sy.
वृष्टिलक्षणे कर्मणि सति Sk.

१८. ०वृ (पृ) तो M.
वरुणः सश्चति। किं प्रति? प्रकृतत्वाद् द्यावापृथिव्यावेव प्रति यज्ञान् वा प्रति। वृष्टौ हि सत्यां यज्ञाः प्रवर्तन्ते। तांश्च प्रति देवता गच्छन्ति। यस्य च व्रते सूर्यः सश्चति यज्ञान् प्रति उदयास्तमयदेशौ वा प्रति Sk.

१९. ०वि P.

२०. सप्तम्यर्थे प्रथमैषा। व्रते वृष्टिलक्षणे कर्मणि सतीत्यर्थः Sk.

२१. सश्व ० M.

२२. इन्द्रेणानुशिष्टाः प्रवहन्तीत्यर्थः Sy.

२३. थाससो M.

२४. V. Mādhava ignores मरुत्वन्तं etc.

यो अश्वा॑नां॒ यो गवां॒ गोप॑ति॒र्वशी॒ य आ॑रि॒तः कर्म॑णिकर्मणि स्थि॒रः ।
वी॒ळोश्चि॒दिन्द्रो॒ यो असु॑न्वतो व॒धो म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥४॥

यो अश्वानाम्[1]। यः। अश्वानाम्। गवां च। पतिः[2]। स्वतन्त्रः[3]। यो वा[4]। सञ्जातारायुधः[5] ?। युद्धे[6] युद्धे[6]। स्थिरः[7]। यश्च। इन्द्रः[8]। दृढस्य[9]। अपि। असुन्वतः[10]। हन्ता[11]।

यो विश्व॑स्य॒ जग॑तः प्राण॒तस्पति॒र्यो ब्र॒ह्मणे॑ प्र॒थमो॒ गा अवि॑न्दत् ।
इन्द्रो॒ यो दस्यूँ॒रध॑राँ अ॒वाति॑रन्म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥५॥

यो विश्वस्य। यः। विश्वस्य। गच्छतः। प्राणतश्च[12]। पतिः[13]। यो वा। अङ्गिरोभ्यः[14]। पूर्वमेव[15]। पशून्[16]। अविन्दत् पणिभिरपहृतान्[17]। इन्द्रः। यः। दस्यून्[18]। अधरान्[19] कृत्वा। अवाहन्[20] [21]।

---

१. यो अ० D.
२. गोशब्दोऽत्राब्वचनः सोमवचनो वा स्तुतिवचनो वा स्तोतृवचनो वा। पतिशब्दोऽप्यधिपतिवचनः पालयितृवचनो वा। अपां वा सोमस्य वा स्तुतीनां वा स्तोतृणां वा अधिपतिः पालयिता वेत्यर्थः Sk.
३. ईशिता Sk.
४. Omitted by M.
५. स्तुतिभिः प्रत्यृतः प्राप्तो भवति Sy. रि गतावित्यस्याङ्पूर्वस्येदं रूपम्। आगत इत्यर्थः। पदकारस्त्ववग्रहाकरणाद् अर्तेर्यङ्लुगन्तस्येदं रूपं मन्यते।... आरितः। ण्यन्तस्य वा पुगभावश्छान्दसत्वात्। अत्यर्थं पुनः पुनर्वा आगतो गमितो वा यजमानैरित्यर्थः Sk. आरितः प्रत्यृतः स्तोमान् N. 5. 15.
६. सर्वेषु कर्मसु Sy. कर्मणि कर्मणि यज्ञाख्ये। सर्वयज्ञेष्वित्यर्थः Sk.
७. Omitted by M.
८. आयज्ञपरिसमाप्तेरविचाली Sk.
९. असुरादेः Sk.
१०. सोमाभिषवमकुर्वतः Sk.
११. V. Mādhava ignores मरुत्वन्तं etc.
१२. प्रश्वसतः प्राणिजातस्य Sy. प्राणिवर्गस्य Sk.
१३. पालयिता वा Sk.
१४. ब्रह्मशब्दोऽत्र ब्राह्मणशब्दपर्यायः तत्प्रभृतिवर्णोपलक्षणार्थश्चेह द्रष्टव्यः। तादर्थ्ये चैषा चतुर्थी। ब्राह्मणादीनां चतुर्णामपि वर्णानामर्थाय Sk.
१५. अन्येभ्यो देवेभ्यः पूर्वभावी Sy. मरुदादिभ्यः प्रथमः Sk.
१६. पणिभिरसुरैरपहृतास्सतीर्गाः Sk.
१७. अन्येभ्यो देवेभ्यः पूर्वमेव तैरसुरैर्युद्ध्वा गाः स्वयमलभतेत्यर्थः Sy.
१८. उपक्षपयितॄन् असुरान् Sy.
१९. दस्त्यध० M. न्यूनानित्यर्थः Sk.
२०. ०वहान् P.
२१. V. Mādhava ignores मरुत्वन्तं etc.

य॒ः शूरे॑भि॒र्हव्यो॒ यश्च॑ भी॒रुभि॒र्यो धाव॑द्भि॒र्हूय॑ते॒ यश्च॑ जि॒ग्युभि॑ः ।
इन्द्रं॒ यं विश्वा॒ भुव॑ना॒भि सं॑द॒धुर्म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥६॥

यः शूरेभिः। यः। शूरैः[1]। भीरुभिः[1]। च। ह्वातव्यः[2]। यः। पलायमानैः[3]। हूयते[4]। यः। च। जयशीलैः[5]। इन्द्रम्। यम्। सर्वाण्येव। भूतान्यात्मकार्यार्थम्[6]। अभिसन्दधुः[7]।

रु॒द्राणा॑मेति प्र॒दिशा॑ विचक्ष॒णो रु॒द्रेभि॒र्योषा॑ तनुते पृ॒थु ज्रय॑ः ।
इन्द्रं॑ मनी॒षा अ॒भ्य॑र्चति श्रु॒तं म॒रुत्व॑न्तं स॒ख्याय॑ हवामहे ॥७॥

रुद्राणामेति। मरुताम्[8]। गच्छति[9] मार्गम्। प्रदेशनेन[10]। विद्रष्टा[11]। मरुद्भिः[12]। सम्मिश्रयिता[13]। विस्तीर्णम्। वेगम्। करोति[14]। इन्द्रम्। वाक्[15]। अभिष्टौति[16][17]।

---

१. शूरेभिरुभिश्च M.
२. हव्यो योद्धुमाह्वातव्यः ... सहायार्थमाह्वातव्यः Sy. जयार्थम्... आत्मरक्षार्थम् Sk.
३. पराजयेन Sy.
४. ०न्ते D. रक्षार्थमाहूयते Sy.
५. शत्रूञ्जितवद्भिर्जयार्थम् Sk.
६. आभिमुख्येन स्थापयन्ति Sy. तस्य तस्याभिलषितस्य दानार्थं ध्यायन्ति Sk.
७. V. Mādhava ignores मरुत्वन्तं etc.
८. रुद्रपुत्राणामध्यात्मं प्राणरूपेण वर्तमानानां मरुताम्। यद्वा रोदयितॄणां प्राणानाम्। प्राणा हि शरीरान्निर्गताः सन्तो बन्धुजनान् रोदयन्ति Sy. रुद्रपुत्राणां मरुताम् Sk.
९. अन्तरिक्षे गच्छति Sy.
१०. ०र्गप्र० P. D. M. मनुष्येभ्यः प्रदानेन सह Sy. प्र इत्येष आ इत्येतस्य स्थाने। आदेशेन। वचनेनेत्यर्थः।... अथवा रुद्र इति स्तोतृनाम। स्तोतॄणामादेशेन गच्छति। यत्र मरुतः स्तोतारो वा ब्रुवन्ति तत्र तत्रेन्द्रो गच्छति नान्यत्रेत्यर्थः Sk.
११. विभ्रष्टा D. सूर्यात्मना प्रकाशमानः Sy. पण्डितो विद्रष्टा वा सर्वस्य Sk.
१२. मरुत् P. अधिभूतं वर्तमानै रुद्रपुत्रैर्मरुद्भिः Sy. रुद्रपुत्रैर्मरुद्भिः सह Sk.
१३. सम्मित्रश्रयिता P. माध्यमिका वाक् Sy. योषा सोमाहुतिलक्षणा Sk.
१४. विस्तारयति Sy. विस्तारयति। ... मरुद्भिः सहेन्द्रस्य यज्ञं प्रति गच्छतः पिपासिता ? (पिपासतः) सोमाहुतिर्विस्तीर्णमपि वेगं विस्तारयतीत्यर्थः। यदा रुद्र इति स्तोतृनाम तदा तृतीयानिर्देशात् प्रदास्यमानेति वाक्यशेषः। स्तोतृभिर्ऋत्विग्भिः प्रदास्यमाना सोमाहुतिर्यज्ञं प्रति गच्छत इन्द्रस्य विस्तीर्णमपि वेगं विस्तारयतीत्यर्थः Sk.
१५. स्तुतिः Sk.
१६. ०ष्टो० P.
१७. V. Mādhava ignores श्रुतम् and मरुत्वन्तं etc.

यद्वा॑ म॒रुत्वः॑ पर॒मे स॒धस्थे॒ यद्वा॑व॒मे वृ॒जने॒ मा॒दया॑से ।
अत॒ आ या॑ह्यध्व॒रं नो॒ अच्छा॑ त्वा॒या ह॒विश्च॑कृमा सत्यराधः ॥८॥

यद्वा मरुत्वः । यदि । वा । मरुत्वः ! परमे । स्थाने दिवि । यत् । वा । अवमे । सधस्थे कस्मिंश्चन युद्धे । माद्यसि । अतः । आयाहि । अस्माकम् । यज्ञम् । प्रति । त्वत्कामनया । हविः । चकृम । सत्यधन !

त्वा॒येन्द्र॒ सोमं॑ सुषुमा सुदक्ष त्वा॒या ह॒विश्च॑कृमा ब्रह्मवाहः ।
अधा॑ नियुत्वः॒ सग॑णो म॒रुद्भि॑र॒स्मिन्य॒ज्ञे ब॒र्हिषि॑ मादयस्व ॥९॥

त्वायेन्द्र । त्वाया । इन्द्र ! सोमम् । सुतवन्तः । शोभनबल ! त्वाया । पुरोडाशम् । चकृम । स्तोत्रवाह ! अथ । अश्ववन् ! मरुद्भिः । सहितः । अस्मिन् । यज्ञे । बर्हिष्यासीनः । तृप्य ।

* यत् । वा । अवमे । PP.

१. यद् वा मरुत्वः omitted by P.

२. मरुद्भिर्युक्त ! Sy.

३. उत्कृष्टे Sy.

४. सह तिष्ठन्ति यस्मिन् देवताः स सधस्थो यज्ञ इहाभिप्रेतः । विप्रकृष्टे यज्ञ इत्यर्थः Sk.

५. अर्वाचीने Sy.
अन्तिकनामैतत् । सन्निकृष्टे यज्ञे Sk.

६. ०मस० D. सधस्वे M.
सहस्थाने गृहे Sy.

७. वृज्यते रिक्तीक्रियतेऽस्मिन् धनमिति वृजनं गृहम् । तस्मिन् मादयासे Sy.
वृजि वर्जने । वर्जिते दोषैः । अविगुण इत्यर्थः । अथवा वृजनमिति बलनाम । सामर्थ्याच्चान्तर्णीतमत्वर्थम् । बलवती ? (ति) सारवतीत्यर्थः Sk.

८. मान्यसि M.
मदिरत्र सामर्थ्यात्तृप्त्यर्थः । तर्पयात्मानम् । स्वार्थिको वात्र णिच् । तृप्यसीत्यर्थः Sk.

९. अस्मादुभयविधात् स्थानात् Sy.

१०. महत्या त्वद्विषयया श्रद्धयेत्यर्थः Sk.

११. हवनीयपुरोडाशादिलक्षणम् Sk.

१२. ०नः M.

१३. त्व० P.

१४. त्व० D. त्वत्कामनया Sy.

१५. त्वाया । इन्द्र । omitted by M.

१६. हवनीयपुरोडाशादि हविः Sk.

१७. चकृतः M.

१८. ब्रह्मणा मन्त्ररूपेण स्तोत्रेणोह्यमान प्राप्यमाणेन्द्र Sy.
पूर्वोत्तरयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यस्माच्छब्दोऽध्याहार्यः । यस्मात् त्वाया त्वत्काम्ययेत्यर्थः Sk.
स्तुतिलक्षणं ब्रह्म उह्यते प्राप्यते यस्मिन् स ब्रह्मवाहाः । तस्य सम्बोधनं हे ब्रह्मवाहः Sk.

१९. एतस्मात् कारणात् Sk.

२०. सप्तगणरूपैरेतत्संज्ञैर्देवैः Sy.

२१. वेद्यां स्तीर्णे Sk.

२२. तर्पयात्मानं तृप्य वा Sk.

मा॒दय॑स्व॒ हरि॑भि॒र्ये त॑ इन्द्र॒ वि ष्य॑स्व॒ शि॒प्रे* वि सृ॑जस्व॒ धेने॑+ ।
आ त्वा॑ सुशिप्र॒ हर॑यो वहन्तू॒शन्ह॒व्यानि॒ प्रति॑ नो जुषस्व ॥१०॥

मादयस्व । माद्य[1] । अश्वैः सह । ये । तवाश्वाः[2] स्वभूताः, सोमपानार्थम् । हनू[3] । मोचय[4] । विसृजस्व[5] च । जिह्वोपजिह्विके[6] । सुहनो[7] ! त्वाम् । आवहन्तु[8] । हरयः । कामयमानः । हव्यानि[9] । अस्माकम्[10] । प्रतिसेवस्व[11] ।

म॒रुत्स्तो॑त्रस्य वृ॒जन॑स्य गो॒पा व॒यमिन्द्रे॑ण सनुयाम॒ वाज॑म् ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒ः सिन्धु॑ः पृथि॒वी उ॒त द्यौः ॥११॥

मरुत्स्तोत्रस्य । मरुद्भिः सहितं स्तोत्रं यस्य । शत्रूणां[12] छेत्तुस्तस्य[13] । गोप्याः[14] । वयम्[15] । तेन । अन्नम् । लभेमहीति[16] ।

I.102.

इ॒मां ते॒ धियं॒ प्र भ॑रे म॒हो म॒हीम॒स्य स्तो॒त्रे धि॒षणा॒ यत्त॑ आन॒जे ।
तमु॑त्स॒वे च॑ प्रस॒वे च॑ सास॒हिमिन्द्रं॑ दे॒वास॒ः शव॑सामद॒न्ननु॑ ॥१॥

इमां ते धियम् । इदम् । ते । कर्म[17] । प्रभरामि[18] । महतः । महत्[19] । अस्य[20] कुत्सस्य । स्तोत्रे ।

* शि॒प्रे इति॑ । PP. +धेने॒ इति॑ । PP.
१. तर्पयात्मानं तृप्य वा Sk.
२. तयाश्वाः M.
३. हनु P. ह . . . M.
हविर्ले ? (भ)क्षणाय Sk. ४. विवृते कुरु Sy. विमुञ्च । प्रेरयेत्यर्थः Sk.
५. वृजस्य P. D. पृजस्व M.
प्रेरयेत्यर्थः Sk. शिप्रे हनू नासिके वा । हनुर्हन्तेः । नासिका नसतेः . . . धेना दधातेः । N. 6. 17.
६. रसास्वादनाय Sk. ७. सुफनो P.
शिप्रे हनू नासिके वेहोच्येते । . . . शिरस्त्राणवचनो वेह शिप्राशब्दः । सुहनो सुनस सुशिरस्त्राण वेत्यर्थः Sk.
८. अस्मदीयं यज्ञं प्रापयन्तु Sy.
९. ० व्यनि M. १०. मा उदासिष्ठाः Sy.
अस्मान् अभिलषितफलप्रदानेन Sk.
११. V. Mādhava ignores इन्द्र ।
१२. शत्रुणा M. १३. बलनामैतत् । सेनालक्षणस्येन्द्रस्य बलस्य Sk.
१४. गौव्या P. M. गोप्या D.
इन्द्रेणानुगृह्यमाणा इत्यर्थः Sk.
१५. पयं P.
१६. V. Mādhava ignores तत् । नः etc.
Ms. D. puts the figure ॥१०१॥ here to indicate the end of one hundred and first hymn. No such number is given in P. and M.
१७. स्तुतिम् Sy.
स्तुतिलक्षणम् । स्तुतिमित्यर्थः Sk.
१८. प्रकर्षेण सम्पादयामि Sy.
प्रापयामि । उच्चारयामीत्यर्थः Sk.
१९. महतीमत्यन्तोत्कृष्टाम् Sy. महतीम् Sk.
२०. मम स्तोतुः Sy. आत्मन एवायं परोक्षरूपेण निर्देशः । अस्य कुत्साख्यस्यर्षेः । अस्य वा यजमानस्य Sk.

तव[१] बुद्धिः[२]। यस्मात्। आगता[३]। तमिन्द्रम्। युद्धापवर्गे[४]। उपक्रमे[५]। च। शत्रूणां सहनशीलम्[६]।
इन्द्रम्। देवाः[७]। बलं[८] दृष्ट्वा। अन्वमदन्[९]। मरुतः।

**अस्य श्रवो नद्यः सप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः ।**
***अस्मे सूर्याचन्द्रमसाभिचक्षे श्रद्धे कमिन्द्र चरतो वितर्तुरम् ॥२॥**

अस्य श्रवः। अस्य। कीर्तिम्। सप्त। नद्यः[१०]। धारयन्ति[११]। द्यावाभूम्योः[१२]। अन्तरिक्षं[१३] च।
दर्शनीयम्। रूपं[१४] धारयन्ति। अस्माकम्। सूर्याचन्द्रमसौ। इन्द्र! प्रेरितौ[१५]। अभिदर्शनाय[१६]। श्रद्धा-[१७]

---

१. द्वितीयार्थे षष्ठी। त्वाम् Sk.
२. ०द्धि D.
स्तुतिलक्षणा वाक् Sk.
३. अक्ता संश्लिष्टासीत्। तस्मात्तव प्रियां स्तुतिं करोमीत्यर्थः Sy.
यस्मात्पूर्वमप्यहमयं यजमानस्त्वां स्तुतवानित्यर्थः Sk.
४. उत्सवार्थमभिवृद्ध्यर्थम् Sy.
५. धनानां वृष्ट्युदकानां वोत्पत्त्यर्थञ्च Sy.
६. अभिभवितारम् Sy.
सर्वजनसाधारण इन्द्रमहादिरुत्सवः। प्रत्यात्मिकोऽभ्युदयः प्रसवः। तयोरुभयोरपि तत्प्रतिबन्धकराणां शत्रूणामभिभवितारं भवन्तमिन्द्रम् Sk.
७. कर्मसु दीव्यन्त ऋत्विजः Sy.
८. स्तुतिभिः कीर्तितेन बलेन Sy.
स्वेन बलेन Sk.
९. ०त्व० M.
अनुक्रमेण हर्षं प्रापयन् Sy.
अमदन् तृप्यन्तु। अनु। . . . अनुशब्दः कर्मप्रवचनीयः। सहार्थश्च तृतीयार्थः। . . . तेन सासहिना भवतेन्द्रेण सहेत्यर्थः Sk.
* अस्मे इति। PP.
१०. 'इमं मे गङ्गे' इत्यस्यामृचि प्राधान्येन प्रतिपादिता गङ्गाद्याः सप्तसङ्ख्याका नद्यः Sy. गङ्गाद्याः Sk.
११. वृत्रहननेनेन्द्रस्य यद् वृष्टेः प्रदातृत्वं तत्प्रभूतजलोपेता नद्यः प्रकटयन्तीत्यर्थः Sy. १२. द्यौश्च क्षामा च . . . द्यावापृथिव्यौ Sy. द्यावापृथिव्यौ Sk.
१३. पृथिवीत्यन्तरिक्षनाम। अन्तरिक्षं चास्य सूर्यात्मना वर्तमानस्येन्द्रस्य . . . प्रकाशात्मकं रूपं धारयन्ति Sy.
१४. अस्य सूर्यात्मना वर्तमानस्येन्द्रस्य . . . प्रकाशात्मकम् Sy.
शरीरवचनो वा वपुःशब्दः। दर्शनीयं च रूपं शरीरं वा। अतिमहत्त्वादस्येन्द्रस्य कीर्तिं वपुश्च गङ्गाद्याः सप्त नद्यस्त्रयश्च लोका धारयन्ति। अथवा वपुरित्युदकनाम। श्रव इत्यप्यन्ननाम। अन्नकारणत्वाच्चोदकमत्र श्रव इत्युच्यते। अस्य स्वभूतमन्नकारणं वृष्टिलक्षणमुदकं दर्शनीयं सप्त नद्यस्त्रयोऽपि लोका धारयन्तीत्यर्थः Sk.
१५. ०ता P.
१६. दर्श० P. द्रष्टव्यानां पदार्थानामाभिमुख्येन प्रकाशनार्थम् Sy. प्रकाशाय Sk.
१७. प्रधाना० M.
श्रद्धार्थम्। चक्षुषा दृष्टे हि वस्तुनीदं सत्यमिति श्रद्धोत्पद्यते Sy.
श्रद्धतेरुत्साहकर्मण इदं रूपम्। अहोरात्रप्रविभागायत्तसम्यगाहारपरिणामनिमित्ताय चोत्साहाय च Sk.

नाय सत्यत्वं श्रद्धातुम्। [1] शीघ्रम्। [2] चरतः। [3] कमिति पूरणमिति।

तं स्मा रथं मघवन्प्राव* सातये जैत्रं यं ते अनुमदाम संगमे।
आजा नं इन्द्र मनसा पुरुष्टुत त्वायद्भ्यो मघवञ्छर्म यच्छ नः ॥३॥

[4] तं स्मा रथम्। [5] तम्। [6] स्म। रथम्। मघवन्। [7] प्रतिगच्छ [8] धनम्। [9] दातुम्। [10] जैत्रम्। यम्। [11] त्वदीयम्। [12] वयं [13] स्तुमः। [14] सङ्गमे। [15] सङ्ग्रामे। [16] अस्मभ्यम्। बहुस्तुत! [17] त्वत्कामेभ्यः। [18] सुखम्। प्रयच्छ। [19] पुनर्नः [20] पूरणम्।

वयं जयेम त्वया युजा वृतमस्माकमंशमुद+वा भरेभरे।
अस्मभ्यमिन्द्र वरिवः सुगं कृधि प्र शत्रूणां मघवन्वृष्ण्या रुज ॥४॥

वयं जयेम। वयम्। [21] जयेम। त्वया। सहायेन। [22] अभिकाङ्क्षितं धनम्। अस्माकम्। [23] अंशं

१. वितर्तुरं परस्परव्यतिहारेण तरणं पुनः पुनर्गमनं यथा भवति तथा Sy. वितर्तुरम्। त्वरतेस्तरतेर्वा यङ्लुगन्तस्येदं रूपम्। विविधं त्वरितं तीर्णं वा। अत्यन्तशीघ्रमत्यन्तद्रुतं चेत्यर्थः। सूर्याचन्द्रमसावस्मान् दर्शनोत्साहसुखार्थमहोरात्रप्रविभागं कर्तुं त्वत्प्रसादेनोदयास्तमयादिरूपेण गच्छत इत्यर्थः Sk.
२. वर्तेते। त्वमेव तद्रूपः सन् वर्तस इत्यर्थः Sy.
३. कं सुखाय च Sk.
* प्र। अव। PP.
४. त P.
५. त P. तमेव Sy.
६. स्मेति पदपूरणः Sk.
७. प्रेरय, वर्तय Sy. अस्मान् प्रति गमय Sk.
८. धनान् M.
९. अस्माकं धनलाभाय Sy. सातये सम्भजनायास्माकम् Sk.
१०. जयशीलम् Sy; Sk.
११. त्वदियं P.
१२. वय P.
१३. वयमनुक्रमेण स्तुमः Sy. अभिष्टवामेत्याशास्महे Sk.
१४. शत्रुभिः सह Sy. प्राप्तौ सत्याम्। प्राप्तं सन्तमित्यर्थः Sk.
१५. सङ्ग्रामस्थानीये वा यज्ञे Sk.
१६. भ्यो P. अस्माकं स्वभूते Sk.
१७. त्वात्का D. त्वां कामयमानेभ्यः Sy.
१८. गृहं वा Sk.
१९. नोऽस्मभ्यम् Sk.
२०. V. M. ignores इन्द्र। मनसा। and मघवन्।
\+ उत्। अव। PP.
२१. वयम्। जयेम। omitted by M.
२२. आवृण्वन्तं शत्रुम् Sy. वृतम्। वर्ततेऽसाविति वृतं सेनोच्यते गमनस्वभावकत्वात्। वृतं शत्रुसेनामित्यर्थः Sk.
२३. शं P. सङ्ग्रामकारिसमुदायैकदेशमस्मदीयमित्यर्थः Sk.

त्वम्[1]। उद्गमय। सङ्ग्रामे सङ्ग्रामे[2]। अस्मभ्यम्[3]। इन्द्र! धनम्। शोभनगमनम्[4]। कुरु[5]। प्ररुज[6]। शत्रूणाम्[7]। वीर्याणि। मघवन्!

**नाना हि त्वा हवमाना जना इमे धनानां धर्तरवसा विपन्यवः।**
**अस्माकं स्मा रथमा तिष्ठ सातये जैत्रं हीन्द्र निभृतं मनस्तव ॥५॥**

नाना हि त्वा। तत्र[8] तत्र[8]। हि[9]। त्वाम्। आह्वयमानाः[10]। इमे। जनाः[11]। धनानाम्[12]। धर्तः! इन्द्र! रक्षणार्थम्[13]। मेधाविनस्तत्र[14] त्वम्। अस्माकम्। भजनाय[15]। रथम्। आतिष्ठ[16]। जयशीलम्। हि[17] युयुत्सनः। तव। मनः। अविचालि[18] चेति[19]।

**गोजिता* बाहू अमितक्रतुः सिमः कर्मन्कर्मञ्छतमूतिः खजंकरः।**
**अकल्प इन्द्रः प्रतिमानमोजसाथा जना वि ह्वयन्ते सिपासवः+ ॥६॥**

गोजिता[20] बाहू[21]। पशूनां[22] जेतारौ। बाहू भवतः। अमितप्रज्ञश्च[23] भवसि।

---

१. शत्रुकृतपीडापरिहारेणोत्कृष्टं रक्ष Sy. उदित्येतत् समित्येतस्य स्थाने। अवती रक्षणार्थः। संरक्ष Sk.
२. Omitted by D.
३. षष्ठयर्थ एषा चतुर्थी। अस्माकम् Sk.
४. सुगमं सुप्रापम् Sy. सुगमित्यपठितमपि सुखनामेह द्रष्टव्यम्। . . . सुखं च Sk.
५. देहीत्यर्थः। अथवा सुखमभिगम्यते प्राप्यत इति सुगं सुलभमुच्यते। धनस्य चेदं विशेषणम्। धनं सुगं स्वधिगमं सुलभं कुरु। यथा वयं सुखं लभेमहि तथा कुर्वित्यर्थः Sk.
६. प्रभङ्धि? (ङ्ग्धि) बाधस्वेत्यर्थः Sy. प्रकर्षेण भङ्ग्धः Sk.
७. अस्मदुपद्रवकारिणाम् Sy.
८. विभिन्नाः खलु Sy. नाना पृथक् Sk.
९. हिशब्दः पदपूरणः Sk.
१०. आह्वमाह्वयमानाः M. अत्र शानच्छ्रुतेः साकाङ्क्षत्वात् प्रतीक्षन्ते तिष्ठन्ति वा Sk.
११. जनानां M. इमे मनुष्या अस्मदीयाः पुत्राः पौत्राश्च ऋत्विजो वा Sk.
१२. गोहिरण्यादिरूपाणाम् Sy. स्तोतृभ्यो धनानां दातरित्यर्थः Sk.
१३. पालनेन तर्पणेन वा निमित्तेन। पालनार्थं तर्पणार्थं वेत्यर्थः Sk.
१४. विपन्यवः। स्तोतृनामैतत्। स्तोतारःSy.
१५. धनदानाय Sy. १६. आरोह Sy.
१७. हिशब्दः पूरणश्चार्थे वा Sk.
१८. शत्रूञ्जित्वाऽस्मभ्यं धनं दातुं समर्थमित्यर्थः Sy. शत्रुजयनशीलं चाश्रितोपकारे च स्थिरं मनस्तवेत्यर्थः Sk.
१९. V. Mādhava ignores स्म
* बाहू इति। PP.
\+ सिसासवः। PP.
२०. शोजि० P.
२१. गोजिता बाहू is missing in M.
२२. . . .गा जयत इति गोजितौ. . .जयेन गवां लम्भयितारौ Sy. अथा जना विह्वयन्ते इत्येतच्छब्दसमानार्थाथशब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यस्माद् गोजिता असुरादीनां स्वभूतानां गवां जेतारौ Sk.
२३. बाहु . . . मित० M. अपरिच्छिन्नज्ञानः Sy. अपरिमितकर्मो ? (र्मा) वा, अपरिमितप्रज्ञो वा Sk.

बन्धकः[1]। कर्मणि कर्मणि[2]। बहुरक्षः[3]। युद्धस्य कर्ता[4]। अनुपमः[5]। बलेन। सर्वेषां प्रतिद्वन्द्वीभ वति[6]। अथैनम्[7]। जनाः। विह्वयन्ते[8]। सम्भक्तुमिच्छन्तः[9]।[10]

उत्ते॑ श॒तान्म॑घव॒न्नुच्च॒ भूय॑स॒* उत्स॒हस्रा॑द्रिरिचे कृ॒ष्टिषु॒ श्रवः॑।
अ॒मा॒त्रं त्वा॑ धि॒षणा॑ तित्विषे म॒ह्य॑धा॑+ वृ॒त्राणि॑ जिघ्नसे पुरंदर ॥७॥

उत्ते शतात्[11]। सङ्ग्रामे मनुष्यशतस्य[12] या कीर्तिर्भवति ततोऽपि[13]। अतिरिक्तम्[13]। तव। यशः[14]। उत्। च। द्विशतात् त्रिशताच्च। उत्। सहस्रान्मनुष्यमध्ये[15]। त्वाम्। अपरिमाणबलम्[16]। महती। स्तुतिः। दीपयति[17]। अथ[18] त्वम्। शत्रून्[19]। हंसि[20]। पुराणां[21] दारयितः!

---

१. श्रेष्ठः। तथा च शाट्यायनकम्—'सिम इति वै श्रेष्ठमाचक्षते' इति। यद्वा सिमः शत्रूणां बन्धकः Sy.
असुराणाम् Sk. २. यज्ञाख्ये Sk.
३. बहुप्रकारपालनकारीत्यर्थः Sk.
४. खजति मथ्नाति पुरुषानिति खजः सङ्ग्रामस्तस्य कर्ता ... खज मन्थे Sy.
५. कल्पेनान्येन रहितः। स्वतन्त्र इत्यर्थः Sy. कल्पनं कल्पः। तद्रहितोऽकल्पः। अतिशयवद्देवतामाहात्म्यान्नानारूपप्रतिपत्तेः। नियतेनैकरूपेणैवंरूपो नामेन्द्र इति परिकल्पयितुमशक्य इत्यर्थः। अथवा पितृकल्पो मातृकल्प इत्यादिषु सादृश्यार्थत्वदर्शनात्कल्पशब्द इह सदृशपर्यायो द्रष्टव्यः। सदृशरहितोऽकल्पः। नेन्द्रस्य कश्चित् सदृशोऽस्तीत्यर्थः Sk.
६. ०द्वन्दि P. D. M.
ओजसा सर्वेषां प्राणिनां यदोजो बलमस्ति तेन सर्वेण प्रतिमानं प्रतिनिधित्वेन मीयमानः Sy. उपमाभूतश्च सर्वस्य Sk. ७. अतः कारणात् Sy.
८. विविधमाह्वयन्ति Sy.
९. संभर्तुमि० M. धनं लब्धुकामाः Sy. तेन प्रदीयमानान् सर्वानभिप्रेतानर्थान् Sk.
१०. V. Mādhava ignores इन्द्रः

* भूय॑सः। PP. + म॒ही। अर्ध॑। PP.
११. ०तान् P.
१२. स्तोतृषु ... त्वया दीयमानं श्रवो यदन्नमस्ति तच्छतात् शतसङ्ख्याकाद्धनाद् ... उद्रिक्तमधिकं भवति। अपिच भूयसः शतसङ्ख्याकादपि बहुतराद्धनात् ... अधिकं भवति Sy.
१३. ०तो ०यति० P. रिरिच इत्याख्यातं प्रत्युच्छब्दम? (०ब्दोऽनुष०) नुषक्तव्यम्? (०व्यः)। उद्रिच्यते अतिरिच्यत इत्यर्थः Sk.
१४. श्रवः कीर्तिरन्नं धनं वा। अथवा श्रवःशब्दोऽत्र सामर्थ्याद् बलवचनः। शवश्शब्दस्य वा बलनाम्नो रेफ उपजनः। बलमित्यर्थः Sk.
१५. किं बहुना। ... सहस्रसङ्ख्याकादपि उद्रिरिचे। त्वया दत्तं तदन्नमक्षयमित्यर्थः Sy.
१६. मात्रयेयत्तया रहितं परिगणि? (णयि)तुमशक्यैः सर्वैर्गुणैरधिकं त्वाम् Sy.
अपरिमाणमत्यन्तमहान्तम् Sk.
१७. त्वत्सम्बन्धिनो गुणान् प्रकाशयति Sy. वृत्रहननायोत्तेजयतीत्यर्थः Sk.
१८. अतः P. १९. आवरकान् Sy.
२०. हिंसि P. २१. शत्रूणां पुराम् Sy.

त्रिविष्टिधातु प्रतिमानमोजसस्तिस्रो भूमीर्नृपते त्रीणि रोचना ।
अतीदं विश्वं भुवनं ववक्षिथाशत्रुरिन्द्र जनुषा सनादसि ॥८॥

त्रिविष्टिधातु[1]। त्रिभिः शुल्वैर्निर्मिता[2] रज्जुर्दृढतमा[3][4]ऽच्छेद्या भवति तादृश इन्द्रः। ओजसश्च[5]। प्रतिद्वन्द्वी[5][6] भवति तादृशस्त्वम्। नृणां स्वामिन्[7]! तिस्रः। भूमीः[8]। त्रीणि च। तेजांसि[9]। अतिवहसि[10] किं बहुना। सर्वम्। भुवनमतिवहसि[11]। जन्मनैव[12]। चिरात् प्रभृति। शत्रुर्वर्जितः[13]। भवसीति[14]।

त्वां देवेषु प्रथमं हवामहे त्वं बभूथ पृतनासु सासहिः ।
*सेमं नः कारुमुपमन्युमुद्भिदमिन्द्रः कृणोतु प्रसवे रथं पुरः ॥९॥

त्वां देवेषु। त्वाम्। देवानां मध्ये। प्रथमम्[15]। हवामहे[16]। त्वम्[17]। अभवः[18]। सङ्ग्रामेषु।

---

१. ०ष्ट० M.
२. शुबै० P. गुणै० D. शुल्भै० M.
धातुशब्दो रज्जुभागवचनः। . . . यथा त्रिविष्टिस्त्रिगुणिता रज्जुर्द्रढीयसी एवमिन्द्रोऽपि दृढतर इत्यर्थः . . . त्रिधा त्रिप्रकारेण विष्टया प्रवेशनेन विधीयते क्रियत इति त्रिविष्टिधातुस्त्रिगुणिता रज्जुः Sy.
धीयन्ते प्राणिनां देहेष्विति धातवः शरीरस्थितिहेतवोऽन्नरसाः। तदेव ? (ते देव०) पितृमनुष्योपभोग्यास्त्रयोऽपि विष्टा व्याप्ता येन तत्त्रिविष्टिधातु। यदायत्तास्त्रयोऽपि शरीरस्थितिहेतवोऽन्नरसा इत्यर्थः। अथवा त्रयो धातवः शीतोष्णवर्षाणि त्रयो वा लोकाः। तेषु सन्धीयते व्याप्ता येन तत्त्रिविष्टिधातुः ? (तु)। . . . किं पुनस्तत् सामर्थ्यलक्षणं बलम् Sk.
३. ०ज्जू P.
४. दृढमातमा० P.
५. सर्वेषांप्राणिनां बलस्य प्रतिनिधिरसि Sy.
६. ०न्द्वि P. D. M.
उपमानभूतं सर्वस्य Sk.
७. स्मामिन् D.
८. ०मी P.
दिवि आदित्याख्यम्, अन्तरिक्षे वैद्युतरूपमग्निं पृथिव्यामाहवनीयादिरूपेण वर्तमानं पार्थिवमग्निम्। एवं त्रींल्लोकांस्त्रीणि तेजांसि च Sy.
भूमिशब्देनात्र साहचर्यात् त्रयो लोका उच्यन्ते। त्रीन् लोकानित्यर्थः Sk.
९ आग्नेयं वैद्युतं सौर्यं च Sk.
१०. अतिशयेन वोढुमिच्छसि Sy.
सुष्ठु वहसि धारयसीत्यर्थः Sk.
११. सर्वं भूतजातम्।...सर्वस्य जगतः पालनेन त्वमेव सर्वेषां निर्वाहको भवसीत्यर्थः Sy.
१२. नैव P. D. M.
१३. शत्रवजितः P.
शातयितृरहितः। . . . जन्मन एव प्रभृति न तव कश्चिद्विनाशने समर्थ इत्यर्थः Sk.
१४. V. Mādhava ignores इदम्।
* सः। इमम्। PP.
१५. श्रेष्ठम् Sy.
१६. यागार्थम् Sy.
१७. त्वाम् P.
१८. भवसि Sk.

सोढा[1]। सः। इन्द्रः। अस्माकम्[2]। कर्तारम्[3]। उपमन्तारम्[4]। उद्भेदकमात्मीयम्[5]। रथम्[6]। युद्धारम्भे[7]। अग्रतः[8]। कृणोतु[9][10]।

त्वं जि॑गेथ॒ न धना॑ रुरोधि॒थार्भे॒ष्वा॒जा म॑घवन्म॒हत्सु॑ च ।
त्वामु॒ग्रमव॑से॒ सं शि॑शीम॒स्यथा॑ न इन्द्र॒ हव॑नेषु चोदय ॥१०॥

त्वं जिगेथ[11]। त्वम्। जयसि[12]। नच। धनानि[13]। रुणत्सि[14]। क्षुद्रेषु। मघवन्! महत्सु[15]। च पुरुषेषु[16]। यः सङ्ग्रामोऽस्माकं भवति तस्मिन्। त्वाम्। उद्गूर्णम्[17]। रक्षणाय स्तोत्रैः[18]। तीक्ष्णीकुर्मः[19]। अथ। अस्मान्। इन्द्र! तस्मिन् सङ्ग्रामे स्वयमेव। चोदय[20]। हवनेषु[21] सत्स्विति।

वि॒श्वाहेन्द्रो॑ अधिव॒क्ता नो॑ अ॒स्त्वप॑रिह्वृताः सनुयाम॒ वाज॑म् ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒: सिन्धु॑: पृथि॒वी उ॒त द्यौः ॥११॥[22]

---

१. शत्रूणामभिभवितासि Sy. अभिभविता शत्रूणाम् Sk.

२. न इत्येकवचनस्य स्थाने बहुवचनम्। इमं मामिति सर्वत्र चात्र पुर इत्येतेनाव्ययेनाप्रत्ययेन योगात् षष्ठ्यर्थे द्वितीया। अस्य मम कुत्सनाम्न ऋत्विजो वा Sk.

३. स्तुतीनाम् Sy. स्तोतॄनामैतत्। स्तोतुः Sk. ४. सर्वज्ञम् Sy. उपमन्युशब्दोऽत्र मन्यतेः कान्तिकर्मणो द्रष्टव्यो न क्रोधनाम। उपगतकामस्य। प्रार्थनावत इत्यर्थः Sk.

५. शत्रूणामुद्भेत्तारम् Sy. उद्भेत्तुः। अपूर्वाणां स्तुतीनां जनयितुरित्यर्थः Sk.

६. उद्भिदं मार्गेवस्थितानां वृक्षादीनामुद्भेत्तारमतिशयेन भङ्क्तारम् Sy.

७. प्रसवे। प्रकृष्टः सवो यज्ञः प्रसवः। तत्र। प्रकृष्टेऽस्मिन् यज्ञ इत्यर्थः Sk.

८. अन्येभ्यो रथेभ्यः पुरतो वर्तमानम्।... यद्वा कारुमित्यादीनि रथविशेषणानि। कारुं युद्धस्य कर्तारम्। उपमन्युम् उपगतेन प्राप्तेन मन्युना क्रोधेन युक्तम् Sy.

९. एवं गुणविशिष्टं पुत्रं करोतु Sy.

१०. V. Mādhava ignores इमम्

११. जिगेऽथ M.

१२. शत्रून् Sy.

१३. शत्रुभ्योऽपहृतानि Sy.

१४. स्तोतृभ्यः प्रयच्छसीत्यर्थः Sy. स्तोतृभ्यः... सर्वाणि ददासीत्यर्थः Sk.

१५. मघवत्सु M.

१६. आजिषु सङ्ग्रामेषु Sy. सङ्ग्रामेषु Sk.

१७. अधिकबलम् Sy. अप्रसह्यम् Sk.

१८. तर्पणाय Sk.

१९. संस्कुर्म इत्यर्थः Sk.

२०. सङ्ग्रामेषु प्रेरय। जयं प्रापयेत्यर्थः Sy. जुह्वतामस्माकं देवतात्वं प्रतिपद्यस्वेत्यर्थः Sk.

२१. युद्धार्थमाह्वानेषु Sy.

२२. This Stanza is the same as I. 100. 19. V. M. does not repeat the commentary on this stanza in this place.

I.103.

तत्त इन्द्रियं परमं पराचैरधारयन्त कवयः* पुरेदम् ।
क्षमेदमन्यद्दिव्य+न्यदस्य समी× पृच्यते समनेव केतुः ॥१॥

**तत्त इन्द्रियम्** । तत् । तव । बलम्[1] । उत्तमम्[2] । अपराङ्मुखम्[3] । अधारयन्त[4] । प्राज्ञाः[5] । पुरा । इदं यत्[6] । इदमिदानीं दृश्यते तच्च बलम् । क्षमायां भवति । किञ्चित्[7] । दिवि च । अन्यत्[8] । इन्द्रस्य[9] । तच्चेदमुभयम्[10] । सङ्ग्रामे[11] । ध्वजो ध्वजेनैव । सम्पृक्तं भवत्युभयं समं बुद्धौ प्रतिभातीति[12] ।

स धारयत्पृथिवीं पप्रथच्च वज्रेण हत्वा निरपः ससर्ज ।
अहन्नहिमभिनद्रौहिणं व्यहन्व्यंसं मघवा शचीभिः ॥२॥

**स धारयत्** । सः । धारयति । पृथिवीम्[13] । विस्तीर्णां चक्रे[14] । वज्रेण । हत्वा । मेघादपः[15] ।

---

* पुरा । इदम् । PP.

\+ दिवि । अन्यत् । PP.

× सम् । ईमिति । PP.

१. प्रसिद्धम् Sy. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यदस्माकं स्तोत्रमभिप्रेतं तत्ते तव स्वभूतम् Sk.

२. सेनालक्षणम् । ... अथवा इन्द्रियशब्दोऽत्र वीर्यवचनः सामर्थ्याच्चान्तर्णीतमत्वर्थः । वीर्यवत् सेनालक्षणं बलम् Sk.

३. The correct reading would be पराङ्मुखम् ।
पराचीनं पराङ्मुखम् । यद्वा । पराचैः । पराञ्चनैः परागमनैर्युक्तम् Sy.
अञ्चतिर्गत्यर्थः । परागमनैः प्राप्तिभिः । यत्र यत्र व्यवस्थितस्तत्र तत्रेत्यर्थः Sk.

४. स्तुत्यर्थं हविःप्रदानार्थं च धारितवन्तः । अथवा इन्द्रियं वस्विति धननामसु पाठाद् इन्द्रियशब्दोऽत्र धनवचनः । ... यद् ... आत्मना धारितवन्तः । लब्धवन्त इत्यर्थः Sk.

५. क्रान्तदर्शिनः स्तोतारः Sy.

६. इदं सूक्तेऽस्मिन् मनसि वा यत् सन्निहितम् Sk.

७. अग्न्याख्यं ज्योतिः Sy.

८. पृथिव्यामिदमेकं सेनालक्षणं बलं धनं वा Sk. ९. सूर्याख्यम् Sy. १०. ०भय M.

११. समनशब्दः सङ्ग्रामवाची । यथा ... सङ्ग्रामे युद्ध्यमानयोरुभयोः केतुर्ध्वजो ध्वजान्तरेण संयुज्यते तद्वत् Sy.
सम्यङ् मन्यते जानात्यर्थमिति समना अन्तःकरणाख्या बुद्धिरिहोच्यते । केतुरिति प्रज्ञानाम । बुद्ध्येव ज्ञानम् । यथा मनसा तत्रैवान्तर्लयेन सर्वात्मना वा ज्ञानं सम्पृच्यत एवं पृथिव्यां दिवि चेन्द्रसेना परस्परेण स्तोतृभ्यो दीयमानं धनं स्तोतृभिः सह सम्पृच्यत इत्यर्थः Sk.

१२. परस्परं संयुज्यते । रात्रावादित्योऽग्निना संयुक्तो भवति । ... अहनि त्वग्निः सूर्येण सङ्गच्छते Sy.
केन सह ? यदि बलं ततः सामर्थ्यात् परस्परेण, अथ धनं ततः स्तोतृभिः Sk.

१३. असुरैः पीडितां भूमिम् । ... पीडाराहित्येन स्थितामकरोदित्यर्थः Sy.

१४. ०र्णं चक्रेण P. १५. अघः P.

निःससर्ज।[१] अहन्।[२] अहिम्।[३] अभिनत्। च। रौहिणमसुरम्। व्यहन्। व्यंसासुरम्।[४] मघवा।
प्रज्ञाभिः।[५]

**स जातूभर्मा श्रद्दधान ओजः पुरो विभिन्दन्नचरद्वि दासीः।**
**विद्वान्वज्रिन्दस्यवे हेतिमस्यार्यं सहो वर्धया द्युम्नमिन्द्र ॥३॥**

स जातूभर्मा।[६] सः। सञ्जातभरणः।[७] श्रद्दधानः।[८] बलम्।[९] पुराणि।[१०] विभिन्दन्। विचरति।[११]
आसुराणि।[१२] जानंस्त्वम्।[१३] इन्द्र ! कुत्सस्य। शत्रवे।[१४] वज्रं सृज। आनृशंस्यम्।[१५] बलम्। यशश्च।[१६]
वर्धय।[१७]

**तदूचुषे मानुषेमा युगानि कीर्तेन्यं मघवा नाम बिभ्रत्।**
**उपप्रयन्दस्युहत्याय वज्री यद्ध सूनुः श्रवसे नाम दधे ॥४॥**

तदूचुषे। तत्।[१८] वदने।[१९] नाम।[२०] दिवसाः।[२१] एते शोभना भवन्ति। कीर्तनीयम्।[२२] मघवा।

---

१. निष्कृष्य विसृजति क्षिपति Sk.
२. वज्रेण वर्षणार्थमताडयत् Sy.
३. अहं नहिम् M. अन्तरिक्षे वर्तमानं मेघम् Sy. अहिनामानमसुरम् Sk.
४. विगतभुजं वृत्रासुरम् Sy.
५. आत्मीयैर्युद्धकर्मभिः Sy. वधाद्यैर्वा कर्मभिः Sk. ६. जात्नू० P.
७. जातू इत्यशनिमाचक्षते। भर्म आयुधम्। अशनिरूपमायुधं यस्य स तथोक्तः। यद्वा जातानां प्रजानां भर्ता Sy.
८. आदरातिशयेन कामयमानः Sy.
९. बलेन निष्पाद्यं कार्यम् Sy. स इन्द्रो जातूभर्मा वृष्टिद्वारेण सर्वजन्तूनां ?(भर्ता) श्रद्दधानः। ओजः। अवितथमिति सम्भावना श्रद्धा। आत्मनो बलमवितथं सम्भावयन्। न कञ्चिदप्यसुरं प्रति मम बलं न (?) प्रतिहन्यत इत्येवं सम्भावयन्नित्यर्थः Sk.
१०. बह्वग्लनं पश्य तकन् P. असुराणां स्वभूताः पुरः Sk. ११. ०न्ति P.
१२. दस्युसम्बन्धीनि Sy. दस्यतिः क्षयार्थः। क्षपणार्हाः। अत्यन्तं वृद्धा इत्यर्थः Sk.
१३. किम् ? सामर्थ्याद् दस्योर्दस्युतामार्याणां वा भक्तताम् Sk.
१४. दस्युशब्दोऽत्रानार्यवचनः। तादर्थ्य एषा चतुर्थी। अनार्यस्यार्थाय। अनार्यं हन्तुमित्यर्थः Sk. १५. आर्या विद्वांसः स्तोतारः। तदीयं बलम् Sy. आर्यम्। षष्ठ्यर्थे द्वितीयैषा। आर्यस्य च Sk.
१६. यशो वान्नं वा धननाम वा द्युम्नशब्दः। यशोऽन्नधनानां चान्यतमं हे इन्द्र Sk.
१७. V. Mādhava ignores वज्रिन् or इन्द्र
१८. इन्द्रस्य बलम् Sy. तदिति कर्मण ऊचुषे इति सम्प्रदानस्य च साकाङ्क्षत्वाद्योग्यक्रियापदाध्याहारः। तदाचष्ट इव Sk. १९. स्तुवते Sy. स्तुतीरुक्तवते। स्तोत्र इत्यर्थः Sk.
२०. शत्रूणां नामकम् Sy. See footnotes nos. ११ and ३ on pages 340 and 388 respectively.
२१. मानुषा मनुष्याणां सम्बन्धीनि...इमानि दृश्यमानानि युगानि, अहोरात्रसङ्घनिष्पाद्यानि कृतत्रेतादीनि सूर्यात्मना निष्पादयतीति शेषः Sy.
मानुषेमा युगानि। युगशब्दः कालवचनः। सर्वत्र चात्र सप्तम्यर्थे प्रथमा। मनुष्याणां सम्बन्धिषु स्तोत्रेषु पौर्णमास्यामावास्यादिषु यागकालेषु Sk.
२२. ०य P.

नामेन्द्राख्यम्[1] । बिभ्रत् । उपगच्छन्[2] । दस्युहननाय[3] । वज्री । यत् । नाम[4] । अन्नस्य[5] कीर्त्तेर्वा । प्रेरकः[6] । धारयति[7] तदूचुप इति[8] ।

**तदस्येदं पश्यता भूरि पुष्टं श्रदिन्द्रस्य धत्तन वीर्याय ।**
**स गा अविन्दत्सो अविन्ददश्वान्त्स ओषधीः सो अपः स वनानि ॥५॥**

तदस्येदम् । तत्[9] । इन्द्रस्य[10] । इन्द्रियम् वहु । अग्लानम्[11] । पश्यत[12] । श्रच्चास्मै[13] । वीर्याय[14] । धत्तन[13] । सत्यमसौ[15] वलवानिति[16] श्रद्दधानस्य[17] कार्याणि दर्शयति[18] । स गा इति[19] । वनानि[20] धनानीति[21] ।

---

१. नेम इन्द्रा० P. नाँ ऐन्द्रा० D. नामैव वा प्रकृतत्वात् कृत्स्नं वा जगत् । ...अनन्यकर्तृकं हि दस्युहननम् । तत्कुर्वन्नयमहमिन्द्र इत्येवमात्मीयं नाम कथयतीवेत्यर्थः Sk.

२. गृहसमीपान्निर्गच्छन् Sy.

३. दस्यूनां वृत्रादीनां हननाय Sy.

४. शत्रूणां नामकम् Sy. See footnotes nos. ११ and ३ on pages 340 and 388 respectively.

५. श्रवसे जयलक्षणाय यशसे Sy. कीर्त्यर्थम् Sk.　६. शत्रूणां प्रेरयितेन्द्रः Sy. सूनुः पुत्रः स्वस्याः मातुरदित्याः Sk.

७. कतमत् पुनस्तत् ? इन्द्र इति । तद्धि अस्य सर्वस्तोतृभिः कीर्त्यर्थमुपात्तम् । अथवा यद्ध सूनुरिति यच्छब्दो यदाशब्दस्यार्थे । श्रव इत्यप्यन्ननाम । नामशब्दोऽप्युदकनाम । दध इत्यपि धारयतिर्दानार्थः । अनन्यकर्तृकं दस्युहननं कुर्वन्नात्मीयं नामाचष्ट इव । यदा च सस्यलक्षणायान्नाय वृष्टिलक्षणमुदकं ददाति तदाचष्ट इवेत्यर्थः । अथवा यद्ध सूनुरिति यच्छब्द इन्द्रस्य प्रतिनिर्देशकः । व्यत्ययेन तु नपुंसकता । य इन्द्रः श्रवसे नाम दधे स आचष्ट इति Sk.

८. V. Mādhava ignores मानुषा and ह

९. तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । यत् सेनालक्षणं बलं सर्वासुरान् हन्ति Sk.

१०. स्वभूतं बलम् Sk.

११. प्रवृद्धम् Sy. सुसम्पन्नम् । अथवेदं भूरीत्येतत्सम्बद्ध एव यच्छब्दोऽध्याहर्तव्यः । अस्येति तु षष्ठीनिर्देशात् प्रसादेनेति वाक्यशेषः । यदिदं भूरि भूतजातं तदस्येन्द्रस्य पुष्टं पश्यतेति Sk.

१२. ०त क P. D. M. हे ऋत्विग्यजमानलक्षणा जनाः . . . भूरि विस्तीर्णम् . . . आलोकयत Sy. पश्यत हे ऋषयो ब्राह्मणा वा Sk.

१३. बहुमानं कुरुत Sy. १४. इन्द्रस्य श्रद्धत्तन वीर्याय । द्वितीयार्थ एषा चतुर्थी । श्रद्धत्त एवेन्द्रस्य वीर्यम् । वीर्यवानिन्द्र इत्येतदवितथं प्रतिपद्यध्वमित्यर्थः Sk.

१५. स्यत्य० P. १६. ०व (वा) नि० M.

१७. ०ननस्य M. न्यस्य P. १८. प्रद० M.

१९. स इन्द्रः पणिभिरपहृता गा येन वीर्येण... अलभत । तथा तैरपहृतान् अश्वान्... अविन्दत् । अपिच . . . ओषध्युपलक्षितां सर्वां भूमिं येन वीर्येणालभत । तथा वृत्रेण निरुद्धा अपो वृष्ट्युदकानि Sy. असुरादीनां स्वभूता गा अविन्दत्, लब्धवान् Sk.

२०. वननीयानि सम्भजनीयानि धनानि Sy.

२१. V. Mādhava ignores अस्य

**भूरिकर्मणे वृषभाय वृष्णे सत्यशुष्माय सुनवाम सोमम्।**
**य आदृत्या परिपन्थीव शूरोऽयज्वनो विभजन्नेति वेदः ॥६॥**

भूरिकर्मणे। वृत्रवधादिबहुकर्मणे[1]। वृषभाय[2]। सेक्त्रे[3]। सत्यबलाय[4]। सुनवाम[5]। सोमम्। यः[6]। विदार्य[7]। मार्गनिरोधक इवापहर्ता[8]। शूरः। अयजमानस्य। धनम्[9]। विलोपयन्[10]। गच्छति[11]।

**तदिन्द्र प्रेव वीर्यं चकर्थ यत्ससन्तं वज्रेणाबोधयोऽहिम्।**
**अनु त्वा पत्नीर्हृषितं वयश्च विश्वे देवासो अमदन्ननु त्वा ॥७॥**

तदिन्द्र। तत्। इन्द्र! त्वम्। प्रकर्षेणात्मीयम्। वीर्यम्। प्रकाशितवानिव[12]। यत् त्वम्[13]। स्वपन्तम्[14]। अहिमहत्वा प्रबुद्धः सन् कामं युध्यत्विति[15]। हस्तस्थेनायुधेन[16]। बोधितवानसि[17]। त्वाम्। अन्वमदन्[18]। देवपत्न्यः[19]। छन्दांसि[20] च तदा। हृष्टम्[21]। मरुतश्च[22]।

---

१. बहुविधेन शत्रुवधादिरूपेण कर्मणा युक्ताय Sy.
२. वृषभवत् सर्वेषु देवेषु श्रेष्ठाय Sy. वृषभसदृशाय। केन सादृश्येन? भीमत्वेन Sk.
३. सेचनसमर्थाय Sy.
४. अवितथबलायेन्द्राय Sy. सर्वासुरान् प्रत्यविसंवादिबलाय। सर्वत्र च तादर्थ्ये चतुर्थी। भीमत्वादिगुणस्येन्द्रस्यार्थाय Sk.
५. होमार्थं रसरूपं करवाम Sy.
६. कः P.
७. धनविषयमादरं कृत्वा Sy. महान्तमादरं कृत्वा Sk.
८. यथा मार्गनिरोधकश्चौरो गच्छतां पुण्यपुरुषाणां धनं बलात्कारेणापहृत्य गच्छति तद्वत् Sy. यथा शूरः कश्चिच्चौरः कुतश्चिद्धनमपहृत्य स्वेभ्यः सैनिकेभ्यो विभजेद् एवम् Sk.
९. यजमानेभ्यस्तद्धनं दातुं गच्छति Sy.
१०. यष्टृभ्यो विभजन् Sk.
११. यज्ञान् प्रति गच्छतीन्द्रः Sk.
१२. कृतवानसि Sk.
१३. य P. D.
१४. मदोन्मत्तम् Sy. शौर्यमदेनावमत्य देवान् निश्चिन्तं सन्तम् Sk.
१५. The root युध् is At. The proper reading should therefore be युध्यताम्
१६. M. adds इति after आयुधेन
१७. वधार्थमुत्थापितवानसि Sk.
१८. अनुगतवन्तो वा त्वाम्। अथवा मदतिरर्चतिकर्मा। अनु इत्येष समित्येतस्य स्थाने। संस्तुतवन्तस्त्वाम्। ...अथवा अनुशब्दोऽत्र तृतीयार्थे... कर्मप्रवचनीयः। सहार्थश्चात्र तृतीयार्थः। मदतिरपि तृप्त्यर्थः। त्वया सोमपानात् प्राप्तहर्षेण सहातृप्यन्नित्यर्थः Sk.
१९. पत्नीः स्वभार्या देवपत्न्यो वा Sk.
२०. वयश्च गमनशीला मरुतोऽपि तथा विश्वे देवासोऽन्ये च सर्वे देवाः Sy.
२१. शत्रुहननेन प्राप्तहर्षम् Sk.
२२. V. M. ignores विश्वे

शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र यदावधीर्वि पुरः शम्बरस्य ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥८॥

शुष्णं पिप्रुम्[1]। यदा त्वम् । शुष्णादीनसुरान् । अवधीः । यदा वा शम्बरस्य । पुरः[2] । तदान्व-[3]
मदन्नितीन्द्रस्य वीर्याणि दर्शयति सूक्ते[4]।

I.104.

योनिष्ट[*] इन्द्र निषदे अकारि तमा नि षीद स्वानो नार्वा[×] ।
विमुच्या वयोऽवसायाश्वान्दोषा वस्तोर्वहीयसः प्रपित्वे ॥१॥

योनिष्ट इन्द्र । आसनम्[5] । तव । इन्द्र[6] ! निषदनाय[7] । कृतम् । तं योनिं गृहे । आगत्य ।
उपविश[8] । शब्दं कुर्वन्[9] । इव । अश्वो व्रजम्[10] । अश्वबन्धनानि[11] । विमुच्य[12] । अवसाय[13] च । अश्वान्[14] ।
रात्रौ[15] । अहनि च । अतिशयेन वोढॄन्[16] तव । अभिप्राप्तौ[17] ।

---

१. कृष्णं विप्रदं M.

२. नगराणि । . . . असुराणां मुख्येषु हतेष्व-न्यान्यप्यसुरपुराणि विदीर्णान्यासन्नि-त्यर्थः Sy.

३. तदा अन्वमदन्नित्येवमस्यार्धर्चस्य यदाशब्दश्रुतेः साकाङ्क्षत्वात् पूर्वस्या ऋच उत्तरेणार्धर्चेनैकवाक्यता Sk.

४. V. Mādhava ignores इन्द्र । तत् । नः etc.
Ms. D. puts the figure ॥१०३॥ here to indicate the end of one hundred and third hymn. No such number is given in P. and M.

* योनिः । ते । PP. × न । अर्वा । PP.

५. वेद्याख्यं स्थानम् Sy. उपवेशनस्थानं वेद्याख्यम् Sk. ६. Omitted by M.

७. ०दाय M. उपवेशनार्थमित्यर्थः Sk.

८. ०शं P.

९. यथाश्वः . . . हेषाशब्दं कुर्वन् स्वकीयं स्थानं शीघ्रमागच्छति तद्वत् Sy. स्वनति स्वान्यते वाऽसाविति स्वानः । . . . यथा हेषन्नश्ववारेण वा शब्दाय-मानोऽश्वः शीघ्रमागच्छेत्तद्वच्छीघ्रमाग-त्येत्यर्थः Sk. १०. प्रजम् M.

११. अश्वान् सारथिं च प्रति वाती ? (वियन्ती०)ति वयोऽश्वप्रग्रहा इहाभि-प्रेताः। . . .अश्वप्रग्रहांश्च विमुच्य । कुतः? सामर्थ्यादश्वेभ्यः Sk.

१२. विमुज्य M. रथाद् विश्लिष्य Sy. मुञ्चतिर्गत्यर्थः Sk. १३. विमुच्य Sy. अवपूर्वोऽयं स्यतिर्विमोचने । अश्वांश्च विमुच्य । कुतः । सामर्थ्याद् योक्तृ?-(क्त्रे)भ्यः । रथाद्वा Sk. स्यतिरुपसृष्टो विमोचने । तस्मादवगृह्णन्ति N. 1. 17.

१४. रथे योजितान् Sy.

१५. अश्वात्रावहि M.

१६. ०येननोढॄन् M.

१७. यागकाले प्राप्ते Sy. वेद्या आसन्ने देशे । अथवा प्रपित्वे इति कालस्य प्रति-निर्देशः । निषीदेत्येतेन चास्य सम्बन्धः । आसन्ने यागकाले निषीदेति Sk.

ओ[*] त्ये नर इन्द्रमूतये गुर्नू[+] चित्तान्त्सद्यो अध्वनो जगम्यात् ।
देवासो मन्युं दासस्य श्चम्नन्ते न आ वक्षन्त्सुविताय वर्णम् ॥२॥

ओ त्ये नरः । अमी[१] । मनुष्याः[२] । इन्द्रम् । रक्षणाय[३] । अभिगताः[४] । शीघ्रम्[५] । एव[५] । तानिन्द्रः । युद्धमार्गान्[६] । पारयतु[७] । देवासः[८] । मननम्[९] । असुरस्य[१०] । शोषयन्तु[११] । ते[१२] । अस्माकम् । आवहन्तु[१३] । अभ्युदयाय[१४] । वारकमिन्द्रम्[१५] ।

अव त्मना भरते केतवेदा अव त्मना भरते फेनमुदन् ।
क्षीरेण स्नातः कुयवस्य योषे[×] हते ते स्यातां प्रवणे शिफायाः ॥३॥

अव त्मना[१६] । स्वयमेव । कुयवः[१७] । प्रज्ञाधनः[१८] । उदकमपहरति[१९ २०] । फेनं च[२१] । उदकस्थं तत्र[२२] ।

---

* ओ इति । PP.

\+ गुः । नु । चित् । तान् । PP.

१. त्य इति तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । ये स्तोतृयोग्याः Sk.

२. यज्ञस्य नेतारो यजमानाः Sy. अस्मत्पुत्रपौत्रलक्षणा ऋत्विग्लक्षणा वा मनुष्याः Sk. ३. तर्पणाय पालनाय वा Sk.

४. आ उ इत्येतन्निपातद्वयसमुदाय आकारार्थः । आगुः आगच्छन्ति Sy. आगुः । आ इत्येष समित्येतस्य स्थाने मर्यादायां वा । गायतिरप्यर्चतिकर्मा । संस्तुवन्ति मर्यादया वा स्तुवन्तीत्यर्थः Sk.

५. नू चित् क्षिप्रम् Sy. नु इति पुराणवचनः । चिदिति पदपूरणः । पुराणानेवात्मनः स्तोतॄंस्तान् प्रति । सद्यो यस्यां वेलायामाह्नियते तस्यामेव Sk.

६. अनुष्ठानमार्गान् Sy. अध्वनः । तृतीयार्थे षष्ठी । स्वेनागमनमार्गेण Sk.

७. परायतु M. गमयतु, प्रापयतु Sy.

८. देवशब्दोऽत्र दीव्यतेः स्तुत्यर्थस्य स्तोतृवचनः । पुरस्ताच्च तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । ये स्तोतारः Sk.

९. क्रोधम् Sy.; Sk.

१०. उपक्षपयितव्यस्य शत्रोः Sk.

११. भक्षयन्तु, हिंसन्त्वित्यर्थः Sy. चमेरदनार्थस्येदं रूपम् । इन्द्रप्रसादेन भक्षयन्ति । इन्द्रप्रसादेन क्रुद्धमपि स्वशत्रुमयत्नेनैव त्रासयन्तीत्यर्थः Sk.

१२. अस्माकं स्वभूताः पुत्रपौत्रादय ऋत्विजो वा Sk. १३. सुष्ठु प्राप्तव्याय यज्ञाय Sy. सुगमनाय Sk.

१४. अनिष्टनिवारकम् Sy. वरणीयम् । . . . अथवा वर्णशब्दः पीतवचनोऽन्तर्णीतमत्वर्थश्च । पीतेन वर्णेन तद्वन्तमिन्द्रमित्यर्थः । तथा ह्यैतिहासिकाः पीतवर्णमिन्द्रं चित्रकर्मसु लेखयन्ति । अथवा देवा अत्र मरुतोऽभिप्रेता न स्तोतारः । ये देवा मरुतो मन्युं दासस्य श्चम्नन्(?) तेऽपीन्द्रप्रसादेनैवेन्द्रेण सह नोऽस्मान् प्रति आवक्षन् आवहन्तु प्रापयन्तु सुविताय वर्णं वरणीयं श्वेतेन वा वर्णेन वर्णवन्तमात्मानम् । मरुत इन्द्रेण सहागच्छन्तीत्यर्थः Sk.

१५. V. Mādhava ignores उ । सद्यः

× योषे इति । हते इति । ते इति । PP.

१६. अवत्मना D. १७. कुयवनामासुरः Sy. आत्मनैवेन्द्रः Sk. १८. ०पन P. केतं ज्ञातं, वेदः परेषां धनं येन स तादृशः Sy. स्तोतृप्रज्ञानां वेदिता । भक्तिज्ञ इत्यर्थः । अथवा वेद इति धननाम । प्रज्ञाधनः Sk. १९. मेघस्थम् Sk.

२०. अवह० D. ज्ञातं परेषां धनमपहरति Sy. अवेत्युपसर्गोऽधोभावे । भरत इति बिभर्तेर्वा धारणार्थस्य हरतेर्वा प्रापणार्थस्य रूपम् । अधो धारयति प्रापयति वा । पृथिव्यां पातयतीत्यर्थः Sk.

२१. हेनं P. फेनयुक्तमुदकं . . . स्वयमेव . . . अपहरति Sy. सफेनं कृत्स्नमुदकमित्यर्थः Sk.

२२. उदन् उदकेऽन्तर्वर्तमानः सन् Sy.

तस्य भार्ये[1]। उदकेन[2]। स्नानं कुरुतस्ते त्वत्प्रसादादिन्द्र! हते। स्याताम्[3]। शिफाख्याया नद्याः[4]। प्रवणे[5]। निम्ने सा यत्र प्रविशति समुद्रं प्रविशति तत्रेति[6]।

**युयोप नाभिरुपरस्यायोः प्र पूर्वाभिस्तिरते राष्टि शूरः।**
**अञ्जसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरन्ते ॥४॥**

युयोप[7]। पिहितमासीत्[8]। निर्गमनस्थानम्[9]। मेघस्य[10]। गमनशीलस्य[11] कुयवासुरेण। पूर्वाभिरद्भिः[12]। वृद्धो[13] भवति शिफानदीस्थाभिः कुयवः। राजते च ताभिः[14]। शूरः। तं च, अञ्जसी[15]। कुलिशी[16]। वीरपत्नीति[17] तिस्रः। उदकम्[18]। प्रेरयन्त्यस्तद्भार्यास्तैः[19]। उदकैः[20]।

---

१. कुयवनाम्नोऽसुरस्य Sk.
२. क्षरणशीलेन तेनापहृतेनोदकेन Sy.
३. लङर्थे लिङ्। ते अपि हते आस्ताम्। दारा अपि कुयवस्य हता इत्यर्थः Sk.
४. शिफख्या० P. शिवाख्या० M.
५. प्रपन्ने M. प्रवेष्टुमशक्येऽगाधप्रदेशे। ...हे इन्द्र! त्वं परेषां धनमपहृत्य अन्यैर्दुरवगाह उदकस्य मध्ये वर्तमानं कुयवं सकुटुम्बमवधीरित्यर्थः Sy. निम्ने प्रदेशे। ह्रद इत्यर्थः Sk.
६. V. M. ignores अव। भरते
७. ०योव P. ०योष M.
८. विहि० M. गूढमासीत्। यथान्यैर्न दृश्यते सोऽसुरस्तथाकरोदित्यर्थः ... युयोप। युप विमोहने Sy. युयोपेति युपिर्मोहनार्थः। पाणिभिः कीलाभिश्च हन्यमानस्य मूढा नाभिः Sk.
९. सन्नद्धमावसनस्थानम् Sy.
१०. उदकमध्ये सुप्तस्यावस्थितस्य Sy. उपरशब्दोऽत्र उपरिवर्तिवचनो न मेघनाम। शूराणामुपरिवर्तिनः। अत्यन्तशूरस्येत्यर्थः। कस्य? सामर्थ्याद्वृत्रस्य वाऽन्यस्य कस्यचिदुपरस्य Sk.
११. परेषामुपद्रवार्थमितस्ततो गच्छतः Sy. युद्धार्थमागतस्य Sk.
१२. पूरयित्रीभिरात्मनापहृताभिरद्भिः Sy. अत्रैकवाक्यताप्रसिद्धयर्थं यत्तच्छब्दावध्याहर्तव्यौ। यदा पूर्वाभिः पूर्ववृत्ताभिः। काभिः? स्त्रीलिङ्गनिर्देशाद् हृतिभिः। चिरन्तनैरेव पाणिकीलाप्रहारैरित्यर्थः Sk.
१३. सोऽसुरः प्रवर्धते Sy. तिरतिरत्र वधार्थः। भूते लट्। प्रकर्षेणातिरत्। हतवानित्यर्थः। कः? प्रकरणादिन्द्रः Sk.
१४. आत्मीयेन शौर्येण लोके प्रख्यातो भवतीत्यर्थः Sy. अत्राप्येकवाक्यताप्रसिद्धयर्थं यत्तच्छब्दावध्याहर्तव्यौ। यो राष्टि राजत ईष्टे सर्वस्य शूरश्च सः। यदा चिरन्तनैरेव पाणिकीलाप्रहारैर्वृत्रमन्यं वा कञ्चिदसुरं प्रकर्षेण हतवांस्तदास्य हन्यमानस्य मूढा नाभिरित्येवं सर्वेषामेकवाक्यता Sk.
१५. तञ्जसी M. आञ्जस्योपेता Sy.
१६. कुलं शातयन्ती Sy.
१७. Omitted by M. वीरस्य पालयित्री। एतत्संज्ञिकास्तिस्रो नद्यः Sy.
१८. पयसा तत्सम्बन्धिना सारभूतेनोदकेन Sy.
१९. प्रीणयन्त्यः ... हिन्वानाः। हिविः प्रीणनार्थः Sy बहुवचनस्थान एकवचनम्। हिनोतिरपि गत्यर्थः सामर्थ्याच्चान्तर्णीतण्यर्थः। उदकानि गमयन्तीः ? (न्त्यः)। वहन्त्य इत्यर्थः Sk.
२०. V. Mādhava ignores भरन्ते

प्रति यत्स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात् ।
अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः ॥५॥

प्रति यत् स्या[1]। प्रत्यदर्शि[2]। यस्मात्[3]। सोऽयम्। स्तुतिमार्गः[4]। गृहम्[5]। इव। अभि कश्चन[6] प्रदर्शकः[7]। तस्य। सदनम्। अवगच्छन्ती[8]। गच्छति यथा कस्यचिद् गृहमार्गमन्य[9] उपदिशन्नग्रे गच्छत्येवं कुयवस्यावासं[10] प्रज्ञापयन्ती तत्र गच्छति[11]। एवं मार्गे ज्ञाते सति मघवंस्त्वम्[12]। अस्माकम्[13]। अत्यन्तात् परिचरणाद्धेतोः[14]। अस्मान्। मा। परा दाः[15]। यथा। विनिर्गतशिश्नः कामचरणार्थमुत्सृष्टशिश्नः[18]। धनानि परराददाति स्त्रीभ्यः[19]।

१. स्यः P. D. २. ०र्शं P. अस्माभिर्दृष्टाभूत् Sy. प्रतिशब्दोऽत्र धात्वर्थानुवादी। अस्माभिर्दृष्टा। आलोचिता कृतेत्यर्थः Sk. ३. यदा Sy.

४. नयनहेतुभूता स्या सा पदवी। ... सा च पदवी ... उपक्षपयितुः कुयवस्यासुरस्य ... गृहम् ... आभिमुख्येन ... गता प्राप्ता Sy. स्तुतिरत्र नीथोच्यते। ... स्तुतिः Sk. ५. जानती स्वकीयं वत्समभिजानती गौरोको न निवासस्थानं स्वकीयं गोष्ठं यथा ऋजु प्राप्नोति। तद्वन्मार्गोऽप्यसुरगृहं प्राप्तः Sy. यथा कश्चिद् राजा स्वस्य शत्रोर्निवासस्थानमाप्तुं महता यत्नेन शीघ्रं गच्छेत् Sk. ६. कश्च P.

७. एवं सदनं सर्वस्तुतीनां स्थानमाश्रयं भवन्तं जानती Sk. ८. स्था M.

९. ०चित् (गृहपरिचरणाद्धेतोः) गृह० P.

१०. ०स्यावसं D.

११. गाद् गता प्राप्ता Sk. १२. ०वस्त्वम् M. त्वम् is omitted by P.

१३. नः। तृतीयार्थे षष्ठी। अस्माभिः Sk.

१४. पुनः पुनस्तेनासुरेण कृतादुपद्रवान्नोऽस्मान् रक्षेति शेषः Sy. चर्कृताद् अत्यर्थं कृतात्। कस्मात्? सामर्थ्यादपराधात् Sk.

१५. अस्मान् रक्षैव नोऽस्मान् ... मा परित्याक्षीः। अस्माभिर्ज्ञातेन मार्गेण गत्वाऽस्मदुपद्रवकारिणमसुरं जहीति तात्पर्यार्थः Sy. ददातिरत्र सामर्थ्याद्विनाशार्थः परित्यागार्थो वा। विनीनशः परित्याक्षीर्वा Sk.

१६. मघेव निष्षपी। सपतेः स्पृशतिकर्मणोऽर्चतिकर्मणो वा सपः प्रजननमिहोच्यते। तेन हि स्त्री स्पृश्यते। स्तुत्यं च तत् सुखकरत्वात् प्रजासन्तानकरत्वाच्च। अथवा सपः प्रजननमुच्यते ... निर्गतः सपः कोशान्निष्षपः। तद्वान्निष्षपी। वेश्यासम्भोगसक्तहृदयः। स यथा वेश्याभ्यो ददन्? (द्) धनानि विनाशयति परित्यजति वा मा नस्त्वं तथा परादा इति Sk. निष्षपी स्त्रीकामो भवति। विनिर्गतसपः। सपः सपतेः स्पृशतिकर्मणः ... स यथा धनानि विनाशयति मा नस्त्वं तथा परादाः N. 5. 16.

१७. कामयच० P. यथा विनिर्गतसपो विनिर्गतशेपो यथेष्टचारी दासीपतिर्मघेव यथा धनान्यस्थाने परित्यजति तथास्मान् मा परित्याक्षीरित्यर्थः Sy.

१८. ०सृष्टधनानि शिश्नो धनानि M.

१९. V. Mādhava ignores अध। स्म। इत्

स त्वं न॑ इन्द्र॒ सूर्ये॒ सो अ॒प्स्व॑नागा॒स्त्व* आ भ॑ज जीवशं॒से ।
मान्त॑रां† भु॒जमा री॑रिषो न॒ः श्रद्धि॑तं ते मह॒त‡ इ॑न्द्रि॒याय॑ ॥६॥

स त्वं न इन्द्र।[1] सः।[2] त्वम्। अस्मान्।[3] इन्द्र! सूर्ये।[4] आभज।[5] स एव। उदकेषु।[6] तथाऽदारिद्र्ये।[7] तथा जीवितांशंसनं[8] च सफलं कुरु। अस्माकम्। किञ्च। अस्माकम्। अन्तरतमम्।[9] अन्नम्।[10] ईषदपि। मा। हिंसीरस्माभिः।[11] तव। महते।[12] बलाय। श्रद्धानमिदं[13] कृतमयमस्माद्रक्षतीति।

---

* अनागाःऽत्वे। PP.

† मा। अन्तराम्। PP.

‡ महते। PP.

१. इन्द्रं M.

२. य उक्तगुणोऽसि Sk.

३. अभानि P.

४. ०र्यं M. सर्वस्य प्रेरक आदित्ये Sy. सूर्येणात्र तद्विषयं दर्शनं प्रतिपाद्यते। सर्वत्र तादर्थ्यचतुर्थ्यर्थे सप्तमी। सूर्यदर्शनाय। सूर्यदर्शनद्वारेणाविकलेन्द्रियत्वमुच्यते। अविकलेन्द्रियत्वार्थमित्यर्थः Sk.

५. आभाजय, आभिमुख्येन भक्तान् सम्भक्तान् कुरु Sy. आ इत्येष समित्येतस्य स्थाने। सम्भज Sk.

६. एद० P. वृष्टिलक्षणाभ्योऽद्भ्यः। वृष्ट्यर्थमित्यर्थः Sk.

७. अनागास्त्वेऽपापत्वे पापराहित्येऽस्मानाभाजय... अनागास्त्वे। न विद्यत आगः पापं यस्य सोऽनागाः। तस्य भावस्तत्त्वम् Sy. अनागास्त्वाय। अपापत्वार्थञ्चेत्यर्थः Sk.

८. जीवैः प्राणिभिः शंसनीये कामयितव्ये Sy. जीवो जीवितम्। आशंस्यते प्रार्थ्यतेऽसाविति शंसः। जीविताया आशंसिताय चेत्यर्थः। अथवा सूर्ये, अप्सु जीवशंसे इत्यत्र स्वार्थ एव सप्तमी। सूर्येण तु तत्सम्बद्धो द्युलोक उच्यते। अप्स्वित्यप् शब्दोऽन्तरिक्षनाम। जीवशंस इत्यपि पार्थिवो लोक उच्यते। तत्र ह्यतिशयेन जीवितमाशंस्यते। सूर्यसम्बद्धे द्युलोके... अनागास्त्वाय त्वमस्मान् सम्भजेत्यर्थः Sk.

९. अत्तर० P. गर्भरूपेणान्तर्वर्तमानाम् Sy. अन्तराशब्दः सन्निकृष्टवचनः। सन्निकृष्टं चैहलौकिकम् Sk.

१०. पालयित्रीं प्रजाम्... भुजम्। भुनक्ति पालयतीति भुक् प्रजा Sy. भोगम् Sk.

११. ०सीमस्मा० P.

१२. स्तूयमाना हि देवता वीर्येण वर्धते Sk.

१३. अस्माभिः श्रद्धानं कृतम्। त्वदीयं बलं बहुमानपूर्वकं स्तुम इत्यर्थः। तस्मात्तादृशबलयुक्तस्त्वं मा रीरिष इति पूर्वेण सम्बन्धः Sy. श्रद्धतेरुत्साहार्थस्येदं रूपम्। श्रद्धितमस्माभिः। त्वत्स्तुतिकरणे यस्मादस्माभिरुत्साहः कृत इत्यर्थः। ... अथवा "श्रद्धितं ते" इति पूर्वानपेक्षोऽयं पादो भिन्नमेव वाक्यम्। उत्साहस्तव महते वीर्याय Sk.

अधा मन्ये श्रत्ते अस्मा अधायि वृषा चोदस्व महते धनाय ।
मा नो अकृते पुरुहूत योनाविन्द्र क्षुध्यद्भ्यो वय आसुतिं दाः ॥७॥

अधा मन्ये[1] । सम्प्रति त्वामहम्[2] । स्तौमि[3] । श्रत्[4] । अधायि च[5] । अस्मै । तुभ्यं मया स त्वमस्मान् । वर्षिता[6] । महते[7] । धनाय । चोदय[8] । बहुभिराहूत ! मा । अस्मान्[9] । अपर्याप्ते[10] । गृहे[11] प्रवेशय । इन्द्र ! बुभुक्षमाणेभ्योऽस्मभ्यम्[12] । अन्नम्[13] । अन्यांश्च रसान्[14] । देहि ।

मा नो वधीरिन्द्र मा परा दा मा नः प्रिया भोजनानि प्र मोषीः ।
आण्डा मा नो मघवञ्छक्र निर्भेन्मा नः पात्रा भेत्सहजानुषाणि ॥८॥

मा नो वधीः । मा । अस्मान् । वधीः । इन्द्र ! मा च । परित्याक्षीः[15] । मा च । अस्माकम् । प्रियाणि[16] । अन्नानि । अपहार्षीः[17] । अण्डस्थानि[18] । मा । अस्माकम् । मघवन्[19] ! शक्र ! निर्भेत्[20] । मा

---

* अस्मै । PP.  १. आधा M.

२. अनन्तरम् Sy. अधशब्दोऽत्र पदपूरणः । अपिचेत्यस्य वा स्थाने । अपिच Sk.

३. मनसा जानामि Sy. मन्यत इति कान्तिकर्मा । श्रदित्यपि सत्यनाम । सत्यमिदं कामयेऽहम् Sk.  ४. श्रयद्दधा० P. श्रद्दधा० D. श्रुधा० M. श्रद्धा Sy.

५. त्वदीयबलविषयमादरातिशयेन स्तोत्रं कृतमित्यर्थः Sy. लिङर्थे लुङ् । तुभ्यमस्मै, इन्द्राय मदीयादीयेतेति । किम् ? सामर्थ्यात् सोमादिहविः Sk.

६. कामानां वर्षिता । वृषेति च नामन्त्रितम् । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वं वर्षिता स चोदयास्मान् । तासु तासु क्रियासु प्रेरयेत्यर्थः Sk.

७. वषतामसे P.

८. अस्मान् प्रेरय Sy.

९. मस्मान् P.

१०. अनिष्पादिते धनशून्ये । ... धनधान्यपूर्णे गृहेऽस्मान् वासयेत्यर्थः Sy. असंस्कृतेऽयोग्ये स्थाने । हे पुरुहूत साकाङ्क्षत्वात् (मा) प्रापिम? (प्रापिथः) इति वाक्यशेषः । योग्यं नः स्थानं देहि माऽयोग्यमित्यर्थः Sk.

११. योनौ । गृहनामैतत् । गृहे ... धनधान्यपूर्णे गृहेऽस्मान् वासयेत्यर्थः Sy.

१२. अन्येभ्योऽपि स्तोतृभ्यः Sy.

१३. अन्नमानमान्यंश्च P.

१४. पेयं क्षीरादिकम् Sy. घृतक्षीरादिकम् Sk.

† सहऽजानुषाणि । PP.

१५. परादानं परित्यागः । अस्मत्कृतां पूजां सर्वदा गृहाणेत्यर्थः Sy.

१६. उपभोग्यानि धनानि Sy. धनानि Sk.

१७. ०हार्क्षीः P. अस्मास्वेव धनानि यथा स्युस्तथा कुर्वित्यर्थः Sy.

१८. गर्भरूपेण निषिक्तान्यपत्यानि ... मा भिनः । गर्भरूपेणावस्थितानस्मत्पुत्रान् रक्षेत्यर्थः Sy. किञ्चाण्डसादृश्यादत्राण्डानि जातमात्राणि गर्भावस्थितानि वाऽपत्यान्युच्यन्ते Sk.

१९. भगवन् M. धनवञ्छक्र सर्वकार्यशक्तेन्द्र Sy.

२०. निर्भे P. निर्भैः M. विनीनशः Sk.

च। अस्माकम्। शिक्षितपतनान्यपत्यानि[1]। सहजातानि[2] च। मा अभिनः[3]।

अर्वाङेहि[*] सोमकामं त्वाहुरयं सुतस्तस्य पिबा मदाय।
उरुव्यचा जठर आ वृषस्व पितेव नः शृणुहि हूयमानः ॥९॥

अर्वाङेहि[4]। अभिमुखम्[5]। आगच्छ। सोमकामम्[6]। आहुः। त्वां जनाः[7]। अयं च[8]। सुतः सोमः। तम्[9]। पिब। मदाय[10]। बहुव्याप्तिस्त्वम्[11]। जठरे। आसिञ्च[12]। स्वपितेव च[13]। अस्मान्। शृणु। हूयमानः[14]।

I.105.

चन्द्रमा अप्स्व1ntरा[†] सुपर्णो धावते दिवि।
न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी[‡] ॥१॥

चन्द्रमाः। त्रित आप्त्यः। आपेय इति कठाः। आप्य इति ब्राह्मणम्। अथ शाट्यायनकम्—"आप्त्यान् सातं नयतोऽरण्ये पिपासाऽविन्दत्। ते धन्वन् कूपमविन्दन्। तत्र द्वितोऽवरो-

---

१. पतन्ति गच्छन्ति गमनसमर्थानि यानि तान्यपत्यानि पात्राणि Sy.
पतन्तीति पात्राणि गमनसमर्थान्यपत्यानि। तान्यपि Sk.

२. जानुभ्यां यानि भूमिं सनन्ति गच्छन्तीत्यर्थः। तानि जानुषाणि। तैः सहितानि मा विनीनशः Sy.
सहजानुषाणि। जानुभ्यां सनन्ति सम्भजन्ते भूमिमिति जानुषाणि रिङ्खन्ति यान्यपत्यानि तान्युच्यन्ते। तैस्सह Sk.

३. मानिभः M.

* अर्वाङ्। आ। इहि। PP.

४. ०ङ् देहि M.

५. अस्मदभिमुखः सन् Sy.
अस्मदभिमुखम् Sk.

६. सोममका० M.

७. पुराविदः Sy.

८. P. adds पदं लभन्ते कूभस्थिता लभते प्रकाशजा नीतम्म इदं परिदेवन before अयम्। This additional matter with correction and slight alteration is found in V. M's commentary on I. 105. 1.

९. तस्य चैकदेशं स्वांशलक्षणम् Sk.

१०. हर्षार्थम् Sy.

११. ०प्तित्वं P. ०प्तिं M. उरु विस्तीर्णं व्यचो व्यापनं यस्य तादृशो महावयवो भूत्वा Sy.
विस्तीर्णव्याप्तिर्वा। सर्वव्यापीत्यर्थः Sk.

१२. आ समन्तात्पूरयेत्यर्थः Sy.
बहुसोममुदरे प्रक्षिपेत्यर्थः Sk.

१३. पितेव पुत्राणां वाक्यानि शृणोति तथा नोऽस्माकं वाक्यानि ... शृणु Sy.

१४. Ms. D. puts the figure ॥१०४॥ here to indicate the end of one hundred and fourth hymn. No such number is given in P. and M.

† अप्ऽसु। अन्तः। आ। PP.

‡ रोदसी इति। PP.

द्रुमकामयत नैकतस्त्रितोऽवारोहत्। तौ यदाऽपिबतामतृप्यतामध हैनं तदेव रथचक्रेणापिधाय गोभिः प्रैताम्। सोऽकामयतोदित इयां गातुं नाथं विन्देयेति।"[1]

दिवि। उदकस्य[2]। मध्ये। युष्माकमाधारभूतश्चन्द्रमाः[3]। सुपतनः[4]। आधावते[5]। तथा सति हिरण्यसदृशपर्यन्ताः[6]। तस्य। विद्युतः[7]। न। वो[8] युष्माकम्। जनाः पदम्[9]। लभन्ते[10] कूपस्थिता न लभन्ते प्रकाशम्। जानीतम्। मे। इदं परिदेवनम्[11]। द्यावापृथिव्यौ।

---

१. B. Ghosh, *op. cit.* p. 20.

२. दीप्यन्नुदकस्य M.
आन्तरिक्षासूदकमये मण्डले Sy.
अम्मये स्वमण्डले स्थित इत्यर्थः Sk.

३. चन्द्रः M.
चन्द्रमाह्लादनं सर्वस्य जगतो निर्मिमीत इति चन्द्रमाः Sy.

४. शोभनपतनः। यद्वा सुपर्ण इति रश्मिनाम। सुषुम्णाख्येन सूर्यरश्मिना युक्तः Sy.
सुष्ठु प्रीणयिता। ह्लादयिता मनसामित्यर्थः। अथवा सुपर्णशब्दो रश्मिनाम। सामर्थ्याच्चवान्तर्णीतमत्वर्थः। रश्मिमान् Sk.

५. ०धारवते P.
आङ् मर्यादायाम्। एकेनैव प्रकारेण धावते शीघ्रं गच्छति Sy.
मर्यादया सर्वकालं गच्छति Sk.

६. सुवर्णसदृशपर्यन्ताः। यद्वा हितरमणीयप्रान्ताः Sy.
नेमी रथचक्रधारोच्यते। हिरण्मय्यो नेमयो यासां ता हिरण्यनेमयः। तासां सम्बोधनं हिरण्यनेमयः Sk.

७. विद्योतमाना रश्मयः Sy.

८. नेवा M.

९. पादस्थानीयमग्रम् Sy.
पादनिधानात्तदाकारं यत्कर्दमादावुपजायते तत्पदमित्युच्यते Sk.

१०. मदीयानीन्द्रियाणि कूपेनावृतत्वान्न लभन्ते। अत इदमनुचितम्। तस्मात् कूपान्मामुत्तारयतेत्यर्थः Sy.
पश्यन्तीत्यर्थः। हे विद्युतः! चन्द्रमा उदकमये स्वमण्डले व्यवस्थितः सर्वदा दिवि गच्छन्नुपलभ्यते। युष्माकं तु हे विद्युतः! वर्षाभ्योऽन्यत्र पदमपि नोपलभ्यत इत्यर्थः Sk.

११. स्तोत्रम्। ...जानीतम्। यद्वा मदीयं कूपपतनरूपं यदिदं दुःखं तदवगच्छतम्। मदीयं स्तोत्रं श्रुत्वा मदीयं दुःखं ज्ञात्वा वाऽस्मात् कूपान्मामुत्तारयतमित्यर्थः Sy.
वित्तं मे अस्य। ...श्रवणेन च यज्ज्ञानं तदिहाभिप्रेतम्। अस्येत्यपि सन्निहितत्वात् स्तोत्रस्य प्रतिनिर्देशः। द्वितीयार्थे च षष्ठी। शृणुतं ममेदं स्तोत्रमित्यर्थः। अथवाऽस्येति दुःखस्य प्रतिनिर्देशः। विजानीतं ममेदं कूपनिपतनमिति विज्ञापनं चेदमुत्तारणार्थं क्रियते। विजानीतमिदं दुःखम्। विज्ञाय चार्तानुग्रहस्वभावकतया मामितः कूपादुत्तारयतमित्यर्थः Sk.

अर्थमिद्वा उं अर्थिन आ जाया युवते पतिम् ।
तुञ्जाते वृष्ण्यं पयः परिदाय रसं दुहे वित्तं मे अस्य रोदसी ॥२॥

अर्थमित्। अभिलषितमर्थम्।[1] अर्थिनो लभन्ते।[2] स्त्री च।[3] पतिम्। आश्रयते।[4] द्यावापृथिव्यौ च। वर्षणनिमित्तम्।[5] स्वसारं मनुष्येभ्यः प्रयच्छत।[6] आदित्यश्च रश्मिभिः सर्वत आदाय।[7] तम्।[8] क्षरतीति मुमूर्षोः परिदेवनमिति[9] ।

मो षु देवा अदः स्व१रव पादि दिवस्परि ।
मा सोम्यस्य शंभुवः शूने भूम कदा चन वित्तं मे अस्य रोदसी ॥३॥

मोषु देवाः। यज्ञाभावादेतत्[10] सर्वम्। देवाः। न।[11] स्वर्गात्।[12] अव पादि।[13] न वयं

---

* अर्थम्। इत्। वै। ऊँ इति। PP.

† तुञ्जाते इति। PP.

‡ रोदसी इति। PP.

१. द्यावापृथिव्योर्विश्वेषां वा देवानां प्रसादेन Sk.

२. अर्थिनो धनमपेक्षमाणाः पुरुषा ... अपेक्षितं धनं प्राप्नुवन्त्येव। नाहं प्राप्नोमि Sy.

३. अन्यदीया भार्या। पतिं स्वपतिम् आ युवते। आभिमुख्येन प्राप्नोति। मदीया तु मद्विरहाद्गताऽऽसीत् Sy.

४. अपिच संयुक्तौ तौ जायापती वृष्ण्यं वीर्यरूपं पय उदकं तुञ्जाते प्रजननायान्योन्यसंघट्टनेन प्रेरयतः। तदनन्तरं रसं पुरुषस्य सारभूतं वीर्यं परिदाय गर्भाशयेनादाय गर्भरूपेण धृत्वा दुहे दुग्धे पुत्ररूपेण जनयति। मम तु पुत्रोऽपि नोत्पद्यते ... तुञ्जाते तुजि पिजि हिंसाबलदाननिकेतनेषु Sy.

५. वृष्ण्यमित्यपठितमपि बलनाम। सामर्थ्याच्चात्र तत्कारणे तच्छब्दप्रयोगः Sk.

६. पय इत्युदकनाम। पुष्टिलक्षणस्य बलस्य कारणभूतं वृष्टिलक्षणमुदकम्। कथं पुनर्वृष्टिलक्षणमुदकं द्यौः पृथिवी वा ददाति? उच्यते। दिवो हि वृष्टिः पतति। यच्च वृष्टेर्हेतुभूतं यज्ञादिकर्म तत् पृथिव्यां क्रियते। अतस्तयोर्वृष्टिहेतुत्वात्त एव वृष्टिलक्षणमुदकं दत्तमिति? (त्त इति) व्यपदिश्यते Sk.

७. आदादेकं M.

८. ०न्ती० P. D. उदकमादाय वृष्टयर्थं मध्यमाय ददाति Sk.

९. V. Mādhava ignores इत्। वै। उ and वित्तम् etc.

§ मो इति। सु। देवाः। अदः। स्वः। अव[1]। PP.

१०. मो षु मैव Sy. अस्मत्प्रभवं पुत्रपौत्रादिकुलम् Sk.

११. देवानां P.

१२. स्वः स्वर्गे वर्तमानम्, अदः तदस्मदीयं पितृपितामहप्रपितामहात्मकं सन्तानं, दिवस्परि दिवश्चोपरि वर्तमानम् Sy.

१३. पाति M. अवपन्नं विपन्नं प्रभ्रष्टं मा भूत्, मम पुत्राभावात्। पुत्रेण लोकाञ् जयति Sy. अधः पतत् ... स्वर्गात् प्रच्युत्य नरकं मा गादित्यर्थः Sk.

सोमार्हस्य[1] पितृगणस्य। सुखस्य भावयितुः[2]। केवलत्वाय[3]। कदा। चिदपि। भवामेत्यानृण्याय[4][5] यज्ञमाशास्त इति[6]।

**यज्ञं पृच्छाम्यवमं स तद्दूतो वि वोचति।**
**क्व ऋतं पूर्व्यं गतं कस्तद्बिभर्ति नूतनो वित्तं मे अस्य रोदसी ॥४॥**

यज्ञं पृच्छामि। विस्पष्टम्[7]। वदतु यज्ञः[8] सत्यमेवाश्रितं[9] रक्षतीति यज्ञस्य। पुरा दृष्टम्[10]। आनृशंस्यम्[11]। क्व। गतम्[12]। कस्तदानीम्[13]। सम्प्रति। तत्। नः[14]। बिभर्तीति[15][16]।

१. सोमसम्पादिनः Sk.
२. ०यितः M.
पुत्रस्य Sy.
सुखं यदात्मनो भावयति जनयति प्रापयति वा तच्छम्भु। तस्य शम्भुवः सोमयाजिनः सुखिनश्च पितृपितामहादिकुलस्य तत्प्रभवत्वेन सम्बन्धिनः सन्तो वयमित्यर्थः Sk.
३. ०लंत्वाय P.
शूने अपगमने।...कदाचिदपि मा भूम। युष्मत्प्रसादान्मम पुत्रा जायन्ताम्। अतो मामस्माद् दुःखादुत्तारयतेत्यर्थः Sy.
शूनं वृद्धं श्वयतेर्वृद्ध्यर्थत्वात्। तच्च वृद्धं नेष्यते। तदिह परिगृह्यते। किं पुनस्तत्? दुःखं पापं वा। दुःखपापशब्दयोर्वान्यतरपर्यायः शूनशब्दः। द्वितीयार्थे चैषा सप्तमी। भूमेत्यपि भवतिः प्राप्त्यर्थः। दुःखं पापं वा (मा) प्रापाम Sk.
४. ०दभि P.
५. भावमे० P.
६. V. Mādhava ignores मो। षु। दिवः परि। and वित्तं etc.
७. द्विप० D. M.
८. मह्यमुपदिशतु येनाहं सुखमविगुणं करोमीत्यर्थः Sk.
९. यज्ञं यजनीयम्, अवमं सर्वेषां देवानामादिभूतम् ... तमग्निं पृच्छामि। यन्मया पृष्टं तद् देवानां दूतः सोऽग्निः ...विविच्य कथयतु Sy.
तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यमग्निमहं यज्ञं पृच्छामि। ... सोऽग्निस्तत्। व्यत्ययेनात्र नपुंसकता। ... तं यज्ञम् Sk.
१०. पूर्वं चिरन्तनम् Sk.
११. भद्रं स्तोतृभ्यः कृतं श्रेयः Sy.
१२. कुत्रेदानीं वर्तते Sy.
येन सत्येनाग्निर्यष्टॄनापद्भ्यो रक्षति क्व तस्य तत् सत्यं गतमित्यात्मन आपदोऽरक्षणादुपालम्भोऽयं परिदेवना वा Sk.
१३. कस्तदिदानीं M.
पूर्वकालीनम् Sy.
१४. तनः P. D.
१५. नूतनो नवतरस्त्वत्तोऽन्यः कः पुरुषस्तद् भद्रं ... धारयति। यदि त्वय्यवर्तिष्यत ममेदृशी दशापि नाभविष्यत्। अतस्तत् क्व गतमिति कथय Sy.
१६. V. Mādhava ignores यज्ञम्। पृच्छामि। अवमम्। सः। तत्। दूतः and वित्तं etc.

*
अमी ये देवाः स्थन त्रिष्वा रोचने दिवः ।
कद्व ऋतं कदनृतं क्व प्रत्ना व आहुतिर्वित्तं मे अस्य रोदसी ॥५॥

अमी ये[1]। दिवः[2]। आरोचन[3] आदित्ये। त्रिषु[4] स्थानेषु पौर्वापर्यभावेन[5]। ये। देवाः![6] भवथ[7] पार्थिवाश्च देवगणा आदित्यतेजोभिरवष्टब्धा[8] वर्तन्त एवं माध्यमिकाः। क्व। वः। गतम्। आनृशंस्यम्[9]। क्व वा। शाठ्यमयजमानविषयम्[10]। क्व वाऽस्माभिः। पुरा। भवद्भ्यो हुता। आहुतिः[11][12]।

कद्व ऋतस्य धर्णसि कद्वरुणस्य चक्षणम् ।
कदर्यम्णो महस्पथाति क्रामेम दूढ्यो वित्तं मे अस्य रोदसी ॥६॥

कद्व ऋतस्य। क्व। युष्माकम्। आनृशंस्यस्य[13]। धारणं गतम्[14]। क्व वा। वरुणस्य पुण्यपापकृद्विषयम्[15]। दर्शनम्[16]। क्व वा[17]। अर्यम्णो[18] दानादिविषयं महत्त्वम्[19]। वयं मार्गेण[20]। कूपादुत्तीर्णाः[21]।

---

* अमी इति। PP.

१. यो M.

२. द्योतमानस्य सूर्यस्य Sy.

३. दीप्तिविषये वर्तन्ते। सूर्यप्रकाश्येषु स्थानेष्वित्यर्थः Sy. दीप्ते च दिवः सम्बन्धिन्यादित्यमण्डले Sk.

४. पृथिव्यादिषु Sy. त्रिषु लोकेषु Sk.

५. ०वौ M.

६. ये। देवाः omitted by P. and D. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तान् पृच्छामि Sk.

७. भवत P. ८. अदि० P.

९. ०स्य P. स्तोतृविषयम्...सत्यम् Sy. सत्यम् Sk.

१०. शठ्य० D. M द्वेष्टृविषयमसत्यम् Sy. असत्यम् Sk.

११. ईदृग्भूतदुःखानुभवेन मया पूर्वमनुष्ठितो यागसमूहो युष्मान्न प्राप्नोदित्यनुमिमे Sy. सत्यासत्यविवेकिभूता यूयं यज्वानं सन्तं मामित आपदो न रक्षथेत्येवमुपालम्भोऽयम् Sk.

१२. V. Mādhava ignores अमी and वित्तं etc.

१३. सत्यस्याभिमतफलप्रापणस्य Sy.

१४. असत्यभूताः स्थेत्यर्थः। अथवा व इति निर्धारणे षष्ठी। ऋतशब्दोऽप्यादित्यवचनः। धर्णसीत्यपि बलनाम। क्व युष्माकं मध्य आदित्यस्य भक्तानुग्रहसामर्थ्यलक्षणं बलम् Sk.

१५. ०द्वियम् M.

१६. अनुग्रहदृष्ट्या दर्शनम् Sy. भक्ताभक्तविवेकज्ञानमित्यर्थः Sk.

१७. च P. १८. अरीणां नियन्तुरेतत्संज्ञकस्य देवस्य सम्बन्धिना Sy.

१९. महानुभावस्य Sy. अतिशयदेवतामाहात्म्यम् Sk.

२०. शोभनमार्गेणेष्टदेशप्रापणं...क्व गतम्? एतत्सर्वं युष्मास्वेव वर्तते। न कुत्रापि गतम् Sy. युष्मत्प्रसादात् स्वगृहगमनपथा वयमतिक्रामा(मे)मेत्याशास्महे Sk.

२१. ०र्ण P.

दुर्बुद्धीन्[1]। अतिक्रामेम[2] ।[3]

**अहं सो अस्मि यः पुरा सुते वदामि कानि चित् ।**
**तं मा व्यन्त्याध्यो३ वृको न तृष्णजं मृगं वित्तं मे अस्य रोदसी ॥७॥**

अहं सो अस्मि । अहम्[4] । सः । अस्मि[5] । यः । पुरा भवताम् । सुते सोमे स्तोत्राणि । कानि[6] । चित् । वदामि[7] । तम् । मा[8] । खादन्ति[9] । आध्यः[10] कामा न यक्ष्ये न दास्यामि न भोक्ष्यामीति[11] । वृकः श्वा[12] । तृष्णा जाता यस्य तं तृष्णजमुदकस्थानं[13] प्रति गच्छन्तम्[14] । मृगम् । इवेति[15] ।

**सं मा तपन्त्यभितः सपत्नीरिव पर्शवः ।**
**मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी ॥८॥**

सं मा तपन्ति । सन्तपन्ति[16] । माम् । अभितः[17] सपत्नीमिव[18] । सपत्न्यः[19] । कूपपर्शवः[20] । मूषि-

---

१. पापबुद्धीन् अस्मदनिष्टाचरणपराञ् शत्रून् Sy. पापबुद्धीन् वृकप्रभृतीन् Sk.

२. ०मे M.
अतितरेम। तैः कृतादस्मात् कूपपातलक्षणाद् दुःखाद् वयमुत्तीर्णा भवेम Sy.

३. V. Mādhava ignores वित्तं etc.

* व्यन्ति । आऽध्यः । PP.

४. मन्त्रदृक् Sk.

५. अहम् । सः । अस्मि omitted by M.
न त्वन्यः कश्चित् Sy.

६. कान्यप्यत्यन्तोत्कृष्टानि Sk.

७. उक्तवानस्मि।...तस्मात्किमर्थं मां परित्यजथ Sy.
भूतेऽयं लट्। उदितवान् Sk.

८. तं मां युष्माकं स्तोतारं सन्तम् Sk.
नैतद्योग्यं युष्माकं स्तोता सन्नहमेवमसम्पद्यमानैः कामैर्बाध्य इत्येवमयमुपालम्भः Sk.  ९. असम्पद्यमाना उद्वेगेन मारयन्तीवेत्यर्थः Sk.

१०. अभिलषितपुत्राद्यप्राप्त्या जनिता मानस्यो व्यथाः Sy. आधयः कामा उच्यन्ते। यक्ष्ये भोक्ष्ये अर्थिभ्यो दास्ये इत्येवमादयः कामाः Sk.

११. भोक्ष्ये is suggested for भोक्ष्यामि।

१२. वृकश्चा P. M. वृकश्वा D.
यथा ऽरण्यश्वा मध्येमार्गं भक्षयति तद्वत् Sy.  १३. ०स्थाय P.

१४. गच्छन् न M.

१५. V. Mādhava ignores वित्तं etc.

† शतक्रतो इति शतऽक्रतो Sy.

१६. सामर्थ्यादन्तर्णीतण्यर्थः। ... तापयन्ति Sk.  १७. अभिशब्दादयमुभयार्थे तसिल्। वामपार्श्वतो दक्षिणपार्श्वतश्चेत्यर्थः। अथवा, अग्रतः पृष्ठतश्चेत्यर्थः Sk.

१८. समान एकः पतिर्यासां। ताः सपत्न्यो यथैकं पतिमभितः पीडयन्ति। परस्परं वा पीडयन्ते Sy.

१९. यथा सपत्न्य एकं भर्तारमात्मानमेव वा परस्परतः सन्तापयन्ति तद्वत् Sk.

२०. ०पशवः P. D. M. कूपभित्तयः Sy.
कूपभित्तय इष्टका वेह पर्शव उच्यन्ते। ता हि कूपस्य पर्शुस्थानीयाः। इमाः कूपभित्तय इष्टका वेत्यर्थः Sk.

का:[1]। इव। अस्नातानि[2] सूत्राणि। व्यदन्ति स्वाङ्गाभिधानं वा स्याच्छिश्नानि[3] व्यदन्ति[4] सन्तपन्ति। मा। आध्यः[5] कामाः। स्तोतारम्। ते। शतक्रतो[6]! यथा प्रजननानि वेष्टनत्वचा वृतानि तद्वत् कामा मां परिवृण्वन्ति[7]।

*अमी ये सप्त रश्मयस्तत्रा मे नाभिरातता ।
त्रितस्तद्वेदाप्त्यः स जामित्वाय रेभति वित्तं मे अस्य रोदसी ॥९॥

**अमी ये सप्त।** अमी[8]। ये। सप्त। आदित्यरश्मयः। तेषु[9]। मम। नाभिः[10]। आतता[11] ते हि सर्वेषां नाभिषु[12] सम्बद्धा[13] भवन्ति। तमिममर्थम्[14]। अपां पुत्रः[15]। त्रितः[16]। जानाति[17]। स तेनादित्येन[18]। जामित्वं[19] तदनु[20] (?) पालयितुम्[21]। स्तौति[22] तान् रश्मीनिति[23]।

---

१. यथा मूषिकाः...शिश्नानि कुविन्देन वायितान्यन्नरसेनालिप्तानि सूत्राणि भक्षयन्ति। यद्वा शिश्नशब्देन प्रजननमेवोच्यते। तच्चोपचारात् पुच्छे वर्तते। यथा स्वकीयानि पुच्छानि घृततैलादिभाण्डे प्रक्षिप्योर्ध्वमुत्कृष्य व्यदन्ति लिहन्तीत्यर्थः। एवं मामाधयो भक्षयन्ति। नचैतद् हे इन्द्र! तव स्तोतुर्न्याय्यम्। तस्मात्कूपान्मामुत्तारय Sy. २. स्नुतानि P.

३. किं पुनरत्र शिश्नशब्देनोच्यते? वायितं सूत्रम्। तद्धि शौचार्हं भवति अन्नगन्धित्वात्। वेष्टितं च तन्तुवाययन्त्रे। अथवा शिश्नशब्दः प्रजननवचनः। इह तु तत्सादृश्यात् पुच्छः शिश्नमुच्यते। मूषिको वायितानि सूत्राणि पुच्छानि वा तैलभाण्डे घृतभाण्डे वा प्रक्षिप्य ततश्चोद्धृत्य व्यदति, एवं व्यदन्ति विविधमदन्ति खादन्ति मामाध्यो यागादिकामाः Sk.

४. विविधं भक्षयन्ति Sy.

५. मध्यः P. माध्यद्दु M. असम्पद्यमानैर्यागदानादिभिरुत्पादिता मानस्यः पीडाः Sy.

६. बहुविधकर्मन् बहुविधप्रज्ञ वा Sy. बहुकर्मन् बहुप्रज्ञ वा।... नैतद्योग्यं यत्तव स्तोता सन्नहमेवमसम्पद्यमानैः कामैर्बाध्य इत्येवमुपालम्भः Sk.

७. V. Mādhava ignores वित्तं etc.

* अमी इति। PP.

८. द्युलोके वर्तमानाः सप्तसंख्याकाः Sy.

९. सूर्यरश्मिष्वध्यात्मं सप्तप्राणरूपेण वर्तमानेषु Sy. १०. न्नाभिः M. नाभिशब्दोऽत्र प्राणमात्रोपलक्षणार्थो द्रष्टव्यः। प्राणः Sk. ११. आत P. सम्बद्धा। ऋषिरात्मानमेव परोक्षतया निर्दिशति Sy. अवबद्धा। आयत्तेत्यर्थः Sk. १२. ०भिमु P.

१३. सम्बन्धि P. १४. तत्पूर्वोक्तं वृत्तान्तम् Sy. १५. ऋषिः Sy.

१६. तीर्णतमस्तिरस्कृताज्ञानः Sy. त्रितो नाम ऋषिः Sk.

१७. आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्देशः। अहं त्रितो वेद्मीत्यर्थः Sk.

१८. तोदि० M. १९. कूपान्निर्गन्तृत्वाय Sy. जामिशब्दः समानजातीयवचनः। समानजातीयत्वार्थम्। ताद्रूप्यप्रतिपत्त्यर्थमित्यर्थः Sk. २०. तनु P.

२१. पायथि० P. D. २२. स्तेनति P.

२३. V. Mādhava ignores वित्तं etc.

*अमी ये पञ्चोक्षणो मध्ये तस्थुर्महो दिवः ।
देवत्रा नु प्रवाच्यं सध्रीचीना नि वावृतुर्वित्तं मे अस्य रोदसी ॥१०॥

अमी ये। "तत्र इन्द्रस्तद्वरुणः" इत्यस्यामृचि वक्ष्यमाणाः पञ्च[1]। अमी। वर्षितारः[2]। ये। मध्ये। दिवः[3]। तिष्ठन्ति। तेषु देवेषु[4]। क्षिप्रं मयाऽभिलषितम्[5]। वाच्यं[6] ते। सहभूताः[7]। निवर्तन्तु[8] मां प्रति[9]।

सुपर्णा एत आसते मध्य आरोधने दिवः ।
ते सेधन्ति पथो वृकं तरन्तं यह्वतीरपो वित्तं मे अस्य रोदसी† ॥११॥

सुपर्णा एते। सुपतनाः[10]। एते[11] रश्मयः[12]। निवसन्ति। स्वर्गलोकस्य[13]। अपिधान[14] आदित्यमण्डले[15]। ते। निषेधन्ति[16]। मार्गात्[17]। अन्वगच्छन्तम्[18]। वृकं[19] यः पशुषु हृतेषु मां भक्षितुं कूपेऽवरुद्धं दृष्ट्वा सरस्वत्याः परस्मात् कूलात् तस्याः। महतीः[20]। अपः[21]।

---

* अमी इति। PP.

१. यद्वा अग्निर्वायुः सूर्यश्चन्द्रमा विद्युदित्येवं पञ्चसङ्ख्याकाः Sy.

२. कामाभिवर्षकाः Sy.

३. दिवं D. ४. तेषां देवानाम् Sk.

५. स्तोत्रमस्माभिः Sk.

६. प्रशंसनीयं देवानां योग्यं मदीयं स्तोत्रम् Sy.

७. सहाञ्चन्तो युगपदागच्छन्तस्ते देवा मदीयं परिचरणं स्वीकुर्वन्ति . . . सहाञ्चन्तीति सध्र्यञ्चः। त एव सध्रीचीनाः Sy.
सहगमनशीला इत्यर्थः Sk.

८. The correct reading should be निवर्तन्ताम्।
तदनन्तरं . . . तृप्ताः सन्तो निवर्तन्ते Sy.
मान्यतोगमन्। अस्मान् प्रत्यागच्छन्त्वित्यर्थः Sk.

९. V. Mādhava ignores महः and वित्तम् etc.

† रोदसी इति PP. in all the stanzas where this word occurs.

१०. सुपर्णाः। रश्मिनामैतत्। शोभनपतनाः Sy. ११. ते P.

१२. सूर्यरश्मयः Sy. तिष्ठन्ति Sk.

१३. ०लोके तस्य M.

१४. सर्वस्यावरके व्याप्ते . . . आरुध्यत आव्रियतेऽनेनेत्यारोधनम् Sy.
आरोहति मर्यादया रुणद्धि वा तमांसीत्यारोधनमादित्यमण्डलमिहाभिप्रेतम् Sk.

१५. अन्तरिक्षस्य मध्ये Sy.

१६. निवारयन्ति Sy.
सेधतिर्गतिकर्मा सामर्थ्याच्चान्तर्णीतण्यर्थः। शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः। लोडर्थे लट्। अपगमयतु Sk.

१७. अस्मद्गमनमार्गात् Sk.

१८. The proper reading should be अन्वागच्छन्तम् or अनुगच्छन्तम्

१९. अरण्यश्वानम् Sy.

२०. यह्व इति महन्नाम Sy.

२१. मतिरपः P. मह . . . रपः M.

तरन्तं[1] कञ्चन वृकमिति।[2]

नव्यं तदुक्थ्यं हितं देवासः सुप्रवाचनम्।
ऋतमर्षन्ति सिन्धवः सत्यं तातान सूर्यो वित्तं मे अस्य रोदसी ॥१२॥

नव्यं तदुक्थ्यम्[3]। नवतरम्[4]। उक्थार्हम्[5]। तत् स्तोत्रम्[6]। भवत्सुनिहितम्[7]। देवाः। शोभन-प्रवाचनम्[8]। उदकम्[9]। गमयन्ति[10]। नद्यो भवद्भिः प्रहिताः[11]। सूर्यश्च तेजोभिः। सत्यम्[12]। विस्तारयति[13]।

अग्ने तव त्यदुक्थ्यं देवेष्वस्त्याप्यम्।
स नः सत्तो मनुष्वदा देवान्यक्षि विदुष्टरो[*] वित्तं मे अस्य रोदसी ॥१३॥

अग्ने तव। अग्ने! तव। एतत्[14]। प्रशस्यम्[15]। देवेषु[16]। ज्ञातेयम्[17]। अस्ति। स त्वम्।

---

१. कूपपतनात्पूर्वं त्रितं दृष्ट्वैनं भक्षयितुं कश्चिदरण्यश्वा महतीं नदीं तितीर्षुराजगाम। स च सूर्यरश्मीन् दृष्ट्वाऽयमवसरो न भवतीति निववृते। अतो रश्मयो वृकं निषेधन्तीत्युच्यते। यास्कपक्षे तु, आप इत्यन्तरिक्षनाम। यह्वतीरपो महदन्तरिक्षं पथः पथा द्वादशराश्यात्मना मार्गेण तरन्तं वृकं चन्द्रमसं सूर्यरश्मयो निषेधन्ति। अहनि हि सूर्यरश्मिभिर्निरुद्धश्चन्द्रमा निष्प्रभो दृश्यते। अतो निष्प्रभं कुर्वन्तीत्यर्थः Sy. अस्मान् भक्षयितुमुत्तरन्तम् Sk.

२. V. Mādhava ignores मध्ये and वित्तं etc.

३. तदुक्ष्यम् P.

४. तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यदस्माभिः कर्तुमुपक्रान्तं नव्यं नवं तत्। अन्यैः स्तोतृभिरकृतपूर्वमित्यर्थः Sk.

५. प्रशस्यं स्तुत्यर्हम् Sy.

६. तद् भवदीयं बलम् Sy. युष्मत्स्तोत्रम् Sk. ७. भवत्सन्निहितं P. D. युष्मासु निहितम् Sy. हितम्। कस्मै? सामर्थ्यादस्मदभिप्रेतकरत्वादस्मभ्यं युष्मभ्यं वा वीर्यवृद्धिकरत्वात् Sk.

८. ०प्रवावामनम् P. सुष्ठु ऋत्विग्भिर्वाचयितुं शक्यम्। एवंभूतम् Sy. अत्यन्तोत्कृष्टं चेत्यर्थः। अथवैवमन्यथास्यार्धर्चस्यार्थयोजना। युष्माकं माहात्म्यं नव्यम्। नौतेरर्चतिकर्मण इदं रूपम्। स्तुत्यं तत्प्रशस्यमुक्थ्यं च हितं च स्तोतृभ्यो हे देवासः सुप्रवाचनं सुष्ठु प्रवाचनार्हम्। प्रख्यापनार्हमित्यर्थः Sk.

९. आलस्यराहित्येन सर्वदा प्रेरयन्ति। अशोष्याः सत्यः प्रवहन्तीत्यर्थः Sy. वहन्तीत्यर्थः।. . . . अथवा ऋतशब्दोऽत्र यज्ञवचनः। आदित्यवचनो वा। सिन्धवो रश्मय उच्यन्ते। यज्ञमादित्यं वा प्रति रश्मयो गच्छन्तीत्यर्थः Sk.

१०. युष्मदीयेन बलेन. . .स्यन्दनशीलाः Sy.

११. ०ता P.

१२. सर्वदा विद्यमानं स्वकीयं तेजः Sy. अविसंवादि स्वं ज्योतिः Sk.

१३. V. Mādhava ignores वित्तं etc.

* विदुःस्तरः। PP.

१४. श्रुतिप्रसिद्धम् Sy. तच्छब्दसमानार्थत्यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यदिदमस्माभिः कर्तुं प्रक्रान्तं हे अग्ने तव त्यत् तत् Sk.

१५. स्तोत्रम् Sk.

१६. दानादिगुणयुक्तेष्विन्द्रादिषु Sy. निर्धारण एषा सप्तमी। देवानां मध्येSk.

१७. जाते० M. आपिर्बन्धुः। तस्य भावः। बान्धवम् Sy. ज्ञातित्वं तवास्माभिः सह। ज्ञातिश्च त्वमस्माकमित्यर्थः। सर्वयजमानानां हि ज्ञातिभूतोऽग्निः Sk.

अस्माकम्। मनुष्यवद्[1] वेद्याम्[2]। निषण्णः[3]। देवान्। यज[4]। विद्वत्तरः[5]।[6]

**सत्तो होता मनुष्वदा देवाँ अच्छा विदुष्टरः[*]।**
**अग्निर्हव्या सुषूदति[†] देवो देवेषु मेधिरो वित्तं मे अस्य रोदसी ॥१४॥**

सत्तो होता। निषण्णः। होता[7] वेद्याम्[8]। मनुष्वद्[9]। विद्वत्तरः। अग्निः। हव्यान्यादाय[10]। देवान्[11]। प्रति[12]। प्रेरयति। देवः। देवेषु[13]। यज्ञियः[14]।

**ब्रह्मा कृणोति वरुणो गातुविदं तमीमहे।**
**व्यूर्णोति हृदा मतिं नव्यो जायतामृतं वित्तं मे अस्य रोदसी ॥१५॥**

ब्रह्मा कृणोति। स्तोतृभ्यः परिवृह्लं कर्म[15]। वरुणः[16]। करोति[17]। मार्गस्य[18] लम्भयितारम्[19]। तम्। वयमभियाचामहे[20] कूपादुत्तरणम्[21]। स हृदयेनैव[22]। सुमतिं[23] स्तोतृभ्यः। प्रकाशयति[24]।

---

१. यथा मनूनां यज्ञे तद्वत् Sy.
२. यज्ञे Sy.
३. होता भूत्वेत्यर्थः Sk.
४. हविर्भिः पूजय Sy.
५. अतिशयेन विद्वान्। किम्? सामर्थ्याद्यष्टॄन् वास्माकं वा भक्तताम् Sk.
६. V. Mādhava ignores आ and वित्तं etc. आ शास्त्रमर्यादया Sy.
* विदुःऽतरः।
† सुसूदति PP.
७. देवानामाह्वाता Sy.
८. ०द्या P.
९. मनुष्पद् P. मनुष्य M. मनोरिवास्माकं यज्ञे Sy.
१०. हव्या हव्यानि, अस्मदीयानि हवींषि। मर्यादायामाकारः। शास्त्रमर्यादया यथाशास्त्रम् Sy.
११. अच्छ आभिमुख्येन Sy.
१२. प्रेरयतु Sy; अग्निर्हव्या हवींषि सुषूदति संस्करोति Sy. १३. ०यं D. मेधावी Sy. यज्ञकारीत्यर्थः Sk.
१४. V. Mādhava ignores आ and वित्तं etc.
१५. परिवृढं तद्रक्षणरूपं कर्म Sy. तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः। यो ब्रह्म स्तुतिलक्षणम् Sk.
१६. ०णं M. अनिष्टस्य निवारयिता देवः Sy.
१७. करोतिरन्तर्णीतण्यर्थः। कारयति कामान्। स्तोतृभिरात्मानं स्तावयतीत्यर्थः Sk.
१८. गातोर्मार्गस्य दुःखनिवारकस्य लम्भयितारं वरुणम् Sy. गमनस्य वेदितारम्। यज्ञान् प्रति गन्तुं ज्ञातारमित्यर्थः Sk.
१९. ०तारस्तं M.
२०. अभिमतफलं याचामहे। ईमह इति याच्ञाकर्मा Sy.
२१. ०णार्थम् P. २२. हृदयनैव P. षष्ठ्यर्थ एषा तृतीया। अस्मद्धृदयस्य Sk.
२३. मननीयां स्तुतिम् Sy. ज्ञानम्। मम मनसो ज्ञानमुत्पादयत्वित्यर्थः Sk.
२४. उच्चारयतीत्यर्थः Sy. लोडर्थेऽयं लट्। प्रकाशयतु Sk.

[1]सत्कृत्यः सन्नधुनाऽस्माकमस्मिन् कूपे पूर्णमुदकम्[2]। [1]जनयतु।[3]

**असौ यः पन्था आदित्यो दिवि प्रवाच्यं कृतः।**
**न स देवा अतिक्रमे तं मर्तासो न पश्यथ वित्तं मे अस्य रोदसी ॥१६॥**

असौ यः[4]। सर्वेषां स्तोत्रार्थम्[5]। यः। अयम्। आदित्याख्यः। पन्थाः[6]। दिवि। कृतः[7]।
सः। देवाः[8]! मनुष्यैः क्षुद्रैरतिक्रमितुं[9] न शक्यते[10]। तमिमम्[11]। मनुष्याः[12]! न। पश्यथ[13]अभ्युदयावहम्[14][15]।

**त्रितः कूपेऽवहितो देवान्हवत ऊतये[*]।**
**तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ॥१७॥**

त्रितः कूपे। यदाऽस्य सूक्तस्य कुत्स[16] एव द्रष्टेति दर्शनं तदानीमियं योजना पुराऽहमिव

---

१. सोऽयं नव्यः स्तुत्यो वरुणोऽस्माकम्, ऋतं जायतां सत्यभूतोऽस्तु Sy.
नव्यः स्तुत्यश्च जायताम् Sk.

२. ऋतम्। सप्तम्यर्थे द्वितीया। ऋते यज्ञे मदीये। अथवा तृतीयपादः प्रथमपादानन्तरं योजयितव्यः। यो ब्रह्म कृणोति वरुणो यश्च प्रकाशादिकरणेन सर्वप्राणिनां व्यूर्णोति हृदयस्य मतिं घटादिविषयं ज्ञानं तं वयमीमहे। नव्यो जायतामृतेऽस्मदीय इति Sk.

३. V. Mādhava ignores वित्तं etc.

४. असौ यः असौ यः M.

५. प्रवाच्यं प्रकर्षेण वचनं यथा भवति तथा . . . निर्मितः। यथा सर्वैः प्राणिभिर्दृश्यते तथा वर्तमान इत्यर्थः Sy.

६. सततगामी। यद्वा ब्रह्मलोकं गच्छतामुपासकानां मार्गभूतः Sy.
पन्था इति पततेर्गत्यर्थस्य गन्तृवचनो न मार्गशब्दपर्यायः। . . . असौ य उदयास्तमयलक्षितेन मार्गेण गन्ता तद्वान् वाऽऽदित्यः Sk.

७. प्रकाशकरणार्थं . . . स्थापितः। ... केन? सामर्थ्यादादित्येनैव भवद्भिर्वा देवैर्वा विधात्रा वा Sk.

८. हे देवाः!

९. ०तु P. सोयमादित्यो युष्माभिरपि . . . अतिक्रमितुं न शक्यः। युष्मज्जीवनस्य तदायत्तत्वात्। सति हि सूर्ये वसन्तादयः काला निष्पद्यन्ते। कालेषु च यागाः क्रियन्ते। यागेषु च सत्सु भवतां जीवनम्। अतो युष्माभिरप्यसौ नातिक्रमितव्यः Sy. अतिक्रमयितव्यः? (अतिक्रमितव्यः)। केन। सामर्थ्यादादित्येनैव। तमादित्यो नातिक्रामतीत्यर्थः Sk.

१०. शक्यं न M.

११. तं महानुभावं सूर्यम् Sy.
तमादित्यं तत्पथं वा Sk.

१२. पापकृतो मनुष्याः . . . न जानीथ। एतच्च कूपे पातयित्वा निर्गतावेकतद्वितौ प्रति निन्दनम्। अहमेव मन्त्रद्रष्टा तं सूर्यं जानामि, पापकृतौ युवां न जानीथः Sy.

१३. न जानीथ। अहं सम्यङ् न जानामीत्यर्थः Sk.

१४. पश्याभ्यु० M.

१५. V. Mādhava ignores वित्तं etc.

* हवते PP.

१६. एष M.

त्रितश्च[1]। कूपे। पतितः सन्[2]। देवान्। हवते[3] स्म। रक्षणाय[4]। तदानीं तस्य वचनम्। बृहस्पति[5]रेव। शुश्राव। तस्याह्वानात्[6]। तस्य। विस्तीर्णं[7] गमन[8]मार्गम्। कृण्वन्[9][10]।

**अ॒रु॒णो मा॑ स॒कृद्वृकः॑ प॒था यन्तं॑ द॒दर्श॒ हि ।**
**उज्जि॑हीते नि॒चाय्या॒ तष्टे॑व पृष्ठ्याम॒यी वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥१८॥**

**अरुणो मा।** तृषितं माम्[11]। मार्गेण[12]। गच्छन्तम्[13]। पृष्ठतः स्थितः कश्चिदरुणः[14]। वृकः[15]। ददर्श[16]। हि[17]। दृष्ट्वा च[18] गमनार्थमुज्जिहीते[19]। यथा तष्टाऽनवरततक्षणात्। जातपृष्ठवेदनः सन्नुत्तिष्ठति तद्वदिति। यास्कपक्षे तूदितश्चन्द्रमा इति मन्त्रार्थस्तदुक्तम्—

---

१. एतत्संज्ञ ऋषिः Sy. त्रितो नार्माषः Sk.
२. स P. पातितः Sy.
३. स्तुतिभिराकारयति Sy.
यदि कुत्सस्येदमार्षं ततोऽविरुद्ध एव परोक्षरूपेण प्रथमपुरुषेण निर्देशः। अथ तत् (?) त्रितस्येदमार्षं तत आत्मन एव परोक्षरूपेण प्रथमपुरुषेण निर्देश इति व्याख्यातव्यम्। अहं त्रितनामा देवानाहूतवानित्यर्थः Sk.
४. अस्मिन् मानसे यज्ञे सोमेन तर्पणाय पालनाय वाऽऽत्मनः Sk. ५. बृहतां महतां देवानां रक्षक एतत्संज्ञो देवः Sy.
६. अंहसः पापरूपादस्मात् कूपपातादुन्नीय Sy. अंहुशब्दोऽहश्शब्दपर्यायः। तद्वानंहुरः। कः पुनरसौ? यदि रक्षणमत्र विवक्षितं ततः पापकर्मकारित्वाद् वृकः। अथोत्तरणं तत उद्वेगकरैस्तृणादिभिरुपेतत्वात् कूपः। अंहूर एवांहूरणः। . . . पापकर्मकारिणो वृकाद् उद्वेगकरतृणाद्युपेताद् वा कूपादित्यर्थः Sk. अंहुरोंऽहस्वान्। अंहूरणमित्यप्यस्य भवति N. 6. 27. ७. शोभनम् Sy. उरु। क्रियाविशेषणमेतत्। विस्तीर्णम्। रक्षितुमुत्तारयितुं वा चिरमित्यर्थः Sk.
८. गमन is omitted by D.
९. हेतावयं शतृप्रत्ययो द्रष्टव्यः। प्रयोजनस्य हेतुत्वेन विवक्षा। करणेन हेतुना। कर्तुमित्यर्थः। किम्? सामर्थ्याद्रक्षणं वोत्तारणं वा। क्रियासामान्यत्वाद् वा करोतिरेव रक्षणार्थ उत्तारणार्थो वा। रक्षितुमुत्तारयितुं वेत्यर्थः Sk.
१०. V. Mādhava ignores वित्तं etc.
११. ०तां M. १२. स्वगृहगमनमार्गेण Sk.
१३. गृहं प्रति Sk. १४. लोहितवर्णः Sy.
१५. वृकोऽरण्यश्वा Sy. १६. ददशु M.
१७. हिः पादपूरणः. . . हिरवधारणे। नक्षत्रगणमेव ददर्श न कूपपतितं मामित्यनादरो द्योत्यते। यदि मां पश्येत्, उद्धरेत् कूपात्। निचाय्य नक्षत्रगणं दृष्ट्वा चोज्जिहीते। येन नक्षत्रेण संयुज्यते तेन सहोद्गच्छति। न मामभिगच्छतीत्यर्थः Sy. हिशब्दस्तु पदपूरणः Sk.
१८. चाग० D. च is omitted by M. दृष्ट्वा च मां जिघृक्षुः सन् Sy.
१९. उद्गच्छति स्म। . . . यद्वा वृक इति विवृतज्योतिष्कश्चन्द्रमा उच्यते। अरुण आरोचमानः, कृत्स्नस्य जगतः प्रकाशकः, मासकृद् मासार्धमासर्त्वयनसंवत्सरादीन् कालविशेषान् कुर्वन्। तिथिविभागज्ञानस्य चन्द्रगत्यधीनत्वात्। स चन्द्रमा आकाशमार्गे यन्तं गच्छन्तं नक्षत्रगणं ददर्श Sy.
भूते चात्र लट् द्रष्टव्यः। . . . दृष्ट्वा चोर्ध्वमगमत्। उदित इत्यर्थः Sk.

"वृकश्चन्द्रमा भवति[1] विवृतज्योतिष्को वा[2] विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा। . . .अरुण आरोचमानो[3] मासानां चार्धमासानां[4] च कर्ता[5] चन्द्रमाः। वृकः पथा यन्तं[6] ददर्श[7] नक्षत्रगणमभिजिहीते निचाय्य[8] येन येन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव[9] पृष्ठरोगी"[10] इति।[11]

**ए॒नाङ्गू॒षेण॑ व॒यमिन्द्र॑वन्तो॒ऽभि ष्या॑म वृ॒जने॒ सर्व॑वीराः।**
**तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥१९॥**

एनाङ्गूषेण[12]। अनेन। स्तोत्रेण[13]। वयम्। इन्द्रवन्तः[14] सन्तः। अभिभवेम। युद्धे[15] शत्रून्। अखण्डितास्मदीयवीराः[16]। अत्र वदन्ति—

१. इति M.
२. विकृतज्योतिष्को वा omitted by M.
३. Yāska reads आरोचनः | and adds मासकृत् after आरोचनः
४. Omitted by P.
५. कर्ता (भवति) N. 5. 21.
६. ०यन्त P.
७. दर्श M.
८. निवार्य P. D.
९. ०स्तदक्ष्णु० M. ०न्निर० P.
१०. ०रोगिति P. ०रोहीगीति M. N. 5. 20, 21.
११. V. Mādhava ignores सकृत् and वित्तं etc.
सकृत्, एकवारम्...अत्र मासकृदिति यास्क एकं पदं मन्यते, शाकल्यस्तु पदद्वयम्। तस्मिन्पक्षेऽयमर्थः—दक्षप्रजापतेर्दुहितृभूताः स्वभार्या अश्विन्याद्यास्तारकाः पुनः पुनर्ददर्श। मां सकृदेव पश्यतीति सकृद् दृष्ट्वा चोज्जिहीते। ताराभिः सहोर्ध्वमेव गच्छति। न मां कूपादुत्तारयति। अत इदमनुचितम्। हे द्यावापृथिव्यौ मदीयमिमं वृत्तान्तं जानीतम् Sy.
१२. आङ्गूषः स्तोम आघोषः . . . अनेन स्तोमेन वयमिन्द्रवन्तः N. 5. 11.
१३. आघोषणयोग्येन स्तोत्रेण हेतुभूतेन Sy.
अङ्गशब्दः शरीरावयववचनः। उष दाहे। अङ्गान्योषति दहतीत्यङ्गोषोऽन्धकूपः। स हि सम्बाधत्वात् पीडयत्यङ्गानि। अङ्गोष एवाङ्गूषः।...अङ्गूषे भव आङ्गूषः सोमः। अथवा आघोष्यतेऽसावित्याघोषः स्तोमः। आघोष एवाङ्गूषः। छान्दसौ वर्णागमव्यत्ययौ। ...अनेन कूपे प्रकल्पितेन सोमेन स्तोमेन वा हेतुना Sk.
१४. इन्द्रः P.
अनुग्राहकेणेन्द्रेण युक्ताः Sy.
इन्द्रः सहायभूतो येषां ते इन्द्रवन्तः। इन्द्रेणानुगृह्यमाणा इत्यर्थः Sk.
१५. बुद्धे P.
वृज्यते दोषैरिति वृजनोऽविगुणो यज्ञः। तत्र। अथवा वृजनशब्दो बलनामसामर्थ्यादन्तर्णीतमत्वर्थः। सेनालक्षणेन बलेन तद्वति सङ्ग्राम इत्यर्थः Sk.
१६. ०विराः M.. सर्ववीरैः पुत्रैः पौत्रादिभिश्चोपेताः सन्तः Sy.

त्रितं गास्त्वनुगच्छन्तं[1] क्रूराः सालावृकीसुताः ।
कूपे प्रक्षिप्य गाः[2] सर्वास्तत[3] एवापजह्रिरे ॥
स तत्र सुषुवे सोमं मन्त्रविन्मन्त्रवित्तमः[4] ।
देवांश्चाहूतवान्[5]सर्वांस्तच्छुश्राव[6] बृहस्पतिः[7] ॥
बृहस्पतिप्रचोदिता विश्वे देवगणास्त्रयः ।
जग्मुस्त्रितस्य तं यज्ञं भागांश्च जगृहुः सह[8] ॥ इति ॥
कुत्सश्च कूपे पतितस्तेनैवेहानुधावति[9] ।
सूक्तेन त्रितदृष्टेन[10] स्वयं वा दृष्टवानिदम्[11] ॥
त्रित एवाथवा द्रष्टा ननु कुत्सस्य दर्शने ।
विरुध्यतेऽरुणो मेति माशब्दस्तत्र का गतिः ॥
उच्यते पदकारस्य त्रितस्यार्षमिदं मतम् ।
अन्यथाऽपि पदच्छेदस्तत्र यास्केन दर्शितः ॥ इति[12] ॥

## I.106.

**इन्द्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे ।**
**रथं न दुर्गाद्वसवः* सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन† ॥१॥**

इन्द्रं मित्रम् । कुत्सः । इन्द्रादीन्[13] । मारुतं च । वेगम्[14] । रक्षणार्थम्[15] । हवामहे । एषु चाहूय[16]-

---

१. न्तः M.
२. Missing in M.
३. सर्वा . . . स्त० M.
४. मनूपं म० P. मन्त्रवन्म० D. मन्त्रवन्मन्त्रवत्तमः M.
५. ०श्च हू० P.
६. श्रुत्वा व P. शुश्राय M.
७. ०ति D.
८. BD. III. 132, 133, 136.
९. ०धावेति P.
१०. नित्यदृ० M.
११. ०वादिनम् M.
१२. V. Mādhava ignores तत् । नः etc.
Ms. D. puts the figure ॥१०५॥ here to indicate the end of one hundred and fifth hymn. No such number is given in P. and M.
* दुःऽगात् । PP.
† निः । पिपर्तन । PP.
१३. इन्द्रदं P.
१४. मरुत्समूहरूपं बलञ्च Sy. शर्धः सेनालक्षणं बलम् Sk.
१५. तर्पणाय पालनाय वात्मनः Sk.
१६. चाभूय० M.

मानेषु यूयं च वसवः[1] ! रथम्[2]। इव सारथयः। दुर्गाद्। अस्मान्[3]। सर्वस्मात्। पापात्। निष्पारयत[4][5]।

**त आ॑दि॒त्या आ ग॑ता स॒र्वता॑तये भू॒त दे॑वा वृत्र॒तूर्ये॑षु श॒म्भुवः॑ ।**
**रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥२॥**

त आदित्याः। ते यूयम्[6]। आदित्याः ! आगच्छत। वज्राय[7]। भवत च। देवाः। सङ्ग्रा-मेषु। सुखस्य[8] भावयितारः[9]।

**अव॑न्तु नः पि॒तरः॑ सुप्रवाच॒ना उ॒त दे॒वी दे॒वपु॑त्रे ऋता॒वृधा॑ ।**
**रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥३॥**

अवन्तु नः। रक्षन्तु। अस्मान्। पितरः[10]। सुस्तोत्राः[11]। अपिच। देव्यौ द्यावापृथिव्यौ। यज्ञस्य[12] वर्धयित्र्यौ। ययोः सर्वे[13] देवाः पुत्राः[14]।

**नरा॒शंसं॑ वा॒जिनं॑ वा॒जय॑न्नि॒ह क्ष॒यद्वी॑रं पू॒षणं॑ सु॒म्नैरी॑महे ।**
**रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥४॥**

नराशंसम्। अग्निं[15] वयम्। हविष्मन्तम्[16]। अर्चयन्तः[17]। अस्मिन्[18] कर्मणि।

---

१. निवासयितारः Sy.
२. गन्तुमशक्यान्निम्नोन्नतात् स्थानात् सारथयो यथा रथं पालयन्ति तद्वत् Sy. यथा रथी दुर्गात् प्रदेशाद्रथं रक्षत्येवम् Sk. ३. अस्मात् D. M.
४. ०य M. निर्गमय्य पालयत Sy. निश्चयेन पालयत रक्षत। यथा वयं केनचिदपि पापेन न सम्बध्यामहे तथा कुरुतेत्यर्थः Sk.
५. V. Mādhava ignores सुदानवः etc. सुदानवः शोभनदानाः Sy.
६. के M. यान् परया भक्त्याऽऽह्वयामि ते Sk. ७. सर्वैर्वीरपुरुषैस्तताय विस्तारिताय युद्धाय। युद्धेऽस्माकं साहाय्यं कर्त्तुमित्यर्थः Sy. सर्वस्मा अस्मद्यागाय। अथवा तनोतेस्तातिशब्दो यागसन्ततिवचनः। सर्वस्यै यागसन्तत्यै। सर्वानस्मद्यागानविघ्नेन सम्पादयितुमित्यर्थः Sk. ८. शत्रुजयलक्षणं सुखमस्मान् प्रापयतेत्यर्थः Sk.
९. V. Mādhava ignores रथं etc.
१०. अग्निष्वात्तादयः Sy.
११. सुखेन प्रवक्तुं स्तोतुं शक्याः Sy.
१२. सत्यस्य यज्ञस्य वा Sy. सत्यस्य यज्ञस्योदकस्य वा स्वेन स्वेन व्यापारेण Sk.
१३. सर्व P. D. देवाः सर्वे पुत्रस्थानीया ययोस्ते Sy. देवानां मातृभूते इत्यर्थः Sk.
१४. V. Mādhava ignores रथं etc.
१५. नरैः शंसनीयम् Sy. नराशंसोऽग्निर्यज्ञो वा। तम् Sk.
१६. अन्नवन्तम् Sy. हविर्लक्षणेन स्तोतृभ्यो देयेन वाऽन्नेन तद्वन्तम् Sk.
१७. उपवाजयन्,प्रज्वलयन् Sy. स्तुवन्तः Sk.
१८. इहास्मिन्काले स्तौमीति शेषः Sy.

क्षपितवीरं[1] बलिनम्। पूषणं च।[2]

बृहस्पते सदमिन्नः सुगं कृधि शं योर्यत्ते मनुर्हितं तदीमहे ।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥५॥

बृहस्पते[3]। बृहस्पते! सदा। एव। अस्माकम्। सुखम्। कुरु। यत्। तव। शं[4] च। योश्च[5]। मनुष्यहितम्[6]। तत्। याचामहे[7]।

इन्द्रं कुत्सो वृत्रहणं* शचीपतिं काटे निबाळ्ह ऋषिरह्वदूतये ।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥६॥

इन्द्रं कुत्सः। इन्द्रम्। कूपे। पतितः कूपे[8] निबध्यमानो[9] वा। कुत्सः। ऋषिः। कर्मपतिम्[10]।

---

१. अतिबलिनं यस्मिन् सर्वे वीराः क्षीयन्त एवंरूपं पूषणं पोषकं देवम् Sy.
वीराणां निवासयिता क्षयद्वीरः। . . . पूषा ह्यस्तं गच्छन् सर्ववीरान् स्वे स्वे स्थाने निवासयति। तेनासौ क्षयद्वीर इत्युच्यते। तं क्षयद्वीरम् Sk.

२. V. Mādhava ignores सुम्नैः। ईमहे and रथं etc.
सुम्नैः सुखकरैः स्तोत्रैर्हेतुभूतैः, ईमहे याचामहे, अभीष्टं प्रार्थयामहे Sy.

३. ०तेः M.

४. शमनीयानां रोगाणामुपशमनम् Sy.
कस्य? सामर्थ्यादुत्पन्नानामनिष्टानां रोगादीनाम् Sk.

५. पृथक्कर्तव्यानां भयानां यावनं पृथक्करणम् Sy.
यौतिः पृथग्भावार्थः। पृथग्भावं च। असम्बन्धं चेत्यर्थः। केन? सामर्थ्यादुत्पित्सुभिरनिष्टैः। अथवा सुखमधिगम्यत इति सुगं सुलभमत्रोच्यते। शं योरित्येताभ्यां चास्य सम्बन्धः। स्वधिगममुत्पन्नरोगाद्युपशममुत्पित्स्वनिष्टासम्बन्धं च नः कुर्वित्यर्थः Sk.

६. मनुना ब्रह्मणा हितं त्वय्यवस्थापितम्। यद्वा मनुष्याणामनुकूलम्। एवंविधं शमनं यावनं च यदस्ति तत् Sy.

७. V. Mādhava ignores रथं etc.

* वृत्रऽहनम्। शचीऽपतिम्। PP.

८. काट इति कूपनाम। तस्मिन्... निपातितः Sy.

९. निबाळ्हः। बाहृ प्रयत्ने। नीत्युपसर्गवशात् पतने वर्तते Sy.
अतिशयेन बाध्यतेऽसाविति निबाळ्हः। कूपेऽतिसम्बाधत्वात् कूपस्यातिशयेन बाध्यमानस्त्रितो नामापर ऋषिराहूतवानित्यर्थः Sk.

१०. ति M. शचीति कर्मनाम। सर्वेषां कर्मणां पालयितारम्। यद्वा शच्या देव्या भर्तारम् Sy.
शचीपतिम्। शच्याख्यायाः स्वभार्याया भर्तारम्। कर्मनाम वा शचीशब्दः। सर्वयागकर्मणामधिपतिम् Sk.

शत्रूणां[1] हन्तारम्[2]। रक्षणाय[3]। अह्वत्[4]।

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन्*।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥७॥

देवैर्न। देवैः[5] सह। देवी[6]। अदितिः[7]। अस्मान्[8]। रक्षतु। देवः[9]। त्राता[10] सविता च। त्रायताम्[11]। अप्रमाद्यन्निति[12]।

I.107.

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयन्तः।
आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासत्† ॥१॥

यज्ञो देवानाम्। यज्ञः[13]। देवानाम्। प्रति। गच्छति[14]। आदित्याः[15]। भवत[16]। सुखयन्तः[17]। युष्माकम्[18]। अस्मद्विषया[19]। सुमतिः[20]। पुनः पुनरावर्तताम्। अत्यन्तपापस्य[21]। अपि दरिद्रस्य।

---

१. वृत्रस्य हन्तारम् Sk.
२. तर्पणाय पालनाय वाऽऽत्मनः Sk.
३. द्वितीयपादस्थमह्वदित्याख्यातं साकाङ्क्षत्वात् प्रथमपादेऽप्यनुषङ्क्तव्यम्। इन्द्रं कुत्सोऽह्वद् आहूतवान् कुत्सनामायमृषिः। आत्मन एवायं परोक्षरूपेण प्रतिनिर्देशः। अहं कुत्साख्य ऋषिराहूतवानित्यर्थः Sk.
४. V. Mādhava ignores रथं etc.
* अप्रऽयुच्छन्। PP
५. दानादिगुणयुक्तैः स्वकीयैः पुत्रैः सह Sy.
६. दानादिगुणयुक्ता Sy.   ७. अतर् P. अखण्डनीया, अदीना वा देवमाता Sy.
८. अस्माद् D. अस्माद्रस्माद् P.
९. दीप्यमानः Sy.   देवश्च सविता वाऽऽदित्यो वाऽन्यो वा कश्चित् Sk.
१०. त्रता P. सर्वेषां रक्षकः Sy. सर्वप्राणिनां त्राता Sk.
११. अस्मद्रक्षणे जागरूकः सन्...युच्छ प्रमादे Sy.
१२. V. Mādhava ignores नि and तत्। नः etc.
Ms. D. puts the figure ॥१०६॥ here to indicate the end of the one hundred and sixth hymn. No such number is given in P. and M.
† वरिवोवित्ऽतरा। असत्। PP.
१३. अयम्मदीयः Sk.
१४. इन्द्रादीनां...सुखं...प्राप्नोतु Sy.
१५. ०त्य P.
१६. अथवा भवतेति भवतिः सामर्थ्यात् प्राप्त्यर्थः। प्राप्नुत। इमं यज्ञमागच्छतेत्यर्थः Sk.
१७. अस्मान् Sy.
१८. न्यु० P. D. M.
१९. अस्मदभिमुखी Sy; Sk.
२०. शोभना मतिर्भद्रानुग्रहपरा बुद्धिः Sy. शोभनानुग्रहात्मिका बुद्धिः Sk.
२१. निकृष्टस्यापि यष्टुरित्यर्थः Sk.

या। अत्यन्तं[1] धनस्य लम्भयित्री।[2] भवति।[3][4]

**उप॑ नो दे॒वा अव॒सा ग॑म॒न्त्वङ्गि॑रसां॒ साम॑भिः स्तू॒यमा॑नाः।**
**इन्द्र॑ इन्द्रि॒यैर्म॒रुतो॑ म॒रुद्भि॑रादि॒त्यैर्नो॒ अदि॑तिः॒ शर्म॑ यंसत्॥२॥**

उप नः। उपगच्छन्तु।[5] अस्मान्। देवाः। रक्षणेन[6] सह। अङ्गिरसाम्।[7] सामभिः।[8] स्तूयमानाः। इन्द्रः। बलैः।[9] मरुतश्च।[10] प्राणैः।[11] आदित्यैश्च।[12] अदितिः।[13] अस्मभ्यम्। सुखम्।[14] यच्छतु।[15]

**तन्न॒ इन्द्र॒स्तद्वरु॑ण॒स्तद॒ग्निस्तद॑र्य॒मा तत्स॑वि॒ता चनो॑ धात्।**
**तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धु॑ः पृथि॒वी उ॒त द्यौः॥३॥**

तन्न इन्द्रः।[16] तदस्मदभिलषितम्। अस्माकम्।[17] इन्द्रः। प्रयच्छतु।[18] अन्नम्।[19] एवमितरे[20] चेति।[21]

---

१. ०न्त M.

२. वरिव इति धननाम। अतिशयेन धनस्य लम्भयित्री Sy. निकृष्टायापि यष्ट्रे सा धनमतिशयेन ददातीत्यर्थः Sk.

३. सैषा मतिरस्मान् रक्षितुं वर्ततामित्यर्थः Sy.

४. V. Mādhava ignores सुम्नम्।

५. उपागच्छन्तु प्राप्नुवन्तु Sy.

६. रक्षमाणेन P. D. M. अस्मभ्यं दातव्येनान्नेन वा युक्ताः Sy. तर्पणेन वा Sk.

७. अस्माकमङ्गिरोऽपत्यभूतानां कुत्सप्रभृतीनां स्वभूतैः सामसम्बन्धिभिः सुखकरत्वादिना सादृश्येन सामसदृशैरेतैः स्तूयमाना इत्यर्थः Sk.

८. प्रगीतैर्मन्त्रैः Sy.

९. इन्द्रियैः। धननामैतत्। स्वसम्बन्धिभिरस्मभ्यं दातव्यैर्धनैः सहास्मानागच्छतु Sy.

१०. सप्तगणरूपा एकोनपञ्चाशत्संख्याकाः 'ईदृङ् चान्यादृङ् च' इत्येवमादिनामानो देवाः Sy.

११. स्वावयवभूतैः प्राणापानादिरूपेण वर्तमानैर्वायुभिः सहास्मानागच्छन्तु Sy. मरुद्भिरिति मरुत्साहचर्यान्मरुज्जुष्टा उच्यन्ते। ये मरुतां प्रियास्तैस्सह मरुत इत्यर्थः Sk.

१२. स्वकीयैः पुत्रैः सह Sy. इन्द्रजुष्टा अत्रेन्द्रियशब्देनोच्यन्ते। य इन्द्रस्य प्रिया देवास्तैस्सहेन्द्र इत्यर्थः Sk.

१३. अखण्डनीया, अदीना वा देवमाता Sy.

१४. गृहं वा Sk.

१५. V. Mādhava ignores आ

१६. यद्वयं प्रार्थयामहे पुष्टिकरमुत्कृष्टं वा Sk.

१७. अस्मभ्यम् Sk.

१८. Omitted by P.

१९. नम् P. चन इत्यन्ननाम ... यदस्माभिः प्रार्थ्यमानमन्नमस्ति Sy.

२०. एमितरे P.

२१. V. Mādhava ignores तत्। नः etc. Ms. D. puts the figure ॥१०७॥ here to indicate the end of one hundred and seventh hymn. No such number is given in P. and M.

I. 108.

य इ॑न्द्राग्नी* चि॒त्रत॑मो॒ रथो॑ वाम॒भि विश्वा॑नि॒ भुव॑नानि॒ चष्टे॑ ।
तेना या॑तं स॒रथं॑† तस्थि॒वांसाथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥१॥

य इन्द्राग्नी। यः[1]। इन्द्राग्नी ! पूज्यतमः[2]। रथः। युवयोः। सर्वाणि। भुवनानि[3]। अभि-विचष्टे[4]। तेन रथेन। आगच्छतम्[5]। एकरथम्[6]। अधितिष्ठन्तौ। अथ। सोमम्[7]। पिबतम्। सुतमिति।

याव॑दि॒दं भुव॑नं॒ विश्व॒मस्त्यु॑रु॒व्यचा॑ वरि॒मता॑ गभी॒रम् ।
तावाँ॑ अ॒यं पात॑वे॒ सोमो॑ अ॒स्त्वर॑मिन्द्राग्नी॒ मन॑से यु॒वभ्या॑म् ॥२॥

यावदिदम्। यावत्। इदम्[8]। भुवनम्[9]। सर्वम्[10]। भवति। बहुव्याप्तिकेन[11]। पृथुत्वेन[12]। गम्भीरं[13] यावत्परिमाणमिदं दृश्यमानं त्रैलोक्यात्मकं भुवनमस्ति सकलम्। अयम्[14]। सोमः। तावान्[15]। अस्तु। युवयोः पानाय यथा। युवयोः। मनसे[16]। पर्याप्तं[17] भवत्येतस्य यजुषो वीर्येण।

---

* इ॒न्द्रा॒ग्नी इति॑। PP. Stanzas 1-5, 7-13.

† त॒स्थि॒ऽवांसा॑। PP.

१. Omitted by P.

२. अतिशयेन चायनीयः Sy. विचित्ररूपो वा Sk.

३. भूतजातानि Sy. भुवनशब्दोत्र लोकवचनः। सर्वाँल्लोकान् Sk.

४. आभिमुख्येन पश्यति। सुवर्णमयत्वाद् रत्नखचितत्वाच्च स्वप्रभाभिः कृत्स्नं जगद् भासयतीत्यर्थः Sy. अभिपश्यति। अगतस्य दर्शनासम्भवाद् दर्शनेनात्र तद्धेतुभूतं गमनं लक्ष्यते। सर्वाँल्लोकान् गच्छति। न क्वचिदस्य गतिः प्रतिहन्यत इत्यर्थः। अथवा भुवनशब्दोऽपि भूतवचन एव सामर्थ्याच्च यष्टृभूतेषु वर्तते नान्येषु। यागकारीणि यानि भूतानि तानि सर्वाण्यभिपश्यति। सर्वेषां यज्ञेषु गच्छतीत्यर्थः Sk.

५. अस्मद्यज्ञम् Sy.

६. युगपदेवास्थितवन्तौ युवामागच्छतं न पर्यायेणेत्यर्थः Sy.

७. ऋत्विग्भिरभिषुतं सोमस्य. . . स्वांशलक्षणं तदेकदेशं वा Sy. द्वितीयार्थे वा षष्ठी। षष्ठीश्रुतेर्वैकदेशमिति शेषः। सोममभिष्टुतं सोमस्य वाभिष्टुतस्यैकदेशं स्वांशलक्षणं पिबतमित्यर्थः Sk.

८. यावत्प्रमाणं भवति Sy.

९. उदकनामैतत्। उदकम् Sk.

१०. एकीभूतं सत् Sk.

११. विस्तीर्णव्यापनम्। सर्वव्यापकमित्यर्थः . . . उरुव्यचा। व्यच व्याजीकरणे Sy.

१२. वरिम्णा उरुत्वेनात्मीयेन गौरवेण Sy.

१३. गाम्भीर्योपेतम् Sy. अगाधं चेत्यर्थः Sk.

१४. यं M.

१५. तावत्प्रमाणो भवतु Sy.

१६. युवयोरन्तःकरणाय Sy. मनश्शब्देनात्र तत्प्रभवत्वात् प्रीतिरुच्यते। . . . प्रीत्यर्थमित्यर्थः Sk.

१७. स सोमः पर्याप्तो भवतु Sy.

"यावदेका देवता कामयते यावदेका तावदाहुतिः प्रथते नहि तदस्ति यत् तावदेव स्याद् यावज्जुहोति[1]" इति तैत्तिरीयकम्।

"अपि गिरिमात्रं वर्धते तथा[2] परिमितमेव[3] च" इति वाजसनेयकमिति।

**चक्राथे[*] हि सध्र्य१ङ्नाम[†] भद्रं सध्रीचीना वृत्रहणा[‡] उत स्थः।**
**ताविन्द्राग्नी सध्र्यञ्चा निषद्या[§] वृष्णः सोमस्य वृषणा[¶] वृषेथाम् ॥३॥**

चक्राथे हि। इन्द्रोऽग्निरित्येतन्नामद्वयम्[4]। कल्याणम्। सहाञ्चनम्[5]। कृतवन्तावैक्यात्[6]। तथा युवाम्। सहागमनौ[7] च भवथः। उपद्रवाणां[8] हन्तारौ[9]। ताविदानीमस्मद्वेद्याम्[10]। सङ्गतौ सन्तौ। उपविश्य[11]। वर्षितारम्[12]। सोमम्[13]। वर्षितारौ! आसिञ्चतं[14] जठर इति[15]।

**समिद्धेष्वग्निष्वानजाना यतस्रुचा बर्हिरु तिस्तिराणा।**
**तीव्रैः सोमैः परिषिक्तेभिरर्वागेन्द्राग्नी[+] सौमनसाय यातम् ॥४॥**

समिद्धेषु। समिद्धेषु[16]। अग्निषु[17]। व्याप्रियमाणौ[18]। अध्वर्यू[19]। बर्हिश्चासनाय भवतोः[20]। तरन्तौ[21]।

---

१. यावाव० P. २. तदा M. तथो D.
३. ०मिव M.
* चक्राथे इति। PP.
† सध्र्यक्। नाम। PP.
‡ वृत्रऽहनौ। PP. § निऽसद्य। PP.
¶ वृषणा। आ। PP.
४. उदकनामैतत्। वृष्टिलक्षणमुदकम् Sk.
५. सथाञ्जनं M. सहगतमिन्द्राग्नी इत्येवं संयुक्तम् Sy. सध्र्यक् सहगामी। सर्वत्र च युगपद् यातीत्यर्थः Sk.
६. ०वैत्यात् M. यौ चक्राथे वृत्रहननहविर्नयनादिना स्वेन व्यापारेण कुरुथः कृतवन्तौ वा Sk.
७. सभाग० M. सहाञ्चन्तौ वृत्रवधार्थं सङ्गतौ Sy. सहगामिनौ च यज्ञान् प्रति Sk. ८. वृत्रस्य Sk.
९. वृत्रस्यासुरस्य हन्तारौ Sy.
१०. तविदा० D. ११. वेद्याम् Sy.
१२. सेक्तुः सोमस्यात्मीयं भागम् Sy. वृष्टिहेतुत्वात् सोमो वृषोच्यते।... वर्षितारं सोमं वर्षितुर्वा सोमस्यैकदेशं स्वांशलक्षणम् Sk.
१३. कामानां वर्षितारौ Sy.
१४. स्वकीय उदर आसिञ्चेथाम्... वृष सेचने Sy. पिबतमित्यर्थः Sk.
१५. V. Mādhava ignores हि। इन्द्राग्नी।
+ परिऽसिक्तेभिः। अर्वाक्। आ। PP.
१६. अन्वाधानादिना... सम्यगिद्धेषु दीप्तेषु सत्सु Sy. आहवनीयादिषु Sk.
१७. गार्हपत्यादिषु Sy.
१८. हवींष्याज्येनाञ्जन्तौ ... आनजाना। अञ्जू व्यक्तिम्रक्षणगतिषु Sy. अञ्जेर्गत्यर्थस्येदं रूपम्। आगतवन्तौ Sk.
१९. तदनन्तरं यागार्थं गृहीतस्रुचौ Sy. सर्वैर्यजमानैरुद्यताः स्रुचो ययोरर्थाय तौ यतस्रुचौ Sk.
२०. बहिश्चा० D. M. बर्हिश्वस० P. वेद्यां बर्हिरपि Sy.
२१. आस्तीर्णं कृतवन्तौ, अध्वर्युं प्रति प्रस्थातारौ, एवंभूतावभूताम् Sy. तिस्तिराणा इत्यप्यृत्विक्कर्तृकस्यापि स्तरणस्य हेतुभूतत्वाद् इन्द्राग्नी एव कर्तारावुच्येते। बर्हिः स्तीर्णवन्तौ Sk.

तीव्रान्[१]। सोमान्[२]। परितः[३] पात्रेषु सिक्तान्[४] पातुमस्माकम्। सौमनसं[५] च प्रकाशयितुम्। इन्द्राग्नी ! अभिमुखम्[६]। आगच्छतम्[७]।

**यानीन्द्राग्नी चक्रथुर्वीर्याणि यानि रूपाण्युत वृष्ण्यानि।**
**या वां प्रत्नानि सख्या शिवानि तेभिः सोमस्य पिबतं सुतस्य ॥५॥**

यानीन्द्राग्नी। यानि। वृत्रवधादीनि[८]। इन्द्राग्नी ! कृतवन्तौ[९]। यानि च। नानाशरीराणि[१०]। अपिच। कामप्रदानि[११]। यानि च। युवयोरस्माभिः। पुराणानि। शिवतमानि। सख्यानि[१२]। तैः सर्वैर्हेतुभिः[१३]। सोमम्। पिबतम्। सुतमिति।

**यदब्रवं प्रथमं वां वृणानो३ऽयं* सोमो असुरैर्नो विहव्यः।**
**तां सत्यां श्रद्धामभ्या हि यातमथा सोमस्य पिबतं सुतस्य ॥६॥**

यदब्रवम्। अभिलषितम्[१४]। युवाम्। वृणानः[१५]। प्रथममेवाहं[१६] यत्करिष्यामीति[१७]। प्रत्यज्ञासि-[१८]

---

१. क्षिप्रं मदकरैः Sy.
तीव्रशब्दः कटुकवचनस्तिक्तवचनो वा।
...कटुकरसैस्तिक्तरसैर्वा Sk.

२. सोमैः Sk. ३. परितः सर्वेषु ग्रहचमसादिष्वासिक्तैः सोमैर्हेतुभूतैः Sy.

४. परिषिक्तशब्दोऽपि दशापवित्रे सर्वतः सिक्तत्वाद् दशापवित्रपरिपूतवचनः।... परिपूतैः। तीव्रादिगुणान् सोमान् पातुमित्यर्थः Sk.

५. सौमनस्यायास्माकमनुग्रहायेत्यर्थः Sy.
आत्मनोऽस्माकं वा प्रीत्यर्थम् Sk.

६. The passage beginning with तीव्रान् and ending with आगच्छतम् is omitted by P. and D.

७. V. Mādhava ignores उ

८. ०धानि M. वीरकर्माणि Sk.

९. The passage beginning with यानीन्द्राग्नी and ending with कृतवन्तौ is omitted by P. and D.

१०. निरूप्यमाणानि गवाश्वादीनि भूतजातानि।...इन्द्राग्निभ्यां हि सर्वं जगत् सृज्यते। इन्द्रः सूर्यात्मना वृष्टिं सृजत्यग्निश्चाहुतिद्वारा वृष्ट्युत्पादकः। वृष्टेः सकाशात्सर्वे प्राणिन उत्पद्यन्ते Sy.
अतिशयवद्देवतामाहात्म्ययोग्यानि नानाप्रकाराण्यात्मनो रूपाणि Sk.

११. वृष्णि भवानि वृष्टिप्रदानादिरूपाणि कर्माणि कृतवन्तौ Sy.
वृष्ण्यमित्यपठितमपि बलनाम वृष्टिपर्यायो वा। बलानि वृष्टीर्वा Sk.

१२. सं० M. १३. यस्माद् वीरकर्मकरणादियुक्तौ स्थस्तस्मादित्यर्थः Sk.

* वृणानः। अयम्। PP.

१४. स्तुतीः Sk. १५. सम्भजमानः Sy.
वरणमभ्यर्थना। स्तुतीरस्मदीयाः शृणुतमित्यभ्यर्थयमानः Sk.

१६. सोमेन प्रीणयिष्यामीति यदवोचम् Sy.

१७. यदिति सप्तम्या एकवचनस्य लुक्। यस्यां कर्मसन्ततौ Sk.

१८. ब्रवीम्यहम् Sk.

षम्। अयम्। सोमः। अस्माकम्। प्राज्ञैर्ऋत्विग्भिः[1]। विविधं युवाभ्यां होतव्यः[2][3]। तामिमां[4] मदीयाम्[4]। श्रद्धाम्। अभ्यागच्छतम्[5]। अथ। सोमम्। पिबतमिति श्रद्धधाने मय्यागत्य पिबतमिति[6]।

**यदिन्द्राग्नी मदथः स्वे दुरोणे यद्ब्रह्मणि राजनि वा यजत्रा।**
**अतः परि वृषणावा* हि यातमथा सोमस्य पिबतं सुतस्य ॥७॥**

यदिन्द्राग्नी[7]। यत्। इन्द्राग्नी![8] तृप्यथः[9]। स्वे। गृहे। यदि वा। ब्राह्मणेषु[10]। राजसु[11]। वा। यष्टव्यौ! तत्सर्वं परिहायेह[12]। आगच्छतम्। वर्षितारौ[13][14]!

**यदिन्द्राग्नी यदुषु तुर्वशेषु यद्द्रुह्युष्वनुषु पूरुषु स्थः।**
**अतः परि वृषणावा* हि यातमथा सोमस्य पिबतं सुतस्य ॥८॥**

यदिन्द्राग्नी यदुषु[15]। यदुप्रभृतयो[16] बहुयज्ञाः कुत्ससमकालीना इति।

---

१. हविषां प्रक्षेपकैः Sy.　२. ०व्यं M.
३. इतरथा व्यर्थः स्यात्। तस्मादिन्द्राग्नी आगच्छतमित्यर्थः Sy.
४. यथार्थां तां श्रद्धां श्रद्धयादरातिशयेन कृतामुक्तिम्. . .अभिलक्ष्य . . . आगच्छतमेव, नोदासाथाम् Sy. श्रद्धाशब्दोऽत्रान्तर्णीतमत्वर्थः। श्रद्धावतीम्। परया भक्त्या प्रारब्धामित्यर्थः Sk.
५. श्रद्धाम्। अभ्यागच्छतम्। अथ। omitted by P. अथ is omitted by M.
६. V. Mādhava ignores हि। सत्याम्। सुतस्य
* वृषणौ। आ। PP.
७. यद्रि Sk.
८. यत्। इन्द्राग्नी! omitted by M.
९. ०थ P.D.M.
१०. ब्राह्मणेऽन्यस्मिन्यजमाने हविःस्वीकरणायागत्य हृष्यथः Sy.
११. ०जा० P. क्षत्रिये युद्धे साहाय्यं कर्तुमागत्य हृष्यथः Sy. उभयत्र च षष्ठ्यर्थे सप्तमी। ब्राह्मणस्य राजन्यस्य वा गृह इत्यर्थः Sk.
१२. परितोऽस्मात् सर्वस्मात् स्थानात् Sy. परीति सर्वतोभावे। अतः सर्वत एतेभ्यः। सर्वेभ्यो गृहेभ्य इत्यर्थः Sk.
१३. परिहारौ P. कामानां वर्षितारौ।. . .औदासीन्यं मा कार्ष्टम् Sy.
१४. V. Mādhava ignores हि and अथ etc.
१५. अत्र यदुष्वित्यादीनि पञ्च मनुष्यनामानि। हे इन्द्राग्नी . . .यदि यदुषु नियतेषु परेषामहिंसकेषु मनुष्येषु . . . भवथः वर्तेथे।. . . यदि वा द्रुह्युषु द्रोहं परेषामुपद्रवमिच्छत्सु मनुष्येषु वर्तेथे। यदि वाऽनुषु प्राणत्सु सफलैः प्राणैर्युक्तेषु ज्ञातृष्वनुष्ठातृषु मनुष्येषु। अन्येषां हि प्राणा निष्फला ज्ञानहीनत्वादनुष्ठानाभावाच्च। तेषु यदि भवथः। तथा पूरुषु कामैः पूरयितव्येष्वन्येषु स्तोतृजनेषु यदि भवथः। अतः सर्वस्मात् स्थानाद् हे कामाभिवर्षकाविन्द्राग्नी आगच्छतम्। अनन्तरमभिषुतं सोमं पिबतम् Sy.
१६. पञ्चाप्येतानि राज्ञां नामधेयानि सोऽयमित्यभिसम्बन्धात्तदपत्ये प्रयुज्यन्ते। षष्ठ्यर्थे चात्र सर्वत्र सप्तमी। दुरोण इत्येतच्च पूर्वस्या ऋचोऽनुषज्यते। यदु इत्यादिभिरेव वा स्वामिशब्दैः स्वभूतानि गृहाण्युपलक्ष्यन्ते। यदुपुत्रगृहेष्वित्यर्थः Sk.

यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥९॥

यदिन्द्राग्नी अवमस्याम्[1]। अन्तरिक्षं मध्यमा[2] पृथिवी[3]। द्यौः[4] परमेति।

यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥१०॥

यदिन्द्राग्नी परमस्याम्[5]। प्रकारान्तरेणापि श्रद्धाप्रकाशनाह्वानम्।

यदिन्द्राग्नी दिवि ष्ठो यत्पृथिव्यां यत्पर्वतेष्वोषधीष्वप्सु ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥११॥

उत्तरा निगदव्याख्यातेति।

यदिन्द्राग्नी उदिता* सूर्यस्य मध्ये दिवः स्वधया मादयेथे† ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥१२॥

यदिन्द्राग्नी उदिता। उदयवेलायाम्[6]। यत्[7]। इन्द्राग्नी! कस्यचन यज्ञे[8]। सोमेन[9]। मदथः[10]। अथवाऽह्नो मध्ये। ततः कालादपि[11] मामेवागच्छतं सर्वदेति[12]।

---

१. पृथिव्यां सन्निकृष्टायामस्यां भूम्यां... वर्तमानौ भवथः Sy.

२. यदि वा मध्यमस्यां पृथिव्यामन्तरिक्षलोके Sy. मध्यमायामन्तरिक्ष इत्यर्थः Sk.

३. सन्निकृष्टायां पृथिव्याम्। अस्मिन्नेव लोक इत्यर्थः Sk.

४. अपिच परमस्यामुत्कृष्टायां दूरे वर्तमानायां पृथिव्यां द्युलोके यदि वा वर्तेथे। अतः सर्वस्मात् स्थानाद् हे वृषणौ! आगच्छतम्। आगमनानन्तरं सुतं सोमं पिबतम् Sy.
परमायां वा द्युलक्षणायाम् Sk.

५. पूर्वं भूम्यादिषु त्रिषु लोकेषु याविन्द्राग्नी तावागच्छतामित्युक्तम्। इदानीं तु द्युप्रभृतिष्ववरोहक्रमेण वर्तमानेषु त्रिषु लोकेषु याविन्द्राग्नी वर्तेते तावागच्छतामिति प्रार्थ्यते Sy.

* उत्ऽइता। PP.

† मादयेथे इति। PP.

६. आदित्योदयवेलायामित्यर्थः Sk.

७. यस्मात्कारणात् Sy. यदि Sk.

८. द्योतमानस्यान्तरिक्षस्य मध्ये Sy. अन्येषां यजमानानां गृहेषु Sk.

९. आत्मीयेन तेजसा हविर्लक्षणेनान्नेन वा Sy. १०. मदतो॰ P. तृप्यथः Sk.

११. सर्वस्मादन्तरिक्षभागात् Sy.

१२. V. Mādhava ignores सूर्यस्य। दिवः। वृषणौ। हि and अथ etc.

**एवेन्द्राग्नी पपिवांसा सुतस्य विश्वास्मभ्यं सं जयतं धनानि ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥१३॥**

एवेन्द्राग्नी। एवमुक्तेन प्रकारेणागत्य। सोमम्[1]। पीतवन्तौ[2]। अस्मभ्यम्। सर्वाणि। धनानि[3]। शत्रुभ्यः सह। जयतमिति[4]।[5]

## I.109.

**वि ह्यख्यं मनसा वस्य इच्छन्निन्द्राग्नी ज्ञास उत वा सजातान् ।**
**नान्या युवत्प्रमतिरस्ति मह्यं स वां धियं वाजयन्तीमतक्षम् ॥१॥**

वि ह्यख्यम्। मनसा[6] ऽहम्। अभ्युदयम्[7]। इच्छन्। वि। हि[8]। अपश्यम्[9]। किमित्याह—इन्द्राग्नी[10] एव मातृकुलजाताञ् ज्ञातीन्[11]। अपि। वा। सजातांश्च[12]। तावेवाहमपश्यं तथा सति युवाभ्यां विना। न। अन्येन देवेन दीयमाना[13]। प्रमतिः[14]। अस्ति। मह्यं तथा कृत्वा। अहम्। युवयोरेव।

---

१. सोमस्य स्वांशलक्षणमेकदेशम् Sk.

२. पिबन्तौ P.

३. अस्मभ्यं दातुमित्यर्थः Sk.

४. प्रयच्छतम् Sy.

५. V. Mādhava ignores इन्द्राग्नी। and तत्। नः etc.
Ms. D. puts the figure ॥१०८॥ here to indicate the end of one hundred and eighth hymn. No such number is given in P. and M.

६. बुद्ध्या Sy.

७. प्रशस्तं धनम् Sy. वसूनि धनानि Sk.

८. हिशब्दस्तु पदपूरणः Sk.

९. अमपश्यं P. अवपश्यं D. अपत्यं M.
युवामेव ज्ञातिरूपेण बन्धुरूपेण च व्यज्ञासिषम्। ते हि धनस्य दातारो भवन्ति Sy.
युवामहं विविधं पश्यामि Sk.

१०. ०ग्नीम् M.

११. अयोनिसम्बन्धा ये ज्ञातयस्त इह ज्ञास उच्यन्ते। योनिसम्बन्धास्सजाताः। व्यत्ययेन द्विवचनस्य स्थाने बहुवचनम्। ज्ञाती सजातौ च। युवामेव मम ज्ञाती युवामेव सजातावित्येवं पश्यामीत्यर्थः। अथवा ज्ञासः सजातानित्यनयोर्बहुवचनान्तत्वादिन्द्राग्निविषयत्वासम्भवात् कर्मश्रुतेश्च साकाङ्क्षत्वाद् अनावृत्त्येति योग्यक्रियापदाध्याहारः। ज्ञातीन् सजातींश्चानावृत्य युवां पश्यामीत्यर्थः Sk.

१२. समानजन्मानो ज्ञातिव्यतिरिक्ता बान्धवाः Sy.

१३. मदीया यैषा प्रकृष्टा बुद्धिः सा युवाभ्यामेव दत्ता Sy.

१४. प्रमतिः प्रकृष्टा बुद्धिः Sy.
किञ्च नान्या युवद् युवाभ्यामन्या देवता प्रमतिरस्ति मह्यम्। प्रमतिरिति मन्यतेरर्चतिकर्मणो रूपम्। कर्मणि चैष क्तिन् द्रष्टव्यः। मह्यमित्यपि षष्ठ्यर्थे चतुर्थी। प्रकर्षेण स्तुत्यास्ति मम। युवां मुक्त्वा नाहमन्या देवताः प्रकर्षेण स्तौमीत्यर्थः Sk.

अन्न[१]मिच्छन्तीमत्रप्रवणाम्। धियं[२] कर्म। करोमि[३]।

**अश्रवं हि भूरिदावत्तरा[*] वां विजामातुरुत वा घा स्यालात्।**
**अथा सोमस्य प्रयंती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ॥२॥**

अश्रवं[४] हि। अश्रौषम्। हि[५]। बहुदायितरौ[६]। वाम्। "विजामातुरधस्ता[७]ज्जामातुः[८]। विजामातेति शश्वद् दाक्षिणात्याः क्रीतापतिमाचक्षतेऽसुसमाप्तगुण इव वरोऽभिप्रेतः। अपि च स्यालात्[९]।" स्यं[१०] शूर्पं तस्माद्यो लाजानावपति[११] स स्यालः[१२] स भगिनीप्रीत्यर्थं बहुतरं[१३] प्रयच्छति तस्मादपि। अथ। सोमस्य। प्रदानेन। युवाभ्याम्[१४]। इन्द्राग्नी! स्तोमम्[१५]। जनयामि[१६]। नवतरम्[१६ १७]।

---

१. हविर्लक्षणेनान्नेन तद्वतीम्। हविस्संयुक्तामित्यर्थः Sk.

२. ध्यानेन निष्पन्नां स्तुतिम् Sy.
स्तुतिं कर्म यागलक्षणं वा। यागं स्तुतिं वेत्यर्थः Sk.

३. अकार्षम् Sy. कृतवान् वा Sk.

* भूरिदावत्ऽतरा। PP.

४. अश्रौषं हि बहुदातृतरौ वाम्। विजामातुः। असुसमाप्ताज्जामातुः। विजामातेति शश्वद्दाक्षिणात्याः क्रीतापतिमाचक्षते। असुसमाप्त इव वरोऽभिप्रेतः। जामाता। जा अपत्यम्। तन्निर्माता। उत वा घा स्यालात्। अपिच स्यालात्। स्याल आसन्नः संयोगेनेति नैदानाः। स्याल्लाजानावपतीति वा। लाजा लाजतेः। स्यं शूर्पं स्यतेः। शूर्पमशनपवनम्। शृणातेर्वा। अथ सोमस्य प्रदानेन युवाभ्यामिन्द्राग्नी स्तोमं जनयामि (नव्यं) नवतरम् N. 6. 9.

५. हिशब्दो यस्मादर्थे। यस्मादहम् Sk.

६. बहुधनस्य दातारौ Sy.
बहुनो धनस्य दातारौ Sk.

७. वयमपि जा० M.
श्रुताभिरूप्यादिभिर्गुणैर्विहीनो जामाता यथा कन्यावते बहु धनं प्रयच्छति कन्यालाभार्थं ततोऽप्यतिशयेन दाताराविन्द्राग्नी इत्यर्थः Sy.
जामातृशब्दोऽत्र तद्गुणोपलक्षणार्थो द्रष्टव्यः। धनवत्ताव्यतिरिक्ताः कुलीनत्वादयः। विगता जामातृगुणा यस्य स विजामाता क्रीतापतिरुच्यते। स हि विगुणत्वाद् धनेनोपप्रलोभयन्नतिशयेन बहु ददाति। ततो युवां बहुदातृतरौ Sk.

८. ०तुरमस्ताज्जा० P.
०तुरः समाप्ताज्जा० M.

९. Cf. N. 6. 9. V. M. reads अधस्तात् for असुसमाप्तात् of the N., adds गुणः to असुसमाप्त and omits the words जामाता ...स्यालात् of N. between अभिप्रेतः and अपि।
स्यं शूर्पं and लाजानावपति and the whole line अथ सोमस्य... नवतरम् occur in N.

१०. स्या शूर्पः P.

११. जालाना० P.

१२. स्यागः M.

१३. बहतु M.

१४. युष्मदर्थम् Sk.

१५. स्तोमं च करोमीत्यर्थः Sk.

१६. अन्यैरकृतपूर्वम् Sk.

१७. V. Mādhava ignores घ।

मा च्छेद्म *रश्मीँरिति नाधमानाः पितृणां शक्तीरनुयच्छमानाः ।
इन्द्राग्निभ्यां कं वृषणो मदन्ति ता †ह्यद्री धिषणाया उपस्थे ॥३॥

मा च्छेद्म । इन्द्राग्नी ! इत्थम् । याचमानाः[1] । पितृणाम्[2] । बलानि[3] । पितृपितामहादिवदनुक्रमेण वयमपि नियच्छन्तः[4] । रश्मीन्[5] पुत्रान्[6] । मा । छेद्मेति[7] पुत्रानाशास्ते । इन्द्राग्निभ्याम्[8] । अन्यं[9] कं[10] देवम् । ग्रावाणाः[11] । मदन्ति[12] । तौ । हि[13] शत्रूणां मादयितारौ[14] । सोमाभिषवसाधनभूताया[15] धिषणायाः[16] । समीपे[17] भवतः[18] ।

---

* रश्मीन् । इति । PP.

† हि । अद्री इति । PP.

१. यावमा० M.
इन्द्राग्न्योः सकाशात् तथाविधान् पुत्रादीन् याचमानाः Sy. सर्वदा यागक्रियां प्रार्थयमाना इत्यर्थः Sk.

२. पितृ० M.

३. शक्त्युत्पादकान् वीर्योत्पादकांस्तान् पुत्रादीन् Sy.
पितृणां च सम्बन्धीनि प्रजोत्पत्त्यादीनि कर्माणि Sk.

४. अनुबध्नन्तः । प्रजोत्पत्त्यादिकर्मसन्तानाविच्छेदार्थमित्यर्थः Sk.

५. रश्मिशब्दो रज्जुवाची । यथा रश्मयो दीर्घा अविच्छिन्ना भवन्ति, एवमविच्छिन्नान् पुत्रपौत्रादीन् Sy.

६. पुत्रा M.

७. ०दमे० P.
मा विच्छिन्नान् कुर्मेति ? (कुर्म इति) बुद्ध्या Sy.
य एते सर्वयजमानानां यागनिष्पत्त्यर्थं प्रकाशं कुर्वन्त्येतान् मा छेद्म माऽऽत्मनि विच्छिदाम रश्मीन् । कः पुना रश्मीनां विच्छेदः । यदर्थं ते प्रकाशं कुर्वन्ति तस्य यागस्य क्रियाघातं माकार्षम् । सततयागादहं सुयागान् कुर्यामित्यर्थः Sk.

८. इन्द्राग्निभ्यामर्थाय Sk. ९. ०न्यः M.

१०. कं सुखं यथा भवति तथा Sy.
कमिति पदपूरणः Sk.

११. सेक्तारः पुत्रोत्पादनसमर्थाः सपत्नीका इत्यर्थः । एवम्भूता यजमानाः Sy.
वर्षितारः सोमस्य । इन्द्राग्निभ्यां सोमस्य दातारः Sk.

१२. स्तुवन्ति Sy. स्तुवन्तीन्द्राग्नी Sk.

१३. यस्मात् ... यद्वा । निपातानामनेकार्थत्वाद् । हिशब्दो यदेत्यर्थः Sy.

१४. शत्रूनादृणन्तौ हिंसन्तौ विदारयन्तौ ताविन्द्राग्नी Sy. आदरयितारौ Sk.

१५. सोमभि० P.

१६. स्तुत्याः Sy.
स्तुतिलक्षणाया वाचः । तथा तथा स्तोतॄणामुपकुरुतं यथा यथैनौ स्तोतार आद्रियन्त इत्यर्थः Sk.

१७. ०पो M.
उपगम्य ब्राह्मणा देवा वा यत्र तिष्ठन्ति स उपस्थो यज्ञः Sk.

१८. तस्मात्तत्सान्निध्याय स्तुवन्तीति भावः । ... यदा ताविन्द्राग्नी उद्दिश्याद्री अभिषवसाधनभूता ग्रावाणो धिषणाया उपस्थे । धिषणा अधिषवणचर्म । तस्योपरिष्टादिन्द्राग्न्यर्थं सोममभिषुण्वन्ति । तदा तदा यजमानाः स्तुवन्तीति योजनीयम् Sy.

'धिषणासि[1] पर्वती[2]' 'धिषणासि पार्वतेयी[3]' इति यजुषी[4] भवतः। हविर्यज्ञस्य[5] सोमयज्ञसाम्यं ते सम्पादयतः। तयोर्दृष्टो[6] धिषणाशब्दः। अपिवा[7] कमन्यं यजमानाः स्तुवन्ति[8]। तौ हि स्तुतेः समीपे भवत[9] इति।

**युवाभ्यां देवी धिषणा मदायेन्द्राग्नी सोममुशती सुनोति।**
**तावश्विना भद्रहस्ता सुपाणी* आ धावतं मधुना पृङ्क्तमप्सु ॥४॥**

युवाभ्यां देवी[10]। युवयोः। मदाय[11]। श्रद्धधाना[12]। धिषणा[13]। सोमम्[14]। अभिषुणोति[15]। तौ। अश्ववन्तौ। भजनीयबाहू[16]। कल्याणपाणी[17]। भवदीयेन मधुना[18]। आगच्छतम्। तदस्मिन्नभिषूयमाणे सोमे[19] सम्पर्चयतमिति[20][21]।

**युवामिन्द्राग्नी वसुनो विभागे तवस्तमा शुश्रव वृत्रहत्ये।**
**तावासद्या बर्हिषि यज्ञे अस्मिन्प्र चर्षणी† मादयेथां सुतस्य ॥५॥**

युवामिन्द्राग्नी। युवाम्। इन्द्राग्नी! सङ्ग्रामे[22]। बलवन्तौ[23]। वसुनः[24]। विभाग[25] उद्युक्तौ

---

१. धिषवणा० P. २. पर्वत्या P. D. M.
३. पर्व० P. यजु० १–१६
४. ०षि P. D. ५. हर्य० P.
६. ०र्दु० P. ७. अविपा D.
८. स्तुवतः M. ९. भवति M.
* सुपाणी इति सुऽपाणी। PP.
१०. अग्नी P. D. M. ११. हर्षाय Sy.
१२. युवां कामयमाना Sy. तांस्तानभिप्रेतानर्थान् कामयमाना Sk.
१३. मन्त्ररूपा वाक्।... यद्वा। धिषणा अधिषवणचर्म Sy. स्तोत्री अस्मदीया वाक् Sk. १४. सोऽयम् M. द्योतमानं तद् युवयोर्मदं कामयमानं सत् सोममभिषुणोति। ग्रावभिस्तस्मिन्नभिषवात्तस्याभिषवकर्तृत्वम् Sy.
१५. यच्च देवनकामनाभिषवेष्वात्मनः कर्तृत्वं तदिदं कारणभूतायां वाच्युपचर्यते। ययोर्युवयोर्मदार्थमहं स्तुतिलक्षणया वाचा तांस्तानभिप्रेतान् उशन् सोममभिषुणोमीत्यर्थः Sk.
१६. शोभनदोर्दण्डौ Sy. मङ्गलहस्तावित्यर्थः Sk.
१७. मणिबन्धादूर्ध्वभागः पाणिः। शोभनपाणी Sy. शोभनहस्तौ। सुरूपहस्तावित्यर्थः Sk. १८. उदकेषु वर्तमानेन ...माधुर्योपेतेन सारांशेन Sy. मधुस्वादेन सोमेन Sk.
१९. शीघ्रम् Sy. २०. अस्मदीयं सोमं संयोजयतम्। यद्वाऽप्सु वसतीवरीषु मधुना माधुर्यं संयोजयतम् Sy. सम्पर्कयत? (संपर्चयतम्)मात्मानमप्सु। तृतीयार्थे सप्तमी।... अद्भिः संस्तुतेन। मधुरं सोममद्भिः संस्तुतं पिबतमित्यर्थः Sk. २१. V. Mādhava ignores देवी। इन्द्राग्नी। अप्सु।
† चर्षणी इति। PP.
२२. वृत्रासुरस्य हनने Sy. वृत्रहनने Sk.
२३. अतिशयेन बलिनौ प्रवृद्धतमौ वा Sy.
२४. धनस्य Sy; Sk.
२५. स्तोतृभ्यो दातुं विभजने तात्पर्येण वर्तमानौ ... विभागे। भज सेवायाम् Sy.

अहमश्रौषम्[1]। अस्मिन्। यज्ञे। तौ। स्तीर्णे बर्हिषि। आसद्य। यज्ञे द्रष्टारौ[2]। प्रकर्षेण। मादयतम्[3]। सोमेन[4]।

**प्र च॑र्षणिभ्य॑: पृतनाहवे॑षु प्र पृ॑थिव्या रि॑रिचाथे* दिवश्च॑ ।**
**प्र सिन्धु॑भ्य॒: प्र गि॒रिभ्यो॑ महि॒त्वा प्रेन्द्रा॑ग्नी॒ विश्वा॒ भुव॒नात्य॒न्या ॥६॥**

प्र चर्षणिभ्यः। असुराणां सङ्ग्रामाह्वानेषु[5]। तत्रत्येभ्यः[6] सर्वेभ्योऽपि मनुष्येभ्यो बलेनातिरिक्तौ भवतः। एवं पृथिव्यादिभ्योऽपि युवयोर्बलमतिरिक्तम्। महत्त्वेन[7]। प्ररिरिचाथे। इन्द्राग्नी! सर्वाण्येव। अन्यानि। भुवनानि। उक्तेभ्यो यद्यन्यानि सन्ति तानि चेति समानार्थमतिं दृष्ट्वा प्रो निवर्तत इति।

**आ भ॑रतं शिक्ष॑तं वज्रबाहू† अस्माँ इ॑न्द्राग्नी अवतं शची॑भिः ।**
**इ॒मे नु ते र॒श्मय॒: सूर्य॑स्य॒ येभि॑: सपि॒त्वं पि॒तरो॑ न॒ आस॑न् ॥७॥**

आ भरतम्। आभरतं धनान्याहृत्य चास्मभ्यम्। प्रयच्छतम्[8]। आयुधहस्तौ। अस्मान्। इन्द्राग्नी। रक्षतम्। कर्मभिः[9]। इमे। खलु। ते। रश्मयः[10]। सूर्यस्य। यैरिन्द्राग्न्योः[11] स्वभूतैः[12]।

---

१. धनं स्तोतृभ्यो विभजतोर्युवयोर्ये प्रतिबन्धे वर्तन्ते तान् बलेन हन्तुमतिशयेन समर्थौ युवामहं शुश्रावेत्यर्थः Sk.

२. मनुष्यनाम वा चर्षणीशब्दः। अथवा विचर्षणिर्विश्वचर्षणिरिति पश्यतिकर्मसु पाठाद् द्रष्टृशब्दपर्यायः। मनुष्याकारौ द्रष्टारौ वा सर्वार्थानाम् Sk.

३. प्रकर्षेण तृप्तौ भवतम् Sy.
तर्पयेथामात्मानम् Sk.

४. षष्ठीश्रुतेर्वैकदेशेनेति शेषः।... सुतस्य सोमस्य वैकदेशेन स्वांशलक्षणेन Sk.

* रिरिचाथे इति॑। PP.

५. सङ्ग्रामेषु रक्षणार्थमाह्वानेषु।... प्ररिरिचाथे, अतिरिच्येथे सर्वाधिकौ भवथ इत्यर्थः। अत्रोपसर्गवशाद्धातुः स्वाभिधेयविपरीतमर्थमाचष्टे यथा प्रस्मरणं प्रस्थानमिति Sy.

६. तत्रत्रेभ्यः P.

७. ०त्वे० P. D. M.

† वज्रबाहू इति॑ वज्रऽबाहू। PP.

८. शिक्षतम्, अस्मभ्यं दत्तम्। शिक्षतिर्दानकर्मा Sy.

९. शचीभिः। कर्मनामैतत्। आत्मीयैः कर्मभिः Sy.
पालनाख्यैः Sk.

१०. सूर्यात्मन इन्द्रस्य येभी रश्मिभिर्यैरर्चिभिः Sy.

११. ०ग्न्यो P.

१२. ०तेः P.

अस्माकम्[1]। पितरः।[2] ऐक्यं गताः। अङ्गिरसः सूर्यरश्मिभिराप्याययन्त[3] इति।[4]

**पुरंदरा शिक्षतं वज्रहस्तास्माँ इन्द्राग्नी अवतं भरेषु ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥८॥**

पुरंदरा[5]। असुरपुराणां दारयितारौ। धनानि प्रयच्छतम्। वज्रहस्तौ। अस्मान्[6]। इन्द्राग्नी! रक्षतं च। सङ्ग्रामेषु। तन्न इति।[7]

I.110.

**ततं मे अपस्तदु तायते पुनः[*] स्वादिष्ठा धीतिरुचथाय शस्यते ।**
**अयं समुद्र इह विश्वदेव्यः स्वाहाकृतस्य समु तृप्णुत ऋभवः ॥१॥**

ततं मे अपः।[8] ततम्[9]। मे[10]। कर्म[11]। तत्। एव। पुनः। तायते[12]। स्वादुतमा[13]। स्तुतिश्च।

---

१. पूर्वपुरुषाः Sy. अङ्गिरसः Sk.
२. ए० D.
सहप्राप्तव्यं स्थानमासन् ब्रह्मलोकमगच्छन्। अर्चिरादिमार्गेण हि ब्रह्मलोकमुपासका गच्छन्ति। . . . यद्वा येभी रश्मिभिः सपित्वं समवेतत्वमध्यगच्छन्। ते रश्मय इमे न्विदानीमस्माभिर्दृश्यमाना एत एव खलु। सूर्यात्मन इन्द्रस्य ये रश्मयस्त एवाग्नेरपि। . . . तस्मात् सूर्यस्य रश्मीनां स्तवनेनेन्द्राग्न्योरुभयोरपि स्तुतिः सिद्धा Sy.
सहपानम्। . . . अङ्गिरसो हि देवानां सखायः। तेषां सखित्वाद्रश्मिभिरन्यैश्च देवैः सहोपपन्नं सहपानम्। कथं पुनरस्यार्धर्चस्य पूर्वेण सहैकवाक्यता। अभिजन्मप्रदर्शनेन। एतदुक्तं भवति। ये रश्मिभिः सह पानं प्राप्ता अङ्गिरसस्ते नः पितरः। तेन विशिष्टाभिजनोपेतत्वादन्नदानपालनार्हा वयम्। अतोऽस्मभ्यं दत्तं पालयतं चास्मानिति Sk.
३. सूर्य॑ र० M.
४. ०न्तेति M.
५. ०राः M.
६. ०स्माँ P. ०स्मँ D.
७. Ms. D. puts the figure ॥१०९॥ here to indicate the end of one hundred and ninth hymn. No such number is given in P. and M.
* पुनरिति PP.
८. अवः P.
९. विस्तारितं, बहुशः पूर्वमनुष्ठितम् . . . तनु विस्तारे Sy.
विस्तार्यते, अनुष्ठीयत इत्यर्थः Sy.
पूर्वस्मिन् काले विततम् Sk.
१०. ततमे P.
११. Omitted by P.
अग्निष्टोमादिरूपम् Sy. यज्ञाख्यम् Sk.
१२. पूर्वस्मिंश्च काल इदानीं चाहं यष्टेत्यर्थः Sk.
१३. अतिशयेन प्रीतिकरी Sy.
मनसः प्रीतिकरीत्यर्थः Sk.

स्तुत्याय ऋभूणां[1] गणाय। शस्यते[2]। अपि चायम्। समुद्रसदृशः[3]। विश्वदेव्यः[4] सोमः। इह[5] सुतः। तेन हुतेन[6]। ऋभवः! सन्तृप्यत[7]।

*आभोगयं प्र यदिच्छन्त †ऐतनापाकाः प्राञ्चो मम के चिदापयः।
सौधन्वनासश्चरितस्य ‡भूमनागच्छत सवितुर्दाशुषो गृहम् ॥२॥

आभोगयम्। सौधन्वना आङ्गिरसस्य पुत्रत्वाद् ऋभव[8] आङ्गिरसस्य कुत्सस्य। पुरातनाः[9]। के। चन[10]। ज्ञातयो भवन्ति। अपक्तव्यप्रज्ञाः[11]। आभोगयमाभोग्यमकारलोपाभावश्छान्दसो[12] यज्ञे सोमम्। इच्छन्तः। तपश्चरणाय यदा यूयमपक्तव्यप्रज्ञा[13] गतवन्तस्तदा[14] सुधन्वनः पुत्रा ऋभवः। तपश्चरणस्य[15][16]। महत्तया[17]। अमृतप्रदातुः[18]। सवितुः। तपसोऽन्ते[19] देवैरमृतत्वमेषां प्रदातव्यमिति प्रार्थितस्य। गृहम्। अगच्छत[20]। ततः कथमभूदित्याह—'तत्सविता' इति[21]।

---

१. गताय P.
२. पठ्यते Sy.
 तस्मै स्तुतिरुच्यत इत्यर्थः Sk.
३. समुन्दनशीलः Sy.
 अत्यन्तप्रभूतः सोमः Sk.
४. सर्वेभ्यो देवेभ्यो पर्याप्तो यथा भवति तथा सम्पादितः Sy.
 सर्वदेवयोग्यभूतः। सम्यक् स्तुतश्चेत्यर्थः Sk.
५. अस्मिन् यागे Sy.
६. हुतेन M. स्वाहाकृतस्य स्वाहाकारेणाग्नौ प्रक्षिप्तस्य सोमस्य पानेन Sy.
७. V. Mādhava ignores उ
* आऽभोगयम्। PP.
† ऐतन। अपाकाः। PP.
‡ भूमना। अगच्छत। PP.
८. आङ्गिरसस्य पुत्रत्वाद् ऋभवः omitted by M.
९. प्रगन्तारो देवान् यज्ञान् वा प्रति प्रकर्षेण वा पूजयितारो देवानां स्वयं वा पूज्याः Sk.
१०. तेन च P. D. केन च M.
११. अवक्त० P. D. M.
१२. आभोगयम् उपभोग्यं सोमं ... आ समन्ताद्भोग आभोगः। तदर्हं आभोगयः Sy.
 आभोगः सम्भोग इति पर्यायौ। आभोग एवाभोगयः। . . . देवैस्सह सम्भोगमिच्छन्तः। यज्ञियत्वं प्रार्थयमाना इत्यर्थः Sk.
१३. ०मवक्त० P. D. M.
 अत्यन्तपरिपक्वप्रज्ञा इत्यर्थः Sk.
१४. प्रजापतेः सकाशं गताः स्थ Sk.
१५. समुपार्जितस्य Sy.
१६. एकचमसस्य चतुष्टयकरणादेव स्वस्य चरितस्य Sk.
१७. बहुत्वेन Sy.
१८. ०तत्वप्त० M.
 हवींषि दत्तवतः Sy.
 यज्ञियत्वमातिथ्यं वा युष्मभ्यं दत्तवतः Sk.  १९. सोमाभिषवं कुर्वतो यजमानस्य सम्बन्धि Sy.
२०. अवगच्छत P.
२१. V. Mādhava ignores प्र

तत्स॑वि॒ता वो॑ऽमृत॒त्वमासु॑व॒दगो॑ह्यं॒ यच्छ्र॒वय॑न्त॒ ऐत॑न ।
त्यं चि॑च्चम॒सम॑सु॑रस्य॒ भक्ष॑ण॒मेकं॒ सन्त॑मकृणुता॒ चतु॑र्वयम् ॥३॥

तदा । सविता[1] । युष्माकम् । अमृतत्वम्[2] । प्रायच्छत्[3] । यदा । गूहितुमशक्यं[4] सवितारम् । अन्नमिच्छन्तः[5] । गतवन्तः[6] । तम्[7] । च । चमसम् । सोमस्य[8] । भक्षणम्[9] । एकम्[10] । सन्तम्[11] । अकृणुत । चतुर्व्यूहम् ।

वि॒ष्ट्वी शमी॑ तरणि॒त्वेन॑ वा॒घतो॒ मर्ता॑सः॒ सन्तो॑ अमृत॒त्वमा॑नशुः ।
सौ॒ध॒न्व॒ना ऋ॒भवः॒ सूर॑चक्षसः संवत्स॒रे सम॑पृच्यन्त धी॒तिभिः॑ ॥४॥

विष्ट्वी शमी[12] । कृत्वा । कर्माणि[13] । क्षिप्रत्वेन । वोढारः[14] । मरणधर्माणः । सन्तः । अमृतत्वम्[15] ।

---

* आ । असुवत् । PP.

१. सर्वस्य प्रेरको देवः Sy.

२. ०तम् P.D. देवत्वम् Sy; Sk.

३. आभिमुख्येन प्रेरितवान् दत्तवानित्यर्थः Sy. अनुज्ञातवान् Sk.

४. सर्वैर्दृश्यमानम् Sy. अत्यन्ततेजस्वित्वात् Sk.

५. अपेक्षितं सोमपानं विज्ञापयन्तः सन्तः Sy. हविर्लक्षणमातिथ्यसम्बन्धि वाऽन्नम् Sk.

६. आगच्छत। तदानीमिति पूर्वेणान्वयः Sy. यदातिथ्यमनुभवितुं सवितुर्गृहं गता इत्यर्थः Sk.

७. तच्छब्दसमानार्थत्यच्छब्दश्रुतेः . . . यच्छब्दोऽध्याहर्तव्यः । . . . यो देवैः प्रहितोऽग्निरेकं चमसं चतुर इत्येवमुपन्यस्तवान् । तम् Sk.

८. असुरस्य त्वष्टुः सम्बन्धिनम् । तेन निर्मितमित्यर्थः Sy. असुरिति प्राणनाम । तद्वानसुरः कोऽसौ । त्वष्टा । . . . प्राणवतस्त्वष्टुः Sk.

९. सोमपानसाधनम् Sy.

१०. असहायमेव । . . . सृष्ट्यादौ त्वष्ट्रा कृतं चमसं होतृचमसादिमुख्यचमसचतुष्टयरूपेण ऋभवः कृतवन्त इत्यर्थः Sy.

११. सम् P. वेतिर्गत्यर्थः । चतुर्गतिः । एकस्माच्चमसात् तदविनाशेन चतुरश्चमसान् कृतवन्तः स्थेत्यर्थः Sk.

१२. वीष्ट्वी M. यद्यप्येतत्कर्मनाम तथाप्यत्र क्रियापरम् । व्याप्य कृत्वेत्यर्थः Sy. ऋभव उरु भान्तीति वा । ऋतेन भान्तीति वा । ऋतेन भवन्तीति वा । तेषामेषा भवति . . . कृत्वा कर्माणि क्षिप्रत्वेन । वोळ्हारो मेधाविनो वा । मर्तासः सन्तोऽमृतत्वमानशिरे । सौधन्वना ऋभवः सूरख्याना वा । सूरप्रज्ञा वा । संवत्सरे समपृच्यन्त (धीतिभिः) कर्मभिः । ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरस्य त्रयः पुत्रा बभूवुः । तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन । तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति N. 11.15,16.

१३. यागदानादीनि कर्माण्यन्यान्यपि Sy. एकचमसचतुष्टयकरणादीनि Sk.

१४. वाघतः । ऋत्विङ्नामैतत् । अत्र च सामर्थ्यात्तद्वन्तो लक्ष्यन्ते । ऋत्विग्भिरुपेता ऋभवः Sy. ऋत्विग्वन्तः । यष्टार इत्यर्थः Sk.

१५. देवत्वम् Sy; Sk.

आनशिरे[1]। सौधन्वनाः[2]। ऋभवः। सूक्ष्मदर्शनाः[3]। संवत्सरे[4]। देवैः[5]। सङ्गता[6] आसन्[7]। चमसव्यूहादिभिः कर्मभिर्ऋभूणामादित्यरश्मिभिरैक्यम्[8] "अगोह्यस्य यदसस्तना"[9] इत्यस्यामुक्तमिति[10]।

**क्षेत्र॑मिव॒ वि म॑मु॒स्तेज॑नेनँ॒* एकं॒ पात्र॑मृ॒भवो॒ जेह॑मानम्।**
**उप॑स्तुता उप॒मं नाध॑माना॒ अम॑र्त्येषु॒ श्रव॑ इ॒च्छमा॑नाः ॥५॥**

क्षेत्रमिव। मानदण्डेन भूमिमिव। शस्त्रेण[11] विकर्तनार्थं हस्ताद्धस्ते। सञ्चरमाणम्[12]। एकम्। पात्रम्[13]। विविधम्[14]। कृतवन्तः। समीपस्तुताः[15]। देवानां समीपम्[16]। कामयमानाः[17]। देवेषु। सोमम्[18]। इच्छमानाः[19][20]।

---

१. कृतैः कर्मभिर्लेभिरे Sy.

२. सध० P.
०न्वानाः M.
सुधन्वनः पुत्राः Sy.

३. सूर्यसमानप्रकाशाः सूर्यसदृशज्ञाना वा Sy. सूर्यसमानदर्शनाः। सूर्यवत्तेजस्विनः प्रज्ञावन्तो वेत्यर्थः Sk.

४. संवत्स M.
संवत्सरावयवभूते वसन्तादिकालेऽनुष्ठेयैः Sy.

५. अग्निष्टोमादिकर्मभिः Sy.

६. हविर्भागार्हा बभूवुरित्यर्थः Sy.
सर्वयज्ञेषु भागार्हत्वं प्राप्ता इत्यर्थः Sk.

७. आसञ्ज० M.

८. संवत्सरे यावन्ति कर्माणि यज्ञाख्यानि तैस्सर्वैः Sk.

९. RV. I. 161. 11.

१०. ०भुक्त० M.

* तेजनेन। PP.

११. चमसचतुष्टयरूपेण Sy.
निशितेन। केन? सामर्थ्याद् व्यथनेन। ...अथवा तेजनशब्दस्तेजःपर्यायः। स्वेन तेजसा Sk.

१२. ०चार० P.
होमक्रियां प्रति प्रयतमानम् Sy.
चतुर्धा गतम्। चतुष्ट्वं प्रतिपद्यमानमित्यर्थः Sk.

१३. पानसाधनं त्वष्ट्रा निर्मितं चमसम् Sy.

१४. विशेषेण मानं कृतवन्तः Sy.
विमितवन्त इत्यर्थः Sk.

१५. ०पस्तैता P. समेपस्तुता D. समीप... स्तुता M.
समीपस्थैर्ऋषिभिः स्तुताः Sy.
सर्वस्तोतृभिः संस्तुताः Sk.

१६. सर्वेषामुपमानभूतं प्रशस्तं सोमलक्षणमन्नं याचमानाः Sy.

१७. सन्निकृष्टत्वं प्रार्थयमानाः। कस्य? सामर्थ्याद्देवानाम्। देवेष्वन्तर्गतिमिच्छन्त इत्यर्थः Sk.

१८. हविर्लक्षणमन्नम् Sy; Sk.

१९. Strictly grammatically the form should be इच्छन्तः। Sy. defends the use of the *Atmanepada* here: व्यत्ययेनात्मनेपदम्।
देवैः सह सोमपानं कामयमानास्तल्लाभाय चतुरश्चमसानकार्षुरित्यर्थः Sy.

२०. V. Mādhava ignores ऋभवः

**आ म॑नी॒षाम॒न्तरि॑क्षस्य॒ नृभ्यः॑ स्रु॒चेव॑ घृ॒तं जु॑हवाम॒ विद्म॑ना ।**
**त॒र॒णि॒त्वा ये पि॒तुर॑स्य सश्चि॒र ऋ॒भवो॒ वाज॑मरुहन्दि॒वो रजः॑ ॥६॥**

आ मनीषाम्। यथा[1] स्रुचा। घृतमाजुह्वत्येवं[2] वयम्[3]। अन्तरिक्षस्य[4]। नेतृभ्यो[5] मध्यमस्थान-पठितेभ्यः। स्तुतिम्। कर्मः[6]। प्रज्ञानेन। क्षिप्रत्वेन[7]। ये। पितृभूतस्य[8]। अस्य सवितुरमृतम्[9]। आस्वादितवन्तः[10]। ते। दिवः[11]। लोकात्। अन्नं[12] सोमात्मकम्। अधिष्ठितवन्तो[13] देवेभ्यः सोमपीथं प्राप्ता इति।

**ऋ॒भुर्न॒ इन्द्रः॒ शव॑सा॒ नवी॑यानृ॒भुर्वाजे॑भि॒र्वसु॑भि॒र्वसु॑र्द॒दिः ।**
**यु॒ष्माकं॑ देवा॒ अव॒साह॑नि प्रि॒ये॒*॑ऽभि ति॑ष्ठेम पृत्सु॒तीरसु॑न्वताम् ॥७॥**

ऋभुर्नः[14]। ऋभुः। अस्मभ्यम्[15]। बलेन सर्वदा[16]। नवतरो[17] भवति तथा। वासयितृभिः[18]। वाजेभिः[19]

---

१. यथा स्रुचा जुह्वा घृतं क्षरणशीलाज्योपेतं हविराजुहवाम। मर्यादायामाकारः। यथाशास्त्रं प्रयच्छाम Sy.

२. आहवनीयादौ . . . प्रक्षिपेत् Sk.

३. यम् M.

४. तक्षस्य P. सम्बन्धिभ्यः Sy. षष्ठीश्रुतेरत्र योग्यां सदृशीं वेत्यध्याहर्तव्यम्। अतिमहतोऽन्तरिक्षस्यापि योग्यां सदृशीं वा। अत्यन्तमहतीमित्यर्थः Sk.

५. यज्ञस्य। . . . ऋभवो हि यज्ञस्य नेतारः। तेन हि ते देवत्वं प्राप्ताः। यद्वाऽन्तरिक्षस्य लोकस्य नेतृभ्यः Sy. मनुष्याणामृभूणामर्थाय। मनुष्यानृभून् स्तोतुमित्यर्थः Sk.

६. उच्चारयामेत्येतदाशास्महे Sk.

७. तरणकौशलानि Sy.

८. सर्वस्य जगतः पालकस्य Sy. पालयितुर्वा Sk.

९. स्वभूतम् Sk.

१०. सूर्यरश्मिभूताः सन्तः प्रापुः Sy. सश्चतिर्गतिकर्मा। . . . अधिगतवन्तः। लब्धवन्त इत्यर्थः Sk.

११. द्योतमानस्य स्वर्गाख्यस्य लोकस्य सम्बन्धिनम् Sy.

१२. आतिथ्यसम्बन्धि Sk.

१३. यागदानादिभिः कर्मभिरन्यैश्च देवोक्तैश्चमसचतुष्टयकरणादिकैः प्राप्नुवन् Sy. आरूढवन्तश्च दिवोऽवयवभूतं रजो लोकम्। देवलोकं चारूढवन्त इत्यर्थः Sk.

* प्रि॒ये। अ॒भि। PP.

१४. ०भुं न M.

१५. अस्माकम् Sy.

१६. सामर्थ्यलक्षणेन। यदस्माकं स्तुतिकरणसामर्थ्यं तेन सर्वेण Sk.

१७. नवकरो M. प्रशस्ततरः। ऋभुर्नोऽस्माकमिन्द्रः परमेश्वरः। अस्माकं रक्षक इत्यर्थः। यद्वा-इन्द्र एव प्रसङ्गाद् उरु भातीति नैरुक्तव्युत्पत्त्या ऋभुरिति स्तूयते Sy. अतिशयेन स्तुत्यः Sk.

१८. निवासहेतुभिर्धनैश्च Sy.

१९. अस्मभ्यं दातव्यैरन्नैः Sy. अन्यतरवचनेनापि वाजशब्देनात्र साहचर्याद्वाजो विभ्वा चोच्येते। व्यत्ययेन च द्विवचनस्य स्थाने बहुवचनम्। वाजविभ्वाभ्याम् Sk.

सह। वसूनाम्[1]। दाता भवति, ऋभुर्विभ्वा वाज इति त्रय ऋभवस्तत्र प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति[2]। युष्माकम्। ऋभवः। रक्षणेन[3] प्रकाशकानाम्। प्रियेऽस्मिन्। दिवसे[4]। अयजमानानाम्[5]। सेना वयम्। अभिभवेम[6]।

**निश्चर्मण ऋभवो गामपिंशत सं वत्सेनासृजता मातरं पुनः*।**
**सौधन्वनासः स्वपस्यया नरो जिव्री† युवाना पितराकृणोतन‡ ॥८॥**

निश्चर्मणः। कस्यचिद् ऋषेर्धेन्वां[7] मृतायां तस्याश्चर्म स न्यदधात्[8], अथ वत्सं रुदन्तं दृष्ट्वा ऋभूनस्तौत्, अथ ते तच्चर्मादाय[9] काञ्चन धेनुं शिल्पकौशलेन कृत्वा बहिश्चर्मणा सन्धाय तपोमाहात्म्येन तां सप्राणां चक्रुः, अथ तेन वत्सेन पुनरपि तां मातरं समसृजन्[10] निष्पिंशतिः[11] सन्धानकर्मा[12]। सौधन्वनाः[13]! शोभनकर्मेच्छया[14] नेतारः[15]! जीर्णावात्मीयौ[16]। पितरौ[17]। युवानौ[18]। कृणोतन[19]।

**वाजेभिर्नो वाजसातावविड्ढ्यृभुमाँ इन्द्र चित्रमा दर्षि राधः।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥९॥**

वाजेभिर्नः। वाजेन[20] भ्राता[21] सहितैर्भवद्भिः सह। अस्मान्। सङ्ग्रामे। रक्ष।

---

१. वसुभिश्च सह वसुः। अन्तर्णीतमत्वर्थमेतत्। धनवान्। ददिः स्तोतृभ्यो यष्टृभ्यश्च साधु दाता। किम्? सामर्थ्यात् सर्वानभिप्रेतानर्थान्। अथवा वसुरिति व्यत्ययेन पुंल्लिङ्गता। वसु ददिर्धनं दातेत्यर्थः Sk. २. Cf. N. 11.16.

३. तर्पणेन हेतुना। युष्मान् सोमेन तर्पयन्त इत्यर्थः Sk. ४. निवसे P. यागदिवसे Sk. ५. ये युष्मान्न यजन्तेऽस्मच्छत्रवस्तेषां स्वभूता इत्यर्थः Sk.

६. V. Mādhava ignores इन्द्रः।

* पुनरिति। PP. † जिव्री इति। PP.

‡ पितरा। अकृणोतन।

७. ऋषे धन्वा P. ८. ०घत् P.

९. च च० D. १०. गमितवन्तः स्थ तां गां मातरं पुनः Sk. ११. ०ति P. पिशिरवयवे। अवयववर्ती कृतवन्तः। सर्वावयवोपेतामुत्पादयन्त इत्यर्थः Sk.

१२. संघन० P. D. सङ्घटन० M.

१३. ०ना P. ०नः D. सौधनन्वाः M. सुधन्वन आङ्गिरसस्य पुत्राः! Sy.

१४. यागदानाद्याचरणेनेति यावत् Sy. शोभनमपः कर्म यस्य स स्वपाः। तदिच्छा स्वपस्या। शोभनकर्मकारित्वनिमित्तयशइच्छयेत्यर्थः Sk. १५. यज्ञस्य Sy. मनुष्याः Sk. १६. वृद्धौ Sy.

१७. मातापितरौ Sy. १८. पुनर्यौवनोपेतौ Sy. १९. यूयमकृढ्वम् Sy.

२०. वाजस्यान्नस्य सम्भजने निमित्तभूते सति वाजेभिरन्नैरविड्ढि अस्मान् व्याप्नुहि। ... यद्वा। वाजसातिरिति सङ्ग्रामनाम। वाजसातौ सङ्ग्रामे वाजेभिर्वेजनयुक्तैरश्वैरविड्ढि अस्मान् रक्ष Sy. वाजेभिरित्यन्यतरवचनेनापि वाजशब्देन साहचर्यात् त्रयोऽप्यृभव उच्यन्ते। वाजप्रभृतिभिः सह Sk.

२१. भर्त्रा is suggested for भ्राता

ऋभुभिः[1] सहितम्[2]। चित्रम्[3]। धनम्। इन्द्र! शत्रूणाम्। आदारयेति[4] साहचर्यादिन्द्रस्य स्तुतिः।[5]

I.111.

तक्षन्रथं* सुवृतं विद्मनापसस्तक्षन्हरी† इन्द्रवाहा वृषण्वसू‡।
तक्षन्पितृभ्यामृभवो युवद्वयस्तक्षन्वत्साय मातरं सचाभुवम् ॥१॥

तक्षन् रथम्। अकुर्वन्।[6] रथम्।[7] सुवर्तनम्। ज्ञानशिल्पकर्माणोऽश्विभ्याम्।[8] तक्षन्।[9]
अश्वौ[10]। इन्द्रस्य वोढारौ। प्रदीयमानधनौ[11]। तक्षन्[9]। पितृभ्याम्। ऋभवः। युवत्वयुक्तम्।
वयः[12]। तक्षंश्च[9]। वत्साय। मातरम्। सहजातामात्मीयामिति[13] कर्ममात्रसमुद्देशः[14] सूक्ते।

आ नो यज्ञाय तक्षत ऋभुमद्वयः क्रत्वे दक्षाय सुप्रजावतीमिषम्।
यथा क्षयाम सर्ववीरया विशा तन्नः शर्धाय धासथा स्विन्द्रियम् ॥२॥

आ नो यज्ञाय। आकुरुत[15]। अस्माकम्। यज्ञकरणाय। दीप्तम्[16]। आयुः[17]। कर्मणे[18][19]।

---

१. ऋभुर्विभ्वा वाज इति त्रयोऽपि ऋभुशब्देनोपचारादत्रोच्यन्ते। तैर्युक्तस्त्वम् Sy.

२. सहेत्यर्थः Sk.  ३. ०त्र M. चायनीयम् Sy. विचित्रं पूज्यं वा Sk.

४. अस्मभ्यं दातुमाद्रियस्व। तृतीयसवन ऋभुभिः सहेन्द्रस्यावस्थानात् प्रसङ्गादत्रेन्द्रस्तुतिः Sy. देह्यस्मभ्यमित्यर्थः Sk.

५. V. Mādhava ignores तत्। नः etc.
Ms. D. puts the figure ॥११०॥ here to indicate the end of one hundred and tenth hymn. No such number is given in P. and M.

* विद्मनाऽअपसः। PP.

† हरी इति। PP.

‡ वृषण्वसू इति वृषण्ऽवसू। PP.

६. रक्षथं P. कस्मै। अश्विभ्याम् Sk.

७. सुपर्त० M. अश्विनोरारोहणार्थं... सुचक्रं वा Sy. सुगमनमित्यर्थः Sk.

८. उत्कृष्टेन ज्ञानेन निष्पाद्यकर्माणो लाभवत्कर्माणो वा Sy. अत्यन्तोत्कृष्टकर्मत्वाद्वेदितव्यकर्माणः Sk.

९. कृतवन्तः Sy.

१०. हरणशीलावेतत्संज्ञकावश्वौ Sy.

११. ०धरौ M. सेचनसमर्थेन दृढतरेण धनेन बलेन वा युक्तौ Sy. वृष्टिधनौ वर्षितारौ वा धनानाम् Sk.

१२. वयं D. आयुः Sy.

१३. सहभुवं, सहवर्तमानाम् Sy. मृतां सतीं चर्मण उत्पाद्य वत्सेन सह संयोजितवन्त इत्यर्थः Sk.

१४. थं कर्म० P.D.

१५. समन्तादुत्पादयत Sy. अस्मभ्यं दत्तेत्यर्थः Sk.  १६. उरुभासनयुक्तम् Sy. ऋभवो यष्टव्यत्वेन सम्बन्धिनो यस्य सन्ति तदृभुमत्। युष्माकमेव ऋभूणां योग्यमित्यर्थः Sk.

१७. हविर्लक्षणमन्नम् Sy. वयोऽन्नम् Sk.

१८. अस्मदीयाय Sy.  १९. ०र्णः D. भोजनाच्छादनादिकर्मणे च Sk.

वृद्धये^1 च। शोभनप्रजायुक्तम्^2। अन्नं च। यथा। निवसेम। सर्वैर्वीरैर्युक्तया^3। विशा। तादृशम्^4। धनम्^5। अस्मभ्यम्^6। सुष्ठु। दत्त। बलाय^7।

**आ तक्षत सातिमस्मभ्यमृभवः सातिं रथाय सातिमर्वते नरः।**
**सातिं नो जैत्रीं सं महेत विश्वहा जामिमजामिं पृतनासु सक्षणिम्॥३॥**

आ तक्षत। आकुरुत। धनम्^8। अस्मभ्यम्^9। ऋभवः। धनम्^10। रथाय^11। धनम्^12। अर्वते^13। नेतारः^14 सर्वो लोको भवदीयाम्। अस्मद्विषयाम्। सातिम्^15। शत्रूणां जयशीलाम्^16। सर्वदा। सम्पूजयेत्^17। ज्ञातिम्^18। अज्ञातिञ्च^19। युद्धेषु। सहमानाम्^20।

**ऋभुक्षणमिन्द्रमा हुव ऊतय ऋभून्वाजान्मरुतः सोमपीतये।**
**उभा मित्रावरुणा नूनमश्विना ते नो हिन्वन्तु सातये धिये जिषे॥४॥**

ऋभुक्षणम्^21। महान्तम्^22। इन्द्रम्। रक्षणार्थम्^23। आह्वयामि^24। एवमृभून्। वाजेन^25

---

१. बलाय च Sy. बलाय Sk.
२. शोभनाभिः पुत्रपौत्रादिलक्षणाभिः प्रजाभिर्युक्ताम् Sy.
३. पुत्रादिभिः Sy. पुत्रैः पौत्रैश्चोपेतया परिचारकमनुष्यजात्या सह Sk.
४. तादृढं M. ५. वीर्यं वा Sk.
६. ०भ्य D. ७. उत्साहाय बलाय वा Sk. ८. सम्भजनीयमन्नं धनं वा Sy. षणु दाने। दानम्।... कस्य?... सामर्थ्याद्धनानाम् Sk.
९. अनुष्ठातृभ्यः Sy. १०. सम्भजनीयम् Sy.
११. रंहणशीलाय पुत्रादये रथायैव वा Sy. सातिं रथाय। षष्ठ्यर्थे चतुर्थ्येषा। बहुवचनस्य स्थान एकवचनम्। रथानाम् Sk.
१२. सम्भजनीयमन्नं धनं वाऽश्वयोग्यम् Sy.
१३. अश्वाय Sy. अश्वानां च Sk.
१४. यज्ञस्य Sy. मनुष्याः Sk.
१५. सातु P. दानम् Sk. १६. सारवत्तया प्राभूत्येन च दानान्तराणां जैत्रीम् Sk.
१७. तादृशीं नः सातिं दत्त यादृशीं सर्वो जनः सर्वदा पूजयतीत्यर्थः Sk.
१८. सहजातम् Sy. समानजातीयामसमानजातीयां च। अयोग्यां चास्माकं योग्यां चात्यन्तोत्कृष्टत्वादित्यर्थः। अथवा जामिमजामिमिति पूजयितुरयं निर्देशः। द्वितीया च प्रथमार्थे। समानजातीयोऽसमानजातीयश्च पूजयेदित्यर्थः Sk.
१९. सहानुत्पन्नम् Sy.
२०. अस्मानभिभवन्तं युष्मत्प्रसादादभिभवेमेति शेषः Sy. क्षणु हिंसायाम्। हिंसया सह सक्षणिः। तां सक्षणिम्। शत्रुहिंसासमर्थामित्यर्थः Sk.
२१. ०भू० D. ऋहुक्षणं P. २२. ऋभुभिः सह क्षिणोति हिनस्ति शत्रूनिति ऋभुक्षा। तमृभुक्षणम्। अथवा ऋभुक्षा इति महन्नाम। महान्तम् Sk. २३. पुरोडाशादिहविस्तर्पणाय Sk. २४. ऋभुसखित्वादृभूणां वा प्रियचिकीर्षया... आह्वयामि Sk. २५. वाजप्रभृतींस्त्रीनपि Sk.

युक्तान् । मरुतश्च । सोमपानायाह्वयामि । तथा उभौ[1] । मित्रावरुणौ । अश्विनौ च । ते[2] । अस्मान् । प्रेरयन्तु[3] । धनाय[4] । कर्मणे[5] । जयाय[6] चेति[7] ।

ऋ॒भुर्भरा॑य॒ सं शि॑शातु सा॒तिं स॑म॒र्य॒जिद्वाजो॑ अ॒स्माँ अ॑विष्टु ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥५॥

ऋभुर्भराय । ऋभुः । सङ्ग्रामाय[8] । धनम्[9] । तीक्ष्णीकरोतु[8] । सङ्ग्रामजित् । वाजश्च । अस्मान्[10] । अवतु[11] ।

I. 112.

ईळे॒* द्यावा॑पृथि॒वी पू॒र्वचि॑त्तये॒ऽग्निं घ॒र्मं सु॒रुचं॒ याम॑न्नि॒ष्टये॑ ।
याभि॒र्भरे॑ का॒रमंशा॑य॒ जिन्व॑थ॒स्ताभि॑रू॒† षु ऊ॒तिभि॑रश्वि॒ना‡ ग॑तम् ॥१॥

ईळे द्यावापृथिवी । स्तौमि[12] । द्यावापृथिव्यौ । यजमानाय पूर्वं[13] मुख्यमस्य कर्म । अग्निम् ।

---

१. इमौ M.
युगलरूपेण संहृत्य वर्तमानौ द्वौ मित्रावरुणावश्विनौ च . . . अवश्यं सोमपानायाह्वयामीति शेषः Sy.
२. एते M. आहूताश्चेन्द्रादयः Sy.
३. गमयन्त्वित्यर्थः Sy. हिनु गतौ । प्रवृद्धौ चास्मान् प्रति गच्छन्तु । वृद्ध्यर्थो वा हिनोतिः सामर्थ्याच्चान्तर्णीतण्यर्थः । अस्मान् वर्धयन्तु Sk.
४. सम्भजनीयाय धनाय Sy.
षणु दाने । दानेन चात्र तत्पूर्वको लाभो लक्ष्यते । लाभाय Sk.
५. धनसाध्याय कर्मणे Sy.
यागाख्याय Sk.
६. शत्रूणामित्यर्थः Sk.
७. V. Mādhava ignores नूनम् ।
८. सङ्ग्रामोचितं धनमस्मभ्यं प्रयच्छत्वित्यर्थः Sy.
अत्यर्थं पुनःपुनर्वा संस्करोतु । . . . सङ्ग्रामार्थं यदस्माकं वित्तितं तदत्यर्थं पुनः पुनर्वा संस्करोत्वित्यर्थः Sk.
९. सम्भजनीयम् Sy. दानम् Sk.
१०. सङ्ग्रामाद् रक्षत्वित्यर्थः Sy.
११. V. Mādhava ignores तत् । नः etc. Ms. D puts the figure ॥१११॥ here to indicate the end of one hundred and eleventh hymn. No such number is given in P. and M.
* द्यावा॑पृथि॒वी इति॑ । PP.
† ताभिः॑ । ऊँ॒ इति॑ । PP.
‡ अ॒श्वि॒ना॒ । आ । PP.
१२. द्यौमि M.
१३. पूर्वमेवाश्विनोः प्रज्ञापनाय ।
ते ह्यश्विनोः प्रत्यासन्ने । यद्वा द्यावापृथिवी अश्विनौ स्तौमि पूर्वचित्तये अन्यदीयात्स्तोत्रात्पूर्वमेवास्मदीयस्य स्तोत्रस्य प्रबोधनाय Sy.
पूर्वज्ञानाय । यद्युवयोरश्विनोः स्तुतिकरणसमर्थं पूर्वं ज्ञानं मम तदर्थमित्यर्थः Sk.

घर्मं[1] आदित्यस्तं च । सुदीप्तिम्[2] । यज्ञे[3] । अभिलषितसिद्ध्यर्थम्[4] । याभिः[5] । सङ्ग्रामे[6] । शङ्खम्[7] । अंशाय[8] ऋषये । शब्देन[9] पूरयामासथुः[10] । तैः । परिरक्षणैरस्मानपि[11] । सुष्ठु । आगच्छतम् । अश्विनौ ![12]

**युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे ।**
**याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतम् ॥२॥**

युवोर्दानाय[13] । युवयोः स्तोतृभ्यः । दानाय[14] । सुनिर्हराः[15] । असक्ता रायः[16] । रथम् । आतिष्ठन्ति[17] । यथा[18] । शब्दं परप्रत्यायनायार्था[19] अभिधेया[20] आतिष्ठन्ति[21] । याभिः[22] । स्तोत्राणि[23] ।

---

१. प्रवृञ्जनेन दीप्तम् Sy. दीप्तम् Sk.
२. ०प्तम् M.
३. यान्त्यस्मिन् देवता द्विजातयश्चेति यामो यज्ञस्तत्र Sk.
४. ०ध्य० P. D.
यामन्यश्विनोरागमने सतीष्टये तदीययागार्थमाहवनीयरूपेण स्थापितमग्निं स्तौमीति शेषः Sy.
यागाय । युवामश्विनौ यक्ष्यतीत्येवमर्थमित्यर्थः Sk.
५. ऊतिभिः पालनैः सहागत्य Sy.
६. असुरैः सह Sk.
७. संखम् D.
८. युष्मदीयभागाय Sy.
९. कारं शब्दकारिणं शङ्खं . . . मुखेनापूरयथः Sy. १०. ०सतुः M.
प्रीणितवन्तौ, आपूरितवन्तौ स्थः। अथवा क्रियत इति कारः शब्द इहोच्यते। . . .शब्दं प्रीणितवन्तौ। महान्तं शङ्खशब्दं कृतवन्तौ स्थ इत्यर्थः Sk.
११. ऊतिशब्दश्च गमनवचनः। तृतीयानिर्देशाच्च योग्यक्रियाध्याहारः। यैर्गमनैर्गत्वा। . . . अथवा यैर्गमनैरंशं प्रति गतवन्तौ स्थः। कृपालुतयाऽस्मानपि ताभिरिति। यैर्गमनैर्गत्वाऽस्यार्थायाऽसुराञ्जेतुमसुरजैत्रे शङ्खमापूरयन्तौ महान्तं वा शङ्खशब्दं कृतवन्तौ स्थस्तैरेवास्मान् प्रति शोभनमागच्छतमिति समस्तार्थः Sk.
१२. V. Mādhava ignores उ
१३. ० वो दा० P.
१४. युष्मत्कर्तृकदानार्थम्। धनलाभायेत्यर्थः Sy. १५. शोभनस्तोत्रभरणाः Sy.
सुपूर्णाः। केन ? सामर्थ्याद् युष्मद्गुणैः। काः पुनरेताः ? सामर्थ्यात् स्तुतयः Sk.
१६. अन्यत्रानासक्ताः स्तोतारः Sy.
सश्चतिर्गतिकर्मा। . . . असङ्गच्छमानाः। असंयुक्ता इत्यर्थः Sk.
१७. प्राप्नुवन्ति Sy.
१८. यथा न्यायोपेतेन वचसा वाक्येन युक्तं विपश्चितं मन्तवे बुभुत्सितार्थप्रतिपत्तये स्तोतारः प्राप्नुवन्ति तद्वत् Sy.
वाच्यमिवार्थं शब्दः Sk.
१९. नार्था P.
२०. ० नार्थाभि० M.
२१. यथा वाच्यमर्थं शब्दः सर्व आतिष्ठत्येवं युष्मदीयं रथं स्तोतृभ्यो दानार्थं युष्मत्स्तुतयो युवां स्तोतुं सर्वदाऽऽतिष्ठन्तीत्यर्थः Sk.
२२. ऊतिभिः पालनैः Sy.
२३. ध्यातॄन् विशिष्टज्ञानोपेतान् Sy.
स्वभूतानि यागलक्षणानि Sk.

अवथो[१] यजमानानाम् । कर्मणि । अभिलषिताय[२] क्रियमाणानीति[३][४] ।

**युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना ।**
**याभिर्धेनुमस्वं[*]१ पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतम् ॥३॥**

**युवं तासाम्** । युवम्[५] । तासाम्[६] । विशां मनुष्याणाम् । दिव्यस्य[७] च देवगणस्य । प्रशासने[८] । वर्तेथे[९] । अमृतस्य । बलेन[१०] । यैः पालनैः । निवृत्तप्रसवाम्[११] । धेनुम् । शयवे[१२] पिन्वथः[१३] । नेतारौ[१४] ![१५]

**याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति ।**
**याभिस्त्रिमन्तुरभवद्विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतम् ॥४॥**

**याभिः[१६] परिज्मा[१७]** । याभिः[१८] । परितो गन्ता वायुः । आत्मपुत्रस्याग्नेः[१९] । बलार्थम्[२०] । द्वयो-

---

१. अपथो P. M. अवतिर्गत्यर्थः। युवां गच्छथः। ममापि स्वभूते कर्मन् कर्मणि यागलक्षणे Sk.
२. यागार्थं प्रवृत्तान् Sy. यागायात्मनः Sk.
३. इति is omitted by P.
४. V. Mādhava ignores ताभिः etc.
* धेनुम्। अस्वंम्। PP. ५. युवाम् Sy.
६. यास्त्रिषु लोकेषु वर्तन्ते तासां सर्वासां ...प्रजानाम् Sy. याः स्तोतुं यष्टुं चेच्छन्ति युवां तासाम् Sk.
७. दिवि भवस्य स्वर्गसमुत्पन्नस्यामृतस्य सोमस्य Sy. दिव्यशब्दोऽत्रात्यन्तोत्कृष्टवचनः।... अत्यन्तोत्कृष्टस्य Sk.
८. शिक्षणे Sy. वचने Sk. ९. वर्तते M. ईशाये समर्थौ भवथः Sy. निवसथः। ता विशो यत्र ब्रुवन्तीह युवाभ्यां व्यवस्थातव्यमिति तत्रैव व्यवतिष्ठेथ? (थाम्)इत्यर्थः Sk. १०. बले P. यद्वा मज्मनाऽन्येषामसाधारणेन बलेन विशां प्रजानां दिवि भवस्यामृतस्य वृष्ट्युदकस्य प्रशासने प्रदाने क्षयथः, ईश्वरौ भवथः Sy. देवत्वस्य बलेनेत्यर्थः। अथवा ... अत्यन्तोत्कृष्टस्यामृतसदृशस्य ज्ञानस्य बलेनेत्यर्थः Sk.
११. निर्वृ० P. प्रसवासमर्थाम् Sy. न सूयत इत्यस्वः। तामस्वम्। निवृत्तप्रसवामित्यर्थः Sk.
१२. शयोः स्वभूतां धेनुम् Sk.
१३. सिञ्चथः पयसा पूरितवन्तावित्यर्थः Sy. पयः सेचितवन्तौ स्थः। दोहप्रदानसमर्थां कृतवन्तौ स्थ इत्यर्थः Sk.
१४. मनुष्याकारौ Sk.
१५. V. Mādhava ignores ताभिः etc.
१६. ०भि P. १७. ०जा M.
१८. युष्मदीयाभिरूतिभिः Sy. अत्यन्तशीघ्राभिरूतिभिः Sk.
१९. अग्निर्हि व्यानवृत्त्यात्मना वर्तमानेन वायुना मथ्यमानः सञ् जायते। ... यद्वा सृष्ट्यादौ वायुसकाशादुत्पन्नत्वादग्नेः पुत्रत्वम् Sy. अपत्यभूतस्य प्राणिजातस्य। षष्ठीश्रुतेरर्थायेति शेषः Sk.
२०. बलेन युक्तः सन् Sy. स्वेन बलेन Sk.

लोकयोर्[1]निर्माता[2]। क्षिप्राणामपि[3] मध्ये। अतिशयेन क्षिप्रः। विविधशरीरो[4] भवति। याभिश्[5]च[6]।
कक्षीवान्। अभवत्। विद्वान्[7]। त्रैलोक्यज्ञानात्[8] त्रिमन्तुः[8][9]।

**याभी रेभं निवृतं सितमद्भ्य उद्वन्दनमैरयतं स्वर्दृशे।**
**याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥५॥**

**याभी रेभम्।** रेभं स्नात्वाऽग्निहोत्रार्थं गच्छन्तम्[10]सुरा असुरा बद्ध्वा[11] ह्रदे[12] प्रचिक्षिपुः। तत्र निभृतं तिरोहितं[13] दश रात्रीर्धारयाञ्चक्रुः। वन्दनश्च जीर्णः कूपसमीपेन गच्छन् कूपे पपात। ताविमावश्विभ्याम्[14]आदित्यं[15] द्रष्टुमुदकादुत्तारितौ[16]। याभिश्[17]च कण्वं वां सम्भक्तुम्[18]इच्छन्तं प्ररक्षथुः[19]।[20]

---

१. ०योल्लो P. ०र्लोकं M.

२. अग्निः पृथिवीस्थानो वायुरन्तरिक्षस्थानः। उभयोर्मिलितयोरुभयनिर्मातृत्वमुपपन्नम्। यद्वा। द्विमातेति तनयस्य विशेषणम्। 'सुपां सुलुक्' इति षष्ठ्याः सुः। द्विमातृकस्य द्वाभ्यामरणिभ्यां जातस्य Sy. द्वयोः प्राणिजातयोर्निर्माता। अथवोत्पादिके प्रकृती मातराविहोच्येते। ते द्वे यस्यैका ब्राह्मयां सृष्टावन्या देवसृष्टौ स द्विमाता Sk.

३. तरीतृषु धावत्सु मध्ये तरणिरतिशयेन तरीता शीघ्रगामी Sy. अत्यन्तशीघ्र इत्यर्थः Sk.

४. विभवति, व्याप्तो भवति। यद्वा विशेषेण सर्वमलङ्करोति Sy. भवतिरत्र प्राप्त्यर्थः। विविधं प्राप्नोति। यत्र गन्तव्यं तत्र तत्र गच्छतीत्यर्थः। अथवा तूर्षु इत्येतद्विभूषतीत्येतेन सम्बध्यते। तूर्षु इत्येतत्तुर्वतेर्हिंसार्थस्य रूपम्। हिंस्येषु प्राप्नोति। हिंस्यानसुरादीन् प्रति गच्छतीत्यर्थः Sk.

५. याभिश्च युष्मदीयाभिरूतिभिर्हेतुभूताभिः Sk. ६. युष्मदीयाभिरूतिभिः Sy. अत्यन्तशीघ्राभिरूतिभिः Sk.

७. विचक्षणो विद्रष्टा। सर्वार्थानां च ज्ञातेत्यर्थः। पण्डितवचनो वा विचक्षणशब्दः। पण्डितः Sk.

८. ०न्तु M. त्रयाणां मन्ता त्रिविधेषु पाकयज्ञहविर्यज्ञसोमयज्ञेष्वासादितज्ञानः।... ताभिः सर्वाभिरूतिभिरस्मानागच्छतम् Sy. त्रयाणामतीतानागतवर्तमानानां ज्ञाता।... याभिश्च युवामेवं गत्वा त्रिकालविषयज्ञानोपेतं सर्वार्थविषयज्ञानोपेतं च कक्षीवन्तं चक्रथुरस्मानपि प्रति ताभिः Sk.

९. V. Mādhava ignores ताभिः etc.

१०. ०च्छत० M. One असुराः seems to be unnecessary.

११. बध्वा P.D.M.

१२. प्रदे M. १३. ०तस्ति० D.

१४. ०मामश्वि० D. १५. सर्वजीवलोकं पुनः पुनरनुभवितुमित्यर्थः Sk.

१६. ०ता M. १७. ऊतिभिः Sk.

१८. भ० P. स्तुतिभिः सम्भक्तुमिच्छन्तम्। स्तुवन्तमित्यर्थः Sk.

१९. प्ररक्ष० D.M. D. adds (याभिः शचीभिर्यः कर्मभिर्वर्षितारौ) after प्ररक्षथुः। अवतिरत्र गत्यर्थः। चक्षुःप्रदानार्थं प्रकर्षेण गतवन्तौ स्थः। अस्मानपि प्रति ताभिः Sk.

२०. V. Mādhava ignores ताभिः etc.

याभि॒रन्त॑कं॒ जस॑मान॒मार॑णे भु॒ज्युं याभि॑रव्य॒थिभि॑र्जिजि॒न्वथुः॑ ।
याभि॑: क॒र्कन्धुं॑ व॒य्यं॑ च॒ जिन्व॑थ॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तम् ॥६॥

याभिरन्तकम् । याभिः[1] । अन्तकमृषिम्[2] । अगाधे[3] । निमज्जन्तम् । भुज्युं[4] च । याभिः । अकम्पिताभिः[5] । ररक्षथुः[6] । याभिश्च । कर्कन्धुम्[7] । वय्यं[8] तुर्वीतिम्[9] । च[10] ।

याभि॑: शु॒चन्ति॑ ध॑न॒सां सु॑ष॒ंसदं॑ त॒प्तं घ॒र्मम्ओ॒म्याव॑न्त॒मत्र॑ये[*] ।
याभि॑: पृश्नि॑गुं पु॒रुकु॑त्स॒माव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तम् ॥७॥

याभिः शुचन्तिम्[11] । राजयक्ष्मणा[12] गृहीतं ब्राह्मणेभ्यः सर्वस्वस्य[13] दातारं स्तोत्रैः । शोभनसहासनम्[14] । शुचन्ति[15] नीरुजं चक्रथुः[16] । अत्रिमृषिमसुरैरग्नौ[17] प्रक्षिप्तमग्निमुदकेन संशमय्य[18] । पालनवन्तमस्मै[19] चक्रथुः । याभिश्च । पृश्निगुम्[20] । पुरुकुत्सं च[21] । ररक्षथुः[22] ।

---

१. ऊतिभिर्गत्वा Sk.
२. शत्रूणामन्तकरम् Sy.
अन्तकं राजानम् Sk.
३. समुद्रमध्ये Sy. उदके Sk.
४. सर्वस्य पालकमेतत्सञ्ज्ञम् Sy.
५. व्यथारहिताभिर्नौभिः Sy.
अभयरूपाभिर्भयव्यावर्तिनीभिरूतिभिः । नौभिर्वा सामर्थ्यात् Sk.
६. युवामतर्पयतम् Sy.
समुद्रादुत्तारणेन प्रीणितवन्तौ स्थः Sk.
७. कन्धुं M. ०न्धु D.
८. वैय्यं D. वैयं M.
९. तुर्वि० P.
१०. V. Mādhava ignores जिन्वथः and ताभिः etc.
* ओम्याऽवन्तम् । PP.
११. ०न्तीं P.D. न्ति M.
१२. याजं य० M.
१३. धनानाम् Sk.
१४. संसत् सभोच्यते । शोभनसभम् Sk.
१५. ०न्तिः D. ०न्ती M.
१६. चकथुम् M.
१७. ०मुषि ० M.
अत्रेरर्थाय Sk.
१८. संशयमय्य M.
१९. ०नं तम ० M.
युष्मत्प्रसादाच्छीतीभूतम् । अदाहकमित्यर्थः Sk.
२०. वृश्चिगुं M.
पृश्निशब्दो व्याघ्रसरूपवर्णवचनः । पृश्नयो गावो यस्य स पृश्निगुः । तं पृश्निगुं पुरुकुत्सं प्रति Sk.
२१. ररक्षुः M. D. adds (याभिरन्तकं याभिरन्तकमृषिमगाधे निमज्जन्तं भुज्युञ्च याभिरकम्पिताभी ररक्षथुः) after ररक्षथुः ।
अवतिरत्र सामर्थ्याद् गत्यर्थः । गतवन्तौ स्थः । पालनार्थ एव वाऽवतिः । याभिरूतिभिर्गत्वा शुचन्त्यादीन् राजयक्ष्मापनयनादिभिः पालितवन्तौ स्थ इत्यर्थः । अस्मानपि प्रति ताभिः Sk.
२२. V. Mādhava ignores तप्तं घर्मं and ताभिः etc.

याभिः शचीभिर्वृषणा परावृजं प्रान्धं* श्रोणं चक्षस† एतवे कृथः ।
याभिर्वर्तिकां ग्रसितामुमुञ्चतं ताभिरू षु ऊतिभिरश्विना गतम् ॥८॥

याभिः शचीभिः । यैः[१] । कर्मभिः[२] । वर्षितारौ[३] ! परावृजं नाम ऋषिम्[४] । अन्धम्[५] । पङ्गुं[६] च । दर्शनाय । गमनाय च[७] । प्रचक्रतुः । याभिः । वृकेण ग्रस्ताम्[८] । वर्तिकाम्[९] । अमुञ्चतं वृकास्यात्[१०] ।

याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम् ।
याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥९॥

याभिः सिन्धुम् । याभिः[११] । सिन्धुम्[१२] । उदकवन्तम्[१३] । पीतोदकं[१४] चक्रतुर्देवानां पत्नीति[१५] गन्तुं रसान्नदीम् (?) । वशिष्ठं च । याभिः पुत्रप्रदानेन । अजरौ[१६] । ररक्षथुः[१७] । याभिश्च ।

---

* प्र । अन्धम् । PP. † चक्षसे । PP.

१. याभिरूतिभिः Sk.

२. प्रज्ञाभिर्वा Sy.
देवतामाहाभाग्यादतिशयवतीभिः प्रज्ञाभिः कर्मभिर्वा Sk.

३. कामानाम् Sy.

४. एतन्नामकमृषिं पङ्गुं सन्तमपङ्गुमकुरुतम् Sy.
परावर्जितम् । केन ? सामर्थ्यात् प्राणैर्जङ्घादिभिर्वाऽवयवैः । मृतं छिन्नजङ्घं वा सन्तं घोरस्य ज्येष्ठं पुत्रमित्यर्थः Sk.

५. अन्ध P.
दृष्टिरहितं सन्तमृज्राश्वमृषिम् Sy.
अन्धं च ऋज्राश्वम् Sk.

६. श्रोणं बधिरं च नार्षदम् Sk.

७. साकाङ्क्षत्वाच्छ्रवणाय चेति वाक्यशेषः । पूर्वैश्च सह योग्यतयैषां सम्बन्धः । चक्षसेऽन्धमृज्राश्वम् एतवे परावृजं घोरस्य ज्येष्ठं पुत्रं श्रवणाय नार्षदम् Sk.

८. ०कालम् M.
चटकतदृशस्य पक्षिणः स्त्रियम् । . . . यास्कपक्षे तु वृकेण विवृतज्योतिष्केण सूर्येण याभिर्ग्रस्तां वर्तिकां प्रत्यहमावर्तमानामुषसं तस्मादमोचयतम् इति योज्यम् । ताभिः सर्वाभिरूतिभिरस्मानप्यागच्छतम् Sy.
वर्तिका नाम चटकजातिः शीघ्रगतिः श्रमवर्जिता च Sk.

९. मुचिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । अमोचयतम् । मोचितवन्तौ स्थ इत्यर्थः Sk.

१०. V. Mādhava ignores ताभिः etc.

११. ऊतिभिः Sk.

१२. स्यन्दनशीलां नदीम् Sy.
नदीं सरस्वत्याख्याम् Sk.

१३. मधुसदृशेनोदकेन पूर्णाम् Sy.
व्यत्ययेन चात्र पुंल्लिङ्गत्वम् । उदकवतीम् Sk.

१४. वीतो० P. याभिरूतिभिः . . . अगमयतं प्रावाहयतमित्यर्थः Sy.
सश्चतिरत्रोपक्षये । अक्षयोदकाम् Sk.

१५. पणीति M. १६. जरौ P.

१७. अप्रीणयतम् Sy.
जिन्वतिः प्रीतिकर्मा । लोहितवहनशापापनयनेन पुत्रप्रदानेन च प्रीणितवन्तौ स्थः Sk.

कुत्सादींस्त्रीन्[१]। आवतम्[२]।[३]

याभिर्विश्पलां धनसामथर्व्यं[*] सहस्रमीळ्ह आजावजिन्वतम्।
याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१०॥

याभिर्विश्पलाम्[४]। यैः पालनैः। विश्पलां नाम स्त्रियमैलस्यार्थाय[५] तस्य[६] शत्रुभिः सह युध्यन्तीं[७] शत्रुभिश्छिन्नजङ्घाम्। अगन्त्रीम्[८]। सहस्रधननिमित्ते। सङ्ग्रामे[९] ऐलस्य पुरोहितेनागस्त्येन स्तुता-[१०] वश्विनौ लोहमयजङ्घाप्रतिसन्धानाद्। ररक्षथुः[११]। याभिः। अश्वस्य[१२] पुत्रम्। वशं नाम राजानं स्तोत्रैस्तर्पयितारं[१३] हस्तिबलैः[१४] शत्रुभिरभिभूयमानम्। ररक्षथुः[१५][१६]।

याभिः सुदानू[†] औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत्।
कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥११॥

याभिः सुदानू। याभिः। शोभनदानौ। कक्षीवते[१७]। वणिग्वृत्तये[१८] पर्वतमध्ये गताय। दीर्घ-

---

१. शृणोतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः।... श्रावयितारं स्तुतीनाम्। स्तोतारमित्यर्थः। नर्यं नरेषु भवम्। मनुष्यलोक एव व्यवस्थितं सन्तम् Sk.

२. अवतिरत्र गत्यर्थः। दर्शनं दातुं पूर्व-मागतवन्तौ स्थः Sk.

३. V. Mādhava ignores ताभिः etc.

* सहस्रऽमीळ्हे। PP.

४. ०श्वलां M. ५. ०श्वलां M. एतत्सञ्ज्ञामगस्त्यपुरोहितस्य खेलस्य सम्बन्धिनीम् Sy. ६. ०यैमै० M.

७. ०भिरसंयु० P. ८. ०न्नजंघयन्त्रीं P. ०न्नजंघ गन्त्रीं D. ०न्नजंयत्वोः गन्त्रीं M.

९. सहस्रमिति बहुनाम। बहूनि धनानि निमित्तभूतानि यस्य स सहस्रमीळ्हः। तस्मै सहस्रमीळ्हे। बहुधनप्राप्त्यर्थ-मित्यर्थः Sk. १०. ताव M.

११. रक्षथुः P. D. M. प्रीणितवन्तौ स्थः Sk.

१२. अश्व्यम्। समूहेऽयं यत्प्रत्ययः। अन्त-र्णीतमत्वर्थश्च। अश्वसमूहवन्तम् Sk.

१३. ०तारः M. स्तुतेः प्रेरयितारम् Sy. हविर्भिश्च देवानाम् Sk.

१४. ०बलेः P. ०बलै D.

१५. आगतवन्तौ स्थः Sk.

१६. V. Mādhava ignores धनसाम्। and ताभिः etc.

† सुदानू इति सुऽदानू। PP.

१७. ०चते M. उशिक्सञ्ज्ञा दीर्घतमसः पत्नी तस्याः पुत्रो दीर्घश्रवा नाम कश्चिदृषिरना-वृष्ट्यां जीवनार्थमकरोद् वाणिज्यम्। स च वर्षणार्थमश्विनौ तुष्टाव। तौ चाश्विनौ मेघं प्रेरितवन्तौ। औशिजाय, उशिक्पुत्राय Sy. उशिजपुत्रस्य वणिजो दीर्घश्रवस ऋषेरर्थाय Sk.

१८. पणिवृत्त P. वणिवृ० D. वाणिज्यं कुर्वते Sy.

श्रवसे[1]। जलम्। मेघः। अक्षरदित्येतदेवाह[2] कक्षीवन्तमिति[3]।

**याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे।**
**याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतम्॥१२॥**

याभी रसाम्[4]। पणिभिरपहृतासु गोषु तत्र गमनार्थं रसाया[5] एव नद्या[6] उदकं प्रथममास्ये-नाश्विनौ पपतुरथ कार्ये समाप्ते प्रागुदकेन यः क्षुण्णो मार्ग[7] आस्यात्मकस्तेनैव[8] पुनरप्यश्विनौ पूरित-वन्ताविति[9]। तथाऽनश्वश्च कदाचिदश्विनो[10] रथोऽभूद् युद्धे तं[11] जयाय युद्धमध्ये[12] ररक्षथुः[13]। त्रिशोक[14] आत्मीयाभिर्गोभिः सह स्वर्ग जिगमिषुः[15] स्वर्गे गा[16] उदाजतेति[17]।

**याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम्।**
**याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥१३॥**

याभिः सूर्यम्। याभिः सूर्यम्[18]। परिगच्छथः[19]। दूरे "न्यघ्न्यस्य[20] मूर्धनि[21]" इति मन्त्रः।

---

१. मधु माधुर्योपेतं वृष्टिजलम् Sy.

२. अरक्षदित्येतदेवदाह P. असिञ्चत्। युष्मत्प्रसादादपेक्षिता वृष्टिर्जातेत्यर्थः। ...ताभिः सर्वाभिरूतिभिः सहास्मान-प्यागच्छतम् Sy.

३. V. Mādhava ignores स्तोतारं याभिरावतं ताभिः etc.

४. याभिरासां M. याभिरसां P. हे अश्विनौ याभिरूतिभिर्हेतुभूताभिः, रसां नदीमनावृष्ट्या जलरहितां, क्षोदसा कूलानि सम्पिषता, उद्न उदकेन पिपि-न्वथुर्युवां पूरितवन्तौ Sy.

५. रसां नामान्तरिक्षनदीं क्षोदसा। क्षोद इत्युदकनाम। तृतीयानिर्देशाच्च रहिता-मिति वाक्यशेषः। देवशापादुदकेन रहिताम् Sk.

६. ०द्य P. ७. मा M.

८. अस्यात्मकं D.

९. उदकेन Sk. १०. ०नौ M.

११. तत् M. १२. युद्धे मध्ये M.

१३. अगमयतम् Sy. शत्रून् प्रति गमयथ इत्यर्थः। अथवा आवतमित्यवतिः शुद्ध एव प्रकृत्यर्थे वर्तते। अनश्वं रथमिति तृतीयार्थे द्वितीया। अनश्वेन च रथेन शत्रून् प्रति गच्छथ इत्यर्थः Sk.

१४. स्त्रीशो० M. अपिच याभिरूतिभिः कण्वपुत्रस्त्रिशोक ऋषिरुस्रिया अपहृता गा उदाजत, उदगमयद् असुरसकाशाल्लेभे Sy.

१५. ०षु D. १६. उत्क्षिप्तवान्। स्वर्गं गमितवानित्यर्थः Sk.

१७. V. Mādhava ignores ताभिः etc.

१८. याभिः। सूर्यम् omitted by P. and D. तमोरूपेण स्वर्भानुनावृतमादित्यम् Sy.

१९. परिप्राप्नुथः Sk.

२०. न्यघ्नस्य D. न्याघ्न्यस्य M.

२१. ०र्धन् P. RV. I. 30. 19ᵃ.

मन्धातारं[१] च शत्रुभ्यस्तेषु तेषु। क्षैत्रपत्येषु[२] सप्तद्वीपविषयेषु। ररक्षथुः[३]। याभिश्च। मेधाविनम्। भरद्वाजम्[४]। प्रावतम्[५]।[६]

**याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम्।***
**याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१४॥**

याभिर्महाम्[७]। याभिः। महान्तम्[८]। अतिथीन्[९] प्रति गन्तारं तान्[१०] परिचरन्तं शम्बरभयाद्[११] (?) ध्रुवं प्रति गच्छन्तम्[१२]। दिवोदासम्[१३]। शम्बरहनने[१४]। ररक्षथुः[१५]। याभिश्च। पुरो[१६] भेदने। त्रसदस्युम्[१७]। आवतम्[१८]।

**याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः।**
**याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१५॥**

याभिर्वम्रम्। याभिः। वम्रादींस्त्रीन्[१९]। ररक्षथुः[२०]। कलिर्नाम वृद्धः सन्। तरुणीं जायां वित्त्वा[२१]।

---

१. मन्थातारं P. M. मन्थाधारं D. राजानम् Sk. २. क्षेत्राणां पतिरधिपतिः क्षेत्रपतिः। तत्सम्बन्धिषु कर्मसु Sy. क्षेत्रपतित्वार्थम्। शत्रुणा क्रान्तस्य स्वस्य विषयस्य पुनरपि स्वामिनं कर्तुमित्यर्थः Sk.
३. आगतवन्तौ स्थः Sk.
४. ऋषिमन्त्रप्रदानेन Sy.
५. प्रापतं D. M. प्रभूतधनदानार्थं प्रकर्षेण गतवन्तौ स्थः Sk.
६. V. Mādhava ignores ताभिः etc.
* महाम्। अतिथि ऽग्वम्। कशः ऽजुवम्। दिवः ऽदासम्। शम्बर ऽहत्ये। PP.
७. ०हान् M.
८. वीर्यतः प्रभावतो वा Sk.
९. अतिथिभिर्गन्तव्यम् Sy.
१०. असुरभीत्यो दकं प्रवेष्टुं गन्तारम् Sy.
११. ०यं M.
१२. स्तुतिलक्षणया वाचा युवां प्रति गन्तारम्। युवयोरेव स्तोतारमित्यर्थः Sk.
१३. एतसञ्ज्ञकं राजर्षिम् Sy. दिवोदासं राजानं प्रति Sk.
१४. ०ननेना P. १५. शम्बरनाम्नोऽसुरस्य वधे साहाय्यं कर्तुमागतवन्तौ स्थः Sk.
१६. पूर्नगरम्। सा भिद्यते येन यस्मिन् वा सङ्ग्रामे स पूर्भिद्यः। तस्मिन् पूर्भिद्ये Sk.
१७. आवकम् M. गतवन्तौ स्थः Sk.
१८. V. Mādhava ignores ताभिः etc.
१९. विपिपानम्। पा पाने। सामर्थ्याच्चान्तर्णीतसन्नर्थो द्रष्टव्यः। विविधं पिपासन्तम्। अत्यन्ततृषितमित्यर्थः। उपस्तुतम्। कर्तर्ययं क्तप्रत्ययश्छान्दसत्वात्। उपस्तोतारम् Sk.
२०. लब्धभार्यं कलिमेतत्सञ्ज्ञमृषिं याभिरूतिभिः . . . रक्षथः Sy.
२१. वित्वा P. D. M. वित्ता जाया येन स वित्तजानिर्लब्धभार्यकः। तं वित्तजानिम् Sk.

पुनर्यौवनमलभत, दुवस्यतिः[1] प्रीणनार्थः। याभिश्चाङ्गिरसम्। व्यश्वम्[2]। अपिच[3]। पृथिम्[4]। आवतम्[5]।

**याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः।**
**याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतम् ॥१६॥**

याभिर्नरा। अधेनोर्धेनूकरणार्थमग्निप्रशमनार्थं च। शयुम्[6]। अत्रिं[7] च प्रतिगमनेच्छा। याभिश्च। पुरा। मनवे[8] राज्ञेऽनावृष्ट्याऽनडुत्सु[9] परिक्षीणेषु कर्षणविमुखे राष्ट्रे[10]। ररक्षतुः[11]। इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्। तेषां स्यूमरश्मिरश्विनौ[12] तुष्टाव स वृकेभ्योऽश्विभ्यां शरमयी-रिषूर्वृकवधार्थं[13] विसृज्य रक्षितः[14]।

**याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना।**
**याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतम् ॥१७॥**

याभिः[15] पठर्वा। पठर्वा[16] नाम सन्नजाठराग्निः[17] पश्चात् प्रवृद्धाग्नेः[18]। जठरस्य। दीप्तिबलेन[19]

---

१. दुवस्यतीति परिचरणकर्मा। वृष्टिप्रदानेन पुनर्यौवनकरणेन च परिचरितवन्तौ स्थः Sk. २. विगताश्वं पृथिमेतत्सञ्ज्ञं वैनं राजर्षिम् Sy.
३. प्र० P. D. M.
४. गतवन्तौ स्थः Sk.
५. V. Mādhava ignores ताभिः etc.
* शारीः। आजतम्। PP.
६. शं P. D. शयवे ... ऋषये गातुं दुःखान्निर्गमनलक्षणं मार्गं याभिरूतिभिरीषथुर्युवां वाञ्छितवन्तौ कृतवन्ताविवत्यर्थः Sy. शयोरर्थाय Sk.
७. अन्त्रिं M. तथाऽत्रय ऋषये शतद्वारे यन्त्रगृहेऽसुरैः पीड्यमानाय सन्तापकारिणोऽग्नेः शीतेनोदकेन शीतकरणलक्षणं गातुं दुःखनिर्गमनहेतुभूतं मार्गं याभिः Sy. अत्रिमसुरैरग्निकूटे प्रक्षिप्तमुद्धर्तुं बलं चासुरप्रतिबन्धसमर्थं सहान्नेनास्मै दातुमित्यर्थः Sk.
८. तथा मनवे ... राजर्षये याभिरूतिभिर्यवादिधान्यवापनादिरूपं गातुं दारिद्र्यनिर्गमनहेतुं मार्गं युवां कृतवन्तौ Sy. हलेन कर्षयित्वा युवामन्नं ददतुरित्यर्थः Sk. ९. ०नासुत्सु P. अनं धुत्सु M.
१०. P. adds राज्ञे before राष्ट्रे
११. अपिच स्यूमरश्मये स्यूतः सम्बद्धो रश्मिर्दीप्तिर्यस्य तस्मा एतत्सञ्ज्ञकाय ऋषये याभिरूतिभिः शारीः। शरो नाम वेणुविशेषः। तद् विकारभूता इषूः, आजतं शत्रून्प्रति प्रैरयतम् Sy. १२. स्यु० P.
१३. वृकं प्रति क्षिप्तवन्तौ स्थः Sk.
१४. V. Mādhava ignores नरा। गातुम्। ईषथुः and ताभिः etc.
१५. वठ० P. ०र्वां D. १६. वठ० P. एतत्सञ्ज्ञो राजर्षिः Sy.
१७. सन्नजारोऽग्निः M.
१८. जठरोपलक्षितस्य शरीरस्य...बलेन युक्तः सन्... युष्मदीयाभिर्याभिरूतिभिः...समन्तात्...अदीप्यत Sy.
१९. जाठरस्याग्नेः प्रवृद्धयर्थम् Sk.

गृहे[1] यजमानैर्होमार्थम्। सञ्चितः[2]। काष्ठैः समिद्धः[3]। इव। अग्निः[4]। प्रजज्वाल। याभिश्च। शर्यातम्[5]। अवथः। सङ्ग्रामे[6]।

याभिरङ्गिरो मनसा निरण्यथोऽग्रं* गच्छथो विवरे गोअर्णसः।
याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१८॥

याभिरङ्गिरः। याभिः। गमनशीलौ[7]! स्तोतॄन् धनैर्[8]निरमेथे[9]। बुद्धिपूर्वं याभिश्चासुरैर[10]पहृताभिर्गोभिर्युक्तस्य पर्वतस्य[11] विवरे[12] प्रवेशे[13] युद्धार्थं गतानां देवानामग्रमगच्छतम्[14]। याभिश्च। मनुं राजानं शूरं स्वयं हलकर्षितेन। अन्नेन[15]। प्रावतम्[16]।

याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम्।
याभिः सुदास ऊहथुः सुदेव्यं† ताभिरू षु ऊतिभिरश्विना गतम् ॥१९॥

याभिः पत्नीः। विमदाय[17] परिणीताम्। भार्याम्। याभिः स्वगृहम्। प्रत्यूहथुः[18]। याभि-

---

१. यज्ञगृह इत्यर्थः Sk.
२. चयनेन संस्कृतः Sk.
३. आहुतिसमूहेन दीप्तः Sk.
४. यथाऽग्निः प्रकाशते तद्वत् Sy.
५. शर्याथं P. शय्यातं M. इन्द्रेण सह स्पर्धमानम् Sy.
६. V. Mādhava ignores आ and ताभिः etc.
* निऽरण्यथः। PP.
७. हे अङ्गिरः। सोऽयमित्यभिसम्बन्धादङ्गिरश्शब्देनात्राङ्गिरःसम्बद्धावश्विनावुच्येते। व्यत्ययेन च द्विवचनस्य स्थान एकवचनम्। अङ्गिरःसम्बद्धौ। कः पुनरङ्गिरसोऽश्विनोश्च सम्बन्धः? स्तोतृस्तुत्यलक्षणः। अस्मत्पितुरङ्गिरसः स्तुत्यावित्यर्थः Sk.
८. ०तॄद्धनैः P. ९. नरमेथे P. यद्वा मनसैव करणभूतेन रमयथः Sy.
१०. याश्चा० M. गोअर्णसो गोरूपस्यारणीयस्य धनस्य पणिभिर्गुहायां निहितस्य विवरे विवरणे गुहाद्वारस्योद्घाटनेन प्रकाशने विषयभूते सति याभिरूतिभिः सह युवामग्रं सर्वेभ्यो देवेभ्यः पुरस्ताद् गच्छथः Sy.
११. गोशब्दोऽत्र गमेः क्रियाशब्दो गमनार्हवचनः। अर्ण इत्युदकनाम। प्राभूत्यात्सस्यसम्पत्तिकरत्वाच्च गमनार्हमुदकं यस्य स गोअर्णा मेघः। तस्य Sk.
१२. विवरार्थम्। विवरं कर्तुमित्यर्थः Sk.
१३. प्रद्वेशे P. १४. ०मग्रा० P. याभिश्चाग्रमुपरिभागं गच्छथः Sk.
१५. प्रातवतम् P. हलेन कर्षित्वाऽन्नं मनवे दत्तमित्यर्थः Sk.
१६. V. Mādhava ignores ताभिः etc.
† सुऽदेव्यम्। PP. १७. विमा० P. एतन्नाम्ने, ऋषये याभिर्युष्मदीयाभिरूतिभिः पत्नीर्भार्याः पुरुमित्रस्य दुहितरं न्यूहथुर्नितरां युवां प्रापितवन्तौ Sy.
१८. रथेनोढवन्तौ स्थः Sk.

विमदाय। अरुणीर्गाश्च[1]। अशिक्षतम्[2]। याभिश्च[3]। सुदासे[4] राज्ञे। धनम्[5]। ऊहथुः[6]।[7]

याभिः शंताती[*] भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम्।
ओम्यावतीं[†] सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतम् ॥२०॥

याभिः शन्ताती। याभिः। शङ्करौ। भवथः। यजमानाय। भुज्युं[8] च समुद्रमध्ये विपन्न-
नावम्। याभिः। अवथः[9]। याभिश्च। अधृतगमनमिन्द्रम्[10] 'युवं सुरामश्विना' इति मन्त्रः[11]। पालन-
वतीम्[12]। धनपूर्णामिमाम्[13]। सत्यां स्तुतिम्[14]। ताभिः। आगतम् इति।[15]

याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम्।
मधु प्रियं भरथो यत्सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतम् ॥२१॥

याभिः कृशानुम्। कृशानुं नाम[16] सोमपालमसुरैः सोममपजिहीर्षद्भिः सह युध्यन्तं[17] क्षीण-
शरमिषुप्रदानेन[18]। ररक्षथुः[19]। इषुक्षेपणकाले[20]। मृगयामटतः[21] शार्यातस्य[22] च राज्ञो[23] यूनः। अश्वः

---

१. अरुणवर्णा आरोचमाना गाः Sy.
२. दत्तवन्तौ स्थः Sk.
३. ०श्चा P. ४. सुदनसे P.
५. धनमन्नं च Sk.
६. रथेनानीतवन्तौ स्थः Sk.
७. V. Mādhava ignores आ। घ। वा and ताभिः etc.
* शंताती इति शम्ऽताती। PP.
† ओम्याऽवतीम्। सुऽभराम्। ऋतऽस्तु-भम्। PP.
८. ० ज्यं M. तुग्रस्य पुत्रम् Sy.
९. ० भीर० M. नौभिरश्वं रथैश्चोत्तारणेन पालितवन्तौ स्थः Sk.
१०. धृत० P. अवधृ० M. अध्रिगुर्देवानां शमिता Sy. अध्रिगुशब्देन ह्यत्र गवेऽधृतत्वादिन्द्र उच्यते।... अधृतगमनत्वाद्वा Sk.
११. RV. X. 131. 4.
१२. ओम्या इति सुखनाम। तद्युक्ताम् Sy. अस्मत्पालनफलामित्यर्थः Sk.
१३. सुखेन भरणीयामिषं याभिरूतिभिः प्रापयथः Sy. युष्मद्गुणैः सम्पूर्णाम् Sk.
१४. ० ति M. ऋतं सत्यं स्तोभत्युच्चारयतीति ऋतस्तुप्। एतत्सञ्ज्ञमृषिम् Sy.
१५. V. Mādhava ignores उ। सु। ऊतिभिः। अश्विना।
१६. ० नुर्नाम D. स्वानादिषु सोमपालेषु मध्ये कृशानुरेकः सोमपालः।... तं कृशानुम्।... असने। इषवोऽस्यन्तेऽस्मिन्नित्यसनः सङ्ग्रामः। तस्मिन् सङ्ग्रामे Sy.
१७. ० न्त M.
१८. क्षीणशमिषु प्रदाने M.
१९. दुवस्यतिः परिचरणकर्मा। परिचरितवन्तौ स्थः Sk.
२०. ० णे का० M.
२१. ० त P. २२. र्यातस्य P. शय्यातस्य M. २३. ० ज्ञे P.

प्रमादात्तपस्यन्तं स्थाणुभूतं भृगुं प्रति पपात। तमतिजवे[1] वर्तमानमश्विनौ निवारयामासतु-[2]श्चिन्तितमात्रौ तौ। युवां वृष्टयभावाद्धीनेषु[3] मधु[4]। आहृतवन्तौ[5]। यत्[6]। हितम्। सरघेभ्यः[7]।

याभिर्नरं गोषुयुधं* नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः ।
याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतम् ॥२२॥

याभिर्नरम्। याभिः[8]। भरद्वाजं[9] नरम्[10]। गोनिमित्तं युध्यन्तम्। युद्धे[11]। क्षेत्रस्य[12]। तनयस्य[13] च[14] भजननिमित्तं[15] युध्यन्तम्। जिन्वथः[16]। याभिश्च तस्य[17] रथान्। अश्वांश्च। अवथः[18][19]।

याभिः कुत्समार्जुनेयं शतक्रतू† प्र तुर्वीतिं प्र च दभीतिमावतम् ।
याभिर्ध्वसन्तिं पुरुषन्तिं‡ आवतं ताभिरू षु ऊतिभिरश्विना गतम् ॥२३॥

याभिः कुत्सम्। याभिः। कुत्सम्। अर्जुन्याः पुत्रं[20] माम्। शतकर्माणौ[21]। प्रावतम्[22]। तुर्वीतिम्[23]।

---

१. याभिश्च ...वेगे प्रवृत्तं यूनस्तरुणस्य पुरुकुत्सस्य ...अश्वम्...अरक्षतम् Sy.
२. रक्षितवन्तौ स्थः Sk.
३. वृष्य० M.
४. क्षौद्रम् Sy. प्रियमिष्टम् Sk.
५. मध्याहृ० M. सम्पादयथः Sy. दत्तवन्तौ स्थ इत्यर्थः Sk.
६. तृतीयाबहुवचनस्यात्र लुक्। याभिः सरड्भ्यः। सरडाख्या मधुकर्यः। ताभ्यो मक्षिकाभ्यः Sk.
७. V. Mādhava ignores याभिः। ताभिः etc.
* गोषुऽयुधम्। नृऽसह्ये। PP.
८. ऊतिभिर्गत्वा Sk.
९. भा० M. यज्ञस्य नेतारं यजमानम् Sy.
१०. सर्वमनुष्यम् Sk.
११. नृभिः सोढव्ये Sy. नरो यत्राभिभूयन्ते प्रतियोद्धृभिः स नृषाह्यः सङ्ग्रामस्तस्मिन् Sk.
१२. गृहादिरूपस्य Sy.
१३. तनयशब्दो धनवाची। तनयस्य धनस्य च Sy.
१४. Omitted by M.
१५. सातौ लाभे Sk.
१६. जिन्वररः M. प्रीणयथो रक्षथ इत्यर्थः Sy. जयकरणेन क्षेत्रापत्यदानेन च प्रीणयथः Sk.
१७. स्तोतुः स्वभूतान् Sk.
१८. अपथः M.
१९. V. Mādhava ignores ताभिः etc.
† शतक्रतू इति शतऽक्रतू। PP.
‡ पुरुऽसन्तिम्। PP.
२०. अर्जुन इतीन्द्रस्य नाम।...तस्य पुत्रं कुत्सम् Sy.
२१. बहुप्रज्ञौ वा Sk.
२२. ० तः P. प्रापतम् M. प्र इत्येष उपेत्यस्य स्थाने।...आवतिरपि गत्यर्थः। तुर्वीतिं दभीतिं च दर्शनार्थमुपगतवन्तौ स्थः Sk.
२३. तुर्विति M.

दभीतिम्। च। ध्वस्रो नाम राजा ध्वसन्तिरुच्यते[1]। तस्य भार्या। पुरुषन्तिः[2]। "ध्वस्रयोः[3] पुरुषन्त्योः[4]" इति मन्त्रः[5]।

**अप्नस्वतीमश्विना वाचमस्मे* कृतं नो दस्रा वृषणा मनीषाम्।**
**अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ॥२४॥**

अप्नस्वतीम्। कर्मवतीम्[6]। अश्विनौ! वाचम्। अस्माकम्। कुरुतम्[7]। दर्शनीयौ! वर्षितारौ[8]! प्रज्ञया[9]। न[10] इति पूरणम्। अद्यूत्ये[11] बलाभावाद्युद्धवर्जिते सङ्ग्रामे[12]। रक्षणाय। वाम्[13]। निह्वये तथा सत्यस्मिन् सङ्ग्रामे। वर्धमानाय। च। भवतमप्नस्वतीं वाचं च कुरुतमिति[14]।

---

१. ज्वजन्ति० M. एतत्सञ्ज्ञं पुरुषन्तिमेतन्नामानञ्च ऋषिम् Sy.

२. ०न्ती P.D.M.
ध्वसन्तिर्नाम वेश्या। तथा पुरुषन्तिः। ते उपहासकुशले इति श्रुत्वाऽश्विनौ सम्भोगार्थमुपाजग्मतुरिति। तदेतदिहोच्यते। याभिश्च ध्वसन्ति वेश्याम्। वेश्यां पुरुषन्ति च, आवतं सम्भोगार्थमुपगतवन्तौ स्थः Sk.

३. ०यः P.

४. RV. IX. 58. 3.

५. V. Mādhava ignores ताभिः etc.

* अस्मे इति। PP.

६. विहितैः कर्मभिः संयुक्ताम् Sy.
यागकर्मणा तद्वतीम् Sk.

७. कुन्तं च M.

८. शत्रूणामुपक्षपयितारौ Sy.
दस्रनामानौ। अन्यतरनाम्नापि चेदं साहचर्यादुभयोरभिधानम्। क्रियाशब्दो वा दंशेर्दर्शनार्थस्य ... दस्रशब्दः। दर्शनीयावुपक्षपयितारौ वा शत्रूणाम् Sk.

९. प्रज्ञा P.
बुद्धिं ... वेदार्थज्ञानसमर्थां कुरुतम् Sy.
मनीषां प्रज्ञामपि। चित्तमप्यस्माकं यागपरं कुरुतमित्यर्थः। कथं पुनरिदमुभयं भवति? उच्यते यद्यश्विनावागच्छतः। आगतयोर्हि तयोर्यागः क्रियते। तेन क्रियमाणेन कर्मवत्यौ वाक्प्रज्ञे भवतः। अथवा वाक्प्रज्ञाकरणेन तद्धेतुभूतमागमनमेव प्रतिपाद्यते। यागार्थमागच्छतमित्यर्थः Sk.

१०. अस्माकम् Sy.

११. अद्रूत्ये P.
प्रकाशनरहिते रात्रेः पश्चिमे यामे। तस्मिन् काले हि प्रातरनुवाकाश्विनशस्त्रयोरिदं सूक्तं पठ्यते Sy.
... अद्यूत्येऽवसे। दीव्यतिर्विजिगीषार्थः। देवनं द्यूतम्। विजिगीषा यस्मिन्नास्ति तदद्यूतम् ... अद्यूतमेवाद्यूत्यम्। ... अवस्तर्पणम्। यद्युवयोरेव योग्यत्वादन्यया देवतया विजिगीषितुमशक्यं सोमतर्पणं तदर्थं निह्वये नियमेनाह्वये Sk.

१२. वाजस्यान्नस्य सम्भजने। यद्वा सङ्ग्रामनामैतत्। सङ्ग्रामे Sy.

१३. रक्षितावन् P.

१४. V. Mādhava ignores नः and ताभिः etc.

द्युभि॑र॒क्तुभि॒: परि॑ पातम॒स्मानरि॑ष्टेभिरश्विना॒ सौभ॑गेभिः ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒: सिन्धु॑: पृथि॒वी उ॒त द्यौः ॥२५॥

द्युभिरक्तुभिः । अहोरात्रैः[1] । अस्मान्[2] । परिरक्षतम् अपिवाऽह्नोरात्रेभ्यः । अनुपहिंसितैर्भवदीयैः । कल्याणैः[3] । इतिहासा विस्पष्टा[4] भविष्यन्ति नासत्याभ्यामित्यादिषु बहुज्ञैः सूक्तं निरूपणीयमिति[5] ।

इत्थं सप्तममध्यायं व्याकरोत्प्रथमेष्टके ।
...[6] जातो गोपनकुले[7] माधवो वेङ्कटात्मजः ॥

# [अथाष्टमोऽध्यायः]

इदं श्रेष्ठमथाध्यायं माधवो व्याचिकीर्षति ।
रूपे भिन्ने स्वरे भिन्ने शब्दवृत्तिं प्रदर्शयन् ॥ १ ॥
अर्थाभेदे[8] तु शब्दस्य सर्वत्र सदृशः[9] स्वरः ।
यदा न तं स्वरं पश्येदन्यथार्थं तदा[10] नयेत् ॥ २ ॥
पुरूतमं पुरूणामृग्[11]भवेत्तत्र निदर्शनम् ।
तमप्चेदनुदात्तः[12] स्यात्तथा ह्यन्यत्र दर्शनम् ॥ ३ ॥

---

१. सप्तम्यर्थे च तृतीया । अहस्सु रात्रिषु च Sk.

२. स्तोतॄन् । ... सर्वदाऽस्माकं रक्षतमित्यर्थः Sy.

३. सुभगत्वापादकैर्धनैरस्मान् रक्षतम् Sy. भग इति धननाम । शोभनानि धनानि सुभगानि । सुभगान्येव सौभगानि । तैः सौभगेभिः । तृतीयाश्रुतेः साकाङ्क्षत्वात् संयोजयतमिति वाक्यशेषः Sk.

४. ०ष्ट P.

५. V. Mādhava ignores अश्विना and तत् । नः etc. Ms. D. puts the figure ॥११२॥ here to indicate the end of one hundred and twelfth hymn. No such number is given in P. and M.

६. प्रजातो is suggested.

७. गोवन० P.

८. अर्त्था० D.P.

९. सदृशस्वरः M.

१०. तथा M.

११. RV. I. 5. 2ᵃ

१२. ०दात्त P.

शुष्मिन्तमो हि ते मदो[1] द्युम्निन्तम उत क्रतुः[2] ।
नात्रोदात्तौ तमौ दृष्टौ दृश्यते तु पुरूतमे ॥४॥

बहून् ग्लपयतीत्यर्थस्तेन[3] तत्र प्रदर्शितः ।
सर्वत्रैवं समानेषु स्वरेणार्थो[4] व्यवस्थितः ॥५॥

'होम गन्तारमूतये[5]' 'जेतारमपराजितम्[6]' ।
'पाता[7] सुतमिन्द्रो अस्तु[8]' 'स चेत्ता[9] देवता पदम्'[10] ॥६॥

'इन्द्रो विश्वस्य दमिता'[11] 'भेत्ता[12] पुरां शश्वतीनाम्[13]'[14] ।
'विभक्तारं[15] हवामहे[16]' तृन्तृचाः[17] स्युर्निदर्शनम्[18] ॥७॥

तृन्तृचोश्चार्थभेदोऽयं[19] प्रकृत्यर्थः स्फुटस्तृनि[20] ।
तृचि[21] स्फुटः[22] प्रत्ययार्थः[23] प्रकृत्यर्थोपसर्जनः[24] ॥८॥

लुङ्लङ्लृङ्क्ष्वडुदात्तो[25] यः स भूतार्थस्य सूचकः ।
वाचकान्प्रत्ययानाहुस्तत्राकारं[26] स्फुटं वदेत् ॥९॥

---

१. मेदो M.
२. RV. I. 127. 9[c–d].
३. ग्लापयती० P.
४. ०णात्थो D. P.
५. RV. I. 9. 9[c].
६. जेतारं पराजितम् M. जोरपराजितं P. RV. I. 11. 2[d].
७. पातसुत० P.
८. RV. VI. 23. 3[a].
९. चेत्तान् M.
१०. RV. I. 22. 5[c].
११. RV. V. 34. 6[c].
१२. Omitted by M.
१३. शाश्वतीनां D. श्वतीनां P.
१४. RV. VIII. 17. 14[c].
१५. हि भक्तारं P.
१६. RV. I. 22. 7[a].
१७. तृन्तृचो स्युः D. P.
१८. र्न M.
१९. तृन्चोश्चात्थं० D. तृन्तृचोश्चात्थं०P.
२०. ०र्थः स्फुटः स्तृनि D. ०र्थः स्फुटः सुनिः P.
२१. तृची P.
२२. स्पष्टः M.
२३. ०यार्थः D. P.
२४. प्रकृत्यर्थोपसर्जनम् M.
२५. लृक्ष्व० M. लृक्ष्वद्धात्तो P.
२६. ०कारः P.

नञमाहुरथैके तं प्रतिषेधस्य सूचकम् ।
छान्दसेषु लकारेषु सम्प्रत्यर्थस्य सूचकः ॥१०॥
अष्टके प्रथमेऽस्माभिः स्वर इत्थं प्रपञ्चितः ।
स्थापनीयः प्रयत्नेन वाक्यार्थे पण्डितैरयम् ॥११॥
अन्धकारे दीपिकाभिर्गच्छन्न स्खलति क्वचित् ।
एवं स्वरैः प्रणीतानां भवन्त्यर्थाः स्फुटा इति ॥१२॥

I.113.

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥१॥

इदं श्रेष्ठम् । कुत्सः । इदम् । प्रशस्यतमम् । ज्योतिषाम् । ज्योतिरुषआख्यम् । प्रादुरभूत् । चित्रम् । प्रज्ञानम् । विभूषितम् । जातं मनुष्याणाम् । यथेयं रात्रेः । जाता । सवितुरादित्यस्य ।

---

१. नन्नम० P. २. छादनेषु P.
३. चकारेषु D. P. M.
४. सूचकम् D. P.
५. प्रदर्शितः M.
६. ०र्था स्फुटा D. M.
* ज्योतिः । आ । अगात् । PP.
७. उषाः कस्मात् ? उच्छतीति सत्या रात्रेरपरः कालः । तस्या एषा भवति... इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत् । चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमम् । यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत् स्थानम् । N. 2. 18.19.
८. अप्र० M.
अस्य कोऽतिशय इति चेदुच्यते । नक्षत्रादिकं ज्योतिः स्वात्मानमेव प्रकाशयति नान्यत् । चन्द्रस्तु यद्यप्यन्यत् प्रकाशयति तथापि न विस्पष्टप्रकाशः । औषसं तु ज्योतिर्युगपदेव सर्वस्य जगतोऽन्धकारनिराकरणेन विशेषेण प्रकाशकम् । अतः प्रशस्यतममित्यर्थः Sy.
९. ०षा M.
ग्रहनक्षत्रादीनां द्योतमानानां मध्ये Sy.
१०. उद्गता । इयमुषा उदितेत्यर्थः Sk.
११. चायनीयः Sy. पूज्यं वा Sk.
१२. अन्धकारावृतस्य सर्वस्य पदार्थस्य प्रज्ञापकः Sy. प्रकृष्टज्ञानं प्रकाशाख्यम् Sk.
१३. ०भूति P. ०षतं M. विभुर्व्याप्तः सन् Sy. विभुः । सर्वव्यापीत्यर्थः Sk.
१४. रथेऽयं M. किञ्च यथा रात्रिः स्वयं ...सूर्यसकाशात् . . . उत्पन्ना । सूर्यो ह्यस्तं गच्छन् रात्रिं जनयति । तस्मिन्ननस्तमिते रात्रेरुत्पत्त्यभावात् Sy.
किञ्च यथा प्रसूतोत्पन्ना स्वयं रात्रिः सवितुरादित्यस्य सकाशात् । आदित्यो हि रात्रिमस्तमयेन जनयति । तेन रात्रिरादित्यादुत्पद्यते Sk.
१५. स...र० missing M.

प्रसवाय भवति। एवमस्याः। उषसः[1]। रात्रिः। योनिम्[2]। अरिचदात्मनो[3]ऽन्ते[4] स्थानं प्रकल्पितवती।

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः *।
समानबन्धू अमृते † अनूची द्यावा वर्णं चरत आमिनाने ‡ ॥२॥

रुशद्वत्सा[5]। श्वेतवत्सा। श्वेता[6]। उषाः[7]। आगात् सूर्यं वत्समाह साहचर्यात्।

---

१. उषस उत्पत्तये Sy. जन्मने Sk.

२. तदर्थं...स्थानं स्वकीयापरभागलक्षणम्। ...यद्वा प्रसूता रात्रिसकाशादुत्पन्नोषाः ...सूर्यस्य...प्रसवाय जन्मने यथा भवत्येवं रात्रिरपि...उषसो यज्जन्म तदर्थं ...स्वापरभागलक्षणं स्थानं कृतवती Sy. आत्मैकदेशमपररात्रलक्षणम् Sk.

३. अनिच० M. प्रकल्पितवतीत्यर्थः। यथा रात्रिरादित्यास्तमयादनन्तरं स्वयमुत्पन्ना, एवं तदनन्तरमुषा जनिष्यत इत्येवमुषसः स्थानं प्रकल्पितवतीत्यखिलार्थः। अथवा यथा प्रसूतेत्युषा उच्यते न रात्रिः। सवितुरित्यपि सवायेत्येतेन सम्बध्यते। उषस इत्यपि तादर्थ्ये चतुर्थी। यथा प्रसूतोत्पन्ना सवितुः सवाय जन्मने। आत्मनोऽनन्तरमुषा ह्यादित्यं जनयति। अतस्तदर्थैवास्या उत्पत्तिरिति व्यपदिश्यते। एवं रात्रिरुषस उषसोऽर्थम्। उषसो जन्मार्थमित्यर्थः। योनिमारैक् स्थानं प्रकल्पितवती। नह्यप्रकल्पिते रात्र्याः स्थान उषसो जन्म सम्भवति। एवमियं रात्रेः स्तुतिः। उषसो वा। रात्रिरस्याः स्थानं प्रकल्पितवती Sk.

४. ०न्त P.

* श्वेत्या। आ। अगात्। अरैक्। ऊँ इति। PP.

† समानबन्धू इति समानऽबन्धू। अमृते इति। अनूची इति। PP.

‡ आमिनाने इत्याऽमिनाने। PP.

५. रुशद्वत्सा सूर्यवत्सा। रुशदिति वर्णनाम। रोचतेर्ज्वलतिकर्मणः। सूर्यमस्या वत्समाह। साहचर्यात्। रसहरणाद्वा। रुशती श्वेत्यागात्। श्वेत्या श्वेततेः। अरिचत् कृष्णा सदनान्यस्याः कृष्णवर्णा रात्रिः। कृष्णं कृष्यतेः। निकृष्टो वर्णः। अथैने संस्तौति। समानबन्धू समानबन्धने। अमृते अमरणधर्माणौ। अनूची। (अनूच्याविति)। इतीतरेतरमभिप्रेत्य। द्यावा वर्णं चरतः। ते एव द्यावौ। द्योतनात्। अपिवा द्यावा चरतस्तया (सह) चरत इति स्यात्। आमिनाने (आमिन्वाने)। अन्योन्यस्याध्यात्मं कुर्वाणे N. 2. 20.

रुशन् दीप्तः सूर्यो वत्सो यस्याः सा तथोक्ता। यथा मातुः समीपे वत्सः सञ्चरत्येवमुषसः समीपे सूर्यस्य नित्यमवस्थानात्तद्वत्सत्वम्। अथवा यथा वत्सो मातुः स्तन्यं रसं पिबन् हरति, एवमुषसोऽवश्यायाख्यं रसं पिबन् वत्स इत्युच्यते Sy. रुशच्छब्दो दीप्तिवचनः। वत्स इत्यादित्य उच्यते। स ह्युषसो वत्सस्थानीयो पत्यत्वात्। कथमपत्यत्वम्? श्रुतेर्दर्शनात्। ...यद्वा प्रातः प्रातरुषसः सकाशादादित्यो जायते। तदभिप्रायमस्यापत्यत्वम्। असत्यपि चापत्यत्वे तदीयरसहरणसामान्यादेव वत्सव्यपदेशः। यथा हि पशोर्वत्सः पयआख्यं रसं पिबन्नाहरति, एवमसावादित्य उषसोऽवश्याख्यम्। दीप्तादित्याख्यवत्सा Sk.

६. रुशती स्वयमपि च दीप्ता Sk.

७. उदिता Sk.

अरिचत्[1]। कृष्णा[2]। सदनानि[3]। अस्या[4] रात्रिरर्थेने[5] संस्तौति। समान[6]य (?)। अमरणधर्माणौ[7]। अनूची[8]। द्योतमाने-अन्योन्यस्याध्यात्ममात्मीयम्[9]। वर्णम्[10]। कुर्वाणे[10]। चरतः[11 12]।

**समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे*।**
**न मेथेते† न तस्थतुः सुमेके‡ नक्तोषासा समनसा विरूपे§ ॥३॥**

१. आरेचितवती, कल्पितवती, दत्तवतीत्यर्थः Sy.
रेचितवती Sk.

२. कृष्णवर्णा रात्रिः Sy.
तमःसम्बन्धात् कृष्णवर्णा रात्रिः Sk.

३. स्थानानि स्वकीयान्यार्धयामलक्षणानि Sy. स्थानानि Sk.

४. अस्य P. M.

५. रात्रीरथेन P.

६. समानेनैकेन सूर्याख्येन, बन्धुना सख्या युक्ते। यद्वा सूर्येण सह सम्बद्धे। यथोषा उदेष्यता सूर्येण सम्बद्धा, एवं रात्रिरप्यस्तं यता सूर्येण सम्बद्धा Sy.
समानो बन्धुर्ययोस्ते समानबन्धू। प्रजापतिर्हि रात्र्युषसोः समानबन्धुर्जनयितृत्वात्। आदित्यो वा। स हि जनयितृत्वेन रात्रेर्बन्धुः, जन्यत्वेनोषसो जनयितृत्वेन वोभयोः। स ह्यस्तमयेन रात्रिं जनयत्युदयेन चोषसम् Sk.

७. समान...अमरण. missing M.
कालात्मकतया नित्यत्वात् Sy.

८. इनूचि P.
अन्वञ्चन्त्यौ। प्रथमं रात्रिः पश्चादुषा इत्यनेन क्रमेण गच्छन्त्यौ। यद्वा सूर्यगत्यनुसारेण गच्छन्त्यौ Sy.
अहरन्तरेषु पुनः पुनरपि दृश्यमानत्वाद् अनूची परस्परेणानुगते। परस्परतः संवर्तिन्यौ सम्बद्धे चेत्यर्थः Sk.

९. स्वेन स्वेन तेजसा Sk.

१०. एवम्भूते वर्णे सर्वेषां प्राणिनां रूपं जरयन्त्यौ। यद्वा स्वकीयं रूपं हिंसन्त्यौ। उषसा नैशं तमो निवर्त्यते प्रकाशात्मकमुषसो रूपं रात्र्या Sy.
वर्णं कृष्णं शुक्लं चात्मीयं वर्णम् Sk.

११. यद्वा द्यावा नभसाऽन्तरिक्षमार्गेण... प्रतिदिवसं गच्छतः Sy. प्राप्नुत इत्यर्थः। अथवा द्यावेति दिवः पर्यायस्तृतीयैकवचनान्तश्चात्र द्रष्टव्यः। ... दिवा सह महत्त्वादिना गुणेन स्पर्धमाने दिवा वानुग्रह? (गृह्य०) माणे स्वं स्वं वर्णं प्राप्नुत इति। द्यौर्हि तमसा? (सो) ज्योतिषश्चात्मन्यवदानेनानुगृह्णाति रात्र्युषसोः। आमिनाने ... ईर्षाद्धिसत्यौ। किम्? सामर्थ्यात् परस्पररूपम्। रात्रिर्ह्युषसो रूपं ज्योतिरीषद्धिनस्ति। उषा अपि रात्रेस्तमः। अथवा द्यावेति सप्तम्येकवचनस्याकार आदेशः। चरत इत्येतेन चास्य सम्बन्धः। दिवि चरतो गच्छतः। वर्णमित्येतत्तु, आमिनाने इत्येतेन सम्बध्यते। आत्मीयं रूपमीषद्धिसत्यौ। अथवा, आमिनाने इत्याकारोऽध्यर्थे। मिनातिरपि सामर्थ्यात् करोत्यर्थः। आत्मीयं रूपमधि उपरि कुर्वाणे। कस्य? सामर्थ्यात् प्रकृतत्वाच्च दिव एव Sk.

१२. V. Mādhava ignores उ

* देवशिष्टे इति देवऽशिष्टे। PP.
† मेथेते इति। PP.
‡ सुमेके इति सुऽमेके। PP.
§ विरूपे इति विऽरूपे। PP.

समानो[1] अध्वा।[2] एकः।[3] मार्गः।[4] (आ)पर्यन्तः।[5] अहोरात्रयोर्गमनस्य। तम्।

१. ०नोऽध्वा M. २. योऽयम् Sk.
३. गमनमार्ग आगामिकाललक्षणः Sk.
४. अवसानरहितः Sy.
अनन्तोऽत्यन्तबहुः Sk.
५. See note no. १०. on p. 368.
According to रात्राह्नाहाः पुंसि Pā. 2.4.29., अहोरात्र should be used in the masculine gender. But its use in the neuter gender is seen both in Vedic and classical sanskrit literature, e.g. अहोरात्राणि विदधद्विश्वस्य मिषतो वशी। RV. X. 190.2.
क्व१प्रेप्सन्ती युवती विरूपे अहोरात्रे द्रवतः संविदाने A.V. 10.7.6.
अहोरात्रे गच्छ स्वाहा। V.S. 6.21.
अहोरात्रे अधिपत्नी आस्ताम्। VS. 14. 30.
त्रिंशत्कला मुहूर्तः स्यादहोरात्रं तु तावतः। Manu 1.64.
It also occurs in the Mahābhārata 3.2035.
अहोरात्राणि दीर्घाणि समुद्रः किं न शुष्यति। Pañcatantra 1.329 Kielhorn's ed. Bombay 1885.
भवेत्पैत्रं त्वहोरात्रं मासेन।
Hemacandra 139.
Use in the neuter gender is allowed if the word रात्र is preceded in a compound by a word expressing 'number', (वा० संख्यापूर्वं रात्रं क्लीबम्) e.g. द्विरात्रम्, त्रिरात्रम् etc. But the *Vārtika* is not applicable to अहोरात्र।
अहोरात्र is used in the singular number to denote just one day and one night. If it is used in the dual, it will mean two days and two nights, if in plural, more than two days and two nights. Manu and Hemacandra use it in the singular number, whereas the Pañcatantra uses it in the plural, in this sense.
But this particular meaning is not expressed although the dual number is used in the following quotations:—
अहोरात्राभ्यां नक्षत्रेभ्यः। A.V. 6.128.3.
अहोरात्रयोः सन्धिभ्यो' जूतः। V.S. 24.25.
याज्ञवल्क्येति होवाच यदिदं सर्वमहोरात्राभ्यामाप्तम्, सर्वमहोरात्राभ्यामभिपन्नम्, केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इति। Bṛh. U. 3.1.4.
As the idea of a day and night in general is sought to be conveyed and the notion of two days and two nights is not intended to be expressed in the stanza, strict grammatical usage requires the use of the singular number both here and in अहोरात्रे further down. अहोरात्रे may however be explained that a dual was necessary as the subject of the verbs आक्रोशतः and तिष्ठतः— both in the dual number.
Although the proper reading should, in my opinion, be अहोरात्रस्य and अहोरात्रः V. Mādhava is supported by the quotations, cited above.
रात्र्युषसोः। . . . येनैवाकाशमार्गेणोषा निर्गच्छति तेनैव रात्रिरपि Sy.
स्वस्रोर्भगिन्योः। रात्र्युषसौ ह्येकेन प्रजापतिनाऽऽदित्येन वा जन्येते इत्युपपन्नमनयोर्भगिनीत्वम् Sk.

देवैरनुशिष्टे[1]। चरतः[2]। एकस्यां गतायामन्या[2] तस्यां गतायामपरा ते न। संघर्षाद् आक्रोशतः[3]। नच[4] क्षणमपि। तिष्ठतः[5]। शोभनपरिमाणे[6] "संवत्सरो[7] वै सुमेकः सह्येकचरः" इति तु[8] ब्राह्मणम्। अहोरात्रे[9]। सुमनस्के[10]। विभिन्नरूपे[11]।

भास्वती नेत्री सूनृतानामचैति चित्रा वि दुरो न आवः[*]।
प्रार्प्या[†] जगद्व्यु नो रायो अख्यदुषा अजीगर्भुवनानि विश्वा ॥४॥

भास्वती[12]। उषाः। वाचाम्[13]। नेत्री पूर्वस्याम्[14]। प्रज्ञायते[15]। चित्रवर्णा[16]ऽन्धकारपरिवृतानि च। अस्माकम्[17]। द्वाराणि[18]। विवृणोति[19]। ? मनुचक्षुष्यन्धकारेण तिरोहितम्। जगत्[20]। समर्पयन्ति[21]।

---

१. ०ष्ट P. देवेन द्योतमानेन सूर्येण ... शिक्षिते Sy. सर्वप्राणिनामुपकाराय देवैरनुशिष्टे। अनुज्ञाते इत्यर्थः Sk.

२. अन्यान्याशब्दः परस्परपर्याय स्तृतीयैकवचनान्तश्चात्र द्रष्टव्यः। ... परस्परेण सम्बद्धे ... गच्छतः Sk.

३. परस्परं न हिंस्तः Sy.
मनुष्यवत् परस्परं नाक्रोशतः Sk.

४. Omitted by P. and D.

५. सर्वदा लोकानुग्रहार्थं गच्छतः Sy.

६. ० णामे P. D. शोभनमेहने सर्वेषामुत्पादकत्वाच्छोभनप्रजनने Sy. मेकशब्दो मुखवचन इति केचिदाहुः। सुमुख्यौ। सृष्टेः प्रथमः संवत्सरो मेक इत्युच्यत इत्यन्ये। तथाहि मेकः संवत्सर ऋतवो मेकपुत्रा इति पौराणिकाः स्मरन्ति। शोभनो मेको ययोः सम्बन्धी सृष्टिकालजन्यतया ते सुमेके। आद्यसंवत्सरसृष्टे इत्यर्थः Sk.

७. ० रे P. D.

८. Omitted by M.

९. See note no. ५. on p. 583

१०. ० स्ते P. समानमनस्के ऐकमत्यं प्राप्ते सत्यौ Sy. सङ्गतचित्ते। परस्परवशवर्तिन्यावित्यर्थः Sk.

११. तमःप्रकाशलक्षणाभ्यां विरुद्धरूपाभ्यां युक्ते Sy. विचित्ररूपे वा Sk.

* आवरित्यावः। PP.

† प्रऽअर्प्य। जगत्। वि। ऊँ इति। PP.

१२. भास्वती दीप्तिमती Sk.

१३. उत्पादयित्री। उषसः प्रादुर्भावानन्तरं हि पशुपक्षिमृगादयः सर्वे शब्दं कुर्वन्ति Sy. प्रवर्तयित्री। ... उषउदयकाले हि प्राणिनां वाचः प्रवर्तन्ते। अतः सैव तासां प्रवर्तयित्रीत्युच्यते Sk.

१४. ०य्येते D. दृश्यत इत्यर्थः Sk.

१५. चायनीया Sy. पूज्या वा दृश्यमानैव Sk.

१६. र्णा न्ध० M.

१७. नोऽस्मभ्यम् Sk.

१८. वाराणि D. द्वेराणि M. सर्वार्थानां दृशां वाग्द्वाराणि Sk.

१९. यथास्माभिर्दृश्यन्ते तथा तमो निवार्य प्रकाशयतीत्यर्थः Sy.
प्रकाशयतीत्यर्थः Sk.

२०. जवात् M.

२१. प्रकाशं गमयित्वा Sy.
प्रार्प्य। आपिर्गत्यर्थः। प्रगमय्य जगत्। तेषु तेषु व्यापारेषु कृत्स्नं जगत् प्रवर्त्येत्यर्थः Sk.

अस्माकम्[1]। धनार्थम्[2]। व्यौच्छत्[3] सेयम्। उषाः। विश्वान्येव। भुवनानि[4]। उज्जगारेवेति[5]।[6]

**जिह्मश्ये*३ चरितवे मघोन्याभोगय† इष्टये राय उ‡ त्वम्।**
**दभ्रं पश्यद्भ्य उर्विया विचक्ष उषा अजीगर्भुवनानि विश्वा ॥५॥**

**जिह्मश्ये**। कुटिलं शयानस्य[7]। चरणार्थम्[8]। उषाः[9]। आभोगार्थम्[10]। यागार्थम्[11]। धनार्थं[12] चापरं प्रत्यन्धकारात्। स्वल्पम्। पश्यद्भ्यो मनुष्येभ्यः। उरुदर्शनार्थम्[13]।[14]

**क्षत्राय त्वं श्रवसे त्वं महीया§ इष्टये त्वमर्थमिव त्वमित्यै।**
**विसदृशा जीविताभि¶प्रचक्ष उषा अजीगर्भुवनानि विश्वा ॥६॥**

**क्षत्राय त्वम्**। (ए) कं च प्रति[15] धनायेव[16] प्रेरयितुमपरं[17] प्रति। अन्नायेव। महतेऽन्यं[18] प्रति

---

१. आ० P. अस्मभ्यम् Sk.
२. यानार्थं P. धनानि Sk.
३. धनानि...विशिष्टप्रकाशनयुक्तान्यकरोत् Sy. विविधं ख्यापितवती। प्रकाशितवतीत्यर्थः Sk.
४. तमसा तिरोहितत्वेनाविद्यमानकल्पानि Sy. भूतजातानि प्रति Sk.
५. स्वकीयेन प्रकाशेन तमो निःसार्य पुनरुत्पन्नानीव करोतीत्यर्थः Sy. जिगर्तिरत्र सामर्थ्याद् गत्यर्थः।...उषा गच्छति Sk.
६. V. Mādhava ignores उ
* जिह्मऽश्ये'। PP.
† आऽभोगये'। PP.
‡ ऊँ इति। PP.
७. किञ्चित्प्रति कुटिलशयनाय Sk.
८. शयनार्थम् P. वक्रं शयानाय पुरुषाय ...चरितुं शयनादुत्थाय स्वापेक्षितं प्रति गन्तुं व्युच्छन्ती भवति Sy. गमनायान्यं प्रति Sk.
९. धनवती...त्वम्। अयमेकशब्दपर्यायः सर्वनामशब्दः।...त्वमेकं प्रति आभोगये, आभोग्याय शब्दादिविषयार्थं तथाऽपरं प्रतीष्टये यागार्थं तथाऽन्यं प्रति राये धनार्थं च व्युच्छन्तीति शेषः Sy. धनवत्युषाः Sk.
१०. अभो० P.
११. तयार्थं P.
१२. उषसि ह्यागतायां कश्चिन्निद्रालुः पार्श्वेनावस्थाय सङ्कोच्य जङ्घे कुटिलः शेते। ...कश्चिद् भोजनादिसम्भोगान् कर्तुमारभते। कश्चिद्यष्टुं कश्चिद्धनार्थं यतते। एतदुच्यते जिह्मश्य इत्यादिना Sk.
१३. उद० P. D. विशिष्टप्रकाशाय Sy. विस्तीर्णं विख्यापयितुम्। तमसा चाभिभूतत्वाद् अस्फुटं पश्यद्भ्यः स्फुटं दर्शयितुमित्यर्थः Sk.
१४. V. Mādhava ignores उ। त्वम्। and उषाः etc.
§ महीयै। PP.
¶ अभिऽप्रचक्षे'। PP.
१५. एकं प्रति Sy.
१६. ०यैव D.
१७. व्युच्छन्तीति शेषः Sy.
१८. महतेर्दानकर्मणो महेर्वा पूजार्थस्येदं रूपम्। दानार्थं पूजार्थं वान्यं प्रति Sk.

यागायापरं प्रति सिसाधयिषितम्[१]। अर्थं प्रति। गन्तुमेवम्[२]। नानाजातीयकानि। जीवनसाधनानि[३]। अभिप्रदर्शयितुमिति[४] ।[५]

एषा दिवो दुहिता प्रत्यदर्शि व्युच्छन्ती* युवतिः शुक्रवासाः।
विश्वस्येशाना पार्थिवस्य वस्व उषो अद्येह सुभगे व्युच्छ† ॥७॥

एषा दिवः। एषा। दिवः। दुहिता[६]। प्रतिदृश्यते[७]। प्रादुर्भवन्ती[८]। तरुणी[९]। शुक्लदीप्तिः[१०]। विश्वस्य[११]। पार्थिवस्य। धनस्य। ईशाना[१२]। उषाः। अद्य। शोभनधने। व्युच्छ[१३]। अत्र[१४]।

परायतीनामन्वेति पाथ आयतीनां प्रथमा शश्वतीनाम्।
व्युच्छन्ती जीवमुदीरयन्त्युषा मृतं कं चन बोधयन्ती ॥८॥

परायतीनाम्। परागच्छन्तीनामुषसाम्[१५]। मार्गम्[१६]। अनुगच्छति[१७] तासामन्तिमा[१८] भवति।

---

१. यथाऽर्थी नियमेनादरेण वाऽर्थं प्रति गच्छति तद्वन्नियमेनादरेण वा गमनायान्यं प्रति Sk.

२. गन्तमे० D.

३. कृषिवाणिज्यादीनि Sy.
जीवानि? (न्) Sk.

४. The passage beginning with सिसासधयिषितं and ending with अभिप्रदर्शयितुमिति is omitted by P.
अभिप्रकाशयितुम् Sk.

५. V. Mādhava ignores उषाः etc.

* वि॒ऽउ॒च्छन्ती। PP.

† वि। उ॒च्छ॒। PP.

६. दुहितृस्थानीया। तस्य हि पूर्वार्धे उषा उत्पद्यते Sy.
द्युप्रभवत्वादुषा दिवो दुहितेत्युच्यते Sk.

७. प्रतिशब्दोऽत्र धात्वर्थानुवादी। दृश्यते Sk.

८. सर्वैः प्राणिभिर्दृष्टाभूत् Sy.

९. तमो वर्जयन्ती Sy.
तमांसि विवासयन्तीत्यर्थः Sk.

१०. यावयित्री फलानां पुरुषैः प्रापयित्री नित्ययौवनोपेता वा Sy.

११. श्वेतवसना निर्मलदीप्तिर्वा Sy.

१२. धनंन्येशा० M.

१३. अस्मिन् देवयजनदेशे . . . तमांसि विवासय, वर्जयेत्यर्थः Sy.
तमांसि विवासयन्ती जीव Sk.

१४. This stanza is omitted by P.
अस्मदीये यज्ञे Sk.

१५. अतीतानाम् Sy.

१६. गवादिजातीनाम् Sk.
नित्यानां वा। याश्च दूरवर्तिन्यो गवादिजातयो याश्च सन्निकृष्टाः सर्वव्यापित्वात् ताः सर्वा अनुगच्छतीत्यर्थः Sk.

१७. अन्तरिक्षैकदेशलक्षणं स्थानम् Sy.
पन्थानः Sk.

१८. अतीता उषसो यथा व्युष्टा एवमेवैषापि व्युच्छतीत्यर्थः Sy.
अद्यतन्युषाः Sy.

आगच्छन्तीनाम्। बह्वीनाम्[1]। प्रथमा भवति[2]। प्रादुर्भवन्ती[3]। प्राणिजातं शयनात्। उत्थापयन्ती[4]
तदिन्द्रियत्वात्[5]। मृतमिव। कम्। चन। बोधयन्ती[6]।

**उषो यदग्निं समिधे चकर्थ वि यदावश्चक्षसा सूर्यस्य।**
**यन्मानुषान्यक्ष्यमाणाँ अजीगस्तद्देवेषु चकृषे भद्रमप्नः ॥९॥**

**उषो यदग्निम्।** उषः! यत् त्वम्[7]। अग्निम्[8]। समिन्धानाय[9]। चकर्थ[10]। यच्च। सूर्यतेजसा
जगत्[11]। रक्षति[12] ?(सि)। यच्च। यक्ष्यमाणान्[13]। मानुषान्। उद्गिरसि[14]। तदिदं[15] त्रिविधम्।
देवमध्ये[16]। कृतवती। कल्याणम्। कर्म।

**कियात्या यत्समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान्।**
**अनु पूर्वाः कृपते वावशाना प्रदीध्याना जोषमन्याभिरेति ॥१०॥**

---

१. नित्यानां वा Sk.

२. The passage beginning with परायतीनाम् and ending with प्रथमा भवति is omitted by P.
एषा यथा वर्तत एवमेवागामिन्योऽप्युषस इत्यर्थः Sy.

३. तमो वर्जयन्ती Sy.
तमांसि विवासयन्ती Sk.

४. प्राणिजातं च तेषु तेषु व्यापारेषु प्रेरयन्ती Sk.

५. ०त्वा P. D.
स्वापसमये प्रलीनेन्द्रियत्वात् Sy.

६. ०यती M.
पुनरिन्द्रियप्रवेशेन चेतनं कुर्वती प्रवर्तत इति शेषः Sy.
कञ्चिदत्यन्तनिश्चेष्टं सुप्तं सर्वप्राणिजातम् Sk.

* अजीगुरिति। PP.

७. Omitted by M. यत्वं P.D.

८. गार्हपत्यादिरूपम् Sy.
आहवनीयाख्यम् Sk.

९. सिमिन्धना० P.
प्रज्वलनार्थम्।... उषःकाले ह्यग्नयो होमार्थमुपसमिध्यन्ते Sy.

१०. चकत्थ M.
करोषि। समिन्धयसीत्यर्थः। उषसि ह्युदितायामग्निहोत्रिण आहवनीयं समिन्धयन्ति नानुदितायाम्। अतस्तमुषा एव समिन्धयतीत्युच्यते Sk.

११. तमसा तिरोहितम् Sy.

१२. तमसा विश्लिष्टमकरोः Sy.
वि? (व्य) वृणोरित्यर्थः। . . . उषसो हि प्रकाश उदेष्यतः सूर्यात् प्रभवति Sk.

१३. ०मानान् M.

१४. पूर्वं तमसा ग्रस्तान् प्रकाशेनोद्गीर्णानि वाकरोः Sy.
गच्छसि Sk.

१५. तददन् M.

१६. दोवमध्ये P.

† कियति। आ। PP.

किया॒त्या॑[1]। किय॑ति[2] देशे[3] स्विद्[4]। यस्मिन्निय॑ं स॒ङ्गच्छ॒न्ती[5] दे॑शे। समीपे। भवत्यहमिव पश्यामि क्व[6] चेयमन्यत्र स॒ङ्गच्छत इति वितर्कः। याः। पु॒रा। व्यूषुः। याः। च। सम्प्रति[7]। व्यु॒च्छन्ति सर्वास्ताः[8] कियति भवन्ति सेयम्[9]। पूर्वा उषसः[10]। अनु कल्पते[11]। कामयमाना[12] तासां पश्चाद् भवति

---

१. कियत्या P.M. २. त्रियति M. उषाः समया भवाति समीपस्था भवतीति यदेतत्तत् कियति काले प्रवृत्तं परिसमाप्तं वेत्याकारः प्रश्नार्थः। ...उषा येन कालेन संयुक्ता स कालः कियान्, तस्य कालस्य किं परिमाणमिति। अनेनोषसोऽनन्तत्वमुक्तम् Sy. नैव जानीमः कियत्यपि जगतः प्रदेशे समीपोभवत्युषा इति। सर्वव्यापिन्येव लक्ष्यत इत्यर्थः Sk.

३. देश M. ४. स्विच्छब्दश्च पुनरित्यनेन समानार्थो वितर्कवचनः Sk.

५. ०न्नियं...छन्ती missing M. V. M. uses सङ्गच्छन्ती in the *parasmaipada* and सङ्गच्छन्ते in the second line in the *ātmanepada*. He should have been more consistent by using one *pada* only in both places. As the forms stand in the text, the idea of सङ्गति i.e. 'together' is expressed by adding the preposition सम्। If the idea of सङ्गति is intended to be conveyed, then *ātmanepada* alone could be used. समौ गम्यृच्छिभ्याम् Pā. 1.3.29. Also the idea of सङ्गति requires the use of the instrumental case, e.g. तेन सङ्गच्छते etc. I think however that the notion of सङ्गति is not sought to be conveyed because instrumental case has not been used. Further इयं देशे सङ्गच्छन्ती is equivalent to इयं देशे गच्छन्ती so सम् is added in स्वार्थे। As, in my opinion, the idea of सङ्गति is not intended to be expressed, the use of *parasmaipada* is correct in सङ्गच्छन्ती but the use of *ātmanepada* in सङ्गच्छते is, for the same reason, wrong. The strictly grammatical forms should however be गच्छन्ती and गच्छति in this particular case but सङ्गच्छमाना and सङ्गच्छते if the idea of सङ्गति is to be conveyed. ६. क्व क्व M.

७. P. adds नूनं before सम्प्रति।

८. सर्वस्ताः M. ९. सोयं P.

१०. अतीता उषसः... कामयमानेदानीं वर्तमानोषाः... अनुकल्पते समर्था भवति। अतीता उषसो यथा प्रकाशमकुर्वंस्तद्वदेषाऽपि प्रकाशं करोतीत्यर्थः Sy.

११. ताः सर्वाः। पूर्वाः पूर्ववृत्ताः। अनुकृपते। कृपा? (यति) कृपण्यतीत्यर्चतिकर्मसु पाठात् कृपिरत्र... यच्चोषस्युदितायां स्तोतारः स्तुवन्ति तदुषा एव स्तौतीत्युच्यते Sk.

१२. शब्दं वा कुर्वन्तीत्यर्थः।... यच्चोषस्युदितायां... कामयन्ते शब्दं वा कुर्वन्ति तदुषस्येवोपचर्यते Sk.

प्रदीप्यमाना[1]। सह। अन्याभिः। आगच्छति[2]।

ई॒युष्टे* ये पूर्व॑तरा॒मप॑श्यन्व्यु॒च्छन्तीमु॒षसं॒ मर्त्या॑सः।
अ॒स्माभि॑रू॒ नु प्र॑ति॒चक्ष्या॑भू॒दो† ते य॑न्ति॒ ये अ॑प॒रीषु॒ पश्या॑न् ॥११॥

ईयुष्टे। मृताः। ते। पूर्वतरामुषसम्[3]। मर्त्याः। अपश्यन्[4]। अस्माभिः। इदानीम्। प्रति-द्रष्टव्या[5]। भवति। आगच्छन्ति[6]। ते। य एनाम्। उत्तरासु[7] रात्रिषु[8]। पश्यन्ति[9]।

या॒व॒यद्द्वे॑षा‡ ऋत॒पा ऋ॑ते॒जाः सु॑म्ना॒वरी॑ सू॒नृता॑ ई॒रय॑न्ती।
सु॒म॒ङ्ग॒लीर्बिभ्र॑ती दे॒ववी॑तिमि॒हाद्यो॑षः॒ श्रेष्ठ॑तमा॒ व्यु॑च्छ ॥१२॥

यावयद्द्वेषाः[10]। पृथक्क्रियमाणशत्रुका[11]। सत्यस्य पालयित्री[12]। सत्ये जाता[13]। सुखवती[14]।

---

१. ०प्तमा० D. P.

२. आगामिन्योऽप्येतदीयं प्रकाशमनुकुर्वन्तीत्यर्थः Sy.
तुल्यकालाभिरुषोभिः सहैकतां प्रतिपद्यते न विरुध्यत इत्यर्थः Sk.

* ई॒युः। ते। PP.

† प्र॒ति॒ऽचक्ष्या॑। अ॒भू॒त्। ओ इति॑। PP.

३. अतीतकालामित्यर्थः Sk.

४. ०मुसं P.

५. प्रतिशब्दोऽत्र धात्वर्थानुवादी ... द्रष्टव्याऽभूद् भवति। अस्मा? (स्मदा०) दयोऽपि वर्तमानकालामुषसं पश्यन्तीत्यर्थः Sk.

६. लृडर्थे लट्। आयास्यन्ति Sk.

७. द्वितीयार्थे सप्तम्येषा। अपराः पश्चिमाः। आगामिकाला इत्यर्थः Sk.

८. कालत्रयेऽप्येषा व्याप्य वर्तत इत्यर्थः Sy.
अतीतैर्वर्तमानैरागामिभिश्च सर्वैर्मनुष्यैरुषा दृश्यते नास्मदादिवत् कैश्चिदेवेति समस्तार्थः Sk.

९. V. Mādhava ignores ये। उ

‡ य॒व॒यत्ऽद्वे॑षाः। PP.

१०. ०यद्वे० P. D. M.

११. अस्मत्तः पृथक्कृतानि द्वेषांसि द्वेष्टृणि राक्षसादीनि यया सा तथोक्ता। न ह्युषसि जातायां राक्षसादयोऽवतिष्ठन्ते यतस्ते निशाचराः Sy.
द्वेषाणां यावयित्री यावयद्द्वेषा।... द्वेषाणां नक्तञ्चराणां रक्षआदीनां पृथग्भावयित्री। अपनेत्रीत्यर्थः Sk.

१२. ऋतस्य सत्यस्य यज्ञस्य वा पालयित्री Sy.
यज्ञस्य। ... यज्ञो ह्युषस्युदितायां क्रियते न रात्रौ। अतस्तस्य पालयित्रीत्युच्यते Sk.

१३. यज्ञार्थं प्रादुर्भूता। सत्यामुषस्यहनि यागा अनुष्ठीयन्ते, अतो यज्ञार्थं जातेत्युच्यते Sy.
ऋतशब्दोऽत्रादित्यवचनः। पञ्चम्याश्च स्थाने सप्तमी। आदित्याज्जनित्री Sk.

१४. सुखती P.
प्राणिनां सुखकरीत्यर्थः Sk.

वाचः।[1] प्रेरयन्ती। शोभनमङ्गला।[2] यज्ञम्।[3] धारयन्ती। श्रेष्ठतमा।[4] इह।[5] अद्य।[6] उषाः? (षः।)। व्युच्छ।[7]

**शश्वत्पुरोषा व्युवास देव्यथो* अद्येदं व्यावो मघोनी ।**
***अथो व्युच्छादुत्तराँ अनु द्यूनजरामृता चरति स्वधाभिः ॥१३॥**

शश्वत् पुरा। नित्यम्।[8] पुरा च। इयम्। व्यौच्छत्।[9] देवी। अथ।[10] अस्मिन्नहनि।[11] धनवती सेयम्।[12] इदम्।[13] व्यागात्।[14] अथ।[15] उत्तराण्यपि।[16] अहानि। प्रति व्युच्छतु सेयम्।[17] जरामरणवर्जिता प्रदित्सितैः।[18] अन्नैः सह सर्वदा। वर्तते।

**†व्य१ञ्जिभिर्दिव आतास्वद्यौदप कृष्णां निर्णिजं देव्यावः‡ ।**
**प्रबोधयन्त्यरुणेभिरश्वैरोषा§ याति सुयुजा रथेन ॥१४॥**

व्यञ्जिभिः।[19] विद्योततेऽन्तरिक्षे न साधनैः? ।[20] ज्योतिर्भिः। दिवः सम्बन्धिनीषु।

---

१. पशुपक्षिमृगादीनां वचांसीरयन्त्युत्पादयन्ती Sy. उषउदयोत्तरकालं हि प्राणिनां वाचः प्रवर्तन्ते। अतः सैव ताः प्रेरयन्तीति व्यपदिश्यते Sk.

२. पत्या कदाचिदपि न वियुक्तेत्यर्थः Sy.

३. देववीतिं देवकामम् । देवानस्मदीयहविःकामान् कुर्वन्तीत्यर्थः Sk.

४. अस्मिन्देवयजनदेशे Sy. अस्मदीये यज्ञे Sk.

५. ०हाद्यो P. अस्मिन् यागसमये Sy.

६. श्रेमहान्योषा M.

७. ह्युच्छन्ति M. विवासय Sy. तमांसि विवासय Sk.

* अथो इति। PP.

८. बहून्नित्यं वा Sk.

९. तमांस्यस्मदीये कर्मणि विवासितवती Sk.

१०. एतस्मात्कारणात्। प्रसादत्वा? (दा०)-त्कारणात् Sk. ११. काले Sy. अद्यास्मदीये कर्मणि Sk.

१२. तमसा तिरोहितमिदं सर्वं जगत् Sy.

१३. विवासितं प्रकाशेन तमसा वियुक्तमकरोत् Sy. विवृणोतु विवृतवती वा। प्रकाशितवती वेत्यर्थः Sk.

१४. अथो एतस्मादेव कारणाद् व्युच्छात्। आशिष्ययं लिङर्थे लेट् । विवासयेत्तमांस्यस्मदीये कर्मणीत्याशास्महे Sk.

१५. व्यागतोत्त० P.

१६. आगामिन्यपि काल इत्यर्थः Sk.

१७. आगामिष्वपि दिवसेषु...विवासयति Sy.

१८. अतः कालत्रयव्यापिनी सोषाः... स्वधाभिरात्मीयैस्तेजोभिः सह ... वर्तते Sy. स्वधाशब्दोऽत्र सामर्थ्याज् ज्योतिर्वचनः। स्वैर्ज्योतिर्भिः । सर्वं ज्योतिर्भिर्व्याप्नोतीत्यर्थः । अथवा स्वधेत्यन्ननाम । हविर्लक्षणैरन्नैर्निमित्तभूतैर्गच्छति । हवींष्युपभोक्तुं यज्ञेषु गच्छतीत्यर्थः Sk.

† वि। अञ्जिऽभिः। PP.

‡ देवी। आवः इत्यावः। PP.

§ अश्वैः। आ। उषाः। PP.

१९. व्यद्यो० P. २०. प्रकाशकैः Sy.

दिक्षु । अपवृणोति[1] । कृष्णम् । रूपं रात्रिकृतं सेयम् । प्रबोधयन्ती[2] । अरुणैः । अश्वैः[3] । सुयुक्तेन रथेन । उषाः । आगच्छति[4] ।

आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना ।
ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वैत् ॥१५॥

आवहन्ती । आवहन्ती[5] । पोषणसमर्थानि । धनानि[6] । चित्रम्[7] । प्रज्ञानम्[8] । करोति[9] । ज्ञायमाना[10] । गतानाम्[11] । बह्वीनाम् । अन्तिमोषा अतः परम्[12] । व्युच्छन्तीनाम्[13] । मुख्या[14] । उषाः प्राच्याम्[15] । वृद्धासीत्[16] ।

उदीर्ध्वं* जीवो असुर्न आगादप† प्रागात्तम आ ज्योतिरेति ।
आरैक्पन्थां‡ यातवे सूर्यायागन्म यत्र प्रतिरन्त§ आयुः ॥१६॥

उदीर्ध्वम् । उद्गच्छत शयनात्[17] । जीवयिता[18] । प्राणः[19] । अस्मान्[20] । आगतः[21] । अपप्रागाच्च[22]

---

१. अपावृ० P. प्रकाशेन तिरस्कृतवती Sy. अपनयतीत्यर्थः Sk.
२. सुप्तान् प्राणिनः Sk.
३. व्यापनशीलैः स्वकीयैः किरणैस्तुरगैर्वा Sy. ४. अग० M. ०च्छन्ती P.
५. अस्मभ्यमानयन्ती Sy. आनयन्ती स्तोतृणां यष्टृणां चार्थाय । स्तोतृभ्यो यष्टृभ्यश्च ददातीत्यर्थः Sk.
६. वार्याणि वरणीयानि । अत्यन्तोत्कृष्टानीत्यर्थः Sk.
७. विचित्रमाश्चर्यभूतं चायनीयं वा Sy. पूज्यं वा Sk.
८. प्रज्ञापकं रश्मिं कृत्स्नजगत्प्रकाशनसमर्थम् Sy. प्रकाशाख्यम् Sk.
९. स्वात्मनः प्रकाशात् कुरुते Sy.
१०. सर्वं जनं प्रज्ञापयन्ती Sy. दृश्यमानैवेत्यर्थः Sk.
११. गन्त्रीणां बह्वीनां मध्य उपमानभूता । अत्यन्तोत्कृष्टेत्यर्थः Sk.
१२. उप समीपे निर्मितोपमानभूता वा Sy.
१३. पुरं P. D. १४. विशेषेण प्रकाशमानानामागामिनीनामुषसाम् Sy. दीप्यमानानां मध्ये प्रथमोत्कृष्टा Sk.
१५. आद्या Sy. १६. तेजसा Sy. विविधं सर्वत्र गच्छति वर्धते वा Sk.
* उत् । ईर्ध्वम् । PP.
† नः । आ । अगात् । PP.
‡ अरैक् । PP.
§ प्रऽतिरन्ते । PP.
१७. ०याना० P. यष्टुं स्तोतुं च Sk.
१८. जीवात्मा Sy.
१९. शरीरस्य प्रेरयिता Sy. प्राणस्थानीया च Sk.
२०. अस्माकम् Sk.
२१. उद्गता का? प्रकृतत्वादुषाः । यस्माज्जीवितात् प्राणेभ्यश्च प्रियतमाऽस्माकमुषा उदितेत्यर्थः Sk.
२२. अपक्रान्तम् । उषसः प्रकाशे सति सर्वजीवनव्यापारयोगः Sy. प्रकर्षेणापगच्छति Sk.

नैशम्[1] । तमः । ज्योतिश्च[2] । आगच्छति[3] । सूर्यस्य । गमनार्थम् उषाः । पन्थानम् । अरिचत्[4] । गच्छामः[5] ।
यत्र[6] । वर्धयन्ति[7] । अन्नमुदाराः[8] ।

**स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः ।**
**अद्या* तदुच्छ गृणते मघोन्यस्मे† आयुर्नि दिदीहि प्रजावत् ॥१७॥**

**स्यूमना वाचः ।** अनुस्यूताः[9] । स्तुतिवाचः[10] । प्रेरयति[11] । होता[12] । स्तुवानः[13] । स्तोता ।
व्युच्छन्तीः[14] । उषसः । अद्य[15] । तथा सति[16] । व्युच्छ[17] । स्तुवते मह्यम् । उषः[18] ! अस्मासु[19] । आयुः[20] । नितरां
दीपय[21] । प्रजायुक्तमिति[22] ।

**या गोमतीरुषसः सर्ववीरा व्युच्छन्ति दाशुषे मर्त्याय ।**
**वायोरिव‡ सूनृतानामुदर्के ता अश्वदा अश्नवत्सोमसुत्वा ॥१८॥**

**या गोमतीः ।** याः । गोमत्यः[23] । उषसः । सर्ववीरैर्युक्ताः[24] । व्युच्छन्ति[25] । यजमानाय[26] । मनु-

---

१. अवप्रागाच्छनैः शमः M.
२. उषसः प्रकाशाख्यम् Sk.
३. सर्वं व्याप्नोतीत्यर्थः Sk.
४. विविक्तीकरोति Sy. केन पुनर्व्यापारेणौषसं ज्योतिः सूर्यस्य पन्थानं रेचयति ? आत्मापगमनेन । कुत एतत् ? औषसस्य ज्योतिषोऽन्ते सूर्योदयदर्शनात् Sk.
५. गताः प्राप्ता वयम् Sk.
६. P. adds ज before यत्र
७. सोमादिहविर्लक्षणम् Sk.
८. दानेन Sy. यत्र व्यवस्थिता अध्वर्य्वादय ऋत्विजः । ... यस्मादुषा उदिता वयमपि यज्ञं कर्तुं प्रवृत्ता इत्यर्थः Sk.
* अद्य । PP.
† मघोनि । अस्मे इति । PP.
९. स्यूमना स्यूमान्यनुस्यूतानि सन्ततान्युक्थानि Sy. स्यूमशब्दोऽत्र सुखवचनः । सुखेनाक्लेशेन Sk.
१०. वाचो वेदरूपाया सम्बन्धीनि Sy.
११. उच्चारयति Sy. आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण व्यपदेशः । होत्राख्य ऋत्विक् कुत्सनामा वा ऋषिरुद्गमयति । उच्चारयतीत्यर्थः Sk.
१२. स्तोत्राणां वोढा Sy. बलवान् वह्निरुच्यते वहनसमर्थत्वात् Sk.
१३. स्तुन्वानः M.
१४. तमसोऽपनोदनेन प्रकाशमाना उषोदेवताः Sy. विविधं दीप्यमानाः Sk.
१५. तदिति पञ्चम्या लुग्द्रष्टव्यः । तस्मादद्य Sk.
१६. सती P. D. M.
१७. दृष्टिनिरोधकतया प्रसिद्धं नैशं तमो विवासय वर्जय Sy. विविधं तमांसि विवासय Sk.
१८. धनवति ! Sk.
१९. अस्मभ्यम्; Sy. Sk.
२०. अन्नम् Sy. चिरजीवित्वमन्नं वा Sk.
२१. प्रयच्छेत्यर्थः Sy. ददातेरेतद्रूपम् । नियमेन देहि Sk.
२२. प्रज्ञया यु० D. प्रजाभिः पुत्रपौत्रादिभिर्युक्तम् Sy.
‡ वायोःऽइव । PP.
२३. बहुभिर्गोभिर्युक्ताः Sy. अरुणीभिः स्वाभिर्गोभिर्गोमत्यः Sk.
२४. सरणसमर्थैः Sy. अखण्डिताशेषपरिजनपुत्रपौत्रादिका इत्यर्थः Sk.
२५. ०न्ती P. तमो वर्जयन्ति Sy. विविधं तमांसि विवासयन्ति Sk.
२६. दाशुषे मर्त्याय । दाश्वानिति यजमाननाम शाकपूणिना पठितम् । ... यजमानस्य मनुष्यस्यार्थाय Sk.

ब्याय। महावातस्येव[१]। उपस्तुतीनाम्[२]। अन्ते[३]। ताः। अश्वदाः[४]। उषसः। व्याप्नोति[५]। यजमानः[६]।

**माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भाहि।**
**प्रशस्तिकृद्ब्रह्मणे नो व्यु१च्छा नो जने जनय विश्ववारे ॥१९॥**

**माता देवानाम्।** निर्मात्री[७]। देवानामतश्च[८] देवमातुः। अदितेः[९]। प्रत्यनीकमियं[१०] भवति सा त्वम्। यज्ञस्य। प्रज्ञापयित्री[११]। मही[१२]। व्युच्छ[१३]। स्तुतेः[१४] कर्त्री, उषसि हि[१५] वन्दिनः स्तुवन्ति देवान् मनुष्यांश्च सा त्वम्। अस्माकम्। अपितु[१६] (?) व्युच्छ[१७] व्युष्टा च। अस्माकम्[१८]। जने[१९]। प्रादुर्भावय[२०]। सर्ववरणीये[२१]!

---

१. वायुवच्छीघ्रं प्रवर्तमानानाम् Sy.

२. उवस्यस्तु० P.
उपस्यस्तु० D.

३. उदर्क इत्युद्भव उच्यते। यादृग्वायोः ...उद्भव...कादिवाचाम्? उद्भवे। प्रभातवेलायामित्यर्थः Sk.

४. स्तोतृभ्यो यष्टृभ्यश्चाश्वान् दात्रीः Sk.

५. केन? सामर्थ्यात् स्तुतिभिर्हविर्भिश्च। स्तौति यजति चेत्यर्थः Sk.

६. ०ना P. D.
अथवा दक्षिणादानेऽश्वस्यापि दानविधानादश्वदेति सोमसुत्वनो विशेषणं नोषसाम्। अश्वस्य दाता यजमान इति Sk.

* नः। वि। उच्छ। आ। नः। PP.

७. उषसि सर्वे देवाः स्तुत्या प्रबोध्यन्ते, अतः सा तज्जननवतीत्युच्यते Sy.

८. या त्वं माता... देवानाम्। देवशब्देनादित्या उच्यन्ते। तेषां हि माता उषाः। ...प्रतिमासं चादित्यभेदमङ्गीकृत्य बहुवचनम् Sk.

९. अदितिशब्देनात्रावीनकत्वात् समग्रज्योतिरुच्यते।...अदीनस्य समग्रस्य प्रकाशाख्यस्य ज्योतिषः Sk.

१०. प्रतिस्पर्धिनी त्वमित्यर्थः। यद्वा दीव्यन्तीति देवा रश्मयः। तेषां निर्मात्री। अदितेरखण्डनीयाया भूमेरनीकं मुखम्। यथेन्द्रियाश्रयत्वान्मुखं प्रकाशकम् एवमुषा भूमेः प्रकाशयित्रीत्यर्थः Sy.
अनीकशब्दोऽपि...समूहवचनः।... समूहः। अथवा अनीकशब्दः खड्गमुखवचनः। इहाग्रत्वसामान्यादुषसि प्रयुज्यते। अदीनस्य समग्रस्याहर्लक्षणस्य ज्योतिषो मुखभूतेत्यर्थः Sk.

११. प्रकाशयित्रीत्यर्थः Sk.

१२. महती Sy; Sk. महती is suggested for मही।

१३. प्रकाशस्व Sy. विविधं दीप्यस्व Sk.

१४. ०ते D.
सम्यक् स्तुतमिति प्रशंसनं कुर्वती Sy.

१५. Omitted by D. ब्रह्मणे मन्त्ररूपाय स्तोत्राय व्युच्छ विवासय Sy.

१६. अवितुं P. अपि तुं D. अपि स्तु... तुं M.

१७. विविधं तमांसि विवासय। वयं स्तुतीः करिष्याम इत्येवमर्थं तमांस्यपनयेत्यर्थः Sk.

१८. अस्मात् M.

१९. जनपदे Sy.
निर्धारणे च सप्तमी। लोकस्य मध्ये Sk.

२०. धनादिभिर्वर्धय Sk.

२१. ०र्वैवर० P. ०र्वैर० D. M.

यच्चित्रमप्न॑ उ॒षसो॒ वह॑न्तीजा॒नाय॑ शशमा॒नाय॑ भ॒द्रम् ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥२०॥

यच्चित्रम्[1]। यत्। पूज्यम्[2]। कर्म[3]। उषसः। वहन्ति[4]। ईजानाय[5]। भजते[6]। भजनीयम्[7]। तत्[8] त्वमस्म[9]भ्यमप्या[10]वहेति[11]।

## I.114.

इ॒मा रु॒द्राय॑ त॒वसे॑ कप॒र्दिने॑ क्ष॒यद्वी॑राय॒ प्र भ॑रामहे म॒तीः ।
यथा॒ शमस॑द्द्वि॒पदे॒ चतु॑ष्पदे॒ विश्वं॑ पु॒ष्टं ग्रामे॑ अ॒स्मिन्न॑नातु॒रम् ॥१॥

इमा रुद्राय। इमाः। स्तुतीर्वयम्[12]। रुद्राय[13]। वृद्धाय[14]। जटिने। क्षपितवीराय[15] कर्तुम्।

---

* वहन्ति। ईजानाय। PP.

१. याच्चत्रम् P.

२. चायनीयम् Sy. विचित्रं पूज्यं वा Sk.

३. आप्तव्यं यद्धनम् Sy. यागलक्षणम् Sk.

४. प्रापयन्ति। किम्? सामर्थ्यादात्मानम्। गच्छन्तीत्यर्थः Sk.

५. ०जना० P. हविर्भिरिष्टवते Sy. यजतः स्तुवतश्चार्थाय Sk.

६. स्तुतिभिः सम्भजमानाय पुरुषाय Sy.

७. कल्याणम् Sk.

८. भवतीतिशेषः Sy.

९. तत्वम० P. D.

१०. ०भ्यं व्याव० M.

११. V. Mādhava ignores तत्। नः etc. Ms. D. puts the figure ॥११३॥ here to indicate the end of one hundred and thirteenth hymn. No such number is given in P. and M.

१२. ०तिर्वं० M

१३. रोदयति सर्वमन्तकाल इति रुद्रः। यद्वा रुत् संसाराख्यं दुःखम्, तद् द्रावयति, अपगमयति विनाशयतीति रुद्रः। यद्वा रुतः शब्दरूपा उपनिषदः। ताभिर्द्रूयते गम्यते प्रतिपाद्यत इति रुद्रः। यद्वा रुच्छब्दात्मिका वाणी तत्प्रतिपाद्याऽऽत्मविद्या वा। तामुपासकेभ्यो राति ददातीति रुद्रः। यद्वा रुणद्धि, आवृणोतीति रुत्, अन्धकारादि, तद् दृणाति विदारयतीति रुद्रः। यद्वा कदाचिद् देवासुरसङ्ग्रामेऽग्न्यात्मको रुद्रो देवैर्निक्षिप्तं धनमपहृत्य निरगात्। असुराञ् जित्वा देवा एनमन्विष्य दृष्ट्वा धनमपाहरन्। तदानीमरुदत्। तस्माद् रुद्र इत्याख्यायते Sy.

१४. तवश्शब्दोऽत्र बलवचनः Sk. ०वीर्याय M.

१५. क्षयन्तो विनश्यन्तो वीरा यस्मिंस्ताद्शाय। यद्वा क्षयतिरैश्वर्यकर्मा। क्षयन्तः प्राप्तैश्वर्या वीरा मरुद्गणाः पुत्रा यस्य तस्मै Sy.
वीराणामपि शत्रूणामभिगन्ता क्षयद्वीरः। ...अथवा क्षयतिर्निवासार्थ एव। आत्मीयानां वीराणामभिप्रेतेषु निवासयिता क्षयद्वीरः।... इमा रुद्रस्य बलवतश्चूडावतोऽपि वीराणामपि शत्रूणामभिगन्तुः स्वेषां वा वीराणामभिप्रेतेषु स्थानेषु निवासयितुरर्थाय Sk.

हवामहे[1]। यथा। सुखम्[2]। भवति। द्विपदे[3]। चतुष्पदे[4] च। विश्वं[5] च। पुष्टम्[6]। अस्मिन्। ग्रामे। अरोगम्[7]।

**मृळा*[*] नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते।**
**यच्छं[†] च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥२॥**

मृळा नः। सुखय। अस्मान्[8]। रुद्र[9]! अपिच। अस्माकम्। सुखम्। कुरु। क्षपितवीराय[10] वयम्। तुभ्यम्[11]। अन्नेन[11]। परिचरामः[12]। यत् सर्वेषाम्। पिता[13]। शम्[14]। च। योः[15]। च। मनुर्देवेभ्यो मनुष्यामायाचितवान्[16] ? तद् वयम्। लभेमहि। तव। रुद्र! प्रणयनेषु[17]।

**अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः।**
**सुम्नायन्निद्विशो[‡] अस्माकमा चरारिष्टवीरा जुहवाम ते हविः ॥३॥**

अश्याम ते। प्राप्नुयाम। तव। सुमतिम्[18]। यागेन[19]। क्षपितवीरस्य[20]। तव। रुद्र!

---

१. प्रकर्षेण निष्पादयामः Sy. प्रहरामः प्रापयामः। रुद्रं स्तोतुमुच्चारयाम इत्यर्थः Sk.
२. शं शमनीयानां रोगाणामुपशमनम् Sy.
३. अस्मदीयाय मनुष्याय Sy.
४. गवाश्वप्रभृतये च।...तेन प्रकारेण स्तुतीः कुर्म इत्यर्थः Sy. अस्मदीयाय Sk.
५. सर्वं प्राणिजातम् Sy. ६. प्रवृद्धम् Sy.
७. आतुरा रुग्णास्तैं रहितं सत् Sy.
* मृळ। नः। PP.
† यत्। शम्। PP.
८. अस्मभ्यमस्मदर्थम् Sy. षष्ठचन्तमेतत्... अस्माकं सम्बन्धिनः Sk. ९. अस्माद्रुद्रा M.
१०. क्षपितसर्ववीरं प्राप्तैश्वर्यैर्मरुद्भिर्युक्तं वा Sy. क्षयद्वीराय त इत्युभयत्र द्वितीयार्थे चतुर्थी। क्षयद्वीरं त्वाम् Sk.
११. त्वां...हविर्लक्षणेनान्नेन नमस्कारेण वा Sy. हविर्लक्षणेन Sk.
१२. नित्यं परिचरेमेत्याशास्महे Sk.
१३. उत्पादकः Sy. पिता सर्वप्रजानाम् Sk.
१४. मनुः स्वकीयाभ्यः प्रजाभ्यः...रोगाणां शमनम् Sy. शमनं च। कस्य? सामर्थ्यादुत्पन्नानामनिष्टानां रोगादीनाम् Sk.
१५. भयानां यावनं च Sy. यौतिः पृथग्भावे। पृथग्भवनं च। असम्बद्धं चेत्यर्थः। केन? सामर्थ्यादुत्पिपित्सुभिरनिष्टैः Sk.
१६. एतद्द्वयम् आयेजे देवेभ्यः सकाशात् प्राप्य दत्तवान् Sy. तव यागेनाप्तवानित्यर्थः Sk.
१७. प्रकृष्टा नीतय उपदेशाः प्रणीतयस्तासु। सप्तमीनिर्देशाद् वर्तमाना इति शेषः। तृतीयार्थे वा सप्तमी। त्वदुपदेशैश्चेष्टमाना इत्यर्थः Sk.
‡ सुम्नऽयन्। इत्। PP.
१८. अनुग्रहात्मिकाम् Sy. अनुग्रहरूपां बुद्धिम्। तवानुग्राह्या बुद्धौ भवेमेत्यर्थः Sk.
१९. क्षागेन P. D. M. त्वद्दैवत्येन यज्ञेन Sy. अविगुणेन Sk.
२०. क्षपितप्रतिपक्षस्य मरुद्भिर्युक्तस्य वा Sy.

सेक्तः ! सुखमिच्छन्। अस्माकम्। पुत्रपौत्रादीन्। आचर। अनुपहिंसितवीराः सन्तो वयम्। तुभ्यम्। हविः। जुहवाम।

त्वेषं वयं रुद्रं यज्ञसाधं वङ्कुं कविमवसे नि ह्वयामहे।
आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्वयमस्या वृणीमहे ॥४॥

त्वेषं वयम्। दीप्तम्। यज्ञस्य साधयितारम्। कुटिलगमनम्। कविम्। अवसे। अभिमुखमाह्वयामः सः। दैव्यम्। क्रोधम्। अस्मत्तः। दूरे। क्षिपतु। सुमतिम्। एव। वयम्। अस्य। प्रार्थयामहे।

दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा नि ह्वयामहे।
हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं यंसत् ॥५॥

दिवो वराहम्। दिवः। वराहारम्। आरोचमानम्। जटिलम्। दीप्तम्। श्लाघमानम्।

---

१. वृष्टिलक्षणेनोदकेन। ... अथवा मीढशब्दस्य धननाम्नो मत्वन्तस्येदं छान्दसं रूपम्। धनवन्नित्यर्थः Sk.
२. तासां प्रजानां सुखमिच्छन्नेव सुखप्रद एव भवेत्यर्थः Sy. अस्मदीयहविरुपयोगनिमित्तं सुखमिच्छन् Sk.
३. ऋत्विजो वा प्रति Sk.
४. ०त्रादीनां पर M. आगच्छ Sk.
५. वीर्याज्जायन्त इति वीराः प्रजाः Sy.
६. चरुपुरोडाशादिकम् Sy.
७. चोदित आधारे प्रक्षिपाम Sy.
८. V. Mādhava ignores इत्
* अस्य। आ। PP.
९. यस्य P. प्रज्ञस्य M.
१०. एष हि यज्ञं स्विष्टं करोति Sy.
११. क्रान्तदर्शिनम् Sy. मेधाविनम् Sk.
१२. हविषा तर्पणाय पालनाय वा Sk.
१३. ०से मभि० M. नियमेन Sk.
१४. ०म (स्स देवो हस्ते दधानो) स्स P.
१५. देव्यं D. देवस्य द्योतमानस्य सम्बन्धिनम् Sy. देवानां स्वभूतम् Sk.
१६. यथास्मभ्यं देवा न क्रुध्येयुस्तथा करोत्वित्यर्थः Sk. १७. अनुग्रहरूपां बुद्धिम् Sy. शोभनामेवानुग्रहरूपां बुद्धिम् Sk.
१८. द्युलोकात् Sk.
१९. वराहम् P. यद्वा वराहवद् दृढाङ्गम् Sy. वराहनामासुरः। तत्सदृशम्। अत्यन्तबलवन्तमित्यर्थः। अथवा वराह इति मेघनाम। तत्सदृशम्। एकदेशसादृश्येन चैष समस्तसादृश्यव्यपदेशः। रुद्रस्य नीलत्वात् कण्ठो मेघसदृशः। मेघसदृशकण्ठमित्यर्थः। अथवा वराहः सूकर उच्यते। तदाकारम्। देवता हि महाभाग्ययोगात् तं तमाकारं भजते। अत उपपन्नो रुद्रस्य वराहाकारव्यपदेशः Sk.
२०. अरुषतिर्गतिकर्मा। गन्तारं शत्रून् यज्ञान् वा प्रति Sk. २१. ०ल M.
२२. त्वेषं रूपम्। अन्तर्णीतमत्वर्थो रूपशब्दो द्रष्टव्यः। माहाभाग्ययोगादनेकप्रकारं रूपं रूपवन्तम् Sk.
२३. ०मान P. निरूपणीयं वेदान्तैरधिगम्यम् Sy.

नमसा[१]। अभिमुखम्[२]। आह्वयामः स देवः। हस्ते[३]। दधानः[४]। वरणीयानि[५]। भेषजानि[६]। सुखम्। रक्षाम्[७]। गृहं च। अस्मभ्यम्[८]। प्रयच्छतु[९]।

**इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् ।**
***रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय तनयाय मृळ ॥६॥**

इदं पित्रे। मरुताम्[१०]। पित्रे[११]। देवाय। इदम्। अत्यन्तं स्वादुभूतम्[१२]। वर्धनम्[१३]। वचः। उच्यते। देहि। च। अस्मभ्यम्। देव[१४]! मर्तानां[१५] भोजनमन्नम्[१६]। आत्मने। पुत्राय। पौत्राय[१७] च। प्रसीद।

---

१. Omitted by P.
हविर्लक्षणेनान्नेन नमस्कारेण वा Sy.
नमस्कारेण। स्तुत्येत्यर्थः। अथवा नमो हविर्लक्षणमन्नम्। तेन निमित्तेन। हविरुपभोक्तुमित्यर्थः Sk.

२. नियमेन Sk.

३. स्ते M.

४. हस्तधारणेन चात्र तदुत्तरकालभावि दानं लक्ष्यते। ददादित्यर्थः Sk.

५. अत्यन्तोत्कृष्टानीत्यर्थः Sk.

६. रोगशमनहेतुभूतानि Sy.
सर्वरोगोपशमनसमर्थानि Sk.

७. आयुधानां निवारकं कवचम् Sy.
शत्रुप्रयुक्तहिंसाप्रतिबन्धसमर्थं च कवचम् Sk.

८. स्तोतृभ्यः Sy.

९. भेषजानि च ददातु सुखादीनि चेत्यर्थः Sk.

* रास्वं। PP.

१०. एकोनपञ्चाशत्सङ्ख्याकानां देवविशेषाणाम् Sy.

११. पितृभूताय Sk.

१२. अतिशयेन हर्षजनकमित्यर्थः Sy.
अत्यन्तं मनसः प्रीतिकरमित्यर्थः Sk.

१३. स्तुत्यस्य प्रवर्धकम्। स्तोत्रेण हि देवता हृष्टा सती प्रवर्धते। रुद्रस्य च मरुतां पितृत्वमेवमाख्यायते। पुरा कदाचिदिन्द्रोऽसुराञ्जिगाय। तदानीं दितिरसुरमाता इन्द्रहननसमर्थं पुत्रं कामयमाना तपसा भर्तुः सकाशाद् गर्भं लेभे। इमं वृत्तान्तमवगच्छन्निन्द्रो वज्रहस्तः सन् सूक्ष्मरूपो भूत्वा तस्या उदरं प्रविश्य तं गर्भं सप्तधा बिभेद। पुनरप्येकैकं सप्तखण्डमकरोत्। ते सर्वे गर्भैकदेशा योनेर्निर्गत्यारुदन्। एतस्मिन्नवसरे लीलार्थं गच्छन्तौ पार्वतीपरमेश्वराविमान् ददृशतुः। महेशं प्रति पार्वत्येवमवोचत्। इमे मांसखण्डा यथा प्रत्येकं पुत्राः सम्पद्यन्तामेवं त्वया कार्यं मयि चेत्प्रीतिरस्तीति। सच महेश्वरस्तान् समानरूपान् समानवयसः समानालङ्कारान् पुत्रान् कृत्वा गौर्यै प्रददौ, तवेमे पुत्राः सन्त्विति। अतः सर्वेषु मारुतेषु सूक्तेषु मरुतो रुद्रपुत्रा इति स्तूयन्ते Sy.
वृद्धिहेतुः। स्तुतिर्हि देवानां वृद्धिकरी Sk.

१४. देवा P.
मरणरहितरुद्र Sy.

१५. मर्त्यानाम् P. मत्तानां M.

१६. भोजनमिति धननाम। मर्तोपभोग्यं धनम् Sk.

१७. Omitted by P. and D.
पुत्राय M.

मा नो॑ म॒हान्त॑मु॒त मा नो॑ अर्भ॒कं मा न॒ उक्ष॑न्तमु॒त मा न॑ उक्षि॒तम् ।
मा नो॑ वधीः पि॒तरं॒ मोत मा॒तरं॒ मा नः॑ प्रि॒यास्त॒न्वो॑ रुद्र रीरिषः ॥७॥

मा नो महान्तम्। मा[1]। अस्माकम्। वृद्धम्[2]। मा। च। बालम्[3]। मा च। रेतः सिञ्चन्तं युवानम्। मा । च। निषिक्तम्[4]। मा च। नः। वधीः। पितरम्। मा। च। मातरम्। मा च। अस्माकम्। प्रियाणि। अङ्गानि[5]। हिंसीः।[6]

मा न॑स्तो॒के तन॑ये॒ मा न॑ आ॒यौ मा नो॒ गोषु॒ मा नो॒ अश्वे॑षु रीरिषः ।
वी॒रान्मा नो॑ रुद्र भामि॒तो व॑धीर्ह॒विष्म॑न्तः॒ सद॒मित्त्वा॑ हवामहे ॥८॥

मा नस्तोके। मा। अस्माकम्। पुत्रे[7]। तत्पुत्रे[8] च। मा चान्यस्मिन्। मदीये। पुरुषे[8]। मा। नः। गोषु[9]। मा च। अस्माकम्। अश्वेषु[10]। हिंसीः। मा च। अस्माकम्। समर्थान्[11]। क्रुद्धः। वधीः। हविष्मन्तः। सदा। एव। त्वाम्। वयम्[12]। हवामहे[13][14]।

उप॑ ते॒ स्तोमा॑न्पशु॒पाइ॒वाक॑रं॒* रास्वा॑ पितर्मरुतां सु॒म्नम॒स्मे† ।
भ॒द्रा हि ते॑ सुम॒तिर्मृ॒ळ‡यत्त॒माथा॑ व॒यमव॒ इत्ते॑ वृणीमहे ॥९॥

उप ते[15]। यथा गोपाः प्रातः समर्पितान्[16] पशून् सायमुपकरोत्येवमहम्। तुभ्यम्। स्तोमान्[17]।

---

१. Omitted by P.
२. ०द्ध P. ३. ०ल M.
४. गर्भरूपेण स्त्रीषु निषिक्तमपत्यम् Sy. गर्भस्थम् Sk.
५. स्नेहविषया स्तनूषु भवाः प्रजा वा Sy. मा च नः प्रियास्तन्वः। एकवचनस्य स्थाने बहुवचनम्। प्रियं स्वमेव शरीरम् Sk.
६. V. Mādhava ignores नः। नः। नः। रुद्र।
७. तोक इत्यादौ द्वितीयार्थे सप्तमी। मास्माकं तोकं पौत्रांश्च पुत्रांश्च ? (पुत्रांश्च पौत्रांश्च) Sk.
८. आयव इति मनुष्यनामसु पाठादायुशब्दोऽत्र मनुष्यवचनः। परिचारकमनुष्यान् Sk.
९. गाः Sk. १०. अश्वान् Sk.
११. अर्थान् P. D. विक्रान्ताञ् शौर्योपेतान् अस्मदीयान् Sy. स्वभ्रातृप्रभृतीन् Sk.
१२. Omitted by P.
१३. यागाय Sk.
१४. V. Mādhava ignores रुद्र
* प॒शु॒पाःऽइ॑व। आ। अ॒क॒र॒म्। PP.
† अ॒स्मे इति॑। PP.
‡ मृ॒ळ॒यत्ऽत॑मा। अथ। PP.
१५. उप ते omitted by M.
१६. स्वस्मै समर्पितान् पशून् Sy.
१७. स्वामिभ्यः प्रत्यर्पयति, एवं त्वत्सकाशाल्लब्धान् स्तुतिरूपान् मन्त्रान् स्तुतिसाधनतया तुभ्यं प्रत्यर्पयामीत्यर्थः Sy. यथा पशुपालः पशून् विक्षिप्तान् सत एकीकृत्य ग्रामस्यात्मनो वा समीपे करोति Sk.

उपाकरम्[1]। देहि। मरुताम्। पितः! सुखम्। अस्मभ्यम्। भजनीया[2]। हि। ते। सुमतिः[3]। सुख-यितृतमा। वयम्। तव। रक्षणम्। एव[4]। वृणीमहे[5]।

**आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे* ते अस्तु।**
**मृळा† च नो अधि च ब्रूहि देवाधा‡ च नः शर्म यच्छ द्विबर्हाः ॥१०॥**

आरे ते[6]। दूरे[7]। तव। गोहननम्[8]। अपिच। पुरुषहननम्[9]। क्षयद्वीर[10]! सुखम्[11]। अस्मासु। तव। अस्तु। सुखय च[12]। अस्मान्[13]। अधि। चास्मभ्यम्[14]। ब्रूहि। अथ[15]। च। सुखम्[16]। प्रयच्छ। अस्मभ्यम्। द्वयोः स्थानयोः[17] परिवृढः[18][19]।

**अवोचाम नमो अस्मा§ अवस्यवः शृणोतु नो हवं रुद्रो मरुत्वान्।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥११॥**

अवोचाम[20]। उक्तवन्तो वयम्। नमस्कारम्[21]। अस्मै। रक्षणेच्छवः[22] सोऽयम्। आह्वानम्।

---

१. उपकारं P. उपकरं M. समर्पयामि Sy. भवत्सन्निधौ सर्वानुच्चारितवानित्यर्थः Sk.
२. कल्याणी Sk.
३. शोभनानुग्राह्यबुद्धिरस्मासु Sk.
४. सम्भजामहे Sy. आत्मानं पाल्यमानमिच्छाम इत्यर्थः Sk.
५. V. Mādhava ignores अथ
* अस्मे इति। PP. † मृळ। PP.
‡ देव। अर्ध। PP.
६. अस्मत्तो भवतु Sk.
७. षष्ठीश्रुतेर्बलं रूपं वेति शेषः Sk.
८. ०हनम् M. यद्वा गोहननसाधन-मायुधम् Sy. गवां हन्तृ Sk.
९. तत्साधनमायुधं वा Sy. पुरुषाणां हन्तृ Sk.
१०. क्षपितसर्वशत्रुजन रुद्र! Sy. वीराणामपि शत्रूणामभिगन्तः! स्वेषां वा वीराणाम-भिप्रेतेषु स्थानेषु निवासयितः! Sk.
११. सुम्नं यदेव बलं रूपं वा तव Sk.
१२. अस्माकं...सुखसिद्ध्यर्थं प्रसन्नो भव Sy.
१३. अस्मान् Sy. १४. अधिवचनं पक्षपातेन वचनम् Sy. आज्ञापय च यद्यदस्माभिः कर्तव्यमित्यर्थः Sk. द्विबर्हाः। बृंहिर्वृद्ध्यर्थः। द्वयोर्वर्धयिता यष्टुः स्तोतुश्च द्विबर्हाः। अथवा द्वयोः स्थानयोः प्रवृद्धो द्विबर्हाः। कतमयोर्द्वयोः। यज्ञसङ्ग्रामयोर्वा वीर्येण मध्यमोत्तमयो-र्वा रूपेण। रुद्रो हि मध्यमस्थानीयः सन्नाप्रवृद्धो दिव्यादित्याच्छक्नोति प्रभू-तान् रसान् प्रतिग्रहीतुम्। अप्यन्तरिक्ष आप्रवृद्धः शक्नोति च वर्षयितुम्। अत उपपन्नमस्य वृद्धत्वम्। तन्निबन्धनश्च द्विबर्हा इति व्यपदेशः Sk.
१५. अथशब्दोऽत्रापिशब्दस्यार्थे। अपिच Sk.
१६. शर्म गृहम् Sk.
१७. पृथिव्यामन्तरिक्षे च परिवृढः। यद्वा द्वयोर्दक्षिणोत्तरमार्गयोः, ज्ञानकर्मणोर्वा परिवृढः स्वामी Sy.
१८. ०बृंह्ल P. ०बृंह्लः D.
१९. V. Mādhava ignores देव
§ अस्मै। PP. २०. P. and D. add कवये before उक्तवन्तः। एतत्सूक्तरूपं स्तोत्रमवादिष्म Sy.
२१. अस्मै रुद्राय ... नमस्कारोऽस्तु Sy.
२२. अन्नं रक्षणं वेच्छन्तः Sy.

श्रृणोतु[1]। रुद्रः। मरुद्भिः सहितः[2]।

## I. 115.

**चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।**
**आप्रा[*] द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥१॥**

चित्रं देवानाम्[3]। चायनीयम्[4]। देवानाम्[5]। उदगात्[6]। अनीकं सङ्घः, आदित्ये हि सर्वे देवा वसन्ति तदिदम्। मित्रस्य[7]। वरुणस्य। अग्नेः[8]। प्रकाशकमपि[9] वा चक्षुर्भूतम्[10]। आपूरय[11]। द्यावापृथिव्यौ च। अन्तरिक्षं च महत्त्वेन[12]। सूर्यः[13]। आत्मा। जङ्गमस्य। स्थावरस्य। च जीवभूतः[14]।

**सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति[†] पश्चात्।**
**यत्रा[‡] नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥२॥**

सूर्यो देवीम्[15]। सूर्यः। देवीम्। उषसम्[16]। दीप्यमानाम्। मनुष्यः[17]। इव। स्त्रियम्। पश्चात्।

---

१. स्वीकरोतु Sy.

२. V. Mādhava ignores नः and तत्। नः etc. Ms. D. puts the figure ॥११४॥ here to indicate the end of one hundred and fourteenth hymn. No such number is given in P. and M.

* आ। अप्राः। द्यावापृथिवी इति। PP.

३. चायनीयं देवानामुदगमदनीकम्। स्थानं मित्रस्य वरुणस्याग्नेश्च। आपूपुरद् द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन (तेन)। सूर्य आत्मा जङ्गमस्य च स्थावरस्य च N. 12. 16.

४. आश्चर्यकरम् Sy. विचित्रं पूज्यं वा ज्योतिः Sk.

५. दीव्यन्तीति देवा रश्मयस्तेषाम्। देवजनानामेव वा Sy. रश्मीनाम् Sk.

६. उदयाचलं प्राप्तमासीत् Sy.

७. मित्रादिग्रहणं चात्र प्रदर्शनार्थं द्रष्टव्यम्। देवानां मनुष्याणामन्येषां च प्राणिनामित्यर्थः Sk.

८. उपलक्षणमेतत्। तदुपलक्षितानां जगताम् Sy. ९. ०शमपि P. D.

१०. चक्षुरिन्द्रियस्थानीयं वा Sy.

११. स्वकीयेन तेजसा ... अपूरयत् Sy. आपूरयति ... केन? सामर्थ्याद्रश्मिभिः Sk. आपूरयति is suggested for आपूरय

१२. ०त्वेन P. D. M.

१३. ईदृग्भूतमण्डलान्तर्वर्ती सूर्योऽन्तर्यामितया सर्वस्य प्रेरकः परमात्मा Sy.

१४. स हि सर्वस्य स्थावरजङ्गमात्मकस्य कार्यवर्गस्य कारणम्। कारणाच्च कार्यं नातिरिच्यते।... यद्वा स्थावरजङ्गमात्मकस्य सर्वस्य प्राणिजातस्य जीवात्मा। उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सदुपलभ्यते Sy.

† अभि। एति। PP. ‡ यत्र। PP.

१५. ०वी P. १६. ०स D. उषसः प्रादुर्भावानन्तरं तामभिलक्ष्य गच्छति Sy.

१७. यथा कश्चिन्मनुष्यः शोभनावयवां गच्छन्तीं युवतिं स्त्रियं सततमनुगच्छति तद्वत् Sy.

[1] अभिगच्छति। यस्यामुषसि। मनुष्याः[2]। देवान्[3] कामयमाना।अग्निहोत्रादीनि[4] कर्माणि। प्रति-
वितन्वते। भद्रं[5] च। भद्राय[6] कुर्वन्ति यद्वा कर्षणार्थं युगानि युञ्जन्तीति।

भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा[*] अनुमाद्यासः।
नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी[†] यन्ति सद्यः ॥३॥

भद्रा अश्वाः। भजनीयाः। अश्वाः[7]। हरिन्नामधेयाः[8]। सूर्यस्य[9]। चित्रवर्णाः[10]। एतग्वा[11] इति
चाश्वनाम स्तुत्याम्[12]। अनुमोदनीयाः। प्रह्वीभवन्तः[13]। दिवः। पृष्ठस्थानीयमादित्यम्[14]। आतस्थु-[15]

---

१. अपिग० P.
उषस्युदितायां पश्चादुदेतीत्यर्थः Sk.

२. यज्ञस्य नेतारो यजमानाः। . . . यद्वा देवयन्तो देवयागार्थं धनमात्मन इच्छन्तो यजमानपुरुषा युगानि हलावयवभूतानि कर्षणाय . . . प्रसारयन्ति। तामुषसमनुगच्छतीत्यर्थः Sy.

३. देवं द्योतमानं सूर्यं यष्टुमिच्छन्तः Sy.
देवमिममेव सूर्यं यष्टुमिच्छन्तः Sk.

४. युगशब्दः कालवाची। तेन च तत्र कर्तव्यानि कर्माणि लक्ष्यन्ते यथा दर्शपूर्णमासाविति Sy.
युगशब्दः कालवचनः सामर्थ्याच्चाग्निहोत्रकालेषु वर्तते प्रतीत्येतेन सम्बध्यते। अग्निहोत्रकालान् प्रति। अग्निहोत्रकालेषु . . . विततं कुर्वन्ति Sk.

५. कल्याणं सूर्यम् Sy.

६. कल्याणरूपाय कर्मफलाय स्तुम इति शेषः। यद्वा देवयन्तो देवकामा यजमाना युगानि युग्मानि भूत्वा पत्नीभिः सहिताः सन्तो भद्रं कल्याणम् अग्निहोत्रादिकं कर्म भद्राय तत्फलार्थं प्रति प्रत्येकं यस्यामुषसि प्रवृत्तायां . . . विस्तारयन्ति Sy.
तत्फलाय। भद्रमग्निहोत्रलक्षणं कर्म। यदा स्वेषु कालेषु मनुष्या अग्निहोत्रं जुह्वति तदा सूर्य उषसं पश्चादभ्येतीति समस्तार्थः Sk.

* एतऽग्वाः। PP.

† द्यावापृथिवी इति। PP.

७. तुरगा व्यापनशीला वा Sy.

८. ०रि ना० P.
हर्तारः Sy.
हरितवर्णाः Sk.

९. सूर्यस्य स्वभूताः Sk.

१०. ०र्णं P.

११. अश्वा एतग्वा इत्येतदुभयम् अश्वनाम। तत्रैकं क्रियापरं योजनीयम्। . . . एतग्वा अश्वाः। यद्वा, एतं गन्तव्यं मार्गं गन्तारोऽश्वाः। एतं शबलवर्णं वा प्राप्नुवन्तोऽश्वाः Sy.
एतग्व इत्यश्वनामान्यत्रेह त्वश्वेन पौनरुक्त्यप्रसङ्गात् क्रियाशब्दः। अतीतेष्वहस्सु मार्गस्य गन्तार इत्यर्थः Sk.

१२. अनुक्रमेण सर्वैः स्तुत्या मादनीयाः Sy.
अनुष्टुत्याः Sk.

१३. अस्माभिर्नमस्यमानाः सन्तः Sy.
पूजयन्तः Sk.

१४. उपरिप्रदेशं पूर्वभागलक्षणम् Sy.
दिवः पृष्ठमुपरिभागम् Sk.

१५. प्राप्नुवन्ति। यद्वा हरितो रसहरणशीला रश्मयो भद्रादिलक्षणविशिष्टा दिवः पृष्ठं नभःस्थलमातिष्ठन्ति Sy.
आतिष्ठन्ति Sk.

स्ततः। द्यावापृथिव्यौ। परिगच्छन्ति[१]। सद्य[२] एव।

**तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार।**
**यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥४॥**

तत् सूर्यस्य देवत्वम्[३]। तत्। सूर्यस्य[४]। ऐश्वर्यम्[५]। तत्। महत्त्वं[६] यत्। मध्ये। कर्मणः[७]। विततं[८] तत् कर्मास्तं यन्तं सूर्यं दृष्ट्वा कर्मकरः[९]। संहरति[१०]। यदा। एवायम्[११]। अश्वान्[१२] प्रातर्गमनाय। रथात्[१३]। नियोजयति[१४] तत्र। नियुक्त्यनन्तरमेव। रात्री[१५]। सर्वस्मै[१६]। वासः[१७]। तनुते[१८]ऽहरुद्गमयति[१९]

---

१. ०ति M. व्याप्नुवन्तीत्यर्थः Sy.
२. सद्यः समान एवाहनि Sk.
३. तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते। यदासावयुङ्क्त हरणानादित्यरश्मीन्। हरितोऽश्वानिति वा। अथ रात्री वासस्तनुते सिमस्मै N. 4. 11.
४. सर्वप्रेरकस्यादित्यस्य . . . स्वातन्त्र्यमिति यावत् Sy.
५. ईश्वरत्वं, स्वातन्त्र्यमिति यावत् Sy.
६. ०त्वं P. D. M.
७. प्रारब्धापरिसमाप्तस्य कृष्यादिलक्षणस्य Sy. कृष्यादेः कर्मणः। अपरिसमाप्तेष्वेव प्रारब्धेषु कर्मस्वित्यर्थः Sk.
८. तस्मिन् कर्मणि . . . विस्तीर्णं स्वकीयं रश्मिजालमस्तं गच्छन् सूर्यः सञ्जभार, अस्माल्लोकात्स्वात्मन्युपसंहरति। कर्मकरश्च प्रवृत्तमपरिसमाप्तमेव विसृजत्यस्तं यन्तं सूर्यं दृष्ट्वा। ईदृशं स्वातन्त्र्यं महिमा च सूर्यव्यतिरिक्तस्य कस्यास्ति ? न कस्यापि। सूर्य एवेदृशं स्वातन्त्र्यं महिमानञ्चावगाहते Sy.
९. ०राः P. १०. ०न्ति P. आत्मीयं रश्मिजालं . . . क्षणेनैकेन संहरति। महत्त्वाद्धीदमत्यन्तदुरुपसंहरं नान्यः सूर्यात् क्षणेनैकेनापि संहर्तुं शक्नोतीत्यर्थः Sk. ११. इच्छब्दः पदपूरणः Sk.
१२. रसहरणशीलान् स्वरश्मीन् हरिद्वर्णानश्वान् वा Sy.
१३. सहस्थानादस्मात्पार्थिवाल्लोकाद् आदाय अयुक्त, अन्यत्र संयुक्तान् करोति। यद्वा युजिः केवलोऽपि विपूर्वो द्रष्टव्यः। यद्वैवासौ स्वरश्मीनश्वान् वा सधस्थात् सह तिष्ठन्त्यस्मिन्निति सधस्थो रथः। तस्मादयुक्त, अमुञ्चत् Sy.
सधस्थात्। सह तिष्ठन्ति यत्राश्वाः स सधस्थो रथ इहाभिप्रेतः। सप्तम्यर्थे चैषा पञ्चमी। सर्वेषामश्वानां सहस्थानभूत आत्मीये रथ इत्यर्थः Sk.
१४. यदास्तमयानन्तरमुत्तरेण मेरुं गन्तुं युङ्क्ते Sk. वियोजयति is suggested for नियोजयति
१५. ०त्रीः M. १६. सप्तम्यर्थे चतुर्थी। सर्वस्मिंल्लोके Sy. सप्तम्यर्थे चैषा चतुर्थी। सर्वस्मिञ्जगति Sk.
१७. ०सं M. P. आच्छादयितृ तमः। . . . यद्वा वासो वासरमहः। तत्सर्वस्मादस्माल्लोकाद् अपनीय रात्री तमस्तनुते Sy. वासश्शब्दोऽत्र क्रियाशब्दो वस आच्छादन इत्यस्य। वस्त्रवचनो वा। सामर्थ्याच्च कृष्णं वास आह नान्यत्। तत्सारूप्याच्च तमसि प्रयुज्यते। कृत्स्नस्य जगत आच्छादयितृ कृष्णवासस्सरूपं वा तमः Sk.
१८. विस्तारयति Sk. १९. ०मनयति P.

यद्वा[१] रथाद्यदाश्वान् विमोचयति, अनन्तरमेव रात्रिर्वा[२]सःसदृशमन्धकारं विक[३]रोति।

**तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे।**
**अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति ॥५॥**

तन्मित्रस्य। तत्[४]। मित्रावरु[५]णयोरहोरात्रयोः[६]। दर्शनाय[७]। सूर्यः। रूपम्[८]। करोति। दिवः[९]।
उपस्थे[९]ऽन्त[९]रिक्षे। तस्य। अपर्यन्तम्। अन्यतरतः[१०] स्थितम्[११]। श्वेतम्[१२]। तेजः[१३]। रश्मयः[१४]। सम्भरन्ति[१५]।
कृष्णं च। अन्यदन्धकारमित्य[१६]ह्नि श्वेतं तेजः सम्भरन्ति[१५] रात्रावन्धकारम्[१७] "द्वे द्रधसी[१८] सतती[१९] वस्त
एकः केशी विश्वा[२०] भुवनानि विद्वान्[२१]" इत्यध्वर्यूणां मन्त्रः।

**अद्या[*] देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात्।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥६॥**

अद्या देवा उदिता। अद्य[२२]। देवाः[२३]। सूर्यस्य। उदये सत्यस्मात्। दारिद्र्यात्[२४]।

---

१. यदा M. २. रत्रि वा० D. ०वसः P. ३. अपि क० M.
४. तदानीमुदयसमये Sy. यदिदं प्रातः प्रागुदयाद् दीप्तिवर्जितं प्रकाशमात्रसम्बद्धं तत् Sk.
५. एतदुभयोपलक्षितस्य सर्वस्य जगतः Sy. मित्रवरुणग्रहणमत्र प्रदर्शनार्थं द्रष्टव्यम्। देवानां मनुष्याणामन्येषां प्राणिनाम् Sk.
६. ०यो D. See note on अहोरात्र no. ५ p. ५८३
७. आभिमुख्येन प्रकाशनाय Sy.
८. सर्वस्य निरूपकं प्रकाशकं तेजः Sy.
९. नभस उपस्थ उपस्थाने मध्ये Sy. समीपे। द्युलोकस्य पूर्वस्मिन् प्रान्त इत्यर्थः Sk.
१०. अन्यत्तु मध्येऽह्नः Sk. ११. अन्यतरस्थि० M. तमसो विलक्षणं तेजः Sy.
१२. अत्यन्तदीप्तमस्य सूर्यस्य Sk.
१३. बलनामैतत्। बलयुक्तमतिबलस्यापि नैशस्य तमसो निवारणे समर्थम् Sy. बलनामैतत् सामर्थ्याच्चान्तर्णीतमत्वर्थम्। बलवत्। अत्यन्ततीव्रत्वाद् दुरभिभवमित्यर्थः Sk. १४. हरिद्वर्णा अश्वा वा Sy. हरितोऽश्वाः Sk.
१५. अहनि स्वकीयागमनेन निष्पादयन्ति Sy. मेरुमुत्तरेण सूर्यं नयन्तः प्रकल्पयन्ति। मेरुणा हि व्यवधीयमानः सूर्यस्तमस्करोति। अतस्तस्यैव देशान्तरस्थस्य तद्रूपमिति व्यपदिश्यते। मेरुणा च व्यवधानं सूर्यस्याश्वाः कुर्वन्ति Sk.
१६. तमः स्वकीयापगमनेन रात्रौ। अस्य रश्मयोऽप्येवं कुर्वन्ति किमु वक्तव्यं तस्य माहात्म्यमिति सूर्यस्य स्तुतिः Sy. तमोलक्षणमस्य स्वरूपम् Sk.
१७. ०रां P. १८. द्रध P.
१९. यतती P. २०. विश्वानि P.
२१. TS. 3. 2. 2. 2.
* अद्य। PP. २२. अद्या P.
२३. द्योतमानाः सूर्यरश्मयः Sy. सौर्यत्वादस्या ऋचो देवा इह रश्मय उच्यन्ते नान्ये। अद्य हे देवाः सूर्यस्य रश्मय उदिताः Sk.
२४. अंहसः पापात् Sy. पापादधर्माख्यात् Sk.

पापाच्च[१]। निष्पारयत[२]। तन्न इति[३]।

## I.116.

**नासत्याभ्यां बर्हिरिव प्र वृञ्जे स्तोमाँ इयर्म्यभ्रियेव वातः।**
**यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू[*] रथेन ॥१॥**

**नासत्याभ्याम्**। कक्षीवान् दैर्घतमस उशिक्प्रसूतः। यथा कश्चिद् यज्ञार्थं बर्हिः[४]। प्रवृङ्क्त[५] एवमहम्। स्तोमानन्यूनातिरिक्तं करोमि स्तोमान् प्रेरयामि[६]। अभ्रसमूहानिव[७]। वातः। यौ। बालाय[८]। विमदायोढभार्याय[९] स्वगृहं प्रतिगच्छते शत्रुभिरभिभूताय[१०] ताम्। भार्याम्[११]। सेनां[१२] प्रतिगच्छता रथेन तद्गृहं प्रति। न्यूहतुः "याभिः पत्नीर्विमदाय"[१३] इति कुत्सः[१४]।

**वीळुपत्मभिराशुहेमभि[†]र्वा देवानां वा जूतिभिः शाशदाना।**
**तद्रासभो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय ॥२॥**

**वीळुपत्मभिः**[१५]। दृढपतनैः[१६]। आशुगमनैः। च। देवानाम्। च। प्रोत्साहनैः[१७]।

---

१. निरवद्यात्। अवद्यं गर्हितमुच्यते। अन्यस्मादपि गर्ह्यात् Sk.

२. निष्कृष्य पालयत Sy. निश्चयेनैवास्मान् पालयत Sk.

३. V. Mādhava ignores तन्न etc. Ms. D. puts the figure ॥११५॥ here to indicate the end of one hundred and fifteenth hymn. No such number is given in P. and M.

* निऽऊहतुः। PP.

४. बर्हि D.

५. ०ङ्क्ते P. D. प्रकर्षेणान्यूनानतिरिक्तं यागाय पर्याप्तं दर्भं वृङ्क्ते छिनत्ति सम्पादयतीति यावत्। एवमहम् . . . अश्विभ्यां स्तुतीः . . . सम्पादयामि Sy. वेदिस्तरणार्थं बर्हिः संस्करोति Sk.

६. स्तोमान् संस्कृत्य. . .गमयामि। उच्चारणेन प्रेरयामीत्यर्थः Sk.

७. ०नीव D. यथाऽभ्रियाणि, अभ्रेषु मेघेष्ववस्थितान्युदकानि . . . वायुर्वर्षणार्थं बहुशः प्रेरयत्येवमहमश्विभ्यां स्तोत्राणि . . . बहुशः प्रेरयामि Sy.

८. बलाय P. D. अर्भकमित्यल्पनाम। तस्य पर्यायोऽर्भशब्दः। . . . अल्पाया वा भार्याया गन्ता सोऽर्भगः। तस्यार्भगस्य विमदस्य ऋषेरर्थाय Sk.

९. एतत्सञ्ज्ञाय राजर्षये Sy.

१०. मध्येमार्गंस्वयंवरार्थमागतैस्तामलभमानैरन्यैर्नृपैः सह योद्धुमशक्नुवतेऽपि तस्मै . . .शत्रुसेनायाः प्रेरकेण शत्रुभिर्दुष्प्रापेण रथेन यावश्विनौ . . . भार्यां परैरनुक्रान्तां . . . शत्रून्निहत्य तदीयं गृहं प्रापयामासतुः। ताभ्यामित्यर्थः Sy.

११. तस्यैव Sk.

१२. सेनया सह गन्त्रा। स्वसेनापरिवृतेनेत्यर्थः Sk.

१३. RV. I. 112. 19[a].

१४. V. Mādhava ignores नासत्याभ्याम्।

† वीळुपत्मऽभिः। आशुहेमऽभिः। PP.

१५. पद्मभिः P. D. M. वीळ्विति बलनाम। बलवदुत्पतनैः Sy.

१६. सन्ततमपि गच्छतां येषां गतिर्न हीयत इत्यर्थः। ते वीळुपत्मानोऽश्विनोः स्वभूता रासभाः। तैर्वीळुपत्मभिः Sk.

१७. गमनैः। देवानामेव योग्या नान्यस्येत्यर्थः Sk.

गच्छतोः[1]। तत् प्रजापतिना दत्तम्। सहस्रमाश्विनं[2] नाम भवतोरश्वः। रासभः[3]। नासत्यौ। बलस्य[4]। प्रख्यापने[5]। युद्धे। जिगाय।

**तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृ*वाँ अवाहाः।**
**तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भि†रपोदकाभिः ॥३॥**

तुग्रो ह भुज्युम्। तुग्रः[6]। ह[7]। भुज्युं पुत्रम्[8]। अश्विनौ। समुद्रे[9]। धनम्। इव। कः। चित्। म्रियमाणः[10] समुद्रमध्यस्थानां शत्रूणां योधनार्थमपिवाऽन्येन कारणेन। प्रहितवान्[11] समुद्रमध्ये तस्य नौः सन्नाऽभवदथाश्विनौ[12] युवाम्। तं समुद्रस्य पार ऊहथुः[13]। नौभिः। युष्मदीयाभिः[14]। अन्तरिक्षेण[15] गच्छन्तीभिः सुश्लिष्टत्वादप्रविष्टोदकाभिः[16]।

१. शाशद्यमानयोरत्यर्थं प्रेर्यमाणयोर्युवयोर्वाहनभूतो यो रासभः प्रजापतिना दत्तः स यमस्य वैवस्वतस्य प्रीतिकरे प्रधने प्रकीर्णधनोपेते,...आजौ सङ्ग्रामे तच्छत्रूणां सहस्रं...जितवान्। वैवस्वतो हि बहूनां मरणहेतुना सङ्ग्रामेण तुष्टो भवति। यद्वा जेतव्येन प्रजापतिना निहितमृक्सहस्रं शीघ्रगमनयुक्तो रासभो जिगाय जयेनालभत। अन्येभ्यो देवेभ्यः पूर्वमेवाजिं प्राप्य युवां जयं प्रापयामास Sy. २. यत्सूर्याविवाहानन्तरं प्रजापतिर्देवेभ्योऽददात् तत्सहस्रमृचाम् Sk.

३. रासादः M. रथे नियुक्तस्सन् Sk.

४. यमस्य । तमसां यमनाद्यम आदित्य इहोच्यते । तस्य सम्बन्धिन्याम् Sk.

५. अश्वादेर्धावनभूमिराजिरुच्यते। तस्याम् Sk.

* कः। चित्। ममृऽवान्। अवं। अहाः। PP.

† आत्मन्ऽवतीभिः। अन्तरिक्षप्रुत्ऽभिः। अपऽउदकाभिः। PP.

६. तुग्र इति सोऽयमित्यभिसम्बन्धात् पितृशब्देनैवं पुत्रस्याभिधानम्। द्वितीयार्थे च प्रथमा।...तुग्रपुत्रम् Sk.

७. हशब्दः प्रसिद्धौ Sy. हेति पदपूरणम् Sk.

८. भुज्युं नाम राजानम् Sk.

९. उदकैर्मिह्यते सिच्यत इत्युदमेघः समुद्रस्तस्मिन् Sy.

१०. म्रियमाणः सन् धनलोभी कश्चिन्मनुष्यो ...यथा धनं परित्यजति तद्वत् Sy. यथा धनं कश्चिन्म्रियमाणो जहाति Sk.

११. नावा गन्तुं पर्यत्याक्षीत् Sy. एवमवाहाः। अवेत्येष परीत्येतस्य स्थाने। ओहाङ्? (क्) त्यागे। प्रथमपुरुषबहुवचनस्य स्थाने मध्यमपुरुषैकवचनमेतत्। विपन्ननावं सन्तं परित्यक्तवन्तः। के? सखायः Sk.

१२. ०दथावश्वि० P.

१३. पितृसमीपम्...युवां प्रापितवन्तौ Sy. प्रापितवन्तौ। उत्तारितवन्तावित्यर्थः Sk.

१४. ०दीभिः P. धृतिरात्मा धारणवतीभिरित्यर्थः Sy. स्वयमेवेत्यर्थः Sk.

१५. अतिस्वच्छत्वादन्तरिक्षे जलस्योपरिष्टादेव गन्त्रीभिः Sy. उदकमसंस्पृशन्तीभिरिव गच्छन्तीभिरित्यर्थः Sk.

१६. अप्रविष्टोदकाभिरित्यर्थः Sy.

तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः ।
समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः ॥४॥

तिस्रः क्षपः। भुज्युस्त्रिभिरहोरात्रैः समुद्रमध्यात् स्वगृहं नीतः। तिस्रः। रात्रीः। त्रीणि च। अहानि भवद्भ्यां सह। अतिगच्छद्भिः[1]। नासत्यौ ! भुज्युम्। ऊहथुः समुद्रमध्याद्। अश्वैः। समुद्रस्य मध्यस्थे[2]। स्थले तथा[3]। समुद्रस्य। पारात्[4] तुग्रस्य गृहम्। त्रिभिश्च। रथैः[5]। शतगमनसाधनैः[6]। षडश्वैः।...[7]।

अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे ।
यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् ॥५॥

अनारम्भणे[8]। दण्डकाष्ठाद्यारम्भणवर्जिते। वृक्षशाखादिग्रहणवर्जिते[9]। स्थानविजावे[10] ? समुद्रे। तद् युवाम्। वीरकर्म कृतवन्तौ स्थः। यद् युवाम्। अश्विनौ। भुज्युम्[11]। स्वगृहम्[12]। न्यूहथुः[13]। शतदर्विकाम्[14]। नावम्[15]। आतस्थिवांसम्।

"भुज्युं[16] याभिरव्यथिभिः[17]"[18] इति कुत्सः।

---

* त्रिः। अहा। अतिव्रजत्ऽभिः। PP.

१. एतावन्तं कालमतिव्याप्य वर्तमानैः Sy.

२. समुद्रस्यैकदेशभूते Sk.

३. जलवर्जिते प्रदेशे Sy.

४. पा...त् P. D. पा... M. समुद्रस्य मध्ये या उदकेन परिक्षिप्ताः... तास्वित्यर्थः Sk.

५. M. adds गृहैः before रथैः उदकेनार्द्रीभूतस्य समुद्रस्य पारे तीरदेशे च Sy.

६. शतसङ्ख्याकैश्चक्रलक्षणैः पादैरुपेतैः Sy. शतशब्दश्चात्र बहुनाम सामर्थ्याच्चात्राद्ये बहुत्वे वर्तते। पादशब्दोऽपि चक्रपादवचनः। त्रिचक्रपादैरित्यर्थः Sk.

७. आनयतं गा रथांश्चेति P. D. स्थल आनयनाय पतङ्गा रथाश्चेति M.

† अश्विनौ। PP.

‡ शतऽअरित्राम्। PP.

V. Mādhava ignores आर्द्रस्य

८. आलम्बनरहिते Sy. आरभ्यतेऽस्मिन्नित्यारम्भणमालम्बनमुच्यते। निरालम्बने Sk.

९. अनास्थाने। यस्मिन्नीषदपि स्थातुं न शक्यते सोऽनास्थानः।...अग्रभणे। ग्रहीतुमपि यस्मिन्न शक्यते सोऽग्रभणो लताशाखादिरहितस्तत्र Sk.

१०. स्थाने विजापे M. आस्थीयतेऽस्मिन्नित्यास्थानो भूप्रदेशः। तद्रहिते स्थातुमशक्ये जल इत्यर्थः Sy.

११. भुज्यं M. १२. स्वगृ M.

१३. तत्प्रापणमन्यैर्दुःशकं युवां समुद्रमध्ये कृतवन्तावित्यर्थः Sy.

१४. बह्वरित्राम्। यैः काष्ठैः पार्श्वतो बद्धैर्जलालोडने सति नौः शीघ्रं गच्छति तान्यरित्राणि Sy.

१५. नामम् M. १६. भुज्यं M.

१७. रप्यहिभिः P.

१८. RV. I. 112. 6b.

यमश्विना दृदथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति ।
तद्वां दात्रं महि कीर्तेन्यं भूत्पैद्वो वाजी सदमिद्धव्यो अर्यः ॥६॥

यमश्विना । अघाश्वो[1] नाम कश्चित् तस्मै[2] शत्रुजयार्थम्[3] । अश्विनौ ! । कञ्चन श्वेतम् । अश्वम् । ददतुः ? (थुः) सोऽश्वस्तस्मै । सदा । स्वस्ति[4] करोति । तत् । युवयोः । दानम् । महत् । सर्वदा कीर्तनीयम् । भवति । अश्वो[5] बलवान् । सदा । एव युद्धेषु । आह्वातव्यो[6] भवति । धनस्य[7] प्रदाता[8] ।[9]

युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंधिम् ।
कारोतराच्छफादश्वस्य वृष्णः शतं कुम्भाँ असिञ्चतं सुरायाः ॥७॥

युवं नरा । युवम् । नरा[10] ! स्तुवते । व ? (प) ज्रकुलाय[11] । कक्षीवते मह्यम्[12] । प्रच्छन्नां[13] बुद्धिं[14]

---

* अघऽअश्वाय । शश्वत् । इत् । स्वस्ति । PP.

१. अथाश्वो M.
अत्रेदमाख्यायते । पेदुर्नाम कश्चित् स चाश्विनौ तुष्टाव । तस्मै प्रीतौ कञ्चिच्छ्वेतवर्णमश्वं दत्तवन्तौ । स चाश्वस्तस्य प्रौढं जयं चकारेति । एतदत्र प्रतिपाद्यते । हे अश्विनौ युवां ... अहन्तव्याश्वाय पेदुनाम्ने राजर्षये Sy.

२. तमस्मै M.

३. ०र्थमश्वि० P.

४. जयलक्षणं मङ्गलम् Sy.

५. पेदोः सम्बन्धी पतनशीलः शीघ्रगामी वा Sy.
अथवा सदमित्येतद् वाजीत्येतेन सम्बध्यते । वाजशब्दश्च वेगवचनः । वेगवान् सदैव Sk.

६. आह्वा० D.

७. अयं ईश्वरश्च । क्व ? सामर्थ्याद् गमने । सर्वत्राप्रतिहतगतिरित्यर्थः Sk.

८. शत्रूणां प्रेरयिता, युद्धेषु प्रेरयितव्यो वा Sy.

९. V. Mādhava ignores पैद्वः । Sy. explains it as follows:— पेदोः सम्बन्धी पतनशीलः शीघ्रगामी वा ।

† कारोतरात् । शफात् । PP.

१०. नेतारावश्विनौ ! Sy.
मनुष्याकारौ ! Sk.

११. प्रज्रकुलाय D.
पज्रा इत्यङ्गिरसामाख्या । ...तेषां कुले जाताय Sy.
पाज इत्यन्ननाम । तेन हविर्लक्षणेन तद्वान् पज्रः । ... पज्र एव पज्रियः ... हविर्लक्षणेनान्नेनान्नवते । स्तुवते यजते चेत्यर्थः । अथवा पज्रा अङ्गिरस उच्यन्ते । तेषामपत्यभूतः पज्रियः । पौराणिका हि कक्षीवन्तमाङ्गिरसं स्मरन्ति । ... एवमङ्गिरसामपत्यं त्रयस्त्रिंशत्तमः कक्षीवान् । तस्मै कक्षीवते मह्यमेवेत्यर्थः Sk.

१२. कक्ष्या रज्जुरश्वस्य । तद्वते तत्सञ्ज्ञायSy.

१३. प्रयच्छन्नां P. प्रभूताम् Sy.

१४. बह्वर्थविषयां प्रज्ञाम् Sk.
प्रजननसमर्थस्येत्यर्थः Sk.

शस्त्रेणेव[1]। अरदतम्[2]। "कक्षीवन्तं स्तोतारम्"[3] इति कुत्सः। कूपसदृशात्[4]। वर्षितुः। अश्वस्य। शफात्। सुरायाः। शतम्। कुम्भान्। क्रमेण पूरितवन्तौ[5] कस्मैचन[6] याचमानाय।

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा* अधत्तम्।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः† सर्वगणं स्वस्ति ॥८॥

हिमेनाग्निम्[7]। हिमवर्षेण[8]। अग्निम्[9]। क्षरद्दीप्तिम्[10]। अवारयेथाम्[11]। अन्नवन्तम्[12]। रसं[13] च

---

१. शा० M.

२. अरु० M.
व्यलिखतम्। यथा सर्वार्थगोचरा भवति तथा कृतवन्तावित्यर्थः Sy.
रद विलेखनेऽन्यत्र। इह तु सम्प्रदानचतुर्थीश्रुतेर्दानार्थः। दत्तवन्तौ स्थः। ...अथवा रदतिर्विलेखनार्थ एव। चतुर्थी षष्ठचर्थे। कक्षीवतो बह्वर्थविषयां प्रज्ञां विलिखितवन्तौ जडां सतीं तीक्ष्णीकृतवन्तौ। अतीतानागतवर्तमानसमर्थां सर्वार्थग्रहणसमर्थां च कक्षीवतः प्रज्ञां कृतवन्तौ स्थ इत्यर्थः Sk.

३. RV. I. 112. 11[c].

४. कारोतरो नाम वैदलश्चर्मवेष्टितो भाजनविशेषो यस्मिन् सुरायाः स्रावणं क्रियते। लुप्तोपममेतत्। कारोतराद् यथा सुरायाः सम्पादकास्तां स्रावयन्ति, एवमेव युवां वृष्णः सेचनसमर्थस्य युष्मदीयस्याश्वस्य ... खुरात् सुरायाः शतं कुम्भानसङ्ख्यातान् सुराघटानसिञ्चतमक्षारयतम्। यद्वा ... असिञ्चतमपूरयतम्। ये जनाः सौत्रामण्यादिकर्मणि युष्मद्यागाय सुरां याचन्ते तेषामित्यर्थः Sy.
वर्तुलत्वादिना सादृश्येन कूपसदृशाच्छफात् Sk.

५. ०ण्पापू० M.

६. तस्मै M.
मत्तबालकेभ्यो दत्तवन्तावित्यर्थः Sk.

* अस्मै। PP.

† अश्विना। अवऽनीतम्। PP.

७. ऋबीसमपगतभासम्। अपहृतभासम्। अन्तर्हितभासम्। गतभासं वा ... हिमेनोदकेन ग्रीष्मान्तेऽग्निघ्रंसमहरवारयेथाम्। अन्नवतीं चास्मा ऊर्जमधत्तमग्नये। योऽयमृबीसे पृथिव्यामग्निरन्तरौषधिवनस्पतिष्वप्सु तमुन्निन्यथुः। सर्वगणं सर्वनामानम्। गणो गणनात्। गुणश्च। यद्वृष्ट ओषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनो रूपं तेनैनौ स्तौति स्तौति N. 6. 35, 36.

८. हिमवच्छीतेनोदकेन Sy.
वृष्टिलक्षणेनोदकेन Sk.

९. अत्रेर्बाधनार्थमसुरैः प्रक्षिप्तं तुषाग्निम् Sy. यत्रासुरैरत्रिः प्रक्षिप्तस्तमग्निम् Sk.

१०. रक्षदीप्ति P. क्षरदी० M.

११. शीतीकृतवन्तावित्यर्थः Sy.
निशमितवन्तौ स्थः Sk.

१२. बलप्रदं रसात्मकं क्षीरादिकम् Sy.
ऊर्क्शब्दोऽत्र, ऊर्ज बलप्राणनयोरित्यस्य बलवचनः। अन्नसहितमसुरप्रतिबन्धसमर्थं बलम् Sk.

१३. रयं च D. सञ्चर P.

तत्र । अस्मा अत्रये । अघत्तम्[1] । अपगतभास्के गतभास्के वाग्नावसुरैः[2] । प्रक्षिप्तम्[3] । अत्रिम्[4] । अश्विनौ![5] उन्निन्यथुः[6] । अविकलसर्वेन्द्रियगणम्[7] । अविनाशेन । यद्वात्रिः पुत्रपौत्रैः सह[8] प्रक्षिप्तः ।

*परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारम् ।
चरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥९॥

परावतम्[9] । पराणुदेथाम्[10] । कूपम् । अश्विनौ[11] । तमुच्चैःस्थितमूलम् । नीचीनद्वारम्[12] । चक्रथुः[13] । तस्मात् कूपादुदकानि[14] । इव[15] । पिपासोर्गोतमस्य पानार्थं धनानि च । अक्षरन्[16] । सहस्राय[17] ।

---

१. पुष्टयर्थं प्रायच्छतम् Sy.

२. पीडायन्त्रगृहे Sy.
ऋबीसेऽग्निकूटे Sk.

३. Omitted by M.

४. अवाङ्मुखतयाऽसुरैः प्रापितम् Sy.

५. अतिम् M.

६. तस्माद् गृहादुद्गमय्य युवां स्वगृहं प्रापितवन्तौ Sy.

७. सर्वेषामिन्द्रियाणां पुत्रादीनां वा गणेनोपेतम् । . . . यद्वा हिमेन शीतेन वृष्टयुदकेनाग्निमग्निवत्तीक्ष्णम् । घ्रंसम् । अहर्नामैतत् । सामर्थ्यान्निदाघकालीनमहरवारयेथाम् । तस्याह्नस्तैक्ष्ण्यं निवारितवन्तौ । अपि चास्मा अग्नये पितुमतीं चरुपुरोडाशादिलक्षणान्नोपेतमूर्जं बल करं रसात्मकमुपस्तरणाभिघारणात्मकं घृतमघत्तम् । वृष्टयुत्पादनेनाग्नेर्यागार्थं हवींषि निष्पादितवन्तावित्यर्थः । ऋबीसेऽपगततेजस्के पृथिवीद्रव्येऽवनीतमोषधीनामुत्पादनायावस्तान्नीतम् । पार्थिवाग्निना परिपक्वा उदकेन क्लिन्ना ह्योषधिवनस्पतयो विरोहन्ति । अत्रिं हविषामत्तारमोषधिवनस्पत्यादीनां वैवंविधमग्निं सर्वगणं व्रीह्याद्योषधिगणोपेतं हे अश्विनौ युवां स्वस्ति, अविनाशाय यथा भवति तथोन्निन्यथुः । व्रीह्याद्योषधिवनस्पतिरूपेण भूमेरुपरिष्टान्नीतवन्तौ । कारणात्मना पार्थिवाग्नौ वर्तमानं सर्वमोषधिवनस्पत्यादिकमश्विनौ प्रवर्षणेन व्यक्तीकृतवन्तावित्यर्थः Sy.

८. स वा P.

* परा । अवतम् । नासत्या । अनुदेथाम् । उच्चाऽबुध्नम् । PP.

९. पराग्पतम् M.

१०. थः M. गोतमस्य ऋषेः समीपे प्रेरिषाथाम् Sy.
पराङ्मुखं गोतमं प्रति प्रेरितवन्तौ स्थः Sk.

११. सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वैतत्सञ्ज्ञौ Sy.

१२. जिह्ममधस्ताद् वर्तमानतया वक्रं . . . द्वारं यस्य स तयोक्तः Sy. उपरिबुध्नमधोमुखं च कृतवन्तौ स्थः Sk.

१३. M. adds च before चक्रथुः

१४. अधोमुखाच्च तस्मात् क्षरन् सृतवत्य आपः Sk.

१५. अयं नशब्दश्चार्थे । . . . आपो न आपश्च Sy.

१६. चाक्षरन् P. D. M.
प्रवाहरूपेण निरगमन् Sy.

१७. सहनशीलाय । यद्वा सहस्रसङ्ख्याकाय, राये धनायैतत्सङ्ख्यधनलाभार्थम् Sy.

धनाय[1]। तृष्यते[2]। गोतमाय। "ऊर्ध्वं नुनुद्रे[3]ऽवतं त ओजसा"[4] इति गोतमः।

**जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात्।**
**प्रातिरतं जहितस्यायुर्दस्रा*दित्पतिमकृणुतं कनीनाम् ॥१०॥**

जुजुरुषः। जीर्णात्[5]। च्यवानात्[6]। नासत्यौ। अपिच। जराम् "प्र वव्रे[7]र्वव्रि[8]श्चिकेत[9]" इति मन्त्रः। ताञ्जरां निद्रामिवानायासेन प्रामुञ्चतम्[10] "द्रापे अन्ध[11]सस्पते" इत्यत्र वाजसनेयके निष्वापयतीति[12] द्रापिरिति[13] प्रतिपादितम्। कवचमिवेत्यन्ये वदन्ति। तथा[14] पुत्रैः सरस्वत्यास्तीरे त्यक्तस्य[15]। आयुश्च। अवर्धयतम्। अनन्तरं चैनम्। युवतीनाम्। पतिम्। अकृणुतं युवानमिति।

अत्र[16] शाट्यायनकम्—च्यवनो वै भार्गवो वास्तुहस्य ब्राह्मणमवेत्। स पुत्रानब्रवीद् वास्तुहस्य वै ब्राह्मणं वेद। तं मा वास्तौ निध्याय त्रिः पुनः प्रयाणं प्रयातेति। तेऽब्रुवन्—न सक्ष्यामः। आक्रोशनवन्तो भविष्यामः। पितरमहासिषुरिति। नेति होवाच। तेन वै यूयं वसीयांसो भविष्यथ। तेनो एव मम पुनर्युवताया आशा। हित्वैव मा प्रयातेति तानज्ञापयत् तं सरस्वत्यै शैशवे निधाय त्रिःपुनः प्रयाणं प्रायन्। सोऽकामयत-वास्तुहीनः पुनर्युवा स्यां कुमारीं जायां विन्देय सहस्रेण यजेयेति। स एतत् सामापश्यत्। तेनास्तुत। तं तुष्टुवांसं शर्यातो मानवो ग्रामेणाध्यवास्यत्। तं कुमारा गोपाला अविपाला मृदा शकृत्पिण्डैरासवाणुभिरदिहन्। सोऽसञ्ज्ञां शार्या-

---

१. हवींषि दत्तवतः Sy.
घनानीव सहस्रसङ्ख्यानि। यथा कूपकलशादधोमुखात् सहस्रसङ्ख्याका रूपकाः क्षरन्ति तद्वदित्यर्थः Sk.

२. तृप्यते M.
तृष्यत इति षष्ठ्यर्थे चतुर्थी। तृषा बाध्यमानस्य गोतमस्य पानायेति Sk.

३. ०व्रेपतन्त P. D.

४. RV. I. 85. 10ª.

* दस्रा। आत्। इत्। PP.

५. जीर्ण P. जीर्णा D.
अत्रेदमाख्यानम्। वलीपलितादिभिरुपेतो जीर्णाङ्गः पुत्रादिभिः परित्यक्तश्चवनाख्य ऋषिरश्विनौ तुष्टाव। स्तुतावश्विनौ तस्मा ऋषये जरामपगमय्य पुनर्यौवनमकुरुतामिति। तदेतदाह। हे नासत्या अश्विनौ Sy.

६. च्यवान्नात् P. च्यावनात् M.

७. प्रवव्रव० P.
०व्रेर्वपृश्चि० M.

८. वव्रिं कृत्स्नं शरीरमावृत्यावस्थिताम् Sy.

९. RV. V. 19. 1ᵇ.

१०. प्रकर्षेणामोचयतम् Sy.
अपनीतवन्तौ स्थ इत्यर्थः Sk.

११. VS. 16. 47.

१२. निष्पा० M. ०यन्ती० P.

१३. द्रावि० M.
द्रापिरिति कवचस्याख्या। यथा कश्चित् कवचं कृत्स्नशरीरव्यापकं धृत्वा पश्चाच्छरीरात् पृथक्करोति तद्वत् Sy.
कवचमिव योद्धुः शरीरात् Sk.

१४. इत्यन्ये वदन्ति missing M.

१५. क्षीणप्रायायुषः Sk.

१६. पुत्र M.

तेभ्योऽकरोत्। तन्न माता पुत्रमजानान्न पुत्रो मातरमित्युक्त्वा तत्परिहारार्थं शर्यातकन्यायां सुकन्यायां याचितायां नेति होवाचान्यद् धनं वृणीष्वेति। ऋषिश्च नेति होवाच। कन्यां तस्मै ददौ। सा ह तदेव निर्विद्योपविवेशेत्युक्त्वाहाश्विनौ दर्विहोमिणौ भिषज्यन्ताविदं चेरतुरनपिसोमौ। तौ हैनामेत्योचतुः—कुमारि, स्थविरो वा अयमसर्वो, नालं पतित्वनाय। आवयो जर्यैधीति। नेति होवाच यस्मा एव मा पिताऽदात् तस्य जाया भविष्यामीत्युक्तम्। अथ तयोर्गतयोः सुकन्यामृषिः—कुमारि, को न्वेष घोषोऽभूदिति पप्रच्छ। सा तु तस्मै यथावृत्तमुवाच। तौ त्वेतदेवागत्य श्वो वक्तारौ। तौ त्वं ब्रूताद् युवां वाऽसर्वौ स्थो यौ देवौ सन्तावसोमपौ स्थः। सर्वो वै मम पतिर्यः सोमप इति। तौ वै वक्तारौ कस्तस्येशे यदावामपि सोमौ स्यावेति। अयमेव पतिरिति ब्रूताद्। तेनो एव मे पुनर्युवताया आशेति। तथा तया कथितावूचतुः—ऋषेऽपि सोमौ नौ भगवः कुर्वीत। तथेति होवाच। तं हैनं मा युवं पुनर्युवानं कुरुतमिति। तं ह सरस्वत्यै शैशवमभ्याचकर्षतुः। स होवाच—कुमारि सर्वे वै सदृशा उदेष्यामोऽनेन मा लक्ष्मकेण जानीतादिति। ते ह सर्व एव सदृशा उदेयुर्यत् कल्याणतमं रूपाणां तेन रूपेण। तं हेयं ज्ञात्वा वाहावभिपेदे—अयं मम पतिरिति।[1]

**तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम्।**
**यद्विद्वांसा निधिमिवापगूळ्हमुद्दर्शतादूपथुर्वन्दनाय ॥११॥**

*

तद्वां नरा।[2] तत्। युवयोः।[3] नरौ![4] स्तोतव्यम्।[5] राधनीयं लालनीयम्। च। अन्वेषणवच्चाभ्येष्टव्यम्।[6] वरणीयं च।[7] यद् युवां पतिं जानन्तौ। तिरोहितम्।[8] निधिमिव[9] कूपे पतितम्। वन्दनम्।[10] प्रयत्नेन दर्शनीयादगाधात् कूपात्।[11] उद्रूपथुः।[12] छन्दोऽनुविधानाय विभक्तिव्यत्यय ऋगन्तेषु भवति।[13]

१. B. Ghosh, *op. cit.* pp. 25-29.

* च। अभिष्टिऽमत्। नासत्या। PP.

२. वत्लनं P. अत्रेदमाख्यानम्। वन्दनो नाम कश्चिदृषिः। स चासुरैः कूपे निपातित उत्तरीतुमशक्नुवन्नश्विनावस्तौत्। तमश्विनौ कूपादुन्निन्यतुरिति Sy. ३. कर्म...एवं यदेतत् कूपादुद्धरणं तदित्यर्थः Sy. कर्म Sk.

४. आरोग्यस्य नेतारौ! Sy. मनुष्याकारौ! Sk.

५. आराधनीयम् Sk.

६. अभ्येषणयुक्तमाभिमुख्येन प्राप्तव्यम् ...अभिपूर्वात् 'इष गतौ' इत्यस्मात् Sy. अभिष्टिरिच्छा प्रार्थना, तद्वच्च। प्रार्थनीयं वेत्यर्थः Sk.

७. कामयितव्यम् Sy. सम्भजनीयं च Sk.

८. अरण्ये निर्जने देशे कूपमध्येऽसुरैर्निगूढम् Sy. ९. निक्षिप्तं धनमिव Sy. यथा कौचिद्विद्वांसौ पुरुषौ निधिम्... आच्छादितमुत्खनेताम् Sk.

१०. वन्दनमृषिम् Sy., Sk.

११. अध्वगैः पिपासुभिर्द्रष्टव्यात् Sy.

१२. ऊचतुः M. उदहार्ष्टम् Sy. उत्खातवन्तौ स्थः। उत्तारितवन्ताविलयर्थः Sk.

१३. V. Mādhava ignores नासत्या

**तद्वां नरा सनये दंसं उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।**
**दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच ॥१२॥**

**तद्वां नरा सनये।** "अथ[1] च्यवन[2] उवाच—कुरुक्षेत्रेऽपशीर्ष्णा[3] यज्ञेन[4] यजमाना न काममाप्नुवन्ति । दध्यङ् ह वाऽऽथर्वणो[5] यज्ञस्य यथा[6] शिरः प्रतिनिधीयते यथैष[7] कृत्स्नो[8] भवति तथा वेद । ततो ज्ञात्वा देवेभ्यो यजमानेभ्यो यज्ञस्य शिरः सन्धत्तमिति । अथ तमेत्योचतुः—उप त्वा यावेति[9] । कस्मै[10] कामायेति । यथैतद्यज्ञस्य[11] शिरः प्रतिनिधीयत इति । स होवाचेन्द्रेण वोक्तोऽस्मि यदि वेदमन्यस्मै ब्रूयाः शिरस्ते छिन्द्यामिति ।

तस्माद्बिभेमीति । तौ[12] होचतुरावां[13] त्वा तस्माज्ज्ञास्यावह[14] इति । यदा नावुपनेष्यसेऽथ ते[15] शिरश्छित्त्वान्यत्रोपधास्यावोऽथाश्वस्य[16] शिर आहृत्य[17] तत् ते प्रतिनिधास्यावस्तेन नावनुवक्ष्यसीति । एवमुक्त्वाऽश्वस्य शिरः प्रतिनिधीयत इति । स होवाचेन्द्रेण वोक्तोऽस्मि[18] सन्धाय तेन ह स्म[19] संवदमानावासाते साम[20] गायमानावृचं[21] यजुरभिव्याहरन्तौ[22] ताभ्यां[23] ह श्रद्धाय[24] तेनाश्वस्य[25] शीर्ष्णाऽनूवाच[26] । तदिन्द्रोऽन्ववबुध्यत प्रहाभ्यामवोचदिति[27] [28] तस्याद्धृत्य शिरः प्राच्छिनत्[29] । इदमश्वशीर्षमथ यदस्य स्वं शिर आसीत् तदिमौ मनीषिणौ[30] प्रतिसमधत्तामिति[31] वाजसनेयकशा-

---

१. **अथा** P. D. M.
२. **च्यवान** P. D.
३. **ऽवशीक्ष्णा** M. **वशी कृष्णा** P. D.
४. **यज्ञे** P.
५. **याजनामाननं** M. **याजमानाननं** P. D.
६. **अ०** P. D.
७. Omitted by Ghosh.
८. **तथैव** P.
९. **०यामेति** P.
१०. **तस्मै** P. D. M.
११. The passage beginning with **प्रतिनिधीयते** and ending with **शिरः** is omitted by M.
१२. **ता** M. १३. **०त्वं** M.
१४. **ज्ञास्या मह** M.
१५. **तेम** P. M. Ghosh adds **स्वं** after **ते**
१६. **०स्वान्यतोऽवधा०** M.
१७. **०धश्वस्य** P. **०धश्वम** M.
१८. The words **सहोवाच...ऽस्मि** is omitted by Ghosh.
१९. **हस्म** omitted by Ghosh.
२०. The passage beginning with **शिरः** and ending with **साम** is omitted by M.
२१. **०नाच** P.
२२. **यजुर्भिः व्या०** P.
२३. **भ्यां** P. D. M.
२४. **दुद्धाया** P. २५. **तेनश्वस्य** P.
२६. **०नूपाप** M.
२७. **प्राहा०** P. २८. **०भ्यावचो** D.
२९. **प्रच्छ०** P. **प्रच्छि०** D.
३०. P. adds **प्रतिनिधास्यावस्तेन नावनुवक्ष्यसीत्येवमुक्त्वाश्वस्य** after **मनीषिणौ**
३१. **०समा०** M.

टयायनकयोरुक्तम्[1]इति[2]।

तत्। युवयोः[3]। उद्गूर्णम्[4]। कर्माहम्[5]। लाभाय[6]। आविष्कृणोमि[7]। स्तनयित्नुः[8]। इव। वृष्टिम्[9]। ईमिति[10] पूरणः[11]।

**अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंधिः।**
**श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तम्*॥१३॥**

अजोहवीत्[12]। आजुहाव[13]। वाम्। नासत्यौ! कर्मणामाश्चर्याणां[14] कर्तारौ[15]! महति[16]। यज्ञे[17]।

---

१. B. Ghosh, *op. cit.* pp. 33-35.

२. इति omitted by P. and D.

३. यु...र् P. D.

४. उत...गूर्णं M. ०र्णा P.
अन्यैर्दुःशकम् Sy.
अप्रसह्यम् Sk.

५. कार्माह P. दंसः। कर्मनामैतत् Sy.

६. लंभाय P. धनलाभार्थम्...षणुदाने Sy. अभिप्रेतलाभाय Sk.

७. प्रकाशीकरोमि Sk.

८. यथा मेघस्थः शब्दो वृष्टि मेघान्तर्वर्तमानमुदकं प्रवर्षणेन सर्वत्र प्रकटयति तद्वत् ...तन्यतुः। तनु विस्तारे...यद्वा स्तन शब्दे Sy.

९. वृष्यते सिच्यतेऽनेनेति वृष्टिः Sy.

१०. ईति D. ईम् is omitted by M.
ईम्, इमां मधुविद्यां...यदा खलु... प्रोक्तवान्। तदानीमाश्वस्य शिरसः सन्धानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसन्धानलक्षणं च यद् भवदीयं कर्म तदाविष्कृणोमीत्यर्थः Sy.

११. V. Mādhava ignores दध्यङ्। ह etc. except ईम्
अत्रेयमाख्यायिका। इन्द्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदीमामन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच। ततोऽश्विनावश्वस्य शिरश्छित्वा दधीचः शिरः प्रच्छिद्यान्यत्र निधाय तत्राश्व्यं शिरः प्रत्यधत्ताम्। तेन च दध्यङ्ङृचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास। तदिन्द्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत्। अथाश्विनौ तस्य स्वकीयं मानुषं शिरः प्रत्यधत्तामिति शाट्यायनवाजसनेययोः प्रपञ्चेनोक्तम् Sy.

* अश्विनौ। अदत्तम्। PP.

१२. अजोवहीत् M.
वध्रिमती नाम कस्यचिद्राजर्षेः पुत्री नपुंसकभर्तृका। सा पुत्रलाभार्थमश्विनावाजुहाव। तदाह्वानं श्रुत्वाश्विनावागत्य तस्यै हिरण्यहस्ताख्यं पुत्रं ददतुः Sy.

१३. पुनः पुनः स्तुत्या पुत्रलाभार्थमाहूतवती Sy.

१४. ०मश्वर्या० M.

१५. अभिमतफलस्य कर्तारौ Sy.
करा। पूर्वपदलोपोऽत्र द्रष्टव्यः। छिन्नकरा शत्रुभिश्छिन्नहस्ता। अथवा स्तुतीनां कर्त्री करा Sk.

१६. महनीये पूजनीये Sy.

१७. याति गच्छतीति याम स्तोत्रम्। तस्मिन् सति Sy.
यान्ति योद्धारो यस्मिन् स यामः? (मा) सङ्ग्राम इहाभिप्रेतस्तत्र Sk.

बहूनां[1] हविषां भोक्तारौ । स्त्री[2] । वध्रीमती[3] । तच्चाह्वानम् । भवद्भ्यां श्रुतमादरेण । यथा शासि[4]-तुराचार्यस्य शासनम् । अथास्यै । हिरण्यहस्तं[5] नाम पुत्रम् । अदत्तम्[6] ।

**आस्नो वृकस्य वर्तिकामभीके युवं नरा नासत्यामुमुक्तम् ।**
***उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे ॥१४॥**

**आस्नो वृकस्य[7] ।** वृकेण[7] सह वर्त्तिकायाः[8] । सङ्ग्रामे तां वृको जग्राहाथ वृकस्य । आस्यात्[9] । ताम्[10] । मोचितवन्ताविति[11] । अपिच । कविमुशनसः[12] पितरमन्यं वैल्वनामानम्[13] । स्तुवन्तम् । दर्शनाय[14] । अकृणुतमिति[15] ।

**चरित्रं हि †वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम् ।**
**सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ॥१५॥**

**चरित्रं हि ।** खेलनाम्नो[16] राज्ञः । युद्धे । गच्छन्त्यां[17] विश्पलायां[18] तस्याः । चरित्रं[19] जघनप्रदेशे ।

---

१. **बहूनां पालकौ प्रभूतहस्तौ वा** Sy. **अभ्यवहर्तारौ पालयितारौ वाऽऽर्तानाम्** Sk. २. **बहुधीः** Sy. **बहुप्रज्ञा** Sk. ३. **०मिति** P. **वध्रीमति** M. **पुत्रोत्पादनाशक्तः पण्डकः । तद्वत्येतत्सञ्ज्ञा राजपुत्री** Sy.

४. **श०** P. **यथा शासतुराचार्यस्य वचनं शिष्योऽवहितः सन्नैकाग्र्येण शृणोति तद्वत्** Sy. **पितुराचार्यस्य वा** Sk.

५. **सुवर्णमयपाणिं हितरमणीयपाणिं वैतत्सञ्ज्ञं पुत्रम्** Sy. **हिरण्मयौ हस्तौ यस्मिन् स हिरण्यहस्तो बाहुस्तम्** Sk.

६. V. Mādhava ignores **अश्विनौ**

* **उतो इति ।** PP.

७. **वृकस्य विकर्तकस्य शुनः** Sy.

८. **वर्तिका चटकसदृशस्य पक्षिणः स्त्री** Sy.

९. **वृकेण ग्रस्यमानां सतीमित्यर्थः** Sk.

१०. **तं** P.

११. **तामरण्ये वर्तमानेन शुना ग्रस्तां पुरा किलाश्विनावमोचयताम्...यास्कस्त्वाह —पुनः पुनर्वर्तते प्रतिदिवसमावर्तत इति वर्तिका, उषाः । तां वृकेणावरकेण सर्वजगत्प्रकाशेनाच्छादयित्रा सूर्येण ग्रस्तां तदीयमुखादश्विनावमुञ्चतामिति** Sy.

१२. **एतत्सञ्ज्ञमन्धमृषिम्** Sy. **मेधाविनं कण्वम्** Sk.

१३. **वैवं ना०** P. D. **दैवना०** M.

१४. **अन्धं सन्तं चक्षुःप्रदानेन दर्शनसमर्थं कृतवन्तावित्यर्थः** Sk.

१५. V. Mādhava ignores **युवम् । नरा । नासत्या । पुरुभुजा युवम् । ह ।**

† **वेःऽइव । अच्छेदि ।** PP.

१६. **लेख०** P. D.

१७. **परितक्म्यायाम् । परितक्म्या रात्रिः । 'परित एनां तकति'** (N. 11. 25) **इति यास्कः । एनामुभयतः सूर्यो गच्छतीति तस्यार्थः । रात्रावागत्य ... तदानीमेव हिते शत्रुषु निहिते धने जेतव्ये विषयभूते सति** Sy. **परितक्म्यायां सेनायां वर्तमानायाम्** Sk. १८. **विश्व०** M.

१९. **०प्रदेशः** is suggested for **०प्रदेशे । चरणम्** Sy. **चरति गच्छति येन तच्चरित्रं जङ्घेहाभिप्रेता । ... गमनसाधनं जङ्घालक्षणम्** Sk.

पक्षिणः। पर्णमिव[1] व्याधैः[2] शत्रुभिः। अच्छेदि। अथ तस्याः[3]। हितम्[4]। धनम्। प्रतिसरणाय[5]। आयसीम्। जङ्घां तस्यै। विश्पलायै[6]। तदानीमेव। प्रत्यधत्त[7]मिति[8]।

**श॒तं मे॒षान्वृ॒क्ये॑ चक्ष॒दा॒नमृ॒ज्राश्वं॒ तं पि॒तान्धं॑ च॑कार।**
**तस्मा॑ अ॒क्षी* ना॑सत्या वि॒चक्ष॒ आध॑त्तं† द॒स्रा भि॒षजा॑वन॒र्वन् ॥१६॥**

शतं मेषान्। पौराणां मेषान् गृहीत्वा[9] लीलार्थम्[10]। वृक्ये[11]। विशसन्तम्[12]। ऋज्राश्वम्[13]। तम्। पिता पौरहितार्थम्[14]। अन्धम्। चकार। तस्मै। दर्शनाय[15]। अनर्वणी[16] अप्रत्यृते[17] शीघ्रगमने सूक्ष्मदर्शने। अक्षिणी[18]। आधत्त[19]मिति[20]।

**आ वां॒ रथं॑ दुहि॒ता सूर्य॑स्य॒ कार्ष्मे॑वातिष्ठ॒दर्व॑ता‡ जय॑न्ती।**
**विश्वे॑ दे॒वा अन्व॑मन्यन्त हृ॒द्भिः समु॒§ श्रि॒या ना॑सत्या सचेथे¶ ॥१७॥**

आ वां रथम्। कार्ष्मशब्दः[21] काष्ठावचनो यथाऽऽजि धावञ्छीघ्रं[22] काष्ठामातिष्ठत्येवं

---

१. पतत्रमिव Sy. पिच्छम् Sk.
२. ०धैः P. D. ३. अतथस्याः P.
४. धनाय हिताय Sk. ५. गन्तुम्। हितं धनं प्राप्तुं योऽनया प्रक्रान्तः सङ्ग्रामस्तस्य गमनस्य व्याघातार्थमित्यर्थः Sk.
६. विश्व० M. ७. ०त्ता M. सन्धानमेकीकरणं कृतवन्तावित्यर्थः Sy. प्रतिनिहितवन्तौ स्थः। कृतवन्तावित्यर्थः Sk.
८. V. Mādhava ignores हि
* तस्मै। अक्षी इति। PP.
† आ। अधत्तम्। PP.
९. यं युवयोः स्वभूता कशा वृकी भूत्वोपतस्थे तम्। शतं मेषान्। एकं चेति वाक्यशेषः। कुत एतत्? "ऋज्राश्वः शतमेकं च मेषान्" (ऋ० १.११७.१८) इति मन्त्रान्तरे दर्शनात् Sk.
१०. लीना० P. ११. वृक्या आहारार्थम् Sk. वृद्धवाशिन्यपि वृक्युच्यते N. 5.21.
१२. शकलीकृत्य दत्तवन्तम् Sy.
१३. ऋज्वाश्वं D. ०श्च M.
राजपुत्रम् Sk. १४. शापेन Sk.
१५. विविधं द्रष्टुं समर्थे Sy.
१६. द्रष्टव्यं प्रति पितृशापाद् गमनरहिते Sy. अन्यं प्रत्याश्रिततया यो न गतः सोऽनर्वा। व्यत्ययेन चात्रैकवचनम्। अनर्वणि? (णी) अनन्याश्रिते स्वायत्ते। पित्रा शापेनापनेतुमशक्ये इत्यर्थः Sk.
१७. अप्रा० M. १८. अक्षी M.
१९. अ० P. D.
२०. V. Mādhava ignores शतम्। नासत्या। दस्रा। भिषजौ
‡ कार्ष्मऽइव। अतिष्ठत्। अर्वता। PP.
§ सम्। ऊं इति। PP.
¶ सचेथे इति। PP.
२१. काष्ठ० M. क्रियते तदिति कार्ष्मं शुभाशुभलक्षणं कर्म। तद्यथा कर्तारमातिष्ठत्येवमातिष्ठदास्थितवती। आरूढेत्यर्थः Sk. २२. जीवन् P. D. यथा काष्ठमाजिधावनस्यावधितया निर्दिष्टं लक्ष्यमाशुगामी कश्चित् सर्वेभ्यो धावद्भ्यः पूर्वं प्राप्नोति Sy.

भवद्भ्यां शीघ्रैरश्वैः[1] स्वयंवरे । जीयमाना[2] । आजिं धावद्भिः । सूर्यस्य । दुहिता । युवयोः । रथम् । आतिष्ठत् । तच्च भवतोर्बलं[3] दृष्ट्वा स्वयंवरार्थमागताः । विश्वे । देवाः[4] । हृदयैरेव । अन्वमन्यन्त[5] तदानीम्[6] । जयश्रिया[7] सह । संयुक्तौ[8] भवथ इति[9] ।

**यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता ।**
**रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥१८॥**

यदयातम्[10] । यदा[11] युवाम्[12] । दिवोदासं रक्षितुम्[13] । मार्गगमनाय[14] । अयातम् । भरद्वाजकुलजाय[15] । आहूयमानौ[16] तदानीं युवयोः । सचनः[17] सेव्यः[18] । रथः । धनयुक्तम्[19] । वाम् । उवाह[11] । तदानीं तस्मिन् रथे वाहार्थम् । ऋषभः[20] । च । शिंशुमारः[21] । च । युक्ताविति[21][22] ।

**रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहन्ता ।**
**आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातम् ॥१९॥**

रयिं सुक्षत्रम् । रयिम् । शोभनबलम्[23] । शोभनापत्यम् । अन्नम्[24] । सुवीर्यं[25] च । नासत्यौ !

---

१. अर्वेत्यश्वनाम सामर्थ्याच्चेहान्तर्णीतमत्वर्थम् । अश्ववता रथेन Sk.

२. एवमेव सर्वेभ्यो देवेभ्यः पूर्वमर्वता शीघ्रमवधिं प्राप्नुवता युष्मदीयेनाश्वेन करणभूतेन युवाभ्यां जयन्ती जीयमाना सूर्यस्य ... दुहिता ... आरूढवती Sy. जिता सती Sk.

३. ०तो ब० P. D. M.

४. एतदारोहणस्थानम् Sy.

५. अन्वजानन् Sy. अनुमोदितवन्तः Sk.

६. दानीं P.

७. ऋक्सहस्रलाभरूपया सम्पदा कान्त्या वा Sy.   ८. ०क्तो M.

९. V. Mādhava ignores उ

१०. यदा० D.   ११. यया Sk. यद्दिवोदासीयेभ्यो योद्धृभ्यो भरद्वाजाय च दास्यते धनं तेन सह युवामूढवानित्यर्थः Sk.   १२. युवं P. D.

१३. दिवोदासायैतत्सञ्ज्ञाय राजर्षयेऽभीष्टं फलं दातुं वर्तिस्तदीयं गृहं यत् ... अगच्छतम् Sy. शम्बरवधे दिवोदासस्य साहाय्यं कर्तुमित्यर्थः Sk.

१४. ०तुर्मा० D.   मार्गेण Sk.

१५. ०जा M. सम्भ्रियमाणहविर्लक्षणान्नाय यजमानाय Sy. भरद्वाजाय धनकामाय स्तुवते धनं दातुमित्यर्थः Sk.

१६. आभूय० P.   तद्धयन्ता । गतिकर्माण्यम् । गच्छन्तौ युवाम् Sk.

१७. सचतः M.   १८. सव्यः D.

१९. अन्नं...तस्मै दिवोदासाय प्रापयामास Sy.

२०. बलीवर्दः Sk.   २१. शिंशुमारो नामोदकचरो ग्राहविशेषः । तौ तस्मिन् रथे युवाभ्यां नियुक्तावास्ताम् Sk.

२२. V. Mādhava ignores अश्विना

२३. शोभनेनासुरादिदुष्टजननिरासपटुना बलेन सहितमित्यर्थः Sk.

२४. अथवा जीवितं च Sk.

२५. शोभनवीर्योपेतम् Sy.

प्रयच्छन्तौ[1]। जह्नोरपत्यभूतां प्रजाम्[2]। बलाकाश्वकुशिकविश्वामित्रप्रभृतिम्[3]। एकचित्तौ । अन्नैः[4] सह । उपागच्छतम्[5]। अह्नः[6]। त्रियुवाभ्याम्[7]। हविः । प्रयच्छन्तीमिति[8]।

**परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू[*] रजोभिः ।**
**विभिन्दुना नासत्या रथेन वि पर्वताँ अजरयू[†] अयातम् ॥२०॥**

**परिविष्टम्**। विश्वतः । परिगृह्यावष्टभ्यासुरैः[9] पर्वतैः[10] परिवृतम्[11]। जाहुषं[12] नाम देवानां यजमानम् । सुगमैः[13]। मार्गैः[14]। नक्तम् । ऊहथुः[15]। तदानीं पर्वतानां विभेत्रा[16]। रथेन । पर्वतानां मध्ये[17]। जरारहितावजीर्णौ सन्तौ[18]। गतवन्ताविति[19][20]।

**एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा ।**
**निरहतं दुच्छुना[‡] इन्द्रवन्ता पृथुश्रवसो वृषणावरातीः ॥२१॥**

**एकस्या वस्तोः**। एकस्य[21]। अह्नः कृतो यो रणस्तस्य[22] यथा । वशो राजा[23]। सहस्रं धनम्[24]।

---

१. धारयन्तौ Sy. २. जह्नोर्भार्या जाह्नवी। अथवा जह्नोरपत्यं जाह्नवी। तस्य प्रजा जाह्नवी सती जह्नावीत्युच्यते Sk.
३. ०काश्वकु० P. M.
४. ०त्तापन्नैः M. हविराख्यैर्निमित्तभूतैः Sk.
५. उपग० D. ०गच्छत्तम् P.
६. अत्राहःशब्देन तत्रानुष्ठेयः सोमयागो लक्ष्यते । तस्य Sy.
७. त्रिधा विभक्तम्. . .अंशं . . . बिभ्रतीम्। अनुसवनं हविर्भिर्यजमानामित्यर्थः Sy. एकस्यैवाह्नः प्रातःसवने माध्यन्दिने सवने तृतीयसवने च Sk. ८. ०न्ता० M.
* ऊहथुः। PP. † अजरयू इति। PP.
९. ०ष्टत्या० D. M. १०. शत्रुभिः Sy.
११. परिशब्दोऽत्र विश्वत इत्येतेन पौनरुक्त्यप्रसङ्गाद् धात्वर्थानुवादी । विषिर्व्याप्त्यर्थः । व्याप्तं जरया Sk.
१२. जाहुषं नामर्षिं विश्वतः सर्वतः स्वत पुत्रतो दारतश्च । सपुत्रदारं वृद्धमित्यर्थः Sk.
१३. सुगमनैरश्वैः Sk. १४. रजश्शब्दोऽत्र तेजोवचनः, अन्तर्णीतमत्वर्थश्च। तेजस्विभिः। शीघ्रगामिभिरित्यर्थः Sk.
१५. तस्माच्छत्रुसमूहान्निरगमयतम् Sy.
१६. विशेषेण सर्वस्य भेदकेनात्मीयेन रथेन Sy.
१७. निर्गतेन तेन सह पर्वताञ्छत्रुभिरारोढुमशक्याञ् शिलोच्चयान् . . . विशेषेणागच्छतम् Sy. तुङ्गानपि पर्वतान् Sk.
१८. नित्यतरुणौ Sy. १९. विगमितवन्तौ युवाम् । अतिक्रामितवन्तावित्यर्थः Sk.
२०. V. Mādhava ignores सीम्। वि
‡ दुच्छुनाः। PP. २१. सप्तम्यर्थे च षष्ठी। एकस्मिन् वस्तोरह्नि । यस्मिन्नेवाहूतौ स्थ स्तस्मिन्नेवाहनीत्यर्थः Sk.
२२. रणाय रमणीयाय. . .सहस्रसङ्ख्याकाय. . . धनलाभाय । . . . स ऋषिः प्रत्यहं यथा सहस्रसङ्ख्यं धनं लभते तथा रक्षितवन्तावित्यर्थः Sy. रणाय। सङ्ग्रामार्थम्। सङ्ग्रामेऽस्य साहाय्यं कर्तुमित्यर्थः Sk.
२३. ऋषिः Sy. वशं नाम राजानं प्रति Sk.
२४. सहस्रसङ्ख्याकानां धनानाम् Sk.

लभत[1] एवं तं ररक्षतुः[2]रिति सहस्रेति चतुर्थ्येकवचनस्याकारः। किञ्च। पृथुश्रवसः[3]स्तस्य। निर्हतवन्तौ[4]।
उपद्रवकारिणः[5]। शत्रून्[6]। हे वर्षितारौ! कामानाम्। इन्द्रसहितौ[7]वित्यथवा पृथुश्रवाश्च[8] नामापरस्तस्य
शत्रूंश्च निरहतम्[9]िति[10]।

**शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः।**
**शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ॥२२॥**

**शरस्य चित्।** तृषितस्य ऋषीकपुत्रस्य[11]। शराख्यस्य। नीचोदकात्[12]। कूपात्[13]। पानाय।
जलम्[14]! उच्चैः[15]। आचक्रतुरश्विनौ! तथा। शयवे[16]। हे[17] नासत्यौ! कर्मभिः[18]। उपक्षीणाय[19] क्षुधिताय।
निवृत्तप्रसवाम्। गाम्[20]। आप्यायितवन्ता[21]विति[22]।

---

१. लाभाय Sk.

२. अवतिर्गत्यर्थः। गतवन्तौ युवाम् Sk.

३. दुच्छुना दुष्टसुखान् दुःखस्य कर्तॄन् पृथुश्रवसो विस्तीर्णयशसो रातीः शत्रून्। ...यद्वा कानीनस्य पृथुश्रवःसञ्ज्ञस्य राज्ञः शत्रूनिति योज्यम् Sy.

४. नर्ह० P. निह० M.

५. दुच्छुना दुर्भिक्षा उच्यन्ते ताः Sk.

६. अरातीर्दानवर्जिताः। यासु कश्चित् कस्मैचित् किञ्चिदपि दातुं न शक्नोतीत्यर्थः Sk.

७. इन्द्रेण सह वृष्टिं प्रदायेत्यर्थः Sk.

८. ०वश्चना० M.
०वाश्चना० D.

९. निहरत० P.

१०. V. Mādhava ignores दुच्छुनाः

* चित्। आर्चत्ऽकस्य। अवतात्। आ। PP.

† वारिति वाः। PP.

११. ऋचत्कपुत्रस्य Sy.
ऋचत्कनाम्न ऋषेः पुत्रस्य Sk.

१२. निचो० M.
नीचीनाद् अवतात् कूपाद् उच्चा उच्चैरुपरिष्टाद् वा Sy.
नीचात्। द्वितीयैकवचनस्यायं "सुपां सुलुक्" (पा० ७.१.३९) इति लुगादेशः। नीचम्। सुदूरवर्तित्वाद् ग्रहीतुमशक्यमित्यर्थः Sk.

१३. सप्तम्यर्थे चात्र पञ्चमी। कूपे Sk.

१४. जवम् P. D.

१५. उच्चा। ... द्वितीयैकवचनस्याकारः। उच्चम्। हस्तग्राह्यमित्यर्थः Sk.

१६. यव M.
शयुनाम्न ऋषये Sy. राज्ञे Sk.

१७. हा P.

१८. D. adds निष्टमिव पशुं विनष्टिः after कर्मभिः
युष्मदीयैः कर्मभिः परिचरणैः Sy.
प्रज्ञाभिः कर्मभिर्वा Sk.

१९. श्रान्ताय Sy.
ताडयित्रे शत्रूणाम्। ताडिताय वा Sk.

२०. गम् M.
अग्निहोत्रार्थस्य पयसो दोग्ध्रीम् Sy.

२१. पयसा युवामापूरितवन्तौ Sy.
धेनुकां कृतवन्तावित्यर्थः Sk.

२२. V. Mādhava ignores चित्

अवस्यते स्तुवते कृष्णियाय ऋजूयते नासत्या शचीभिः ।
पशुं न नष्टमिव दर्शनाय विष्णाप्वं ददथुर्विश्वकाय ॥२३॥

अवस्यते। रक्षणमिच्छते। स्तुवते। कृष्णपुत्राय। आर्जवमिच्छते[1] विष्व(श्व)कनाम्ने[2]। नासत्यौ! कर्मभिः[3]। नष्टमिव[4]। पशुं विनष्टम्। विष्णाप्वं[5] नाम पुत्रम्[6]। दर्शनाय। ददथुरिति[7]। इवेति[8] पूरणो नेत्यनेन पौनरुक्त्यादिति[9]।

दश रात्रीरशिवेना* नव द्यूनवनद्धं श्नथितमप्स्वन्तः† ।
विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण ॥२४॥

दश रात्रीः। दश। रात्रीः। नव च[10]। अहानि। अशिवेन[11] निगडेन बद्धम्[12]। अप्सु[13]। अन्तः[14]। अवनद्धम्[15]। निगूढम्[16]। विप्लुतचित्तम्[17]। रेभनामानम्[18]। उदके। असुरैरित्थं प्रवृक्तं[19], वृश्चतिश्छेदन-कर्मेह तु हिंसार्थः। तमुन्निन्यथुः[20]। सोममिव[21]। स्रुवेण[22]। सोमोऽप्यग्निहोत्रहविर्भवति।

---

१. ऋजु न्याय्यम्। तदिच्छते। साधुवृत्तायेत्यर्थः Sk.
२. विष्वग० M. ऋषये Sy.
३. शचीभिः स्वाभिः ? (अतिशयवतीभिः प्रज्ञाभिः) कर्मभिर्वा Sk.
४. यथा कश्चिद् विनष्टं पशुं स्वामिनो दृष्टिपथं प्रापयति तद्वत् Sy.
यथा पशुं नष्टं कश्चिदानीय कस्मैचिद्दर्शनाय दद्यादेवम् Sk.
५. विष्णापं P. विष्णप्वं M.
६. पुत्रस्य P. विनष्टं पुत्रम् Sy.
७. विश्वकाय ऋषये Sk.
८. वेति P. ९. ०क्त्यं स्यादि० M.
* रात्रीः। अशिवेन। PP.
† अप्ऽसु। अन्तरिति। PP. १०. न P.
११. दुःखहेतुना Sy. शिवं सुखम्। ततोऽन्यदशिवं दुःखम्। तत्करत्वादत्रासुरा अशिवा उच्यन्ते। समूहाभिप्रायश्चैकवचनम्। दुःखकरेणासुरसमूहेन Sk.
१२. ०लेन P. D. M.
१३. कूपान्तर्वर्तमानासु Sy.
१४. मध्येऽसुरैः पातितम् Sy.
१५. अवम् P. १६. शत्रुभिर्हिंसितम् Sy. श्नथितं ताडितम् Sk.
१७. व्याक्षिप्तसर्वाङ्गम् Sy. विगतम्। रहितमित्यर्थः। केन ? ... कर्मभिः। निश्चेष्टं सन्तम्। मृतकल्पमित्यर्थः Sk.
१८. ०नामनेम् M. ऋषिम् Sk.
१९. ०त्तं D. M. ०तं P. लुप्तोपममेतत्। प्रवृञ्जनेन सन्तप्तं घर्ममिव व्यथया सन्तप्यमानम् Sy. वृजी वर्जनेऽन्यत्र, इह तु सामर्थ्यान्निमज्जने। निमग्नम् Sk.
२०. तत्कूपाद् ... उत्तीर्णं कृतवन्तौ Sy. उत्तारितवन्तावित्यर्थः Sk.
२१. यथाऽग्निहोत्रहोमार्थमभिषुतं सोमरसं कूपसदृशेऽग्निहोत्रस्थालीमध्ये वर्तमानं स्रुवेणाध्वर्युरूर्ध्वं नयति तद्वत् Sy. यथा कश्चित् स्रुवेण सोममुन्नयति तद्वत्। स्रुवेण च सोमस्योन्नयनाविधानात् स्रुवशब्देन कुतश्चित् सादृश्याच्चमसादि सोमपात्रमुच्यते। अथवा कठानामाग्निहोत्रहोमः सोमेन ब्रह्मवर्चसकामस्य विधीयते। तदभिप्रायमेतदुपमानम् Sk.
२२. P. adds आह्वाता स्तुति after स्रुवेण

**प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः ।**
**उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥२५॥**

**प्र वां दंसांसि**[1]। इत्थं प्रावोचम्[2]। युवयोः। कर्माणि सोऽहम्। शोभनगोयुक्तः। शोभन-[3]वीरश्च सन्। अस्योभयस्य[4]। स्वामी। स्याम्। अपिच चक्षुषाऽनन्धः सन्[5]। पश्यन्[6]। दीर्घञ्च[7]। आयुः। प्राश्नुवन्[8]। स्वगृहमिव[9]। अनुद्विग्नहृदयः सन् क्रमेण जराम्। गच्छे[10]यमिति[11]।

I.117.

**मध्वः सोमस्याश्विना मदाय प्रत्नो होता* विवासते वाम् ।**
**बर्हिष्मती रातिर्विश्रिता गीरिषा यातं नासत्योप वाजैः ॥१॥**

**मध्वः सोमस्य**। अश्विनौ ! मधुसदृशेन। सोमेन युवाम्। मादयितुम्[12]। पुराणः। आह्वाता[13] स्तुतिभिः। वाम्। परिचरति किञ्च स्तीर्णेन। बर्हिषा[14] तद्वत्य[15]स्माकम्। रातिः[16] सोमस्य दानमेवम्। विश्रिता[17] विस्तीर्णा। स्तुतिश्च तौ युवामस्मान्। अन्नेन[18]। बलैश्च[19] सह। उपागच्छतमिति[20]।

---

१. ०सासि P. D.
२. अवोचं P. D. प्रवोचं M.
३. शोभनैर्वीरैः पुत्रैः पौत्रैश्चोपेतः Sk.
४. युष्मत्प्रसादेनास्य। बुद्धिस्थस्याभिप्रेतस्य धनादेरयं प्रतिनिर्देशः। यदिदमस्मदभिलषितं धनादि, अस्य Sk.
५. ०नद्धः D.
६. अक्षिभ्यां पश्यन्। उपलक्षणमेतत्। सर्वैरिन्द्रियैः स्वस्वविषयदर्शनसमर्थैः Sy.
७. वर्षशतरूपेणायतम् Sy.
८. प्राहुवन् M. ९. यथा गृहं स्वामी निष्कण्टकं प्रविशत्येवम् Sy.
१०. कण्टकराहित्येन प्राप्नुयाम्। वृद्धः सञ् चिरकालं निवसेयमित्यर्थः Sy.
११. V. Mādhava ignores अश्विनौ। इत्।
Ms. D. puts the figure ॥११६॥ here to indicate the end of one hundred and sixteenth hymn. No such number is given in P. and M.

* होता। आ। PP. १२. मधुस्वादं सोमं पीत्वा मदिष्यथ इत्येवमर्थमित्यर्थः Sk.
१३. ऋत्विक्। अथवा कक्षीवान्नामर्षिः। आत्मानमेव ? (आत्मन एव) परोक्षरूपेण प्रथमपुरुषेण निर्देशः Sk. १४. अपिच रातिर्दातव्यं हविर्बर्हिष्मती, आस्तीर्णेन बर्हिषा युक्तम्। युष्मदर्थं बर्हिष्यासादितमित्यर्थः Sy. १५. तद्वत्य० D. दानं सवनीयपुरोडाशादेः Sk. बर्हिषि सादितहविष्केत्यर्थः Sk.
१६. रात्रिः M. १७. ऋत्विक्षु समवेता। तैः स्तुतिरपि क्रियत इत्यर्थः Sy. विविधमाश्रिता। मनसा चिकीर्षितेत्यर्थः Sk. १८. सोमाख्येन निमित्तेन। सामं पातुमित्यर्थः Sk.
१९. अन्नैश्चरुपुरोडाशादिभिः। चरुपुरोडाशादीनि भक्षयितुमित्यर्थः। अथवा, इषा वाजैरिति सहयोगलक्षणा तृतीया। अस्मभ्यं यद्देयमन्नं बलानि च तैः सह। तानि गृहीत्वोपगच्छतमित्यर्थः Sk.
२०. V. Mādhava ignores नासत्या।

**यो वा॑मश्विना॒ मन॑सो॒ जवी॑यान्र॒थः स्वश्वो॒ विश॑ आ॒जिगा॑ति ।**
**येन॒ गच्छ॑थः सु॒कृतो॑ दुरो॒णं तेन॑ नरा व॒र्तिर॒स्मभ्यं॑ यातम् ॥२॥**

**यो वामश्विना।** अश्विनौ ! यः । युवयोः[1] । मनसोऽपि । वेगवत्तरः । रथः । शोभनाश्वयुक्तः[2] । मनुष्यान् । प्रतिगच्छति । येन च । यजमानस्य[3] । गृहम्[4] । गच्छथः[5] । तेन । अस्मदर्थम्[6] । गमनमार्गम्[7] । प्रत्यागच्छतमिति[8] ।

**ऋषिं॑ नरा॒वंह॑सः॒ पाञ्च॑जन्यमृ॒बीसा॒दत्रिं॑ मुञ्चथो ग॒णेन॑ ।**
**मि॒नन्ता॒ दस्यो॒रशि॑वस्य मा॒या अ॑नुपू॒र्वं वृ॑षणा चो॒दय॑न्ता ॥३॥**

**ऋषिं[9] नरौ।** ऋषिम्[9] । नेतारौ ! पञ्चजनहितम्[10] । अत्रिर्हि[11] सूर्यमरोचयत्तम् । ऋबीसादग्नेः[12] । अंहस[13] उपद्रवाद् यथा मुक्तो भवत्येवम् । सपुत्रपौत्रं सेन्द्रियं वा । अमुञ्चतमिति[14] । हिंसन्तौ[15] । दस्योरुपक्षपयितुः[16] । असुरवर्गस्य । नानाविधा मायाः[17] । अनुक्रमेण[18] तास्तास्तैः कृताः । प्रेरयन्ताविति[19][20] ।

---

१. युवाम् D.
२. ०क्तान् M.
३. शोभनं यागं कुर्वतः Sy.
४. देवयजनलक्षणम् Sy.
५. ०थ P.
६. अस्मान् प्रतीत्यर्थः Sk.
७. वर्तनाधिकरणं गृहम् Sy.
८. V. Mādhava ignores नरा
९. ऋषीन् P.
१०. ०जनाहित M.
निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः। तेषु भवम्। स्वर्भानुना गृहीतममुं सूर्यं मोचयन्नत्रिः सर्वेषां हिताचरणात् तत्रभव इत्युच्यते Sy.
पञ्चभ्योऽपि जनेभ्यो गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येतेभ्यो निषादपञ्चमेभ्यो वा चतुर्भ्यो वर्णेभ्यो हितम् । पञ्चानां हि जनानां स्थितिकरी वृष्टिः। तस्या हेतुभूतो यज्ञः। तस्य कर्ता अत्रिरित्येवमस्य हितत्वम् Sk.
११. ०र्हि P. D.
१२. शतद्वारे यन्त्रगृहेऽत्रेः पीडार्थमसुरैः प्रक्षिप्तात् तुषाग्नेः सकाशात् Sy.
अग्निकूटात् Sk.
१३. ०सादभग्नरंहसः P. ०चयत् कर्मपीडाददग्नरं हंसः D. ०साददग्नरंहसः M.
पापरूपात् Sy.
पापाद्दाहकत्वात् । विनाशकत्वादित्यर्थः Sk.
१४. उद्धृतवन्तावित्यर्थः Sk.
१५. ०न्ता P.
१६. दस्युशब्दोऽनार्यवचनः । समूहाभिप्रायश्चैकवचनम् । येनासावग्निकूटे प्रक्षिप्तस्तस्यानार्यस्यासुरसमूहस्य Sk.
१७. शठप्रज्ञाः Sk.
१८. आनुपूर्व्येण यथायोग्यमित्यर्थः Sk.
१९. निवारयन्तौ Sy.
तासु तास्वभिप्रेतफलास्वत्रिं चोदयन्ता, उपदेशादिना प्रेरयन्तौ Sk.
२०. V. Mādhava ignores वृषणा ।

अश्वं न गूळ्हमश्विना दुरेवैरृषिं नरा वृषणा रेभमप्सु ।
सं तं रिणीथो विप्रुतं दंसोभिर्न वां जूर्यन्ति पूर्व्या कृतानि ॥४॥

**अश्वं न गूळ्हम्** । अश्वम् । इव । अप्सु । गूळ्हम्[1] । पापागमनैरसुरैः[2] । नेतारौ[3], अश्विनौ ! रेभमृषिम् । सम्[4] । तम्[5] । सह गतवन्तौ युवाम् । असुरकर्मभिः[6] । विप्लुतम्[7] । न । युवयोः । कर्माणि । पूर्वकालकृतानि कदाचन । जीर्यन्ति[8] न विनश्यन्त्याश्चर्यभूतान्यृषिभिर्धार्यमाणानीति[9] ।

सुषुप्वांसं[*] न निर्ऋतेरुपस्थे सूर्यं न दस्रा तमसि क्षियन्तम् ।
शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वन्दनाय ॥५॥

**सुषुप्वांसम्** । यथा कञ्चन । भूम्याः । उपस्थे[10] । शयानं ? सुप्तं हस्तेन प्रबोध्योत्थापयति । यथा वा । दर्शनीयौ[11] ! नैशे[12] तमसि[13] । वसन्तम् । सूर्यं काल उत्थापयति । यथा वा कञ्चन[14] भूम्यां[15] निखातम्[16] । रुक्माभरणम् । अलङ्करणार्थमुद्वपन्त्येवम्[17] । वन्दनम् । उदूपथुः[18] कूपादसुरनिहितमिति[19] ।

---

१. व्याधितमश्वमिव Sy.
अश्वमिवात्यन्तशोभनं चौरापहृतम् Sk.
२. संवृतम् । अदृश्यतामापादितमित्यर्थः Sk.
३. दुष्प्रापैः Sy.
४. यो युवामाजुहाव तम् Sk.
५. समधत्तम् । सर्वैरवयवैरुपेतमकुरुतमित्यर्थः Sy. सम्यग्गतौ स्थः Sk.
६. सुक० M.
आत्मीयैर्भैषज्यरूपैः कर्मभिः Sy.
७. विश्लिष्टावयवम् Sy.
विगतम् । रहितमित्यर्थः । दंसोभिः । निश्चेष्टं सन्तम् । मृतकल्पमित्यर्थः Sk.
८. दीर्यन्ति P. D. M.
९. V. Mādhava ignores वृषणा
* सुसुप्वांसम् । PP.
१०. स्थाने । भूम्यामित्यर्थः Sk.
११. दर्शनीयौ । नैशे missing in M.
१२. कूपान्तर्गतान्धकारे Sy.
१३. कदा पुनः सूर्यस्तमसि न्युषितवान् येनैवमुच्यते सूर्यमिव तमसि क्षियन्तमिति । उच्यते यदा वृत्रो महत्तमस्ततान तञ्च हत्वेन्द्रः सूर्यं दिव्यारोहयाञ्चकारेति Sk.
१४. केचन is suggested for कञ्चन
१५. भूम्यां कं चन D.
१६. निखितम् P. निखिलातम् M.
एवंगुणविशिष्टं कूपेऽसुरैर्निखातं... वन्दनमृषिम् Sy.
१७. ०त्ये० M.
१८. ०वथुः P. M.
यथा भूमौ सुप्तं कञ्चित् कश्चिद्धस्तेन गृहीत्वोत्थापयेद् यथा च वृत्रततेन तमसाऽवष्टब्धं सूर्यं दिव्यारोहणार्थमिन्द्र उद्धृतवान् यथा चात्मनः शोभार्थं रुक्मं निखातं सन्तं कश्चिदुद्धरेदेवं युवां वन्दनं कूपे निपतितं तत उद्धृतवन्ताविति समस्तार्थः Sk.
१९. V. Mādhava ignores दर्शतम् । अश्विना

तद्वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन् ।
शफादश्वस्य वाजिनो जनाय शतं कुम्भाँ असिञ्चतं मधूनाम् ॥६॥

तद्वां नरा[1]। तत्[2]। युवयोः। नेतारौ! शंसनीयम्। पज्राणां[3] पुत्रेण। कक्षीवता मया। नासत्यौ! परितो[4] यत्र मां जना गन्तारो भवन्ति तत्र तत्र यद्[5] युवाम्। बलवतः[6]। अश्वस्य। शफात्[7]। जनार्थम्[8]। मधूनाम्[9]। शतम्। कुम्भान्। आपूरयतमिति[10]।

युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय ।
घोषायै चित्पितृषदे दुरोणे पतिं जूर्यन्त्या* अश्विनावदत्तम् ॥७॥

युवं नरा[11]। युवाम्। नरौ! स्तुवते। कृष्णनाम्नः[12] पुत्राय विश्वकनाम्ने। विनष्टं विष्णाप्वं[13] नाम पुत्रम्। ददथुः। घोषा[14] नाम काचन स्त्री। पिता यत्र सीदति तस्मिन्। पितृगृहे दौर्भाग्यादलब्धपतिकैव[15] जीर्णासीत् तस्यै सौभाग्यं[16] प्रदाय। पतिम्[17]। अदत्तमिति[18]।

---

१. नराः M.
२. कर्म Sy; Sk.
३. वज्रा० P. D. M.
अङ्गिरसां कुले जातेन Sy.
पाजोऽन्नं हविर्लक्षणम्। तद्वता। अथवा पज्रा अङ्गिरसः। तदपत्यभूतेन मया कक्षीवता Sk.
४. परिगमनेऽभीष्टस्य प्रापणे निमित्तभूते सति Sy.
सर्वतो गच्छन्ति देवा यत्र स परिज्मा यज्ञस्तस्मिन् Sk.
५. यत्कर्म Sk.
६. ०वन्तः M. वेगवतः Sy.
वेगवतो बलवतो वा Sk.
७. शफान् M.
८. अपेक्षमाणाय पुरुषाय Sy.
९. मधुस्वादूनां सुराणाम् Sk.
१०. कुम्भानां पू० M.
क्षारितवन्तौ स्थः Sk.
* जूर्यन्त्यै। PP.
११. नराः M.
१२. कुनाम्नः M.
१३. विष्णप्वं P.
विष्णव्यम् M.
१४. घोषा घोषा P.
घोषा नाम ब्रह्मवादिनी कक्षीवतो दुहिता। सा कुष्ठिनी सती कस्मैचिद् वरायादत्ता पितृगृहे निषण्णा जीर्णाऽऽसीत्। साऽश्विनोरनुग्रहान्नष्टकुष्ठा सती पतिं लेभे Sy.
घोषा नाम कक्षीवतो दुहिता Sk.
१५. कुष्ठरोगेण भर्तारमप्राप्य Sy.
१६. रोगोपशमनेन Sy.
१७. प्रदापयतिम् M.
१८. V. Mādhava ignores चित। अश्विनौ।

**युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।**
**प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥८॥**

**युवं श्यावाय ।** श्यावाय[1] कुष्ठिने[2]। दीप्तां[3] त्वचम् । अदत्तम् । प्रस्कण्वायान्यस्मै[4] वा । किञ्च अश्विनौ ! नार्षदाय[5] कण्वाय । महतो[6] वाद्यस्य[7] । शब्दमन्धकारे[8] प्रक्षिप्ताय । यद् युवाम् । अधत्तम्[9] । तत्[10] । युवयोः । कृतम् । प्रकर्षेण वाच्यम्[11] । क्षौतिः[12] शब्दकर्मा शब्दकरणाद्वीणा क्षोणः[13][14] ।

अत्र[14] शाट्यायनकम्—कण्वो वै नार्षदो बकस्यासुरस्य दुहितरमविन्दत । तस्यां हास्य त्रिशोकनभाकौ जज्ञाते । सा ह क्रुद्धा ज्ञातीनाययौ । तां हान्वाजगाम । तं हासुरा अवलेपेनावलिम्पन्त ऊचुः—अत्र व्युष्टां विजानीहि यदि ब्राह्मणोऽसीति । तद्‌ हाश्विनावनुबुबुधाते । अश्विनौ हि देवानां बद्धमुचौ । तौ हैनमदृश्यमाना उपेत्योचतुर्यदैव त्वावं वीणां समाघ्नन्ता उपर्युपर्यतिपतावो? (०रि पतावा०) ऽथ व्युष्टां विजानीतादित्युक्त्वाहाथ हैतौ वीणां समाघ्नन्तावुपयर्युपर्यतिपेततुः । स होवाचापहरतेदम् । एतर्हि यावद् युङ्ग्ध्वं सीराणीति । ते होचुः—ब्राह्मणो

---

१. Omitted by M.
**कुष्ठरोगेण श्यामवर्णाय** Sy.

२. **कुर्णिने** P. **कुण्ठिने** D.
**कुष्ठितत्वाच्छ्यावर्णायाग्नेः पुत्रस्य घोरस्य ज्येष्ठपुत्राय ।....तं हि युवां विकृत्य छित्वा च जङ्घयोर्मध्ये शिरसि च पुनश्च सन्धाय हिरण्यत्वचं पुनरुज्जीवयाञ्चक्रथुः** Sk.

३. **दीप्तत्वचं स्त्रियम्** Sy.

४. **अपिच क्षोणस्य क्षोणाय यो दृष्टिराहित्येन गन्तुमशक्तः सन्नेकस्मिन्नेव स्थाने निवसति तस्मै कण्वाय ऋषये महस्तेजस्तैजसं चक्षुरिन्द्रियमदत्तमिति शेषः** Sy. **क्षोणस्य।...चतुर्थ्यर्थे षष्ठी। शब्दयित्रे। आह्वात्रे स्तोत्रे वेत्यर्थः** Sk.

५. **नार्व** P. D. **नृषदः पुत्राय बधिराय ऋषये** Sy.
**ऋषये बधिराय** Sk.

६. Omitted by D.

७. **वान्यस्य** D. M.

८. **श्रवः श्रवणेन्द्रियम्** Sy.
**श्रवः श्रोत्रम्** Sk.

९. **अदत्तम्** P. **उपर्यसक्तम्** M.
**दत्तवन्तौ स्थ इति यत् तदित्यर्थः** Sy.
**दत्तवन्तौ स्थः** Sk.

१०. **कर्म** Sy.

११. **प्रशंसनीयम्** Sy.

१२. ०ति P.
अपर आह। **ब्राह्मण्यस्य परीक्षार्थमसुराः कण्वमृषिं गूढे तमसि निदधुः । अत्रैव स्थितः सन् व्युष्टामुषसं विजानीहि यदि त्वं ब्राह्मणोऽसीति । तमश्विनावागत्योचतुः । व्युष्टायां हर्म्यस्योपरि वीणां वादयन्तावावामागमिष्यावः । तं शब्दं श्रुत्वा व्युष्टामुषसं ब्रूहि । तदेतत्प्रतिपाद्यते । हे वृषणा कामानां वर्षितारावश्विनौ वां युवयोस्तत्कृतं कर्म, प्रवाच्यं प्रशंसनीयं यन्नार्षदाय नृषदः पुत्राय कण्वाय, क्षोणस्य । क्षोणः शब्दकारी वीणाविशेषः । महः, महतः क्षोणस्य श्रवः शब्दमध्यधत्तमुषसो विज्ञानार्थमधिकमकुरुतम्** Sy.

१३. (**क्षोणस्य क्षयणस्य**...) N. 6.6.

१४. **क्षोणात्र** P.

वायमृषिरास, उप ह वास्य जाया। हन्तास्मा इमां ददामेति। तां हास्मै ददुः।[१]

**पुरू वर्पांस्यश्विना दधाना नि पेदव* ऊहथुराशुमश्वम्।**
**सहस्रसां वाजिनमप्रतीत†महिहनं श्रवस्यं१ तरुत्रम् ॥९॥**

पुरु वर्पांसि। पुरूणि।[२] कर्मरूपाणि।[३] अश्विनौ। पेदवे[४] राज्ञे। शीघ्रगन्तारम्। अश्वम्।
न्यूहथुः।[५] सहस्रस्य[६] धनस्य। सम्भक्तारम्। बलवन्तं[७] शत्रुभिरप्रतिगतम्। आहन्तृणां[८] शत्रूणां
हन्तारम्। कीर्तिहेतुम्।[९] तारकम्।[१०][११]

**एतानि वां श्रवस्या सुदानू‡ ब्रह्माङ्गूषं सदनं रोदस्योः।**
**यद्वां पज्रासो अश्विना हवन्ते यातमिषा च विदुषे च वाजम् ॥१०॥**

एतानि वाम्। हे शोभनदानौ[१२]! अश्विनौ! एतानि। युवयोः। श्रोत्रहितानि[१३] सर्वेषां
तात्पर्येण[१४] श्रवणीयानि[१५] कर्माणि। बृहच्च[१६]। स्तोत्रमेतद्धि महद्[१७]यद्नासत्याभ्यामित्यादिकम्।

---

१. B. Ghosh, *op. cit.* pp. 36-38. V. Mādhava ignores युवम्

* पेदवे। PP.

† अप्रतिऽइतम्। PP.

२. बहूनि Sk.

३. आत्मीयैः कर्मभिः कृतानि रूपाणि Sy. रूपाणि। . . . दधाना धारयन्तौ। आत्मनो देवतामाहात्म्यान्नानारूपतां प्रतिपद्यमानावित्यर्थः Sk.

४. वेदवे M.

५. नितरां प्रापितवन्तौ दत्तवन्तावित्यर्थः Sy. नियमेन प्रापितवन्तौ स्थः। दत्तवन्तावित्यर्थः Sk.

६. सहस्र M. सङ्ग्रामसहस्राणां तन्निमित्तभूतधनसहस्राणां वा Sk.

७. वेगवन्तं वा Sk.

८. ०गतं माह D. अहान्तृणां P. अगन्ता अनष्टा अहिः। बलावलेपेनानष्टुरपि शत्रोर्हन्तारमहिनाम्नो वाऽसुरस्य Sk.

९. श्रवणीयं स्तोत्रम्। तत्रभवम्। स्तुतिविषयमित्यर्थः Sy. कीर्तिमन्तम् Sk.

१०. गन्तारं शत्रून् प्रति Sk.

११. V. Mādhava ignores दधाना

‡ सुदानू इति सुऽदानू। ब्रह्म। आङ्गूषम्। PP.

१२. ०नगमनौ D.

१३. श्रव इत्यन्ननाम। . . . अन्नानि हविर्लक्षणानि Sk.

१४. तात्पर्ये P.

१५. आघोषणीयम् Sy.

१६. शस्त्रलक्षणम् Sk.

१७. मत् P. D.

येन स्तोता द्यावापृथिव्योरुभयोरपि[1] सीदति । यदा । युवाम् । पज्रकुलजाता[2] हवन्ते[3] तदा । अन्नेन[4] सह । गच्छतम्[5] । अथ तत् । अन्नम्[6] । विदुषे कक्षीवते दत्तं चेति ।

**सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदन्ता ।**
**अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतम्* ॥११॥**

सूनोर्मानेन[7] । भरद्वाजपुत्रस्य । स्तोत्रेण । अश्विनौ ! स्तूयमानौ युवाम् । अन्नम्[8] । विप्राय भरद्वाजाय । भरणशीलौ[9] । रदतिर्दानकर्मा[10] प्रयच्छन्तौ[11] । एतच्च कृतवन्तावित्याहागस्त्य इति । खेलपुरोहिते[12]ऽगस्त्ये[13] । स्तोत्रेण । वर्धमानौ । खेलस्य[14] योद्ध्रीं[15] स्त्रीं शत्रुभिश्छिन्नजङ्घां[16] तत्प्रतिसन्धानार्थम्[17] । सह[18] गतवन्ताविति[19] ।

**कुह यान्ता सुष्टुतिं काव्यस्य दिवो नपाता वृषणा शयुत्रा ।**
**हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन् ॥१२॥**

कुह यान्ता । शयशब्दः[20] शयनवचन इह त्वसुरनिवासवचनः । आदित्यपुत्रौ । अश्विनौ ।

---

१. रोदस्योर्द्यावापृथिव्यात्मना वर्तमानयोर्युवयोः...सदनं स्तोतृसमीपे निवेशनं प्रसादनहेतुभूतं वा Sy.
सीदतो यस्मिंस्तत्सदनम् । ...द्यावापृथिव्यौ यच्छ्रोतुं निषीदत इत्यर्थः Sk.

२. वज्र० P. पुत्र० M.
पज्रासः पाजसान्नेन हविर्लक्षणेन तद्वन्त ऋत्विजः । अथवा पितृशब्देनेदं सोयमित्यभिसम्बन्धादपत्यस्याभिधानम् । पज्राणामङ्गिरसामपत्यभूता मत्प्रभृतयः Sk.

३. वहत्ते P.
स्तुतिभिरात्मरक्षणार्थमाह्वयन्ति Sy.

४. चतुर्थ्यर्थे तृतीया । अन्नाय च Sk.

५. नच्छतम् M.

६. अस्मदीयं हविर्लक्षणम् Sk.

* नासत्या । अरिणीतम् । PP.

७. कुम्भात्प्रसूतस्यागस्त्यस्य खेलपुरोहितस्य Sy. सूनुरित्यपत्यनाम । मीयतेऽनेनेति मानः कुम्भः । षष्ठीतृतीये च व्यत्यासेन योजयितव्ये । सूनुनापत्यभूतेन कुम्भस्य । अगस्त्यो ह्युर्वशीदर्शनान्मित्रावरुणयोः स्कन्नाद्रेतसः कुम्भे जातः । ... एवं कुम्भस्यापत्यभूतोऽगस्त्यः खेलस्य च पुरोहितः Sk.

८. बलमन्नं वा Sk.

९. भुरण्यतीति गतिकर्मा । गन्तारौ शत्रून् यज्ञान् वा प्रति Sk.

१०. दरतिर्दारकर्मा P.

११. विलिखन्तौ निष्पादयन्तौ Sy.

१२. खलु पु० M. अगस्त्य इति खेलपुरोहिते is omitted by P.

१३. ०स्त्यस्य ०स्त्य P. षष्ठ्यर्थेऽत्र सप्तमी । अगस्त्यस्य स्वभूतेन Sk.

१४. बेलस्य P.

१५. गोध्रीं D. योग्ध्री M.

१६. ०भिच्छि० D.

१७. तं प्र० M.

१८. आयस्या जङ्घया समयोजयतम् Sy. आयसीं जङ्घां तस्यै दातुं सम्यगगच्छतम् Sk.

१९. V. Mādhava ignores नासत्या

२०. शयु० is suggested for शय०

काव्यस्योशनसः । सुस्तोत्रं[1] प्रति तच्छ्रवणेच्छया । कस्मिन् । असुरनिलये[2] । गन्तारौ[3] युवामसुरैर्जले निखातं[4] रेभं तस्मिन्नसुरपुरे । दशमे[5] । अहनि जलात् । उदूपथुः[6] । यथा हिरण्यस्य[7] पूर्णम् । कलशम् । निखातं[8] तद्वत्[9] ।

उत्तरा व्याख्यातप्राया

**युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः ।**
**युवो रथं दुहिता सूर्यस्य सह श्रिया नासत्यावृणीत ॥१३॥**

युवं च्यवानम् इति श्रिया[10] कान्त्या सहितेति ।

**युवं तुग्राय पूर्व्येभिरेवैः पुनर्मन्यावभवतं युवाना ।**
**युवं भुज्युमर्णसो निः समुद्राद्विभिरूहथुर्ऋज्रेभिरश्वैः ॥१४॥**

युवं तुग्राय । युवम्[11] । तुग्राय[12] भुज्योः पित्रे[13] । प्रत्नैर्भवतोर्गमनैः[14][15] । पुनः पुनः स्तोतव्यौ[16] । प्रभवतम् । युवानौ[17] ! युवं[11] तत्पुत्रम् । भुज्युं समुद्रमध्ये विपन्ननौकम्[18] । समुद्रस्थात्[19] । उदकात् ।

---

१. सु is omitted by P. and D.

२. यद्वा । शयुत्रा इत्येतदश्विनोर्विशेषणम् । शयुनाम्नस्त्रायकौ युवाम् Sy. शयुत्रा शयने Sk.

३. अन्यत्रापि क्वापि गच्छन्तावित्यर्थः Sk.

४. रेफम् P. रथम् M.

५. यस्मिन्नेव स्तुतिः श्रुता ततो दशमे Sk.

६. उदूवथुः P. उत्खायोपथुः । वपिः प्रकिरणार्थः । विकीर्णवन्तौ स्थः Sk.

७. यथा हिरण्यपूरितं कलशं भूम्यां निक्षिप्तं सर्वैर्दुर्ज्ञातं कश्चिदभिज्ञ उद्धरति Sy.

८. इवशब्दोऽत्र . . . पदपूरणः । हिरण्यस्य कलशं निखातं सन्तम् Sk.

९. V. Mādhava ignores वृषणा । अश्विना

१०. ऋक्सहस्ररूपया सम्पदा कान्त्या वा सह Sy.

* समुद्रात् । विऽभिः । ऊहथुः । PP.

११. युवाम् Sy.

१२. पितृशब्दोऽयं सोऽयमित्यभिसम्बन्धात् पुत्रे प्रयुज्यते । षष्ठ्यर्थे चतुर्थी । तुग्रपुत्रस्य भुज्योः Sk.

१३. Omitted by M. भुज्योर्जनकस्य सम्बन्धिभिः Sy.

१४. Omitted by D. भवतो P.

१५. स्तुत्यं प्रति गन्तृभिः स्तोत्रैः Sy. पालनैः कामैर्वा । यस्मात्पूर्वं पालितवन्तौ कामान् वा सम्पादितवन्तौ तस्मादित्यर्थः Sk.

१६. ०व्या M. यथा भुज्योः समुद्रगमनात्पूर्वं युवां स्तोतव्यौ तथा पुनरपीदानीं स्तोतव्याव्भवतम् Sy. काम्यौ वा Sk.

१७. दुःखानां यावयितारौ Sy.

१८. ०न्नं नौ० P.

१९. प्रौढोदकयुक्तात्समुद्रात् Sy.

गन्तृभिः[1]। ऋजुगामिभिः[2]। अश्वैस्ततः। उदूहथुः[3]।

**अजोहवीदश्विना तौग्र्यो वां प्रोळ्हः समुद्रमव्यथिर्जगन्वान् ।**
**निष्टमूहथुः* सुयुजा रथेन मनोजवसा वृषणा स्वस्ति ॥१५॥**

अजोहवीत्। आहूतवान्। अश्विनौ! तुग्रपुत्रः। वाम्। समुद्रमध्यस्थम्[4]? (०मध्यम्)। प्रापितः[5]। विपन्नायामपि[6] भवदाश्रयाद् यथा गतस्ततः। तम्। निरूहथुः[7]। सुयुक्तेन। रथेन। मनोवेगेन[8]। वर्षितारौ! अविनाशम्[9][10]।

**अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ।**
**वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण ॥१६॥**

अजोहवीत्[11]। आह्वयत्[12]। अश्विनौ! दूत्यर्थं गच्छन्ती[13]। वर्तिका[14]। वाम्[15]। यदा युवाम्। आदित्यस्य वृकभूतस्य[16]। आस्यात्[17]। हस्तेन ताममुञ्चतम्। जयशीलेन[18] रथेन। पर्वतस्य[19]। सानु।

---

१. वयः पक्षिणः। तत्सदृशैः Sk.

२. शीघ्रगतियुक्तैः Sy.

३. निरूहथुर्निर्गमय्य पितृसमीपं प्रापितवन्तौ। तदानीं पुनरप्यतिशयेन स्तोतव्यौ जातावित्यर्थः Sy. प्रापितवन्तौ। तटमुत्तारितवन्तावित्यर्थः Sk.

* निः। तम्। ऊहथुः। PP.

४. पित्रा प्रापितः समुद्रमब्धिं जगन्वान् Sy. समुद्रं जगन्वान् गतः। समुद्रे निमग्न इत्यर्थः Sk.

५. प्रापिनः P. D.
विपन्नया नावा प्रक्षिप्त इत्यर्थः Sk.

६. नावि is suggested to be after विपन्नायामपि
उदके निमग्नोऽपि...व्यथां पीडामप्राप्त एव सन् Sy.

७. जलान्निर्गमय्य युवां पितृगृहं प्रापितवन्तौ Sy.

८. मनोवद् वेगयुक्तौ Sy.

९. अन्तर्णीतमत्वर्थमिदम्। स्वस्तिमन्तम्। अविनष्टजीवितमित्यर्थः Sk.

१०. This stanza is omitted by M.
V. Mādhava ignores अव्यथिः

११. आदित्यो ऽपि वृक उच्यते। यदा वृङ्क्ते ...आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता। तामश्विनौ प्रमुमुचतुः। इत्याख्यानम् N. 5.21.

१२. अह्व० P. M.

१३. ०न्ति P. M.

१४. चटकसदृशस्य पक्षिणः स्त्री Sy.
चटका Sk.

१५. वं P. वा D.

१६. वृकस्य Sy.

१७. वृकस्यावयवभूतात्। वृकेण ग्रस्यमानां सतीमित्यर्थः Sk.

१८. ०शीलौ D.

१९. मेघस्य वा Sk.

वियय[1]थु: सानूनां[2] मध्येन गतवन्तौ परिविष्टं[3] जाहुषमित्युक्तम्। तथा विष्वाचो[4]ऽसुरात्। जातम[5]-सुरम्। विषेण[6]। अहतम्[7]। अत्र यास्कः "आदित्योऽपि वृक उच्यते"[8] इत्यादि[9]।

**शतं मेषान्वृक्ये मामहानं* तमः प्रणीतमशिवेन पित्रा।**
**आक्षी† ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुर्विचक्षे ॥१७॥**

शतं मेषान्। शतम्। मेषान्[10]। वृक्यै[11]। प्रयच्छन्तम्[12]। क्रुद्धेन पौरहितेन[13]। पित्रा। तमः[14]। प्रणीतमन्धीकृतं[15] दृष्ट्वा तस्मिन्। अक्षिणी। आधत्तमाधाय[16] च तयोस्तस्मै[17]। अन्धाय। ज्योतिश्चक्षुः। आधत्तम्[18]। दर्शनाय[19][20]।

---

१. शत्रुभिरावेष्टितं जाहुषाख्यं स्तोतारं शत्रुसमूहान्निर्गमय्य तेन सहान्यैर्गन्तुमशक्यं पर्वताग्रं गतवन्तावित्यर्थः Sy. विविधं गच्छथो युवाम् Sk.

२. सानुनां P. ३. परिजिष्टम् M.

४. विविधगतियुक्तस्यैतत्सञ्ज्ञस्यासुरस्य जातमुत्पन्नमपत्यम् Sy. विषुशब्दो नानापर्यायः। अञ्चतिर्गत्यर्थः। नानागामिनः। इतश्चेतश्च गन्तुर्मेघस्य स्वभूतेनेत्यर्थः Sk.

५. जायते तदिति जातं सर्वं भूतजातम् Sk.

६. विषेणोदकेन। सर्वस्मै भूतजाताय प्रभूतां वृष्टिं दत्तमित्यर्थः Sk.

७. अहुतम् M. यद्वा। वर्तते प्रतिदिवसमावर्तत इति वर्तिकोषाः। वृक इति विवृतज्योतिष्कः सूर्य उच्यते। तेन ग्रस्ता सती सा हे अश्विनौ युवाम्... आह्वयत्। यदा खलु युवां वृकस्य सूर्यस्याऽऽस्न आस्यस्थानीयान्मण्डलाद्... अमोचयतम्। सूर्येणैकीभूतामुषसं पृथक्कृत्योदयात्पूर्वं रात्रेरपरभागे स्थापितवन्तावित्यर्थः।... अपिच जयुषा जयशीलेन रथेनाद्रेर्मेघस्य सानु समुच्छ्रितप्रदेशं वृष्टिचिकीर्षया विशेषेण ययथु र्युवां गतवन्तौ। गत्वा च विष्वाचो विविधगतियुक्तस्य मेघस्य सम्बन्धिना विषेणोदकेन जातमुत्पन्नं सर्वं भूतजातमहतमगमयतं वृष्टिं कृतवन्तावित्यर्थः Sy. ८. N. 5.21.

९. V. Mādhava ignores सीम्

* ममहानम्। PP.

† आ। अक्षी इति। ऋज्रऽअश्वे। PP.

१०. शतम्। मेषान् omitted by M. एकं चेति वाक्यशेषः Sk.

११. वृत्यै M. वृकीरूपेणावस्थिताया श्विनोर्वाहनाय रासभाय Sy.

१२. पूजितवन्तमाहारार्थं समर्पितवन्तम् Sy. चतुर्थ्यर्थे द्वितीया। आहारार्थं विशस्य ददते Sk. १३. असुखकारिणा Sy. दुःखकरेण च पित्रा Sk.

१४. आन्ध्यलक्षणम् Sk.

१५. प्रणिम० M. तमो दृष्टिराहित्येन कृतमान्ध्यं प्रणीतं प्रापितमृज्राश्वं चक्षुष्मन्तमश्विनावकुरुतामिति शेषः Sy. इयमपि चतुर्थ्यर्थ एव द्वितीया। शापेन प्रापिताय Sk.

१६. अध० M. मर्यादया दत्तवन्तौ Sk.

१७. षष्ठ्यर्थे चतुर्थी Sk.

१८. आदत्तम् M. ०त्त P.

१९. विविधं जगद् द्रष्टुं.. .युवां कृतवन्तौ Sy.

२०. V. Mādhava ignores ऋज्राश्वे। अश्विनौ

**शुनमन्धाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति ।**
**जारः कनीनइव चक्षदान ऋज्राश्वः शतमेकं च मेषान् ॥१८॥**

शुनमन्धाय । सुखम्[1] । अन्धाय[2] । परिपूर्णम्[3] । आजुहाव[4] । सा । वृकी । अश्विना[5] । वृषणा[6] । नरेति[7] परिदेवना सूक्तमामन्त्रितमुच्चैर्लौकिका[8] वदन्ति तत्कृतोऽनिघात[9] इत्युक्तम् । कन्यायाः[10] कुमार्याः[11] । पतिरिवान्धीभावात्[11] प्राग् यस्यै स वृक्यै । शतम् । एकम् । च । मेषान् भक्षणाय । शकलीचकार[12] तस्या वृक्याः प्रीत्यर्थं चक्षुराधत्तमिति[13] ।

**मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण्या सं रिणीथः ।**
**अथा युवामिदह्वयत्पुरंधिरागच्छतं सीं वृषणाववोभिः ॥१९॥**

मही[14] वामूतिः । महती । युवयोः[15] । ऊतिः । अश्विनौ ! सुखस्य भावयित्री । किञ्च[16] मया ।

---

* नरा । इति । PP.

१. शत्रुजयलक्षणम् Sk.

२. वृष्टिहीनाय तस्मा ऋज्राश्वायेच्छन्ती सा वृकी Sy. मह्यम् Sk.

३. पोषणहेतुभूतं चक्षुरिन्द्रियेण निष्पाद्यं सुखम् Sy. भरम् । सप्तम्यर्थे द्वितीया । भरे सङ्ग्रामे Sk.

४. अह्वयत् । आह्वानं सर्वत्र प्रापणार्थम् । अतस्तेन हेतुभूतेन फलमत्र प्रापणं लक्ष्यते। भविष्यति च काले लङ् । ...प्रापयिष्यति । करिष्यतीत्यर्थः Sk.

५. अश्वयुक्तौ कृत्स्नं जगद् व्याप्नुवन्तौ वा Sy.

६. कामानां वर्षितारावित्येवं सम्बोध्य Sy.

७. नेतारावश्विनौ ... आहूतवती Sy.

८. ०नासूतममान्त्रिकमु० M.

९. निपात P. D. M.

१०. कनीनशब्दोऽत्र न कन्यावचनः कन्याया जारत्वासम्भवात् । नच स कन्यायां सम्भवति भर्तुरभावात् । कन्यावचनत्वे च नेदमाह्वानस्योपमानं सम्भवति । न वक्ष्यमाणस्य क्षदनस्य । कन्याया जारेणाह्वानस्य क्षदनस्य वाऽसम्भवात् । अत इदं कनतेः कान्तिकर्मणो रूपम् । कनतीति कनः कामयिता । कन एव कनीनः । ... यथा जारः कामयिता कस्याञ्चित् कमनीयायां सक्तस्तां नियमेनाह्वयति तद्वदित्यर्थः । ऋज्राश्वो हि योगैश्वर्यात् पूर्वमेव ज्ञातवान् । इयं वृकी अश्विनोः कशा । सा ममान्धीभूतस्य मृते पितरि शत्रुभी रुद्धस्य शत्रुजयं करिष्यतीति Sk.

११. यथा प्राप्तयौवनः कामुको जारः पारदारिकः सन् परस्त्रियै सर्वं धनं प्रयच्छति Sy.

१२. तेनेदृशीं दुर्दशां प्राप्त इति Sy. चक्षदानः । ... क्षदिर्विशसनार्थः । एतस्माद्धेतोर्विशसमान ऋज्राश्वः । शतमेकं च मेषान् । वृक्या आहारार्थं ददाविति वाक्यशेषः Sk.

१३. क्षुरा० M.

† पुरंमूऽधिः । आ । अगच्छतम् । PP.

१४. महि P.

१५. युवयोः missing M.

१६. किञ्चा M.

स्तुत्यौ । सह । विनाशयथः । अथ । युवाम् । इदम् । अह्वयत् । बहुधीर्वृकी युवामपि । रक्षणैस्ताम् । आगच्छतम् ।

अधेनुं दस्रा स्तर्यं विषक्तामपिन्वतं शयवे अश्विना गाम्
युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषाम् ॥२०॥

अधेनुं दस्रा । निवृत्तप्रसवाम् । दर्शनीयौ ! चिरकालं तथाभूतां स्थिताम् । गाम् । युवामृषये । शयवे । अपिन्वतम् । प्रज्ञाभिः । विमदाय च । जायाम् । न्यूहथुः । पुरुमित्रस्य । दुहितरम् ।

---

१. अपिच हे धिष्ण्या । धिषणा स्तुतिलक्षणा वाक् तया स्तोतव्यौ Sy.
धिषणा वाक् । तस्याः पुत्रौ । अथवा धीः प्रज्ञा । ष्णै वेष्टने । प्रज्ञा वेष्टयित्री सर्वार्थग्रहणसमर्था ययोस्तौ धिष्ण्यौ । अत्यन्तप्रज्ञावित्यर्थः Sk.
२. किञ्चानया स्तुत्या P. D.
३. स्रामं व्याधितं पुरुषं विश्लिष्टाङ्गमत्र्यादिकं सं रिणीथः सङ्गतावयवं कुरुथः Sy.
सङ्गमयथः । केन ? सामर्थ्याद् द्वितीयेनाक्ष्णा । काणमप्यकाणं शक्नुथः कर्तुमित्यर्थः Sk.
४. ०यतः P. M.
५. एव Sy.
६. घोषा विश्पला वा . . . रोगोपशमनार्थमाहूतवती Sy.
अथवा कक्षीवानपि हि पुरन्धिः Sk.
पुरन्धिः बहुप्रज्ञा । कासौ ? वध्रिमती । कुत एतत् ? तस्या अजोहवीन्नासत्या Rv. I. 116. 13. इति पुरन्ध्रित्वदर्शनात् ।
७. ०धि वृकी M.
८. वा० M.
९. आगतवन्तौ युवाम् । . . . वध्रिमतीं हिरण्मयहस्तप्रदानेन कक्षीवन्तं वा त्रिकालविषयसर्वार्थविषयज्ञानप्रदानेन पालयन्तावित्यर्थः Sk.
१०. V. Mādhava ignores स्रामम् । सीम् । वृषणौ ।
* स्तर्यम् । विऽसक्ताम् । PP.
११. ०नीयो ऽचि० M.
१२. विशेषेण सक्तावयवां कृशावयवामित्यर्थः Sy. विविधं चावसन्नाम् । दुर्बलां वृद्धां चेत्यर्थः Sk.
१३. रषये P. ऊषये M.
१४. ०पिबतम् P. D.
पयसाऽपूरयतम् Sy. सेचितवन्तौ च । धेनुकां कृतवन्तावित्यर्थः Sk.
१५. आत्मीयैः कर्मभिः Sy.
कर्मभिर्वा Sk.
१६. शत्रुभिः सह योद्धुमशक्ताय Sy.
षष्ठ्यर्थे चात्र चतुर्थी । विमदस्य ऋषेः Sk.
१७. जाया P. M. adds गृह after जायाम् ।
१८. विमदस्य गृहं प्रापितवन्तौ Sy.
परिणीतमात्रां सेनापरिवृतेन . . . तद्गृहं प्रत्यूढवन्तौ Sk.
१९. मित्रग्रहणमत्र प्रदर्शनार्थम् । बहुमित्रस्वजनस्य Sk.
२०. स्त्रियम् Sk.
२१. V. Mādhava ignores अधेनुम्

**यवं॒ वृके॑णाश्विना॒ वप॒न्तेषं॑ दु॒हन्ता॒ मनु॑षाय दस्रा ।**
**अ॒भि दस्युं॒ बकु॑रेणा॒ धम॑न्तो॒रु ज्योति॑श्चक्रथु॒रार्या॑य ॥२१॥**

**यवं**[1] **वृकेण** । अश्विनौ ! विकर्तनेन लाङ्गलेन[2] भूमिं[3] कृषन्तौ[4] । यवं[5] च सरस्वतीतीरे[6] । वपन्तौ । वृष्टिं[7] चास्मै । दुहन्तौ[8] । दस्युञ्च[9] । भयङ्करेणायुधेन[10] । घ्नन्तौ[11] । दुर्भिक्षापनयनेन विस्तीर्णम्[12] । ज्योतिः[13] । चक्रथुः[14] । मनवे[15] ।

---

* बकुरेण । PP.

१. युवं P.
बकुरो भास्करः । भयङ्करः । भासमानो द्रवतीति वा ... (यवमिव वृकेणाश्विनौ निवपन्तौ) वृको लाङ्गलं भवति । विकर्तनात् । लाङ्गलं लगतेः । लाङ्गूलवद्वा । लाङ्गूलं लगतेः । लङ्गतेः । लम्बतेर्वा । अन्नं दुहन्तौ मनुष्याय दर्शनीयौ । अभिधमन्तौ । दस्युं बकुरेण ज्योतिषा वोदकेन वा । अर्य ईश्वरपुत्रः N. 6.25.26.

२. कर्षकैः Sy.

३. भूमीं M.

४. कृषवन्तो M.
प्रकिरन्तौ ।...अथवा वपिरन्तर्णीतण्यर्थः । मनुषायेत्यपि मनुष्यपर्यायः । यवादिधान्यं कर्षकैर्वपयन्तौ वृष्ट्युदकं च क्षारयन्तौ मनुष्यस्यार्थाय Sk.

५. यवयं M.
यवाद्युपलक्षितं सर्वं धान्यजातम् Sy.
यवग्रहणमत्र प्रदर्शनार्थम् । यवादिधान्यम् Sk.

६. कृष्टदेशे Sy.

७. इषम् । अन्ननामैतत् । तत्कारणभूतं वृष्ट्युदकम् Sy.
अन्नहेतुभूतं च वृष्ट्युदकम् Sk.

८. मेघात्क्षारयन्तौ Sy.
क्षारयन्तौ Sk.

९. दस्यूंश्च D. M.
उपक्षयकारिणमसुरपिशाचादिकम् Sy.
अनार्यं रक्षःपिशाचादिकम् Sk.

१०. बकुरो भासमानो वज्रः । तेन Sy.
ज्योतिषा वा Sk.

११. घूर्णन्तौ P. D.
अभिघ्नन्तौ Sy.
अभिघ्नन्तः Sk.

१२. विकीर्ण P. D.

१३. स्वकीयं तेजो माहात्म्यम् Sy.
प्रभालक्षणम् । ... वपनवृष्टिदोहनदस्युहननैस्त्रिभिः कर्मभिर्महाप्रभावौ युवां जातौ साधूनामनुग्रहार्थमित्यर्थः । अथवा अभिदस्युमिति दस्युशब्देनोपलक्षणत्वाद् दुर्भिक्ष उच्यते । बकुरशब्देनापि महान् वृष्ट्युदकसमूहः । ज्योतिश्शब्देनापि सुभिक्षमिति । महत्त्वाद् भयङ्करेण वृष्ट्युदकसमूहेनाभिघ्नन्तौ विस्तीर्णं सुभिक्षं कृतवन्तौ कुरुथो युवामार्यस्यार्थायेत्यर्थः Sk.

१४. दर्शितवन्तावित्यर्थः Sy.
यद्वा । त्रिविधकर्माचरणेनार्याय विदुषे मनवे विस्तीर्णं सूर्याख्यं ज्योतिश्चक्रथुः कृतवन्तौ । जीवन् हि सूर्यं पश्यति । तद्धेतुभूतानि त्रीणि कर्माणि युवाभ्यां कृतानीति भावः Sy.

१५. V. Mādhava ignores मनुषाय । दस्रा । अभि

**आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम्।**
**स वां मधु प्र *वोचदृतायन्त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वाम्॥२२॥**

आथर्वणाय। अथर्वणः पुत्राय[1]। अश्विनौ! दधीचे। अश्वस्य। शिरश्छित्त्वा। प्रत्यधत्तम्[2]। अथ तेन शिरसा सः। युवाभ्याम्। मध्वाख्यं[3] परं ब्रह्म। प्रावोचत्[4]। यज्ञमिच्छन्[5] संहितमपिवा प्रतिज्ञां सत्यां[6] कर्तुमिच्छन्। त्वष्टा[7] शिल्पविद् भवति स च[8] नूनमेतद्वेद[9] यदश्विभ्यामसौ[10] प्रोवाच। कक्षशिरसोरप्ययोः[11]ऽपिकक्षस्तस्य विश्लिष्टस्य यत् सन्धाननिमित्तं तदपिकक्ष्यं[12] छिन्नस्य[13] शिरसः प्रतिसन्धानोपायभूतं मध्विति[14]।

**सदा† कवी सुमतिमा चके वां विश्वा धियो अश्विना प्रावतं मे।**
**‡अस्मे रयिं नासत्या बृहन्तमपत्यसाचं श्रुत्यं रराथाम्॥२३॥**

सदा कवी। सदा। मेधाविनौ! युवयोरहम्। प्रमतिम्[15]। कामये[16]। सर्वाणि[17]। कर्माणि।

---

* वोचत्। ऋतऽयन्। PP.

१. षष्ठ्यर्थे चतुर्थी। अथर्वणः पुत्रस्य Sk.

२. तदीयं मानुषं शिरः प्रच्छिद्यान्यत्र विधायाश्व्येन शिरसा तमृषिं समयोजयतमित्यर्थः Sy.
उपगमितवन्तौ युवाम्। आहितवन्तावित्यर्थः Sk.

३. मध्या० M.
युवाभ्यां प्रवर्ग्यविद्यां मधुविद्याञ्च वक्ष्यामीति पुरा कृतां प्रतिज्ञाम्... सत्यामात्मन इच्छन्...मधुविद्याम् Sy.

४. प्रवो० P. D.

५. ऋतं सत्यम्। तदेव ब्रह्म तद्युवयोरिच्छन् Sk.

६. सत्या P.　७. त्वाष्टा P.
त्वष्टुरिन्द्राल्लब्धम् Sy.
त्वष्ट्रा दृष्टत्वात् त्वाष्ट्रम्। त्वष्ट्रा ज्ञातमेव यदित्यर्थः।... अथवा त्वाष्ट्रं यदित्यश्वशिरसो विशेषणं न ब्रह्मणः। त्वष्टेत्यत्रेन्द्र उच्यते शत्रूणां तनूकर्तृत्वात्। युवाभ्यां शर्वणावति निहितं शत्रूणां तनूकर्त्रेन्द्रेण दृष्टं यच्छिरो गुह्यमपि युवयोरित्यर्थः Sk.

८. Omitted by P.

९. ०तद्वद D.　१०. यश्वि० P.

११. ०रसौरव्ययो० P. D. M.

१२. वां युवयोः सम्बन्धि यदपिकक्ष्यं छिन्नस्य यज्ञशिरसः कक्षप्रदेशेन पुनः सन्धानभूतं प्रवर्ग्यविद्याख्यं रहस्यं तदपि वां युवाभ्यां प्रावोचदित्यर्थः Sy.
गुह्यम्। वां युवयोः। युवां न कस्मैचिद् ब्रूथमित्यर्थः Sk.

१३. छन्नस्य P.

१४. V. Mādhava ignores दस्रौ। वाम्

† कवी इति। PP.

‡ अस्मे इति। PP.

१५. कल्याणीमनुग्रहात्मिकां बुद्धिम् Sy.
भक्तानुग्रहात्मिकां शोभनां बुद्धिम् Sk.

१६. युवयोरनुग्राह्यो भवेयमित्येवं कामय इत्यर्थः Sk.

१७. प्रज्ञाः कर्माणि वा Sk.

अश्विनौ ! प्रावतम् । मे । अस्मभ्यम् । धनम् । नासत्यौ ! महत् । अपत्यानां[१] सम्भर्तृ[२] । श्रवणनिमित्तम्[३] । प्रयच्छतम्[४] ।

**हिरंण्यहस्तमश्विना ररांणा पुत्रं नंरा वध्रिमत्या अंदत्तम् ।**
**त्रिधा ह श्यावंमश्विना विकंस्तमुज्जीवसं ऐरयतं सुदानू[*] ॥२४॥**

हिरण्यहस्तम् । हिरण्यहस्तं नाम । अश्विनौ ! रममाणौ[५] ! पुत्रम् । नेतारौ ! वध्रिमत्याः[६] । अदत्तम्[७] । श्यावञ्च[८] कुष्ठिनमृषिं[९] कुब्जम्[१०] । अश्विनौ ! त्रिधा[११] । छिन्नं[१२] सन्धाय[१३] । जीवनार्थं पुनरपि । उत्थापितवन्तौ[१४] । शोभनदानौ !

**एतानिं वामश्विना वीर्यांणि प्र पूर्व्याण्यायवोऽवोचन् ।**
**ब्रह्मं कृण्वन्तों वृषणा युवभ्यां सुवीरांसो विदथमा वंदेम ॥२५॥**

एतानि वाम्[१५] । एतानि । युवयोः । अश्विनौ ! वीर्याणि[१६] । पूर्वकालकृतानि[१७] । सम्प्रतितनाः[१८] । प्रावोचन् । स्तोत्रम् । कृण्वन्तः । वर्षितारौ[१९] ! युवाभ्याम् । अथाभिलषितमाशास्ते । सपुत्रा वयम् ।

---

१. अपत्यैः पुत्रादिभिः समवेतम् Sy. अपत्यसहितमित्यर्थः Sk.
२. ०भक्तृ M.
३. प्रशंसनीयमुत्कृष्टम् Sy. श्रुतं प्रख्यातं लोके Sk.
४. V. Mādhava ignores आ।
* सुदानू इति सुऽदानू । PP.
५. दातारौ वा Sy. ददतौ Sk.
६. एतत्सञ्ज्ञायै ब्रह्मवादिन्यै Sy.
७. कस्मै ? प्रकृतत्वाद् वध्रिमत्यै। तस्या एवात्र वध्रिमत्यायव्यवहितदानसम्बन्धे सम्भवति नरापदव्यवहितपुत्रकस्य सम्बन्धस्यान्याय? (०य्य०)त्वाद् दानसम्बन्धे चतुर्थ्या न्याय? (०य्य०)त्वात् संहितायाश्च तुल्यत्वाद् वध्रिमत्या इति चतुर्थ्यन्ते पदे कर्तव्ये यत्पदकारेण षष्ठ्यन्तं पदं कृतं तत्र तस्याभिप्रायः पर्येष्यः Sk.
८. Omitted by D.
९. ०मृषि D.D. adds न after ऋषिम्।
अग्नेः पुत्रस्य घोरस्य ज्येष्ठपुत्रम् Sk.
१०. विकस्तिरत्रच्छेदनार्थः। विविधं छिन्नम् Sk.
११. त्रिभिः प्रकारैः। जङ्घयोर्मध्ये शिरसि च . . . श्यावम् Sk.
१२. छन्नं M.
१३. बद्धाय P.
१४. असुरैस्त्रेधा खण्डितं शरीरं पुनरेकीकृत्योदगमयतमित्यर्थः Sy. पुनरुज्जीवितवन्तौ युवामित्यर्थः Sk.
१५. वा P.
१६. वीरकर्माणि Sy; Sk.
१७. ०कालौकृ० P.
१८. मनुष्या मदीयाः पित्रादयः Sy. मनुष्याः सर्वे स्तोतारः Sk.
१९. वषितारो P. वर्षितारो M.

गृहं[1] प्राप्य पुत्रादीन् । आवदेमेति[2][3] सूक्ते[4]ऽस्मिन् प्रकारान्तरेणापदानान्यश्विनो[5]रुक्तानीति[6] ।[7]

I. 118.

आ वां रथो अश्विना श्येनपत्वा सुमृळीकः स्ववाँ यात्वर्वाङ् ।
यो मर्त्यस्य मनसो जवीयान्त्रिवन्धुरो वृषणा वातरंहाः ॥१॥

आ वां रथः । अश्विनौ ! श्येनै[8]रश्वैः पतन् । युवयोः । रथः । सुखयिता । धनपूर्णः[9] । अस्मदभिमुखः[10] । आगच्छतु । यः । मर्त्यस्य मनसो[11][12]ऽपि वेगवत्तरो मनुष्यो[13] यदाश्विनौ चिन्तयित्वा विरतमतिर्भवति[14] ततः प्रागेवागच्छति मनसो जवीयान् । त्रिबन्धुरः[15] । वर्षितारौ[16] ! वातवेगः[17] ।

त्रिवन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता* यातमर्वाक् ।
पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे† ॥२॥

त्रिवन्धुरेण । त्रिसन्धानेन[18] । प्रउगाकारेण[19] । त्रिचक्रेण[20] । शोभनवर्तनेन[21] । आगच्छतम् ।

---

१. यज्ञम् Sy. सप्तम्यर्थे द्वितीया । यज्ञे Sk.
२. आभिमुख्येन स्तुतीरुच्चारयाम । यद्वा विदथं वेदयन्तमतिथिं तदपेक्षितप्रदानेनावदेमाभिमुख्येन प्रियपूर्विकां वाचमुच्चारयाम Sy.
३. ०मेत्रि M. ४. सूत्रे ० P.
५. ०रेण वदानाद्यश्वि० P. ०णोपा० ०रेणोपादानादश्वि M.
६. इति omitted by M.
७. Ms. D. puts the figure ॥११७॥ here to indicate the end of one hundred and seventeenth hymn. No such number is given in P. and M.
८. श्येनेत्यश्वनाम । शंसनीयगमनैरश्वैः पतन् ।...यद्वा श्येनः पक्षी । स इव शीघ्रं पतन् Sy. श्येनसदृशैः ... अश्वैर्यः पतति गच्छति स श्येनपत्वा Sk.
९. अस्मभ्यं यद्देयं धनं तेन सहेत्यर्थः Sk.
१०. ०खम् D.
११. तद्यथा वेगेन कृत्स्नं जगद् व्याप्नोति ततोऽप्यतिशयेन क्षणमात्रादेव सर्वं जगत्पर्यटतीत्यर्थः Sy.
१२. मनोऽपि M.
१३. Omitted by P.
१४. ०ति भ० P.
१५. वन्धुरं वेष्टितं सारथेः स्थानम् । त्रिप्रकारेण वन्धुरेण युक्तः Sy. त्रिसारथिस्थानः Sk.
१६. कामानाम् Sy.
१७. अनेनाप्रतिहतगतित्वमुच्यते । स रथ इति पूर्वत्रान्वयः Sy.
* सुऽवृता । आ । यातम् । PP.
† अस्मे इति । PP.
१८. बन्धुरं सारथिस्थानम् । त्रिप्रकारबन्धुरोपेतेन Sy. त्रिसारथिस्थानेन Sk.
१९. उगा० P. त्रिधा वर्तमानेन Sy. त्रिभिश्चक्रैर्वर्तते गच्छतीति त्रिवृत् । तेन त्रिवृता स्वेन रथेन Sk.
२०. त्रिव० M. २१. ०नाव० P. M. शोभनं गच्छता Sy. सुगमनेन Sk.

अभिमुखम् । निर्गमयतम्[१] । अस्मभ्यम् । पशून्[२] । प्रयच्छतम्[३] । अश्वान् । वर्धयतं च । अश्विनौ ! पुत्रम्[४] । अस्माकम्[५] ।

*प्रवद्यामना सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।
किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥३॥

प्रवद्यामना[६] । शीघ्रगमनेन । सुवृता[७] । रथेनागत्य । इमम्[८] । स्तोत्रम्[९] । शृणुतम् । आद्रियमाणस्य[१०] । किम्[११] । अङ्ग[१२] ! युवाम् । मनुष्याणाम्[१३] । दारिद्र्यम्[१४] । प्रति[१५] । गन्तारौ । वदन्ति[१५] । अश्विनौ ! पुरा जाताः । मेधाविनस्तथा सत्यागच्छतमिति[१६] ।

आ वां श्येनासो अश्विना वहन्तु रथे युक्तास आशवः पतङ्गाः ।
ये अप्तुरो दिव्यासो न गृध्रा अभि प्रयो नासत्या वहन्ति ॥४॥

आ वां श्येनासः[१७] । आवहन्तु[१८] । वाम्[१९] । अश्वाः[२०] । अश्विनौ ! अश्नुवानाः[२१] । पतनशीलाः[२२] ।

---

१. पयसा पूरयतम् Sy.
सेचयतम् । धेनुकाः कुरुतमित्यर्थः Sk.
२. अस्मदीया गाः Sy. गाः Sk.
३. प्रीणयतम् Sy; Sk.
४. पुत्रपौत्रादिम् Sk.
५. V. Mādhava ignores रथेन ।
* प्रवत्ऽयामना । PP.
६. प्रपद्यमाना P. प्रपद्या० D. प्रवद्या० M.
प्रवत इति गतिकर्मा। यान्ति देवता यस्मिन् स यामा यज्ञः। यज्ञानां गन्ता प्रवद्यामा Sk.
७. शोभनवर्तनेन Sy.
८. ०स्य मं P.
९. स्तुतिलक्षणामिमां वाचम् Sy.
शब्दम् Sk.
१०. अद्रेरभिषवग्राव्ण: Sk.
११. किंशब्दः प्रदर्शनफलप्रश्ने वर्तते। किं न कथयन्ति ? कथयन्त्येव सर्वे। तथा सत्यागन्तव्यमिति Sy.
१२. क्षिप्रम् Sk.
१३. स्तोतॄणाम् Sy.
१४. तत्परिहर्तुं...गन्तृतमौ...कथयन्ति Sy.
अवर्तिम् । तृतीयार्थे द्वितीया। अवर्तन्याऽमार्गेणापि Sk.
१५. प्रतीत्येष उपेत्येतस्य स्थाने। अतिशयेनोपगन्तारौ यज्ञान् Sk.
नैव हि युवां क्षिप्रमुपगन्तारौ यज्ञानां यावदस्मद्यज्ञमुक्तमात्रेण नागच्छथ इत्यर्थः Sk.
१६. V. Mādhava ignores दस्रौ
१७. श्यो० P.
१८. अस्मान् प्रति Sk.
१९. युवाम् Sy.
२०. शंसनीयगमनाः Sy. श्येनसदृशाः Sk.
२१. क्षिप्राः Sk.
२२. ०न्तु मावश्वा अश्नुवा अश्विनाः प० P. ०ना प० D.
अश्वनामैतत् । अश्वाः Sk.

रथे । युक्ताः[1] । ये । उदकस्य प्रेरयितारः[2] । अन्तरिक्षस्थाः । गृध्रा इव[3] । युवां हविर्लक्षणमन्नम् । प्रति । नासत्यौ ! वहन्ति[4] ।

**आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी नरा दुहिता सूर्यस्य ।**
**परि वामश्वा वपुषः पतङ्गा वयो वहन्त्वरुषा अभीके ॥५॥**

आ वां रथम् । सूर्यदुहिता[5] स्वयंवरे । युवयोः । रथम् । नरौ[6] ! अतिष्ठत्[7] । पर्यावहन्तु[8] । वाम्[9] । अश्वाः[10] । उदकात्[11] समुद्रात् । गमनशीलाः[12] । पतनशीलाः[13] । आरोचमानाः[14] । अन्तिके[15][16] ।

उत्तरा निगदसिद्धेति ।

**उद्वन्दनमैरतं दंसनाभिरुद्रेभं दस्रा वृषणा शचीभिः ।**
**निष्टौग्र्यं* पारयथः समुद्रात्पुन†श्च्यवानं चक्रथुर्युवानम् ॥६॥**

---

१. सारथिना वहनप्रदेशे योजिताः Sy.
२. आप इव त्वरोपेताः Sy.
आपोऽन्तरिक्षम् । तत्र त्वरितारौ (रः) त्वारयितारौ (रो) वा मेघस्य । अथवा आप उदकानि । तत्र त्वरितारौ (रः) Sk.
३. शीघ्रं गच्छन्तः Sy.
४. प्रापयन्ति । तादृशा इति पूर्वत्र सम्बन्धः Sy.
५. सूर्यप्रीत्या P. D. M.
६. नौ M.
नेतारौ ! Sy. मनुष्याकारौ ! Sk.
७. ०ष्ठन् P.
आरूढवती Sy.
आजौ जिता सती, आरूढेत्यर्थः Sk.
८. परिप्रापयन्तु Sy; Sk.
९. युवाम् Sy; Sk.
१०. अशू व्याप्तौ । व्याप्तारः Sk.
११. वपुरिति रूपस्य शरीरस्य वा नामधेयम् । तद्वन्तः Sy.
वपुरिति रूपनाम, इह चान्तर्णीतमत्वर्थम् । वपुष्मन्तो रूपवन्तः Sk.
According to Nig. I. 12 वपुः is a Synonym of उदक.
१२. वयः पक्षिसदृशाः शीघ्राः Sk.
१३. उत्पतनसमर्थाः Sy.
पतङ्गाः । अश्वनामैतत् । अश्वाः Sk.
according to the order of the text V. M. Should have explained the words पतङ्गा वयः as पतनशीलाः । गमनशीलाः । He however reverses the order.
१४. हिंसकरहिता वा Sy.
अरुषतीति गतिकर्मा । गमनशीलाः Sk.
१५. ०कतः P.
गृहसमीपे Sy. आसन्ने यागकाले Sk.
१६. V. Mādhava ignores युवतिः । अत्र । जुष्ट्वी ।
* निः । तौग्र्यम् । PP.
† पुनरिति । PP.

युवमत्रयेऽवनीताय तप्तमूर्जमोमानमश्विनावधत्तम् ।
युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा ॥७॥

युवमत्रये । युवम्[1] । अत्रये[2] । प्रक्षिप्ताय[3] । तप्तमग्निं प्रति[4] । रसम्[5] । अन्नं च[5] । दत्तवन्तौ । युवाम् । कण्वाय चासुरैर्हर्म्ये[6] कुड्येऽपिलिप्तायादित्योदयज्ञाननिमित्तम्[7][8] । चक्षुः[9] । प्रत्यधत्तम्[10] । तस्य सुष्टुतिम्[11] । सेवमानौ[12] ।

युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय ।
अमुञ्चतं वर्तिकामंहसो निः प्रति जङ्घां विश्पलाया अधत्तम् ॥८॥

युवं धेनुम्[13] । युवाम्[14] । धेनुम् । शयवे[15] । याचमानाय । अधुक्षतम्[16] । अश्विनौ ! प्रत्नाय । निरमुञ्चतं च[17] । वर्तिकाम्[18] । आहन्तुर्वृकात्[19] । प्रत्यधत्तं च[20] । जङ्घाम्[21] । विश्पलायाः[22] ।

---

* कण्वाय । अपिऽरिप्ताय । PP.

१. युवाम् Sy.

२. युवम् । अत्रये omitted by M.

३. शतद्वारे पीडायन्त्रगृहेऽवस्तान्नीताय Sy. ४. अत्रये तप्तं पीडार्थं प्रक्षिप्तं तुषाग्निं शीतेनोदकेनावारयेथाम् Sy. तप्तमग्निकूटं प्रति । अग्निकूटे प्रक्षिप्तमित्यर्थः Sk. ५. ओमानं सुखकरम् । ऊर्जं रसवदन्नम् Sy. तत उत्तार्य ऊर्जमन्नम् । ओमानम् । अवतेरिदं रूपम् । पालनं च Sk.

६. असुरैर्ब्राह्मण्यपरीक्षार्थमिहासीनः सन् व्युष्टामुषसं जानीहीत्यन्धकारवति गृहे प्रवेशिताय Sy. अपीत्येव अवेत्येतस्य स्थाने । ... अवलिप्ताय घट्टिताक्षाय । अन्धायेत्यर्थः Sk.

७. ०ड्ये विलि० P. ०ड्येपिप्ता० D. ०र्म्ये कुध्ये ड्यलि० M.

८. ०प्तायामादित्योदयज्ञनिमि० M.

९. व्युष्टाया उषसः प्रकाशकं वीणाशब्दम् । ... यद्वा अपिरिप्ताय-अपिलिप्ताय पटलेन पिहितवृष्टय एवंविधाय कण्वाय चक्षुरिन्द्रियं प्रत्यधत्तं प्रत्यस्थापयतम् Sy.

१०. प्रत्याध० P. प्रत्यसत्तं M. प्रतिनिहितवन्तौ दत्तवन्तावित्यर्थः Sk.

११. अत्यर्थं पुनः पुनर्वा सेवमानौ Sk.

१२. V. Mādhava ignores अश्विनौ

१३. युवं P.D. युवाम् Sy.

१४. युवम् । धेनुम् omitted by D. निवृत्तप्रसवामदोग्ध्रीम् Sy.

१५. एतत्सञ्ज्ञाय ऋषये Sy. राज्ञे Sk.

१६. पयसाऽसिञ्चतम् । सर्वदा पयस्विनीमकुरुतमित्यर्थः Sy. सेचितवन्तौ पयः Sk. १७. निरमु० P.

१८. वृकेण ग्रस्तां चटकसदृशीं शकुनिम्...यद्वा पुनः पुनर्वर्तत इति वर्तिका उषाः । तामादित्येनाभिग्रस्तां युवाममोचयतम् Sy. चटकाम् Sk. १९. वृकास्यलक्षणात् पापात् Sy. अंहसः पापात् क्रूरात् Sk.

२०. प्रत्यस्थापयतम्; समयोजयतमित्यर्थः Sy. आहितवन्तौ Sk.

२१. जघों M. आयसीम् Sy; Sk.

२२. विश्वला० M. सङ्ग्रामे छिन्नजङ्घायै अगस्त्यपुरोहितस्य खेलस्य सम्बन्धिन्यै एतत्सञ्ज्ञायै स्त्रियै Sy. छिन्नजङ्घायाः सत्याः Sk.

**युवं श्वेतं पेदव इन्द्रजूतमहिहनमश्विनादत्तमश्वम् ।**
**जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीळ्वङ्गम्[*] ॥९॥**

**युवं श्वेतम्।** युवाम्। श्वेतवर्णम्। पेदवे राज्ञे। इन्द्रेण[1]। इन्द्रेण[2] प्रेरितम्। शत्रूणां हन्तारम्[3]। अश्वम्[4]। अश्विनौ! अदत्तम्। अरेरर्थं सङ्ग्रामेषु। आह्वातव्यम्[5]। अभिभवितारम्। अप्रसह्यम्[6]। सहस्रस्य[7] धनस्य सम्भक्तारम्[8]। कामानां वर्षितारम्[9]। दृढाङ्गम्।

**ता वां नरा स्ववसे सुजाता हवामहे अश्विना नाधमानाः ।**
**आ न उप वसुमता रथेन गिरो जुषाणा सुविताय यातम् ॥१०॥**

**ता वां नरा।** तौ[10]। वाम्। रक्षणार्थम्[11]। शोभनजातौ[10]! सुष्ठु। हवामहे। अश्विनौ! याचमानाः[12]। आगच्छतम्। अस्मान्[13]। धनवता[14]। रथेन। स्तुतीः। सेवमानौ[15]। अभ्युदयार्थम्[16]।

**आ श्येनस्य जवसा नूतनेनास्मे[†] यातं नासत्या सजोषाः ।**
**हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ ॥११॥**

**आ श्येनस्य।** आयातम्। श्येनस्य[17]। वेगेन[18]। नूतनेन[18]। अस्मान् प्रति[19]। नासत्यौ! सहितौ[20]।

---

* वीळुऽअङ्गम्। PP.
१. इन्द्रेण is redundent
२. इन्द्रेण युवाभ्यां गमितं दत्तमित्यर्थः Sy. इन्द्रमिव गन्तारं शत्रून् प्रति Sk.
३. हि गतौ। शौर्यप? (व) लेपादगन्तुरपि शत्रोरहिनाम्नो वाऽसुरस्य हन्तारम् Sk.
४. Omitted by P. and D.
५. अतिशयेन सङ्ग्रामेष्वाह्वातारम् Sy.
६. अप्रसंगृह्यम् P. उद्गूर्णम्। वीर्यवन्तमित्यर्थः Sy.
७. सहसस्य P. सङ्ग्रामसहस्राणां तन्निमित्तभूतधनसहस्राणां वा Sk.
८. दातारं वा Sy.
९. सेक्तारं युवानमित्यर्थः Sy. रेतस्सेचनसमर्थं तरुणं बलवन्तं वेत्यर्थः Sk.
१०. यौ सुजातौ सुजन्मानौ तौ युवाम् Sk.
११. द्वितीयार्थे चतुर्थी ... शोभनमवस्तर्पणं पालनं वा Sk.
१२. धनं याचमाना वयं स्तोतारः Sy.
१३. स्वां M. १४. धवता P. अस्मभ्यं दित्सितेन धनेन तद्वता स्वेन Sk.
१५. सुष्ठु प्राप्तव्याय धनाय सुखाय वा Sy. सुविताय सुगताय यागकर्मणे प्रजायै वाऽस्माकम् Sk.
१६. V. Mādhava ignores नरा। उप।
† अस्मे इति। PP.
१७. शंसनीयं गच्छतोऽश्वस्य Sy.
१८. प्रत्यग्रेण ... वेगेन सहितौ Sy. यादृशः प्रथमोऽश्रान्तस्य श्येनस्य वेगस्तादृशेन वेगेनेत्यर्थः Sk.
१९. अस्मानित्यर्थः N. 6. 7.
२०. समानप्रीतियुक्तौ Sy. सजोषाः ... सम्प्रीयमाणावित्यर्थः Sk.

ह्वयामि[1] । हि[2] । वाम् । अश्विनौ ! दत्तहविष्कः[3] । नित्यायाः[4] । उषसः[5] । व्युच्छने[6] ।[7]

I.119.

आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियं जीवसे हुवे ।
सहस्रकेतुं वनिनं शतद्वसुं* श्रुष्टीवानं वरिवोधामभि प्रयः ॥१॥

आ वां रथम् । युवयोः[8] । रथम् । बहुप्रकारनिर्माणम्[9] । मनोवेगम्[10] । क्षिप्राश्वम् । यज्ञार्हम्[11] ।
जीवनायाहम्[12] । अहमाहुवे[13] । अनेककेतुमालाकृतानेकक्षुद्रकेतुम्[14] । भजनवन्तम्[15] । बहुधनम् ।
क्षिप्रवन्तं[16] क्षिप्रमेव स्तोतॄणामभिगन्तारम् । धनस्य दातारम् । हविर्लक्षणमन्नम् । प्रति[17] ।

ऊर्ध्वा धीतिः प्रत्यस्य† प्रयामन्यधायि शस्मन्त्समयन्त आ दिशः ।
स्वदामि घर्मं प्रति यन्त्यूतय आ वामूर्जानी रथमश्विनारुहत् ॥२॥

ऊर्ध्वा धीतिः । भवतोरस्य रथस्य । गमने[18] । मदीया वाक्[19] । ऊर्ध्वा[20] ।

---

१. P. and D. repeat ह्वयामि

२. हिर्हेतौ। हि यस्मादेवं तस्मादायातमित्यर्थः Sy.

३. ०विस्कः P. युवाभ्यां दातव्येन हविषा युक्तः Sy.

४. नित्यो य P. कालात्मकतया नित्यायाः Sy.

५. ०से M.

६. विवासनसमये Sy. उषस उदयवेलायामित्यर्थः Sk.

७. Ms. D. puts the figure ॥११८॥ here to indicate the end of one hundred and eighteenth hymn. No such number is given in P. and M.

* शतत्ऽवसुम् । श्रुष्टीऽवानम् । वरिवःऽधाम् । PP.

८. युवयोः । रथम् । omitted by P. and D.

९. ०रनि० D. बहुविधाश्चर्यम्, बहुविधकर्माणं वा Sy. बहुप्रज्ञम् Sk.

१०. मन इव शीघ्रं गच्छन्तम् Sy.

११. यज्ञेष्वाह्वातुमर्हम् Sy.

१२. आहूतो मां जीवयिष्यतीत्येवमर्थमित्यर्थः Sk.

१३. ०वा M.

१४. अनेकध्वजम् । सहस्रस्य धनस्य केतयितारं ज्ञापयितारं वा Sy. सहस्रपताकम् Sk.

१५. सम्भजनवन्तम् is suggested for भजनवन्तम् । वनमित्युदकनाम । तद्वन्तम् Sy. वनमुदकम् । तद्वन्तम् । सम्भजनवन्तं वा Sk.

१६. क्षिप्रं सम्भजमानम् । यद्वा सुखवन्तम् Sy.

१७. अभिलक्ष्य Sy.

† प्रति । अस्य । प्रऽयामनि । अधायि । शस्मन् । सम् । अयन्ते । PP.

१८. ०स्याग० P. D.

१९. अस्मदीया बुद्धिः Sy. धीतिः स्तुत्येषु धीयमानत्वात् स्तुतिरुच्यते Sk.

२०. उन्मुखा Sy. ऊर्ध्वत्वेनात्र व्यापाराभिमुख्यं लक्ष्यते। स्तुतेश्च व्यापारो युवाभ्यां सम्बन्धः। तदभिमुखी Sk.

प्रत्यधाय्यन्तरिक्षे[1] निहितेत्यर्थस्तथा[2] गते[3] सति मया। शंसने[4] क्रियमाणे[5]। सर्वा दिशस्तच्छ्रवणार्थम्[6]। सङ्गता[7] आसंस्तत्राहमाश्विनम्। घर्माख्यं[8] हविः। स्तोत्रैः[9] स्वदयामि। मरुतश्च[10] तच्छ्रवणार्थम्। प्रतियन्ति[11]। तमिमं भवतोः। रथम्। ऊर्जानी[12] नाम सूर्यस्य दुहिता[13]। पुराऽऽरूढवती[14]।

**सं यन्मिथः पस्पृधानासो अग्मत शुभे मखा अमिता जायवो रणे।**
**युवोरह प्रवणे चेकिते रथो यदश्विना वहथः सूरिमा वरम् ॥३॥**

सं यन्मिथः[15]। यदा[16]। कल्याणे[17]। युद्धे। परस्परं स्पर्धमाना[18] दातारः। बहवो[19] यज्ञशीला[20] यजमानाः[21]। जयशीलाः[22]। मिथः[23]। समग्मत[24]। तदानीं युवयोः। एव। रथः। युद्धाग्रे[25]।

---

१. प्रतिशब्दोऽत्र धात्वर्थानुवादी। दधातिर्धारणार्थः। धार्यते। स्तोतृभिः क्रियत इत्यर्थः Sk.
२. ०धार्यन्त० M. प्रत्यस्थायि Sy.
३. प्र इत्येष आ इत्येतस्य स्थाने। आगमने सति। आगतेऽस्मिन् रथ इत्यर्थः Sk.
४. श० P. स्तवने Sy.
५. शस्मञ्शासनम्। चतुर्थ्याश्चात्र लुक्। आज्ञायै च Sk.
६. तदनन्तरं दिशो देष्टव्याः स्तुतयोऽपि समयन्ते ऽश्विभ्यां सङ्गच्छन्ते Sy.
७. सर्वा आज्ञाश्च प्रतिग्रहीतुं सर्वत आगच्छन्तीत्यर्थः Sk.
८. घर्मं महावीरस्थं, यद्वा क्षरणशीलाज्यादिकं हविः... स्वादूकरोमि Sy. घर्ममिति यज्ञनाम। ... यज्ञम् Sk.
९. घर्माख्यं हविः स्तोत्रैः missing M. यज्ञस्य चास्वदनासम्भवात् स्वदिः करोत्यर्थः। करोमि Sk.
१०. अवितारो रक्षका ऋत्विजश्च प्रतियन्ति। घर्मं प्रति गच्छन्ति संस्कारार्थम् Sy. ऊतयस्तर्पणानि। सोमेन युवां तर्प्येथे इत्यर्थः Sk.
११. प्रति। कर्मप्रवचनीयोऽयम्। ... युवां प्रति Sk.
१२. ऊर्जानि P. ऊर्जावी M. अन्नवती Sk.
१३. आजौ जिता सती Sk.
१४. V. Mādhava ignores आ
१५. संयान्मथः P. संयमीथं D.
१६. P. and D. add यत् before यदा।
१७. शुभे शोभनाय धनाय Sy. शुभ उदकार्थम् Sk.
१८. स्पर्धमाना इव। युष्मदीया अश्वाः समग्मत रथे युक्तास्सन्तो मेघं प्रति सम्यग्गच्छन्ति Sk.
१९. वहहवः P. अथवा बलेनापरिमिताः। महाबला इत्यर्थः Sk.
२०. यज्ञस्य युष्मदानयनेन वृष्टिद्वारेण वा कर्तारः Sk.
२१. यजशीला M.
२२. अथवा यद् रणे, इति समानाधिकरणे। मिथः पस्पृधानास इत्यादिभिरपि योद्धार उच्यन्ते नाश्वाः। यस्मिन् सङ्ग्रामे परस्परतः स्पर्धमाना योद्धारः सङ्गच्छन्ते। शुभे शोभार्थम्। जयार्थमित्यर्थः। मखा अमिता जायवश्च Sk.
२३. मथः P. थ M.
२४. ०ग्मतन् D.
२५. प्रकर्षेण सम्भजनीये भूतले Sy. निम्ने देशे Sk.

दृश्यते[1]। यत्[2]। युवामश्विनावभीतौ[3]। वरिष्ठम्[4]। सुवीर्यं[5] च तम्। आवहथस्तत्र रथम्।

**युवं भुज्युं भुरमाणं विभिर्गतं स्वयुक्तिभिर्निवहन्ता पितृभ्य आ।**
**यासिष्टं वर्तिर्वृषणा विजेन्यं१ दिवोदासाय महि चेति वामवः ॥४॥**

युवं भुज्युम्। युवाम्। भुज्युम्। समुद्रमध्ये ह्रियमाणम्[6]। अश्वैः[7]। स्वयमेव युज्यमानैः[8]। समुद्रे गतम्[9]। समुद्रमध्यात् पितॄणां[10] दर्शनार्थम्। तीर आनिवहन्तावागतौ[11] च। वर्तिर्वृकेण[12][13] गृहीतम्। विजेतव्यं[14] वृकात्। दिवोदासविषये[15] च। महत्[16]। ज्ञायते[17]। युवयोः[18]। पालनम्[19]।

**युवोरश्विना वपुषे युवायुजं रथं वाणी* येमतुरस्य शर्ध्यम्।**
**आ वां पतित्वं सख्याय जग्मुषी योषावृणीत जेन्या युवां पती† ॥५॥**

युवोरश्विना। युवयोः[20]। अश्विनौ[20]! शोभार्थम्[21]। युवाभ्यां युक्तम्[22]। रथम्। शब्दकारिण्यौ[23]

---

१. ज्ञायते। देवेषु मध्ये युवामेव रक्षणार्थं शीघ्रं रथेनागच्छथ इत्यर्थः Sy. ज्ञायते। लक्ष्यत इत्यर्थः। कोऽसौ? उच्यते। रथः। किमपेक्षं पुनरेतद्रथस्य निम्नदेशवर्तित्वम्? उच्यते। अश्वापेक्षम्। अश्वा ह्युच्चाः, रथो नीचः। तेन स तेभ्यो निम्नदेशवर्ती। उच्चत्वादश्वानां तेभ्यो नीचो रथो दृश्यत इत्यर्थः Sk.
२. यद्-येन रथेन Sy. यदा Sk.
३. ०वावश्विनावभितौ P.
४. वरणीयं धनम् Sk.
५. स्तोतारं प्रति Sy. सूरिरिति स्तोतृनाम। आकारः प्रतीत्यस्यार्थे। स्तोतारं प्रति Sk.
६. ध्रियमाणम् Sy. भुरतिर्ग्रसनार्थः। ग्रस्यमानं मत्स्यैर्मकरैश्च Sk.
७. नौविशेषैः Sy. पक्षिसदृशैः शीघ्रैरश्वैः Sk. ८. सयवे यज्य० P. ९. समुद्रे निमग्नम् Sy. समुद्रे निमग्नमित्यर्थः Sk.
१०. 'आङ् मर्यादायाम्।' यत्र पितरस्तुग्रादय आसते तावत्पर्यन्तमित्यर्थः Sy. पितॄणामर्थाय। पितॄणामस्य स्वर्गादप्रच्युतिहेतोः। प्रजासन्तानादेरविच्छेदार्थमित्यर्थः Sk.
११. तिर आ० P. D. M.
१२. तुग्रस्य गृहं प्रति Sy. वर्तिर्वर्तन्या मार्गेण Sk.
१३. वर्तिं वृ० P. वर्तिवृ D.
१४. Omitted by D. विजेन्यमिति दूरस्थं ब्रुवते। दूरे वर्तमानम् Sy. विजेतृ शत्रूणाम् Sk. १५. दिवे० M.
१६. मह P. १७. जाय० M. ज्ञायते लोकैः प्रकाशमित्यर्थः Sk.
१८. शम्बरहननरूपम् Sy. शम्बरवधे Sk.
१९. V. Mādhava ignores वृषणा
* वाणी इति। PP. † पती इति। PP.
२०. युवयोः। अश्विनौ! omitted by P. and D. ०नाः M.
२१. शोभनात्थं P.
२२. युवयोरेव योग्यमित्यर्थः Sk.
२३. वननीयौ प्रशस्यावश्वौ Sy. वाणी। अपठितमपीदमिह द्यावापृथिवीनामधेयम्। द्यावापृथिव्यौ Sk.

बडवे[1]। गच्छतः[2]। अस्य। शर्धेन[3] प्राप्तव्यं काष्ठमित्यर्थः[4]। युवयोः। पतित्वम्[5]। युवाभ्यां[6] सख्यसिद्ध्य[7]-र्थम्। जग्मुषी[8]। सूर्यस्य दुहिता[9]। अवृणीत। युवाम्[10]। पती। स्वयंवरे जेतारौ[11]!

युवं रेभं परि॑षूतेरुरुष्यथो* हि॒मेन॑ घ॒र्मं परि॑तप्त॒मत्र॑ये।
यु॒वं श॒योर॑व॒सं पि॑प्यथु॒र्गवि॒ प्र दी॒र्घेण॒ वन्द॑नस्ता॒र्यायु॑षा† ॥६॥

युवं रेभम्। युवाम्। रेभम्[12]। उदकेन परिष्कृतम्[13][14]। ततो रक्षितवन्तौ। तथा सर्वतस्तप्तम्[15]। अग्निम्[16]। अत्रये। शीतेन वृष्ट्युदकेन[17] शमितवन्तौ। युवाम्। शंयोर्ऋषेः[18]। गवि[19]। पयोलक्षणमव[20]-समन्नम्[21]। आप्यायितवन्तौ। कूपे पतितो[22] वन्दनः[23]। दीर्घेण। आयुषा[24] दत्तेन कूपाद् युवाभ्याम्। उत्तारितः[25]।

---

१. ०वेव P. बेव D.

२. सर्वेभ्यो देवेभ्यः पूर्वं प्रापयामासतुः Sy. यमु बन्धने। सुवर्णेन बद्धवत्यौ Sk.

३. आजिधावनसमयेऽस्य रथस्य यच्छर्ध्यं प्राप्यमादित्याख्यमवधिभूतं लक्ष्यम् Sy. शर्ध इति बलनाम। शर्ध एव शार्ध्यम्। ... बलं च बद्धवत्यौ। बलवन्तं चैनं कृतवत्याविंत्यर्थः Sk.

४. काष्ठमिवात्यर्थं P.

५. पतित्वम्। चतुर्थ्यर्थे द्वितीया। पतित्वाय। सख्याय च। एतौ मे पती च सखायौ च स्यातामित्येवमर्थमित्यर्थः Sk.

६. द्वाभ्यां P.

७. ध्य० P. D.

८. आजौ जिता युवां प्रत्यागता सतीत्यर्थः Sk.

९. सुता D.

१०. ०णीता युवाती P.

११. V. Mādhava ignores आ

* परिऽसूतेः। उरुष्यथः। PP.

† तारि आयुषा। PP.

१२. ऋषिम् Sy.

१३. परितः प्रेरकादुपद्रवात् कूपपतनाद्वा Sy. परिषूतेः। षू प्रेरणे। असुरैस्त्वके सर्वतः प्रेरणात्। निमज्जनादित्यर्थः Sk.

१४. ०त P. D.

१५. ०तस्ततम् P. ०तः ततम् D. ०र्वतस्तम् M.

१६. असुरैः पीडार्थं प्रक्षिप्तं दीप्यमानं तुषाग्निम् Sy. अग्निकूटम् Sk.

१७. शीतेनोदकेन। ... यद्वा हविषामत्रये भक्षयित्रेऽग्नये परितप्तं सूर्यकिरणैः सन्तप्तं घर्मम्। अहर्नामैतत्। अहर्हिमेन वृष्ट्युदकेन हविःसम्पादकव्रीह्याद्युत्पत्त्यर्थमवारयेथाम् Sy.

१८. शयो० M. P. शेयो D. शयोः, एतत्सञ्ज्ञस्य ऋषेः Sy. शयो राज्ञः Sk.

१९. निवृत्तप्रसवायां धेनौ Sy.

२०. अवसं पथ्योदनमुच्यते। पयोलक्षणं पथ्योदनम् Sk.

२१. अवसन्नम् M. अवसं रक्षकं पयः Sy.

२२. पतितत: D.

२३. वन्दन P.

२४. ०णवायु० D.

२५. प्रवर्धितः। प्रपूर्वस्तिरतिर्वर्धनार्थः Sy. प्रवर्धितः Sk.

युवं वन्दनं निर्ऋतं जरण्यया रथं न दस्रा करणा समिन्वथः ।
क्षेत्रादा विप्रं जनथो विपन्यया प्र वामत्र विधते दंसना भुवत् ॥७॥

युवं वन्दनम् । युवम्[1] । वन्दनम्[2] । निर्गतम्[3] । जरया युवत्वात् पुनरपि जीर्णम् । रथम्[4] । इव । दर्शनीयौ[5] ! चक्षुरादिभिः[6] । सम्पूरितवन्तौ[7] । तस्य ऋषेः[8] पुत्रमिच्छतो भार्यायाः पुत्रम्[9] । मेधाविनम् । आजनथो[10] यौवनप्रदानेन । तस्य स्तुत्या[11] प्रीतौ । युवयोः[12] । कर्म[13] । परिचरते वन्दनाय । अस्मिन्नभ्युदये । प्राभवत्[14] ।

अगच्छतं कृपमाणं परावति पितुः स्वस्य त्यजसा निबाधितम् ।
स्वर्वतीरित ऊतीर्युवोरह चित्रा अभीके अभवन्नभिष्टयः ॥८॥

अगच्छतम् । अगच्छतम्[15] । स्तुवन्तम् । दूरे स्थितम्[16] । पितुः । आत्मीयस्य । त्यागेन[17] । निबा-

---

१. युवाम् Sy.

२. ०न P.

३. निःशेषेण प्राप्तम् Sy. निश्चयेन गतं प्राप्तम् । व्याप्तमित्यर्थः Sk.

४. यथा कश्चिच्छिल्पी जीर्णं रथं पुनरप्यभिनवं करोति तद्वत् Sy. यथा कश्चित् तक्षा पुराणं रथं पुनर्नवं कुर्यात् Sk.

५. ०या M.

६. कर्मणां कर्तारौ Sy. करणा करणेन पुनर्यौवनस्य Sk.

७. पू० P. समधत्तं, पुनर्युवानमकुरुतम् Sy. सम्यग्व्याप्तवन्तौ Sk.

८. तस्यर्षेः M. कश्चिदृषिर्मृतभार्यो वृद्धश्च पुत्रकामोऽश्विनौ तुष्टाव । तस्याश्विनावयोनिजं क्षेत्रात् पुत्रं जनयाञ्चक्रतुरिति । तदेतदिहोच्यते Sk.

९. क्षेत्रात् आ । आकारः समुच्चये । मातुरुदरलक्षणाज्जन्मस्थानात् Sy. कृष्टा भूमिः क्षेत्रमुच्यते । ततः Sk.

१०. ०थ M. जनयथश्च Sy. जनितवन्तौ युवाम् Sk.

११. स्तुत्या गर्भस्थेन वामदेवेन स्तुतौ सन्तौ Sy. स्तुतौ सन्तावित्यर्थः Sk.

१२. प्रवामत्र । प्रेत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । अत्रेत्यपि प्रथमार्थे सप्तमी । प्रवृत्तिर्युवयोरेषा Sk.

१३. रक्षणात्मकं कर्म Sy. प्रवृत्तिर्युवयोरेषा क्षेत्रजननलक्षणा . . . दंसना दर्शनीया । . . . युवां मुक्त्वा नान्यस्य कस्यचिदीदृशी प्रवृत्तिरित्यर्थः Sk.

१४. रक्षितुं समर्थं भवतु Sy.

१५. युवां रक्षणार्थं गतवन्तौ Sy. चक्षुःप्रदानार्थं गतवन्तौ युवाम् Sk.

१६. दूरदेशे समुद्रमध्ये Sy.

१७. क्रोधेन Sk.

धितमृज्राश्वम्[1]। अभ्युदयवत्यः[2]। ऊतयः[3]। युवयोः[4]। एव[5]। अत्र ? (इतः) भवन्ति। चित्राणि[6] च। अभ्येषणानि[7]। अन्तिके[8]। भवन्ति।

उत स्या[*] वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति[†]।
युवं दधीचो मन आ विवासथोऽथा शिरः प्रति वामश्व्यं वदत् ॥९॥

उत स्या वाम्। अपिच। सा[9]। वाम्[10]। मक्षिकाजातिः[11]। रसवन्मधु[12]। याचितवती युवयोः[13]। सोमस्य। मदे सति[14]। औशिजश्च। वामाह्वयति कक्षीवान्[15]। दधीच ऋषेर्मधुप्रदानार्थम्[16]। मनः। आराधितवन्तौ। ततः। भवद्भ्यां प्रतिहितमस्य[17] अश्व्यम्[18]। तत् शिरः[19]। ब्रह्म[20] प्रत्यवदत्[21] [22]।

१. पीडितं भुज्युम् Sy.
शापजनितेनान्ध्येनात्यन्तपीडितम् Sk.
२. ०ज्वाश्वम् M.
३. शोभनगमनयुक्ताः Sy.
सर्वैः परिचारकैस्तद्वत्यः। सहेत्यर्थः Sk.
४. यज्ञान् प्रति गतयः Sk.
५. अहशब्दस्तु पदपूरणः Sk.
६. चित्रानि P. D. चित्रा M.
चायनीयाः Sy. विचित्राः पूज्या वा Sk.
७. सर्वैः प्राणिभिरभ्येषणीयाः Sy.
अभियागाश्च Sk.
८. आसन्ने यागकाले। ... सर्वैः परिचारकैः सहेतः स्थानाद्यज्ञान् प्रत्यासन्ने यागकाले युवां गच्छथः। तत्र चाभीज्येथे इत्यर्थः। अथवाऽभीक इति सङ्ग्रामनाम। अभिष्टिशब्दोऽपि इषेर्गत्यर्थस्य। सर्वैः स्वैर्योद्धृभिः सह गच्छथो युवां सङ्ग्रामे। गत्वा चाभिगच्छथः शत्रूनित्यर्थः Sk.
* स्या। PP. † हुवन्यति। PP.
९. यस्यै मधु दत्तवन्तौ स्थः सा Sk.
१०. वा D. युवाम् Sy. ११. सरघा मधुकामा Sy. १२. मधुमन्तौ Sy. मधुसंयुक्तम् Sk. १३. अस्तौत् Sy. मधु मह्यं दत्तमित्येतद् व्यक्तमुक्तवतीत्यर्थः। ... अथवा मक्षिकाशब्देनात्र कुतश्चिन्मक्षिकासादृश्याद् दधीचः ... उच्यते। सा युवाभ्यां मधुशब्दसंयुक्तं परं ब्रह्म व्यक्तमुक्तवती Sk.
१४. सो मदे M. सोमस्य पानेन युवयोः ... हर्षे निमित्तभूते सति Sy.
निमित्त एषा सप्तमी। ... प्रयोजनस्य चात्र निमित्तत्वेन विवक्षा। सोमजन्यो यो मदस्तदर्थमित्यर्थः Sk.
१५. युवामाश्रयति। आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः। अहमुशिजः प्रपौत्रः कक्षीवानाह्वयामीत्यर्थः। अथवा उशिजः पुत्र औशिजो दीर्घश्रवाः। स युवामाहूतवान् Sk.
१६. ०र्थं P. १७. वां युवां प्रति। युवाभ्यामित्यर्थः Sk. १८. श्व्यं M. तृतीयार्थे द्वितीया। अश्वस्यावयवभूतेन Sk. १९. शीरः D. स ऋषिराश्वेन शिरसोपदिष्टवानित्यर्थः Sy.
तृतीयार्थे द्वितीया। शिरसा। ... अथवा शिरोऽश्व्यमिति स्वार्थं एव प्रथमा। शिरस एव वदनं प्रति कर्तृत्वम्। शिर उदितवदिति Sk.
२०. मध्वाख्यम् Sk. २१. प्रत्यपत् P.
२२. V. Mādhava ignores युवम्। वाम्।

युवं पेदवे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः ।
शर्यैरभिद्युं पृतनासु दुष्टरं* चर्कृत्यमिन्द्रमिव चर्षणीसहम् ॥१०॥

युवं पेदवे । युवाम्[1] । पेदवे[2] । बहुभिर्वरणीयम्[3] । अश्विनौ ! शत्रूणाम्[4] । तारकम् । श्वेतमश्वमदत्तम्[5] । विशरणकुशलैः[6] । सङ्ग्रामेषु । तरितुमशक्यम्[7] । अभिगतदीप्तिम्[8] । सङ्ग्रामेषु पुनः[9] पुनः प्रयोज्यम्[10] । इन्द्रमिव । शत्रूणामभिभवितारम्[11] ।[12]

I.120.

का राधद्धोत्राश्विना वां को वां जोष† उभयोः । कथा विधात्यप्रचेताः‡ ॥१॥

का राधत्[13] । कीदृशी । वाक्[14] । वाम् । आराधयति[15] । अश्विनौ ! कः । वां स्तोता[16] । युवयोः उभयोः[17] । पर्याप्त्यर्थं[17] भवति । केन वा प्रकारेण वाम्[18] । अज्ञः[19] । परिचरति ।

विद्वांसाविद्दुरः§ पृच्छेदविद्वानित्थापरो अचेताः । नू चिन्नु मर्ते अक्रौ ॥२॥

विद्वांसावित् । विद्वांसौ[20] । एव[21] । द्वाराणि[22] । प्रष्टुमर्हति[23] । अविद्वान्[24] । इत्थम्[25] ।

---

* दुस्तरम् । PP. १. युवं D.
२. पेदुनाम्ने राज्ञे Sy. राज्ञे Sk.
३. बहुना वरणीयं वारयितारं वा शत्रूणाम् Sk. ४. सङ्ग्रामे स्पर्धमानानाम् Sy. स्पृधां सङ्ग्रामाणाम् Sk.
५. इन्द्राल्लब्धम् Sy. ६. शीर्यन्त इति शर्या योद्धारस्तैः Sy. शर्या इषवस्तैः Sk.
७. ति? (त०) रतिर्हननार्थः।...दुर्हणम् Sk.
८. अभिगच्छतदी० M. दीप्तमित्यर्थः Sk.
९. सर्वेषु कार्येषु Sy. १०. इदमपि कृन्तेर्वधकर्मणो रूपम्। अत्यर्थं हन्तारम् Sk.
११. मनुष्याणां शत्रुभूतानाम् Sk.
१२. M. D. puts the figure ॥११९॥ here to indicate the end of one hundred and nineteenth hymn. No such number is given in P. and M.
† जोषे । PP. ‡ अप्रऽचेताः। PP.
१३. M. adds होत्रा after राधत्
१४. स्तुतिलक्षणा Sy. होत्रा। हूयतेऽसाविति होत्राऽऽहुतिः। यज्ञनाम वा होत्राशब्दः। आहुतिरिज्या वा Sk.
१५. आर० M. प्रीतौ करोति। युवयोर्माहात्म्यानुरूपा स्तुतिर्नास्तीत्यर्थः Sy.
१६. युष्मद्गुणाभिज्ञः कश्चिदपि नास्तीत्यर्थः Sy. यजमानः स्तोता वा Sk.
१७. किंप्रकारस्य यजमानस्य स्तोतुर्वा युवामुभावपि प्रीयेये इत्यर्थः Sk.
१८. Omitted by P.
१९. युवयोर्माहात्म्यमजानंश्च।...युष्मद्विषयं परिचरणमपि न कर्तुं शक्यमित्यर्थः Sy.
§ विद्वांसौ । इत् । दुरः । PP.
२०. सर्वज्ञौ Sy. यौ ... जानन्तौ Sk.
२१. इच्छब्दः पदपूरणः Sk.
२२. द्वाराणि स्तुतिपरिचरणयोरुपायभूतान् मार्गान् Sy. दुरः स्तुतेर्द्वाराणि, उपाया इत्यर्थः Sk. २३. पृच्छति सर्वं स्तोता Sk. २४. अजानन् Sk.
२५. इत्थेति सत्यनाम। सत्यमेव Sk.

अन्यः।[1] चेतोविवर्जितः।[2] क्षिप्रम्।[3] एव।[4] मर्त्येषु।[5] अनाक्रान्तौ।[6]

ता वि॒द्वांसा॑ हवामहे वां॒ ता नो॑ वि॒द्वांसा॒ मन्म॑ वोचेतम॒द्य ।
* प्रार्च॒द्दय॑मानो यु॒वाकुः॑ ॥३॥

ता विद्वांसा। तौ।[7] विद्वांसौ।[8] हवामहे। वाम्।[9] तौ। अस्माकम्।[10] विद्वांसौ।[9] अभिलषितम्।[11] वाचा वोचेतम्।[12] अद्य। स्तौति।[13] हवींषि ददत्।[14] युष्मत्कामः कक्षीवान्।[15]

वि पृ॑च्छामि पा॒क्या॒३ न दे॒वान्वष॑ट्कृतस्याद्भु॒तस्य॑ दस्रा ।
पा॒तं च॒ सह्य॑सो यु॒वं च॒ रभ्य॑सो नः ॥४॥

वि पृच्छामि।[16] पक्तव्यप्रज्ञो विद्वानहं भूत्वा।[17] वषट्कृतस्य।[18] महतः सोमस्य पानार्थम्।[19]

---

१. अश्विभ्यामन्यः Sy. न्यूनशक्तिः Sk.
२. ०तोवर्जि० M.
चेतसा ज्ञानेन रहितः। तस्मादश्विनावेव पृच्छेदित्यर्थः Sy.
ज्ञातुमसमर्थः Sk.
३. नु इति पदपूरणः Sk.
४. मर्ते मनुष्ये स्तोतरि भक्तानुग्राहकतया सनि धत्त इति वाक्यशेषः Sy.
षष्ठ्यर्थेऽत्र सप्तमी। मर्त्यस्य मनुष्यस्य Sk. ५. शत्रुभिः Sy.
आक्रमितारौ। वशीकर्तारावित्यर्थः Sk.
६. V. Mādhava ignores नु
* प्र। आर्चत्। PP.
७. ता P.
८. सर्वज्ञौ Sy.
९. तावाहूतौ विद्वांसा अभिज्ञौ युवाम् Sy.
१०. अस्मभ्यम् Sy.
११. मननीयं ज्ञातव्यं स्तोत्रम् Sy.
मननं मन्म स्तुतिः Sk.
१२. ब्रुवाणौ भूयास्तम् Sy.
यया युवामेव स्तुमस्तां वोचेतं कथयतमित्याशास्महे Sk.
१३. अर्चतिरत्र शुद्धोऽपि सन्नन्तो द्रष्टव्यः। उत्तमपुरुषस्य स्थाने प्रथमपुरुषः। प्रकर्षेणार्चिचिषामि। स्तोतुमिच्छामीत्यर्थः Sk.
१४. स्तुत्या संयोजयन् वा Sy.
१५. Omitted by P.
† पाक्या। PP.
१६. वक्त ० P. M.
पक्तव्यप्रज्ञान् स्वपरिपक्वमतीनन्यान् देवान् न पृच्छामि। किन्तु युवामेव सर्वज्ञौ पृच्छामीत्यर्थः Sy.
प्रज्ञायाश्च यत्परिपक्वत्वं तदश्विनोरेवापदिश्यते। परिपक्वप्रज्ञौ युवाम् Sk.
१७. विद्वान ० P. १८. ०षड्कृ० P.
वषट्कारेणाग्नौ हुतस्य Sy.
१९. आश्चर्यभूतस्य महतः सह्यसोऽतिशयेन बलवतो बलोत्पादकस्य सोमस्य स्वांशलक्षणमेकदेशं पातं च Sy.
वषट्करणं होमः। . . . तृतीयार्थे चोभयत्र षष्ठी। वषट्कारहुतेन सोमेन महतास्मदीयेन। साकाङ्क्षत्वात्तृप्यतमिति वाक्यशेषः Sk.

न । अन्यान् देवान् । विपृच्छामि[1] । युवामेव । मदीयं सोमं सहीयांसम्[2] । पिबतं कृणुतम्[3] । च । अस्मान्[4] । वेगवतः[5] ।

**प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियो वाम् ।**
**प्रैषयुर्न* विद्वान् ॥५॥**

प्र या घोषे । घोषो नाम ऋषिस्तस्मिन्[6] । या वाक्[7] । भृगौ[8] । च । प्रकर्षेण । शुशुभे[9] युष्मत्स्तुतिभूता । यया[10] च तादृश्या । वाचा । पज्रकुले जातः[11] कक्षीवान् । अधुना । वाम् । यजति । स तया स्तुत्या कक्षीवानिदानीम्[12] । प्रभवतु[13] ।

**श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वाम् ।**
**आक्षी† शुभस्पती दन् ॥६॥**

श्रुतं गायत्रम् । आशृणुतम्[14] । गायत्रं[15] साम । अन्धत्वात् स्खलितं गच्छत[16] ऋज्राश्वस्य[17] । स

---

१. विविधं स्तुत्युपायान् पृच्छामि Sk.
२. सह्यसः सहीयसोऽतिशयेनाभिभवितुः शत्रुबलात् Sk.
३. रक्षतं च Sk.
४. अतिशयेन रभस्विनः प्रौढोद्यमान् Sy. वेगवत्तराच्च Sk.
५. V. Mādhava ignores दस्रा । च
* प्र । इषऽयुः । PP.
६. घोषाख्यायाः पुत्रे सुहस्त्याख्य ऋषौ । ...घोषा नाम काचिद् ब्रह्मवादिनी कक्षीवतः पुत्री । अत्रोपचारात्तद्वाचकं प्रातिपदिकं पुत्रे वर्तते Sy.
घोष्यमाणत्वाद् घोषस्तोमः, तस्मिन् । सप्तमीश्रुतेः साकाङ्क्षत्वात् स्थितेति वाक्यशेषः Sk.
७. वा P.  ८. भृगौ P.
षष्ठ्यर्थे च सप्तमी । भृगोरिव Sk.
९. शोभते Sk.
१०. सापि शोभत इत्यर्थः Sy.
११. वज्र० P. M.
पाजो हविर्लक्षणमन्नम् । तद्वान् पज्रियः । अथवा पज्रा अङ्गिरसः । तेषामपत्यभूतः पज्रियः । . . . आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः Sk.
१२. इषयुर्न । इषमन्नमात्मनः कामयमानश्च विद्वान् स्तुत्यभिज्ञः कक्षीवानृषिः प्रभवतु । युष्मदनुग्रहात् सम्पूर्णकामो भवत्वित्यर्थः Sy.
इषयुर्न अन्नकाम इव कश्चित् Sk.
१३. V. Mādhava ignores इषयुः । विद्वान्
† आ । अक्षी इति । शुभः । पती इति । PP.
१४. अ० P. M.
लडर्थे लोट् । शृणुथः Sk.
१५. गातव्यं गायत्रीयुक्तं गायत्रसाम्ना निष्पाद्यं वा स्तोत्रम् Sy.
गीयतेऽनेनेति गायत्रं स्तोत्रम् Sk.
१६. उपगच्छतस्स्तोतुः Sk.
१७. ऋज्रास्य M.

ह्यहम्[1]। इव[2]। वाम्[2]। अश्विनौ ! तुष्टाव[3]। अक्षी[4]। आददानो भवद्भ्याम्[5]। शुभः[6]। पती[6] !

**युवं ह्यास्तं महो रन्युवं वा यन्निरततंसतम्* ।**
**ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः† ॥७॥**

युवं ह्यास्तम्। युवम्[7]। हि[8]। आस्तम्[9]। आढ्यस्य महतो धनस्य। दातारौ। युवाम्[10]। एव।
यदि[10] कञ्चन[11]। निरततंसतं[12] तसिरुपक्षयकर्मा ऽऽढ्यं दरिद्रं च पुरुषं कुरुतः। तौ। नः। वासयितारौ[13] !
सुगोप्तारौ। भवतम्[14]। रक्षतं च। अस्मान्। स्तेनात्[15]। अघमिच्छतः[16]।

**मा कस्मै धातमभ्यमित्रिणे‡ नो माकुत्रा नो गृहेभ्यो धेनवो गुः ।**
**स्तनाभुजो§ अशिश्वीः ॥८॥**

मा कस्मै। मा। अस्मान्[17]। कस्मै चित्। मैत्रीवर्जिताय। अभिदत्तम्[18]। मा च। अस्मद्-
गृहेभ्यः[19]। धेनवः[20]। अप्रज्ञाते[21] देशे। अगमन्[22]। स्तनं वत्सान्[23] भोजयन्त्यः स्तनैर्वास्मान् रक्षन्त्यः।

१. हिशब्दस्तु पदपूरणः Sk. २. अहंचिदहमपि Sk. ३. स्तुतवान् स्तौमि वा Sk.
४. अक्षिणी Sk. ५. भूतकालेऽत्र शतृप्रत्ययो द्रष्टव्यः। व्यत्ययेन चैकवचनम्। मर्यादया दत्तवन्तौ युवामृज्राश्वाय Sk.
६. शोभनस्य कर्मणः पालयितारौ जलस्य वा स्वामिनौ। ... तस्माद्द्व मह्यमप्यभिमतफलं प्रयच्छतमिति भावः Sy. वृष्टिलक्षणस्योदकस्यापि पती Sk.
* यत्। निः ऽ अततंसतम्। PP.
† वृकात्। अघऽयोः। PP.
७. युवाम् Sy. यौ युवाम् Sk.
८. हिशब्दस्तु पदपूरणः Sk.
९. आन्ध्यमा ० P. लडर्थे चात्र लङ्। भवथः Sk.
१०. वा यत्। वाशब्दश्चशब्दस्यार्थे। यच्छब्दस्तु खलु पुंद्वितीयाविभक्तिकः। यौ च युवाम् Sk. ११. किं M.
१२. धनानि निरगमयतम्। रक्षकौ विनाशकावपि युवामेवेत्यर्थः Sy. अत्यर्थमुपक्षयथाः। यस्मै देयं तस्मै च धनं दत्तं य उपक्षयि ? (क्षे) तव्यस्तमुपक्षयथ इत्यर्थः Sk.
१३. प्रशस्यौ वसुमन्तौ वा Sk.
१४. रक्षणं M. १५. प्राणिविशेषात् Sk.
१६. पापफलमस्माकमिच्छतः Sy. भक्षयितुमिच्छत इत्यर्थः। अथवा ... वृकशब्द आदातृवचनः। आदातुश्चोरादेः पापकामात् Sk.
‡ धातम्। अभि। अमित्रिणे। नः। मा। अकुत्र। PP. § स्तनऽभुजः। PP.
१७. नोऽस्माकम् Sk.
१८. आभिमुख्येन मा स्थापयतम् Sy. किम्? द्वितीये पादे धेनूनामुपादानात्तत्सान्निध्याद् धेनूर्वा धनं वा Sk.
१९. दुह्यन्ते या गावस्ताः Sk.
२०. अस्माभिरगम्ये प्रदेशे Sy. यन्न ज्ञायते किन्तदिति तदर्कि चोरस्थानम्। तत्राकुत्र। अज्ञेये चौरस्थान इत्यर्थः Sk.
२१. Omitted by M.
२२. Omitted by P. and D. गच्छन्तु Sy. चौरैर्मापहरिषतेत्यर्थः Sk.
२३. ०मं स्तेन M. स्तनैर्वत्सान् मनुष्यांश्च पालयन्त्यः Sy.

शिशुर्वजिता[1] वत्सानपहाय मागमयन्निति[2]।

**दुहीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै ।**
**इषे च नो मिमीतं धेनुमत्यै ॥९॥**

दुहीयन्। युष्मत्कामाः[3]। मित्रधारणार्थं[4] कामात्। युवां दुहीयन्[4]। तथा सति धनाय[5]। बलवते[6]। अस्मान्। कुरुतम्[7]। तथा धेनुयुक्ताय[7] च। अन्नाय[8]। कुरुतमिति[9]।

**अश्विनोरसनं रथमनश्वं वाजिनीवतोः । तेनाहं भूरि चाकन ॥१०॥**

**अश्विनोरसनम्।** अश्विनोः। अभजम्[10]। रथम्। अश्वरहितम्। अन्नवतोः[11]। तेन। अहम्[12]। बहु[13]। कामये[14]।

**अयं समह मा तनूह्याते* जनाँ अनु । सोमपेयं सुखो† रथः ॥११॥**

**अयं समह।** अयं[15] त्वम्। स्तुतियुक्त[16]! रथ! मा[17]। विस्तीर्णं[18] कुरु। सो-

---

१. शिशुना वत्सेन विरहितास्मदीये गृहेऽशयाना वा सत्यः Sy. गृहेषु बद्धवत्सका इत्यर्थः। युष्मत्प्रसादेनेति शेषः Sk.
२. मागमन्निति is suggested.
३. यष्टुं का० M. युष्मान् का० P. स्तुतिभिर्यावयितारः संयोजयितारो वा स्तोतारः Sy. युवाकु। यु मिश्रणे। मिश्रणीयं पयः। पानार्हमित्यर्थः। युष्मत्कामं वा युवाकु। युवयोर्यागयोग्यमित्यर्थः Sk.
४. मित्रधितये। धेट् पान इत्यस्य दधातेर्वा दानार्थस्येदं रूपम्। मित्राणां पानार्थं मित्रेभ्यो वा दानार्थम् Sk.
५. युष्मत्सकाशाद्धनानि दुहन्ति प्राप्नुवन्ति Sy. दुह्यताम् Sk.
६. सर्वत्रात्र द्वितीयार्थे चतुर्थी। यच्च नोऽस्मभ्यं मिमीतम्। मिमीतिर्याच्ञाकर्मा। याच्ञयाऽत्र तत्पूर्वकं दानं लक्ष्यते। दत्तम्। वाजवत्यै बलवतीम्। बलसहितं धनं न केवलमित्यर्थः Sk.
७. धेनुमतीम्। धेनुभिस्सहितमन्नं न केवलमित्यर्थः Sk. ८. अन्नं च Sk.
९. अस्मभ्यं स्तोतृभ्यो बलयुक्तं धनं गोयुक्तमन्नञ्च प्रयच्छतमित्यर्थः Sy.
१०. अहं स्तोता Sy. स्तुतवानित्यर्थः Sk.
११. वाजोऽन्नं बलं वा। तद्वत्क्रियावतोः Sy. रथेन Sy. वाजो बलम्। तद्वती सेना वाजिनी। अन्नं वा हविर्लक्षणं वाजम्। तद्वती। सत्राहीनादियागसन्ततिर्वाजिनी। तद्वतोः। स्वार्थिको वैको मत्वर्थीयः। बलवतोरन्नवतोर्वा Sk.
१२. स्तुतेन हेतुना Sk.
१३. प्रभूतं श्रेयः Sy. १४. यस्मात् तं रथं स्तुतवांस्तस्माद् बहु यद्यदभिप्रेतं तत्सर्वमश्विनौ याच इत्यर्थः Sk.
* तनु। ऊह्याते। PP.
† सुऽखः। PP. १५. पुरोवर्ती Sy.
१६. धनेन सहित Sy. मह उत्सवः पूजा वा। सहितो महेन समहो नित्योत्सवयुक्तः पूज्यो वा। व्यत्ययेन चात्रैकवचनम्। हे समहौ। नित्योत्सवयुक्तौ पूज्यौ वा Sk.
१७. मा माम् Sy. १८. पिर्णं P. पुत्रपौत्रधनादिभिः समृद्धं कुरु। यद्वाऽयम्, अयमानं त्वां प्राप्नुवन्तं मामिति योज्यम् Sy. तनु। लडर्थेऽयं लोट्। प्रथमपुरुषस्य स्थाने मध्यमपुरुषः। तनुते। सर्वकामसमृध्या विस्तारयतीत्यर्थः Sk.

ऽयमूह्यतेऽश्विभ्याम्[1]। जनेषु[2]। सोमपेयम्[3]। प्रति। सुद्वारः[4]। रथः।

**अध स्वप्नस्य निर्विदेऽभुंञ्जतश्च रेवतः। उभा ता बस्रि नश्यतः॥१२॥**

अध[5] स्वप्नस्य। भिक्षमाणः कक्षीवानलभमानो धनं कदर्यं निन्दति—

अध[6]। स्वप्नस्याहं[7] रात्रौ दृष्टस्य[8] प्रातरदृश्यमानार्थस्य। आश्रितानरक्षतः कदर्यतया वाऽभुञ्जानस्य[9]। धनवतः। च। निर्विदे[10]। तौ। उभावपि। क्षिप्रम्। नश्यत[11] इति[12] निर्वेदः[13]।

## I.121.

**कदित्था*[*] नूः पात्रं देवयतां श्रवद्गिरो अङ्गिरसां तुरण्यन्।**
**प्र यदानड्विश[†] आ हर्म्यस्योरु क्रंसते अध्वरे यजत्रः॥१॥**

कदित्था नृन्[14]। देवानिच्छताम्[15]। अङ्गिरसामस्माकम्[16]। इत्थं[17] प्रवृत्ताः[18]। स्तुतीः[19]। इन्द्रः।

---

१. अश्विभ्यां नीयते, अतोऽश्विभ्यां यद्दीयते, तत्सर्वं रथ एव ददातीति रथं सम्बोध्य प्रार्थना Sy. प्राप्यते Sk.

२. स्तोतृजनेषु Sy. मनुष्यान्छत्रुभूतान् प्रति Sk. ३. सोमपानम् Sy.

४. शोभनावकाशः, सुखहेतुर्वा Sy.

५. अधः M. ६. इदानीं प्रभातसमये Sy. अधशब्दोऽत्र पदपूरण एतस्मादित्यस्यार्थे वा। एतस्मात् पञ्चभिः सूक्तैरश्विनोः स्तुतेः कारणात् Sk.

७. स्वप्नं प्रति ... निर्विण्णोऽस्मि Sy. स्वप्नशब्देनात्र यः शयितुर्दुःस्वप्न इष्यते स उच्यते ? (०र्दुःस्वप्न उच्यते स इष्यते) न स्वप्नमात्रम्। द्वितीयार्थे च षष्ठी। दुःस्वप्नम् Sk.

८. अलभमानो विशत्मत्विजः प्रकर्षेण व्याप्नोति ततो स्मादिन्द्रः तस्य यज्ञे गंतुं विस्तीर्णमवकाशं क्रमयेत यज्ञेषु य रात्रौ P.

९. परानरक्षतः ... धनवतश्च पुरुषस्य, एवम्भूतं पुरुषं प्रत्यपि निर्विण्णोऽस्मि Sy. इयमपि द्वितीयार्थ एव षष्ठी। अभुञ्जानं च। भोक्तुं चासमर्थमित्यर्थः। कम् ? सामर्थ्याज्जाठराग्निम्। ... सति भोज्ये या भोजन? (ना)शक्तिस्तां चेत्यर्थः Sk.

१०. निर्वेदयामि निस्सत्तां करोमि। नाशयामीत्यर्थः Sk.

११. अश्विनोः प्रसादेन मत्तो नश्यताम् Sk.

१२. स्वप्नदृष्टः पदार्थः प्रातर्नोपलभ्यते, कदर्यस्येव धनमभुक्तमदत्तं सत् क्षिप्रमेव नश्यति। तदुभयविषयो निर्वेदो मां बाधत इत्यर्थः Sy.

१३. Ms. D. puts the figure ॥१२०॥ here to indicate the end of one hundred and twentieth hymn. No such number is given in P. and M.

* कत्। इत्था। नून्। PP.

† यत्। आनट्। विशः। PP.

१४. नः M. १५. देवं द्योतमानं दानादिगुणयुक्तं वेन्द्रमात्मन इच्छताम् Sy.

१६. अङ्गिरसोऽपत्यभूतानाम् Sk.

१७. इत्था सत्यम् Sk.

१८. प्रवृद्धाः M. १९. ०तिरि० P. D.

कदा । शृणोति[१] । आश्रितान्[२] वा तान्[३] नॄन्[२] । क्षिप्रकारी[४] । यदा । कामानामाहरणशीलस्येन्द्रस्य[५] यजमानः । विश[६] ऋत्विजः[७] । प्रकर्षेण । व्याप्नोति । ततोऽसाविन्द्रस्तस्य[८] यज्ञे गन्तुम् । विस्तीर्णमवकाशम् । क्रमते[९] । यज्ञेषु यष्टव्यः[१०] ।

**स्तम्भीद्ध द्यां स धरुणं प्रुषायदृभुर्वाजाय द्रविणं नरो गोः ।**
**अनु स्वजां महिषश्चक्षत व्रां मेनामश्वस्य परि मातरं गोः ॥२॥**

स्तम्भीद्ध द्याम्[११] । द्याम् । तस्तम्भ[१२] । उदकम्[१३] । च । सः । वर्षार्थं रश्मिभिर्दहति[१४] । महान्[१५] । हविष[१६] इन्द्रवत्[१७] स्तोतुर्भवति । नेता[१८] । गोरुदकस्य रश्मेर्वा[१९] । स्वजाताम्[२०] । उषसम्[२१] । महान्[२२] ।

---

१. शृणुयात् Sk.

२. नॄन् पाता नृणां स्तुतेर्नेतॄणां पुरुषाणां रक्षणशीलः Sy.
षष्ठयर्थेऽत्र च द्वितीया। मनुष्याणामस्माकं स्वभूतं पात्रं गृहचमसादि Sk.

३. Omitted by D.

४. गोरूपधनं प्रेरयन् Sy.
त्वरमाण इन्द्रः। पिबेदिति वाक्यशेषः Sk.

५. यदा स इन्द्रो हर्म्यस्य हर्म्योपलक्षितेन गृहेण युक्तस्य यजमानस्य सम्बन्धिनो विश ऋत्विग्लक्षणान् मनुष्यान्. . .आभिमुख्येन . . . प्राप्नोति । तदानीम् . . . अस्मदीये यज्ञे . . . यष्टव्यः सन्नुरु बहुलं क्रंसते क्रमते स्वयमेवोत्सहत इत्यर्थः Sy.
हर्तुः शत्रुधनानाम् । . . . अथवा हर्म्यमिति गृहनाम। सप्तम्यर्थेऽत्र षष्ठी। अध्वरे, इत्येतेन चास्य सम्बन्धः। . . . यज्ञगृहे योऽध्वरस्तस्मिन् Sk.

६. ०नोऽपि M.

७. विशत्मत्विजः P.

८. ततो ततो D.

९. करोतेरयम्। . . . क्रमेर्वा करोतेरर्थे। करोति। . . . क्रामतीन्द्रः। पुनः पुनः गच्छतीत्यर्थः Sk.

१०. V. Mādhava ignores आ

११. स्तभद्धि P.

१२. तैस्तैरुपकारैः प्रतिबद्धवान् Sk.

१३. सर्वस्य धारकं वृष्ट्युदकम् Sy.

१४. प्रुष्णाति सिञ्चति प्रवर्षतीत्यर्थः Sy.
क्षारयति मेघान् ? (त्) Sk.

१५. सूर्यात्मना, उरु विस्तीर्णं भासमानः Sy.
ऋभुः। मेघाविनामैतत्। मेघावी Sk.

१६. अन्नार्थं बलार्थं वा Sy.
अन्नाय सत्यलक्षणाय Sk.

१७. ०षेन्द्र० P. D.

१८. नैका M.
मनुष्याकारः Sk.

१९. पणिभिरपहृतस्य गोसमूहस्य वज्रस्य, उदकस्य किरणसमूहस्य वा Sy.
माध्यमिकाया वाचः Sk.

२०. स्वत एव प्रजापतेर्या जाता सा स्वजा। ताम् Sk.

२१. वृणोति तमसा सर्वमाच्छादयतीति व्रा रात्रिः। यद्वा । प्रकाशेन वृणोतीति व्रा उषाः Sy.
व्रां वरणीयां मेनां स्त्रियम्। भार्यामित्यर्थः Sk.

२२. महान् सूर्यरूपी इन्द्रः Sy.
इन्द्रः Sk.

अनुपश्यति[1]। श्रेत्युषोनाम[2] शाकपूणिपठितम्[3]। अश्वस्य[4]। निर्मात्रीं जनयित्रीमुषसं स्त्रियम्। रश्मेः[5]। मातरम्। पर्यकरोत्[6]।

**नक्षद्धवमरुणीः पूर्व्यं राट् तुरो विशामङ्गिरसामनु द्यून्।**
**तक्षद्वज्रं नियुतं तस्तम्भद्द्यां चतुष्पदे नर्याय द्विपादे ॥३॥**

नक्षद्धवम्। उषसः[7]। राजा[8]। यद्[9] मुख्यम्[10]। स्तोत्रम्[11]। व्याप्नोति। क्षिप्रः[12]। अङ्गिरसाम्[13][14]। विशां स्वभूतम्। दिवसेषु[15]। करोति च[16]। वज्रम्। नितरां पृथग्भावयितारम्[17]। तथा मनुष्यहिताय[18]। गवादिकाय। द्यामुपरि। अस्तभ्नात्[19]। द्विपदे च[20] यथासुखं स्थातुम्।

---

१. अनु पश्चात् पश्यति प्रकाशते। स्वयं प्रौढप्रकाशोऽपि स्वगत्या निष्पादिताया रात्रेरुषसश्च पश्चादुदेतीत्यर्थः Sy. आनुपूर्व्येण सर्वतः पश्यति। जानातीत्यर्थः Sk.

२. प्रेत्यु० P. प्रत्यु० M.

३. ०पूरणि ० P.

४. अपि चेदमपरमाश्चर्यं यदयमश्वस्य ...स्त्रियं वडवां गोर्मातरं जननीम्। परिर्वैपरीत्ये। विपरीतमकरोत्। कदाचिदिन्द्रो लीलयाऽश्वायां गामुत्पादयामास Sy.
अशू व्याप्तौ। व्याप्तुः प्रजापतेः Sk.

५. गोः। गन्तृत्वादिन्द्रोऽत्र गौरुच्यते। आत्मन एवेत्यर्थः। अथवा श्वा, इति रात्रिनाम। ... स्वजा चासौ स्वयमेव जायमानत्वात्। स्वयं जनयित्रीं ? (जनित्रीं) महानिन्द्रो जानाति रात्रिं नाम स्त्रियमश्वस्य मातरम्। अश्वग्रहणमत्रोपलक्षणार्थम्। अश्वादेः प्राणिमात्रस्य। सम्यगाहारपरिणामादिकरणेन मातृभूतां गोरुषसश्च Sk.

६. V. Mādhava ignores द्रविणम्

७. अरुणवर्णा आरोचमाना वोषसः Sy. यदा ... अरुणवरुणोषाः Sk.

८. राज M. राजयन् प्रकाशयन् Sy. राट्। आख्यातमेतत्। ... राजते दीप्यते उषस्युदितमात्रायामित्यर्थः Sk.

९. य P.

१०. पूर्वैर्ऋषिभिः प्रयुक्तम् Sy.

११. इदानीमस्माभिः क्रियमाणमाह्वानम् Sy. आह्वानं प्रति Sk.

१२. शृणोतु Sy. गच्छतीन्द्रः Sk.

१३. धनस्य प्रेरयिता Sy. तुर्विता वा शत्रूणाम् Sk.

१४. ऋषीणां स्तोतॄणाम् Sy. अङ्गिरसामृषीणां तदपत्यभूतानां वाऽस्माकम् Sk.

१५. अनुदिवसम् Sy. अनुशब्दोऽत्र ... वीप्सायां कर्मप्रवचनीयः। . . . अहान्यहानीत्यर्थः Sk.

१६. शुद्धोऽपि सोपसर्गो द्रष्टव्यः। संस्करोति Sk.

१७. हन्तव्येन सह नितरां युक्तम् Sy. प्रकर्षेण शत्रुभिः सहात्मनो मिश्रयितारम्। शत्रुशरीरेषु प्रवेष्टारमित्यर्थः Sk.

१८. नरेषु भवं नर्यम्। मनुष्येषु भवं यच्च चतुष्पाद् यच्च द्विपात्तस्य सर्वस्यार्थाय Sk.

१९. अभ्नात् M. यथाऽधो न पतति तथाऽकरोदित्यर्थः Sy. अत्यर्थं स्तभ्नाति तैस्तैरुपायैः Sk.

२०. विप० M.

**अस्य मदे॑ स्व॒र्यं॑ दा ऋ॒तायापी॑वृतमु॒स्रिया॑णा॒मनी॑कम् ।**
**यद्ध॑ प्र॒स॒र्गे त्रि॒ककु॑न्नि॒वर्त॒[*]दप॒ द्रुहो॒ मानु॑षस्य॒ दुरो॒[†] वः ॥४॥**

अस्य मदे। अस्य साम्नाय्यस्य[1] । मदे[2] । स्वकरणकुशलं[3] शब्दायन्ते हि गावो वत्सदर्शने स्वर्यम्[4] । दाः[5] । परिवृतम्[6] । गवाम् । अनीकम्[7] । यदि[8] । हि[9] । मानुषस्योद्योगे । युद्धप्रारम्भे[10] । त्रिष्वभिजनविद्याशौर्येषु[11] त्रिषु वा लोकेषूच्छ्रित इन्द्रः । निवर्तते[12] । ततोऽस्मै[13] द्रोग्धृणि[14] । द्वाराणि[15] । अपवृणोति[16] ।

**तुभ्यं॒ पयो॒ यत्पि॒तरा॒[§]वनी॑ता॒ राधः॑ सु॒रेत॑स्तु॒रणे॒ भु॒र॒ण्यू॒[‡] ।**
**शुचि॒ यत्ते॒ रेक्ण॒ आय॑जन्त सब॒र्दुघा॑या॒ः पय॑ उ॒स्रिया॑याः ॥५॥**

तुभ्यं पयः। त्वदर्थमात्मीयम् । सारम्[17] । यदा । द्यावापृथिवी[18] । नयतः[19] । शोभनवर्षादिरेत-[20]

---

* त्रिऽककुप् । निऽवर्त॑त् । अप॑ । PP.

† वरिति॑ वः । PP.

१. सोमस्य पानेन मदे हर्षे सति Sy. सोमस्य Sk. २. मदे प्राप्त एतेन सोमेन मत्तस्सन्नित्यर्थः Sk.

३. स्वरकरण० is suggested.

४. ऋताय यज्ञार्थं ... स्तुत्यम् Sy. शब्दकारि Sk. ५. अङ्गिरोभ्यो दत्तवानसि Sy. व्यत्ययेनात्र मध्यमः । यष्ट्रे ददातीन्द्रः Sk.

६. पणिभिर्गुहासु निगूढम् Sy. घटितम् । स्वगोष्ठे द्वारं निरुध्य स्थापितमित्यर्थः Sk.

७. सङ्घम् Sy. समूहम् Sk.

८. यदा खलु Sy. यदा Sk.

९. हशब्दस्तु पदपूरणः Sk.

१०. प्रकर्षेण सृज्यन्ते विमुच्यन्तेऽस्मिन्निषव इति प्रसर्गः Sy. प्रसर्गे । प्रसृज्यते यस्मिन् स प्रसर्गो दानकालः । तस्मिन् Sk.

११. ०द्यां शौ० P. D. त्रिककुप् । त्रीणि, अभिजनं शौर्यं यशश्च, ककुभः सदृशानि समुच्छ्रितानि यस्य स त्रिककुप् Sk.

१२. यष्टारं प्रति निवर्तते। दानार्थं यष्टुरभिमुखो भवतीत्यर्थः Sk.

१३. तदानीं सः ... द्रोग्धुः ... मनोः सम्बन्धिनोऽसुरस्य पणेः सम्बन्धीनि ... द्वाराणि गवामनिर्गमनाय पिहितानि ... अपवृणोत्युद्घाटयति Sy.

१४. देग्धृ० P. दोग्धृ० D. दोग्ध्रीणि M. द्रोग्धुर्मेघस्य। कस्य द्रोग्धुः? उच्यते। मानुषस्य मनुष्यजातस्य सर्वस्य। मेघो ह्युदकं निरुन्धन् सर्वं मनुष्यजातं द्रोग्धि Sk. १५. उदकनिर्गमनद्वाराणि Sk.

१६. V. Mādhava ignores ऋताय

‡ भुरण्यू इति॑। PP.

§ आ । अयजन्त । PP.

१७. सांनाय्यलक्षणं हविः Sy. उदकम् । त्वं वर्षसीत्येवमर्थं तदुदकमित्यर्थः Sk.

१८. उत्पादयन्त्यौ द्यावापृथिव्यौ Sy.

१९. गोष्वनयतां न्यधिषातामित्यर्थः Sy. आदित्यं प्रति नीतवत्यौ। यच्च द्यावापृथिवीभ्यामाहृत्य रश्मयो नीतवन्तस्तद्धेतुत्वप्रतिपत्त्या द्यावापृथिव्यावेव नीतवत्यावित्युच्यते Sk.

२०. कृत्स्नजगदुत्पादनशक्तमित्यर्थः Sy. शोभनमुदकम् । पय इत्यनेन चोदकत्वमुक्तम्। सुरेत इत्यनेन तु तस्य शोभनत्वमुच्यत इति नास्ति पौनरुक्त्यम् Sk.

स्कम्। धनम्[1]। क्षिप्रकारिणे[2] तुभ्यम्। भरणशीले[3]। यदा च। तद् गोषु पयोरूपेण परिणतं यजमाना अमृतदुघायाः[4]। उस्रियाया गोः।[5] पयोलक्षणम्। शुचि।[6] धनं तदा। आयजन्त[7] प्रायच्छन्नस्य सान्नाय्यस्य मद[8] इति[9]।

**अध प्र जंज्ञे तरणिर्ममत्तु प्र रोच्यस्या उषसो न सूरः।**
**इन्दुर्येभिराष्ट स्वेदुहव्यैः* स्रुवेण सिञ्चञ्जरणा† भि धामं॥६॥**

अध प्र जज्ञे। अथ[10]। प्रादुरभूत्[11]। स[12] तरणिः[13]। अस्मान्[14] ममत्तु[15]। सोऽस्याः[16]। उषसः। सूर्यः[17]। इव तेजसा। प्रकर्षेण। दीप्यते। सोमः। यैः। पीतः[18]। स्वभूतसमिद्धहव्यैः[19] सखिभिर्यजमानैः। ग्रह-

---

१. ०रेतस्तद्धनं P.
राधकं समृद्धिकरम् Sy.
धनभूतं सर्वस्य Sk.

२. तुर्वित्रे वा शत्रूणाम् Sk.

३. कृत्स्नं जगत्पोषयन्त्यौ Sy.
क्षिप्रे Sk.

४. क्षीरस्य दोग्ध्र्याः Sy.

५. वयो० P.
तदपि तुभ्यं तव पानार्थमित्यर्थः Sk.

६. धनवदतिप्रियम्। यद्वाऽतिरक्तं प्रवृद्धम् Sy.

७. ०न्तं P. आयच्छन्त M.
कृतवन्त इत्यर्थः। के? सामर्थ्यात् प्रजापतिप्रभृतयः सर्वे देवाः।... अथ-वैवमन्यथाऽस्या ऋचोऽर्थयोजना। तुभ्यं पय इत्यत्र दध्युच्यते। पितरावपि स्वेषामपत्यानां पितृत्वात् पालयितृत्वा-द्वा दम्पती यजमानौ। अनीतामित्यपि लङर्थे लङ्। दर्शपूर्णमासयोर्यद्दधि यजमानौ वेदिं प्रति नयतस्तत्तवार्थाय। यच्च धनं पुरोडाशाख्यं सुरेतः। शोभनं प्रणीतालक्षणं संस्कारकमुदकं यस्य तत्सुरेतः। यच्च ते तुभ्यमायजन्त मर्या-दया ददत्यर्त्वि? (त्यृत्वि)जः पय उस्रि-यायाः स्वभूतं तदपि तवैवार्थाय Sk.

८. तदानीं द्रुहो मानुषस्य द्वाराण्यपवृणोतीति पूर्वया सम्बन्धः Sy.

९. V. Mādhava ignores ते

* स्वऽइदुहव्यैः। PP.

† जरणा। अभि। PP.

१०. इदानीमयमिन्द्रः Sy.
अधशब्दोऽत्र पदपूरणः Sk.

११. यो वृत्रवधादिषु प्रजज्ञे तरणिर्यशसा शौर्येण च परिवृद्धोऽभूत् Sk.

१२. सं D.

१३. शत्रूणां तारकः Sy.

१४. ०णियस्मान् M.

१५. ममर्तु P. मादयतु Sy.
यश्च प्रकर्षेणामाद्यद् अथवा तच्छ-ब्दमध्याहृत्य स्वार्थ एवायं योज्यो लोट्-प्रत्ययः। ममत्तु तृप्यत्विति Sk.

१६. सोसौ M.

१७. यथायमस्या उषसः सम्बन्धी सूर्यस्तद्वत्। सूर्यस्योषसः पुत्रत्वेन सम्बन्धः Sk.

१८. पीत P. D. M.
आशित आसीत्। तानस्मान्मादय-त्वित्यर्थः Sy. देवैस्सह प्राप्तम् Sk.

१९. स्वेदुहव्यैः स्वेन्दुहव्यैः। नकारलोप-श्छान्दसः। स्वा इन्दुहव्या येषां ते स्वेन्दुहव्याः। स्वैः सोमैर्देवानां यष्टारः। के पुनस्ते? इन्द्रस्य सखायोऽङ्गिरसः। तैः Sk.

वमसादिना स्रुवेण साधनेन। स्तुत्या[1] सह। आहवनीयाख्ये स्थाने[2]। सिच्यमानः। तान्[3] ममत्त्विति[4]।

स्वि॒ध्मा* यद्व॒नधि॑तिरप॒स्यात्सूरो॑ अध्व॒रे परि॒ रोध॑ना॒ गोः।
यद्ध॑ प्र॒भासि॒ कृत्व्याँ॒ अनु॒ द्यूननर्वि॑शे प॒श्विषे॑ तु॒राय॑ ॥७॥

स्विध्मा[5] यद्वनधितिः[6]। यथा पशुविशसनाय तीक्ष्णां स्वधितिमपश्यन् यज्ञे न पशुं बध्ना-[8]त्येवमनुदिते त्वयि न प्रवर्तत इति समुदायार्थः।

सुष्ठु[9] दीप्ता। यदि तीक्ष्णधारा। स्वधितिः[7]।[10] पशुविशसनार्थं कर्म[11] कर्तुमिच्छति[12]। अथ प्राज्ञोऽध्वर्युः[13]। यज्ञे। गोः[14]। परि। रोधनायै[15] भवति[16]। यदि[17]। कर्मयोग्येषु[18]। दिवसेषु[19]। त्वं प्रभासि[20]। अनसा[21]

---

१. जरणा स्तुतिश्च। यो यैर्देवैस्सह सोमं पिबति स्तूयते चेत्यर्थः। यच्छब्द-श्रुतेः साकाङ्क्षत्वाच्च तैः स्वसखैरङ्गिरोभिस्सह तृप्यत्विति वाक्यशेषः Sk.
२. धाम स्थानं तेजो वाऽऽहवनीयाख्यं प्रति। आहवनीये हूयमान इत्यर्थः Sk.
३. ०स्तन् D.
४. ०त्वि० P. D. M.
* सुऽइध्मा। यत्। वनऽधितिः। PP.
५. सिध्मा P. D.
६. यद्वनदिति M.
७. वने छेत्तव्ये वृक्षसमूहे निधातव्या शस्त्री Sy.
८. बध्नोत्ये० P.
९. यद्वा। स्विध्मा सूर्यकिरणैः सुदीप्ता। वनधितिः। वनमुदकमस्यां धीयत इति वनधितिर्मेघमाला। सा यद् यदाऽपस्याद् अपः प्रवर्षणलक्षणं कर्म करोति तदानीं सूरः प्रेरक इन्द्रो-ध्वरे यज्ञस्य निमित्तभूतेऽध्वर्तव्ये हिंसितव्येऽन्तरिक्षे वर्तमानः सन् गोर्वृष्ट्युदकस्य ... रोधनान्यावरणानि ...परितो निवारयतीति शेषः Sy. सुनिशितेत्यर्थः Sk.
१०. ०ति P.
११. विशसनाख्यम् Sk.
१२. पशुं विशसतीत्यर्थः Sk.
१३. सूरः। षष्ठ्यर्थे प्रथमा। सूर्यस्य सम्बन्धिनि। ... उदिते ह्यादित्ये यज्ञः क्रियत इत्ययं सूर्यस्य यज्ञेन सम्बन्धः Sk.
१४. गोग्रहणमत्रोपलक्षणार्थम्। गवादेः पशोः Sk.
१५. यूपे नियोजनाय ... समर्थो भवति Sy. सर्वतो निरोध्री। मारयित्रीत्यर्थः Sk.
१६. यै भ० P. D. M.
१७. यदा च Sk.
१८. यागकर्मार्हान् Sk.
१९. दिवसान्। यागदिवसानित्यर्थः Sk.
२०. प्रभवासि P.
भा दीप्तावन्यत्र। इह तु गत्यर्थः। यज्ञं प्रति गच्छसि Sk.
२१. अनसा शकटेनेन्धनाद्याहरणायारण्यं प्रविशते। यद्वा गन्तव्यं स्थलं प्रति गन्तुमशक्ताय पुरुषाय पश्विषे पशून् प्रेरयते तुराय त्वरमाणाय गोपालाय च सिध्येद् अभिमतमिति वाक्यशेषः Sy. अगता विशो यस्य सोऽनर्वित्? (ट्)। कोऽसौ? यस्य मित्रादयो वा मनुष्या यष्टृत्वान्नरकं न गताः। परिचारका वा सर्वे Sk.

[1] यः कार्येषु विशति। यो वा पशुमिच्छति। क्षिप्रकारी तयोः कार्यकरणाय [2] भासि चेद् [3] यज्ञे पशुं [4] बध्नातीति।

अष्टा मुहो दिव आदो* हरी इह द्युम्नासाहंमभि योधान उत्सम्।
हरिं यत्ते मन्दिनं दुक्षन्वृधे† गोरंभसमद्रिंभिर्वाताप्यम् ॥८॥

अष्टा [5] महः। [6] अन्नवर्धनमुदकम्। उद्दिश्य। [7] मेघम्। [8] योधमानस्त्वम्। महतः। [9] दीप्तस्य [10] सोमस्य। पाता। [11] सोऽश्वौ। यजमाने। पाययसि। यदा। तव। [12] वर्धनाय। [13] हरितवर्णम्। [14] मदकरम्। [15] प्राप्तवेगम्। अभिषवग्रावभिः। [16] दुहन्ति। पातव्यं सोमं [17] वाताप्यमित्युदकनामेति।

त्वमायसं प्रति वर्तयो गोर्दिवो अश्मानमुपनीतमृभ्वा।
कुत्साय यत्र पुरुहूत वन्वञ्छुष्णमनन्तैः परियासि वधैः ॥९॥

त्वमायसम्। त्वम्। अयसा निर्मितम्। [18] प्रेरितवानसि। [19] गन्तुः [20] शुष्णस्य वधार्थम्। स्वर्गात्।

---

१. य P.
२. देवान् परिचरितुं यस्त्वरते स तुरः ... अगतमनुष्यस्य पशुकामस्य त्वर(मा)णस्य च यजमानस्यार्थाय। यज्ञमस्याविघ्नेन समापयितुमित्यर्थः Sk.
३. भासी P.
४. V. Mādhava ignores ह
* आदः। हरी इति। इह। द्युम्नऽसहम्। PP. † धुक्षन्। PP.
५. मह M. ६. द्युम्नासाहं द्युम्नस्यास्मदीयस्य धनस्याभिभवितारम्। उत्सम् उत्स्रावयितारं शत्रुम् Sy. द्युम्नमत्रं मांसमण्डादि। तद्यत् स्वादुत्वेनाभिमतं यस्तत्सर्वमेवाभिभवति। स द्युम्नासाहः। तम् Sk. ७. वर्षन्नित्यर्थः Sk.
८. योधनायानस्त्वम् P. योधनायानन्त्वम् D. योधयानस्त्वम् D.
९. मदकरस्य Sy. दिवो द्युलोकस्य Sk.
१०. भोक्तारौ पातारौ Sy.
११. स्वकीयावश्वाविहास्मिन्कर्मण्यादः पीतशेषं सोमं पायय Sy. हरी इति तृतीयार्थे प्रथमा। हरिभ्याम् Sk.
१२. इन्द्रस्य तवात्मनो वा Sk.
१३. हरिव० P. मनोहरम्... मदकरं गोरभसम्। अत्र गोशब्दः पयसि वर्तते। पयोबलम्। तद्वद् वेगवन्तं वीर्यवन्तमित्यर्थः Sy.
१४. स्तुतिमन्तं मोदयितारं वा Sk.
१५. गोरभसम्। गावः स्तुतय आपो वा। रभस इति महन्नाम। ...गावो रभ(स)यित्र्यो यस्य स गोरभसः। गोभिरद्भिर्वा महत्कृत (महान् कृत) इत्यर्थः। तं गोरभसम् Sk. १६. दहति P. दुहन्ति ऋत्विजोऽभिषुण्वन्ति Sy. दुग्धवन्तः Sk. १७. पातव्यमि० P. M. वाततुल्येन शीघ्रकारिणा त्वया पातव्यमित्यर्थः Sy. अथवा वातं प्राणः। तस्याप्यायितारम्। प्राणकरमित्यर्थः Sk.
१८. व्यसृजः Sy. वक्त्रे प्रोतवानसीत्यर्थः Sk.
१९. गुन्तु M. गोः सर्वगताया अपि दिवः Sk.
२०. असुरस्य Sy.

शिलासदृशम्[1]। भूमिष्ठाय[2] तुभ्यं त्वष्ट्रा प्रहितेन सुधन्वनः पुत्रेण त्वष्टुः शिष्येण ऋभ्वा[3]। उपनीतम्[4]। यदा। कुत्सप्रीत्यर्थम्। युद्धं भजन्[5]। तच्छत्रुं[6] शुष्णासुरम्। अपरिमितैः। प्रहारैः[7]। परिहंसि[8]।

**पुरा यत्सूरस्तमसो अपीतेस्तमद्रिवः फलिगं हेतिमस्य।**
**शुष्णस्य चित्परिहितं यदोजो दिवस्परि सुग्रंथितं तदादः ॥१०॥**

पुरा यत्सूरः। पुरा। यदा[9]। अयं सूर्यः[10]। तमसः। सङ्ग्रामान्मुक्तोऽभूत्[11] तदानीम्। तम्[12]। अस्य सूरस्य[13]। अद्रिवः[14]! मेघम्[15]। आहन्तारम्[16] आदररिति[17] सम्बन्धस्तदेवोच्यते[18]। शुष्णासुरस्य[19]। सूर्यनिरोधार्थं परिहितम्[20]। मेघरूपं यत्। ओजः[21]। तत्। आदित्यतः[22]। सुग्रथितम्[23]।

---

१. शीघ्रं शत्रोर्व्यापकम् Sy.
अश्मानं व्याप्तारं शुष्णं नामासुरम् Sk.

२. ०मिस्था० P. D. M.

३. दीप्तेन Sy.
ऋभुरिति मेधाविनाम। मेधाविना। केन? सामर्थ्यात्त्वयैव Sk.

४. प्रापितम्।...सामर्थ्याद् युद्धभूमिम् Sk.

५. वन्वन् याचमानः। यत्कुत्सस्याभिप्रेतं तत्प्रार्थयमान इत्यर्थः Sk.

६. तं श० D.

७. ०हन्सि M.
हिंसन् ... परितो गच्छसि। तदानीं तद्वधार्थं वज्रं प्रत्यवर्तय इत्यर्थः Sy.

८. V. Mādhava ignores पुरुहूत

* अपिऽइतेः। तम्। अद्रिऽवः।

† तत्। आ। अदरित्यदः।

९. यदित्येतस्य तमित्येतेन सामानाधिकरण्याद् व्यत्ययेन नपुंसकता।...यस्तमस्तन्वतो वृत्रस्य सहायो बभूव तं पुरा प्राक् Sk.

१०. सूरः। षष्ठ्यर्थे प्रथमा। सूर्यस्य सम्बन्धिनः। सूर्यनिरोधसमर्थस्येत्यर्थः Sk.

११. सङ्गमा० P. D.
अपीत्येषोऽपेत्यस्य स्थाने। अपगतेः। यावत् तत्कृतं सूर्यनिरोधसमर्थं तमो नापा? (प) गच्छति तावदित्यर्थः Sk.

१२. शुष्णमसुरमस्य निरसितवानसि। यद्वा। अस्य शुष्णस्यासुरस्य हेतिं हननसाधनमायुधं फलिगं मेघलक्षणं प्राभाङ्क्षीरिति शेषः Sy.
अस्य। भूते काले लोडयं द्रष्टव्यः। क्षिप्तवानसि। वज्रेण फलिगं हतवानसीत्यर्थः Sk.

१३. सूर्यस्य M.

१४. अदिवः P. M. दिवः D.
वज्रोऽत्राद्रिवाचकत्वादादरणाद्वाऽद्रिरुच्यते। तद्वन्! Sk.

१५. फलिगं नामासुरं प्रति Sk.

१६. हेतिं वज्रम् Sk. १७. न्तादादिरिति P.
आदृणात्यनेनेत्यद्रिर्वज्रः। तद्वन्निन्द्र! Sy. १८. तदैवो० P. D.

१९. शोषयितुरसुरस्य Sy.

२०. आच्छादितम् Sy.

२१. आच्छादकं बलम् Sy.
सेनालक्षणं बलम् Sk.

२२. ०त P. D.

२३. सुष्ठु सूर्ये सक्तम् Sy.
द्युलोकस्योपरि ... युद्धयोग्येन सूचीमुखादिना व्यूहेन व्यवस्थापितम् Sk.

आदरितवानिति[1][2][3]।

अनु त्वा मही* पाजसी अचक्रे द्यावाक्षामा मदतामिन्द्र कर्मन् ।
त्वं वृत्रमाशयानं सिरासु महो वज्रेण सिष्वपो† वराहुम् ॥११॥

अनु त्वा मही[4]। इन्द्र ! त्वाम्[5]। वृत्रवध उद्युक्तम्। महती[6]। बलवती[7] च। क्रमणवर्जिते[8]। द्यावापृथिवी। अन्वमदताम्[9]। अथ त्वम्। वृत्रम्। आभिमुख्येन शयानम्[10]। उदकस्य निर्गमनद्वारेषु[11]। महता[12]। वज्रेण। निष्वापितवानसि[13]। वराहम्[14]।

त्वमिन्द्र नर्यो याँ अवो नृन्तिष्ठा वातस्य सुयुजो वहिष्ठान् ।
यं ते काव्य उशना मन्दिनं दाद्वृत्रहणं पार्यं ततक्ष वज्रम् ॥१२॥

त्वमिन्द्र नर्यः। त्वम्। इन्द्र ! मनुष्यहितः[15]। यान्। रक्षसि[16]। नेतॄन् अश्वान्[17]। तान्। अभितिष्ठ[18]। वातसदृशवेगान्[19]। सुष्ठु युज्यमानान्। यश्च। ते। कविपुत्रः। उशनाः।

---

१. हतवानित्यर्थः। अथवैवमन्यथास्या ऋचोऽर्थयोजना। फलिग इति मेघनाम। य उदकं निरुध्य स्थितस्तं मेघं प्रति पुरा तत्कृतस्य सूर्यनिरोधसमर्थस्य तमसोऽपगतेर्वज्रं क्षिप। शुष्णस्य च शोषयितुरादित्यस्य स्वभूतं रश्मिभिराहृतस्य ? (राहृत्य) सर्वतो निहितं यदोजः। ओज इत्युदकनाम। उदकं सुग्रथितम्। तच्चादारय Sk.

२. ०वानसि M. आदृणा विश्लिष्टं कृतवानसीत्यर्थः Sy.

३. V. Mādhava ignores चित्। परि

* मही इति। पाजसी इति। अचक्रे इति। PP.

† सिस्वपः। PP.

४. महि P. ५. त्वा P. M.

६. महत्यौ ... बलवत्यौ Sy.

७. Omitted by P.

८. ०ती चङ्क्रम० M, अचङ्क्रमणे सर्वत्र व्याप्य वर्तमाने Sy. अचङ्क्रमणे स्थिरे Sk.

९. अनुम० M. हृष्टमकुरुताम्। अन्वमन्येतां वा Sy.

१०. समन्ताद् व्याप्य वर्तमानम् Sy. तिष्ठन्तम् Sk.

११. सरणशीलास्वप्सु Sy. नदीषु। नदीभिश्च तदीया आपो लक्ष्यन्ते। अन्तरिक्षे या नद्यस्तदप्सु गूहितमित्यर्थः Sk.

१२. महा M.

१३. वज्रेण हत्वा पातितवानित्यर्थः Sy. आत्यन्तिकेन मरणलक्षणेन स्वापेन स्वापितवान्। मारितवानित्यर्थः Sk.

१४. वराह(हा)रम् M. वराहाकारम् Sk.

१५. नृभ्यो हितः, नृषु वा साधुः Sk.

१६. ०नक्ष० M.

१७. मनुष्यानस्मान् Sk.

१८. आरोहेत्यर्थः Sy; Sk.

१९. ०शा० D. वातस्य सकाशाद् वोढृतमान् Sk.

मदयितारम्[1]। अदात्[2] तं[3] चादत्स्व काव्य इन्द्राय। शत्रूणां हन्तारम्[4]। युद्धपारगमनहेतुभूतम्[5]। अकरोत्[6]। वज्रमिति[7]।

**त्वं सूरो हरितो रामयो* नॄन्भरच्चक्रमेतशो नायमिन्द्र ।**
**प्रास्य पारं नवतिं नाव्यानाम्† अपि कर्तमवर्तयोऽयज्यून् ॥१३॥**

त्वं सूर। त्वम्। इन्द्र! सूर्यस्य[8] अश्वान्। हरितः[9]। नेतॄन्[10]। उपारमयः। एतशः[11]। च[12]। जयार्थमभरत्[13]। चक्रं सूर्यरथस्य। नैकशोऽयम्[14]। इन्द्र! बलेन त्वं तदाहृतवान्। अथ तस्य शत्रून् अयजमानानाम्(०मानान्)[15]। नवतिसंख्याकानाम्[16]। नदीनाम्[17]। पारं[18] प्रत्युत्क्षिप्य। तत्र तान् अवटम्[19]। अपि। नीतवानसि[20]।

**त्वं नो अस्या इन्द्र दुर्हणायाः‡ पाहि वज्रिवो दुरितात्§ अभीके ।**
**प्र नो वाजान्रथ्यो¶ ३ अश्वबुध्यानिषे यन्धि श्रवसे सूनृतायै ॥१४॥**

त्वं नो अस्याः। त्वम्। अस्मान्। अस्याः सेनायाः[21]। दुर्भरणायाः[22]। पाहि।

---

१. दमयि० M.
२. त्वष्ट्रा कृतं सन्तमानीय दत्तवान् Sk.
३. तं वज्रं ... वृत्रस्यासुरस्य घातकं ... शत्रूणां पारणेऽतिक्रमणे समर्थं च ... कृतवानसि Sy.
४. वृत्रस्य हन्तारम् Sk.
५. हेतुम् M. पालयितारं स्तोतॄणाम् Sk.
६. लोडर्थे लिट्। मध्यमपुरुषस्य स्थाने प्रथमपुरुषः। अस्मदीयशत्रुवधार्थं संस्कुरु Sk.
७. V. Mādhava ignores वहिष्ठान्
* रमयः। PP. † नाव्यानाम्। PP.
८. सूर्यात्मना वर्तमानस्त्वम् Sy.
९. हरिद्वर्णान्।... यद्वा रसहरणशीलान् रश्मीन् Sy. हरितवर्णान् Sk.
१०. नॄन्। चतुर्थ्यर्थे द्वितीया। नृभ्यो मनुष्याणामनुग्रहार्थं सूर्याश्वान् रथे रतिं कारितवानित्यर्थः Sk. ११. एतश इति सूर्याश्वस्याख्या।... एतशश्च रथस्य चक्रं ...प्रावहत् Sy. १२. ०एतशस्य P.D.
१३. भरत् P. D. असुरैर्भज्यमानं धारयन्। रक्षन्नित्यर्थः Sk.
१४. नैतशो P.D. एतशो न। द्वितीयार्थे प्रथमा। नशब्दः... पदपूरणः। अश्वं चासुरैरपह्रियमाणम् Sk.
१५. अयजमानान् यज्ञविहीनान् असुरादीन् Sy. अयज्यून् अयजनशीलान् Sk.
१६. नवतिसङ्ख्यामतीत्य वर्तमानं पारम् Sy.
१७. नावा तार्याणां नदीनाम् Sy. नौभिस्तार्याणाम्। अगाधापगानामित्यर्थः Sk.
१८. तीरदेशम्। सप्तम्यर्थे द्वितीया Sy.
१९. कर्तव्यमपि कृत्वा Sy. कर्तं गर्तम् Sk.
२०. तानयजमानानवर्तयः प्रापयः Sy. प्रावर्तयः। कूपे प्रक्षिपेत्यर्थः Sk.
‡ दुःऽहनायाः। PP.
§ दुःऽइतात्। PP. ¶ रथ्यः। PP.
२१. अवृत्तेर्दारिद्र्यात् Sy.
२२. दुःखेन हन्तव्यायाः Sy. क्लेशेन या हन्ति सा दुर्हणा। तस्याः। कस्याः? स्त्रीलिङ्गनिर्देशाद् दुर्हं? (हं)-णायाः। अस्माद्दुर्भिक्षादित्यर्थः Sk.

वज्रिन्[1] ! दुरिताच्च। सङ्ग्रामे[2]। प्रयन्धि[3] च। अस्मभ्यम्। बलानि[4]। रथ्यस्त्वम्[5]। अश्वैर्बोद्धव्यानि[6]।[7] अन्नाय[8]। यशसे च। सत्यायास्मान्[9] प्रेरयेति[10]।[11]

**मा सा ते॑ अ॒स्मत्सु॑म॒तिर्वि द॑स॒द्वाज॑प्रमहः॒ समिषो॑ वरन्त।**
**आ नो॑ भज मघव॒न्गोष्व॒र्यो मंहि॑ष्ठास्ते सध॒माद॑ः स्याम ॥१५॥**

**मा सा ते।** मा। सा। तव। स्तोतृविषया सुमतिः[12]। अस्मासु। शुष्यतु[13]। अतिशयेन पूजनीयान्न[14] ! अस्मानन्नानि[15]। संवृणन्तु[16]। आभज[17] च। मघवन् ! गोषु[18]। अस्मान्। ईश्वरः[19]। दातृतमा[20] वयं तुभ्यम्। गोभिः पुत्रैश्च[21] सधमादः स्यामेति।

ऋगर्थदीपिका सेयं[22] प्रथमश्चायमष्टकः[23]।
कर्ता श्रीवेङ्कटार्यस्य तनयो माधवाह्वयः[24] ॥

---

१. वज्रोऽस्याऽस्तीति वज्री हस्तस्तद्वान् वज्रिवान् Sy. वज्रो यस्मिन्नस्ति स वज्री, आयुधसमूहः। तद्वन् Sk.
२. अभिप्राप्ते समीपवर्तिनि सङ्ग्रामे Sy.
३. ०यद्धि P. M. प्रयच्छ Sy; Sk.
४. धनानि Sy. सेनालक्षणानि Sk.
५. रथयुक्तान् Sy.
६. अस्मै बो० P. अश्वानां बोधकान्। अश्वा यावद्भिर्लभ्यन्ते तावदि(०वद्भि-रि०)त्यर्थः। यद्वा ! अश्वबुध्नान्। छान्दसो वर्णविकारः। अश्वमूलान्। अश्वप्रमुखानित्यर्थः। सर्वं हि धनमश्वमूलं दासाप(०सप्र०)वर्गम् Sy.
७. ०द्धव्य M. ८. श्रवः कीर्तिर्धनं वा Sk.
९. सत्या यस्मात् M. सूनृता प्रियसत्यात्मिका वाक् तदर्थञ्च Sy.
१०. प्रेरयति P.
११. V. Mādhava ignores इन्द्र
१२. शोभनानुग्रहरूपा बुद्धिः Sy; Sk.
१३. विदसद् अविच्छिन्ना। सर्वदैवास्त्वित्यर्थः Sk. १४. वाजैर्धनैः प्रमहनीयेन्द्र Sy. हे वाजप्रमहः। वाजं बलं प्रकर्षेण महद्यस्य स वाजप्रमहाः। तस्य सम्बोधनं हे वाजप्रमहः Sk.
१५. अस्मदीयहविर्लक्षणानि Sk.
१६. सम्यक् त्वा सम्भजन्ते यस्मात् त्वां यजाम इत्यर्थः Sk. १७. प्रापय Sy.
१८. सप्तमीनिर्देशात् स्थित इति वाक्यशेषः। गवां . . . स्थित इत्यर्थः Sk.
१९. धनपतिः Sy. अथवा अर्यशब्दोऽत्र षष्ठ्यन्तः। अरेः स्वभूतासु गोषु स्थितान्। शत्रोर्या गावस्ता अस्मभ्यं दत्त्वाऽस्मान् भजेत्यर्थः Sk.
२०. अतिशयेन स्तुतिभिः प्रवर्धयितारो वयम् Sy. सोमस्येत्यर्थः Sk.
२१. ०द P. D. M. पुत्रपौत्रादिभिः सह माद्यन्तो भवेम Sy. सह सोमस्य पातार इत्यर्थः Sk. २२. चेयं D.
२३. Missing in M.
२४. V. Mādhava ignores वि। After माधवाह्वयः D. adds अस्मद्गुरुभ्यो नमः। अक्षरं यत्परिभ्रष्टं मात्राहीनं तु यद् भवेत्। क्षन्तुमर्हन्ति विद्वांसः कस्य नास्ति व्यतिक्रमः। P. adds अस्मद्गुरुभ्यो नमः। श्रीगणपतये नमः। M. adds इति प्रथमाष्टके अष्टमोऽध्यायः समाप्तः। प्रथमाष्टकः समाप्तः।
After व्यतिक्रमः and स्यामेति D. puts the figure ॥१२१॥ to indicate the end of one hundred and twentyfirst hymn. No such number is given in P. and M.

# CORRECTIONS

| Page | Line | Read (शुद्धम्) | For (अशुद्धम्) |
|---|---|---|---|
| १ | १९ | 5.19 | 5.14 |
| १० | २१ | कुर्वती | कुर्वन्ती |
| २८ | १८. | ०व्यज्यमानं कुर्वन् | ०व्यज्यमानम् |
| ३५ | १७ | ०र्वृषभः | ०र्वृषभः |
| ६३ | ३२ | व्याप्नुतम् | व्याप्नुतः |
| ७३ | ५ | देवो | देवो |
| ७३ | २६ | ०प्रसह्याः | ०प्रसह्याः |
| ८४ | १६ | Kau | Kan |
| १२५ | ७ | गीर्भिरुह्य० | गीर्भिर्रुह्य० |
| १३० | १३ | स कधः | सः कधः |
| १३१ | २८ | ०चेष्टिताः | ०चेष्ठिताः |
| १३३ | ३ | ०निर्ऋत्वि० | ०निःऋत्वि० |
| १३४ | १८ | अग्रे | अग्ने |
| १३९ | ६ | इममध्वानं | इमध्वानं |
| १४६ | २ | वृत्रस्य | त्रस्य |
| १४६ | २ | वि | व |
| १५४ | ४ | ०रपहृता० | ०रपहृता० |
| १५५ | १६ | इन्द्रात् किञ्चि० | इन्द्राद् किञ्चि० |
| १५६ | १२ | ०स्तद्व्रत् | ०स्तद्व्रतः |
| १६२ | १ | तुग्र्यासु | तुग्न्यासु |
| १६३ | ५ | Put fullstop after रथे and not after भवतः | |
| १६८ | १ | आहावास्त्रेधा | आहावस्त्रेधा |
| १७० | १ | देवेभिं० | देवेभिं० |
| १८२ | २५ | ०स्ताडयतः | ०स्ताडयन्तः |
| १८८ | २८ | गर्जन्ति | गर्जयन्ति |
| २१३ | २० | अलङ्कुर्वतीः | अलङ्कुर्वन्तीः |
| २१३ | २१ | त्वलङ्कुर्वतीः | त्वलङ्कुर्वन्तीः |
| २१३ | २४ | वर्तमाना इत्यर्थः | वर्तमानेत्यर्थः |
| २२७ | १७ | ०दुत्कृष्टम् | ०दुष्कृष्टम् |
| २३३ | १३ | युवाम् | युबाम् |
| २३४ | ७ | प्रतिं | प्रति |
| २५१ | ३० | १२ हिंसां प्रापयः | हिंसां प्रापयः |
| २५५ | २ | अश्वादीन् | अश्वादींन् |
| २५५ | foot-note 3 | आङ्गिरसाः | अङ्गिरसः |

| Page | Line | Read (शुद्धम्) | For (अशुद्धम्) |
|---|---|---|---|
| २५६ | ७ | हन्वोरसि। | हन्वोरंसि। |
| २६० | ११ | ०दुक्थ्य १ मक्रण्वत | ०दुक्थ्यं १ मक्रण्वत |
| २६० | १४ | प्रावर्तय इत्यध्याहारः | प्रावर्तयेत्यध्याहारः |
| २६७ | १६ | पूःशब्दः | पुरशब्दः |
| २६८ | २५ | ०नैतत्सं० | ०नैत्सं० |
| २७६ | ६ | पृथिवी | थिवी |
| २७६ | १० | महत्त्वेन | महत्त्वेव |
| २९७ | ५ | स्वर्यं १ रणाय | स्वर्यं १ रणाय |
| २९८ | ६ | ते महिमानं | महिमानं |
| ३२५ | २४ | घ्नन्ति | घनन्ति |
| ३५२ | ४ | दूत्यं १ | दूत्यं १ |
| ३६६ | ३ | त्वा | त्वा |
| ३८३ | २ | ०निरोद्ध्रीम् | ०निरोध्रीम् |
| ३८८ | ८ | स्वराज्यम् | स्वराज्यम् |
| ३९९ | २१ | स सङ्गृभाय | ससङ्गृभाय |
| ४०० | २९ | विलम्बिष्ठा | विळम्बिष्ठा |
| ४२६ | २४ | परिचरत इत्यर्थः | परिचरतेत्यर्थः |
| ४२८ | १५ | अवितृतमा वा | अवितृततमा वा |
| ४३२ | २ | वर्षिष्ठया | वर्षिष्ठया |
| ४३४ | १४ | ०दुत्कृष्टं | ०दुष्कृष्टं |
| ४३५ | ७ | दंष्ट्रा | द्रंष्ट्रा |
| ४५४ | ३० | ०स्वभाविकाः | ०स्वाभाविकाः |
| ४५६ | १२ | उषा अनक्ति | उषाऽनक्ति |
| ४५७ | २ | Delete the sign (?) | |
| ४५८ | ७ | चक्षुषी | चक्षुषो |
| ४६० | २१ | रसानां वा | रसानां |
| ५०२ | २३ | रोदसी | रोवसी |
| ५१३ | २१ | प्र। अव। | प्र। अव |
| ५२८ | ३१ | रोदसी | रोदसी |
| ५३४ | ८ | Delete (?) | |
| ५५० | १० | स्वधया | स्वधया |
| ५५४ | ११ | सङ्ग्रामे | सङ्ग्रामे |
| ५६१ | ३१ | भ्रात्रा | भर्त्रा |
| ५६४ | २१ | ऊँ इति। | ॐ इति। |
| ५७८ | ११ | यदा न तं | यदा न तं |
| ५७९ | १ | द्युम्नित्तम | द्युम्नित्तमं |

| Page | Line | Read (शुद्धम्) | For (अशुद्धम्) |
|---|---|---|---|
| ५८१ | २६ | ०स्थानीयोऽपत्यत्वात् | ०स्थानीयो पत्यत्वात् |
| ५८१ | ३० | अरैक्। | अरैक्। |
| ५८८ | ३१ | समो | समौ |
| ६१४ | १७ | शासितु० | शासतु० |
| ६२२ | २६ | सुसुप्वांसम्। | सुसुप्वांसम्। |
| ६२७ | ११ | अभवतम् | प्रभवतम् |
| ६३१ | २५ | अजोहवी० | अजौहवी० |
| ६५६ | १६ | वुनऽर्थिति:। | वुनर्थिति:। |

## ADDITIONS

Footnote no. १ on page १ should read :—

"The standard form of the last four syllables of *pādas a* and *c* is not iambic but ∪ — — ∪. The form of *pāda a*, — — ∪ —, ∪ ∪ ∪ —, is used by standard writers of *Kāvya*, but that of *pāda c*, — — ∪ —, — ∪ — —, is not used by strict writers, though it is common enough in the Epics and the *Purāṇas*.

The standard form of the last four syllables in *a, b, c*, and *d* is laid down in the following stanza of *Śrutabodha*, attributed to a Kālidāsa :—

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥१०॥

But, as a matter of fact, the *śloka* metre has not been satisfactorily dealt with, by treatises on prosody. Really speaking, Footnote no. १ is unnecessary.

Padapāṭha.

I. 1.

अग्निम् । ईळे । पुरःऽहितम् । यज्ञस्य । देवम् । ऋत्विजम् । होतारम् । रत्नऽधातमम् ॥१॥ अग्निः । पूर्वेभिः । ऋषिऽभिः । ईड्यः । नूतनैः । उत । सः । देवान् । आ । इह । वक्षति॥२॥ अग्निना । रयिम् । अश्नवत् । पोषम् । एव । दिवेऽदिवे । यशसम् । वीरवत्ऽतमम् ॥३॥ अग्ने । यम् । यज्ञम् । अध्वरम् । विश्वतः । परिऽभूः । असि । सः । इत् । देवेषु । गच्छति ॥४॥ अग्निः । होता । कविऽक्रतुः । सत्यः । चित्रश्रवःऽतमः । देवः । देवेभिः । आ । गमत् ॥५॥ यत् । अङ्ग । दाशुषे । त्वम् । अग्ने । भद्रम् । करिष्यसि । तव । इत् । तत् । सत्यम् । अङ्गिरः ॥६॥ उप । त्वा । अग्ने । दिवेऽदिवे । दोषाऽवस्तः । धिया । वयम् । नमः । भरन्तः । आ । इमसि॥७॥ राजन्तम् । अध्वराणाम् । गोपाम् । ऋतस्य दीदिविम् । वर्धमानम् । स्वे । दमे ॥८॥ सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव । सचस्व । नः । स्वस्तये ॥९॥

I. 2.

वायो इति । आ । याहि । दर्शत । इमे । सोमाः । अरंऽकृताः । तेषाम् । पाहि । श्रुधि । हवम्॥१॥ वायो इति । उक्थेभिः । जरन्ते । त्वाम् । अच्छ । जरितारः । सुतऽसोमाः । अहःऽविदः ॥२॥ वायो इति । तव ।

प्रऽपृश्नती । धेना । जिगाति । दाशुषे । उरूची । सोमऽपीतये ॥३॥ इन्द्रवायू इति । इमे । सुताः । उप । प्रयःऽभिः । आ । गतम् । इन्दवः । वाम् । उशन्ति । हि ॥४॥ वायो इति । इन्द्रः । च । चेतथः । सुतानाम् । वाजिनीवसू इति वाजिनीऽवसू । तौ । आ । यातम् । उप । द्रवत् ॥५॥ वायो इति । इन्द्रः । च । सुन्वतः । आ । यातम् । उप । निःऽकृतम् । मक्षु । इत्था । धिया । नरा ॥६॥ मित्रम् । हुवे । पूतऽदक्षम् । वरुणम् । च । रिशादसम् । धियम् । घृताचीम् । साधन्ता ॥७॥ ऋतेन । मित्रावरुणौ । ऋतऽवृधौ । ऋतऽस्पृशा । क्रतुम् । बृहन्तम् । आशाथे इति ॥८॥ कवी इति । नः । मित्रावरुणा । तुविऽजातौ । उरुऽक्षया । दक्षम् । दधाते इति । अपसम् ॥९॥

I. 3.

अश्विना । यज्वरीः । इषः । द्रवत्पाणी इति द्रवत्ऽपाणी । शुभः । पती इति । पुरुऽभुजा । चनस्यतम् ॥१॥ अश्विना । पुरुऽदंससा । नरा । शवीरया । धिया । धिष्ण्या । वनतम् । गिरः ॥२॥ दस्रा । युवाकवः । सुताः । नासत्या । वृक्तऽबर्हिषः । आ । यातम् । रुद्रवर्तनी इति रुद्रऽवर्तनी ॥३॥ इन्द्र । आ । याहि । चित्रभानो इति चित्रऽभानो । सुताः । इमे । त्वाऽयवः । अण्वीभिः । तना । पूतासः ॥४॥ इन्द्र । आ । याहि । धिया । इषितः । विप्रऽजूतः । सुतऽवतः । उप । ब्रह्माणि । वाघतः ॥५॥ इन्द्र । आ । याहि । तूतुजानः । उप । ब्रह्माणि । हरिऽवः । सुते । दधिष्व । नः । चनः ॥६॥ ओमासः । चर्षणिऽधृतः । विश्वे । देवासः । आ । गत । दाश्वांसः । दाशुषः । सुतम् ॥७॥ विश्वे । देवासः । अप्ऽतुरः । सुतम् । आ । गन्त । तूर्णयः । उस्राःऽइव । स्वसराणि ॥८॥ विश्वे । देवासः । अस्रिधः । एहिऽमायासः । अद्रुहः । मेधम् । जुषन्त । वह्नयः ॥९॥ पावका । नः । सरस्वती । वाजेभिः ।

वाजिनीऽवती । यज्ञम् । वष्टु । धियाऽवसुः ॥१०॥ चोदयित्री । सूनृतानाम् । चेतन्ती । सुऽमतीनाम् । यज्ञम् । दधे । सरस्वती ॥११॥ महः । अर्णः । सरस्वती । प्र । चेतयति । केतुना । धियः । विश्वाः । वि । राजति ॥१२॥

## I. 4.

सुरूपऽकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे । जुहूमसि । द्यविऽद्यवि ॥१॥ उप । नः । सवना । आ । गहि । सोमस्य । सोमऽपाः । पिब । गोऽदाः । इत् । रेवतः । मदः ॥२॥ अथ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् । मा । नः । अति । ख्यः । आ । गहि ॥३॥ परा । इहि । विग्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् । यः । ते । सखिऽभ्यः । आ । वरम् ॥४॥ उत ब्रुवन्तु । नः । निदः । निः । अन्यतः । चित् । आरत । दधानाः । इन्द्रे । इत् । दुवः ॥५॥ उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः । स्याम । इत् । इन्द्रस्य । शर्मणि ॥६॥ आ । ईम् । आशुम् । आशवे । भर । यज्ञऽश्रियम् । नृऽमादनम् । पतयत् । मन्दयत्ऽसखम् ॥७॥ अस्य । पीत्वा । शतक्रतो इति शतऽक्रतो । घनः । वृत्राणाम् । अभवः । प्र । आवः । वाजेषु । वाजिनम् ॥८॥ तम् । त्वा । वाजेषु । वाजिनम् । वाजयामः । शतक्रतो इति शतऽक्रतो । धनानाम् । इन्द्र । सातये ॥९॥ यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखा । तस्मै । इन्द्राय । गायत ॥१०॥

## I. 5.

आ । तु । आ । इत । नि । सीदत । इन्द्रम् । अभि । प्र । गायत । सखायः । स्तोमऽवाहसः ॥१॥ पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्याणाम् । इन्द्रम् । सोमे । सचा । सुते ॥२॥ सः । घ । नः । योगे ।

आ । भुवत् । सः । राये । सः । पुरम्ऽध्याम् । गमत् । वाजेभिः । आ ।
सः । नः ॥३॥ यस्य । सम्ऽस्थे । न । वृण्वते । हरी इति । समत्ऽसु ।
शत्रवः । तस्मै । इन्द्राय । गायत ॥४॥ सुतऽपाव्ने । सुताः । इमे । शुचयः ।
यन्ति । वीतये । सोमासः । दधिऽआशिरः ॥५॥ त्वम् । सुतस्य ।
पीतये । सद्यः । वृद्धः । अजायथाः । इन्द्र । ज्यैष्ठ्याय । सुक्रतो इति
सुऽक्रतो ॥६॥ आ । त्वा । विशन्तु । आशवः । सोमासः । इन्द्र ।
गिर्वणः । शम् । ते । सन्तु । प्रऽचेतसे ॥७॥ त्वाम् । स्तोमाः । अवीवृधन् ।
त्वाम् । उक्था । शतक्रतो इति शतऽक्रतो । त्वाम् । वर्धन्तु । नः । गिरः
॥८॥ अक्षितऽऊतिः । सनेत् । इमम् । वाजम् । इन्द्रः । सहस्रिणम् ।
यस्मिन् । विश्वानि । पौंस्या ॥९॥ मा । नः । मर्ताः । अभि । द्रुहन् ।
तनूनाम् । इन्द्र । गिर्वणः । ईशानः । यवय । वधम् ॥१०॥

I. 6.

युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परि । तस्थुषः । रोचन्ते ।
रोचना । दिवि ॥१॥ युञ्जन्ति । अस्य । काम्या । हरी इति । विऽपक्षसा ।
रथे । शोणा । धृष्णू इति । नृऽवाहसा ॥२॥ केतुम् । कृण्वन् । अकेतवे ।
पेशः । मर्याः । अपेशसे । सम् । उषत्ऽभिः । अजायथाः ॥३॥ आत् ।
अह । स्वधाम् । अनु । पुनः । गर्भऽत्वम् । आऽईरिरे । दधानाः । नाम ।
यज्ञियम् ॥४॥ वीळु । चित् । आरुजत्नुऽभिः । गुहा । चित् । इन्द्र ।
वह्निऽभिः । अविन्दः । उस्रियाः । अनु ॥५॥ देवऽयन्तः । यथा ।
मतिम् । अच्छ । विदत्ऽवसुम् । गिरः । महाम् । अनूषत । श्रुतम् ॥६॥
इन्द्रेण । सम् । हि । दक्षसे । सम्ऽजग्मानः । अबिभ्युषा । मन्दू इति ।
समानऽवर्चसा ॥७॥ अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् ।

अर्चति । गणैः । इन्द्रस्य । काम्यैः ॥८॥ अतः । परिऽज्मन् । आ । गहि । दिवः । वा । रोचनात् । अधि । सम् । अस्मिन् । ऋञ्जते । गिरः ॥९॥ इतः । वा । सातिम् । ईमहे । दिवः । वा । पार्थिवात् । अधि । इन्द्रम् । महः । वा । रजसः ॥१०॥

I. 7.

इन्द्रम् । इत् । गाथिनः । बृहत् । इन्द्रम् । अर्केभिः । अर्किणः । इन्द्रम् । वाणीः । अनूषत ॥१॥ इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ । वचःऽयुजा । इन्द्रः । वज्री । हिरण्ययः ॥२॥ इन्द्रः । दीर्घाय । चक्षसे । आ । सूर्यम् । रोहयत् । दिवि । वि । गोभिः । अद्रिम् । ऐरयत् ॥३॥ इन्द्र । वाजेषु । नः । अव । सहस्रऽप्रधनेषु । च । उग्रः । उग्राभिः । ऊतिऽभिः ॥४॥ इन्द्रम् । वयम् । महाऽधने । इन्द्रम् । अर्भे । हवामहे । युजम् । वृत्रेषु । वज्रिणम् ॥५॥ सः । नः । वृषन् । अमुम् । चरुम् । सत्राऽदावन् । अप । वृधि । अस्मभ्यम् । अप्रतिऽस्कुतः ॥६॥ तुञ्जेऽतुञ्जे । ये । उत्ऽतरे । स्तोमाः । इन्द्रस्य । वज्रिणः । न । विन्धे । अस्य । सुऽस्तुतिम् ॥७॥ वृषा । यूथाऽइव । वंसगः । कृष्टीः । इयर्ति । ओजसा । ईशानः । अप्रतिऽस्कुतः ॥८॥ यः । एकः । चर्षणीनाम् । वसूनाम् । इरज्यति । इन्द्रः । पञ्च । क्षितीनाम् ॥९॥ इन्द्रम् । वः । विश्वतः । परि । हवामहे । जनेभ्यः । अस्माकम् । अस्तु । केवलः ॥१०॥

I. 8.

आ । इन्द्र । सानसिम् । रयिम् । सऽजित्वानम् । सदाऽसहम् । वर्षिष्ठम् । ऊतये । भर ॥१॥ नि । येन । मुष्टिऽहत्यया । नि । वृत्रा । रुणधामहै । त्वाऽऊतासः । नि । अर्वता ॥२॥ इन्द्र । त्वाऽऊतासः ।

आ । वयम् । वज्रम् । घना । ददीमहि । जयेम । सम् । युधि । स्पृधः ॥३॥ वयम् । शूरेभिः । अस्तृऽभिः । इन्द्र । त्वया । युजा । वयम् । ससह्याम । पृतन्यतः ॥४॥ महान् । इन्द्रः । परः । च । नु । महिऽत्वम् । अस्तु । वज्रिणे । द्यौः । न । प्रथिना । शवः ॥५॥ सम्ऽओहे । वा । ये । आशत । नरः । तोकस्य । सनितौ । विप्रासः । वा । धियाऽयवः ॥६॥ यः । कुक्षिः । सोमऽपातमः । समुद्रःऽइव । पिन्वते । उर्वीः । आपः । न । काकुदः ॥७॥ एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही । पक्वा । शाखा । न । दाशुषे ॥८॥ एव । हि । ते । विऽभूतयः । ऊतयः । इन्द्र । माऽवते । सद्यः । चित् । सन्ति । दाशुषे ॥९॥ एव । हि । अस्य । काम्या । स्तोमः । उक्थम् । च । शंस्या । इन्द्राय । सोमऽपीतये ॥१०॥

I. 9.

इन्द्र । आ । इहि । मत्सि । अन्धसः । विश्वेभिः । सोमपर्वऽभिः । महान् । अभिष्टिः । ओजसा ॥१॥ आ । ईम् । एनम् । सृजत । सुते । मन्दिम् । इन्द्राय । मन्दिने । चक्रिम् । विश्वानि । चक्रये ॥२॥ मत्स्व । सुऽशिप्र । मन्दिऽभिः । स्तोमेभिः । विश्वऽचर्षणे । सचा । एषु । सवनेषु । आ ॥३॥ असृग्रम् । इन्द्र । ते । गिरः । प्रति । त्वाम् । उत् । अहासत । अजोषाः । वृषभम् । पतिम् ॥४॥ सम् । चोदय । चित्रम् । अर्वाक् । राधः । इन्द्र । वरेण्यम् । असत् । इत् । ते । विऽभु । प्रऽभु ॥५॥ अस्मान् । सु । तत्र । चोदय । इन्द्र । राये । रभस्वतः । तुविऽद्युम्न । यशस्वतः ॥६॥ सम् । गोऽमत् । इन्द्र । वाजऽवत् । अस्मे इति । पृथु । श्रवः । बृहत् । विश्वऽआयुः । धेहि । अक्षितम् ॥७॥ अस्मे इति ।

धेहि । श्रवः । बृहत् । द्युम्नम् । सहस्रऽसातमम् । इन्द्र । ताः । रथिनीः । इषः ॥८॥ वसोः । इन्द्रम् । वसुऽपतिम् । गीःऽभिः । गृणन्तः । ऋग्मियम् । होम । गन्तारम् । ऊतये ॥९॥ सुतेऽसुते । निऽओकसे । बृहत् । बृहते । आ । इत् । अरिः । इन्द्राय । शूषम् । अर्चति ॥१०॥

I. 10.

गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् । अर्किणः । ब्रह्माणः । त्वा । शतक्रतो इति शतऽक्रतो । उत् । वंशम्ऽइव । येमिरे ॥१॥ यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् । तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ॥२॥ युक्ष्व । हि । केशिना । हरी इति । वृषणा । कक्ष्यऽप्रा । अथ । नः । इन्द्र । सोमऽपाः । गिराम् । उपऽश्रुतिम् । चर ॥३॥ आ । इहि । स्तोमान् । अभि । स्वर । अभि । गृणीहि । आ । रुव । ब्रह्म । च । नः । वसो इति । सचा । इन्द्र । यज्ञम् । च । वर्धय ॥४॥ उक्थम् । इन्द्राय । शंस्यम् । वर्धनम् । पुरुनिःऽसिधे । शक्रः । यथा । सुतेषु । नः । ररणत् । सख्येषु । च ॥५॥ तम् । इत् । सखिऽत्वे । ईमहे । तम् । राये । तम् । सुऽवीर्ये । सः । शक्रः । उत । नः । शकत् । इन्द्रः । वसु । दयमानः ॥६॥ सुऽविवृतम् । सुनिःऽअजम् । इन्द्र । त्वाऽदातम् । इत् । यशः । गवाम् । अप । व्रजम् । वृधि । कृणुष्व । राधः । अद्रिऽवः ॥७॥ नहि । त्वा । रोदसी इति । उभे इति । ऋघायमाणम् । इन्वतः । जेषः । स्वःऽवतीः । अपः । सम् । गाः । अस्मभ्यम् । धूनुहि ॥८॥ आश्रुत्ऽकर्ण । श्रुधि । हवम् । नु । चित् । दधिष्व । मे । गिरः । इन्द्र । स्तोमम् । इमम् । मम । कृष्व । युजः । चित् । अन्तरम् ॥९॥ विद्म । हि । त्वा । वृषन्ऽतमम् ।

वाजेषु । हवनऽश्रुतम् । वृषन्ऽतमस्य । हूमहे । ऊतिम् । सहस्रऽसातमाम् ॥१०॥ आ । तु । नः । इन्द्र । कौशिक । मन्दसानः । सुतम् । पिब । नव्यम् । आयुः । प्र । सु । तिर । कृधि । सहस्रऽसाम् । ऋषिम् ॥११॥ परि । त्वा । गिर्वणः । गिरः । इमाः । भवन्तु । विश्वतः । वृद्धऽआयुम् । अनु । वृद्धयः । जुष्टाः । भवन्तु । जुष्टयः ॥१२॥

I. 11.

इन्द्रम् । विश्वाः । अवीवृधन् । समुद्रऽव्यचसम् । गिरः । रथिऽतमम् । रथिनाम् । वाजानाम् । सत्ऽपतिम् । पतिम् ॥१॥ सख्ये । ते । इन्द्र । वाजिनः । मा । भेम । शवसः । पते । त्वाम् । अभि । प्र । नोनुमः । जेतारम् । अपराऽजितम् ॥२॥ पूर्वीः । इन्द्रस्य । रातयः । न । वि । दस्यन्ति । ऊतयः । यदि । वाजस्य । गोऽमतः । स्तोतृऽभ्यः । मंहते । मघम् ॥३॥ पुराम् । भिन्दुः । युवा । कविः । अमितऽओजाः । अजायत । इन्द्रः । विश्वस्य । कर्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥४॥ त्वम् । वलस्य । गोऽमतः । अप । अवः । अद्रिऽवः । बिलम् । त्वाम् । देवाः । अबिभ्युषः । तुज्यमानासः । आविषुः ॥५॥ तव । अहम् । शूर । रातिऽभिः । प्रति । आयम् । सिन्धुम् । आऽवदन् । उप । अतिष्ठन्त । गिर्वणः । विदुः । ते । तस्य । कारवः ॥६॥ मायाभिः । इन्द्र । मायिनम् । त्वम् । शुष्णम् । अव । अतिरः । विदुः । ते । तस्य । मेधिराः । तेषाम् । श्रवांसि । उत् । तिर ॥७॥ इन्द्रम् । ईशानम् । ओजसा । अभि । स्तोमाः । अनूषत । सहस्रम् । यस्य । रातयः । उत । वा । सन्ति । भूयसीः ॥८॥

I. 12.

अग्निम् । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् । अस्य । यज्ञस्य । सुऽक्रतुम् ॥१॥ अग्निम्ऽअग्निम् । हवीमऽभिः । सदा । हवन्त । विश्पतिम् । हव्यऽवाहम् । पुरुऽप्रियम् ॥२॥ अग्ने । देवान् । इह । आ । वह । जज्ञानः । वृक्तऽबर्हिषे । असि । होता । नः । ईड्यः ॥३॥ तान् । उशतः । वि । बोधय । यत् । अग्ने । यासि । दूत्यम् । देवैः । आ । सत्सि । बर्हिषि ॥४॥ घृतऽआहवन । दीदिऽवः । प्रति । स्म । रिषतः । दह । अग्ने । त्वम् । रक्षस्विनः ॥५॥ अग्निना । अग्निः । सम् । इध्यते । कविः । गृहऽपतिः । युवा । हव्यऽवाट् । जुहुऽआस्यः ॥६॥ कविम् । अग्निम् । उप । स्तुहि । सत्यऽधर्माणम् । अध्वरे । देवम् । अमीवऽचातनम् ॥७॥ यः । त्वाम् । अग्ने । हविःऽपतिः । दूतम् । देव । सपर्यति । तस्य । स्म । प्रऽअविता । भव ॥८॥ यः । अग्निम् । देवऽवीतये । हविष्मान् । आऽविवासति । तस्मै । पावक । मृळय ॥९॥ सः । नः । पावक । दीदिऽवः । अग्ने । देवान् । इह । आ । वह । उप । यज्ञम् । हविः । च । नः ॥१०॥ सः । नः । स्तवानः । आ । भर । गायत्रेण । नवीयसा । रयिम् । वीरऽवतीम् । इषम् ॥११॥ अग्ने । शुक्रेण । शोचिषा । विश्वाभिः । देवहूतिऽभिः । इमम् । स्तोमम् । जुषस्व । नः ॥१२॥

I. 13.

सुऽसमिद्धः । नः । आ । वह । देवान् । अग्ने । हविष्मते । होतरिति । पावक । यक्षि । च ॥१॥ मधुऽमन्तम् । तनूऽनपात् । यज्ञम् । देवेषु । नः । कवे । अद्य । कृणुहि । वीतये ॥२॥ नराशंसम् । इह ।

प्रियम् । अस्मिन् । यज्ञे । उप॑ । ह्वये । मधुऽजिह्वम् । हविःऽकृतम् ॥३॥
अग्ने । सुखऽतमे । रथे । देवान् । ईळितः । आ । वह । असि । होता ।
मनुःऽहितः ॥४॥ स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठम् । मनीषिणः ।
यत्र । अमृतस्य । चक्षणम् ॥५॥ वि । श्रयन्ताम् । ऋतऽवृधः । द्वारः ।
देवीः । असश्चतः । अद्य । नूनम् । च । यष्टवे ॥६॥ नक्तोषसा ।
सुऽपेशसा । अस्मिन् । यज्ञे । उप॑ । ह्वये । इदम् । नः । बर्हिः ।
आऽसदे ॥७॥ ता । सुऽजिह्वौ । उप॑ । ह्वये । होतारा । दैव्या । कवी
इति । यज्ञम् । नः । यक्षताम् । इमम् ॥८॥ इळा । सरस्वती । मही ।
तिस्रः । देवीः । मयःऽभुवः । बर्हिः । सीदन्तु । अस्रिधः ॥९॥ इह ।
त्वष्टारम् । अग्रियम् । विश्वऽरूपम् । उप॑ । ह्वये । अस्माकम् । अस्तु ।
केवलः ॥१०॥ अव । सृज । वनस्पते । देव । देवेभ्यः । हविः । प्र ।
दातुः । अस्तु । चेतनम् ॥११॥ स्वाहा । यज्ञम् । कृणोतन । इन्द्राय ।
यज्वनः । गृहे । तत्र । देवान् । उप॑ । ह्वये ॥१२॥

I. 14.

आ । एभिः । अग्ने । दुवः । गिरः । विश्वेभिः । सोमऽपीतये ।
देवेभिः । याहि । यक्षि । च ॥१॥ आ । त्वा । कण्वाः । अहूषत ।
गृणन्ति । विप्र । ते । धियः । देवेभिः । अग्ने । आ । गहि ॥२॥
इन्द्रवायू इति । बृहस्पतिम् । मित्रा । अग्निम् । पूषणम् । भगम् ।
आदित्यान् । मारुतम् । गणम् ॥३॥ प्र । वः । भ्रियन्ते । इन्दवः ।
मत्सराः । मादयिष्णवः । द्रप्साः । मध्वः । चमूऽसदः ॥४॥ ईळते ।
त्वाम् । अवस्यवः । कण्वासः । वृक्तऽबर्हिषः । हविष्मन्तः । अरम्ऽकृतः ॥५॥ घृतऽपृष्ठाः । मनःऽयुजः । ये । त्वा । वहन्ति । वह्नयः ।

आ । देवान् । सोमऽपीतये ॥६॥ तान् । यजत्रान् । ऋतऽवृधः । अग्ने ।
पत्नीऽवतः । कृधि । मध्वः । सुऽजिह्व । पायय ॥७॥ ये । यजत्राः ।
ये । ईड्याः । ते । ते । पिबन्तु । जिह्वया । मधोः । अग्ने । वषट्ऽ-
कृति ॥८॥ आकीम् । सूर्यस्य । रोचनात् । विश्वान् । देवान् । उषः-
ऽबुधः । विप्रः । होता । इह । वक्षति ॥९॥ विश्वेभिः । सोम्यम् ।
मधु । अग्ने । इन्द्रेण । वायुना । पिब । मित्रस्य । धामऽभिः ॥१०॥
त्वम् । होता । मनुःऽहितः । अग्ने । यज्ञेषु । सीदसि । सः । इमम् ।
नः । अध्वरम् । यज ॥११॥ युक्ष्व । हि । अरुषीः । रथे । हरितः ।
देव । रोहितः । ताभिः । देवान् । इह । आ । वह ॥१२॥

I. 15.

इन्द्र । सोमम् । पिब । ऋतुना । आ । त्वा । विशन्तु । इन्दवः ।
मत्सरासः । तत्ऽओकसः ॥१॥ मरुतः । पिबत । ऋतुना । पोत्रात् ।
यज्ञम् । पुनीतन । यूयम् । हि । स्थ । सुऽदानवः ॥२॥ अभि । यज्ञम् ।
गृणीहि । नः । ग्नावः । नेष्टरिति । पिब । ऋतुना । त्वम् । हि ।
रत्नऽधाः । असि ॥३॥ अग्ने । देवान् । इह । आ । वह । सादय ।
योनिषु । त्रिषु । परि । भूष । पिब । ऋतुना ॥४॥ ब्राह्मणात् । इन्द्र ।
राधसः । पिब । सोमम् । ऋतून् । अनु । तव । इत् । हि । सख्यम् ।
अस्तृतम् ॥५॥ युवम् । दक्षम् । धृतऽव्रता । मित्रावरुणा । दुःऽदभम् ।
ऋतुना । यज्ञम् । आशाथे इति ॥६॥ द्रविणःऽदाः । द्रविणसः ।
ग्रावऽहस्तासः । अध्वरे । यज्ञेषु । देवम् । ईळते ॥७॥ द्रविणःऽदाः ।
ददातु । नः । वसूनि । यानि । शृण्विरे । देवेषु । ता । वनामहे ॥८॥
द्रविणःऽदाः । पिपीषति । जुहोत । प्र । च । तिष्ठत । नेष्ट्रात् । ऋतु-

ऽभिः । इष्यत ॥९॥ यत् । त्वा । तुरीयम् । ऋतुऽभिः । द्रविणःऽदः । यजामहे । अध । स्म । नः । ददिः । भव ॥१०॥ अश्विना । पिबतम् । मधु । दीद्यग्नी इति । दीदिऽअग्नी । शुचिऽव्रता । ऋतुना । यज्ञऽवाहसा ॥११॥ गार्हऽपत्येन । सन्त्य । ऋतुना । यज्ञऽनीः । असि । देवान् । देवऽयते । यज ॥१२॥

I. 16.

आ । त्वा । वहन्तु । हरयः । वृषणम् । सोमऽपीतये । इन्द्र । त्वा । सूरऽचक्षसः ॥१॥ इमाः । धानाः । घृतऽस्नुवः । हरी इति । इह । उप । वक्षतः । इन्द्रम् । सुखऽतमे । रथे ॥२॥ इन्द्रम् । प्रातः । हवामहे । इन्द्रम् । प्रऽयति । अध्वरे । इन्द्रम् । सोमस्य । पीतये ॥३॥ उप । नः । सुतम् । आ । गहि । हरिऽभिः । इन्द्र । केशिऽभिः । सुते । हि । त्वा । हवामहे ॥४॥ सः । इमम् । नः । स्तोमम् । आ । गहि । उप । इदम् । सवनम् । सुतम् । गौरः । न । तृषितः । पिब ॥५॥ इमे । सोमासः । इन्दवः । सुतासः । अधि । बर्हिषि । तान् । इन्द्र । सहसे । पिब ॥६॥ अयम् । ते । स्तोमः । अग्रियः । हृदिऽस्पृक् । अस्तु । शम्ऽतमः । अथ । सोमम् । सुतम् । पिब ॥७॥ विश्वम् । इत् । सवनम् । सुतम् । इन्द्रः । मदाय । गच्छति । वृत्रऽहा । सोमऽपीतये ॥८॥ सः । इमम् । नः । कामम् । आ । पृण । गोभिः । अश्वैः । शतक्रतो इति शतऽक्रतो । स्तवाम । त्वा । सुऽआध्यः ॥९॥

I. 17.

इन्द्रावरुणयोः । अहम् । सम्ऽराजोः । अवः । आ । वृणे । ता । नः । मृळातः । ईदृशे ॥१॥ गन्तारा । हि । स्थः । अवसे । हवम् ।

विप्रस्य । माऽवतः । धर्तारा । चर्षणीनाम् ॥२॥ अनुऽकामम् । तर्पये- थाम् । इन्द्रावरुणा । रायः । आ । ता । वाम् । नेदिष्ठम् । ईमहे ॥३॥ युवाकु । हि । शचीनाम् । युवाकु । सुऽमतीनाम् । भूयाम । वाज- ऽदाव्नाम् ॥४॥ इन्द्रः । सहस्रऽदाव्नाम् । वरुणः । शंस्यानाम् । क्रतुः । भवति । उक्थ्यः ॥५॥ तयोः । इत् । अवसा । वयम् । सनेम । नि । च । धीमहि । स्यात् । उत । प्रऽरेचनम् ॥६॥ इन्द्रावरुणा । वाम् । अहम् । हुवे । चित्राय । राधसे । अस्मान् । सु । जिग्युषः । कृतम् ॥७॥ इन्द्रावरुणा । नु । नु । वाम् । सिसासन्तीषु । धीषु । आ । अस्मभ्यम् । शर्म । यच्छतम् ॥८॥ प्र । वाम् । अश्नोतु । सुऽस्तुतिः । इन्द्रावरुणा । याम् । हुवे । याम् । ऋधाथे इति । सधऽस्तुतिम् ॥९॥

I. 18.

सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते । कक्षीवन्तम् । यः । औशिजः ॥१॥ यः । रेवान् । यः । अमीवऽहा । वसुऽवित् । पुष्टि- ऽवर्धनः । सः । नः । सिसक्तु । यः । तुरः ॥२॥ मा । नः । शंसः । अररुषः । धूर्तिः । प्रणक् । मर्त्यस्य । रक्ष । नः । ब्रह्मणः । पते ॥३॥ सः । घ । वीरः । न । रिष्यति । यम् । । इन्द्रः । ब्रह्मणः । पतिः । सोमः । हिनोति । मर्त्यम् ॥४॥ त्वम् । तम् । ब्रह्मणः । पते । सोमः । इन्द्रः । च । मर्त्यम् । दक्षिणा । पातु । अंहसः ॥५॥ सदसः । पतिम् । अद्भुतम् । प्रियम् । इन्द्रस्य । काम्यम् । सनिम् । मेधाम् । अयासिषम् ॥६॥ यस्मात् । ऋते । न । सिध्यति । यज्ञः । विपःऽचितः । चन । सः । धीनाम् । योगम् । इन्वति ॥७॥ आत् । ऋध्नोति । हविःऽकृतिम् । प्राञ्चम् । कृणोति । अध्वरम् । होत्रा । देवेषु । गच्छति ॥८॥

नराशंसम् । सुऽधृष्टमम् । अपश्यम् । सप्रथःऽतमम् । दिवः न । सद्मऽमखसम् ॥९॥

I. 19.

प्रति । त्यम् । चारुम् । अध्वरम् । गोऽपीथाय । प्र । हूयसे । मरुत्ऽभिः । अग्ने । आ । गहि ॥१॥ नहि । देवः । न । मर्त्यः । महः । तव । क्रतुम् । परः । मरुत्ऽभिः । अग्ने । आ । गहि ॥२॥ ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः । मरुत्ऽभिः । अग्ने । आ । गहि ॥३॥ ये । उग्राः । अर्कम् । आनृचुः । अनाधृष्टासः । ओजसा । मरुत्ऽभिः । अग्ने । आ । गहि ॥४॥ ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः । मरुत्ऽभिः । अग्ने । आ । गहि ॥५॥ ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते । मरुत्ऽभिः । अग्ने । आ । गहि ॥६॥ ये । ईङ्खयन्ति । पर्वतान् । तिरः । समुद्रम् । अर्णवम् । मरुत्ऽभिः । अग्ने । आ । गहि ॥७॥ आ । ये । तन्वन्ति । रश्मिऽभिः । तिरः । समुद्रम् । ओजसा । मरुत्ऽभिः । अग्ने । आ । गहि ॥८॥ अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यम् । मधु । मरुत्ऽभिः । अग्ने । आ । गहि ॥९॥

I. 20.

अयम् । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया । अकारि । रत्नऽधातमः ॥१॥ ये । इन्द्राय । वचःऽयुजा । ततक्षुः । मनसा । हरी इति । शमीभिः । यज्ञम् । आशत ॥२॥ तक्षन् । नासत्याभ्याम् । परिऽज्मानम् । सुऽखम् । रथम् । तक्षन् । धेनुम् । सबःऽदुघाम् ॥३॥ युवाना । पितरा । पुनरिति । सत्यऽमन्त्राः । ऋजुऽयवः । ऋभवः ।

विष्टी । अकृत ॥४॥ सम् । वः । मदासः । अग्मत । इन्द्रेण । च । मरुत्वता । आदित्येभिः । च । राजऽभिः ॥५॥ उत । त्यम् । चमसम् । नवम् । त्वष्टुः । देवस्य । निःऽकृतम् । अकर्त । चतुरः । पुनरिति ॥६॥ ते । नः । रत्नानि । धत्तन । त्रिः । आ । साप्तानि । सुन्वते । एकम्ऽएकम् । सुशस्तिऽभिः ॥७॥ अधारयन्त । वह्नयः । अभजन्त । सुऽकृत्यया । भागम् । देवेषु । यज्ञियम् ॥८॥

I. 21.

इह । इन्द्राग्नी इति । उप । ह्वये । तयोः । इत् । स्तोमम् । उश्मसि । ता । सोमम् । सोमऽपातमा ॥१॥ ता । यज्ञेषु । प्र । शंसत । इन्द्राग्नी इति । शुम्भत । नरः । ता । गायत्रेषु । गायत ॥२॥ ता । मित्रस्य । प्रऽशस्तये । इन्द्राग्नी इति । ता । हवामहे । सोमऽपा । सोमऽपीतये ॥३॥ उग्रा । सन्ता । हवामहे । उप । इदम् । सवनम् । सुतम् । इन्द्राग्नी इति । आ । इह । गच्छताम् ॥४॥ ता । महान्ता । सदस्पती इति । इन्द्राग्नी इति । रक्षः । उब्जतम् । अप्रजाः । सन्तु । अत्रिणः ॥५॥ तेन । सत्येन । जागृतम् । अधि । प्रऽचेतुने । पदे । इन्द्राग्नी इति । शर्म । यच्छतम् ॥६॥

I. 22.

प्रातःऽयुजा । वि । बोधय । अश्विनौ । आ । इह । गच्छताम् । अस्य । सोमस्य । पीतये ॥१॥ या । सुऽरथा । रथिऽतमा । उभा । देवा । दिविऽस्पृशा । अश्विना । ता । हवामहे ॥२॥ या । वाम् । कशा । मधुऽमती । अश्विना । सूनृताऽवती । तया । यज्ञम् । मिमिक्षतम् ॥३॥ नहि । वाम् । अस्ति । दूरके । यत्र । रथेन । गच्छथः ।

अश्विना । सोमिनः । गृहम् ॥४॥ हिरण्यऽपाणिम् । ऊतये । सवितारम् ।
उप । ह्वये । सः । चेत्ता । देवता । पदम् ॥५॥ अपाम् । नपातम् ।
अवसे । सवितारम् । उप । स्तुहि । तस्य । व्रतानि । उश्मसि ॥६॥
विऽभक्तारम् । हवामहे । वसोः । चित्रस्य । राधसः । सवितारम् ।
नृऽचक्षसम् ॥७॥ सखायः । आ । नि । सीदत । सविता । स्तोम्यः ।
नु । नः । दाता । राधांसि । शुम्भति ॥८॥ अग्ने । पत्नीः । इह ।
आ । वह । देवानाम् । उशतीः । उप । त्वष्टारम् । सोमऽपीतये ॥९॥
आ । ग्नाः । अग्ने । इह । अवसे । होत्राम् । यविष्ठ । भारतीम् ।
वरूत्रीम् । धिषणाम् । वह ॥१०॥ अभि । नः । देवीः । अवसा ।
महः । शर्मणा । नृऽपत्नीः । अच्छिन्नऽपत्राः । सचन्ताम् ॥११॥
इह । इन्द्राणीम् । उप । ह्वये । वरुणानीम् । स्वस्तये । अग्नायीम् ।
सोमऽपीतये ॥१२॥ मही । द्यौः । पृथिवी । च । नः । इमम् ।
यज्ञम् । मिमिक्षताम् । पिपृताम् । नः । भरीमऽभिः ॥१३॥ तयोः ।
इत् । घृतऽवत् । पयः । विप्राः । रिहन्ति । धीतिऽभिः । गन्धर्वस्य ।
ध्रुवे । पदे ॥१४॥ स्योना । पृथिवि । भव । अनृक्षरा । निऽवेशनी ।
यच्छ । नः । शर्म । सऽप्रथः ॥१५॥ अतः । देवाः । अवन्तु ।
नः । यतः । विष्णुः । विऽचक्रमे । पृथिव्याः । सप्त । धामऽभिः ॥१६॥
इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदम् । सम्ऽऊ-
ळ्हम् । अस्य । पांसुरे ॥१७॥ त्रीणि । पदा । वि । चक्रमे । विष्णुः ।
गोपाः । अदाभ्यः । अतः । धर्माणि । धारयन् ॥१८॥ विष्णोः ।
कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे । इन्द्रस्य । युज्यः ।
सखा ॥१९॥ तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति ।

सूर्यः । दिविऽइव । चक्षुः । आऽततम् ॥२०॥ तत् । विप्रासः । विपन्यवः । जागृऽवांसः । सम् । इन्धते । विष्णोः । यत् । परमम् । पदम् ॥२१॥

I. 23.

तीव्राः । सोमासः । आ । गहि । आशीःऽवन्तः । सुताः । इमे । वायो इति । तान् । प्रऽस्थितान् । पिब ॥१॥ उभा । देवा । दिविऽस्पृशा । इन्द्रवायू इति । हवामहे । अस्य । सोमस्य । पीतये ॥२॥ इन्द्रवायू इति । मनःऽजुवा । विप्राः । हवन्ते । ऊतये । सहस्रऽअक्षा । धियः । पती इति ॥३॥ मित्रम् । वयम् । हवामहे । वरुणम् । सोमऽपीतये । जज्ञाना । पूतऽदक्षसा ॥४॥ ऋतेन । यौ । ऋतऽवृधौ । ऋतस्य । ज्योतिषः । पती इति । ता । मित्रावरुणा । हुवे ॥५॥ वरुणः । प्रऽअविता । भुवत् । मित्रः । विश्वाभिः । ऊतिऽभिः । करताम् । नः । सुऽराधसः ॥६॥ मरुत्वन्तम् । हवामहे । इन्द्रम् । आ । सोमऽपीतये । सऽजूः । गणेन । तृम्पतु ॥७॥ इन्द्रऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽरातयः । विश्वे । मम । श्रुत । हवम् ॥८॥ हत । वृत्रम् । सुऽदानवः । इन्द्रेण । सहसा । युजा । मा । नः । दुःऽशंसः । ईशत ॥९॥ विश्वान् । देवान् । हवामहे । मरुतः । सोमऽपीतये । उग्राः । हि । पृश्निऽमातरः ॥१०॥ जयताम्ऽइव । तन्यतुः । मरुताम् । एति । धृष्णुऽया । यत् । शुभम् । याथन । नरः ॥११॥ हस्कारात् । विऽद्युतः । परि । अतः । जाताः । अवन्तु । नः । मरुतः । मृळयन्तु । नः ॥१२॥ आ । पूषन् । चित्रऽबर्हिषम् । आघृणे । धरुणम् । दिवः । आ । अज । नष्टम् । यथा । पशुम् ॥१३॥ पूषा । राजानम् । आघृणिः । अप-

ऽगूळ्हम् । गुहा । हितम् । अविन्दत् । चित्रऽबर्हिषम् ॥१४॥ उतो
इति । सः । मह्यम् । इन्दुऽभिः । षट् । युक्तान् । अनुऽसेसिधत् ।
गोभिः । यवम् । न । चर्कृषत् ॥१५॥ अम्बयः । यन्ति । अध्वऽभिः ।
जामयः । अध्वरिऽयताम् । पृञ्चतीः । मधुना । पयः ॥१६॥ अमूः ।
याः । उप । सूर्ये । याभिः । वा । सूर्यः । सह । ताः । नः । हिन्वन्तु ।
अध्वरम् ॥१७॥ अपः । देवीः । उप । ह्वये । यत्र । गावः ।
पिबन्ति । नः । सिन्धुऽभ्यः । कर्त्वम् । हविः ॥१८॥ अप्ऽसु । अन्तः ।
अमृतम् । अप्ऽसु । भेषजम् । अपाम् । उत । प्रऽशस्तये । देवाः ।
भवत । वाजिनः ॥१९॥ अप्ऽसु । मे । सोमः । अब्रवीत् । अन्तः ।
विश्वानि । भेषजा । अग्निम् । च । विश्वऽशंभुवम् । आपः । च ।
विश्वऽभेषजीः ॥२०॥ आपः । पृणीत । भेषजम् । वरूथम् । तन्वे ।
मम । ज्योक् । च । सूर्यम् । दृशे ॥२१॥ इदम् । आपः । प्र । वहत ।
यत् । किम् । च । दुःऽइतम् । मयि । यत् । वा । अहम् । अभिऽदुद्रोह ।
यत् । वा । शेपे । उत । अनृतम् ॥२२॥ आपः । अद्य । अनु । अचा-
रिषम् । रसेन । सम् । अगस्महि । पयस्वान् । अग्ने । आ । गहि । तम् ।
मा । सम् । सृज । वर्चसा ॥२३॥ सम् । मा । अग्ने । वर्चसा । सृज ।
सम् । प्रऽजया । सम् । आयुषा । विद्युः । मे । अस्य । देवाः । इन्द्रः ।
विद्यात् । सह । ऋषिऽभिः ॥२४॥

I. 24

कस्य । नूनम् । कतमस्य । अमृतानाम् । मनामहे । चारु । देवस्य ।
नाम । कः । नः । मह्यै । अदितये । पुनः । दात् । पितरम् । च ।
दृशेयम् । मातरम् । च ॥१॥ अग्नेः । वयम् । प्रथमस्य । अमृतानाम् ।

मनामहे । चारु । देवस्य । नाम । सः । नः । मह्यै । अदितये । पुनः । दात् । पितरम् । च । दृशेयम् । मातरम् । च ॥२॥ अभि । त्वा । देव । सवितः । ईशानम् । वार्याणाम् । सदा । अवन् । भागम् । ईमहे ॥३॥ यः । चित् । हि । ते । इत्था । भगः । शशमानः । पुरा । निदः । अद्वेषः । हस्तयोः । दधे ॥४॥ भगऽभक्तस्य । ते । वयम् । उत् । अशेम । तव । अवसा । मूर्धानम् । रायः । आऽरभे ॥५॥ नहि । ते । क्षत्रम् । न । सहः । न । मन्युम् । वयः । चन । अमी इति । पतयन्तः । आपुः । न । इमाः । आपः । अनिऽमिषम् । चरन्तीः । न । ये । वातस्य । प्रऽमिनन्ति । अभ्वम् ॥६॥ अबुध्ने । राजा । वरुणः । वनस्य । ऊर्ध्वम् । स्तूपम् । ददते । पूतऽदक्षः । नीचीनाः । स्थुः । उपरि । बुध्नः । एषाम् । अस्मे इति । अन्तः । निऽहिताः । केतवः । स्युरिति स्युः ॥७॥ उरुम् । हि । राजा । वरुणः । चकार । सूर्याय । पन्थाम् । अनुऽएतवै । ऊम् इति । अपदे । पादा । प्रतिऽधातवे । अकः । उत । अपऽवक्ता । हृदयऽविधः । चित् ॥८॥ शतम् । ते । राजन् । भिषजः । सहस्रम् । उर्वी । गभीरा । सुऽमतिः । ते । अस्तु । बाधस्व । दूरे । निःऽऋतिम् । पराचैः । कृतम् । चित् । एनः । प्र । मुमुग्धि । अस्मत् ॥९॥ अमी इति । ये । ऋक्षाः । निऽहितासः । उच्चा । नक्तम् । ददृश्रे । कुह । चित् । दिवा । ईयुः । अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चन्द्रमाः । नक्तम् । एति ॥१०॥ तत् । त्वा । यामि । ब्रह्मणा । वन्दमानः । तत् । आ । शास्ते । यजमानः । हविःऽभिः । अहेळमानः । वरुण । इह । बोधि । उरुऽशंस । मा । नः । आयुः । प्र । मोषीः ॥११॥ तत् । इत् । नक्तम् । तत् । दिवा । मह्यम् ।

आहुः । तत् । अयम् । केतः । हृदः । आ । वि । चष्टे । शुनःशेपः । यम् । अह्वत् । गृभीतः । सः । अस्मान् । राजा । वरुणः । मुमोक्तु ॥१२॥ शुनःशेपः । हि । अह्वत् । गृभीतः । त्रिषु । आदित्यम् । द्रुऽपदेषु । बद्धः । अव । एनम् । राजा । वरुणः । ससृज्यात् । विद्वान् । अदब्धः । वि । मुमोक्तु । पाशान् ॥१३॥ अव । ते । हेळः । वरुण । नमःऽभिः । अव । यज्ञेभिः । ईमहे । हविःऽभिः । क्षयन् । अस्मभ्यम् । असुर । प्रचेत इति प्रऽचेतः । राजन् । एनांसि । शिश्रथः । कृतानि ॥१४॥ उत् । उत्ऽतमम् । वरुण । पाशम् । अस्मत् । अव । अधमम् । वि । मध्यमम् । श्रथय । अथ । वयम् । आदित्य । व्रते । तव । अनागसः । अदितये । स्याम ॥१५॥

I. 25.

यत् । चित् । हि । ते । विशः । यथा । प्र । देव । वरुण । व्रतम् । मिनीमसि । द्यविऽद्यवि ॥१॥ मा । नः । वधाय । हत्नवे । जिहीळानस्य । रीरधः । मा । हृणानस्य । मन्यवे ॥२॥ वि । मृळीकाय । ते । मनः । रथीः । अश्वम् । न । सम्ऽदितम् । गीःऽभिः । वरुण । सीमहि ॥३॥ परा । हि । मे । विऽमन्यवः । पतन्ति । वस्यःऽइष्टये । वयः । न । वसतीः । उप ॥४॥ कदा । क्षत्रऽश्रियम् । नरम् । आ । वरुणम् । करामहे । मृळीकाय । उरुऽचक्षसम् ॥५॥ तत् । इत् । समानम् । आशाते इति । वेनन्ता । न । प्र । युच्छतः । धृतऽव्रताय । दाशुषे ॥६॥ वेद । यः । वीनाम् । पदम् । अन्तरिक्षेण । पतताम् । वेद । नावः । समुद्रियः ॥७॥ वेद । मासः । धृतऽव्रतः । द्वादश । प्रजाऽवतः । वेद । यः । उपऽजायते ॥८॥ वेद । वातस्य । वर्तनिम् । उरोः ।

ऋष्वसं । बृहतः । वेद॑ । ये । अधिऽआसते ॥९॥ नि । ससाद ।
धृतऽव्रतः । वरुणः । पस्त्यासु । आ । साम्ऽराज्याय । सुऽक्रतुः ॥१०॥
अतः । विश्वानि । अद्भुता । चिकित्वान् । अभि । पश्यति । कृतानि ।
या । च । कर्त्वा ॥११॥ सः । नः । विश्वाहा । सुऽक्रतुः । आदित्यः ।
सुऽपथा । करत् । प्र । नः । आयूंषि । तारिषत् ॥१२॥ बिभ्रत् ।
द्रापिम् । हिरण्ययम् । वरुणः । वस्त । निःऽनिर्जम् । परि । स्पशः ।
नि । सेदिरे ॥१३॥ न । यम् । दिप्सन्ति । दिप्सवः । न । द्रुह्वाणः ।
जनानाम् । न । देवम् । अभिऽमातयः ॥१४॥ उत । यः । मानुषेषु ।
आ । यशः । चक्रे । असामि । आ । अस्माकम् । उदरेषु । आ ॥१५॥
परा । मे । यन्ति । धीतयः । गावः । न । गव्यूतीः । अनु ।
इच्छन्तीः । उरुऽचक्षसम् ॥१६॥ सम् । नु । वोचावहै । पुनः । यतः ।
मे । मधु । आऽभृतम् । होताऽइव । क्षदसे । प्रियम् ॥१७॥ दर्शम् ।
नु । विश्वऽदर्शतम् । दर्शम् । रथम् । अधि । क्षमि । एताः । जुषत ।
मे । गिरः ॥१८॥ इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । च ।
मृळय । त्वाम् । अवस्युः । आ । चके ॥१९॥ त्वम् । विश्वस्य । मेधिर ।
दिवः । च । ग्मः । च । राजसि । सः । यामनि । प्रति । श्रुधि ॥२०॥
उत् । उत्ऽतमम् । मुमुग्धि । नः । वि । पाशम् । मध्यमम् । चृत ।
अव । अधमानि । जीवसे ॥२१॥

I. 26.

वसिष्व । हि । मियेध्य । वस्त्राणि । ऊर्जाम् । पते । सः । इमम् ।
नः । अध्वरम् । यज ॥१॥ नि । नः । होता । वरेण्यः । सदा ।
यविष्ठ । मन्मऽभिः । अग्ने । दिवित्मता । वचः ॥२॥ आ । हि । स्म ।

सूनवे । पिता । आपिः । यजति । आपये । सखा । सख्ये । वरेण्यः ॥३॥ आ । नः । बर्हिः । रिशादसः । वरुणः । मित्रः । अर्यमा । सीदन्तु । मनुषः । यथा ॥४॥ पूर्व्य । होतः । अस्य । नः । मन्दस्व । सख्यस्य । च । इमाः । ऊँ इति । सु । श्रुधि । गिरः ॥५॥ यत् । चित् । हि । शश्वता । तना । देवम्ऽदेवम् । यजामहे । त्वे इति । इत् । हूयते । हविः ॥६॥ प्रियः । नः । अस्तु । विश्पतिः । होता । मन्द्रः । वरेण्यः । प्रियाः । सुऽअग्नयः । वयम् ॥७॥ सुऽअग्नयः । हि । वार्यम् । देवासः । दधिरे । च । नः । सुऽअग्नयः । मनामहे ॥८॥ अथ । नः । उभयेषाम् । अमृत । मर्त्यानाम् । मिथः । सन्तु । प्रऽशस्तयः ॥९॥ विश्वेभिः । अग्ने । अग्निऽभिः । इमम् । यज्ञम् । इदम् । वचः । चनः । धाः । सहसः । यहो इति ॥१०॥

I. 27.

अश्वम् । न । त्वा । वारऽवन्तम् । वन्दध्यै । अग्निम् । नमःऽभिः । सम्ऽराजन्तम् । अध्वराणाम् ॥१॥ सः । घ । नः । सूनुः । शवसा । पृथुऽप्रगामा । सुऽशेवः । मीढ्वान् । अस्माकम् । बभूयात् ॥२॥ सः । नः । दूरात् । च । आसात् । च । नि । मर्त्यात् । अघऽयोः । पाहि । सदम् । इत् । विश्वऽआयुः ॥३॥ इमम् । ऊँ इति । सु । त्वम् । अस्माकम् । सनिम् । गायत्रम् । नव्यांसम् । अग्ने । देवेषु । प्र । वोचः ॥४॥ आ । नः । भज । परमेषु । आ । वाजेषु । मध्यमेषु । शिक्ष । वस्वः । अन्तमस्य ॥५॥ विऽभक्ता । असि । चित्रभानो इति चित्रऽभानो । सिन्धोः । ऊर्मौ । उपाके । आ । सद्यः । दाशुषे । क्षरसि ॥६॥ यम् । अग्ने । पृत्ऽसु । मर्त्यम् । अवाः । वाजेषु । यम् । जुनाः । सः । यन्ता ।

शश्वतीः । इषः ॥७॥ नकिः । अस्य । सहन्त्य । परिऽएता । कयस्य । चित् । वाजः । अस्ति । श्रवाय्यः ॥८॥ सः । वाजम् । विश्वऽचर्षणिः । अर्वत्ऽभिः । अस्तु । तरुता । विप्रेभिः । अस्तु । सनिता ॥९॥ जराऽबोध । तत् । विविड्ढि । विशेऽविशे । यज्ञियाय । स्तोमम् । रुद्राय । दृशीकम् ॥१०॥ सः । नः । महान् । अनिऽमानः । धूमऽकेतुः । पुरुऽचन्द्रः । धिये । वाजाय । हिन्वतु ॥११॥ सः । रेवान्ऽइव । विश्पतिः । दैव्यः । केतुः । शृणोतु । नः । उक्थैः । अग्निः । बृहत्ऽभानुः ॥१२॥ नमः । महत्ऽभ्यः । नमः । अर्भकेभ्यः । नमः । युवऽभ्यः । नमः । आशिनेभ्यः । यजाम । देवान् । यदि । शक्नवाम । मा । ज्यायसः । शंसम् । आ । वृक्षि । देवाः ॥१३॥

I. 28.

यत्र । ग्रावा । पृथुऽबुध्नः । ऊर्ध्वः । भवति । सोतवे । उलूखलऽसुतानाम् । अव । इत् । ऊँ इति । इन्द्र । जल्गुलः ॥१॥ यत्र । द्वौऽइव । जघना । अधिऽसवन्या । कृता । उलूखलऽसुतानाम् । अव । इत् । ऊँ इति । इन्द्र । जल्गुलः ॥२॥ यत्र । नारी । अपऽच्यवम् । उपऽच्यवम् । च । शिक्षते । उलूखलऽसुतानाम् । अव । इत् । ऊँ इति । इन्द्र । जल्गुलः ॥३॥ यत्र । मन्थाम् । विऽबध्नते । रश्मीन् । यमितवैऽइव । उलूखलऽसुतानाम् । अव । इत् । ऊँ इति । इन्द्र । जल्गुलः ॥४॥ यत् । चित् । हि । त्वम् । गृहेऽगृहे । उलूखलक । युज्यसे । इह । द्युमत्ऽतमम् । वद । जयताम्ऽइव । दुन्दुभिः ॥५॥ उत । स्म । ते । वनस्पते । वातः । वि । वाति । अग्रम् । इत् । अथो इति । इन्द्राय । पातवे । सुनु । सोमम् । उलूखल ॥६॥ आयजी इत्याऽयजी । वाज-

ऽसातमा । ता । हि । उत्था । विऽजर्भृतः । हरी इवेति हरीऽइव ।
अन्धांसि । बप्सता ॥७॥ ता । नः । अद्य । वनस्पती इति । ऋष्वौ ।
ऋष्वेभिः । सोतृऽभिः । इन्द्राय । मधुऽमत् । सुतम् ॥८॥ उत् ।
शिष्टम् । चम्वोः । भर । सोमम् । पवित्रे । आ । सृज । नि । धेहि ।
गोः । अधि । त्वचि ॥९॥

I. 29.

यत् । चित् । हि । सत्य । सोमऽपाः । अनाशस्ताःऽइव । स्मसि ।
आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु ।
तुविऽमघ ॥१॥ शिप्रिन् । वाजानाम् । पते । शचीऽवः । तव । दंसना ।
आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु ।
तुविऽमघ ॥२॥ नि । स्वापय । मिथुऽदृशा । सस्ताम् । अबुध्यमाने
इति । आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु ।
सहस्रेषु । तुविऽमघ ॥३॥ ससन्तु । त्याः । अरातयः । बोधन्तु ।
शूर । रातयः । आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु ।
शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥४॥ सम् । इन्द्र । गर्दभम् । मृण । नुवन्तम् ।
पापया । अमुया । आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु ।
शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥५॥ पताति । कुण्डृणाच्या । दूरम् ।
वातः । वनात् । अधि । आ । तु । नः । इन्द्र । शंसय । गोषु ।
अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥६॥ सर्वम् । परिऽक्रोशम् ।
जहि । जम्भय । कृकदाश्वम् । आ । तु । नः । इन्द्र । शंसय । गोषु ।
अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥७॥

I. 30.

आ । वः । इन्द्रम् । क्रिविम् । यथा । वाजऽयन्तः । शतऽक्रतुम् ।
मंहिष्ठम् । सिञ्चे । इन्दुऽभिः ॥१॥ शतम् । वा । यः । शुचीनाम् ।
सहस्रम् । वा । सम्ऽआशिराम् । आ । इत् । ऊँ इति । निम्नम् । न ।
रीयते ॥२॥ सम् । यत् । मदाय । शुष्मिणे । एना । हि । अस्य ।
उदरे । समुद्रः । न । व्यचः । दधे ॥३॥ अयम् । ऊँ इति । ते ।
सम् । अतसि । कपोतःऽइव । गर्भऽधिम् । वचः । तत् । चित् । नः ।
ओहसे ॥४॥ स्तोत्रम् । राधानाम् । पते । गिर्वाहः । वीर । यस्य । ते ।
विऽभूतिः । अस्तु । सूनृता ॥५॥ ऊर्ध्वः । तिष्ठ । नः । ऊतये ।
अस्मिन् । वाजे । शतक्रतो इति शतऽक्रतो । सम् । अन्येषु । ब्रवावहै
॥६॥ योगेऽयोगे । तवःऽतरम् । वाजेऽवाजे । हवामहे । सखायः ।
इन्द्रम् । ऊतये ॥७॥ आ । घ । गमत् । यदि । श्रवत् । सहस्रिणीभिः ।
ऊतिऽभिः । वाजेभिः । उप । नः । हवम् ॥८॥ अनु । प्रत्नस्य । ओकसः ।
हुवे । तुविऽप्रतिम् । नरम् । यम् । ते । पूर्वम् । पिता । हुवे ॥९॥
तम् । त्वा । वयम् । विश्वऽवार । आ । शास्महे । पुरुऽहूत । सखे ।
वसो इति । जरितृऽभ्यः ॥१०॥ अस्माकम् । शिप्रिणीनाम् । सोमऽपाः ।
सोमऽपाव्नाम् । सखे । वज्रिन् । सखीनाम् ॥११॥ तथा । तत् । अस्तु ।
सोमऽपाः । सखे । वज्रिन् । तथा । कृणु । यथा । ते । उश्मसि ।
इष्टये ॥१२॥ रेवतीः । नः । सधऽमादे । इन्द्रे । सन्तु । तुविऽवाजाः ।
क्षुऽमन्तः । याभिः । मदेम ॥१३॥ आ । घ । त्वाऽवान् । त्मना ।
आप्तः । स्तोतृऽभ्यः । धृष्णो इति । इयानः । ऋणोः । अक्षम् । न ।
चक्र्योः ॥१४॥ आ । यत् । दुवः । शतक्रतो इति शतऽक्रतो । आ ।

कामम् । जरितृणाम् । ऋणोः । अक्षम् । न । शचीभिः ॥१५॥ शश्वत् ।
इन्द्रः । पोप्रुथत्ऽभिः । जिगाय । नानदत्ऽभिः । शाश्वसत्ऽभिः ।
धनानि । सः । नः । हिरण्यऽरथम् । दंसनाऽवान् । सः । नः ।
सनिता । सनये । सः । नः । अदात् ॥१६॥ आ । अश्विनौ । अश्व-
ऽवत्या । इषा । यातम् । शवीरया । गोऽमत् । दस्रा । हिरण्यऽवत्
॥१७॥ समानऽयोजनः । हि । वाम् । रथः । दस्रौ । अमर्त्यः ।
समुद्रे । अश्विना । ईयते ॥१८॥ नि । अघ्न्यस्य । मूर्धनि । चक्रम् ।
रथस्य । येमथुः । परि । द्याम् । अन्यत् । ईयते ॥१९॥ कः । ते । उषः ।
कधऽप्रिये । भुजे । मर्तः । अमर्त्ये । कम् । नक्षसे । विभाऽवरि ॥२०॥
वयम् । हि । ते । अमन्महि । आ । अन्तात् । आ । पराकात् । अश्वे ।
न । चित्रे । अरुषि ॥२१॥ त्वम् । त्येभिः । आ । गहि । वाजेभिः ।
दुहितः । दिवः । अस्मे इति । रयिम् । नि । धारय ॥२२॥

I. 31.

त्वम् । अग्ने । प्रथमः । अङ्गिराः । ऋषिः । देवः । देवानाम् ।
अभवः । शिवः । सखा । तव । व्रते । कवयः । विद्मनाऽअपसः ।
अजायन्त । मरुतः । भ्राजत्ऽऋष्टयः ॥१॥ त्वम् । अग्ने । प्रथमः ।
अङ्गिरःऽतमः । कविः । देवानाम् । परि । भूषसि । व्रतम् । विऽभुः ।
विश्वस्मै । भुवनाय । मेधिरः । द्विऽमाता । शयुः । कतिधा । चित् ।
आयवे ॥२॥ त्वम् । अग्ने । प्रथमः । मातरिश्वने । आविः । भव ।
सुक्रतुऽया । विवस्वते । अरेजेताम् । रोदसी इति । होतृऽवूर्ये । असघ्नोः ।
भारम् । अयजः । महः । वसो इति ॥३॥ त्वम् । अग्ने । मनवे ।
द्याम् । अवाशयः । पुरूरवसे । सुऽकृते । सुकृत्ऽतरः । श्वात्रेण । यत् ।

पित्रोः । मुच्यसे । परि । आ । त्वा । पूर्वम् । अनयन् । आ । अपरम् । पुनरिति ॥४॥ त्वम् । अग्ने । वृषभः । पुष्टिऽवर्धनः । उद्यतऽस्रुचे । भवसि । श्रवाय्यः । यः । आऽहुतिम् । परि । वेद । वषट्ऽकृतिम् । एकऽआयुः । अग्रे । विशः । आऽविवासासि ॥५॥ त्वम् । अग्ने । वृजिनऽवर्तनिम् । नरम् । सक्मन् । पिपर्षि । विदथे । विऽचर्षणे । यः । शूरऽसाता । परिऽतक्म्ये । धने । दभ्रेभिः । चित् । सम्ऽऋता । हंसि । भूयसः ॥६॥ त्वम् । तम् । अग्ने । अमृतऽत्वे । उत्ऽतमे । मर्तम् । दधासि । श्रवसे । दिवेऽदिवे । यः । ततृषाणः । उभयाय । जन्मने । मयः । कृणोषि । प्रयः । आ । च । सूरये ॥७॥ त्वम् । नः । अग्ने । सनये । धनानाम् । यशसम् । कारुम् । कृणुहि । स्तवानः । ऋध्याम । कर्म । अपसा । नवेन । देवैः । द्यावापृथिवी इति । प्र । अवतम् । नः ॥८॥ त्वम् । नः । अग्ने । पित्रोः । उपऽस्थे । आ । देवः । देवेषु । अनवद्य । जागृविः । तनूऽकृत् । बोधि । प्रऽमतिः । च । कारवे । त्वम् । कल्याण । वसु । विश्वम् । आ । ऊपिषे ॥९॥ त्वम् । अग्ने । प्रऽमतिः । त्वम् । पिता । असि । नः । त्वम् । वयःऽकृत् । तव । जामयः । वयम् । सम् । त्वा । रायः । शतिनः । सम् । सहस्रिणः । सुऽवीरम् । यन्ति । व्रतऽपाम् । अदाभ्य ॥१०॥ त्वाम् । अग्ने । प्रथमम् । आयुम् । आयवे । देवाः । अकृण्वन् । नहुषस्य । विश्पतिम् । इळाम् । अकृण्वन् । मनुषस्य । शासनीम् । पितुः । यत् । पुत्रः । ममकस्य । जायते ॥११॥ त्वम् । नः । अग्ने । तव । देव । पायुऽभिः । मघोनः । रक्ष । तन्वः । च । वन्द्य । त्राता । तोकस्य । तनये । गवाम् । असि । अनिऽमेषम् । रक्षमाणः । तव । व्रते ॥१२॥

त्वम् । अग्ने । यज्यवे । पायुः । अन्तरः । अनिषङ्गाय । चतुःऽअक्षः । इध्यसे । यः । रातऽहव्यः । अवृकाय । धायसे । कीरेः । चित् । मन्त्रम् । मनसा । वनोषि । तम् ॥१३॥ त्वम् । अग्ने । उरुऽशंसाय । वाघते । स्पार्हम् । यत् । रेक्णः । परमम् । वनोषि । तत् । आध्रस्य । चित् । प्रऽमतिः । उच्यसे । पिता । प्र । पाकम् । शास्सि । प्र । दिशः । विदुःऽतरः ॥१४॥ त्वम् । अग्ने । प्रयतऽदक्षिणम् । नरम् । वर्मऽइव । स्यूतम् । परि । पासि । विश्वतः । स्वादुऽक्षद्मा । यः । वसतौ । स्योनऽकृत् । जीवऽयाजम् । यजते । सः । उपऽमा । दिवः ॥१५॥ इमाम् । अग्ने । शरणिम् । मीमृषः । नः । इमम् । अध्वानम् । यम् । अगाम । दूरात् । आपिः । पिता । प्रऽमतिः । सोम्यानाम् । भृमिः । असि । ऋषिऽकृत् । मर्त्यानाम् ॥१६॥ मनुष्वत् । अग्ने । अङ्गिरस्वत् । अङ्गिरः । ययातिऽवत् । सदने । पूर्वऽवत् । शुचे । अच्छ । याहि । आ । वह । दैव्यम् । जनम् । आ । सादय । बर्हिषि । यक्षि । च । प्रियम् ॥१७॥ एतेन । अग्ने । ब्रह्मणा । ववृधस्व । शक्ती । वा । यत् । ते । चकृम । विदा । वा । उत । प्र । नेषि । अभि । वस्यः । अस्मान् । सम् । नः । सृज । सुऽमत्या । वाजऽवत्या ॥१८॥

I. 32.

इन्द्रस्य । नु । वीर्याणि । प्र । वोचम् । यानि । चकार । प्रथमानि । वज्री । अहन् । अहिम् । अनु । अपः । ततर्द । प्र । वक्षणाः । अभिनत् । पर्वतानाम् ॥१॥ अहन् । अहिम् । पर्वते । शिश्रियाणम् । त्वष्टा । अस्मै । वज्रम् । स्वर्यम् । ततक्ष । वाश्राःऽइव । धेनवः ।

स्यन्दमानाः । अञ्जः । समुद्रम् । अव । जग्मुः । आपः ॥२॥ वृषऽय-
माणः । अवृणीत । सोमम् । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य । आ ।
सायकम् । मघऽवा । अदत्त । वज्रम् । अहन् । एनम् । प्रथमऽजाम् ।
अहीनाम् ॥३॥ यत् । इन्द्र । अहन् । प्रथमऽजाम् । अहीनाम् । आत् ।
मायिनाम् । अमिनाः । प्र । उत । मायाः । आत् । सूर्यम् । जनयन् ।
द्याम् । उषसम् । तादीत्ना । शत्रुम् । न । किल । विवित्से ॥४॥
अहन् । वृत्रम् । वृत्रऽतरम् । विऽअंसम् । इन्द्रः । वज्रेण । महता ।
वधेन । स्कन्धांसिऽइव । कुलिशेन । विऽवृक्णा । अहिः । शयते ।
उपऽपृक् । पृथिव्याः ॥५॥ अयोद्धाऽइव । दुःऽमदः । आ । हि । जुह्वे ।
महाऽवीरम् । तुविऽबाधम् । ऋजीषम् । न । अतारीत् । अस्य । सम्-
ऽऋतिम् । वधानाम् । सम् । रुजानाः । पिपिषे । इन्द्रऽशत्रुः ॥६॥
अपात् । अहस्तः । अपृतन्यत् । इन्द्रम् । आ । अस्य । वज्रम् । अधि ।
सानौ । जघान । वृष्णः । वध्रिः । प्रतिऽमानम् । बुभूषन् । पुरुऽत्रा । वृत्रः ।
अशयत् । विऽअस्तः ॥७॥ नदम् । न । भिन्नम् । अमुया । शयानम् ।
मनः । रुहाणाः । अति । यन्ति । आपः । याः । चित् । वृत्रः ।
महिना । परिऽअतिष्ठत् । तासाम् । अहिः । पत्सुतःऽशीः । बभूव ॥८॥
नीचाऽवयाः । अभवत् । वृत्रऽपुत्रा । इन्द्रः । अस्याः । अव । वधः ।
जभार । उत्ऽतरा । सूः । अधरः । पुत्रः । आसीत् । दानुः । शये ।
सहऽवत्सा । न । धेनुः ॥९॥ अतिष्ठन्तीनाम् । अनिऽवेशनानाम् ।
काष्ठानाम् । मध्ये । निऽहितम् । शरीरम् । वृत्रस्य । निण्यम् । वि ।
चरन्ति । आपः । दीर्घम् । तमः । आ । अशयत् । इन्द्रऽशत्रुः ॥१०॥
दासऽपत्नीः । अहिऽगोपाः । अतिष्ठन् । निऽरुद्धाः । आपः । पणिना-

ऽइव । गावः । अपाम् । बिलम् । अपिऽहितम् । यत् । आसीत् । वृत्रम् । जघन्वान् । अप । तत् । ववार ॥११॥ अश्व्यः । वारः । अभवः । तत् । इन्द्र । सृके । यत् । त्वा । प्रतिऽअहन् । देवः । एकः । अजयः । गाः । अजयः । शूर । सोमम् । अव । असृजः । सर्तवे । सप्त । सिन्धून् ॥१२॥ न । अस्मै । विऽद्युत् । न । तन्यतुः । सिसेध । न । याम् । मिहम् । अकिरत् । ह्रादुनिम् । च । इन्द्रः । च । यत् । युयुधाते इति । अहिः । च । उत । अपरीभ्यः । मघऽवा । वि । जिग्ये ॥१३॥ अहेः । यातारम् । कम् । अपश्यः । इन्द्र । हृदि । यत् । ते । जघ्नुषः । भीः । अगच्छत् । नव । च । यत् । नवतिम् । च । स्रवन्तीः । श्येनः । न । भीतः । अतरः । रजांसि ॥१४॥ इन्द्रः । यातः । अवऽसितस्य । राजा । शमस्य । च । शृङ्गिणः । वज्रऽबाहुः । सः । इत् । ऊँ इति । राजा । क्षयति । चर्षणीनाम् । अरान् । न । नेमिः । परि । ता । बभूव ॥१५॥

I. 33.

आ । इत । अयाम । उप । गव्यन्तः । इन्द्रम् । अस्माकम् । सु । प्रऽमतिम् । ववृधाति । अनामृणः । कुवित् । आत् । अस्य । रायः । गवाम् । केतम् । परम् । आऽवर्जते । नः ॥१॥ उप । इत् । अहम् । धनऽदाम् । अप्रतिऽइतम् । जुष्टाम् । न । श्येनः । वसतिम् । पतामि । इन्द्रम् । नमस्यन् । उपऽमेभिः । अर्कैः । यः । स्तोतृ-ऽभ्यः । हव्यः । अस्ति । यामन् ॥२॥ नि । सर्वऽसेनः । इषुऽधीन् । असक्त । सम् । अर्यः । गाः । अजति । यस्य । वष्टि । चोष्कूयमाणः । इन्द्र । भूरि । वामम् । मा । पणिः । भूः । अस्मत् । अधि ।

प्रऽवृद्ध ॥३॥ वधीः । हि । दस्युम् । धनिनम् । घनेन । एकः ।
चरन् । उपऽशाकेभिः । इन्द्र । धनोः । अधि । विषुणक् । ते । वि ।
आयन् । अयज्वानः । सनकाः । प्रऽइतिम् । ईयुः ॥४॥ परा । चित् ।
शीर्षा । ववृजुः । ते । इन्द्र । अयज्वानः । यज्वऽभिः । स्पर्धमानाः ।
प्र । यत् । दिवः । हरिऽवः । स्थातः । उग्र । निः । अव्रतान् ।
अधमः । रोदस्योः ॥५॥ अयुयुत्सन् । अनवद्यस्य । सेनाम् । अयातयन्त ।
क्षितयः । नवऽग्वाः । वृषऽयुधः । न । वध्रयः । निःऽअष्टाः । प्रवत्-
ऽभिः । इन्द्रात् । चितयन्तः । आयन् ॥६॥ त्वम् । एतान् । रुदतः ।
जक्षतः । च । अयोधयः । रजसः । इन्द्र । पारे । अव । अदहः ।
दिवः । आ । दस्युम् । उच्चा । प्र । सुन्वतः । स्तुवतः । शंसम् ।
आवः ॥७॥ चक्राणासः । परिऽनहम् । पृथिव्याः । हिरण्येन । मणिना ।
शुम्भमानाः । न । हिन्वानासः । तितिरुः । ते । इन्द्रम् । परि ।
स्पशः । अदधात् । सूर्येण ॥८॥ परि । यत् । इन्द्र । रोदसी इति ।
उभे इति । अबुभोजीः । महिना । विश्वतः । सीम् । अमन्यमानान् ।
अभि । मन्यमानैः । निः । ब्रह्मऽभिः । अधमः । दस्युम् । इन्द्र ॥९॥
न । ये । दिवः । पृथिव्याः । अन्तम् । आपुः । न । मायाभिः ।
धनऽदाम् । परिऽअभूवन् । युजम् । वज्रम् । वृषभः । चक्रे । इन्द्रः ।
निः । ज्योतिषा । तमसः । गाः । अधुक्षत् ॥१०॥ अनु । स्वधाम् ।
अक्षरन् । आपः । अस्य । अवर्धत । मध्ये । आ । नाव्यानाम् ।
सध्रीचीनेन । मनसा । तम् । इन्द्रः । ओजिष्ठेन । हन्मना । अहन् ।
अभि । द्यून् ॥११॥ नि । अविध्यत् । इलीबिशस्य । दृळ्हा । वि ।
शृङ्गिणम् । अभिनत् । शुष्णम् । इन्द्रः । यावत् । तरः । मघऽवन् ।

यावत् । ओजः । वज्रेण । शत्रुम् । अवधीः । पृतन्युम् ॥१२॥ अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेन । वृषभेण । पुरः । अभेत् । सम् । वज्रेण । असृजत् । वृत्रम् । इन्द्रः । प्र । स्वाम् । मतिम् । अतिरत् । शाशदानः ॥१३॥ आवः । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । प्र । आवः । युध्यन्तम् । वृषभम् । दशऽद्युम् । शफऽच्युतः । रेणुः । नक्षत । द्याम् । उत् । श्वैत्रेयः । नृऽसह्याय । तस्थौ ॥१४॥ आवः । शमम् । वृषभम् । तुग्र्यासु । क्षेत्रऽजेषे । मघऽवन् । श्वित्र्यम् । गाम् । ज्योक् । चित् । अत्र । तस्थिऽवांसः । अक्रन् । शत्रुऽयताम् । अधरा । वेदना । अकरित्यकः ॥ १५ ॥

I. 34.

त्रिः । चित् । नः । अद्य । भवतम् । नवेदसा । विऽभुः । वाम् । यामः । उत । रातिः । अश्विना । युवोः । हि । यन्त्रम् । हिम्याऽइव । वाससः । अभिऽआयंसेन्या । भवतम् । मनीषिऽभिः ॥१॥ त्रयः । पवयः । मधुऽवाहने । रथे । सोमस्य । वेनाम् । अनु । विश्वे । इत् । विदुः । त्रयः । स्कम्भासः । स्कभितासः । आऽरभे । त्रिः । नक्तम् । याथः । त्रिः । ऊँ इति । अश्विना । दिवा ॥२॥ समाने । अहन् । त्रिः । अवद्यऽगोहना । त्रिः । अद्य । यज्ञम् । मधुना । मिमिक्षतम् । त्रिः । वाजऽवतीः । इषः । अश्विना । युवम् । दोषाः । अस्मभ्यम् । उषसः । च । पिन्वतम् ॥३॥ त्रिः । वर्तिः । यातम् । त्रिः । अनुऽव्रते । जने । त्रिः । सुप्रऽअव्ये । त्रेधाऽइव । शिक्षतम् । त्रिः । नान्द्यम् । वहतम् । अश्विना । युवम् । त्रिः । पृक्षः । अस्मे इति । अक्षराऽइव ।

पिन्वतम् ॥४॥ त्रिः । नः । रयिम् । वहतम् । अश्विना । युवम् । त्रिः ।
देवऽताता । त्रिः । उत । अवतम् । धियः । त्रिः । सौभगऽत्वम् ।
त्रिः । उत । श्रवांसि । नः । त्रिऽस्थम् । वाम् । सूरे । दुहिता । आ ।
रुहत् । रथम् ॥५॥ त्रिः । नः । अश्विना । दिव्यानि । भेषजा । त्रिः ।
पार्थिवानि । त्रिः । ऊँ इति । दत्तम् । अत्ऽभ्यः । ओमानम् ।
शम्ऽयोः । ममकाय । सूनवे । त्रिऽधातु । शर्म । वहतम् । शुभः ।
पती इति ॥६॥ त्रिः । नः । अश्विना । यजता । दिवेऽदिवे । परि ।
त्रिऽधातु । पृथिवीम् । अशायतम् । तिस्रः । नासत्या । रथ्या । परा-
ऽवतः । आत्माऽइव । वातः । स्वसराणि । गच्छतम् ॥७॥ त्रिः ।
अश्विना । सिन्धुऽभिः । सप्तमातृऽभिः । त्रयः । आऽहावाः । त्रेधा ।
हविः । कृतम् । तिस्रः । पृथिवीः । उपरि । प्रवा । दिवः । नाकम् ।
रक्षेथे इति । द्युऽभिः । अक्तुऽभिः । हितम् ॥८॥ क्व । त्री । चक्रा ।
त्रिऽवृतः । रथस्य । क्व । त्रयः । वन्धुरः । ये । सऽनीळाः । कदा ।
योगः । वाजिनः । रासभस्य । येन । यज्ञम् । नासत्या । उपऽयाथः
॥९॥ आ । नासत्या । गच्छतम् । हूयते । हविः । मध्वः । पिबतम् ।
मधुऽपेभिः । आसऽभिः । युवोः । हि । पूर्वम् । सविता । उषसः ।
रथम् । ऋताय । चित्रम् । घृतऽवन्तम् । इष्यति ॥१०॥ आ ।
नासत्या । त्रिऽभिः । एकादशैः । इह । देवेभिः । यातम् । मधु-
ऽपेयम् । अश्विना । प्र । आयुः । तारिष्टम् । निः । रपांसि । मृक्षतम् ।
सेधतम् । द्वेषः । भवतम् । सचाऽभुवा ॥११॥ आ । नः । अश्विना ।
त्रिऽवृता । रथेन । अर्वाञ्चम् । रयिम् । वहतम् । सुऽवीरम् । शृण्वन्ता ।

वाम् । अवसे । जोहवीमि । वृधे । च । नः । भवतम् । वाज॑-
ऽसातौ ॥१२॥

I. 35.

ह्वयामि । अग्निम् । प्रथमम् । स्वस्तये । ह्वयामि । मित्रावरुणौ ।
इह । अवसे । ह्वयामि । रात्रीम् । जगतः । निऽवेशनीम् । ह्वयामि ।
देवम् । सवितारम् । ऊतये ॥१॥ आ । कृष्णेन । रजसा । वर्तमानः ।
निऽवेशयन् । अमृतम् । मर्त्यम् । च । हिरण्ययेन । सविता । रथेन ।
आ । देवः । याति । भुवनानि । पश्यन् ॥२॥ याति । देवः । प्रऽवता ।
याति । उत्ऽवता । याति । शुभ्राभ्याम् । यजतः । हरिऽभ्याम् ।
आ । देवः । याति । सविता । पराऽवतः । अप । विश्वा । दुःऽइता ।
बाधमानः ॥३॥ अभिऽवृतम् । कृशनैः । विश्वऽरूपम् । हिरण्य-
ऽशम्यम् । यजतः । बृहन्तम् । आ । अस्थात् । रथम् । सविता ।
चित्रऽभानुः । कृष्णा । रजांसि । तविषीम् । दधानः ॥४॥ वि ।
जनान् । श्यावाः । शितिऽपादः । अख्यन् । रथम् । हिरण्यऽप्रउगम् ।
वहन्तः । शश्वत् । विशः । सवितुः । दैव्यस्य । उपऽस्थे । विश्वा ।
भुवनानि । तस्थुः ॥५॥ तिस्रः । द्यावः । सवितुः । द्वौ । उपऽस्था ।
एका । यमस्य । भुवने । विराषाट् । आणिम् । न । रथ्यम् । अमृता ।
अधि । तस्थुः । इह । ब्रवीतु । यः । ऊँ इति । तत् । चिकेतत् ॥६॥
वि । सुऽपर्णः । अन्तरिक्षाणि । अख्यत् । गभीरऽवेपाः । असुरः ।
सुऽनीथः । क्व । इदानीम् । सूर्यः । कः । चिकेत । कतमाम् । द्याम् ।
रश्मिः । अस्य । आ । ततान ॥७॥ अष्टौ । वि । अख्यत् । ककुभः ।
पृथिव्याः । त्री । धन्व । योजना । सप्त । सिन्धून् । हिरण्यऽअक्षः ।

सविता । देवः । आ । अगात् । दधत् । रत्ना । दाशुषे । वार्याणि ॥८॥
हिरण्यऽपाणिः । सविता । विऽचर्षणिः । उभे इति । द्यावापृथिवी इति ।
अन्तः । ईयते । अप । अमीवाम् । बाधते । वेति । सूर्यम् । अभि ।
कृष्णेन । रजसा । द्याम् । ऋणोति ॥९॥ हिरण्यऽहस्तः । असुरः ।
सुऽनीथः । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् । अपऽसेधन् ।
रक्षसः । यातुऽधानान् । अस्थात् । देवः । प्रतिऽदोषम् । गृणानः ॥१०॥
ये । ते । पन्थाः । सवितरिति । पूर्व्यासः । अरेणवः । सुऽकृताः ।
अन्तरिक्षे । तेभिः । नः । अद्य । पथिऽभिः । सुऽगेभिः । रक्ष । च ।
नः । अधि । च । ब्रूहि । देव ॥११॥

I. 36.

प्र । वः । यह्वम् । पुरूणाम् । विशाम् । देवऽयतीनाम् । अग्निम् ।
सुऽउक्तेभिः । वचःऽभिः । ईमहे । यम् । सीम् । इत् । अन्ये ।
ईळते ॥१॥ जनासः । अग्निम् । दधिरे । सहःऽवृधम् । हविष्मन्तः ।
विधेम । ते । सः । त्वम् । नः । अद्य । सुऽमनाः । इह । अविता ।
भव । वाजेषु । सन्त्य ॥२॥ प्र । त्वा । दूतम् । वृणीमहे । होतारम् ।
विश्वऽवेदसम् । महः । ते । सतः । वि । चरन्ति । अर्चयः । दिवि ।
स्पृशन्ति । भानवः ॥३॥ देवासः । त्वा । वरुणः । मित्रः । अर्यमा ।
सम् । दूतम् । प्रत्नम् । इन्धते । विश्वम् । सः । अग्ने । जयति । त्वया ।
धनम् । यः । ते । ददाश । मर्त्यः ॥४॥ मन्द्रः । होता । गृहऽपतिः ।
अग्ने । दूतः । विशाम् । असि । त्वे इति । विश्वा । सम्ऽगतानि ।
व्रता । ध्रुवा । यानि । देवाः । अकृण्वत ॥५॥ त्वे इति । इत् । अग्ने ।
सुऽभगे । यविष्ठ्य । विश्वम् । आ । हूयते । हविः । सः । त्वम् । नः ।

अद्य । सुऽमनाः । उत । अपरम् । यक्षि । देवान् । सुऽवीर्या ॥६॥
तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते ।
होत्राभिः । अग्निम् । मनुषः । सम् । इन्धते । तितिर्वांसः । अति ।
स्रिधः ॥७॥ घ्नन्तः । वृत्रम् । अतरन् । रोदसी इति । अपः । उरु ।
क्षयाय । चक्रिरे । भुवत् । कण्वे । वृषा । द्युम्नी । आऽहुतः । क्रन्दत् ।
अश्वः । गोऽइष्टिषु ॥८॥ सम् । सीदस्व । महान् । असि । शोचस्व ।
देवऽवीतमः । वि । धूमम् । अग्ने । अरुषम् । मियेध्य । सृज । प्रऽशस्त ।
दर्शतम् ॥९॥ यम् । त्वा । देवासः । मनवे । दधुः । इह । यजिष्ठम् ।
हव्यऽवाहन । यम् । कण्वः । मेध्यऽअतिथिः । धनऽस्पृतम् । यम् ।
वृषा । यम् । उपऽस्तुतः ॥१०॥ यम् । अग्निम् । मेध्यऽअतिथिः ।
कण्वः । ईधे । ऋतात् । अधि । तस्य । प्र । इषः । दीदियुः ।
तम् । इमाः । ऋचः । तम् । अग्निम् । वर्धयामसि ॥ ११ ॥
रायः । पूर्धि । स्वधाऽवः । अस्ति । हि । ते । अग्ने । देवेषु । आप्यम् ।
त्वम् । वाजस्य । श्रुत्यस्य । राजसि । सः । नः । मृळ । महान् ।
असि ॥१२॥ ऊर्ध्वः । ऊँ इति । सु । नः । ऊतये । तिष्ठ । देवः ।
न । सविता । ऊर्ध्वः । वाजस्य । सनिता । यत् । अञ्जिऽभिः ।
वाघत्ऽभिः । विऽह्वयामहे ॥१३॥ ऊर्ध्वः । नः । पाहि । अंहसः ।
नि । केतुना । विश्वम् । सम् । अत्रिणम् । दह । कृधि । नः । ऊर्ध्वान् ।
चरथाय । जीवसे । विदाः । देवेषु । नः । दुवः ॥१४॥ पाहि । नः ।
अग्ने । रक्षसः । पाहि । धूर्तेः । अराव्णः । पाहि । रिषतः । उत ।
वा । जिघांसतः । बृहद्भानो इति बृहत्ऽभानो । यविष्ठ्य ॥१५॥
घनाऽइव । विष्वक् । वि । जहि । अराव्णः । तपुःऽजम्भ । यः ।

अस्मऽध्रुक् । यः । मर्त्यः । शिशीते । अति । अक्तुऽभिः । मा । नः । सः । रिपुः । ईशत ॥१६॥ अग्निः । वव्ने । सुऽवीर्यम् । अग्निः । कण्वाय । सौभगम् । अग्निः । प्र । आवत् । मित्रा । उत । मेध्यऽअतिथिम् । अग्निः । सातौ । उपऽस्तुतम् ॥१७॥ अग्निना । तुर्वशम् । यदुम् । पराऽवतः । उग्रऽदेवम् । हवामहे । अग्निः । नयत् । नवऽवास्त्वम् । बृहत्ऽरथम् । तुर्वीतिम् । दस्यवे । सहः ॥१८॥ नि । त्वाम् । अग्ने । मनुः । दधे । ज्योतिः । जनाय । शश्वते । दीदेथ । कण्वे । ऋतऽजातः । उक्षितः । यम् । नमस्यन्ति । कृष्टयः ॥१९॥ त्वेषासः । अग्नेः । अमऽवन्तः । अर्चयः । भीमासः । न । प्रतिऽइतये । रक्षस्विनः । सदम् । इत् । यातुऽमावतः । विश्वम् । सम् । अत्रिणम् । दह ॥२०॥

I. 37.

क्रीळम् । वः । शर्धः । मारुतम् । अनर्वाणम् । रथेऽशुभम् । कण्वाः । अभि । प्र । गायत ॥१॥ ये । पृषतीभिः । ऋष्टिऽभिः । साकम् । वाशीभिः । अञ्जिऽभिः । अजायन्त । स्वऽभानवः ॥२॥ इहऽइव । शृण्वे । एषाम् । कशाः । हस्तेषु । यत् । वदान् । नि । यामन् । चित्रम् । ऋञ्जते ॥३॥ प्र । वः । शर्धाय । घृष्वये । त्वेषऽद्युम्नाय । शुष्मिणे । देवत्तम् । ब्रह्म । गायत ॥४॥ प्र । शंस । गोषु । अघ्न्यम् । क्रीळम् । यत् । शर्धः । मारुतम् । जम्भे । रसस्य । ववृधे ॥५॥ कः । वः । वर्षिष्ठः । आ । नरः । दिवः । च । ग्मः । च । धूतयः । यत् । सीम् । अन्तम् । न । धूनुथ ॥६॥ नि । वः । यामाय । मानुषः । दध्रे । उग्राय । मन्यवे । जिहीत । पर्वतः । गिरिः

॥७॥ येषाम् । अज्मेषु । पृथिवी । जुजुर्वान्ऽइव । विश्पतिः । भिया । यामेषु । रेजते ॥८॥ स्थिरम् । हि । जानम् । एषाम् । वयः । मातुः । निःऽएतवे । यत् । सीम् । अनु । द्विता । शवः ॥९॥ उत् । ऊँ इति । त्ये । सूनवः । गिरः । काष्ठाः । अज्मेषु । अत्नत । वाश्राः । अभिऽज्ञु । यातवे ॥१०॥ त्यम् । चित् । घ । दीर्घम् । पृथुम् । मिहः । नपातम् । अमृध्रम् । प्र । च्यवयन्ति । यामऽभिः ॥११॥ मरुतः । यत् । ह । वः । बलम् । जनान् । अचुच्यवीतन । गिरीन् । अचुच्यवीतन ॥१२॥ यत् । ह । यान्ति । मरुतः । सम् । ह । ब्रुवते । अध्वन् । आ । शृणोति । कः । चित् । एषाम् ॥१३॥ प्र । यात । शीभम् । आशुऽभिः । सन्ति । कण्वेषु । वः । दुवः । तत्रो इति । सु । मादयाध्वै ॥१४॥ अस्ति । हि । स्म । मदाय । वः । स्मसि । स्म । वयम् । एषाम् । विश्वम् । चित् । आयुः । जीवसे ॥१५॥

I. 38.

कत् । ह । नूनम् । कधऽप्रियः । पिता । पुत्रम् । न । हस्तयोः । दधिध्वे । वृक्तऽबर्हिषः ॥१॥ क्व । नूनम् । कत् । वः । अर्थम् । गन्त । दिवः । न । पृथिव्याः । क्व । वः । गावः । न । रण्यन्ति ॥२॥ क्व । वः । सुम्ना । नव्यांसि । मरुतः । क्व । सुविता । क्वो३ इति । विश्वानि । सौभगा ॥३॥ यत् । यूयम् । पृश्निऽमातरः । मर्तासः । स्यातन । स्तोता । वः । अमृतः । स्यात् ॥४॥ मा । वः । मृगः । न । यवसे । जरिता । भूत् । अजोष्यः । पथा । यमस्य । गात् । उप ॥५॥ मो इति । सु । नः । पराऽपरा । निःऽऋतिः । दुःऽहना । वधीत् । पदीष्ट । तृष्णया । सह ॥६॥ सत्यम् । त्वेषाः । अमऽवन्तः । धन्वन् । चित् ।

आ । रुद्रियासः । मिहम् । कृण्वन्ति । अवाताम् ॥७॥ वाश्राऽइव । विऽद्युत् । मिमाति । वत्सम् । न । माता । सिसक्ति । यत् । एषाम् । वृष्टिः । असर्जि ॥८॥ दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदऽवाहेन । यत् । पृथिवीम् । विऽउन्दन्ति ॥९॥ अध । स्वनात् । मरुताम् । विश्वम् । आ । सद्म । पार्थिवम् । अरेजन्त । प्र । मानुषाः ॥१०॥ मरुतः । वीळुपाणिऽभिः । चित्राः । रोधस्वतीः । अनु । यात । ईम् । अखिद्रयामऽभिः ॥११॥ स्थिराः । वः । सन्तु । नेमयः । रथाः । अश्वासः । एषाम् । सुऽसंस्कृताः । अभीशवः ॥१२॥ अच्छ । वद । तना । गिरा । जरायै । ब्रह्मणः । पतिम् । अग्निम् । मित्रम् । न । दर्शतम् ॥१३॥ मिमीहि । श्लोकम् । आस्ये । पर्जन्यःऽइव । ततनः । गाय । गायत्रम् । उक्थ्यम् ॥१४॥ वन्दस्व । मारुतम् । गणम् । त्वेषम् । पनस्युम् । अर्किणम् । अस्मे इति । वृद्धाः । असन् । इह ॥१५॥

I. 39.

प्र । यत् । इत्था । पराऽवतः । शोचिः । न । मानम् । अस्यथ । कस्य । क्रत्वा । मरुतः । कस्य । वर्पसा । कम् । याथ । कम् । ह । धूतयः ॥१॥ स्थिरा । वः । सन्तु । आयुधा । पराऽनुदे । वीळु । उत । प्रतिऽस्कभे । युष्माकम् । अस्तु । तविषी । पनीयसी । मा । मर्त्यस्य । मायिनः ॥२॥ परा । ह । यत् । स्थिरम् । हथ । नरः । वर्तयथ । गुरु । वि । याथन । वनिनः । पृथिव्याः । वि । आशाः । पर्वतानाम् ॥३॥ नहि । वः । शत्रुः । विविदे । अधि । द्यवि । न । भूम्याम् । रिशादसः । युष्माकम् । अस्तु । तविषी । तना । युजा । रुद्रासः । नु । चित् । आऽधृषे ॥४॥ प्र । वेपयन्ति । पर्वतान् । वि । विञ्चन्ति ।

वनस्पतीन् । ओ इति । आरत । मरुतः । दुर्मदाःऽइव । देवासः । सर्वया । विशा ॥५॥ उपो इति । रथेषु । पृषतीः । अयुग्ध्वम् । प्रष्टिः । वहति । रोहितः । आ । वः । यामाय । पृथिवी । चित् । अश्रोत् । अबीभयन्त । मानुषाः ॥६॥ आ । वः । मक्षु । तनाय । कम् । रुद्राः । अवः । वृणीमहे । गन्त । नूनम् । नः । अवसा । यथा । पुरा । इत्था । कण्वाय । बिभ्युषे ॥७॥ युष्माऽइषितः । मरुतः । मर्त्यऽइषितः । आ । यः । नः । अभ्वः । ईषते । वि । तम् । युयोत । शवसा । वि । ओजसा । वि । युष्माकाभिः । ऊतिऽभिः ॥८॥ असामि । हि । प्रऽयज्यवः । कण्वम् । दद । प्रऽचेतसः । असामिऽभिः । मरुतः । आ । नः । ऊतिऽभिः । गन्त । वृष्टिम् । न । विऽद्युतः ॥९॥ असामि । ओजः । बिभृथ । सुऽदानवः । असामि । धूतयः । शवः । ऋषिऽद्विषे । मरुतः । परिऽमन्यवे । इषुम् । न । सृजत । द्विषम् ॥१०॥

I. 40.

उत् । तिष्ठ । ब्रह्मणः । पते । देवऽयन्तः । त्वा । ईमहे । उप । प्र । यन्तु । मरुतः । सुऽदानवः । इन्द्र । प्राशूः । भव । सचा ॥१॥ त्वाम् । इत् । हि । सहसः । पुत्र । मर्त्यः । उपऽब्रूते । धने । हिते । सुऽवीर्यम् । मरुतः । आ । सुऽअश्व्यम् । दधीत । यः । वः । आऽचके ॥२॥ प्र । एतु । ब्रह्मणः । पतिः । प्र । देवी । एतु सूनृता । अच्छ । वीरम् । नर्यम् । पङ्क्तिऽराधसम् । देवाः । यज्ञम् । नयन्तु । नः ॥३॥ यः । वाघते । ददाति । सूनरम् । वसु । सः । धत्ते । अक्षिति । श्रवः । तस्मै । इळाम् । सुऽवीराम् । आ । यजामहे । सुऽप्रतूर्तिम् । अनेहसम् ॥४॥ प्र । नूनम् । ब्रह्मणः । पतिः । मन्त्रम् ।

वदति । उक्थ्यम् । यस्मिन् । इन्द्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे ॥५॥ तम् । इत् । वोचेम । विदथेषु । शम्ऽभुवम् । मन्त्रम् । देवाः । अनेहसम् । इमाम् । च । वाचम् । प्रतिऽहर्यथ । नरः । विश्वा । इत् । वामा । वः । अश्नवत् ॥६॥ कः । देवऽयन्तम् । अश्नवत् । जनम् । कः । वृक्तऽबर्हिषम् । प्रऽप्र । दाश्वान् । पस्त्याभिः । अस्थित । अन्तःऽवावत् । क्षयम् । दधे ॥७॥ उप । क्षत्रम् । पृञ्चीत । हन्ति । राजऽभिः । भये । चित् । सुऽक्षितिम् । दधे । न । अस्य । वर्ता । न । तरुता । महाऽधने । न । अर्भे । अस्ति । वज्रिणः ॥८॥

I. 41.

यम् । रक्षन्ति । प्रऽचेतसः । वरुणः । मित्रः । अर्यमा । नु । चित् । सः । दभ्यते । जनः ॥१॥ यम् । बाहुताऽइव । पिप्रति । पान्ति । मर्त्यम् । रिषः । अरिष्टः । सर्वः । एधते ॥२॥ वि । दुःऽगा । वि । द्विषः । पुरः । घ्नन्ति । राजानः । एषाम् । नयन्ति । दुःऽइता । तिरः ॥३॥ सुऽगः । पन्थाः । अनृक्षरः । आदित्यासः । ऋतम् । यते । न । अत्र । अवऽखादः । अस्ति । वः ॥४॥ यम् । यज्ञम् । नयथ । नरः । आदित्याः । ऋजुना । पथा । प्र । वः । सः । धीतये । नशत् ॥५॥ सः । रत्नम् । मर्त्यः । वसु । विश्वम् । तोकम् । उत । त्मना । अच्छ । गच्छति । अस्तृतः ॥६॥ कथा । राधाम । सखायः । स्तोमम् । मित्रस्य । अर्यम्णः । महि प्सरः । वरुणस्य ॥७॥ मा । वः । घ्नन्तम् । मा । शपन्तम् । प्रति । वोचे । देवऽयन्तम् । सुम्नैः । इत् ।

वः । आ । विवासे ॥८॥ चतुरः । चित् । ददमानात् । बिभीयात् । आ । निऽधातोः । न । दुःऽउक्ताय । स्पृहयेत् ॥९॥

I. 42.

सम् । पूषन् । अध्वनः । तिर । वि । अंहः । विऽमुचः । नपात् । सक्ष्व । देव । प्र । नः । पुरः ॥१॥ यः । नः । पूषन् । अघः । वृकः । दुःऽशेवः । आऽदिदेशति । अप । स्म । तम् । पथः । जहि ॥२॥ अप । त्यम् । परिऽपन्थिनम् । मुषीवाणम् । हुरःऽचितम् । दूरम् । अधि । स्रुतेः । अज ॥३॥ त्वम् । तस्य । द्वयाविनः । अघऽशंसस्य । कस्य । चित् । पदा । अभि । तिष्ठ । तपुषिम् ॥४॥ आ । तत् । ते । दस्र । मन्तुऽमः । पूषन् । अवः । वृणीमहे । येन । पितॄन् । । अचोदयः ॥५॥ अध । नः । विश्वऽसौभग । हिरण्यवाशीमत्ऽतम । धनानि । सुऽसना । कृधि ॥६॥ अति । नः । सश्चतः । नय । सुऽगा । नः । सुऽपथा । कृणु । पूषन् । इह । क्रतुम् । विदः ॥७॥ अभि । सुऽयवसम् । नय । न । नवऽज्वारः । अध्वने । पूषन् । इह । क्रतुम् । विदः ॥८॥ शग्धि । पूर्धि । प्र । यंसि । च । शिशीहि । प्रासि । उदरम् । पूषन् । इह । क्रतुम् । विदः ॥९॥ न । पूषणम् । मेथामसि । सुऽउक्तैः । अभि । गृणीमसि । वसूनि । दस्मम् । ईमहे ॥१०॥

I. 43.

कत् । रुद्राय । प्रऽचेतसे । मीळ्हुःऽतमाय । तव्यसे । वोचेम । शम्ऽतमम् । हृदे ॥१॥ यथा । नः । अदितिः । करत् । पश्वे । नृऽभ्यः । यथा । गवे । यथा । तोकाय । रुद्रियम् ॥२॥ यथा । नः । मित्रः । वरुणः । यथा । रुद्रः । चिकेतति । यथा । विश्वे । सऽजोषसः ॥३॥

गाथऽपतिम् । मेधऽपतिम् । रुद्रम् । जलाषऽभेषजम् । तत् । शम्ऽयोः । सुम्नम् । ईमहे ॥४॥ यः । शुक्रःऽइव । सूर्यः । हिरण्यम्ऽइव । रोचते । श्रेष्ठः । देवानाम् । वसुः ॥५॥ शम् । नः । करति । अर्वते । सुऽगम् । मेषाय । मेष्ये । नृऽभ्यः । नारिऽभ्यः । गवे ॥६॥ अस्मे इति । सोम । श्रियम् । अधि । नि । धेहि । शतस्य । नृणाम् । महि । श्रवः । तुविऽनृम्णम् ॥७॥ मा । नः । सोमऽपरिबाधः । मा । अरातयः । जुहुरन्त । आ । नः । इन्दो इति । वाजे । भज ॥८॥ याः । ते । प्रऽजाः । अमृतस्य । परस्मिन् । धामन् । ऋतस्य । मूर्धा । नाभा । सोम । वेनः । आऽभूषन्तीः । सोम । वेदः ॥९॥

I. 44.

अग्ने । विवस्वत् । उषसः । चित्रम् । राधः । अमर्त्य । आ । दाशुषे । जातऽवेदः । वह । त्वम् । अद्य । देवान् । उषःऽबुधः ॥१॥ जुष्टः । हि । दूतः । असि । हव्यऽवाहनः । अग्ने । रथीः । अध्वराणाम् । सऽजूः । अश्विऽभ्याम् । उषसा । सुऽवीर्यम् । अस्मे इति । धेहि । श्रवः । बृहत् ॥२॥ अद्य । दूतम् । वृणीमहे । वसुम् । अग्निम् । पुरुऽप्रियम् । धूमऽकेतुम् । भाःऽऋजीकम् । विऽउष्टिषु । यज्ञानाम् । अध्वरऽश्रियम् ॥३॥ श्रेष्ठम् । यविष्ठम् । अतिथिम् । सुऽआहुतम् । जुष्टम् । जनाय । दाशुषे । देवान् । अच्छ । यातवे । जातऽवेदसम् । अग्निम् । ईळे । विऽउष्टिषु ॥४॥ स्तविष्यामि । त्वाम् । अहम् । विश्वस्य । अमृत । भोजन । अग्ने । त्रातारम् । अमृतम् । मियेध्य । यजिष्ठम् । हव्यऽवाहन ॥५॥ सुऽशंसः । बोधि । गृणते । यविष्ठ्य । मधुऽजिह्वः । सुऽआहुतः । प्रस्कण्वस्य । प्रऽतिरन् । आयुः । जीवसे ।

नमस्य । दैव्यम् । जनम् ॥६॥ होतारम् । विश्वऽवेदसम् । सम् । हि ।
त्वा । विशः । इन्धते । सः । आ । वह । पुरुऽहूत । प्रऽचेतसः ।
अग्ने । देवान् । इह । द्रवत् ॥७॥ सवितारम् । उषसम् । अश्विना ।
भगम् । अग्निम् । विऽउष्टिषु । क्षपः । कण्वासः । त्वा । सुतऽसो-
मासः । इन्धते । हव्यऽवाहम् । सुऽअध्वर ॥८॥ पतिः । हि ।
अध्वराणाम् । अग्ने । दूतः । विशाम् । असि । उषःऽबुधः । आ ।
वह । सोमऽपीतये । देवान् । अद्य । स्वःऽदृशः ॥९॥ अग्ने । पूर्वाः ।
अनु । उषसः । विभावसो इति विभाऽवसो । दीदेथ । विश्वऽदर्शतः ।
असि । ग्रामेषु । अविता । पुरःऽहितः । असि । यज्ञेषु । मानुषः ॥१०॥
नि । त्वा । यज्ञस्य । साधनम् । अग्ने । होतारम् । ऋत्विजम् ।
मनुष्वत् । देव । धीमहि । प्रऽचेतसम् । जीरम् । दूतम् । अमर्त्यम् ॥११॥
यत् । देवानाम् । मित्रऽमहः । पुरःऽहितः । अन्तरः । यासि । दूत्यम् ।
सिन्धोःऽइव । प्रऽस्वनितासः । ऊर्मयः । अग्नेः । भ्राजन्ते । अर्चयः
॥१२॥ श्रुधि । श्रुत्ऽकर्ण । वह्निऽभिः । देवैः । अग्ने । सयावऽभिः ।
आ । सीदन्तु । बर्हिषि । मित्रः । अर्यमा । प्रातःऽयावानः । अध्वरम्
॥१३॥ शृण्वन्तु । स्तोमम् । मरुतः । सुऽदानवः । अग्निऽजिह्वाः ।
ऋतऽवृधः । पिबतु । सोमम् । वरुणः । धृतऽव्रतः । अश्विऽभ्याम् ।
उषसा । सऽजूः ॥१४॥

I. 45.

त्वम् । अग्ने । वसून् । इह । रुद्रान् । आदित्यान् । उत । यज ।
सुऽअध्वरम् । जनम् । मनुऽजातम् । घृतऽप्रुषम् ॥१॥ श्रुष्टीऽवानः ।
हि । दाशुषे । देवाः । अग्ने । विऽचेतसः । तान् । रोहित्ऽअश्व ।

गिर्वणः । त्रयः॑ऽत्रिंशतम् । आ । वह ॥२॥ प्रियमेधऽवत् । अत्रिऽवत् । जातऽवेदः । विरूपऽवत् । अङ्गिरस्वत् । महिऽव्रत । प्रस्कण्वस्य । श्रुधि । हवम् ॥३॥ महिऽकेरवः । ऊतये । प्रियऽमेधाः । अहूषत । राजन्तम् । अध्वराणाम् । अग्निम् । शुक्रेण । शोचिषा ॥४॥ घृतऽआहवन । सन्त्य । इमाः । ऊँ इति । सु । श्रुधि । गिरः । याभिः । कण्वस्य । सूनवः । हवन्ते । अवसे । त्वा ॥५॥ त्वाम् । चित्रश्रवःऽतम । हवन्ते । विक्षु । जन्तवः । शोचिःऽकेशम् । पुरुऽप्रिय । अग्ने । हव्याय । वोळ्हवे ॥६॥ नि । त्वा । होतारम् । ऋत्विजम् । दधिरे । वसुवित्ऽतमम् । श्रुत्ऽकर्णम् । सप्रथःऽतमम् । विप्राः । अग्ने । दिविष्टिषु ॥७॥ आ । त्वा । विप्राः । अचुच्यवुः । सुतऽसोमाः । अभि । प्रयः । बृहत् । भाः । बिभ्रतः । हविः । अग्ने । मर्ताय । दाशुषे ॥८॥ प्रातःऽयाव्नः । सहःऽकृत । सोमऽपेयाय । सन्त्य । इह । अद्य । दैव्यम् । जनम् । बर्हिः । आ । सादय । वसो इति ॥९॥ अर्वाञ्चम् । दैव्यम् । जनम् । अग्ने । यक्ष्व । सहूतिऽभिः । अयम् । सोमः । सुऽदानवः । तम् । पात । तिरःऽअह्न्यम् ॥१०॥

I. 46.

एषो इति । उषाः । अपूर्व्या । वि । उच्छति । प्रिया । दिवः । स्तुषे । वाम् । अश्विना । बृहत् ॥१॥ या । दस्रा । सिन्धुऽमातरा । मनोतरा । रयीणाम् । धिया । देवा । वसुऽविदा ॥२॥ वच्यन्ते । वाम् । ककुहासः । जूर्णायाम् । अधि । विष्टपि । यत् । वाम् । रथः । विऽभिः । पतात् ॥३॥ हविषा । जारः । अपाम् । पिपर्ति । पपुरिः । नरा । पिता । कुटस्य । चर्षणिः ॥४॥ आऽदारः । वाम् । मतीनाम् ।

नासत्या । मतऽवचसा । पातम् । सोमस्य । धृष्णुऽया ॥५॥ या । नः । पीपरत् । अश्विना । ज्योतिष्मती । तमः । तिरः । ताम् । अस्मे । इति । रासाथाम् । इषम् ॥६॥ आ । नः । नावा । मतीनाम् । यातम् । पाराय । गन्तवे । युञ्जाथाम् । अश्विना । रथम् ॥७॥ अरित्रम् । वाम् । दिवः । पृथु । तीर्थे । सिन्धूनाम् । रथः । धिया । युयुज्रे । इन्दवः ॥८॥ दिवः । कण्वासः । इन्दवः । वसु । सिन्धूनाम् । पदे । स्वम् । वव्रिम् । कुह । धित्सथः ॥९॥ अभूत् । ऊँ इति । भाः । ऊँ इति । अंशवे । हिरण्यम् । प्रति । सूर्यः । वि । अख्यत् । जिह्वया । असितः ॥१०॥ अभूत् । ऊँ इति । पारम् । एतवे । पन्थाः । ऋतस्य । साधुऽया । अदर्शि । वि । स्रुतिः । दिवः ॥११॥ तत्ऽतत् । इत् । अश्विनोः । अवः । जरिता । प्रति । भूषति । मदे । सोमस्य । पिप्रतोः ॥१२॥ ववसाना । विवस्वति । सोमस्य । पीत्या । गिरा । मनुष्वत् । शंभू इति शम्ऽभू । आ । गतम् ॥१३॥ युवोः । उषाः । अनु । श्रियम् । परिऽज्मनोः । उपऽआचरत् । ऋता । वनथः । अक्तुऽभिः ॥१४॥ उभा । पिबतम् । अश्विना । उभा । नः । शर्म । यच्छतम् । अविद्रियाभिः । ऊतिऽभिः ॥१५॥

I. 47.

अयम् । वाम् । मधुमत्ऽतमः । सुतः । सोमः । ऋतऽवृधा । तम् । अश्विना । पिबतम् । तिरःऽअह्न्यम् । धत्तम् । रत्नानि । दाशुषे ॥१॥ त्रिऽवन्धुरेण । त्रिऽवृता । सुऽपेशसा । रथेन । आ । यातम् । अश्विना । कण्वासः । वाम् । ब्रह्म । कृण्वन्ति । अध्वरे । तेषाम् । सु । शृणुतम् । हवम् ॥२॥ अश्विना । मधुमत्ऽतमम् । पातम् । सोमम् । ऋतऽवृधा ।

अर्थ । अद्य । दस्रा । वसुं । बिभ्रंता । रथें । दाश्वांसम् । उपं । गच्छतम् ॥ ३ ॥ त्रिऽसधस्थे । बर्हिषिं । विश्वऽवेदसा । मध्वां । यज्ञम् । मिमिक्षतम् । कण्वांसः । वाम् । सुतऽसोमाः । अभिऽद्यंवः । युवाम् । हवन्ते । अश्विना ॥ ४ ॥ याभिः । कण्वम् । अभिष्टिऽभिः । प्र । आवंतम् । युवम् । अश्विना । ताभिः । सु । अस्मान् । अवतम् । शुभः । पती इतिं । पातम् । सोमंम् । ऋतऽवृधा ॥ ५ ॥ सुऽदासें । दस्रा । वसुं । बिभ्रंता । रथें । पृक्षः । वहतम् । अश्विना । रयिम् । समुद्रात् । उत । वा । दिवः । परिं । अस्मे इतिं । धत्तम् । पुरुऽस्पृहम् ॥६॥ यत् । नासत्या । पराऽवतिं । यत् । वा । स्थः । अधिं । तुर्वशें । अतः । रथेन । सुऽवृतां । नः । आ । गतम् । साकम् । सूर्यस्य । रश्मिऽभिः ॥७॥ अर्वाञ्चां । वाम् । सप्तयः । अध्वरऽश्रियः । वहन्तु । सवना । इत् । उपं । इषंम् । पृञ्चन्तां । सुऽकृतें । सुऽदानंवे । आ । बर्हिः । सीदतम् । नरा ॥८॥ तेनं । नासत्या । आ । गतम् । रथेन । सूर्यऽत्वचा । येनं । शश्वत् । ऊहथुः । दाशुषें । वसुं । मध्वः । सोमंस्य । पीतयें ॥९॥ उक्थेभिः । अर्वाक् । अवंसे । पुरुवसू इतिं पुरुऽवसू । अर्कैः । च । नि । ह्वयामहे । शश्वत् । कण्वानाम् । सदंसि । प्रिये । हि । कम् । सोमंम् । पपथुः । अश्विना ॥ १० ॥

I. 48.

सह । वामेनं । नः । उषः । वि । उच्छ । दुहितः । दिवः । सह । द्युम्नेनं । बृहता । विभाऽवरि । राया । देवि । दास्वती ॥१॥ अश्वंऽवतीः । गोऽमंतीः । विश्वऽसुविदः । भूरिं । च्यवन्त । वस्तंवे । उत् । ईरय । प्रतिं । मा । सूनृताः । उषः । चोदं । राधः । मघोनाम् ॥२॥ उवासं । उषाः ।

उच्छात् । च । नु । देवी । जीरा । रथानाम् । ये । अस्याः । आऽचरं-
णेषु । दध्रिरे । समुद्रे । न । श्रवस्यवः ॥३॥ उषः । ये । ते । प्र । यामेषु ।
युञ्जते । मनः । दानाय । सूरयः । अत्र । अह । तत् । कण्वः । एषाम् ।
कण्वऽतमः । नाम । गृणाति । नृणाम् ॥४॥ आ । घ । योषाऽइव । सूनरी ।
उषाः । याति । प्रऽभुञ्जती । जरयन्ती । वृजनम् । पत्ऽवत् । ईयते । उत् ।
पातयति । पक्षिणः ॥५॥ वि । या । सृजति । समनम् । वि । अर्थिनः ।
पदम् । न । वेति । ओदती । वयः । नकिः । ते । पप्तिऽवांसः । आसते ।
विऽउष्टौ । वाजिनीऽवति ॥६॥ एषा । अयुक्त । पराऽवतः । सूर्यस्य । उत्-
ऽअयनात् । अधि । शतम् । रथेभिः । सुऽभगा । उषाः । इयम् । वि ।
याति । अभि । मानुषान् ॥७॥ विश्वम् । अस्याः । ननाम । चक्षसे । जगत् ।
ज्योतिः । कृणोति । सूनरी । अप । द्वेषः । मघोनी । दुहिता । दिवः । उषाः ।
उच्छत् । अप । स्रिधः ॥८॥ उषः । आ । भाहि । भानुना । चन्द्रेण ।
दुहितः । दिवः । आऽवहन्ती । भूरि । अस्मभ्यम् । सौभगम् । विऽउ-
च्छन्ती । दिविष्टिषु ॥९॥ विश्वस्य । हि । प्राणनम् । जीवनम् । त्वे इति ।
वि । यत् । उच्छसि । सूनरि । सा । नः । रथेन । बृहता । विभाऽवरि ।
श्रुधि । चित्रऽमघे । हवम् ॥१०॥ उषः । वाजम् । हि । वंस्व । यः । चित्रः ।
मानुषे । जने । तेन । आ । वह । सुऽकृतः । अध्वरान् । उप । ये । त्वा ।
गृणन्ति । वह्नयः ॥११॥ विश्वान् । देवान् । आ । वह । सोमऽपीतये ।
अन्तरिक्षात् । उषः । त्वम् । सा । अस्मासु । धाः । गोऽमत् । अश्वऽवत् ।
उक्थ्यम् । उषः । वाजम् । सुऽवीर्यम् ॥१२॥ यस्याः । रुशन्तः । अर्चयः ।
प्रति । भद्राः । अदृक्षत । सा । नः । रयिम् । विश्वऽवारम् । सुऽपेशसम् ।
उषाः । ददातु । सुग्म्यम् ॥१३॥ ये । चित् । हि । त्वाम् । ऋषयः । पूर्वे ।

ऊतये । जुहुरे । अवसे । महि । सा । नः । स्तोमान् । अभि । गृणीहि । राधसा । उषः । शुक्रेण । शोचिषा ॥१४॥ उषः । यत् । अद्य । भानुना । वि । द्वारौ । ऋणवः । दिवः । प्र । नः । यच्छतात् । अवृकम् । पृथु । छर्दिः । प्र । देवि । गोऽमतीः । इषः ॥१५॥ सम् । नः । राया । बृहता । विश्वऽपेशसा । मिमिक्ष्व । सम् । इळाभिः । आ । सम् । द्युम्नेन । विश्वऽतुरा । उषः । महि । सम् । वाजैः । वाजिनीऽवति ॥१६॥

I. 49.

उषः । भद्रेभिः । आ । गहि । दिवः । चित् । रोचनात् । अधि । वहन्तु । अरुणऽप्सवः । उप । त्वा । सोमिनः । गृहम् ॥१॥ सुऽपेशसम् । सुऽखम् । रथम् । यम् । अधिऽअस्थाः । उषः । त्वम् । तेन । सुऽश्रवसम् । जनम् । प्र । अव । अद्य । दुहितः । दिवः ॥२॥ वयः । चित् । ते । पतत्रिणः । द्विऽपत् । चतुःऽपत् । अर्जुनि । उषः । प्र । आरन् । ऋतून् । अनु । दिवः । अन्तेभ्यः । परि ॥३॥ विऽउच्छन्ती । हि । रश्मिऽभिः । विश्वम् । आऽभासि । रोचनम् । ताम् । त्वाम् । उषः । वसुऽयवः । गीःऽभिः । कण्वाः । अहूषत ॥४॥

I. 50.

उत् । ऊँ इति । त्यम् । जातऽवेदसम् । देवम् । वहन्ति । केतवः । दृशे । विश्वाय । सूर्यम् ॥१॥ अप । त्ये । तायवः । यथा । नक्षत्रा । यन्ति । अक्तुऽभिः । सूराय । विश्वऽचक्षसे ॥२॥ अदृश्रम् । अस्य । केतवः । वि । रश्मयः । जनान् । अनु । भ्राजन्तः । अग्नयः । यथा ॥३॥ तरणिः । विश्वऽदर्शतः । ज्योतिःऽकृत् । असि । सूर्य । विश्वम् । आ । भासि । रोचनम् । ॥४॥ प्रत्यङ् । देवानाम् । विशः । प्रत्यङ् । उत् । एषि । मानुषान् । प्रत्यङ् । विश्वम् । स्वः । दृशे ॥५॥ येन । पावक । चक्षसा । भुरण्यन्तम् ।

जनान् । अनु । त्वम् । वरुण । पश्यसि ॥६॥ वि । द्याम् । एषि । रजः । पृथु । अहा । मिमानः । अक्तुऽभिः । पश्यन् । जन्मानि । सूर्य ॥७॥ सप्त । त्वा । हरितः । रथे । वहन्ति । देव । सूर्य । शोचिःऽकेशम् । विऽचक्षण ॥८॥ अयुक्त । सप्त । शुन्ध्युवः । सूरः । रथस्य । नप्त्यः । ताभिः । याति । स्वयुक्तिऽभिः ॥९॥ उत् । वयम् । तमसः । परि । ज्योतिः । पश्यन्तः । उत्ऽतरम् । देवम् । देवऽत्रा । सूर्यम् । अगन्म । ज्योतिः । उत्ऽतमम् ॥१०॥ उत्ऽयन् । अद्य । मित्रऽमहः । आऽरोहन् । उत्ऽतराम् । दिवम् । हृत्ऽरोगम् । मम । सूर्य । हरिमाणम् । च । नाशय ॥११॥ शुकेषु । मे । हरिमाणम् । रोपणाकासु । दध्मसि । अथो इति । हारिद्रवेषु । मे । हरिमाणम् । नि । दध्मसि । ॥१२॥ उत् । अगात् । अयम् । आदित्यः । विश्वेन । सहसा । सह । द्विषन्तम् । मह्यम् । रन्धयन् । मो इति । अहम् । द्विषते । रधम् ॥१३॥

I. 51.

अभि । त्यम् । मेषम् । पुरुऽहूतम् । ऋग्मियम् । इन्द्रम् । गीःऽभिः । मदत । वस्वः । अर्णवम् । यस्य । द्यावः । न । विऽचरन्ति । मानुषा । भुजे । मंहिष्ठम् । अभि । विप्रम् । अर्चत ॥१॥ अभि । ईम् । अवन्वन् । सुऽअभिष्टिम् । ऊतयः । अन्तरिक्षऽप्राम् । तविषीभिः । आऽवृतम् । इन्द्रम् । दक्षासः । ऋभवः । मदऽच्युतम् । शतऽक्रतुम् । जवनी । सूनृता । आ । अरुहत् ॥२॥ त्वम् । गोत्रम् । अङ्गिरःऽभ्यः । अवृणोः । अप । उत । अत्रये । शतऽदुरेषु । गातुऽवित् । ससेन । चित् । विऽमदाय । अवहः । वसु । आजौ । अद्रिम् । ववसानस्य । नर्तयन् ॥३॥ त्वम् । अपाम् । अपिऽधाना । अवृणोः । अप । अधारयः । पर्वते । दानुऽमत् । वसु । वृत्रम् । यत् । इन्द्र । शवसा । अवधीः । अहिम् । आत् । इत् । सूर्यम् । दिवि ।

आ । अरोहयः । दृशे॥४॥ त्वम् । मायाभिः । अप । मायिनः । अधमः। स्वधाभिः । ये । अधि । शुप्तौ । अजुह्वत । त्वम् । पिप्रोः । नृऽमनः । प्र । अरुजः । पुरः । प्र । ऋजिश्वानम् । दस्युऽहत्येषु । आविथ ॥५॥ त्वम् । कुत्सम् । शुष्णऽहत्येषु । आविथ । अरन्धयः । अतिथिऽग्वाय । शम्बरम्। महान्तम् । चित् । अर्बुदम् । नि । क्रमीः । पदा । सनात् । एव । दस्युऽहत्याय । जज्ञिषे ॥६॥ त्वे इति । विश्वा । तविषी । सध्र्यक् । हिता । तव । राधः । सोमऽपीथाय । हर्षते । तव । वज्रः । चिकिते । बाह्वोः । हितः । वृश्च । शत्रोः । अव । विश्वानि । वृष्ण्या ॥७॥ वि । जानीहि । आर्यान् । ये । च । दस्यवः । बर्हिष्मते । रन्धय । शासत् । अव्रतान् । शाकी । भव । यजमानस्य । चोदिता । विश्वा । इत् । ता । ते । सधऽमादेषु । चाकन ॥८॥ अनुऽव्रताय । रन्धयन् । अपऽव्रतान् । आऽभूभिः । इन्द्रः । श्नथयन् । अनाभुवः । वृद्धस्य । चित् । वर्धतः । द्याम् । इनक्षतः । स्तवानः । वम्रः । वि । जघान । सम्ऽदिहः ॥९॥ तक्षत् । यत् । ते । उशना । सहसा । सहः । वि । रोदसी इति । मज्मना । बाधते । शवः। आ । त्वा । वातस्य । नृऽमनः । मनःऽयुजः । आ । पूर्यमाणम् । अवहन् । अभि । श्रवः ॥१०॥ मन्दिष्ट । यत् । उशने । काव्ये । सचा । इन्द्रः । वङ्कू इति । वङ्कुऽतरा । अधि । तिष्ठति । उग्रः । ययिम् । निः । अपः। स्रोतसा। असृजत् । वि । शुष्णस्य । दृंहिताः । ऐरयत् । पुरः ॥११॥ आ । स्म । रथम् । वृषऽपानेषु । तिष्ठसि । शार्यातस्य । प्रऽभृताः। येषु । मन्दसे । इन्द्र । यथा । सुतऽसोमेषु । चाकनः । अनर्वाणम् । श्लोकम् । आ । रोहसे । दिवि ॥१२॥ अददाः । अर्भाम् । महते । वचस्यवे । कक्षीवते । वृचयाम् । इन्द्र । सुन्वते । मेना । अभवः । वृषणश्वस्य । सुक्रतो इति सुऽ-

क्रतो । विश्वा । इत् । ता । ते । सवनेषु । प्रऽवाच्या ॥१३॥ इन्द्रः । अश्रायि । सुऽध्यः । निरेके । पज्रेषु । स्तोमः । दुर्यः । न । यूपः । अश्वऽयुः । गव्युः । रथऽयुः । वसुऽयुः । इन्द्रः । इत् । रायः । क्षयति । प्रऽयन्ता ॥१४॥ इदम् । नमः । वृषभाय । स्वऽराजे । सत्यऽशुष्माय । तवसे । अवाचि । अस्मिन् । इन्द्र । वृजने । सर्वऽवीराः । स्मत् । सूरिऽभिः । तव । शर्मन् । स्याम ॥१५॥

I. 52.

त्यम् । सु । मेषम् । महय । स्वःऽविदम् । शतम् । यस्य । सुऽभ्वः । साकम् । ईरते । अत्यम् । न । वाजम् । हवनऽस्यदम् । रथम् । आ । इन्द्रम् । ववृत्याम् । अवसे । सुवृक्तिऽभिः ॥१॥ सः । पर्वतः । न । धरुणेषु । अच्युतः सहस्रम्ऽऊतिः । तविषीषु । ववृधे । इन्द्रः । यत् । वृत्रम् । अवधीत् । नदीऽवृतम् । उब्जन् । अर्णांसि । जर्हृषाणः । अन्धसा ॥२॥ सः । हि । द्वरः । द्वरिषु । वव्रः । ऊधनि । चन्द्रऽबुध्नः । मदऽवृद्धः । मनीषिऽभिः । इन्द्रम् । तम् । अह्वे । सुऽअपस्यया । धिया । मंहिष्ठऽरातिम् । सः । हि । पप्रिः । अन्धसः ॥३॥ आ । यम् । पृणन्ति । दिवि । सद्मऽबर्हिषः । समुद्रम् । न । सुऽभ्वः । स्वाः । अभिष्टयः । तम् । वृत्रऽहत्ये । अनु । तस्थुः । ऊतयः । शुष्माः । इन्द्रम् । अवाताः । अहुतऽप्सवः ॥४॥ अभि । स्वऽवृष्टिम् । मदे । अस्य । युध्यतः । रघ्वीःऽइव । प्रवणे । सस्रुः । ऊतयः । इन्द्रः । यत् । वज्री । धृषमाणः । अन्धसा । भिनत् । वलस्य । परिधीन्ऽइव । त्रितः ॥५॥ परि । ईम् । घृणा । चरति । तित्विषे । शवः । अपः । वृत्वी । रजसः । बुध्नम् । आ । अशयत् । वृत्रस्य । यत् । प्रवणे । दुःऽगृभिश्वनः । निऽजघन्थ । हन्वोः ।

इन्द्र । तन्यतुम् ॥६॥ ह्रदम् । न । हि । त्वा । निऽऋषन्ति । ऊर्मयः ।
ब्रह्माणि । इन्द्र । तव । यानि । वर्धना । त्वष्टा । चित् । ते । युज्यम् ।
ववृधे । शवः । ततक्ष । वज्रम् । अभिभूतिऽओजसम् ॥७॥ जघन्वान् ।
ऊँ इति । हरिऽभिः । संभृतक्रतो इति संभृतऽक्रतो । इन्द्र । वृत्रम् ।
मनुषे । गातुऽयन् । अपः । अयच्छथाः । बाह्वोः । वज्रम् । आयसम् ।
अधारयः । दिवि । आ । सूर्यम् । दृशे ॥८॥ बृहत् । स्वऽचन्द्रम् । अ-
मऽवत् । यत् । उक्थ्यम् । अकृण्वत । भियसा । रोहणम् । दिवः । यत् ।
मानुषऽप्रधनाः । इन्द्रम् । ऊतयः । स्वः । नृऽसाचः । मरुतः । अमदन् ।
अनु ॥९॥ द्यौः । चित् । अस्य । अमऽवान् । अहेः । स्वनात् । अयो-
यवीत् । भियसा । वज्रः । इन्द्र । ते । वृत्रस्य । यत् । बद्बधानस्य ।
रोदसी इति । मदे । सुतस्य । शवसा । अभिनत् । शिरः ॥१०॥ यत् ।
इत् । नु । इन्द्र । पृथिवी । दशऽभुजिः । अहानि । विश्वा । ततनन्त ।
कृष्टयः । अत्र । अह । ते । मघऽवन् । विऽश्रुतम् । सहः । द्याम् । अनु ।
शवसा । बर्हणा । भुवत् ॥११॥ त्वम् । अस्य । पारे । रजसः । विऽओमनः ।
स्वभूतिऽओजाः । अवसे । धृषत्ऽमनः । चकृषे । भूमिम् । प्रतिऽमानम् ।
ओजसः । अपः । स्व१रिति स्वः । परिऽभूः । एषि । आ । दिवम् ॥१२॥
त्वम् । भुवः । प्रतिऽमानम् । पृथिव्याः । ऋष्वऽवीरस्य । बृहतः । पतिः ।
भूः । विश्वम् । आ । अप्राः । अन्तरिक्षम् । महिऽत्वा । सत्यम् । अद्धा ।
नकिः । अन्यः । त्वाऽवान् ॥१३॥ न । यस्य । द्यावापृथिवी इति । अनु ।
व्यचः । न । सिन्धवः । रजसः । अन्तम् । आनशुः । न । उत । स्वऽवृ-
ष्टिम् । मदे । अस्य । युध्यतः । एकः । अन्यत् । चकृषे । विश्वम् । आनु-
षक् ॥१४॥ आर्चन् । अत्र । मरुतः । सस्मिन् । आजौ । विश्वे । देवासः ।

अमदन् । अनु । त्वा । वृत्रस्य । यत् । भृष्टिऽमता । वधेन । नि । त्वम् । इन्द्र । प्रति । आनम् । जघन्थ ॥१५॥

I. 53.

नि । ॐ इति । सु । वाचम् । प्र । महे । भरामहे । गिरः । इन्द्राय । सदने । विवस्वतः । नु । चित् । हि । रत्नम् । ससताम्ऽइव । अविदत् । न । दुःऽस्तुतिः । द्रविणःऽदेषु । शस्यते ॥१॥ दुरः । अश्वस्य । दुरः । इन्द्र । गोः । असि । दुरः । यवस्य । वसुनः । इनः । पतिः । शिक्षाऽनरः । प्रऽदिवः । अकामऽकर्शनः । सखा । सखिऽभ्यः । तम् । इदम् । गृणीमसि ॥२॥ शचीऽवः । इन्द्र । पुरुऽकृत् । द्युमत्ऽतम । तव । इत् । इदम् । अभितः । चेकिते । वसु । अतः । सम्ऽगृभ्य । अभिऽभूते । आ । भर । मा । त्वाऽयतः । जरितुः । कामम् । ऊनयीः ॥३॥ एभिः । द्युऽभिः । सुऽमनाः । एभिः । इन्दुऽभिः । निऽरुन्धानः । अमतिम् । गोभिः । अश्विना । इन्द्रेण । दस्युम् । दरयन्तः । इन्दुऽभिः । युतऽद्वेषसः । सम् । इषा । रभेमहि ॥४॥ सम् । इन्द्र । राया । सम् । इषा । रभेमहि । सम् । वाजेऽभिः । पुरुऽचन्द्रैः । अभिद्युऽभिः । सम् । देव्या । प्रऽमत्या । वीरऽशुष्मया । गोऽअग्रया । अश्वऽवत्या । रभेमहि ॥५॥ ते । त्वा । मदाः । अमदन् । तानि । वृष्ण्या । ते । सोमासः । वृत्रऽहत्येषु । सत्ऽपते । यत् । कारवे । दश । वृत्राणि । अप्रति । बर्हिष्मते । नि । सहस्राणि । बर्हयः ॥६॥ युधा । युधम् । उप । घ । इत् । एषि । धृष्णुऽया । पुरा । पुरम् । सम् । इदम् । हंसि । ओजसा । नम्या । यत् । इन्द्र । सख्या । पराऽवति । निऽबर्हयः । नमुचिम् । नाम । मायिनम् ॥७॥ त्वम् । करञ्जम् । उत । पर्णयम् । वधीः । तेजिष्ठया । अतिथिऽग्वस्य । वर्तनी । त्वम् । शता । वङ्गृदस्य । अभिनत् । पुरः ।

अनानुऽदः । परिऽसृताः । ऋजिश्वना ॥८॥ त्वम् । एतान् । जनऽराज्ञः । द्विः । दश । अबन्धुना । सुऽश्रवसा । उपऽजग्मुषः । षष्टिम् । सहस्रा । नवतिम् । नव । श्रुतः । नि । चक्रेण । रथ्या । दुःऽपदा । अवृणक् ॥९॥ त्वम् । आविथ । सुऽश्रवसम् । तव । ऊतिऽभिः । तव । त्रामऽभिः । इन्द्र । तूर्वयाणम् । त्वम् । अस्मै । कुत्सम् । अतिथिऽग्वम् । आयुम् । महे । राज्ञे । यूने । अरन्धनायः ॥१०॥ ये । उत्ऽऋचि । इन्द्र । देवऽगोपाः । सखायः । ते । शिवऽतमाः । असाम । त्वाम् । स्तोषाम । त्वया । सुऽवीराः । द्राघीयः । आयुः । प्रऽतरम् । दधानाः ॥११॥

I. 54.

मा । नः । अस्मिन् । मघऽवन् । पृत्ऽसु । अंहसि । नहि । ते । अन्तः । शवसः । परिऽनशे । अक्रन्दयः । नद्यः । रोरुवत् । वना । कथा । न । क्षोणीः । भियसा । सम् । आरत ॥१॥ अर्च । शक्राय । शाकिने । शचीऽवते । शृण्वन्तम् । इन्द्रम् । महयन् । अभि । स्तुहि । यः । धृष्णुना । शवसा । रोदसी इति । उभे इति । वृषा । वृषऽत्वा । वृषभः । निऽऋञ्जते ॥२॥ अर्च । दिवे । बृहते । शूष्यम् । वचः । स्वऽक्षत्रम् । यस्य । धृषतः । धृषत् । मनः । बृहत्ऽश्रवाः । असुरः । बर्हणा । कृतः । पुरः । हरिऽभ्याम् । वृषभः । रथः । हि । सः ॥३॥ त्वम् । दिवः । बृहतः । सानु । कोपयः । अव । त्मना । धृषता । शम्बरम् । भिनत् । यत् । मायिनः । व्रन्दिनः । मन्दिना । धृषत् । शिताम् । गभस्तिम् । अशनिम् । पृतन्यसि ॥४॥ नि । यत् । वृणक्षि । श्वसनस्य । मूर्धनि । शुष्णस्य । चित् । व्रन्दिनः । रोरुवत् । वना । प्राचीनेन । मन-

सा । बर्हणाऽव्रता । यत् । अद्य । चित् । कृणवः । कः । त्वा । परि ॥५॥
त्वम् । आविथ । नर्यम् । तुर्वशम् । यदुम् । त्वम् । तुर्वीतिम् । वय्यम् ।
शतक्रतो इति शतऽक्रतो । त्वम् । रथम् । एतशम् । कृत्व्ये । धने । त्वम् ।
पुरः । नवतिम् । दम्भयः । नव ॥६॥ सः । घ । राजा । सत्ऽपतिः ।
शूशुवत् । जनः । रातऽहव्यः । प्रति । यः । शासम् । इन्वति । उक्था ।
वा । यः । अभिऽगृणाति । राधसा । दानुः । अस्मै । उपरा । पिन्वते ।
दिवः ॥७॥ असमम् । क्षत्रम् । असमा । मनीषा । प्र । सोमऽपाः । अप-
सा । सन्तु । नेमे । ये । ते । इन्द्र । ददुषः । वर्धयन्ति । महि । क्षत्रम् ।
स्थविरम् । वृष्ण्यम् । च ॥८॥ तुभ्य । इत् । एते । बहुलाः । अद्रिऽ-
दुग्धाः । चमूऽसदः । चमसाः । इन्द्रऽपानाः । वि । अश्नुहि । तर्पय ।
कामम् । एषाम् । अथ । मनः । वसुऽदेयाय । कृष्व ॥९॥ अपाम् ।
अतिष्ठत् । धरुणऽह्वरम् । तमः । अन्तः । वृत्रस्य । जठरेषु । पर्वतः ।
अभि । ईम् । इन्द्रः । नद्यः । वव्रिणा । हिताः । विश्वाः । अनुऽस्थाः ।
प्रवणेषु । जिघ्नते ॥१०॥ सः । शेऽवृधम् । अधि । धाः । द्युम्नम् ।
अस्मे इति । महि । क्षत्रम् । जनाषाट् । इन्द्र । तव्यम् । रक्ष । च ।
नः । मघोनः । पाहि । सूरीन् । राये । च । नः । सुऽअपत्यै । इषे ।
धाः ॥ ११ ॥

I. 55.

दिवः । चित् । अस्य । वरिमा । वि । पप्रथे । इन्द्रम् । न ।
मह्ना । पृथिवी । चन । प्रति । भीमः । तुविष्मान् । चर्षणिऽभ्यः ।
आऽतपः । शिशीते । वज्रम् । तेजसे । न । वंसगः ॥१॥ सः । अर्णवः ।
न । नद्यः । समुद्रियः । प्रति । गृभ्णाति । विऽश्रिताः । वरीमऽभिः ।

इन्द्रः । सोमस्य । पीतये । वृषऽयते । सनात् । सः । युध्मः । ओजसा । पनस्यते ॥२॥ त्वम् । तम् । इन्द्र । पर्वतम् । न । भोजसे । महः । नृम्णस्य । धर्मणाम् । इरज्यसि । प्र । वीर्येण । देवता । अति । चेकिते । विश्वस्मै । उग्रः । कर्मणे । पुरःऽहितः ॥३॥ सः । इत् । वने । नमस्युऽभिः । वचस्यते । चारु । जनेषु । प्रऽब्रुवाणः । इन्द्रियम् । वृषा । छन्दुः । भवति । हर्यतः । वृषा । क्षेमेण । धेनाम् । मघऽवा । यत् । इन्वति ॥४॥ सः । इत् । महानि । समऽइथानि । मज्मना । कृणोति । युध्मः । ओजसा । जनेभ्यः । अध । चन । श्रत् । दधति । त्विषिऽमते । इन्द्राय । वज्रम् । निऽघनिघ्नते । वधम् ॥५॥ सः । हि । श्रवस्युः । सदनानि । कृत्रिमा । क्ष्मया । वृधानः । ओजसा । विऽनाशयन् । ज्योतींषि । कृण्वन् । अवृकाणि । यज्यवे । अव । सुऽक्रतुः । सर्तवै । अपः । सृजत् ॥६॥ दानाय । मनः । सोमऽपावन् । अस्तु । ते । अर्वाञ्चा । हरी इति । वन्दनऽश्रुत् । आ । कृधि । यमिष्ठासः । सारथयः । ये । इन्द्र । ते । न । त्वा । केताः । आ । दभ्नुवन्ति । भूर्णयः ॥७॥ अप्रऽक्षितम् । वसु । बिभर्षि । हस्तयोः । अषाळ्हम् । सहः । तन्वि । श्रुतः । दधे । आऽवृतासः । अवतासः । न । कर्तृऽभिः । तनूषु । ते । क्रतवः । इन्द्र । भूरयः ॥८॥

I. 56.

एषः । प्र । पूर्वीः । अव । तस्य । चम्रिषः । अत्यः । न । योषाम् । उत् । अयंस्त । भुर्वणिः । दक्षम् । महे । पाययते । हिरण्ययम् । रथम् । आऽवृत्य । हरिऽयोगम् । ऋभ्वसम् ॥१॥ तम् । गूर्तयः । नेमन्ऽइषः । परीणसः । समुद्रम् । न । समऽचरणे । सनिष्यवः । पतिम् । दक्षस्य ।

विदथस्य । नु । सहः । गिरिम् । न । वेनाः । अधि । रोह । तेजसा ॥२॥ सः । तुर्वणिः । महान् । अरेणु । पौंस्ये । गिरेः । भृष्टिः । न । भ्राजते । तुजा । शवः । येन । शुष्णम् । मायिनम् । आयसः । मदे । दुध्रः । आभूषु । रमयत् । नि । दामनि ॥३॥ देवी । यदि । तविषी । त्वाऽवृधा । ऊतये । इन्द्रम् । सिसक्ति । उषसम् । न । सूर्यः । यः । धृष्णुना । शवसा । बाधते । तमः । इयर्ति । रेणुम् । बृहत् । अर्हरिऽस्वनिः ॥४॥ वि । यत् । तिरः । धरुणम् । अच्युतम् । रजः । अतिस्थिपः । दिवः । आतासु । बर्हणा । स्वःऽमीळ्हे । यत् । मदे । इन्द्र । हर्ष्या । अहन् । वृत्रम् । निः । अपाम् । औब्जः । अर्णवम् ॥५॥ त्वम् । दिवः । धरुणम् । धिषे । ओजसा । पृथिव्याः । इन्द्र । सदनेषु । माहिनः । त्वम् । सुतस्य । मदे । अरिणाः । अपः । वि । वृत्रस्य । समया । पाष्या । अरुजः ॥६॥

I. 57.

प्र । मंहिष्ठाय । बृहते । बृहत्ऽरये । सत्यऽशुष्माय । तवसे । मतिम् । भरे । अपाम्ऽइव । प्रवणे । यस्य । दुःऽधरम् । राधः । विश्वऽआयु । शवसे । अपऽवृतम् ॥१॥ अध । ते । विश्वम् । अनु । ह । असत् । इष्टये । आपः । निम्नाऽइव । सवना । हविष्मतः । यत् । पर्वते । न । सम्ऽअशीत । हर्यतः । इन्द्रस्य । वज्रः । श्नथिता । हिरण्ययः ॥२॥ अस्मै । भीमाय । नमसा । सम् । अध्वरे । उषः । न । शुभ्रे । आ । भर । पनीयसे । यस्य । धाम । श्रवसे । नाम । इन्द्रियम् । ज्योतिः । अकारि । हरितः । न । अयसे ॥३॥ इमे । ते । इन्द्र । ते । वयम् । पुरुऽस्तुत । ये । त्वा । आऽरभ्य । चरामसि ।

प्रभुवसो इति प्रभुऽवसो । नहि । त्वत् । अन्यः । गिर्वणः । गिरः । सर्घत् । क्षोणीःऽइव । प्रति । नः । हर्य । तत् । वचः ॥४॥ भूरि । ते । इन्द्र । वीर्यम् । तव । स्मसि । अस्य । स्तोतुः । मघऽवन् । कामम् । आ । पृण । अनु । ते । द्यौः । बृहती । वीर्यम् । ममे । इयम् । च । ते । पृथिवी । नेमे । ओजसे ॥५॥ त्वम् । तम् । इन्द्र । पर्वतम् । महाम् । उरुम् । वज्रेण । वज्रिन् । पर्वऽशः । चकर्तिथ । अव । असृजः । निऽवृताः । सर्तवै । अपः । सत्रा । विश्वम् । दधिषे । केवलम् । सहः ॥६॥

I. 58.

नु । चित् । सहःऽजाः । अमृतः । नि । तुन्दते । होता । यत् । दूतः । अभवत् । विवस्वतः । वि । साधिष्ठेभिः । पथिऽभिः । रजः । ममे । आ । देवऽताता । हविषा । विवासति ॥१॥ आ । स्वम् । अद्म । युवमानः । अजरः । तृषु । अविष्यन् । अतसेषु । तिष्ठति । अत्यः । न । पृष्ठम् । प्रुषितस्य । रोचते । दिवः । न । सानु । स्तनयन् । अचिक्रदत् ॥२॥ क्राणा । रुद्रेभिः । वसुऽभिः । पुरःऽहितः । होता । निऽसत्तः । रयिषाट् । अमर्त्यः । रथः । न । विक्षु । ऋञ्जसानः । आयुषु । वि । आनुषक् । वार्या । देवः । ऋण्वति ॥३॥ वि । वातऽजूतः । अतसेषु । तिष्ठते । वृथा । जुहूभिः । सृण्या । तुविऽस्वनिः । तृषु । यत् । अग्ने । वनिनः । वृषऽयसे । कृष्णम् । ते । एम । रुशत्ऽऊर्मे । अजर ॥४॥ तपुःऽजम्भः । वने । आ । वातऽचोदितः । यूथे । न । सह्वान् । अव । वाति । वंसगः । अभिऽव्रजन् । अक्षितम् । पाजसा । रजः । स्थातुः । चरथम् । भयते । पतत्रिणः ॥५॥ दधुः ।

त्वा । भृगवः । मानुषेषु । आ । रयिम् । न । चारुम् । सुऽहवम् । जनेभ्यः । होतारम् । अग्ने । अतिथिम् । वरेण्यम् । मित्रम् । न । शेवम् । दिव्याय । जन्मने ॥६॥ होतारम् । सप्त । जुह्वः । यजिष्ठम् । यम् । वाघतः । वृणते । अध्वरेषु । अग्निम् । विश्वेषाम् । अरतिम् । वसूनाम् । सपर्यामि । प्रयसा । यामि । रत्नम् ॥७॥ अच्छिद्रा । सूनो इति । सहसः । नः । अद्य । स्तोतृऽभ्यः । मित्रऽमहः । शर्म । यच्छ । अग्ने । गृणन्तम् । अंहसः । उरुष्य । ऊर्जः । नपात् । पूःऽभिः । आयसीभिः ॥८॥ भव । वरूथम् । गृणते । विभाऽवः । भव । मघऽवन् । मघवत्ऽभ्यः । शर्म । उरुष्य । अग्ने । अंहसः । गृणन्तम् । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥९॥

I. 59.

वयाः । इत् । अग्ने । अग्नयः । ते । अन्ये । त्वे इति । विश्वे । अमृताः । मादयन्ते । वैश्वानर । नाभिः । असि । क्षितीनाम् । स्थूणाऽइव । जनान् । उपऽमित् । ययन्थ ॥१॥ मूर्धा । दिवः । नाभिः । अग्निः । पृथिव्याः । अथ । अभवत् । अरतिः । रोदस्योः । तम् । त्वा । देवासः । अजनयन्त । देवम् । वैश्वानर । ज्योतिः । इत् । आर्याय ॥२॥ आ । सूर्ये । न । रश्मयः । ध्रुवासः । वैश्वानरे । दधिरे । अग्ना । वसूनि । या । पर्वतेषु । ओषधीषु । अप्ऽसु । या । मानुषेषु । असि । तस्य । राजा ॥३॥ बृहती इवेति बृहतीऽइव । सूनवे । रोदसी इति । गिरः । होता । मनुष्यः । न । दक्षः । स्वःऽवते । सत्यऽशुष्माय । पूर्वीः । वैश्वानराय । नृऽतमाय । यह्वीः ॥४॥ दिवः । चित् । ते । बृहतः । जातऽवेदः । वैश्वानर । प्र । रिरिचे । महिऽत्वम् । राजा । कृष्टीनाम् ।

असि । मानुषीणाम् । युधा । देवेभ्यः । वरिवः । चकर्थ ॥५॥ प्र ।
नु । महिऽत्वम् । वृषभस्य । वोचम् । यम् । पूरवः । वृत्रऽहनम् ।
सचन्ते । वैश्वानरः । दस्युम् । अग्निः । जघन्वान् । अधूनोत् । काष्ठाः ।
अव । शम्बरम् । भेत् ॥६॥ वैश्वानरः । महिम्ना । विश्वऽकृष्टिः । भरत्-
ऽवाजेषु । यजतः । विभाऽवा । शातऽवनेये । शतिनीभिः । अग्निः ।
पुरुऽनीथे । जरते । सूनृताऽवान् ॥७॥

I. 60.

वह्निम् । यशसम् । विदथस्य । केतुम् । सुप्रऽअव्यम् । दूतम् ।
सद्यःऽअर्थम् । द्विऽजन्मानम् । रयिम्ऽइव । प्रऽशस्तम् । रातिम् । भरत् ।
भृगवे । मातरिश्वा ॥१॥ अस्य । शासुः । उभयासः । सचन्ते । हविष्मन्तः ।
उशिजः । ये । च । मर्ताः । दिवः । चित् । पूर्वः । नि । असादि ।
होता । आऽपृच्छ्यः । विश्पतिः । विक्षु । वेधाः ॥२॥ तम् । नव्यसी ।
हृदः । आ । जायमानम् । अस्मत् । सुऽकीर्तिः । मधुऽजिह्वम् । अश्याः ।
यम् । ऋत्विजः । वृजने । मानुषासः । प्रयस्वन्तः । आयवः । जीज-
नन्त ॥३॥ उशिक् । पावकः । वसुः । मानुषेषु । वरेण्यः । होता ।
अधायि । विक्षु । दमूनाः । गृहऽपतिः । दमे । आ । अग्निः । भुवत् ।
रयिऽपतिः । रयीणाम् ॥४॥ तम् । त्वा । वयम् । पतिम् । अग्ने ।
रयीणाम् । प्र । शंसामः । मतिऽभिः । गोतमासः । आशुम् । न ।
वाजम्ऽभरम् । मर्जयन्तः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥५॥

I. 61.

अस्मै । इत् । ऊँ इति । प्र । तवसे । तुराय । प्रयः । न । हर्मि ।
स्तोमम् । माहिनाय । ऋचीषमाय । अध्रिऽगवे । ओहम् । इन्द्राय । ब्र-

ह्माणि । रातऽतमा ॥१॥ अस्मै । इत् । ऊँ इति । प्रयःऽइव । प्र । यंसि । भरामि । आङ्गूषम् । बाधे । सुऽवृक्ति । इन्द्राय । हृदा । मनसा । मनीषा । प्रत्नाय । पत्ये । धियः । मर्जयन्त ॥२॥ अस्मै । इत् । ऊँ इति । त्यम् । उपऽमम् । स्वःऽसाम् । भरामि । आङ्गूषम् । आस्येन । मंहिष्ठम् । अच्छोक्तिऽभिः । मतीनाम् । सुवृक्तिऽभिः । सूरिम् । ववृधध्यै ॥३॥ अस्मै । इत् । ऊँ इति । स्तोमम् । सम् । हिनोमि । रथम् । न । तष्टाऽइव । तत्ऽसिनाय । गिरः । च । गिर्वाहसे । सुऽवृक्ति । इन्द्राय । विश्वम्ऽइन्वम् । मेधिराय ॥४॥ अस्मै । इत् । ऊँ इति । सप्तिम्ऽइव । श्रवस्या । इन्द्राय । अर्कम् । जुह्वा । सम् । अञ्जे । वीरम् । दानऽओकसम् । वन्दध्यै । पुराम् । गूर्तऽश्रवसम् । दर्माणम् ॥५॥ अस्मै । इत् । ऊँ इति । त्वष्टा । तक्षत् । वज्रम् । स्वपःऽतमम् । स्वर्यम् । रणाय । वृत्रस्य । चित् । विदत् । येन । मर्म । तुजन् । ईशानः । तुजता । कियेधाः ॥६॥ अस्य । इत् । ऊँ इति । मातुः । सवनेषु । सद्यः । महः । पितुम् । पपिऽवान् । चारु । अन्ना । मुषायत् । विष्णुः । पचतम् । सहीयान् । विध्यत् । वराहम् । तिरः । अद्रिम् । अस्ता ॥७॥ अस्मै । इत् । ऊँ इति । ग्नाः । चित् । देवऽपत्नीः । इन्द्राय । अर्कम् । अहिऽहत्ये । ऊवुरित्यूवुः । परि । द्यावापृथिवी इति । जभ्रे । उर्वी इति । न । अस्य । ते इति । महिमानम् । परि । स्त इति स्तः ॥८॥ अस्य । इत् । एव । प्र । रिरिचे । महिऽत्वम् । दिवः । पृथिव्याः । परि । अन्तरिक्षात् । स्वऽराट् । इन्द्रः । दमे । आ । विश्वऽगूर्तः । सुऽअरिः । अमत्रः । ववक्षे । रणाय ॥९॥ अस्य । इत् । एव । शवसा । शुषन्तम् । वि । वृश्चत् । वज्रेण । वृत्रम् । इन्द्रः । गाः । न । व्राणाः । अवनीः । अमुञ्चत् । अभि । श्रवः । दावने । सऽचेताः ॥१०॥

अस्य । इत् । ऊँ इति । त्वेषसा । रन्त । सिन्धवः । परि । यत् । वज्रेण । सीम् । अयच्छत् । ईशानऽकृत् । दाशुषे । दशस्यन् । तुर्वीतये । गाधम् । तुर्वणिः । करिति कः ॥११॥ अस्मै । इत् । ऊँ इति । प्र । भर । तूतुजानः । वृत्राय । वज्रम् । ईशानः । कियेधाः । गोः । न । पर्व । वि । रद । तिरश्चा । इष्यन् । अर्णांसि । अपाम् । चरध्यै ॥१२॥ अस्य । इत् । ऊँ इति । प्र । ब्रूहि । पूर्व्याणि । तुरस्य । कर्माणि । नव्यः । उक्थैः । युधे । यत् । इष्णानः । आयुधानि । ऋघायमाणः । निऽरिणाति । शत्रून् ॥१३॥ अस्य । इत् । ऊँ इति । भिया । गिरयः । च । दृळ्हाः । द्यावा । च । भूम । जनुषः । तुजेते इति । उपो इति । वेनस्य । जोगुवानः । ओणिम् । सद्यः । भुवत् । वीर्याय । नोधाः ॥१४॥ अस्मै । इत् । ऊँ इति । त्यत् । अनु । दायि । एषाम् । एकः । यत् । वव्ने । भूरेः । ईशानः । प्र । एतशम् । सूर्ये । पस्पृधानम् । सौवश्व्ये । सुस्विम् । आवत् । इन्द्रः ॥१५॥ एव । ते । हारिऽयोजन । सुऽवृक्ति । इन्द्र । ब्रह्माणि । गोतमासः । अक्रन् । आ । एषु । विश्वऽपेशसम् । धियम् । धाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥१६॥

I. 62.

प्र । मन्महे । शवसानाय । शूषम् । आङ्गूषम् । गिर्वणसे । अङ्गिरस्वत् । सुवृक्तिऽभिः । स्तुवते । ऋग्मियाय । अर्चाम । अर्कम् । नरे । विऽश्रुताय ॥१॥ प्र । वः । महे । महि । नमः । भरध्वम् । आङ्गूष्यम् । शवसानाय । साम । येन । नः । पूर्वे । पितरः । पदऽज्ञाः । अर्चन्तः । अङ्गिरसः । गाः । अविन्दन् ॥२॥ इन्द्रस्य । अङ्गिरसाम् । च । इष्टौ । विदत् । सरमा । तनयाय । धासिम् । बृहस्पतिः । भिनत् । अद्रिम् ।

विदत् । गाः । सम् । उस्रियाभिः । वावशन्त । नरः ॥३॥ सः । सुऽस्तुभा । सः । स्तुभा । सप्त । विप्रैः । स्वरेण । अद्रिम् । स्वर्यः । नवऽग्वैः । सरण्युऽभिः । फलिऽगम् । इन्द्र । शक्र । वलम् । रवेण । दरयः । दशऽग्वैः ॥४॥ गृणानः । अङ्गिरःऽभिः । दस्म । वि । वः । उषसा । सूर्येण । गोभिः । अन्धः । वि । भूम्याः । अप्रथयः । इन्द्र । सानु । दिवः । रजः । उपरम् । अस्तभायः ॥५॥ तत् । ऊँ इति । प्रयक्षऽतमम् । अस्य । कर्म । दस्मस्य । चारुऽतमम् । अस्ति । दंसः । उपऽह्वरे । यत् । उपराः । अपिन्वत् । मधुऽअर्णसः । नद्यः । चतस्रः ॥६॥ द्विता । वि । वव्रे । सनऽजा । सनीळे इति सऽनीळे । अयास्यः । स्तवमानेभिः । अर्कैः । भगः । न । मेने इति । परमे । विऽओमन् । अधारयत् । रोदसी इति । सुऽदंसाः ॥७॥ सनात् । दिवम् । परि । भूम । विरूपे इति विऽरूपे । पुनःऽभुवा । युवती इति । स्वेभिः । एवैः । कृष्णेभिः । अक्ता । उषाः । रुशत्ऽभिः । वपुःऽभिः । आ । चरतः । अन्याऽअन्या ॥८॥ सनेमि । सख्यम् । सुऽअपस्यमानः । सूनुः । दाधार । शवसा । सुऽदंसाः । आमासु । चित् । दधिषे । पक्वम् । अन्तरिति । पयः । कृष्णासु । रुशत् । रोहिणीषु ॥९॥ सनात् । सऽनीळाः । अवनीः । अवाताः । व्रता । रक्षन्ते । अमृताः । सहःऽभिः । पुरु । सहस्रा । जनयः । न । पत्नीः । दुवस्यन्ति । स्वसारः । अह्रयाणम् ॥१०॥ सनाऽयुवः । नमसा । नव्यः । अर्कैः । वसुऽयवः । मतयः । दस्म । दद्रुः । पतिम् । न । पत्नीः । उशतीः । उशन्तम् । स्पृशन्ति । त्वा । शवसाऽवन् । मनीषाः ॥११॥ सनात् । एव । तव । रायः । गभस्तौ । न । क्षीयन्ते । न । उप । दस्यन्ति । दस्म । द्युऽमान् ।

असि । क्रतुऽमान् । इन्द्र । धीरः । शिक्ष । शचीऽवः । तव । नः । शचीभिः ॥१२॥ सनाऽयते । गोतमः । इन्द्र । नव्यम् । अतक्षत् । ब्रह्म । हरिऽयोजनाय । सुऽनीथाय । नः । शवसान । नोधाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥१३॥

I. 63.

त्वम् । महान् । इन्द्र । यः । ह । शुष्मैः । द्यावा । जज्ञानः । पृथिवी इति । अमे । धाः । यत् । ह । ते । विश्वा । गिरयः । चित् । अभ्वा । भिया । दृळ्हासः । किरणाः । न । ऐजन् ॥१॥ आ । यत् । हरी इति । इन्द्र । विऽव्रता । वेः । आ । ते । वज्रम् । जरिता । बाह्वोः । धात् । येन । अविहर्यतक्रतो इत्यविहर्यतऽक्रतो । अमित्रान् । पुरः । इष्णासि । पुरुऽहूत । पूर्वीः ॥२॥ त्वम् । सत्यः । इन्द्र । धृष्णुः । एतान् । त्वम् । ऋभुक्षाः । नर्यः । त्वम् । षाट् । त्वम् । शुष्णम् । वृजने । पृक्षे । आणौ । यूने । कुत्साय । द्युऽमते । सचा । अहन् ॥३॥ त्वम् । ह । त्यत् । इन्द्र । चोदीः । सखा । वृत्रम् । यत् । वज्रिन् । वृषऽकर्मन् । उभ्नाः । यत् । ह । शूर । वृषऽमनः । पराचैः । वि । दस्यून् । योनौ । अकृतः । वृथाषाट् ॥४॥ त्वम् । ह । त्यत् । इन्द्र । अरिषण्यन् । दृळ्हस्य । चित् । मर्तानाम् । अजुष्टौ । वि । अस्मत् । आ । काष्ठाः । अर्वते । वः । घनाऽइव । वज्रिन् । श्नथिहि । अमित्रान् ॥५॥ त्वाम् । ह । त्यत् । इन्द्र । अर्णऽसातौ । स्वःऽमीळ्हे । नरः । आजा । हवन्ते । तव । स्वधाऽवः । इयम् । आ । सऽमर्ये । ऊतिः । वाजेषु । अतसाय्या । भूत् ॥६॥ त्वम् । ह । त्यत् । इन्द्र । सप्त । युध्यन् । पुरः । वज्रिन् । पुरुऽकुत्साय । दर्दरिति दर्दः । बर्हिः । न । यत् । सुऽदासे । वृथा ।

वर्क् । अंहोः । राजन् । वरिवः । पूरवे । करिति कः ॥७॥ त्वम् । त्याम् । नः । इन्द्र । देव । चित्राम् । इषम् । आपः । न । पीपयः । परिऽज्मन् । यया । शूर । प्रति । अस्मभ्यम् । यंसि । त्मनम् । ऊर्जम् । न । विश्वध । क्षरध्यै ॥८॥ अकारि । ते । इन्द्र । गोतमेभिः । ब्रह्माणि । आऽउक्ता । नमसा । हरिऽभ्याम् । सुऽपेशसम् । वाजम् । आ । भर । नः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥९॥

I. 64.

वृष्णे । शर्धाय । सुऽमखाय । वेधसे । नोधः । सुऽवृक्तिम् । प्र । भर । मरुत्ऽभ्यः । अपः । न । धीरः । मनसा । सुऽहस्त्यः । गिरः । सम् । अञ्जे । विदथेषु । आऽभुवः ॥१॥ ते । जज्ञिरे । दिवः । ऋष्वासः । उक्षणः । रुद्रस्य । मर्याः । असुराः । अरेपसः । पावकासः । शुचयः । सूर्याःऽइव । सत्वानः । न । द्रप्सिनः । घोरऽवर्पसः ॥२॥ युवानः । रुद्राः । अजराः । अभोक्ऽहनः । ववक्षुः । अध्रिऽगावः । पर्वताःऽइव । दृळ्हा । चित् । विश्वा । भुवनानि । पार्थिवा । प्र । च्यवयन्ति । दिव्यानि । मज्मना ॥३॥ चित्रैः । अञ्जिभिः । वपुषे । वि । अञ्जते । वक्षःऽसु । रुक्मान् । अधि । येतिरे । शुभे । अंसेषु । एषाम् । नि । मिमृक्षुः । ऋष्टयः । साकम् । जज्ञिरे । स्वधया । दिवः । नरः ॥४॥ ईशानऽकृतः । धुनयः । रिशादसः । वातान् । विऽद्युतः । तविषीभिः । अक्रत । दुहन्ति । ऊधः । दिव्यानि । धूतयः । भूमिम् । पिन्वन्ति । पयसा । परिऽज्रयः ॥५॥ पिन्वन्ति । अपः । मरुतः । सुऽदानवः । पयः । घृतऽवत् । विदथेषु । आऽभुवः । अत्यम् । न । मिहे । वि । नयन्ति । वाजिनम् । उत्सम् । दुहन्ति । स्तनयन्तम् । अक्षितम् ॥६॥ महिषासः । मायिनः । चित्रऽभा-

नवः । गिरयः । न । स्वऽतवसः । रघुऽस्यदः । मृगाःऽइव । हस्तिनः । खादथ । वना । यत् । आरुणीषु । तविषीः । अयुग्ध्वम् ॥७॥ सिंहाःऽइव । नानदति । प्रऽचेतसः । पिशाःऽइव । सुऽपिशः । विश्वऽवेदसः । क्षपः । जिन्वन्तः । पृषतीभिः । ऋष्टिऽभिः । सम् । इत् । सऽबाधः । शवसा । अहिंऽमन्यवः ॥८॥ रोदसी इति । आ । वदत । गणऽश्रियः । नृऽसाचः । शूराः । शवसा । अहिंऽमन्यवः । आ । वन्धुरेषु । अमतिः । न । दर्शता । विऽद्युत् । न । तस्थौ । मरुतः । रथेषु । वः॥९॥ विश्वऽवेदसः। रयिऽभिः । सम्ऽओकसः । सम्ऽमिश्लासः । तविषीभिः । विऽरप्शिनः । अस्तारः । इषुम् । दधिरे । गभस्त्योः । अनन्तऽशुष्माः । वृषऽखादयः । नरः ॥१०॥ हिरण्ययेभिः । पविऽभिः । पयःऽवृधः । उत् । जिघ्नन्ते । आऽपथ्यः । न । पर्वतान् । मखाः । अयासः । स्वऽसृतः । ध्रुवऽच्युतः। दुध्रऽकृतः । मरुतः । भ्राजत्ऽऋष्टयः ॥११॥ घृषुम् । पावकम् । वनिनम् । विऽचर्षणिम् । रुद्रस्य । सूनुम् । हवसा । गृणीमसि । रजःऽतुरम् । तवसम् । मारुतम् । गणम् । ऋजीषिणम् । वृषणम् । सश्चत । श्रिये॥१२॥ प्र । नु । सः । मर्तः । शवसा । जनान् । अति । तस्थौ । वः । ऊती । मरुतः । यम् । आवत । अर्वत्ऽभिः । वाजम् । भरते । धना । नृऽभिः। आऽपृच्छ्यम् । क्रतुम् । आ । क्षेति । पुष्यति॥१३॥ चर्कृत्यम्। मरुतः। पृत्ऽसु । दुस्तरम् । द्युऽमन्तम् । शुष्मम् । मघवत्ऽसु । धत्तन । धनऽस्पृतम् । उक्थ्यम् । विश्वऽचर्षणिम् । तोकम् । पुष्येम । तनयम् । शतम्। हिमाः ॥१४॥ नु । स्थिरम् । मरुतः । वीरऽवन्तम् । ऋतिऽसहम् । रयिम् । अस्मासु । धत्त । सहस्रिणम् । शतिनम् । शूशुऽवांसम् । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ १५ ॥

## I. 65.

पश्वा । न । तायुम् । गुहा । चतन्तम् । नमः । युजानम् । नमः । वहन्तम् । सऽजोषाः । धीराः । पदैः । अनु । ग्मन् । उप । त्वा । सीदन् । विश्वे । यजत्राः ॥१॥२॥ ऋतस्य । देवाः । अनु । व्रता । गुः । भुवत् । परिष्टिः । द्यौः । न । भूम । वर्धन्ति । ईम् । आपः । पन्वा । सुऽशिश्विम् । ऋतस्य । योना । गर्भे । सुऽजातम् ॥३॥४॥ पुष्टिः । न । रण्वा । क्षितिः । न । पृथ्वी । गिरिः । न । भुज्म । क्षोदः । न । शम्ऽभु । अत्यः । न । अज्मन् । सर्गऽप्रतक्तः । सिन्धुः । न । क्षोदः । कः । ईम् । वराते ॥५॥६॥ जामिः । सिन्धूनाम् । भ्राताऽइव । स्वस्राम् । इभ्यान् । न । राजा । वनानि । अत्ति । यत् । वातऽजूतः । वना । वि । अस्थात् । अग्निः । ह । दाति । रोम । पृथिव्याः ॥७॥८॥ श्वसिति । अप्ऽसु । हंसः । न । सीदन् । क्रत्वा । चेतिष्ठः । विशाम् । उषःऽभुत् । सोमः । न । वेधाः । ऋतऽप्रजातः । पशुः । न । शिश्वा । विऽभुः । दूरेऽभाः ॥९॥१०॥

## I. 66.

रयिः । न । चित्रा । सूरः । न । सम्ऽदृक् । आयुः । न । प्राणः । नित्यः । न । सूनुः । तक्वा । न । भूर्णिः । वना । सिसक्ति । पयः । न । धेनुः । शुचिः । विभाऽवा ॥१॥२॥ दाधार । क्षेमम् । ओकः । न । रण्वः । यवः । न । पक्वः । जेता । जनानाम् । ऋषिः । न । स्तुभ्वा । विक्षु । प्रऽशस्तः । वाजी । न । प्रीतः । वयः । दधाति ॥३॥४॥ दुरोकऽशोचिः । क्रतुः । न । नित्यः । जायाऽइव । योनौ । अरम् । विश्वस्मै । चित्रः । यत् । अभ्राट् । श्वेतः । न । विक्षु । रथः । न । रुक्मी ।

त्वेषः । समत्ऽसु ॥५॥६॥ सेनाऽइव । सृष्टा । अमम् । दधाति । अस्तुः । न । दिद्युत् । त्वेषऽप्रतीका । यमः । ह । जातः । यमः । जनिऽत्वम् । जारः । कनीनाम् । पतिः । जनीनाम् ॥७॥८॥ तम् । वः । चराथा । वयम् । वसत्या । अस्तम् । न । गावः । नक्षन्ते । इद्धम् । सिन्धुः । न । क्षोदः । प्र । नीचीः । ऐनोत् । नवन्त । गावः । स्वः । दृशीके ॥९॥१०॥

I. 67.

वनेषु । जायुः । मर्तेषु । मित्रः । वृणीते । श्रुष्टिम् । राजाऽइव । अजुर्यम् । क्षेमः । न । साधुः । क्रतुः । न । भद्रः । भुवत् । सुऽआधीः । होता । हव्यऽवाट् ॥१॥२॥ हस्ते । दधानः । नृम्णा । विश्वानि । अमे । देवान् । धात् । गुहा । निऽसीदन् । विदन्ति । ईम् । अत्र । नरः । धियम्ऽधाः । हृदा । यत् । तष्टान् । मन्त्रान् । अशंसन् ॥३॥४॥ अजः । न । क्षाम् । दाधार । पृथिवीम् । तस्तम्भ । द्याम् । मन्त्रेभिः । सत्यैः । प्रिया । पदानि । पश्वः । नि । पाहि । विश्वऽआयुः । अग्ने । गुहा । गुहम् । गाः ॥५॥६॥ यः । ईम् । चिकेत । गुहा । भवन्तम् । आ । यः । ससाद । धाराम् । ऋतस्य । वि । ये । चृतन्ति । ऋता । सपन्तः । आत् । इत् । वसूनि । प्र । ववाच । अस्मै ॥७॥८॥ वि । यः । वीरुत्ऽसु । रोधत् । महिऽत्वा । उत । प्रऽजाः । उत । प्रऽसूषु । अन्तरिति । चित्तिः । अपाम् । दमे । विश्वऽआयुः । सद्मऽइव । धीराः । सम्ऽमाय । चक्रुः ॥९॥१०॥

I. 68.

श्रीणन् । उप । स्थात् । दिवम् । भुरण्युः । स्थातुः । चरथम् । अक्तून् । वि । ऊर्णोत् । परि । यत् । एषाम् । एकः । विश्वेषाम् ।

भुवत् । देवः । देवानाम् । महिऽत्वा ॥१॥२॥ आत् । इत् । ते । विश्वे ।
क्रतुम् । जुषन्त । शुष्कात् । यत् । देव । जीवः । जनिष्ठाः । भजन्त ।
विश्वे । देवऽत्वम् । नाम । ऋतम् । सपन्तः । अमृतम् । एवैः ॥३॥४॥
ऋतस्य । प्रेषाः । ऋतस्य । धीतिः । विश्वऽआयुः । विश्वे । अपांसि ।
चक्रुः । यः । तुभ्यम् । दाशात् । यः । वा । ते । शिक्षात् । तस्मै ।
चिकित्वान् । रयिम् । दयस्व ॥५॥६॥ होता । निऽसत्तः । मनोः ।
अपत्ये । सः । चित् । नु । आसाम् । पतिः । रयीणाम् । इच्छन्त ।
रेतः । मिथः । तनूषु । सम् । जानत । स्वैः । दक्षैः । अमूराः ॥७॥८॥
पितुः । न । पुत्राः । क्रतुम् । जुषन्त । श्रोषन् । ये अस्य । शासम् ।
तुरासः । वि । रायः । और्णोत् । दुरः । पुरुऽक्षुः । पिपेश । नाकम् ।
स्तृऽभिः । दमूनाः ॥९॥१०॥

## I. 69.

शुक्रः । शुशुक्वान् । उषः । न । जारः । पप्रा । समीची इति सम्ऽ-
ईची । दिवः । न । ज्योतिः । परि । प्रऽजातः । क्रत्वा । बभूथ । भुवः ।
देवानाम् । पिता । पुत्रः । सन् ॥१॥२॥ वेधाः । अदृप्तः । अग्निः । विऽ-
जानन् । ऊधः । न । गोनाम् । स्वाद्म । पितूनाम् । जने । न । शेवः ।
आऽहूर्यः । सन् । मध्ये । निऽसत्तः । रण्वः । दुरोणे ॥३॥४॥
पुत्रः । न । जातः । रण्वः । दुरोणे । वाजी । न प्रीतः । विशः । वि । ता-
रीत् । विशः । यत् । अह्वे । नृऽभिः । सऽनीळाः । अग्निः । देवऽत्वा ।
विश्वानि । अश्याः ॥५॥६॥ नकिः । ते । एता । व्रता । मिनन्ति । नृऽ-
भ्यः । यत् । एभ्यः । श्रुष्टिम् । चकर्थ । तत् । तु । ते । दंसः । यत् । अहन् ।
समानैः । नृऽभिः । यत् । युक्तः । विवेः । रपांसि ॥७॥८॥ उषः । न ।

जारः । विभाऽवा । उस्रः । संज्ञातऽरूपः । चिकेतत् । अस्मै । त्मना । वहन्तः । दुरः । वि । ऋण्वन् । नवन्त । विश्वे । स्वः । दृशीके ॥९॥१०॥

I. 70.

वनेम । पूर्वीः । अर्यः । मनीषा । अग्निः । सुऽशोकः । विश्वानि । अश्याः । आ । दैव्यानि । व्रता । चिकित्वान् । आ । मानुषस्य । जनस्य । जन्म ॥१॥२॥ गर्भः । यः । अपाम् । गर्भः । वनानाम् । गर्भः । च । स्थाताम् । गर्भः । चरथाम् । अद्रौ । चित् । अस्मै । अन्तः । दुरोणे । विशाम् । न । विश्वः । अमृतः । सुऽआधीः ॥३॥४॥ सः । हि । क्षपाऽवान् । अग्निः । रयीणाम् । दाशत् । यः । अस्मै । अरम् । सुऽउक्तैः । एता । चिकित्वः । भूम । नि । पाहि । देवानाम् । जन्म । मर्तान् । च । विद्वान् ॥५॥६॥ वर्धान् । यम् । पूर्वीः । क्षपः । विऽरूपाः । स्थातुः । च । रथम् । ऋतऽप्रवीतम् । अराधि । होता । स्वः । निऽसत्तः । कृण्वन् । विश्वानि । अपांसि । सत्या ॥७॥८॥ गोषु । प्रऽशस्तिम् । वनेषु । धिषे । भरन्त । विश्वे । बलिम् । स्वः । नः । वि । त्वा । नरः । पुरुऽत्रा । सपर्यन् । पितुः । न । जिव्रेः । वि । वेदः । भरन्त ॥९॥१०॥ साधुः । न । गृध्नुः । अस्ताऽइव । शूरः । याताऽइव । भीमः । त्वेषः । समत्ऽसु ॥११॥

I. 71.

उप । प्र । जिन्वन् । उशतीः । उशन्तम् । पतिम् । न । नित्यम् । जनयः । सऽनीळाः । स्वसारः । श्यावीम् । अरुषीम् । अजुषन् । चित्रम् । उच्छन्तीम् । उषसम् । न । गावः ॥१॥वीळु । चित् । दृळ्हा । पितरः । नः । उक्थैः । अद्रिम् । रुजन् । अङ्गिरसः । रवेण । चक्रुः । दिवः ।

बृहतः । गातुम् । अस्मे इति । अहरिति । स्वः । विविदुः । केतुम् । उस्राः ॥२॥ दधन् । ऋतम् । धनयन् । अस्य । धीतिम् । आत् । इत् । अर्यः । दिधिष्वः । विऽभृत्राः । अतृष्यन्तीः । अपसः । यन्ति । अच्छ । देवान् । जन्म । प्रयसा । वर्धयन्तीः ॥३॥ मथीत् । यत् । ईम् । विऽभृतः । मातरिश्वा । गृहेऽगृहे । श्येतः । जेन्यः । भूत् । आत् । ईम् । राज्ञे । न । सहीयसे । सचा । सन् । आ । दूत्यम् । भृगवाणः । विवाय ॥४॥ महे । यत् । पित्रे । ईम् । रसम् । दिवे । करिति कः । अव । त्सरत् । पृशन्यः । चिकित्वान् । सृजत् । अस्ता । धृषता । दिद्युम् । अस्मै । स्वायाम् । देवः । दुहितरि । त्विषिम् । धात् ॥५॥ स्वे । आ । यः । तुभ्यम् । दमे । आ । विऽभाति । नमः । वा । दाशात् । उशतः । अनु । द्यून् । वर्धो इति । अग्ने । वयः । अस्य । द्विऽबर्हाः । यासत् । राया । सऽरथम् । यम् । जुनासि ॥६॥ अग्निम् । विश्वाः । अभि । पृक्षः । सचन्ते । समुद्रम् । न । स्रवतः । सप्त । यह्वीः । न । जामिऽभिः । वि । चिकिते । वयः । नः । विदाः । देवेषु । प्रऽमतिम् । चिकित्वान् ॥७॥ आ । यत् । इषे । नृऽपतिम् । तेजः । आनट् । शुचि । रेतः । निऽसिक्तम् । द्यौः । अभीके । अग्निः । शर्धम् । अनवद्यम् । युवानम् । सुऽआध्यम् । जनयत् । सूदयत् । च ॥८॥ मनः । न । यः । अध्वनः । सद्यः । एति । एकः । सत्रा । सूरः । वस्वः । ईशे । राजाना । मित्रावरुणा । सुपाणी इति सुऽपाणी । गोषु । प्रियम् । अमृतम् । रक्षमाणा ॥९॥ मा । नः । अग्ने । सख्या । पित्र्याणि । प्र । मर्षिष्ठाः । अभि । विदुः । कविः । सन् । नभः । न । रूपम् । जरिमा । मिनाति । पुरा । तस्याः । अभिऽशस्तेः । अधि । इहि ॥१०॥

I. 72.

नि । काव्या । वेधसः । शश्वतः । कः । हस्ते । दधानः । नर्या । पुरूणि । अग्निः । भुवत् । रयिऽपतिः । रयीणाम् । सत्रा । चक्राणः । अमृतानि । विश्वा ॥१॥ अस्मे इति । वत्सम् । परि । सन्तम् । न । विन्दन् । इच्छन्तः । विश्वे । अमृताः । अमूराः । श्रमऽयुवः । पदऽव्यः । धियम्ऽधाः । तस्थुः । पदे । परमे । चारु । अग्नेः ॥२॥ तिस्रः । यत् । अग्ने । शरदः । त्वाम् । इत् । शुचिम् । घृतेन । शुचयः । सपर्यान् । नामानि । चित् । दधिरे । यज्ञियानि । असूदयन्त । तन्वः । सुऽजाताः ॥३॥ आ । रोदसी इति । बृहती इति । वेविदानाः । प्र । रुद्रिया । जभ्रिरे । यज्ञियासः । विदत् । मर्तः । नेमऽधिता । चिकित्वान् । अग्निम् । पदे । परमे । तस्थिऽवांसम् ॥४॥ सम्ऽजानानाः । उप । सीदन् । अभिऽज्ञु । पत्नीऽवन्तः । नमस्यम् । नमस्यन्निति नमस्यन् । रिरिक्वांसः । तन्वः । कृण्वत । स्वाः । सखा । सख्युः । निऽमिषि । रक्षमाणाः ॥५॥ त्रिः । सप्त । यत् । गुह्यानि । त्वे इति । इत् । पदा । अविदन् । निऽहिता । यज्ञियासः । तेभिः । रक्षन्ते । अमृतम् । सऽजोषाः । पशून् । च । स्थातॄन् । चरथम् । च । पाहि ॥६॥ विद्वान् । अग्ने । वयुनानि । क्षितीनाम् । वि । आनुषक् । शुरुधः । जीवसे । धाः । अन्तःऽविद्वान् । अध्वनः । देवऽयानान् । अतन्द्रः । दूतः । अभवः । हविःऽवाट् ॥७॥ सुऽआध्यः । दिवः । आ । सप्त । यह्वीः । रायः । दुरः । वि । ऋतऽज्ञाः । अजानन् । विदत् । गव्यम् । सरमा । दृळ्हम् । ऊर्वम् । येन । नु । कम् । मानुषी । भोजते । विट् ॥८॥ आ । ये । विश्वा । सुऽअपत्यानि । तस्थुः । कृण्वानासः । अमृतऽत्वाय । गातुम् । मह्ना । महत्ऽभिः । पृथिवी । वि । तस्थे । माता ।

पुत्रैः । अदितिः । धार्यसे । वेरिति वेः ॥९॥ अधि । श्रियम् । नि । दधुः । चारुम् । अस्मिन् । दिवः । यत् । अक्षी इति । अमृताः । अकृण्वन् । अध । क्षरन्ति । सिन्धवः । न । सृष्टाः । प्र । नीचीः । अग्ने । अरुषीः । अजानन् ॥१०॥

I. 73.

रयिः । न । यः । पितृऽवित्तः । वयःऽधाः । सुऽप्रनीतिः । चिकितुषः । न । शासुः । स्योनऽशीः । अतिथिः । न प्रीणानः । होताऽइव । सद्म । विधतः । वि । तारीत् ॥१॥ देवः । न । यः । सविता । सत्यऽमन्मा । क्रत्वा । निऽपाति । वृजनानि । विश्वा । पुरुऽप्रशस्तः । अमतिः । न । सत्यः । आत्माऽइव । शेवः । दिधिषाय्यः । भूत् ॥२॥ देवः । न । यः । पृथिवीम् । विश्वऽधायाः । उपऽक्षेति । हितऽमित्रः । न । राजा । पुरःऽसदः । शर्मऽसदः । न । वीराः । अनवद्या । पतिजुष्टाऽइव । नारी ॥३॥ तम् । त्वा । नरः । दमे । आ । नित्यम् । इद्धम् । अग्ने । सचन्त । क्षितिषु । ध्रुवासु । अधि । द्युम्नम् । नि । दधुः । भूरि । अस्मिन् । भव । विश्वऽआयुः । धरुणः । रयीणाम् ॥४॥ वि । पृक्षः । अग्ने । मघऽवानः । अश्युः । वि । सूरयः । ददतः । विश्वम् । आयुः । सनेम । वाजम् । समूऽइथेषु । अर्यः । भागम् । देवेषु । श्रवसे । दधानाः ॥५॥ ऋतस्य । हि । धेनवः । वावशानाः । स्मत्ऽऊध्नीः । पीपयन्त । द्युऽभक्ताः । पराऽवतः । सुऽमतिम् । भिक्षमाणाः । वि । सिन्धवः । समया । सस्रुः । अद्रिम् ॥६॥ त्वे इति । अग्ने । सुऽमतिम् । भिक्षमाणाः । दिवि । श्रवः । दधिरे । यज्ञियासः । नक्ता । च । चक्रुः । उषसा । विरूपे इति विऽरूपे । कृष्णम् । च । वर्णम् । अरुणम् । च । सम् । धुरिति धुः ॥७॥ यान् । राये ।

मर्तान् । सुऽहृदः । अग्ने । ते । स्याम । मघऽवानः । वयम् । च । छायाऽइव । विश्वम् । भुवनम् । सिसक्षि । आपप्रिऽवान् । रोदसी इति । अन्तरिक्षम् ॥८॥ अर्वत्ऽभिः । अग्ने । अर्वतः । नृऽभिः । नृन् । वीरैः । वीरान् । वनुयाम । त्वाऽऊताः । ईशानासः । पितृऽवित्तस्य । रायः । वि । सूरयः । शतऽहिमाः । नः । अश्युः ॥९॥ एता । ते । अग्ने । उचथानि । वेधः । जुष्टानि । सन्तु । मनसे । हृदे । च । शकेम । रायः । सुऽधुरः । यमम् । ते । अधि । श्रवः । देवऽभक्तम् । दधानाः ॥१०॥

I. 74.

उपऽप्रयन्तः । अध्वरम् । मन्त्रम् । वोचेम । अग्नये । आरे । अस्मे इति । च । शृण्वते ॥१॥ यः । स्नीहितीषु । पूर्व्यः । सम्ऽजग्मानासु । कृष्टिषु । अरक्षत् । दाशुषे । गयम् ॥२॥ उत । ब्रुवन्तु । जन्तवः । उत् । अग्निः । वृत्रऽहा । अजनि । धनम्ऽजयः । रणेऽरणे ॥३॥ यस्य । दूतः । असि । क्षये । वेषि । हव्यानि । वीतये । दस्मत् । कृणोषि । अध्वरम् ॥४॥ तम् । इत् । सुऽहव्यम् । अङ्गिरः । सुऽदेवम् । सहसः । यहो इति । जनाः । आहुः । सुऽबर्हिषम् ॥५॥ आ । च । वहासि । तान् । इह । देवान् । उप । प्रऽशस्तये । हव्या । सुऽचन्द्र । वीतये ॥६॥ न । योः । उपब्दिः । अश्व्यः । शृण्वे । रथस्य । कत् । चन । यत् । अग्ने । यासि । दूत्यम् ॥७॥ त्वाऽऊतः वाजी । अह्रयः । अभि । पूर्वस्मात् । अपरः । प्र । दाश्वान् । अग्ने । अस्थात् ॥८॥ उत । द्युऽमत् । सुऽवीर्यम् । बृहत् । अग्ने । विवाससि । देवेभ्यः । देव । दाशुषे ॥९॥

I. 75.

जुषस्व । सप्रथःऽतमम् । वचः । देवप्सरःऽतमम् । हव्या । जुह्वानः ।

आसनि ॥१॥ अध । ते । अङ्गिरःऽतम । अग्ने । वेधःऽतम । प्रियम् । वोचेम । ब्रह्म । सानसि ॥२॥ कः । ते । जामिः । जनानाम् । अग्ने । कः । दाशुऽअध्वरः । कः । ह । कस्मिन् । असि । श्रितः ॥३॥ त्वम् । जामिः । जनानाम् । अग्ने । मित्रः । असि । प्रियः । सखा । सखिऽभ्यः । ईड्यः ॥४॥ यज । नः । मित्रावरुणा । यज । देवान् । ऋतम् । बृहत् । अग्ने । यक्षि । स्वम् । दमम् ॥५॥

I. 76.

का । ते । उपऽइतिः । मनसः । वराय । भुवत् । अग्ने । शम्ऽतमा । का । मनीषा । कः । वा । यज्ञैः । परि । दक्षम् । ते । आप । केन । वा । ते । मनसा । दाशेम ॥१॥ आ । इहि । अग्ने । इह । होता । नि । सीद । अदब्धः । सु । पुरःऽएता । भव । नः । अवताम् । त्वा । रोदसी इति । विश्वमिन्वे इति विश्वम्ऽइन्वे । यज । महे । सौमनसाय । देवान् ॥२॥ प्र । सु । विश्वान् । रक्षसः । धक्षि । अग्ने । भव । यज्ञानाम् । अभिशस्तिऽपावा । अथ । आ । वह । सोमऽपतिम् । हरिऽभ्याम् । आतिथ्यम् । अस्मै । चकृम । सुऽदाव्ने ॥३॥ प्रजाऽवता । वचसा । वह्निः । आसा । आ । च । हुवे । नि । च । सत्सि । इह । देवैः । वेषि । होत्रम् । उत । पोत्रम् । यजत्र । बोधि । प्रऽयन्तः । जनितः । वसूनाम् ॥४॥ यथा । विप्रस्य । मनुषः । हविःऽभिः । देवान् । अयजः । कविऽभिः । कविः । सन् । एव । होतरिति । सत्यऽतर । त्वम् । अद्य । अग्ने । मन्द्रया । जुह्वा । यजस्व ॥५॥

I. 77.

कथा । दाशेम । अग्नये । का । अस्मै । देवऽजुष्टा । उच्यते ।

भामिनें । गीः । यः । मर्त्येषु । अमृतः । ऋतऽवा । होता । यजिष्ठः । इत् । कृणोति । देवान् ॥१॥ यः । अध्वरेषु । शम्ऽतमः । ऋतऽवा । होता । तम् । ऊँ इति । नमःऽभिः । आ । कृणुध्वम् । अग्निः । यत् । वेः । मर्ताय । देवान् । सः । च । बोधाति । मनसा । यजाति ॥२॥ सः । हि । क्रतुः । सः । मर्यः । सः । साधुः । मित्रः । न । भूत् । अद्भुतस्य । रथीः । तम् । मेधेषु । प्रथमम् । देवऽयन्तीः । विशः । उप । ब्रुवते । दस्मम् । आरीः ॥३॥ सः । नः । नृणाम् । नृऽतमः । रिशादाः । अग्निः । गिरः । अवसा । वेतु । धीतिम् । तना । च । ये । मघऽवानः । शविष्ठाः । वाजऽप्रसूताः । इषयन्त । मन्म ॥४॥ एव । अग्निः । गोतमेभिः । ऋतऽवा । विप्रेभिः । अस्तोष्ट । जातऽवेदाः । सः । एषु । द्युम्नम् । पीपयत् । सः । वाजम् । सः । पुष्टिम् । याति । जोषम् । आ । चिकित्वान् ॥५॥

I. 78.

अभि । त्वा । गोतमाः । गिरा । जातऽवेदः । विऽचर्षणे । द्युम्नैः । अभि । प्र । नोनुमः ॥१॥ तम् । ऊँ इति । त्वा । गोतमः । गिरा । रायःऽकामः । दुवस्यति । द्युम्नैः । अभि । प्र । नोनुमः ॥२॥ तम् । ऊँ इति । त्वा । वाजऽसातमम् । अङ्गिरस्वत् । हवामहे । द्युम्नैः । अभि । प्र । नोनुमः ॥३॥ तम् । ऊँ इति । त्वा । वृत्रहन्ऽतमम् । यः । दस्यून् । अवऽधूनुषे । द्युम्नैः । अभि । प्र । नोनुमः ॥४॥ अवोचाम । रहूगणाः । अग्नये । मधुऽमत् । वचः । द्युम्नैः । अभि । प्र । नोनुमः ॥५॥

I. 79.

हिरण्यऽकेशः । रजसः । विऽसारे । अहिः । धुनिः । वातःऽइव ।

ध्रजीमान् । शुचिऽभ्राजाः । उषसः । नवेदाः । यशस्वतीः । अपस्युवः । न । सत्याः ॥१॥ आ । ते । सुऽपर्णाः । अमिनन्त । एवैः । कृष्णः । नोनाव । वृषभः । यदि । इदम् । शिवाभिः । न । स्मयमानाभिः । आ । अगात् । पतन्ति । मिहः । स्तनयन्ति । अभ्रा ॥२॥ यत् । ईम् । ऋतस्य । पयसा । पियानः । नयन् । ऋतस्य । पथिऽभिः । रजिष्ठैः । अर्यमा । मित्रः । वरुणः । परिऽज्मा । त्वचम् । पृञ्चन्ति । उपरस्य । योनौ ॥३॥ अग्ने । वाजस्य । गोऽमतः । ईशानः । सहसः । यहो इति । अस्मे इति । धेहि । जातऽवेदः । महि । श्रवः ॥४॥ सः । इधानः । वसुः । कविः । अग्निः । ईळेन्यः । गिरा । रेवत् । अस्मभ्यम् । पुरुऽअनीक । दीदिहि ॥५॥ क्षपः । राजन् । उत । त्मना । अग्ने । वस्तोः । उत । उषसः । सः । तिग्मऽजम्भ । रक्षसः । दह । प्रति ॥६॥ अव । नः । अग्ने । ऊतिऽभिः । गायत्रस्य । प्रऽभर्मणि । विश्वासु । धीषु । वन्द्य ॥७॥ आ । नः । अग्ने । रयिम् । भर । सत्राऽसहम् । वरेण्यम् । विश्वासु । पृत्ऽसु । दुस्तरम् ॥८॥ आ । नः । अग्ने । सुऽचेतुना । रयिम् । विश्वायुऽपोषसम् । मार्डीकम् । धेहि । जीवसे ॥९॥ प्र । पूताः । तिग्मऽशोचिषे । वाचः । गोतम । अग्नये । भरस्व । सुम्नऽयुः । गिरः ॥१०॥ यः । नः । अग्ने । अभिऽदासति । अन्ति । दूरे । पदीष्ट । सः । अस्माकम् । इत् । वृधे । भव ॥११॥ सहस्रऽअक्षः । विऽचर्षणिः । अग्निः । रक्षांसि । सेधति । होता । गृणीते । उक्थ्यः ॥१२॥

I. 80.

इत्था । हि । सोमे । इत् । मदे । ब्रह्मा । चकार । वर्धनम् । शविष्ठ । वज्रिन् । ओजसा । पृथिव्याः । निः । शशाः । अहिम् । अर्चन् । अनु ।

स्वऽराज्यम् ॥१॥ सः । त्वा । अमदत् । वृषा । मदः । सोमः । श्येनऽआभृतः । सुतः । येन । वृत्रम् । निः । अत्ऽभ्यः । जघन्थ । वज्रिन् । ओजसा । अर्चन् । अनु । स्वऽराज्यम् ॥२॥ प्र । इहि । अभि । इहि । धृष्णुहि । न । ते । वज्रः । निः । यंसते । इन्द्र । नृम्णम् । हि । ते । शवः । हनः । वृत्रम् । जयाः । अपः । अर्चन् । अनु । स्वऽराज्यम् ॥३॥ निः । इन्द्र । भूम्याः । अधि । वृत्रम् । जघन्थ । निः । दिवः । सृज । मरुत्वतीः । अव । जीवऽधन्याः । इमाः । अपः । अर्चन् । अनु । स्वऽराज्यम् ॥४॥ इन्द्रः । वृत्रस्य । दोधतः । सानुम् । वज्रेण । हीळितः । अभिऽक्रम्य । अव । जिघ्नते । अपः । सर्माय । चोदयन् । अर्चन् । अनु । स्वऽराज्यम् ॥५॥ अधि । सानौ । नि । जिघ्नते । वज्रेण । शतऽपर्वणा । मन्दानः । इन्द्रः । अन्धसः । सखिऽभ्यः । गातुम् । इच्छति । अर्चन् । अनु । स्वऽराज्यम् ॥६॥ इन्द्र । तुभ्यम् । इत् । अद्रिऽवः । अनुत्तम् । वज्रिन् । वीर्यम् । यत् । ह । त्यम् । मायिनम् । मृगम् । तम् । ऊँ इति । त्वम् । मायया । अवधीः । अर्चन् । अनु । स्वऽराज्यम् ॥७॥ वि । ते । वज्रासः । अस्थिरन् । नवतिम् । नाव्याः । अनु । महत् । ते । इन्द्र । वीर्यम् । बाह्वोः । ते । बलम् । हितम् । अर्चन् । अनु । स्वऽराज्यम् ॥८॥ सहस्रम् । साकम् । अर्चत । परि । स्तोभत । विंशतिः । शता । एनम् । अनु । अनोनवुः । इन्द्राय । ब्रह्म । उत्ऽयतम् । अर्चन् । अनु । स्वऽराज्यम् ॥९॥ इन्द्रः । वृत्रस्य । तविषीम् । निः । अहन् । सहसा । सहः । महत् । तत् । अस्य । पौंस्यम् । वृत्रम् । जघन्वान् । असृजत् । अर्चन् । अनु । स्वऽराज्यम् ॥१०॥ इमे इति । चित् । तव । मन्यवे । वेपेते इति । भियसा । मही इति । यत् । इन्द्र । वज्रिन् । ओजसा । वृत्रम् । मरुत्वान् । अवधीः । अर्चन् । अनु । स्वऽरा-

ज्यम् ॥११॥ न । वेपसा । न । तन्यता । इन्द्रम् । वृत्रः । वि । बीभयत् । अभि । एनम् । वज्रः । आयसः । सहस्रऽभृष्टिः । आयत । अर्चन् । अनु । स्वऽराज्यम् ॥१२॥ यत् । वृत्रम् । तव । च । अशनिम् । वज्रेण । समऽअयोधयः । अहिम् । इन्द्र । जिघांसतः । दिवि । ते । बद्बधे । शवः । अर्चन् । अनु । स्वऽराज्यम् ॥१३॥ अभिऽस्तने । ते । अद्रिऽवः । यत् । स्थाः । जगत् । च । रेजते । त्वष्टा । चित् । तव । मन्यवे । इन्द्र । वेविज्यते । भिया । अर्चन् । अनु । स्वऽराज्यम् ॥१४॥ नहि । नु । यात् । अधिऽइमसि । इन्द्रम् । कः । वीर्या । परः । तस्मिन् । नृम्णम् । उत । क्रतुम् । देवाः । ओजांसि । सम् । दधुः । अर्चन् । अनु । स्वऽराज्यम् ॥१५॥ याम् । अथर्वा । मनुः । पिता । दध्यङ् । धियम् । अत्नत । तस्मिन् । ब्रह्माणि । पूर्वऽथा । इन्द्रे । उक्था । सम् । अग्मत । अर्चन् । अनु । स्वऽराज्यम् ॥१६॥

I. 81.

इन्द्रः । मदाय । ववृधे । शवसे । वृत्रऽहा । नृऽभिः । तम् । इत् । महत्ऽसु । आजिषु । उत । ईम् । अर्भे । हवामहे । सः । वाजेषु । प्र । नः । अविषत् ॥१॥ असि । हि । वीर । सेन्यः । असि । भूरि । पराऽददिः । असि । दभ्रस्य । चित् । वृधः । यजमानाय । शिक्षसि । सुन्वते । भूरि । ते । वसु ॥२॥ यत् । उत्ऽईरते । आजयः । धृष्णवे । धीयते । धना । युक्ष्व । मदऽच्युता । हरी इति । कम् । हनः । कम् । वसौ । दधः । अस्मान् । इन्द्र । वसौ । दधः ॥३॥ क्रत्वा । महान् । अनुऽस्वधम् । भीमः । आ । ववृधे । शवः । श्रिये । ऋष्वः । उपाकयोः । नि । शिप्री । हरिऽवान् । दधे । हस्तयोः । वज्रम् । आयसम् ॥४॥ आ । पप्रौ । पार्थिवम् । रजः ।

वव्रुधे । रोचना । दिवि । न । त्वाऽवान् । इन्द्र । कः । चन । न । जातः । न । जनिष्यते । अति । विश्वम् । ववक्षिथ ॥५॥ यः । अर्यः । मर्तऽभोजनम् । पराऽददाति । दाशुषे । इन्द्रः । अस्मभ्यम् । शिक्षतु । वि । भज । भूरि । ते । वसु । भक्षीय । तव । राधसः ॥६॥ मदेऽमदे । हि । नः । ददिः । यूथा । गवाम् । ऋजुऽक्रतुः । सम् । गृभाय । पुरु । शता । उभयाहस्त्या । वसु । शिशीहि । रायः । आ । भर ॥७॥ मादयस्व । सुते । सचा । शवसे । शूर । राधसे । विद्म । हि । त्वा । पुरुऽवसुम् । उप । कामान् । ससृज्महे । अथ । नः । अविता । भव ॥८॥ एते । ते । इन्द्र । जन्तवः । विश्वम् । पुष्यन्ति । वार्यम् । अन्तः । हि । ख्यः । जनानाम् । अर्यः । वेदः । अदाशुषाम् । तेषाम् । नः । वेदः । आ । भर ॥९॥

I. 82.

उपो इति । सु । शृणुहि । गिरः । मघऽवन् । मा । अतथाःऽइव । यदा । नः । सूनृताऽवतः । करः । आत् । अर्थयासे । इत् । योज । नु । इन्द्र । ते । हरी इति ॥१॥ अक्षन् । अमीमदन्त । हि । अव । प्रियाः । अधूषत । अस्तोषत । स्वऽभानवः । विप्राः । नविष्ठया । मती । योज । नु । इन्द्र । ते । हरी इति ॥२॥ सुऽसंदृशम् । त्वा । वयम् । मघऽवन् । वन्दिषीमहि । प्र । नूनम् । पूर्णऽवन्धुरः । स्तुतः । याहि । वशान् । अनु । योज । नु । इन्द्र । ते । हरी इति ॥३॥ सः । घ । तम् । वृषणम् । रथम् । अधि । तिष्ठाति । गोऽविदम् । यः । पात्रम् । हारिऽयोजनम् । पूर्णम् । इन्द्र । चिकेतति । योज । नु । इन्द्र । ते । हरी इति ॥४॥ युक्तः । ते । अस्तु । दक्षिणः । उत । सव्यः । शतक्रतो इति शतऽक्रतो । तेन । जायाम् । उप । प्रियाम् । मन्दानः ।

याहि । अन्धसः । योजे । नु । इन्द्र । ते । हरी इति ॥५॥ युनज्मि ।
ते । ब्रह्मणा । केशिना । हरी इति । उप । प्र । याहि । दधिषे ।
गभस्त्योः । उत् । त्वा । सुतासः । रभसाः । अमन्दिषुः । पूषण्ऽवान् ।
वज्रिन् । सम् । ऊँ इति । पत्न्या । अमदः ॥६॥

I. 83.

अश्वऽवति । प्रथमः । गोषु । गच्छति । सुप्रऽअवीः । इन्द्र ।
मर्त्यः । तव । ऊतिऽभिः । तम् । इत् । पृणक्षि । वसुना । भवीयसा ।
सिन्धुम् । आपः । यथा । अभितः । विऽचेतसः ॥१॥ आपः । न ।
देवीः । उप । यन्ति । होत्रियम् । अवः । पश्यन्ति । विऽततम् ।
यथा । रजः । प्राचैः । देवासः । प्र । नयन्ति । देवऽयुम् । ब्रह्म-
ऽप्रियम् । जोषयन्ते । वराःऽइव ॥२॥ अधि । द्वयोः । अदधाः ।
उक्थ्यम् । वचः । यतऽस्रुचा । मिथुना । या । सपर्यतः । असम्ऽयत्तः ।
व्रते । ते । क्षेति । पुष्यति । भद्रा । शक्तिः । यजमानाय । सुन्वते ॥३॥
आत् । अङ्गिराः । प्रथमम् । दधिरे । वयः । इद्धऽअग्नयः । शम्या ।
ये । सुऽकृत्यया । सर्वम् । पणेः । सम् । अविन्दन्त । भोजनम् । अश्व-
ऽवन्तम् । गोऽमन्तम् । आ । पशुम् । नरः ॥४॥ यज्ञैः । अथर्वा ।
प्रथमः । पथः । तते । ततः । सूर्यः । व्रतऽपाः । वेनः । आ ।
अजनि । आ । गाः । आजत् । उशना । काव्यः । सचा । यमस्य ।
जातम् । अमृतम् । यजामहे ॥५॥ बर्हिः । वा । यत् । सुऽअपत्याय ।
वृज्यते । अर्कः । वा । श्लोकम् । आऽघोषते । दिवि । ग्रावा ।
यत्र । वदति । कारुः । उक्थ्यः । तस्य । इत् । इन्द्रः । अभिऽपि-
त्वेषु । रण्यति ॥६॥

I. 84.

असावि । सोमः । इन्द्र । ते । शविष्ठ । धृष्णो इति । आ । गहि ।
आ । त्वा । पृणक्तु । इन्द्रियम् । रजः । सूर्यः । न । रश्मिऽभिः ॥१॥
इन्द्रम् । इत् । हरी इति । वहतः । अप्रतिधृष्टऽशवसम् । ऋषीणाम् ।
च । स्तुतीः । उप । यज्ञम् । च । मानुषाणाम् ॥२॥ आ । तिष्ठ ।
वृत्रऽहन् । रथम् । युक्ता । ते । ब्रह्मणा । हरी इति । अर्वाचीनम् । सु ।
ते । मनः । ग्रावा । कृणोतु । वग्नुना ॥३॥ इमम् । इन्द्र । सुतम् । पिब ।
ज्येष्ठम् । अमर्त्यम् । मदम् । शुक्रस्य । त्वा । अभि । अक्षरन् । धाराः ।
ऋतस्य । सदने ॥४॥ इन्द्राय । नूनम् । अर्चत । उक्थानि । च । ब्रवी-
तन । सुताः । अमत्सुः । इन्दवः । ज्येष्ठम् । नमस्यत । सहः ॥५॥ नकिः ।
त्वत् । रथिऽतरः । हरी इति । यत् । इन्द्र । यच्छसे । नकिः । त्वा ।
अनु । मज्मना । नकिः । सुऽअश्वः । आनशे ॥६॥ यः । एकः ।
इत् । विऽदयते । वसु । मर्ताय । दाशुषे । ईशानः । अप्रतिऽस्कुतः ।
इन्द्रः । अङ्ग ॥७॥ कदा । मर्तम् । अराधसम् । पदा । क्षुम्पम्ऽइव ।
स्फुरत् । कदा । नः । शुश्रवत् । गिरः । इन्द्रः । अङ्ग ॥८॥ यः ।
चित् । हि । त्वा । बहुऽभ्यः । आ । सुतऽवान् । आऽविवासति ।
उग्रम् । तत् । पत्यते । शवः । इन्द्रः । अङ्ग ॥९॥ स्वादोः । इत्था ।
विषुऽवतः । मध्वः । पिबन्ति । गौर्यः । याः । इन्द्रेण । सऽयावरीः ।
वृष्णा । मदन्ति । शोभसे । वस्वीः । अनु । स्वऽराज्यम् ॥१०॥
ताः । अस्य । पृशनऽयुवः । सोमम् । श्रीणन्ति । पृश्नयः । प्रियाः ।
इन्द्रस्य । धेनवः । वज्रम् । हिन्वन्ति । सायकम् । वस्वीः । अनु ।
स्वऽराज्यम् ॥११॥ ताः । अस्य । नमसा । सहः । सपर्यन्ति । प्रऽचेतसः ।

व्रतानि । अस्य । सश्चिरे । पुरूणि । पूर्वऽचित्तये । वस्वीः । अनु । स्वऽराज्यम् ॥१२॥ इन्द्रः । दधीचः । अस्थऽभिः । वृत्राणि । अप्रतिऽस्कुतः । जघान । नवतीः । नव ॥१३॥ इच्छन् । अश्वस्य । यत् । शिरः । पर्वतेषु । अपऽश्रितम् । तत् । विदत् । शर्यणाऽवति ॥१४॥ अत्र । अह । गोः । अमन्वत । नाम । त्वष्टुः । अपीच्यम् । इत्था । चन्द्रमसः । गृहे ॥१५॥ कः । अद्य । युङ्क्ते । धुरि । गाः । ऋतस्य । शिमीऽवतः । भामिनः । दुःऽहृणायून् । आसन्ऽइषून् । हृत्सुऽअसः । मयःऽभून् । यः । एषाम् । भृत्याम् । ऋणधत् । सः । जीवात् ॥१६॥ कः । ईषते । तुज्यते । कः । बिभाय । कः । मंसते । सन्तम् । इन्द्रम् । कः । अन्ति । कः । तोकाय । कः । इभाय । उत । राये । अधि । ब्रवत् । तन्वे । कः । जनाय ॥१७॥ कः । अग्निम् । ईट्टे । हविषा । घृतेन । स्रुचा । यजातै । ऋतुऽभिः । ध्रुवेभिः । कस्मै । देवाः । आ । वहान् । आशु । होम । कः । मंसते । वीतिऽहोत्रः । सुऽदेवः ॥१८॥ त्वम् । अङ्ग । प्र । शंसिषः । देवः । शविष्ठ । मर्त्यम् । न । त्वत् । अन्यः । मघऽवन् । अस्ति । मर्डिता । इन्द्र । ब्रवीमि । ते । वचः ॥१९॥ मा । ते । राधांसि । मा । ते । ऊतयः । वसो इति । अस्मान् । कदा । चन । दभन् । विश्वा । च । नः । उपऽमिमीहि । मानुष । वसूनि । चर्षणिऽभ्यः । आ ॥२०॥

I. 85.

प्र । ये । शुम्भन्ते । जनयः । न । सप्तयः । यामन् । रुद्रस्य । सूनवः । सुऽदंससः । रोदसी इति । हि । मरुतः । चक्रिरे । वृधे । मदन्ति । वीराः । विदथेषु । घृष्वयः ॥१॥ ते । उक्षितासः । महिमानम् । आशत ।

दिवि । रुद्रासः । अधि । चक्रिरे । सदः । अर्चन्तः । अर्कम् । जनय-
न्तः । इन्द्रियम् । अधि । श्रियः । दधिरे । पृश्निऽमातरः ॥२॥ गोऽ-
मातरः । यत् । शुभयन्ते । अञ्जिऽभिः । तनूषु । शुभ्राः । दधिरे । वि-
रुक्मतः । बाधन्ते । विश्वम् । अभिऽमातिनम् । अप । वर्त्मानि । एषाम् ।
अनु । रीयते । घृतम् ॥३॥ वि । ये । भ्राजन्ते । सुऽमखासः । ऋष्टिऽ-
भिः । प्रऽच्यवयन्तः । अच्युता । चित् । ओजसा । मनःऽजुवः । यत् ।
मरुतः । रथेषु । आ । वृषऽव्रातासः । पृषतीः । अयुग्ध्वम् ॥४॥ प्र ।
यत् । रथेषु । पृषतीः । अयुग्ध्वम् । वाजे । अद्रिम् । मरुतः । रंहयन्तः ।
उत । अरुषस्य । वि । स्यन्ति । धाराः । चर्मऽइव । उदऽभिः । वि ।
उन्दन्ति । भूम ॥५॥ आ । वः । वहन्तु । सप्तयः । रघुऽस्यदः । रघुऽ-
पत्वानः । प्र । जिगात । बाहुऽभिः । सीदत । आ । बर्हिः । उरु । वः ।
सदः । कृतम् । मादयध्वम् । मरुतः । मध्वः । अन्धसः ॥६॥ ते ।
अवर्धन्त । स्वऽतवसः । महिऽत्वना । आ । नाकम् । तस्थुः । उरु ।
चक्रिरे । सदः । विष्णुः । यत् । ह । आवत् । वृषणम् । मदऽच्युतम् ।
वयः । न । सीदन् । अधि । बर्हिषि । प्रिये ॥७॥ शूराःऽइव । इत् ।
युयुधयः । न । जग्मयः । श्रवस्यवः । न । पृतनासु । येतिरे । भयन्ते ।
विश्वा । भुवना । मरुत्ऽभ्यः । राजानःऽइव । त्वेषऽसंदृशः । नरः ॥८॥
त्वष्टा । यत् । वज्रम् । सुऽकृतम् । हिरण्ययम् । सहस्रऽभृष्टिम् । सुऽअपाः ।
अवर्तयत् । धत्ते । इन्द्रः । नरि । अपांसि । कर्तवे । अहन् । वृत्रम् ।
निः । अपाम् । औब्जत् । अर्णवम् ॥९॥ ऊर्ध्वम् । नुनुद्रे । अवतम् ।
ते । ओजसा । दादृहाणम् । चित् । बिभिदुः । वि । पर्वतम् । धमन्तः ।
वाणम् । मरुतः । सुऽदानवः । मदे । सोमस्य । रण्यानि । चक्रिरे ॥१०॥

जिह्मम् । नुनुद्रे । अवतम् । तया । दिशा । असिञ्चन् । उत्सम् । गोतमाय । तृष्णऽजे । आ । गच्छन्ति । ईम् । अवसा । चित्रऽभानवः । कामम् । विप्रस्य । तर्पयन्त । धामऽभिः ॥११॥ या । वः । शर्म । शशमानाय । सन्ति । त्रिऽधातूनि । दाशुषे । यच्छत । अधि । अस्मभ्यम् । तानि । मरुतः । वि । यन्त । रयिम् । नः । धत्त । वृषणः । सुऽवीरम् ॥१२॥

I. 86.

मरुतः । यस्य । हि । क्षये । पाथ । दिवः । विऽमहसः । सः । सुऽगोपातमः । जनः ॥१॥ यज्ञैः । वा । यज्ञऽवाहसः । विप्रस्य । वा । मतीनाम् । मरुतः । शृणुत । हवम् ॥२॥ उत । वा । यस्य । वाजिनः । अनु । विप्रम् । अतक्षत । सः । गन्ता । गोऽमति । व्रजे ॥३॥ अस्य । वीरस्य । बर्हिषि । सुतः । सोमः । दिविष्टिषु । उक्थम् । मदः । च । शस्यते ॥४॥ अस्य । श्रोषन्तु । आ । भुवः । विश्वाः । यः । चर्षणीः । अभि । सूरम् । चित् । सस्रुषीः । इषः ॥५॥ पूर्वीभिः । हि । ददाशिम । शरत्ऽभिः । मरुतः । वयम् । अवःऽभिः । चर्षणीनाम् ॥६॥ सुऽभगः । सः । प्रऽयज्यवः । मरुतः । अस्तु । मर्त्यः । यस्य । प्रयांसि । पर्षथ ॥७॥ शशमानस्य । वा । नरः । स्वेदस्य । सत्यऽशवसः । विद । कामस्य । वेनतः ॥८॥ यूयम् । तत् । सत्यऽशवसः । आविः । कर्त । महिऽत्वना । विध्यत । विऽद्युता । रक्षः ॥९॥ गूहत । गुह्यम् । तमः । वि । यात । विश्वम् । अत्रिणम् । ज्योतिः । कर्त । यत् । उश्मसि ॥१०॥

I. 87.

प्रऽत्वक्षसः । प्रऽतवसः । विऽरप्शिनः । अनानताः । अविथुराः ।

ऋजीषिणः । जुष्टऽतमासः । नृऽतमासः । अञ्जिऽभिः । वि । आनज्रे ।
के । चित् । उस्राःऽइव । स्तृऽभिः ॥१॥ उपऽह्वरेषु । यत् । अचिं-
ध्वम् । ययिम् । वयःऽइव । मरुतः । केन । चित् । पथा । श्चोतन्ति ।
कोशाः । उप । वः । रथेषु । आ । घृतम् । उक्षत । मधुऽवर्णम् ।
अर्चते ॥२॥ प्र । एषाम् । अज्मेषु । विथुराऽइव । रेजते । भूमिः ।
यामेषु । यत् । ह । युञ्जते । शुभे । ते । क्रीळयः । धुनयः । भ्राजत्-
ऽऋष्टयः । स्वयम् । महिऽत्वम् । पनयन्त । धूतयः ॥३॥ सः । हि ।
स्वऽसृत् । पृषत्ऽअश्वः । युवा । गणः । अया । ईशानः । तविषीभिः ।
आऽवृतः । असि । सत्यः । ऋणऽयावा । अनेद्यः । अस्याः । धियः ।
प्रऽअविता । अथ । वृषा । गणः ॥४॥ पितुः । प्रत्नस्य । जन्मना ।
वदामसि । सोमस्य । जिह्वा । प्र । जिगाति । चक्षसा । यत् । ईम् ।
इन्द्रम् । शमि । ऋक्वाणः । आशत । आत् । इत् । नामानि । यज्ञि-
यानि । दधिरे ॥५॥ श्रियसे । कम् । भानुऽभिः । सम् । मिमिक्षिरे ।
ते । रश्मिऽभिः । ते । ऋक्वऽभिः । सुऽखादयः । ते । वाशीऽमन्तः । इष्मिणः । अभी-
रवः । विद्रे । प्रियस्य । मारुतस्य । धाम्नः ॥६॥

I. 88.

आ । विद्युन्मत्ऽभिः । मरुतः । सुऽअर्कैः । रथेऽभिः । यात ।
ऋष्टिमत्ऽभिः । अश्वऽपर्णैः । आ । वर्षिष्ठया । नः । इषा । वयः । न ।
पप्तत । सुऽमायाः ॥१॥ ते । अरुणेभिः । वरम् । आ । पिशङ्गैः ।
शुभे । कम् । यान्ति । रथतूःऽभिः । अश्वैः । रुक्मः । न । चित्रः ।
स्वधितिऽवान् । पव्या । रथस्य । जङ्घनन्त । भूम ॥२॥ श्रिये ।
कम् । वः । अधि । तनूषु । वाशीः । मेधा । वना । न । कृणवन्ते ।

ऊर्ध्वा । युष्मभ्यम् । कम् । मरुतः । सुऽजाताः । तुविऽद्युम्नासः । धनयन्ते । अद्रिम् ॥३॥ अहानि । गृध्राः । परि । आ । वः । आ । अगुः । इमाम् । धियम् । वार्कार्याम् । च । देवीम् । ब्रह्म । कृण्वन्तः । गोतमासः । अर्कैः । ऊर्ध्वम् । नुनुद्रे । उत्सऽधिम् । पिबध्यै ॥४॥ एतत् । त्यत् । न । योजनम् । अचेति । सस्वः । ह । यत् । मरुतः । गोतमः । वः । पश्यन् । हिरण्यऽचक्रान् । अयःऽदंष्ट्रान् । विऽधावतः । वराहून् ॥५॥ एषा । स्या । वः । मरुतः । अनुऽभर्त्री । प्रति । स्तोभति । वाघतः । न । वाणी । अस्तोभयत् । वृथा । आसाम् । अनु । स्वधाम् । गभस्त्योः ॥६॥

I. 89.

आ । नः । भद्राः । क्रतवः । यन्तु । विश्वतः । अदब्धासः । अपरिऽइतासः । उत्ऽभिदः । देवाः । नः । यथा । सदम् । इत् । वृधे । असन् । अप्रऽआयुवः । रक्षितारः । दिवेऽदिवे ॥१॥ देवानाम् । भद्रा । सुऽमतिः । ऋजुऽयताम् । देवानाम् । रातिः । अभि । नः । नि । वर्तताम् । देवानाम् । सख्यम् । उप । सेदिम । वयम् । देवाः । नः । आयुः । प्र । तिरन्तु । जीवसे ॥२॥ तान् । पूर्वया । निऽविदा । हूमहे । वयम् । भगम् । मित्रम् । अदितिम् । दक्षम् । अस्रिधम् । अर्यमणम् । वरुणम् । सोमम् । अश्विना । सरस्वती । नः । सुऽभगा । मयः । करत् ॥३॥ तत् । नः । वातः । मयःऽभु । वातु । भेषजम् । तत् । माता । पृथिवी । तत् । पिता । द्यौः । तत् । ग्रावाणः । सोमऽसुतः । मयःऽभुवः । तत् । अश्विना । शृणुतम् । धिष्ण्या । युवम् ॥४॥ तम् । ईशानम् । जगतः । तस्थुषः । पतिम् । धियम्ऽजिन्वम् । अवसे । हूमहे ।

वयम् । पूषा । नः । यथा । वेदसाम् । असत् । वृधे । रक्षिता । पायुः । अदब्धः । स्वस्तये ॥५॥ स्वस्ति । नः । इन्द्रः । वृद्धऽश्रवाः । स्वस्ति । नः । पूषा । विश्वऽवेदाः । स्वस्ति । नः । तार्क्ष्यः । अरिष्टऽनेमिः । स्वस्ति । नः । बृहस्पतिः । दधातु ॥६॥ पृषत्ऽअश्वाः । मरुतः । पृश्निऽमातरः । शुभम्ऽयावानः । विदथेषु । जग्मयः । अग्निऽजिह्वाः । मनवः । सूरऽचक्षसः । विश्वे । नः । देवाः । अवसा । आ । गमन् । इह ॥७॥ भद्रम् । कर्णेभिः । शृणुयाम । देवाः । भद्रम् । पश्येम । अक्षऽभिः । यजत्राः । स्थिरैः । अङ्गैः । तुस्तुऽवांसः । तनूभिः । वि । अशेम । देवऽहितम् । यत् । आयुः ॥८॥ शतम् । इत् । नु । शरदः । अन्ति । देवाः । यत्र । नः । चक्र । जरसम् । तनूनाम् । पुत्रासः । यत्र । पितरः । भवन्ति । मा । नः । मध्या । रिरिषत । आयुः । गन्तोः ॥९॥ अदितिः । द्यौः । अदितिः । अन्तरिक्षम् । अदितिः । माता । सः । पिता । सः । पुत्रः । विश्वे । देवाः । अदितिः । पञ्च । जनाः । अदितिः । जातम् । अदितिः । जनिऽत्वम् ॥१०॥

## I. 90.

ऋजुऽनीती । नः । वरुणः । मित्रः । नयतु । विद्वान् । अर्यमा । देवैः । सऽजोषाः ॥१॥ ते । हि । वस्वः । वसवानाः । ते । अप्रऽमूराः । महःऽभिः । व्रता । रक्षन्ते । विश्वाहा ॥२॥ ते । अस्मभ्यम् । शर्म । यंसन् । अमृताः । मर्त्येभ्यः । बाधमानाः । अप । द्विषः ॥३॥ वि । नः । पथः । सुविताय । चियन्तु । इन्द्रः । मरुतः । पूषा । भगः । वन्द्यासः ॥४॥ उत । नः । धियः । गोऽअग्राः । पूषन् । विष्णो इति । एवऽयावः । कर्त । नः । स्वस्तिऽमतः ॥५॥ मधु । वाताः । ऋतऽयते । मधु । क्षरन्ति ।

सिन्धवः । माध्वीः । नः । सन्तु । ओषधीः ॥६॥ मधु । नक्तम् । उत । उषसः । मधुऽमत् । पार्थिवम् । रजः । मधु । द्यौः । अस्तु । नः । पिता ॥७॥ मधुऽमान् । नः । वनस्पतिः । मधुऽमान् । अस्तु । सूर्यः । माध्वीः । गावः । भवन्तु । नः ॥८॥ शम् । नः । मित्रः । शम् । वरुणः । शम् । नः । भवतु । अर्यमा । शम् । नः । इन्द्रः । बृहस्पतिः । शम् । नः । विष्णुः । उरुऽक्रमः ॥९॥

I. 91.

त्वम् । सोम । प्र । चिकितः । मनीषा । त्वम् । रजिष्ठम् । अनु । नेषि । पन्थाम् । तव । प्रऽनीती । पितरः । नः । इन्दो इति । देवेषु । रत्नम् । अभजन्त । धीराः ॥१॥ त्वम् । सोम । क्रतुऽभिः । सुऽक्रतुः । भूः । त्वम् । दक्षैः । सुऽदक्षः । विश्वऽवेदाः । त्वम् । वृषा । वृषऽत्वेभिः । महिऽत्वा । द्युम्नेभिः । द्युम्नी । अभवः । नृऽचक्षाः ॥२॥ राज्ञः । नु । ते । वरुणस्य । व्रतानि । बृहत् । गभीरम् । तव । सोम । धाम । शुचिः । त्वम् । असि । प्रियः । न । मित्रः । दक्षाय्यः । अर्यमाऽइव । असि । सोम ॥३॥ या । ते । धामानि । दिवि । या । पृथिव्याम् । या । पर्वतेषु । ओषधीषु । अप्ऽसु । तेभिः । नः । विश्वैः । सुऽमनाः । अहेळन् । राजन् । सोम । प्रति । हव्या । गृभाय ॥४॥ त्वम् । सोम । असि । सत्ऽपतिः । त्वम् । राजा । उत । वृत्रऽहा । त्वम् । भद्रः । असि । क्रतुः ॥५॥ त्वम् । च । सोम । नः । वशः । जीवातुम् । न । मरामहे । प्रियऽस्तोत्रः । वनस्पतिः ॥६॥ त्वम् । सोम । महे । भगम् । त्वम् । यूने । ऋतऽयते । दक्षम् । दधासि । जीवसे ॥७॥ त्वम् । नः । सोम । विश्वतः । रक्ष । राजन् । अघऽयतः । न । रिष्येत् । त्वाऽवतः । सखा ॥८॥

सोम । याः । ते । मयःऽभुवः । ऊतयः । सन्ति । दाशुषे । ताभिः । नः । अविता । भव ॥९॥ इमम् । यज्ञम् । इदम् । वचः । जुजुषाणः । उपऽआगहि । सोम । त्वम् । नः । वृधे । भव ॥१०॥ सोम । गीःऽभिः । त्वा । वयम् । वर्धयामः । वचःऽविदः । सुऽमृळीकः । नः । आ । विश ॥११॥ गयऽस्फानः । अमीवऽहा । वसुऽवित् । पुष्टिऽवर्धनः । सुऽमित्रः । सोम । नः । भव ॥१२॥ सोम । ररन्धि । नः । हृदि । गावः । न । यवसेषु । आ । मर्यःऽइव । स्वे । ओक्ये ॥१३॥ यः । सोम । सख्ये । तव । ररणत् । देव । मर्त्यः । तम् । दक्षः । सचते । कविः ॥१४॥ उरुष्य । नः । अभिऽशस्तेः । सोम । नि । पाहि । अंहसः । सखा । सुऽशेवः । एधि । नः ॥१५॥ आ । प्यायस्व । सम् । एतु । ते । विश्वतः । सोम । वृष्ण्यम् । भव । वाजस्य । सम्ऽगथे ॥१६॥ आ । प्यायस्व । मदिन्ऽतम । सोम । विश्वेभिः । अंशुऽभिः । भव । नः । सुश्रवःऽतमः । सखा । वृधे ॥१७॥ सम् । ते । पयांसि । सम् । ऊँ इति । यन्तु । वाजाः । सम् । वृष्ण्यानि । अभिमातिऽसहः । आऽप्यायमानः । अमृताय । सोम । दिवि । श्रवांसि । उत्ऽतमानि । धिष्व ॥१८॥ या । ते । धामानि । हविषा । यजन्ति । ता । ते । विश्वा । परिऽभूः । अस्तु । यज्ञम् । गयऽस्फानः । प्रऽतरणः । सुऽवीरः । अवीरऽहा । प्र । चर । सोम । दुर्यान् ॥१९॥ सोमः । धेनुम् । सोमः । अर्वन्तम् । आशुम् । सोमः । वीरम् । कर्मण्यम् । ददाति । सदन्यम् । विदथ्यम् । सभेयम् । पितृऽश्रवणम् । यः । ददाशत् । अस्मै ॥२०॥ अषाह्ळम् । युत्ऽसु । पृतनासु । पप्रिम् । स्वःऽसाम् । अप्साम् । वृजनस्य । गोपाम् । भरेषुऽजाम् । सुऽक्षितिम् । सुऽश्रवसम् । जयन्तम् । त्वाम् । अनु । मदेम । सोम ॥२१॥

त्वम् । इमाः । ओषधीः । सोम । विश्वाः । त्वम् । अपः । अजनयः । त्वम् । गाः । त्वम् । आ । ततन्थ । उरु । अन्तरिक्षम् । त्वम् । ज्योतिषा । वि । तमः । ववर्थ ॥२२॥ देवेन । नः । मनसा । देव । सोम । रायः । भागम् । सहसाऽवन् । अभि । युध्य । मा । त्वा । आ । तनत् । ईशिषे । वीर्यस्य । उभयेभ्यः । प्र । चिकित्स । गोऽइष्टौ ॥२३॥

I. 92.

एताः । ऊँ इति । त्याः । उषसः । केतुम् । अक्रत । पूर्वे । अर्धे । रजसः । भानुम् । अञ्जते । निःऽकृण्वानाः । आयुधानिऽइव । धृष्णवः । प्रति । गावः । अरुषीः । यन्ति । मातरः ॥१॥ उत् । अपप्तन् । अरुणाः । भानवः । वृथा । सुऽआयुजः । अरुषीः । गाः । अयुक्षत । अक्रन् । उषसः । वयुनानि । पूर्वऽथा । रुशन्तम् । भानुम् । अरुषीः । अशिश्रयुः ॥२॥ अर्चन्ति । नारीः । अपसः । न । विष्टिऽभिः । समानेन । योजनेन । आ । पराऽवतः । इषम् । वहन्तीः । सुऽकृते । सुऽदानवे । विश्वा । इत् । अह । यजमानाय । सुन्वते ॥३॥ अधि । पेशांसि । वपते । नृतूःऽइव । अप । ऊर्णुते । वक्षः । उस्राऽइव । बर्जहम् । ज्योतिः । विश्वस्मै । भुवनाय । कृण्वती । गावः । न । व्रजम् । वि । उषाः । आवरित्यावः । तमः ॥४॥ प्रति । अर्चिः । रुशत् । अस्याः । अदर्शि । वि । तिष्ठते । बाधते । कृष्णम् । अभ्वम् । स्वरुम् । न । पेशः । विदथेषु । अञ्जन् । चित्रम् । दिवः । दुहिता । भानुम् । अश्रेत् ॥५॥ अतारिष्म । तमसः । पारम् । अस्य । उषाः । उच्छन्ती । वयुना । कृणोति । श्रिये । छन्दः । न । स्मयते । विऽभाती । सुऽप्रतीका । सौमनसाय । अजीगरिति ॥६॥ भास्वती । नेत्री । सूनृतानाम् । दिवः । स्तवे । दुहिता । गोतमेभिः ।

प्रजाऽवंतः । नृऽवंतः । अश्वंऽबुध्यान् । उषः । गोऽअंग्रान् । उपं । मासि । वाजान् ॥७॥ उषः । तम् । अश्याम् । यशसंम् । सुऽवीरंम् । दासऽप्रंवर्गम् । रयिम् । अश्वंऽबुध्यम् । सुऽदंसंसा । श्रवंसा । या । विऽभासिं । वाजंऽप्रसूता । सुऽभगे । बृहन्तंम् ॥८॥ विश्वानि । देवी । भुवंना । अभिऽचक्ष्यं । प्रतीची । चक्षुः । उर्विया । वि । भाति । विश्वंम् । जीवम् । चरसें । बोधयंन्ती । विश्वंस्य । वाचंम् । अविदत् । मनायोः ॥९॥ पुनःऽपुनः । जायंमाना । पुराणी । समानम् । वर्णम् । अभि । शुम्भंमाना । श्वघ्नीऽइंव । कृत्नुः । विजंः । आऽमिनाना । मर्तस्य । देवी । जरयंन्ती । आयुः ॥१०॥ विऽऊर्ण्वती । दिवः । अन्तान् । अबोधि । अपं । स्वसारम् । सनुतः । युयोति । प्रऽमिनती । मनुष्यां । युगानिं । योषां । जारस्यं । चक्षसा । वि । भाति ॥११॥ पशून् । न । चित्रा । सुऽभगां । प्रथाना । सिन्धुः । न । क्षोदंः । उर्विया । वि । अश्वैत् । अमिनती । दैव्यानि । व्रतानिं । सूर्यस्य । चेति । रश्मिऽभिः । दृशाना ॥१२॥ उषः । तत् । चित्रम् । आ । भर । अस्मभ्यंम् । वाजिनीऽवति । येनं । तोकम् । च । तनंयम् । च । धामंहे ॥१३॥ उषः । अद्य । इह । गोऽमति । अश्वंऽवति । विभाऽवरि । रेवत् । अस्मे इतिं । वि । उच्छ । सूनृताऽवति ॥१४॥ युक्ष्व । हि । वाजिनीऽवति । अश्वान् । अद्य । अरुणान् । उषः । अथं । नः । विश्वा । सौभंगानि । आ । वह ॥१५॥ अश्विना । वर्तिः । अस्मत् । आ । गोऽमंत् । दस्रा । हिरंण्यऽवत् । अर्वाक् । रथंम् । सऽमंनसा । नि । यच्छतम् ॥१६॥ यौ । इत्था । श्लोकंम् । आ । दिवः । ज्योतिः । जनांय । चक्रथुः । आ । नः । ऊर्जंम् । वहतम् । अश्विना । युवम्

॥१७॥ आ । इह । देवा । मयःऽभुवा । दस्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । उषःऽबुधः । वहन्तु । सोमऽपीतये ॥१८॥

I. 93.

अग्नीषोमौ । इमम् । सु । मे । शृणुतम् । वृषणा । हवम् । प्रति । सुऽउक्तानि । हर्यतम् । भवतम् । दाशुषे । मयः ॥१॥ अग्नीषोमा । यः । अद्य । वाम् । इदम् । वचः । सपर्यति । तस्मै । धत्तम् । सुऽवीर्यम् । गवाम् । पोषम् । सुऽअश्व्यम् ॥२॥ अग्नीषोमा । यः । आऽहुतिम् । यः । वाम् । दाशात् । हविःऽकृतिम् । सः । प्रऽजया । सुऽवीर्यम् । विश्वम् । आयुः । वि । अश्नवत् ॥३॥ अग्नीषोमा । चेति । तत् । वीर्यम् । वाम् । यत् । अमुष्णीतम् । अवसम् । पणिम् । गाः । अव । अतिरतम् । बृसयस्य । शेषः । अविन्दतम् । ज्योतिः । एकम् । बहुऽभ्यः ॥४॥ युवम् । एतानि । दिवि । रोचनानि । अग्निः । च । सोम । सक्रतू इति सऽक्रतू । अधत्तम् । युवम् । सिन्धून् । अभिऽशस्तेः । अवद्यात् । अग्नीषोमौ । अमुञ्चतम् । गृभीतान् ॥५॥ आ । अन्यम् । दिवः । मातरिश्वा । जभार । अमथ्नात् । अन्यम् । परि । श्येनः । अद्रेः । अग्नीषोमा । ब्रह्मणा । वावृधाना । उरुम् । यज्ञाय । चक्रथुः । ऊँ इति । लोकम् ॥६॥ अग्नीषोमा । हविषः । प्रऽस्थितस्य । वीतम् । हर्यतम् । वृषणा । जुषेथाम् । सुऽशर्माणा । सुऽअवसा । हि । भूतम् । अथ । धत्तम् । यजमानाय । शम् । योः ॥७॥ यः । अग्नीषोमा । हविषा । सपर्यात् । देवद्रीचा । मनसा । यः । घृतेन । तस्य । व्रतम् । रक्षतम् । पातम् । अंहसः । विशे । जनाय । महि । शर्म । यच्छतम् ॥८॥ अग्नीषोमा । सऽवेदसा । सहूती इति । सऽहूती । वनतम् । गिरः । सम् । देवऽत्रा । बभूवथुः ॥९॥ अग्नी-

षोमौ । अनेन॑ । वाम् । यः । वाम् । घृतेन॑ । दाश॑ति । तस्मै॑ । दीदयतम् ।
बृहत् ॥१०॥ अग्नी॑षोमौ । इमानि॑ । नः । युवम् । हव्या । जुजोषतम् । आ ।
यातम् । उप॑ । नः । सचा॑ ॥११॥ अग्नी॑षोमा । पिपृतम् । अर्व॑तः । नः ।
आ । प्यायन्ताम् । उस्रियाः॑ । हव्यऽसूदः॑ । अस्मे इति॑ । बला॑नि । मघ-
वत्ऽसु । धत्तम् । कृणुतम् । नः । अध्वरम् । श्रुष्टिऽमन्त॑म् ॥१२॥

I. 94.

इमम् । स्तोम॑म् । अर्ह॑ते । जातऽवे॑दसे । रथ॑म्ऽइव । सम् । महेम ।
मनीषया॑ । भद्रा । हि । नः । प्रऽम॑तिः । अस्य । सम्ऽसदि॑ । अग्ने॑ ।
सख्ये । मा । रिषाम । वयम् । तव॑ ॥१॥ यस्मै॑ । त्वम् । आऽयज॑से ।
सः । साधति । अनर्वा॑ । क्षेति । दध॑ते । सुऽवीर्य॑म् । सः । तूताव । न ।
एनम् । अश्नोति । अंहतिः । अग्ने॑ । सख्ये । मा । रिषाम । वयम् । तव॑
॥२॥ शकेम॑ । त्वा । सम्ऽइध॑म् । साधय॑ । धियः॑ । त्वे इति॑ । देवाः ।
हविः । अदन्ति । आऽहुतम् । त्वम् । आदित्यान् । आ । वह । तान् ।
हि । उश्मसि॑ । अग्ने॑ । सख्ये । मा । रिषाम । वयम् । तव॑ ॥३॥ भ-
राम॑ । इध्मम् । कृणवा॑म । हवींषि॑ । ते । चितय॑न्तः । पर्व॑णाऽपर्वणा ।
वयम् । जीवात॑वे । प्रऽतरम् । साधय । धियः॑ । अग्ने॑ । सख्ये । मा ।
रिषाम । वयम् । तव॑ ॥४॥ विशाम् । गोपाः । अस्य । चरन्ति । जन्त-
वः॑ । द्विऽपत् । च । यत् । उत । चतुः॑ऽपत् । अक्तुऽभिः॑ । चित्रः ।
प्रऽकेतः । उषसः॑ । महान् । असि । अग्ने॑ । सख्ये । मा । रिषाम । व-
यम् । तव॑ ॥५॥ त्वम् । अध्वर्युः । उत । होता॑ । असि । पूर्व्यः । प्रऽ-
शास्ता । पोता॑ । जनुषा॑ । पुरःऽहि॑तः । विश्वा॑ । विद्वान् । आर्त्वि॑ज्या ।
धीर । पुष्यसि । अग्ने॑ । सख्ये । मा । रिषाम । वयम् । तव॑ ॥६॥ यः ।

विश्वतः । सुऽप्रतीकः । सऽदृङ् । असि । दूरे । चित् । सन् । तळित्ऽ-
इव । अति । रोचसे । रात्र्याः । चित् । अन्धः । अति । देव । पश्यसि ।
अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥७॥ पूर्वः । देवाः । भवन्-
तु । सुन्वतः । रथः । अस्माकम् । शंसः । अभि । अस्तु । दुःऽध्यः ।
तत् । आ । जानीत । उत । पुष्यत । वचः । अग्ने । सख्ये । मा ।
रिषाम । वयम् । तव ॥८॥ वधैः । दुःऽशंसान् । अप । दुःऽध्यः ।
जहि । दूरे । वा । ये । अन्ति । वा । के । चित् । अत्रिणः । अथ । यज्ञा-
य । गृणते । सुऽगम् । कृधि । अग्ने । सख्ये । मा । रिषाम । वयम् ।
तव ॥९॥ यत् । अयुक्थाः । अरुषा । रोहिता । रथे । वातऽजूता ।
वृषभस्यऽइव । ते । रवः । आत् । इन्वसि । वनिनः । धूमऽकेतुना ।
अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥१०॥ अध । स्वनात् ।
उत । बिभ्युः । पतत्रिणः । द्रप्साः । यत् । ते । यवसऽअदः । वि । अ-
स्थिरन् । सुऽगम् । तत् । ते । तावकेभ्यः । रथेभ्यः । अग्ने । सख्ये ।
मा । रिषाम । वयम् । तव ॥११॥ अयम् । मित्रस्य । वरुणस्य । धायसे ।
अवऽयाताम् । मरुताम् । हेळः । अद्भुतः । मृळ । सु । नः । भूतु । ए-
षाम् । मनः । पुनः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥१२॥
देवः । देवानाम् । असि । मित्रः । अद्भुतः । वसुः । वसूनाम् । असि ।
चारुः । अध्वरे । शर्मन् । स्याम । तव । सप्रथःऽतमे । अग्ने । सख्ये । मा ।
रिषाम । वयम् । तव ॥१३॥ तत् । ते । भद्रम् । यत् । सम्ऽइद्धः । स्वे ।
दमे । सोमऽआहुतः । जरसे । मृळयत्ऽतमः । दधासि । रत्नम् । द्रविणम् ।
च । दाशुषे । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥१४॥ य-
स्मै । त्वम् । सुऽद्रविणः । ददाशः । अनागाःऽत्वम् । अदिते । सर्वऽता-

ता । यम् । भद्रेण । शर्वसा । चोदयासि । प्रजाऽवता । राधसा । ते । स्याम ॥१५॥ सः । त्वम् । अग्ने । सौभगऽत्वस्य । विद्वान् । अस्माकम् । आयुः । प्र । तिर । इह । देव । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥१६॥

I. 95.

द्वे इति । विरूपे इति विऽरूपे । चरतः । स्वर्थे इति सुऽअर्थे । अन्याऽअन्या । वत्सम् । उप । धापयेते इति । हरिः । अन्यस्याम् । भवति । स्वधाऽवान् । शुक्रः । अन्यस्याम् । ददृशे । सुऽवर्चाः ॥१॥ दश । इमम् । त्वष्टुः । जनयन्त । गर्भम् । अतन्द्रासः । युवतयः । विऽभृत्रम् । तिग्मऽअनीकम् । स्वऽयशसम् । जनेषु । विऽरोचमानम् । परि । सीम् । नयन्ति ॥२॥ त्रीणि । जाना । परि । भूषन्ति । अस्य । समुद्रे । एकम् । दिवि । एकम् । अप्ऽसु । पूर्वाम् । अनु । प्र । दिशम् । पार्थिवानाम् । ऋतून् । प्रऽशासत् । वि । दधौ । अनुष्ठु ॥३॥ कः । इमम् । वः । निण्यम् । आ । चिकेत । वत्सः । मातॄः । जनयत । स्वधाभिः । बह्वीनाम् । गर्भः । अपसाम् । उपऽस्थात् । महान् । कविः । निः । चरति । स्वधाऽवान् ॥४॥ आविःऽत्यः । वर्धते । चारुः । आसु । जिह्मानाम् । ऊर्ध्वः । स्वऽयशाः । उपऽस्थे । उभे इति । त्वष्टुः । बिभ्यतुः । जायमानात् । प्रतीची इति । सिंहम् । प्रति । जोषयेते इति ॥५॥ उभे इति । भद्रे इति । जोषयेते इति । न । मेने इति । गावः । न । वाश्राः । उप । तस्थुः । एवैः । सः । दक्षाणाम् । दक्षऽपतिः । बभूव । अञ्जन्ति । यम् । दक्षिणतः । हविःऽभिः ॥६॥ उत् । यंयमीति । सविताऽइव । बाहू इति । उभे इति । सिचौ । यतते । भीमः । ऋञ्जन् । उत् । शुक्रम् । अत्कम् । अजते ।

सिमस्मात् । नवा । मातृऽभ्यः । वसना । जहाति ॥७॥ त्वेषम् । रूपम् । कृणुते । उत्ऽतरम् । यत् । सम्ऽपृञ्चानः । सदने । गोभिः । अत्ऽभिः । कविः । बुध्नम् । परि । मर्मृज्यते । धीः । सा । देवऽताता । सम्ऽइतिः । बभूव ॥८॥ उरु । ते । ज्रयः । परि । एति । बुध्नम् । विऽरोचमानम् । महिषस्य । धाम । विश्वेभिः । अग्ने । स्वयशःऽभिः । इद्धः । अदब्धेभिः । पायुऽभिः । पाहि । अस्मान् ॥९॥ धन्वन् । स्रोतः । कृणुते । गातुम् । ऊर्मिम् । शुक्रैः । ऊर्मिऽभिः । अभि । नक्षति । क्षाम् । विश्वा । सनानि । जठरेषु । धत्ते । अन्तः । नवासु । चरति । प्रऽसूषु ॥१०॥ एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥११॥

I. 96.

सः । प्रत्नऽथा । सहसा । जायमानः । सद्यः । काव्यानि । बट् । अधत्त । विश्वा । आपः । च । मित्रम् । धिषणा । च । साधन् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥१॥ सः । पूर्वया । निऽविदा । कव्यता । आयोः । इमाः । प्रऽजाः । अजनयत् । मनूनाम् । विवस्वता । चक्षसा । द्याम् । अपः । च । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥२॥ तम् । ईळत । प्रथमम् । यज्ञऽसाधम् । विशः । आरीः । आऽहुतम् । ऋञ्जसानम् । ऊर्जः । पुत्रम् । भरतम् । सृप्रऽदानुम् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥३॥ सः । मातरिश्वा । पुरुवारऽपुष्टिः । विदत् । गातुम् । तनयाय । स्वःऽवित् । विशाम् । गोपाः । जनिता । रोदस्योः । देवाः । अग्निम् । धारयन् ।

द्रविणःऽदाम् ॥४॥ नक्तोषसा । वर्णम् । आमेम्याने इत्याऽमेम्याने । धापयेते इति । शिशुम् । एकम् । समीची इति सम्ऽईची । द्यावाक्षामा । रुक्मः । अन्तः । वि । भाति । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥५॥ रायः । बुध्नः । सम्ऽगमनः । वसूनाम् । यज्ञस्य । केतुः । मन्मऽसाधनः । वेरिति वेः । अमृतऽत्वम् । रक्षमाणासः । एनम् । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम्॥६॥ नु । च । पुरा । च । सदनम् । रयीणाम् । जातस्य । च । जायमानस्य । च । क्षाम् । सतः । च । गोपाम् । भवतः । च । भूरेः । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥७॥ द्रविणःऽदाः । द्रविणसः । तुरस्य । द्रविणःऽदाः । सनरस्य । प्र । यंसत् । द्रविणःऽदाः । वीरऽवतीम् । इषम् । नः । द्रविणःऽदाः । रासते । दीर्घम् । आयुः ॥८॥ एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥९॥

I. 97.

अप । नः । शोशुचत् । अघम् । अग्ने । शुशुग्धि । आ । रयिम् । अप । नः । शोशुचत् । अघम् ॥१॥ सुऽक्षेत्रिया । सुगातुऽया । वसुऽया । च । यजामहे । अप । नः । शोशुचत् । अघम् ॥२॥ प्र । यत् । भन्दिष्ठः । एषाम् । प्र । अस्माकासः । च । सूरयः । अप । नः । शोशुचत् । अघम् ॥३॥ प्र । यत् । ते । अग्ने । सूरयः । जायेमहि । प्र । ते । वयम् । अप । नः । शोशुचत् । अघम् ॥४॥ प्र । यत् । अग्नेः । सहस्वतः । विश्वतः । यन्ति । भानवः । अप । नः । शोशुचत् । अघम् ॥५॥ त्वम् । हि । विश्वतःऽमुख । विश्वतः । परिऽभूः । असि ।

असि । अप॑ । नः । शोशु॑चत् । अघम् ॥६॥ द्विषः॑ । नः । विश्वतः॑ऽमुख । अति॑ । नावाऽइ॑व । पारय । अप॑ । नः । शोशु॑चत् । अघम् ॥७॥ सः । नः । सिन्धु॑म्ऽइव । नावया॑ । अति॑ । पर्ष॑ । स्वस्तये॑ । अप॑ । नः । शोशु॑चत् । अघम् ॥८॥

I. 98.

वैश्वानरस्य॑ । सुऽमतौ॑ । स्याम । राजा॑ । हि । कम् । भुव॑नानाम् । अभिऽश्रीः॑ । इतः । जातः । विश्व॑म् । इदम् । वि । चष्टे । वैश्वानरः । यतते । सूर्ये॑ण ॥१॥ पृष्टः । दिवि । पृष्टः । अग्निः । पृथिव्याम् । पृष्टः । विश्वाः॑ । ओष॑धीः । आ । विवेश । वैश्वानरः । सह॑सा । पृष्टः । अग्निः । सः । नः । दिवा॑ । सः । रिषः । पातु । नक्त॑म् ॥२॥ वैश्वा॑नर । तव॑ । तत् । सत्यम् । अस्तु । अस्मान् । रायः॑ । मघऽवा॑नः । सचन्ताम् । तत् । नः । मित्रः । वरु॑णः । ममहन्ताम् । अदि॑तिः । सिन्धुः॑ । पृथिवी । उत । द्यौः ॥३॥

I. 99.

जातऽवे॑दसे । सुनवाम । सोम॑म् । अरातिऽयतः । नि । दहाति । वेदः॑ । सः । नः । पर्ष॑त् । अति॑ । दुःऽगानि॑ । विश्वा॑ । नावाऽइ॑व । सिन्धु॑म् । दुःऽइता । अति॑ । अग्निः ॥१॥

I. 100.

सः । यः । वृषा॑ । वृष्ण्ये॑भिः । सम्ऽओ॑काः । महः । दिवः । पृथिव्याः । च । सम्ऽराट् । सतीनऽस॑त्वा । हव्यः॑ । भरे॑षु । मरुत्वा॑न् । नः । भवतु । इन्द्रः॑ । ऊती ॥१॥ यस्य॑ । अना॑प्तः । सूर्य॑स्यऽइव । यामः॑ । भरे॑ऽभरे । वृत्रऽहा । शुष्मः॑ । अस्ति॑ । वृष॑न्ऽतमः । सखि॑ऽभिः । स्वेभिः॑ । एवैः॑ । मरुत्वा॑न् । नः । भवतु । इन्द्रः॑ । ऊती ॥२॥ दिवः ।

नः । यस्य । रेतसः । दुघानाः । पन्थासः । यन्ति । शवसा । अपरिऽइताः ।
तरत्ऽद्वेषाः । ससहिः । पौंस्येभिः । मरुत्वान् । नः । भवतु । इन्द्रः ।
ऊती ॥३॥ सः । अङ्गिरःऽभिः । अङ्गिरःऽतमः । भूत् । वृषा । वृष-
ऽभिः । सखिऽभिः । सखा । सन् । ऋग्मिऽभिः । ऋग्मी । गातुऽभिः ।
ज्येष्ठः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥४॥ सः । सूनु-
ऽभिः । न । रुद्रेभिः । ऋभ्वा । नृऽसह्ये । ससह्वान् । अमित्रान् ।
सऽनीळेभिः । श्रवस्यानि । तूर्वन् । मरुत्वान् । नः । भवतु । इन्द्रः ।
ऊती ॥५॥ सः । मन्युऽमीः । सऽमदनस्य । कर्ता । अस्माकेभिः ।
नृऽभिः । सूर्यम् । सनत् । अस्मिन् । अहन् । सत्ऽपतिः । पुरुऽहूतः ।
मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥६॥ तम् । ऊतयः । रणयन् । शूर-
ऽसातौ । तम् । क्षेमस्य । क्षितयः । कृण्वत । त्राम् । सः । विश्वस्य । करुणस्य ।
ईशे । एकः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥७॥ तम् ।
अप्सन्त । शवसः । उत्ऽसवेषु । नरः । नरम् । अवसे । तम् । धनाय ।
सः । अन्धे । चित् । तमसि । ज्योतिः । विदत् । मरुत्वान् । नः । भवतु ।
इन्द्रः । ऊती ॥८॥ सः । सव्येन । यमति । व्राधतः । चित् । सः ।
दक्षिणे । सम्ऽगृभीता । कृतानि । सः । कीरिणा । चित् । सनिता ।
धनानि । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥९॥ सः । ग्रामेभिः ।
सनिता । सः । रथेभिः । विदे । विश्वाभिः । कृष्टिऽभिः । नु । अद्य ।
सः । पौंस्येभिः । अभिऽभूः । अशस्तीः । मरुत्वान् । नः । भवतु ।
इन्द्रः । ऊती ॥१०॥ सः । जामिऽभिः । यत् । सम्ऽअजाति । मीळ्हे ।
अजामिऽभिः । वा । पुरुऽहूतः । एवैः । अपाम् । तोकस्य । तनयस्य ।
जेषे । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥११॥ सः । वज्रऽभृत् ।

दस्युऽहा । भीमः । उग्रः । सहस्रऽचेताः । शतऽनीथः । ऋभ्वा । चम्रीषः ।
नः । शवसा । पाञ्चऽजन्यः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥१२॥
तस्य । वज्रः । क्रन्दति । स्मत् । स्वःऽसाः । दिवः । न । त्वेषः । रवथः ।
शिमीऽवान् । तम् । सचन्ते । सनयः । तम् । धनानि । मरुत्वान् । नः ।
भवतु । इन्द्रः । ऊती ॥१३॥ यस्य । अजस्रम् । शवसा । मानम् ।
उक्थम् । परिऽभुजत् । रोदसी इति । विश्वतः । सीम् । सः । पारिषत् ।
क्रतुऽभिः । मन्दसानः । मरुत्वान् । नः । भवतु इन्द्रः । ऊती ॥१४॥
न । यस्य । देवाः । देवता । न । मर्ताः । आपः । चन । शवसः ।
अन्तम् । आपुः । सः । प्रऽरिक्वा । त्वक्षसा । क्ष्मः । दिवः । च । मरु-
त्वान् । नः । भवतु । इन्द्रः । ऊती ॥१५॥ रोहित् । श्यावा । सुमत्ऽअंशुः ।
ललामीः । द्युक्षा । राये । ऋज्रऽअश्वस्य । वृषण्ऽवन्तम् । बिभ्रती । धूःऽसु ।
रथम् । मन्द्रा । चिकेत । नाहुषीषु । विक्षु ॥१६॥ एतत् । त्यत् । ते । इन्द्र ।
वृष्णे । उक्थम् । वार्षागिराः । अभि । गृणन्ति । राधः । ऋज्रऽअश्वः ।
प्रष्टिऽभिः । अम्बरीषः । सहऽदेवः । भयमानः । सुऽराधाः ॥१७॥
दस्यून् । शिम्यून् । च । पुरुऽहूतः । एवैः । हत्वा । पृथिव्याम् । शर्वा ।
नि । बर्हीत् । सनत् । क्षेत्रम् । सखिऽभिः । श्वित्न्येभिः । सनत् । सूर्यम् ।
सनत् । अपः । सुऽवज्रः ॥१८॥ विश्वाहा । इन्द्रः । अधिऽवक्ता । नः ।
अस्तु । अपरिऽहृताः । सनुयाम । वाजम् । तत् । नः । मित्रः । वरुणः ।
ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥१९॥

I. 101.

प्र । मन्दिने । पितुऽमत् । अर्चत । वचः । यः । कृष्णऽगर्भाः ।
निःऽअहन् । ऋजिश्वना । अवस्यवः । वृषणम् । वज्रऽदक्षिणम् । मरु-

त्वन्तम् । सख्याय । हवामहे ॥१॥ यः । विऽअंसम् । जहृषाणेन । मन्यु-
ना । यः । शम्बरम् । यः । अहन् । पिप्रुम् । अव्रतम् । इन्द्रः । यः । शु-
ष्णम् । अशुषम् । नि । अवृणक् । मरुत्वन्तम् । सख्याय । हवामहे ॥२॥
यस्य । द्यावापृथिवी इति । पौंस्यम् । महत् । यस्य । व्रते । वरुणः । यस्य ।
सूर्यः । यस्य । इन्द्रस्य । सिन्धवः । सश्चति । व्रतम् । मरुत्वन्तम् । स-
ख्याय । हवामहे ॥३॥ यः । अश्वानाम् । यः । गवाम् । गोऽपतिः ।
वशी । यः । आरितः । कर्मणिऽकर्मणि । स्थिरः । वीळोः । चित् । इन्द्रः ।
यः । असुन्वतः । वधः । मरुत्वन्तम् । सख्याय । हवामहे ॥४॥ यः ।
विश्वस्य । जगतः । प्राणतः । पतिः । यः । ब्रह्मणे । प्रथमः । गाः ।
अविन्दत् । इन्द्रः । यः । दस्यून् । अधरान् । अवऽअतिरत् । मरुत्व-
न्तम् । सख्याय । हवामहे ॥५॥ यः । शूरेभिः । हव्यः । यः । च । भी-
रुऽभिः । यः । धावत्ऽभिः । हूयते । यः । च । जिग्युऽभिः । इन्द्रम् ।
यम् । विश्वा । भुवना । अभि । सम्ऽदधुः । मरुत्वन्तम् । सख्याय ।
हवामहे ॥६॥ रुद्राणाम् । एति । प्रऽदिशा । विऽचक्षणः । रुद्रेभिः ।
योषा । तनुते । पृथु । ज्रयः । इन्द्रम् । मनीषा । अभि । अर्चति ।
श्रुतम् । मरुत्वन्तम् । सख्याय । हवामहे ॥७॥ यत् । वा । मरुत्वः । परमे ।
सधऽस्थे । यत् । वा । अवमे । वृजने । मादयासे । अतः । आ । याहि ।
अध्वरम् । नः । अच्छ । त्वाऽया । हविः । चकृम । सत्यऽराधः ॥८॥
त्वाऽया । इन्द्र । सोमम् । सुसुम । सुऽदक्ष । त्वाऽया । हविः । चकृम ।
ब्रह्मऽवाहः । अध । नियुत्वः । सऽगणः । मरुत्ऽभिः । अस्मिन् । यज्ञे ।
बर्हिषि । मादयस्व ॥९॥ मादयस्व । हरिऽभिः । ये । ते इन्द्र । वि ।
स्यस्व । शिप्रे इति । वि । सृजस्व । धेने इति । आ । त्वा । सुऽशिप्र ।

हर॑यः । वह॑न्तु । उ॒शन् । ह॒व्यानि॑ । प्रति॑ । नः॒ । जु॒ष॒स्व॒ ॥१०॥ म॒रुत्ऽस्तो॑त्रस्य । वृ॒जन॑स्य । गो॒पाः । व॒यम् । इन्द्रे॑ण । स॒नु॒या॒म॒ । वाज॑म् । तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥११॥

I. 102.

इ॒माम् । ते॒ । धिय॑म् । प्र । भ॒रे॒ । म॒हः । म॒हीम् । अ॒स्य । स्तो॒त्रे । धि॒षणा॑ । यत् । ते॒ । आ॒न॒जे । तम् । उ॒त्ऽस॒वे । च॒ । प्र॒ऽस॒वे । च॒ । स॒स॒हिम् । इन्द्र॑म् । दे॒वासः॑ । शव॑सा । अ॒म॒द॒न् । अनु॑ ॥१॥ अ॒स्य । श्रवः॑ । न॒द्यः॑ । स॒प्त । बि॒भ्र॒ति॒ । द्यावा॒क्षामा॑ । पृ॒थि॒वी । द॒र्श॒तम् । वपुः॑ । अ॒स्मे इति॑ । सू॒र्या॒च॒न्द्र॒मसा॑ । अ॒भि॒ऽचक्षे॑ । श्र॒द्धे । कम् । इ॒न्द्र॒ । च॒र॒तः॒ । वि॒ऽत॒र्तु॒रम् ॥२॥ तम् । स्म॒ । रथ॑म् । म॒घ॒ऽव॒न् । प्र । अ॒व॒ । सा॒तये॑ । जैत्र॑म् । यम् । ते॒ । अ॒नु॒ऽमदा॑म । स॒म्ऽग॒मे । आ॒जा । नः॒ । इ॒न्द्र॒ । मन॑सा । पु॒रु॒ऽस्तु॒त॒ । त्वा॒यत्ऽभ्यः॑ । म॒घ॒ऽव॒न् । शर्म॑ । य॒च्छ॒ । नः॒ ॥३॥ व॒यम् । ज॒ये॒म॒ । त्वया॑ । यु॒जा । वृ॒तम् । अ॒स्माक॑म् । अंश॑म् । उत् । अ॒व॒ । भरे॑ऽभरे । अ॒स्मभ्य॑म् । इ॒न्द्र॒ । वरि॑वः । सु॒ऽगम् । कृ॒धि॒ । प्र । शत्रू॑णाम् । म॒घ॒ऽव॒न् । वृष्ण्या॑ । रु॒ज॒ ॥४॥ नाना॑ । हि । त्वा॒ । हव॑मानाः । जनाः॑ । इ॒मे । धना॑नाम् । ध॒र्तः॒ । अव॑सा । वि॒प॒न्यवः॑ । अ॒स्माक॑म् । स्म॒ । रथ॑म् । आ । ति॒ष्ठ॒ । सा॒तये॑ । जैत्र॑म् । हि । इ॒न्द्र॒ । निऽभृ॑तम् । मनः॑ । तव॑ ॥५॥ गो॒ऽजिता॑ । बा॒हू इति॑ । अमि॑तऽक्रतुः । सि॒मः । कर्म॑न्ऽकर्मन् । श॒तम्ऽऊ॑तिः । ख॒ज॒म्ऽक॒रः । अ॒क॒ल्पः । इन्द्रः॑ । प्र॒ति॒ऽमान॑म् । ओज॑सा । अथ॑ । जनाः॑ । वि । ह्व॒य॒न्ते॒ । सि॒षा॒सवः॑ ॥६॥ उत् । ते॒ । श॒तात् । म॒घ॒ऽव॒न् । उत् । च॒ । भूय॑सः । उत् । स॒हस्रा॑त् । रि॒रि॒चे॒ । कृ॒ष्टिषु॑ । श्रवः॑ ।

अमात्रम् । त्वा । धिषणा । तित्विषे । मही । अध । वृत्राणि । जिघ्नसे । पुरम्ऽदर ॥७॥ त्रिविष्टिऽधातु । प्रतिऽमानम् । ओजसः । तिस्रः । भूमीः । नृऽपते । त्रीणि । रोचना । अति । इदम् । विश्वम् । भुवनम् । ववक्षिथ । अशत्रुः । इन्द्र । जनुषा । सनात् । असि ॥८॥ त्वाम् । देवेषु । प्रथमम् । हवामहे । त्वम् । बभूथ । पृतनासु । ससहिः । सः । इमम् । नः । कारुम् । उपऽमन्युम् । उत्ऽभिदम् । इन्द्रः । कृणोतु । प्रऽसवे । रथम् । पुरः ॥९॥ त्वम् । जिगेथ । न । धना । रुरोधिथ । अर्भेषु । आजा । मघऽवन् । महत्ऽसु । च । त्वाम् । उग्रम् । अवसे । सम् । शिशीमसि । अथ । नः । इन्द्र । हवनेषु । चोदय ॥१०॥ विश्वाहा । इन्द्रः । अधिऽवक्ता । नः । अस्तु । अपरिऽह्वृताः । सनुयाम । वाजम् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥११॥

I. 103.

तत् । ते । इन्द्रियम् । परमम् । पराचैः । अधारयन्त । कवयः । पुरा । इदम् । क्षमा । इदम् । अन्यत् । दिवि । अन्यत् । अस्य । सम् । ईम् । इति । पृच्यते । समनाऽइव । केतुः ॥१॥ सः । धारयत् । पृथिवीम् । पप्रथत् । च । वज्रेण । हत्वा । निः । अपः । ससर्ज । अहन् । अहिम् । अभिनत् । रौहिणम् । वि । अहन् । विऽअंसम् । मघऽवा । शचीभिः ॥२॥ सः । जातूऽभर्मा । श्रत्ऽदधानः । ओजः । पुरः । विऽभिन्दन् । अचरत् । वि । दासीः । विद्वान् । वज्रिन् । दस्यवे । हेतिम् । अस्य । आर्यम् । सहः । वर्धय । द्युम्नम् । इन्द्र ॥३॥ तत् । ऊचुषे । मानुषा । इमा । युगानि । कीर्तेन्यम् । मघऽवा । नाम । बिभ्रत् । उपऽप्रयन् । दस्युऽहत्याय । वज्री । यत् । ह । सूनुः । श्रवसे । नाम । दधे ॥४॥ तत् । अस्य । इदम् ।

पश्यत । भूरि॑ । पुष्टम् । श्रत् । इन्द्र॑स्य । धत्तन । वीर्या॑य । सः । गाः । अविन्दत् । सः । अविन्दत् । अश्वा॑न् । सः । ओष॑धीः । सः । अपः । सः । वना॑नि ॥५॥ भूरि॑ऽकर्मणे । वृषभाय॑ । वृष्णे॑ । सत्यऽशुष्माय । सुनवाम । सोम॑म् । यः । आऽदृत्य॑ । परिपन्थीऽइ॑व । शूर॑ः । अय॑ज्वनः । विऽभज॑न् । एति॑ । वेद॑ः ॥६॥ तत् । इन्द्र । प्रऽइ॑व । वीर्य॑म् । चकर्थ॑ । यत् । ससन्त॑म् । वज्रे॑ण । अबो॑धयः । अहि॑म् । अनु॑ । त्वा । पत्नी॑ः । हृषितम् । वय॑ः । च । विश्वे॑ । देवास॑ः । अमदन् । अनु॑ । त्वा ॥७॥ शुष्ण॑म् । पिप्रु॑म् । कुय॑वम् । वृत्रम् । इन्द्र । यदा । अव॑धीः । वि । पुर॑ः । शम्ब॑रस्य । तत् । नः । मित्रः । वरु॑णः । ममहन्ताम् । अदि॑तिः । सिन्धु॑ः । पृथिवी । उत । द्यौः ॥८॥

I. 104.

योनि॑ः । ते । इन्द्र । निऽसदे॑ । अकारि । तम् । आ । नि । सीद । स्वानः । न । अर्वा॑ । विऽमुच्य॑ । वय॑ः । अवऽसाय॑ । अश्वा॑न् । दोषा । वस्तो॑ः । वही॑यसः । प्रऽपित्वे ॥१॥ ओ इति॑ । त्ये । नर॑ः । इन्द्र॑म् । ऊतये॑ । गुः । नु । चित् । तान् । सद्यः । अध्व॑नः । जगम्यात् । देवास॑ः । मन्युम् । दास॑स्य । श्वम्नन् । ते । नः । आ । वक्षन् । सुविताय॑ । वर्ण॑म् ॥२॥ अव॑ । त्मना॑ । भरते । केत॑ऽवेदाः । अव॑ । त्मना॑ । भरते । फेन॑म् । उदन् । क्षीरेण॑ । स्नातः । कुय॑वस्य । योषे इति॑ । हते इति॑ । ते इति॑ । स्याताम् । प्रवणे । शिफा॑याः ॥३॥ युयोप॑ । नाभि॑ः । उप॑रस्य । आयोः । प्र । पूर्वा॑भिः । तिरते । राष्टि॑ । शूर॑ः । अञ्जसी । कुलिशी । वीरऽप॑त्नी । पय॑ः । हिन्वानाः । उदऽभि॑ः । भरन्ते ॥४॥ प्रति॑ । यत् । स्या । नीथा॑ । अद॑र्शि । दस्योः । ओक॑ः । न । अच्छ॑ । सद॑नम् । जानती । गात् । अध॑ । स्म । नः ।

मघऽवन् । चर्कृतात् । इत् । मा । नः । मघाऽइव । निष्षपी । परा । दाः ॥५॥ सः । त्वम् । नः । इन्द्र । सूर्ये । सः । अप्ऽसु । अनागाःऽत्वे । आ । भज । जीवऽशंसे । मा । अन्तराम् । भुजम् । आ । रिरिषः । नः । श्रद्धितम् । ते । महते । इन्द्रियाय ॥६॥ अध । मन्ये । श्रत् । ते । अस्मै । अधायि । वृषा । चोदस्व । महते । धनाय । मा । नः । अकृते । पुरुऽहूत । योनौ । इन्द्र । क्षुध्यत्ऽभ्यः । वयः । आऽसुतिम् । दाः ॥७॥ मा । नः । वधीः । इन्द्र । मा । परा । दाः । मा । नः । प्रिया । भोजनानि । प्र । मोषीः । आण्डा । मा । नः । मघऽवन् । शक्र । निः । भेत् । मा । नः । पात्रा । भेत् । सहऽजानुषाणि ॥८॥ अर्वाङ् । आ । इहि । सोमऽकामम् । त्वा । आहुः । अयम् । सुतः । तस्य । पिब । मदाय । उरुऽव्यचाः । जठरे । आ । वृषस्व । पिताऽइव । नः । शृणुहि । हूयमानः ॥९॥

I. 105.

चन्द्रमाः । अप्ऽसु । अन्तः । आ । सुऽपर्णः । धावते । दिवि । न । वः । हिरण्यऽनेमयः । पदम् । विन्दन्ति । विऽद्युतः । वित्तम् । मे । अस्य । रोदसी इति ॥१॥ अर्थम् । इत् । वै । ऊँ इति । अर्थिनः । आ । जाया । युवते । पतिम् । तुञ्जाते इति । वृष्ण्यम् । पयः । परिऽदाय । रसम् । दुहे । वित्तम् । मे । अस्य । रोदसी इति ॥२॥ मो इति । सु । देवाः । अदः । स्वः । अव । पादि । दिवः । परि । मा । सोम्यस्य । शम्ऽभुवः । शूने । भूम । कदा । चन । वित्तम् । मे । अस्य । रोदसी इति ॥३॥ यज्ञम् । पृच्छामि । अवमम् । सः । तत् । दूतः । वि । वोचति । क्व । ऋतम् । पूर्व्यम् । गतम् । कः । तत् ।

बिभर्ति । नूतनः । वित्तम् । मे । अस्य । रोदसी इति ॥४॥ अमी इति ।
ये । देवाः । स्थन । त्रिषु । आ । रोचने । दिवः । कत् । वः । ऋतम् ।
कत् । अनृतम् । क्व । प्रत्ना । वः । आऽहुतिः । वित्तम् । मे । अस्य ।
रोदसी इति ॥५॥ कत् । वः । ऋतस्य । धर्णसि । कत् । वरुणस्य । चक्ष-
णम् । कत् । अर्यम्णः । महः । पथा । अति । क्रामेम । दुःऽध्यः ।
वित्तम् । मे । अस्य । रोदसी इति ॥६॥ अहम् । सः । अस्मि । यः ।
पुरा । सुते । वदामि । कानि । चित् । तम् । मा । व्यन्ति । आऽध्यः ।
वृकः । न । तृष्णऽजम् । मृगम् । वित्तम् । मे । अस्य । रोदसी इति
॥७॥ सम् । मा । तपन्ति । अभितः । सपत्नीःऽइव । पर्शवः । मूषः ।
न । शिश्ना । वि । अदन्ति । मा । आऽध्यः । स्तोतारम् । ते । शत-
क्रतो इति शतऽक्रतो । वित्तम् । मे । अस्य । रोदसी इति ॥८॥ अमी
इति । ये । सप्त । रश्मयः । तत्र । मे । नाभिः । आऽतता । त्रितः ।
तत् । वेद । आप्त्यः । सः । जामिऽत्वाय । रेभति । वित्तम् । मे ।
अस्य । रोदसी इति ॥९॥ अमी इति । ये । पञ्च । उक्षणः । मध्ये ।
तस्थुः । महः । दिवः । देवऽत्रा । नु । प्रऽवाच्यम् । सध्रीचीनाः ।
नि । ववृतुः । वित्तम् । मे । अस्य । रोदसी इति ॥१०॥ सुऽपर्णाः ।
एते । आसते । मध्ये । आऽरोधने । दिवः । ते । सेधन्ति । पथः ।
वृकम् । तरन्तम् । यह्वतीः । अपः । वित्तम् । मे । अस्य । रोदसी
इति ॥११॥ नव्यम् । तत् । उक्थ्यम् । हितम् । देवासः । सुऽप्रवाच-
नम् । ऋतम् । अर्षन्ति । सिन्धवः । सत्यम् । ततान । सूर्यः । वित्तम् ।
मे । अस्य । रोदसी इति ॥१२॥ अग्ने । तव । त्यत् । उक्थ्यम् । देवेषु ।
अस्ति । आप्यम् । सः । नः । सत्तः । मनुष्वत् । आ । देवान् । यक्षि ।

विदुःऽतरः । वित्तम् । मे । अस्य । रोदसी इति ॥१३॥ सत्तः । होता । मनुष्वत् । आ । देवान् । अच्छ । विदुःऽतरः । अग्निः । हव्या । सुसूदति । देवः । देवेषु । मेधिरः । वित्तम् । मे । अस्य । रोदसी इति ॥१४॥ ब्रह्म । कृणोति । वरुणः । गातुऽविदम् । तम् । ईमहे । वि । ऊर्णोति । हृदा । मतिम् । नव्यः । जायताम् । ऋतम् । वित्तम् । मे । अस्य । रोदसी इति ॥१५॥ असौ । यः । पन्थाः । आदित्यः । दिवि । प्रऽवाच्यम् । कृतः । न । सः । देवाः । अतिऽक्रमे । तम् । मर्तासः । न । पश्यथ । वित्तम् । मे । अस्य । रोदसी इति ॥१६॥ त्रितः । कूपे । अवऽहितः । देवान् । हवते । ऊतये । तत् । शुश्राव । बृहस्पतिः । कृण्वन् । अंहूरणात् । उरु । वित्तम् । मे । अस्य । रोदसी इति ॥१७॥ अरुणः । मा । सकृत् । वृकः । पथा । यन्तम् । ददर्श । हि । उत् । जिहीते । निऽचाय्य । तष्टाऽइव । पृष्टिऽआमयी । वित्तम् । मे । अस्य । रोदसी इति ॥१८॥ एना । आङ्गूषेण । वयम् । इन्द्रऽवन्तः । अभि । स्याम । वृजने । सर्वऽवीराः । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥१९॥

I. 106.

इन्द्रम् । मित्रम् । वरुणम् । अग्निम् । ऊतये । मारुतम् । शर्धः । अदितिम् । हवामहे । रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥१॥ ते । आदित्याः । आ । गत । सर्वऽतातये । भूत । देवाः । वृत्रऽतूर्येषु । शम्ऽभुवः । रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥२॥ अवन्तु । नः । पितरः । सुऽप्रवाचनाः ।

उत । देवी इति । देवपुत्रे इति देवऽपुत्रे । ऋतऽवृधा । रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥३॥ नराशंसम् । वाजिनम् । वाजयन् । इह । क्षयत्ऽवीरम् । पूषणम् । सुम्नैः । ईमहे । रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥४॥ बृहस्पते । सदम् । इत् । नः । सुऽगम् । कृधि । शम् । योः । यत् । ते । मनुःऽहितम् । तत् । ईमहे । रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥५॥ इन्द्रम् । कुत्सः । वृत्रऽहनम् । शचीः३ऽपतिम् । काटे । निऽबाळ्हः । ऋषिः । अह्वत् । ऊतये । रथम् । न । दुःऽगात् । वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥६॥ देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् । अप्रऽयुच्छन् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥७॥

I. 107.

यज्ञः । देवानाम् । प्रति । एति । सुम्नम् । आदित्यासः । भवत । मृळयन्तः । आ । वः । अर्वाची । सुऽमतिः । ववृत्यात् । अंहोः । चित् । या । वरिवोवित्ऽतरा । असत् ॥१॥ उप । नः । देवाः । अवसा । आ । गमन्तु । अङ्गिरसाम् । सामऽभिः । स्तूयमानाः । इन्द्रः । इन्द्रियैः । मरुतः । मरुत्ऽभिः । आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥२॥ तत् । नः । इन्द्रः । तत् । वरुणः । तत् । अग्निः । तत् । अर्यमा । तत् । सविता । चनः । धात् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥३॥

I. 108.

यः । इन्द्राग्नी इति॑ । चित्रऽत॑मः । रथः॑ । वाम् । अभि । विश्वा॑नि । भुव॑नानि । चष्टे॑ । तेन॑ । आ । यातम् । सऽरथम् । तस्थिऽवांसा॑ । अथ॑ । सोम॑स्य । पिबतम् । सुतस्य॑ ॥१॥ याव॑त् । इदम् । भुव॑नम् । विश्व॑म् । अस्ति॑ । उरुऽव्यचा॑ । वरिमता॑ । गभीरम् । तावा॑न् । अयम् । पात॑वे । सोम॑ः । अस्तु । अर॑म् । इन्द्राग्नी इति॑ । मन॑से । युवऽभ्या॑म् ॥२॥ चक्राथे इति॑ । हि । सध्र्य॑क् । नाम॑ । भद्रम् । सध्रीचीना । वृत्रऽहना॑ । उत । स्थः । तौ । इन्द्राग्नी इति॑ । सध्र्य॑ञ्चा । निऽसद्य॑ । वृष्ण॑ः । सोम॑स्य । वृषणा । आ । वृषेथाम् ॥३॥ सम्ऽइ॑द्धेषु । अग्निषु॑ । आनजाना । यतऽस्रु॑चा । बर्हिः॑ । ऊँ इति॑ । तिस्तिराणा । तीव्रैः॑ । सोमै॑ः । परि॑ऽसिक्तेभिः । अर्वाक् । आ । इन्द्राग्नी इति॑ । सौमनसाय॑ । यातम् ॥४॥ यानि॑ । इन्द्राग्नी इति॑ । चक्रथुः॑ । वीर्या॑णि । यानि॑ । रूपाणि॑ । उत । वृष्ण्या॑नि । या । वाम् । प्रत्नानि॑ । सख्या । शिवानि॑ । तेभि॑ः । सोम॑स्य । पिबतम् । सुतस्य॑ ॥५॥ यत् । अब्र॑वम् । प्रथमम् । वाम् । वृणानः । अयम् । सोम॑ः । असु॑रैः । नः । विऽहव्य॑ः । ताम् । सत्याम् । श्रद्धाम् । अभि । आ । हि । यातम् । अथ॑ । सोम॑स्य । पिबतम् । सुतस्य॑ ॥६॥ यत् । इन्द्राग्नी इति॑ । मद॑थः । स्वे । दुरोणे । यत् । ब्रह्मणि॑ । राज॑नि । वा । यजत्रा । अत॑ः । परि॑ । वृषणौ । आ । हि । यातम् । अथ॑ । सोम॑स्य । पिबतम् । सुतस्य॑ ॥७॥ यत् । इन्द्राग्नी इति॑ । यदु॑षु । तुर्वशे॑षु । यत् । द्रुह्यु॑षु । अनु॑षु । पूरुषु॑ । स्थः । अत॑ः । परि॑ । वृषणौ । आ । हि । यातम् । अथ॑ । सोम॑स्य । पिबतम् । सुतस्य॑ ॥८॥ यत् । इन्द्राग्नी इति॑ । अवमस्याम् । पृथिव्याम् । मध्यमस्या॑म् । परमस्या॑म् । उत । स्थः । अत॑ः । परि॑ । वृषणौ । आ ।

हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥९॥ यत् । इन्द्राग्नी इति । परमस्याम् । पृथिव्याम् । मध्यमस्याम् । अवमस्याम् । उत । स्थः । अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥१०॥ यत् । इन्द्राग्नी इति । दिवि । स्थः । यत् । पृथिव्याम् । यत् । पर्वतेषु । ओषधीषु । अप्ऽसु । अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥११॥ यत् । इन्द्राग्नी इति । उत्ऽइता । सूर्यस्य । मध्ये । दिवः । स्वधया । मादयेथे इति । अतः । परि । वृषणौ । आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥१२॥ एव । इन्द्राग्नी इति । पपिऽवांसा । सुतस्य । विश्वा । अस्मभ्यम् । सम् । जयतम् । धनानि । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥१३॥

I. 109.

वि । हि । अख्यम् । मनसा । वस्यः । इच्छन् । इन्द्राग्नी इति । ज्ञासः । उत । वा । सऽजातान् । न । अन्या । युवत् । प्रऽमतिः । अस्ति । मह्यम् । सः । वाम् । धियम् । वाजऽयन्तीम् । अतक्षम् ॥१॥ अश्रवम् । हि । भूरिदावत्ऽतरा । वाम् । विऽजामातुः । उत । वा । घ । स्यालात् । अथ । सोमस्य । प्रऽयती । युवऽभ्याम् । इन्द्राग्नी इति । स्तोमम् । जनयामि । नव्यम् ॥२॥ मा । छेद्म । रश्मीन् । इति । नाधमानाः । पितृणाम् । शक्तीः । अनुऽयच्छमानाः । इन्द्राग्निऽभ्याम् । कम् । वृषणः । मदन्ति । ता । हि । अद्री इति । धिषणायाः । उपऽस्थे ॥३॥ युवाभ्याम् । देवी । धिषणा । मदाय । इन्द्राग्नी इति । सोमम् । उशती । सुनोति । तौ । अश्विना । भद्रऽहस्ता । सुपाणी इति सुऽपाणी । आ । धावतम् । मधुना ।

पृ॒ङ्क्तम् । अ॒प्ऽसु ॥४॥ यु॒वाम् । इ॒न्द्रा॒ग्नी इति॑ । वसु॑नः । वि॒ऽभा॒गे । त॒वः॒ऽत॑मा । शु॒श्र॒व । वृ॒त्र॒ऽह॒त्ये॑ । तौ । आ॒ऽसद्य॑ । ब॒र्हिषि॑ । य॒ज्ञे । अ॒स्मिन् । प्र । च॒र्ष॒णी इति॑ । मा॒द॒ये॒था॒म् । सु॒तस्य॑ ॥५॥ प्र । च॒र्ष॒णिऽभ्यः॑ । पृ॒त॒ना॒ऽह॒वे॑षु । प्र । पृ॒थि॒व्याः । रि॒रि॒चा॒थे इति॑ । दि॒वः । च॒ । प्र । सिन्धु॑ऽभ्यः । प्र । गि॒रिऽभ्यः॑ । म॒हि॒ऽत्वा । प्र । इ॒न्द्रा॒ग्नी इति॑ । विश्वा॑ । भुव॑ना । अति॑ । अ॒न्या ॥६॥ आ । भ॒र॒त॒म् । शिक्ष॑तम् । व॒ज्र॒बा॒हू इति॑ वज्र॒ऽबा॒हू । अ॒स्मान् । इ॒न्द्रा॒ग्नी इति॑ । अ॒व॒त॒म् । शची॑भिः । इ॒मे । नु । ते । र॒श्मयः॑ । सूर्य॑स्य । येभिः॑ । स॒ऽपि॒त्वम् । पि॒तरः॑ । नः॒ । आस॑न् ॥७॥ पुर॑म्ऽदरा । शिक्ष॑तम् । व॒ज्र॒ऽह॒स्ता । अ॒स्मान् । इ॒न्द्रा॒ग्नी इति॑ । अ॒व॒त॒म् । भरे॑षु । तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥८॥

I. 110.

त॒तम् । मे॒ । अपः॑ । तत् । ऊँ इति॑ । ता॒य॒ते॒ । पुनः॑ । स्वादि॑ष्ठा । धी॒तिः । उ॒चथा॑य । श॒स्य॒ते॒ । अ॒यम् । स॒मु॒द्रः । इ॒ह । वि॒श्वऽदे॑व्यः । स्वाहा॑ऽकृतस्य । सम् । ऊँ इति॑ । तृ॒प्णु॒त॒ । ऋ॒भ॒वः॒ ॥१॥ आ॒ऽभो॒गय॑म् । प्र । यत् । इ॒च्छन्तः॑ । ऐत॑न । अपा॑काः । प्राञ्चः॑ । मम॑ । के । चि॒त् । आ॒पयः॑ । सौध॑न्वनासः । च॒रि॒तस्य॑ । भू॒मना॑ । अग॑च्छत । स॒वि॒तुः । दा॒शुषः॑ । गृ॒हम् ॥२॥ तत् । स॒वि॒ता । वः॒ । अ॒मृ॒त॒ऽत्वम् । आ । अ॒सु॒व॒त् । अगो॑ह्यम् । यत् । श्र॒वय॑न्तः । ऐत॑न । त्यम् । चि॒त् । च॒म॒सम् । असु॑रस्य । भक्ष॑णम् । एक॑म् । सन्त॑म् । अ॒कृ॒णु॒त॒ । चतुः॑ऽवयम् ॥३॥ वि॒ष्ट्वी । शमी॑ । त॒र॒णि॒ऽत्वेन॑ । वा॒घतः॑ । मर्ता॑सः । सन्तः॑ । अ॒मृ॒त॒ऽत्वम् । आ॒न॒शुः॒ । सौ॒ध॒न्व॒नाः । ऋ॒भवः॑ । सूर॑ऽचक्षसः । सं॒व॒त्स॒रे । सम् । अ॒पृ॒च्य॒न्त॒ । धी॒तिऽ-

भिः ॥४॥ चेत्रम्ऽइव । वि । ममुः । तेजनेन । एकम् । पात्रम् । ऋभवः । जेहमानम् । उपऽस्तुताः । उपऽमम् । नाधमानाः । अमर्त्येषु । श्रवः । इच्छमानाः ॥५॥ आ । मनीषाम् । अन्तरिक्षस्य । नृऽभ्यः । स्रुचाऽइव । घृतम् । जुहवाम । विद्मना । तरणिऽत्वा । ये । पितुः । अस्य । सश्चिरे । ऋभवः । वाजम् । अरुहन् । दिवः । रजः ॥६॥ ऋभुः । नः । इन्द्रः । शवसा । नवीयान् । ऋभुः । वाजेभिः । वसुऽभिः । वसुः । ददिः । युष्माकम् । देवाः । अवसा । अहनि । प्रिये । अभि । तिष्ठेम । पृत्सुतीः । असुन्वताम् ॥७॥ निः । चर्मणः । ऋभवः । गाम् । अपिंशत । सम् । वत्सेन । असृजत । मातरम् । पुनरिति । सौधन्वनासः । सुऽअपस्यया । नरः । जिव्री इति । युवाना । पितरा । अकृणोतन ॥८॥ वाजेभिः । नः । वाजऽसातौ । अविड्ढि । ऋभुऽमान् । इन्द्र । चित्रम् । आ । दर्षि । राधः । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥९॥

I. 111.

तक्षन् । रथम् । सुऽवृतम् । विद्मनाऽअपसः । तक्षन् । हरी इति । इन्द्रऽवाहा । वृषण्वसू इति वृषण्ऽवसू । तक्षन् । पितृऽभ्याम् । ऋभवः । युवत् । वयः । तक्षन् । वत्साय । मातरम् । सचाऽभुवम् ॥१॥ आ । नः । यज्ञाय । तक्षत । ऋभुऽमत् । वयः । क्रत्वे । दक्षाय । सुऽप्रजावतीम् । इषम् । यथा । क्षयाम । सर्वऽवीरया । विशा । तत् । नः । शर्धाय । धासथ । सु । इन्द्रियम् ॥२॥ आ । तक्षत । सातिम् । अस्मभ्यम् । ऋभवः । सातिम् । रथाय । सातिम् । अर्वते । नरः । सातिम् । नः । जैत्रीम् । सम् । महेत । विश्वहा । जामिम् । अजामिम् । पृतनासु । सक्षणिम् ॥३॥ ऋभुक्षणम् । इन्द्रम् । आ । हुवे । ऊतये । ऋभून् । वाजान् । मरुतः ।

सोमऽपीतये । उभा । मित्रावरुणा । नूनम् । अश्विना । ते । नः । हिन्वन्तु । सातये । धिये । जिषे ॥४॥ ऋभुः । भराय । सम् । शिशातु । सातिम् । समर्यऽजित् । वाजः । अस्मान् । अविष्ट । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥५॥

I. 112.

ईळे । द्यावापृथिवी इति । पूर्वऽचित्तये । अग्निम् । घर्मम् । सुऽरुचम् । यामन् । इष्टये । याभिः । भरे । कारम् । अंशाय । जिन्वथः । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१॥ युवोः । दानाय । सुऽभराः । असश्चतः । रथम् । आ । तस्थुः । वचसम् । न । मन्तवे । याभिः । धियः । अवथः । कर्मन् । इष्टये । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२॥ युवम् । तासाम् । दिव्यस्य । प्रऽशासने । विशाम् । क्षयथः । अमृतस्य । मज्मना । याभिः । धेनुम् । अस्वम् । पिन्वथः । नरा । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥३॥ याभिः । परिऽज्मा । तनयस्य । मज्मना । द्विऽमाता । तूर्षु । तरणिः । विऽभूषति । याभिः । त्रिऽमन्तुः । अभवत् । विऽचक्षणः । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥४॥ याभिः । रेभम् । निऽवृतम् । सितम् । अत्ऽभ्यः । उत् । वन्दनम् । ऐरयतम् । स्वः । दृशे । याभिः । कण्वम् । प्र । सिसासन्तम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥५॥ याभिः । अन्तकम् । जसमानम् । आऽअरणे । भुज्युम् । याभिः । अव्यथिऽभिः । जिजिन्वथुः । याभिः । कर्कन्धुम् । वय्यम् । च । जिन्वथः । ताभिः । ऊँ इति । सु । ऊति-

ऽभिः । अश्विना । आ । गतम् ॥६॥ याभिः । शुचन्तिम् । धनऽसाम् ।
सुऽसंसदम् । तप्तम् । घर्मम् । ओम्याऽवन्तम् । अत्रये । याभिः । पृश्नि-
ऽगुम् । पुरुऽकुत्सम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः ।
अश्विना । आ । गतम् ॥७॥ याभिः । शचीभिः । वृषणा । पराऽवृ-
जम् । प्र । अन्धम् । श्रोणम् । चक्षसे । एतवे । कृथः । याभिः ।
वर्तिकाम् । ग्रसिताम् । अमुञ्चतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः ।
अश्विना । आ । गतम् ॥८॥ याभिः । सिन्धुम् । मधुऽमन्तम् । असं-
श्चतम् । वसिष्ठम् । याभिः । अजरौ । अजिन्वतम् । याभिः । कुत्सम् ।
श्रुतर्यम् । नर्यम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः ।
अश्विना । आ । गतम् ॥९॥ याभिः । विश्पलाम् । धनऽसाम् । अथ-
र्व्यम् । सहस्रऽमीळ्हे । आजौ । अजिन्वतम् । याभिः । वशम् । अश्व्य-
म् । प्रेणिम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतम् ॥१०॥ याभिः । सुदानू इति सुऽदानू । औशिजाय । व-
णिजे । दीर्घऽश्रवसे । मधु । कोशः । अक्षरत् । कक्षीवन्तम् । स्तोता-
रम् । याभिः । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतम् ॥११॥ याभिः । रसाम् । क्षोदसा । उद्नः । पिपिन्वथुः ।
अनश्वम् । याभिः । रथम् । आवतम् । जिषे । याभिः । त्रिऽशोकः ।
उस्रियाः । उत्ऽआजत । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतम् ॥१२॥ याभिः । सूर्यम् । परिऽयाथः । पराऽवति । मन्धा-
तारम् । क्षैत्रऽपत्येषु । आवतम् । याभिः । विप्रम् । प्र । भरत्ऽवाजम् ।
आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम्
॥१३॥ याभिः । महाम् । अतिथिऽग्वम् । कशःऽजुवम् । दिवःऽदासम् ।

शम्बरऽहत्ये । आवतम् । याभिः । पूःऽभिद्ये । त्रसदस्युम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१४॥ याभिः । वम्रम् । विऽपिपानम् । उपऽस्तुतम् । कलिम् । याभिः । वित्तऽजानिम् । दुवस्यथः । याभिः । विऽअश्वम् । उत । पृथिम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१५॥ याभिः । नरा । शयवे । याभिः । अत्रये । याभिः । पुरा । मनवे । गातुम् । ईषथुः । याभिः । शारीः । आजतम् । स्यूमऽरश्मये । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१६॥ याभिः । पठर्वा । जठरस्य । मज्मना । अग्निः । न । अदीदेत् । चितः । इद्धः । अज्मन् । आ । याभिः । शर्यातम् । अवथः । महाऽधने । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१७॥ याभिः । अङ्गिरः । मनसा । निऽरण्यथः । अग्रम् । गच्छथः । विऽवरे । गोऽअर्णसः । याभिः । मनुम् । शूरम् । इषा । सम्ऽआवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१८॥ याभिः । पत्नीः । विऽमदाय । निऽऊहथुः । आ । घ । वा । याभिः । अरुणीः । अशिक्षतम् । याभिः । सुऽदासे । ऊहथुः । सुऽदेव्यम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१९॥ याभिः । शंताती इति शम्ऽताती । भवथः । ददाशुषे । भुज्युम् । याभिः । अवथः । याभिः । अध्रिऽगुम् । ओम्याऽवतीम् । सुऽभराम् । ऋतऽस्तुभम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२०॥ याभिः । कृशानुम् । असने । दुवस्यथः । जवे । याभिः । यूनः । अर्वन्तम् । आवतम् । मधु । प्रियम् । भरथः । यत् । सरट्ऽभ्यः । ताभिः ।

ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२१॥ याभिः । नरम् । गोषुऽयुधम् । नृऽसह्ये । क्षेत्रस्य । साता । तनयस्य । जिन्वथः । याभिः । रथान् । अवथः । याभिः । अर्वतः । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२२॥ याभिः । कुत्सम् । आर्जुनेयम् । शतक्रतू इति शतक्रतू । प्र । तुर्वीतिम् । प्र । च । दभीतिम् । आवतम् । याभिः । ध्वसन्तिम् । पुरुऽसन्तिम् । आवतम् । ताभिः । ऊँ इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२३॥ अप्नस्वतीम् । अश्विना । वाचम् । अस्मे इति । कृतम् । नः । दस्रा । वृषणा । मनीषाम् । अद्यूत्ये । अवसे । नि । ह्वये । वाम् । वृधे । च । नः । भवतम् । वाजऽसातौ ॥२४॥ द्युऽभिः । अक्तुऽभिः । परि । पातम् । अस्मान् । अरिष्टेभिः । अश्विना । सौभगेभिः । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥२५॥

I. 113.

इदम् । श्रेष्ठम् । ज्योतिषाम् । ज्योतिः । आ । अगात् । चित्रः । प्रऽकेतः । अजनिष्ट । विऽभ्वा । यथा । प्रऽसूता । सवितुः । सवाय । एव । रात्री । उषसे । योनिम् । अरैक् ॥१॥ रुशत्ऽवत्सा । रुशती । श्वेत्या । आ । अगात् । अरैक् । ऊँ इति । कृष्णा । सदनानि । अस्याः । समानबन्धू इति समानऽबन्धू । अमृते इति । अनूची इति । द्यावा । वर्णम् । चरतः । आमिनाने इत्याऽमिनाने ॥२॥ समानः । अध्वा । स्वस्रोः । अनन्तः । तम् । अन्याऽअन्या । चरतः । देवशिष्टे इति देवऽशिष्टे । न । मेथेते इति । न । तस्थतुः । सुमेके इति सुऽमेके । नक्तोषसा । सऽमनसा । विरूपे इति विऽरूपे ॥३॥ भास्वती । नेत्री । सूनृतानाम् । अचेति । चित्रा । वि ।

दुरः । नः । आवरित्यावः । प्रऽअर्थ्यै । जगत् । वि । ऊँ इति । नः । रायः । अख्यत् । उषाः । अजीगः । भुवनानि । विश्वा ॥४॥ जिह्मऽश्ये । चरितवे । मघोनी । आऽभोगये । इष्टये । राये । ऊँ इति । त्वम् । दभ्रम् । पश्यत्ऽभ्यः । उर्विया । विऽचक्षे । उषाः । अजीगः । भुवनानि । विश्वा ॥५॥ क्षत्राय । त्वम् । श्रवसे । त्वम् । महीयै । इष्टये । त्वम् । अर्थम्ऽइव । त्वम् । इत्यै । विऽसदृशा । जीविता । अभिऽप्रचक्षे । उषाः । अजीगः । भुवनानि । विश्वा ॥६॥ एषा । दिवः । दुहिता । प्रति । अदर्शि । विऽउच्छन्ती । युवतिः । शुक्रऽवासाः । विश्वस्य । ईशाना । पार्थिवस्य । वस्वः । उषः । अद्य । इह । सुऽभगे । वि । उच्छ ॥७॥ पराऽयतीनाम् । अनु । एति । पाथः । आऽयतीनाम् । प्रथमा । शश्वतीनाम् । विऽउच्छन्ती । जीवम् । उत्ऽईरयन्ती । उषाः । मृतम् । कम् । चन । बोधयन्ती ॥८॥ उषः । यत् । अग्निम् । सम्ऽइधे । चकर्थ । वि । यत् । आवः । चक्षसा । सूर्यस्य । यत् । मानुषान् । यक्ष्यमाणान् । अजीगरिति । तत् । देवेषु । चकृषे । भद्रम् । अप्नः ॥९॥ कियति । आ । यत् । समया । भवाति । याः । विऽऊषुः । याः । च । नूनम् । विऽउच्छान् । अनु । पूर्वाः । कृपते । वावशाना । प्रऽदीध्याना । जोषम् । अन्याभिः । एति ॥१०॥ ईयुः । ते । ये । पूर्वऽतराम् । अपश्यन् । विऽउच्छन्तीम् । उषसम् । मर्त्यासः । अस्माभिः । ऊँ इति । नु । प्रतिऽचक्ष्या । अभूत् । ओ इति । ते । यन्ति । ये । अपरीषु । पश्यान् ॥११॥ यवयत्ऽद्वेषाः । ऋतऽपाः । ऋतेऽजाः । सुम्नऽवरी । सूनृताः । ईरयन्ती । सुऽमङ्गलीः । बिभ्रती । देवऽवीतिम् । इह । अद्य । उषः । श्रेष्ठऽतमा । वि । उच्छ ॥१२॥ शश्वत् । पुरा । उषाः । वि । उवास । देवी । अथो इति । अद्य । इदम् ।

वि । आवः । मघोनी । अथो इति । वि । उच्छात् । उत्ऽतरान् । अनु । द्यून् । अजरा । अमृता । चरति । स्वधाभिः ॥१३॥ वि । अञ्जिऽभिः । दिवः । आतासु । अद्यौत् । अप । कृष्णाम् । निःऽनिर्जम् । देवी । आवरित्यावः । प्रऽबोधयन्ती । अरुणेभिः । अश्वैः । आ । उषाः । याति । सुऽयुजा । रथेन ॥१४॥ आऽवहन्ती । पोष्या । वार्याणि । चित्रम् । केतुम् । कृणुते । चेकिताना । ईयुषीणाम् । उपऽमा । शश्वतीनाम् । विऽभातीनाम् । प्रथमा । उषाः । वि । अश्वैत् ॥१५॥ उत् । ईर्ध्वम् । जीवः । असुः । नः । आ । अगात् । अप । प्र । अगात् । तमः । आ । ज्योतिः । एति । अरैक् । पन्थाम् । यातवे । सूर्याय । अगन्म । यत्र । प्रऽतिरन्ते । आयुः ॥१६॥ स्यूमना । वाचः । उत् । इयर्ति । वह्निः । स्तवानः । रेभः । उषसः । विऽभातीः । अद्य । तत् । उच्छ । गृणते । मघोनि । अस्मे इति । आयुः । नि । दिदीहि । प्रजाऽवत् ॥१७॥ याः । गोऽमतीः । उषसः । सर्वऽवीराः । विऽउच्छन्ति । दाशुषे । मर्त्याय । वायोःऽइव । सूनृतानाम् । उत्ऽअर्के । ताः । अश्वऽदाः । अश्नवत् । सोमऽसुत्वा ॥१८॥ माता । देवानाम् । अदितेः । अनीकम् । यज्ञस्य । केतुः । बृहती । वि । भाहि । प्रशस्तिऽकृत् । ब्रह्मणे । नः । वि । उच्छ । आ । नः । जने । जनय । विश्वऽवारे ॥१९॥ यत् । चित्रम् । अप्नः । उषसः । वहन्ति । ईजानाय । शशमानाय । भद्रम् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥२०॥

I. 114.

इमाः । रुद्राय । तवसे । कपर्दिने । क्षयत्ऽवीराय । प्र । भरामहे । मतीः । यथा । शम् । असत् । द्विऽपदे । चतुःऽपदे । विश्वम् । पुष्टम् । ग्रामे ।

अस्मिन् । अनातुरम् ॥१॥ मृळ । नः । रुद्र । उत । नः । मयः । कृधि ।
क्षयत्ऽवीराय । नमसा । विधेम । ते । यत् । शम् । च । योः । च ।
मनुः । आऽयेजे । पिता । तत् । अश्याम । तव । रुद्र । प्रऽनीतिषु ॥२॥
अश्याम । ते । सुऽमतिम् । देवऽयज्यया । क्षयत्ऽवीरस्य । तव । रुद्र ।
मीढ्वः । सुम्नऽयन् । इत् । विशः । अस्माकम् । आ । चर । अरिष्टऽवीराः ।
जुहवाम । ते । हविः ॥३॥ त्वेषम् । वयम् । रुद्रम् । यज्ञऽसाधम् । वङ्कुम् ।
कविम् । अवसे । नि । ह्वयामहे । आरे । अस्मत् । दैव्यम् । हेळः । अ-
स्यतु । सुऽमतिम् । इत् । वयम् । अस्य । आ । वृणीमहे ॥४॥ दिवः । वरा-
हम् । अरुषम् । कपर्दिनम् । त्वेषम् । रूपम् । नमसा । नि । ह्वयामहे ।
हस्ते । बिभ्रत् । भेषजा । वार्याणि । शर्म । वर्म । छर्दिः । अस्मभ्यम् ।
यंसत् ॥५॥ इदम् । पित्रे । मरुताम् । उच्यते । वचः । स्वादोः । स्वा-
दीयः । रुद्राय । वर्धनम् । रास्व । च । नः । अमृत । मर्तऽभोजनम् । त्मने ।
तोकाय । तनयाय । मृळ ॥६॥ मा । नः । महान्तम् । उत । मा । नः ।
अर्भकम् । मा । नः । उक्षन्तम् । उत । मा । नः । उक्षितम् । मा । नः ।
वधीः । पितरम् । मा । उत । मातरम् । मा । नः । प्रियाः । तन्वः ।
रुद्र । रिरिषः ॥७॥ मा । नः । तोके । तनये । मा । नः । आयौ । मा ।
नः । गोषु । मा । नः । अश्वेषु । रिरिषः । वीरान् । मा । नः । रुद्र ।
भामितः । वधीः । हविष्मन्तः । सदम् । इत् । त्वा । हवामहे ॥८॥
उप । ते । स्तोमान् । पशुपाःऽइव । आ । अकरम् । रास्व । पितः ।
मरुताम् । सुम्नम् । अस्मे इति । भद्रा । हि । ते । सुऽमतिः । मृळयत्ऽ-
तमा । अथ । वयम् । अवः । इत् । ते । वृणीमहे ॥९॥ आरे । ते ।
गोऽघ्नम् । उत । पुरुषऽघ्नम् । क्षयत्ऽवीर । सुम्नम् । अस्मे इति । ते ।

अस्तु । मृळ । च । नः । अधि । च । ब्रूहि । देव । अर्ध । च । नः । शर्म । यच्छ । द्विऽबर्हाः ॥१०॥ अवोचाम । नमः । अस्मै । अवस्यवः । शृणोतु । नः । हवम् । रुद्रः । मरुत्वान् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥११॥

I. 115.

चित्रम् । देवानाम् । उत् । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः । आ । अप्राः । द्यावापृथिवी इति । अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः । च ॥१॥ सूर्यः । देवीम् । उषसम् । रोचमानाम् । मर्यः । न । योषाम् । अभि । एति । पश्चात् । यत्र । नरः । देवऽयन्तः । युगानि । विऽतन्वते । प्रति । भद्राय । भद्रम् ॥२॥ भद्राः । अश्वाः । हरितः । सूर्यस्य । चित्राः । एतऽग्वाः । अनुऽमाद्यासः । नमस्यन्तः । दिवः । आ । पृष्ठम् । अस्थुः । परि । द्यावापृथिवी इति । यन्ति । सद्यः ॥३॥ तत् । सूर्यस्य । देवऽत्वम् । तत् । महिऽत्वम् । मध्या । कर्तोः । विऽततम् । सम् । जभार । यदा । इत् । अयुक्त । हरितः । सधऽस्थात् । आत् । रात्री । वासः । तनुते । सिमस्मै ॥४॥ तत् । मित्रस्य । वरुणस्य । अभिऽचक्षे । सूर्यः । रूपम् । कृणुते । द्योः । उपऽस्थे । अनन्तम् । अन्यत् । रुशत् । अस्य । पाजः । कृष्णम् । अन्यत् । हरितः । सम् । भरन्ति ॥५॥ अद्य । देवाः । उत्ऽइता । सूर्यस्य । निः । अंहसः । पिपृत । निः । अवद्यात् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥६॥

I. 116.

नासत्याभ्याम् । बर्हिःऽइव । प्र । वृञ्जे । स्तोमान् । इयर्मि ।

अश्रियाऽइव । वार्तः । यौ । अभैगाय । विऽमदाय । जायाम् । सेना-
ऽजुवा । निऽऊहतुः । रथैन ॥१॥ वीळुपत्मऽभिः । आशुहेमऽभिः । वा ।
देवानाम् । वा । जूतिऽभिः । शाशदाना । तत् । रासभः । नासत्या ।
सहस्रम् । आजा । यमस्य । प्रऽधनै । जिगाय ॥२॥ तुग्रः । ह । भु-
ज्युम् । अश्विना । उदऽमेघे । रयिम् । न । कः । चित् । ममृऽवान् । अव ।
अहाः । तम् । ऊहथुः । नौभिः । आत्मन्ऽवतीभिः । अन्तरिक्षप्रुत्ऽभिः ।
अपऽउदकाभिः ॥३॥ तिस्रः । क्षपः । त्रिः । अहा । अतिव्रजत्ऽभिः ।
नासत्या । भुज्युम् । ऊहथुः । पतङ्गैः । समुद्रस्य । धन्वन् । आर्द्रस्य ।
पारे । त्रिऽभिः । रथैः । शतपत्ऽभिः । षट्ऽअश्वैः ॥४॥ अनारम्भणे ।
तत् । अवीरयेथाम् । अनास्थाने । अग्रभणे । समुद्रे । यत् । अश्विनौ ।
ऊहथुः । भुज्युम् । अस्तम् । शतऽअरित्राम् । नावम् । आतस्थिऽवां-
सम् ॥५॥ यम् । अश्विना । ददथुः । श्वेतम् । अश्वम् । अघऽअश्वाय ।
शश्वत् । इत् । स्वस्ति । तत् । वाम् । दात्रम् । महि । कीर्तेन्यम् ।
भूत् । पैद्वः । वाजी । सदम् । इत् । हव्यः । अर्यः ॥६॥ युवम् ।
नरा । स्तुवते । पज्रियाय । कक्षीवते । अरदतम् । पुरम्ऽधिम् । कारो-
तरात् । शफात् । अश्वस्य । वृष्णः । शतम् । कुम्भान् । असिञ्चतम् ।
सुरायाः ॥७॥ हिमेन । अग्निम् । घ्रंसम् । अवारयेथाम् । पितुऽमतीम् ।
ऊर्जम् । अस्मै । अधत्तम् । ऋबीसे । अत्रिम् । अश्विना । अवऽनीतम् ।
उत् । निन्यथुः । सर्वऽगणम् । स्वस्ति ॥८॥ परा । अवतम् । नासत्या ।
अनुदेथाम् । उच्चाऽबुध्नम् । चक्रथुः । जिह्मऽबारम् । क्षरन् । आपः ।
न । पायनाय । राये । सहस्राय । तृष्यते । गोतमस्य ॥९॥ जुजुरुषः ।
नासत्या । उत । वव्रिम् । प्र । अमुञ्चतम् । द्रापिम्ऽइव । च्यवानात् ।

प्र । अतिरतम् । जहितस्य॑ । आयुः । दस्रा । आत् । इत् । पतिम् । अकृ-
णुतम् । कनीनाम् ॥१०॥ तत् । वाम् । नरा । शंस्य॑म् । राध्य॑म् ।
च । अभिष्टिऽमत् । नासत्या । वरूथम् । यत् । विद्वांसा । निधिम्ऽइव ।
अपऽगूळ्हम् । उत् । दर्शतात् । ऊपथुः । वन्दनाय ॥११॥ तत् । वाम् ।
नरा । सनये । दंसः । उग्रम् । आविः । कृणोमि । तन्यतुः । न । वृष्टिम् ।
दध्यङ् । ह । यत् । मधु । आथर्वणः । वाम् । अश्वस्य । शीर्ष्णा । प्र ।
यत् । ईम् । उवाच ॥१२॥ अजोहवीत् । नासत्या । करा । वाम् । महे ।
यामन् । पुरुऽभुजा । पुरम्ऽधिः । श्रुतम् । तत् । शासुःऽइव । वध्रिऽ-
मत्याः । हिरण्यऽहस्तम् । अश्विनौ । अदत्तम् ॥१३॥ आस्नः । वृकस्य ।
वर्तिकाम् । अभीके । युवम् । नरा । नासत्या । अमुमुक्तम् । उतो इति ।
कविम् । पुरुऽभुजा । युवम् । ह । कृपमाणम् । अकृणुतम् । विऽचक्षे
॥१४॥ चरित्रम् । हि । वेःऽइव । अच्छेदि । पर्णम् । आजा । खेलस्य ।
परिऽतक्म्यायाम् । सद्यः । जङ्घाम् । आयसीम् । विश्पलायै । धने ।
हिते । सर्तवे । प्रति । अधत्तम् ॥१५॥ शतम् । मेषान् । वृक्ये । चक्ष-
दानम् । ऋज्रऽअश्वम् । तम् । पिता । अन्धम् । चकार । तस्मै । अक्षी
इति । नासत्या । विऽचक्षे । आ । अधत्तम् । दस्रा । भिषजौ । अन-
र्वन् ॥१६॥ आ । वाम् । रथम् । दुहिता । सूर्यस्य । कार्ष्मऽइव । अति-
ष्ठत् । अर्वता । जयन्ती । विश्वे । देवाः । अनु । अमन्यन्त । हृत्ऽभिः ।
सम् । ऊँ इति । श्रिया । नासत्या । सचेथे इति ॥१७॥ यत् । अया-
तम् । दिवःऽदासाय । वर्तिः । भरत्ऽवाजाय । अश्विना । हयन्ता ।
रेवत् । उवाह । सचनः । रथः । वाम् । वृषभः । च । शिंशुमारः ।
च । युक्ता ॥१८॥ रयिम् । सुऽक्षत्रम् । सुऽअपत्यम् । आयुः । सुऽवी-

थैम् । नासत्या । वहन्ता । आ । जह्नावीम् । सऽमनसा । उप । वाजैः । त्रिः । अह्नः । भागम् । दधतीम् । अयातम् ॥१९॥ परिऽविष्टम् । जाहुषम् । विश्वतः । सीम् । सुऽगेभिः । नक्तम् । ऊहथुः । रजःऽभिः । विऽभिन्दुना । नासत्या । रथेन । वि । पर्वतान् । अजरयू इति । अयातम् ॥२०॥ एकस्याः । वस्तोः । आवतम् । रणाय । वशम् । अश्विना । सनये । सहस्रा । निः । अहतम् । दुच्छुनाः । इन्द्रऽवन्ता । पृथुऽश्रवसः । वृषणौ । अरातीः ॥२१॥ शरस्य । चित् । आर्चत्ऽकस्य । अवतात् । आ । नीचात् । उच्चा । चक्रथुः । पातवे । वारिति वाः । शयवे । चित् । नासत्या । शचीभिः । जसुरये । स्तर्यम् । पिप्यथुः । गाम् ॥२२॥ अवस्यते । स्तुवते । कृष्णियाय । ऋजुऽयते । नासत्या । शचीभिः । पशुम् । न । नष्टम्ऽइव । दर्शनाय । विष्णाप्वम् । ददथुः । विश्वकाय ॥२३॥ दश । रात्रीः । अशिवेन । नव । द्यून् । अवऽनद्धम् । श्नथितम् । अप्ऽसु । अन्तरिति । विऽप्रुतम् । रेभम् । उदनि । प्रऽवृक्तम् । उत् । निन्यथुः । सोमम्ऽइव । स्रुवेण ॥२४॥ प्र । वाम् । दंसांसि । अश्विनौ । अवोचम् । अस्य । पतिः । स्याम् । सुऽगवः । सुऽवीरः । उत । पश्यन् । अश्नुवन् । दीर्घम् । आयुः । अस्तम्ऽइव । इत् । जरिमाणम् । जगम्याम् ॥२५॥

I. 117.

मध्वः । सोमस्य । अश्विना । मदाय । प्रत्नः । होता । आ । विवासते । वाम् । बर्हिष्मती । रातिः । विऽश्रिता । गीः । इषा । यातम् । नासत्या । उप । वाजैः ॥१॥ यः । वाम् । अश्विना । मनसः । जवीयान् । रथः । सुऽअश्वः । विशः । आऽजिगाति । येन । गच्छथः । सुऽकृतः ।

